THE

# HOWKHAMBA SÂNSKRIT SERIES

A

OLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.



# न्यायसुधा ।

## तन्त्रवार्तिक टीका भट्टसोमेश्वरविरचिता ।

## NYÂYASUDHÂ,

A COMMENTARY ON TANTRAVÂRTIKA,

BY

PANDIT SÔMESHWARA BHATTA.

EDITED BY

PANDIT MUKUNDA SHÂSTRI,

*of the Government Sanskrit-College, Benares.*

FASCICULUS I.

*UBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT BOOK-DEPOT:

BENARES.

AGENT:—OTTO HARRASSOWITZ, LEIPZIG:

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA VILASA PRESS,

BENARES.

1901.

THE

# CHOWKHAMBÂ SANSKRIT SERIE

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WO

NOS. 45. 46. 47. 49. 50. 52. 53. 55. 56. 57. 60
71. 73, 107. 121. & 133.

---

# न्यायसुधा ।

## तन्त्रवार्तिक टीका भट्टसोमेश्वरविरचिता ।

# NYÂYASUDHÂ,

A COMMENTARY ON TANTRAVÂRTIKA

BY


PANDIT SOMEŚWARA BHATTA,

EDITED BY

PANDIT MUKUNDA SÂSTRÎ,

*Professor, Deccan College, Poona.*


---


*PUBLISHED AND SOLD BY THE SECRET*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:

BENARES:

AGENTS:—OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHÂRÂMA MUKUNDAJÎ, BOMBAY.

PROBSTHAIN & CO., BOOKSELLERS, LONDON,

*Printed by Harikrishna Dâs, Proprietor,*

AT THE VIDYÂ-VILÂS PRESS.

BENARES.

1909.

# भूमिका।

—:o:—

अलौकिकार्थज्ञापकमेव शास्त्रम्। लोकावगतार्थकथने हि स्यानुवादकत्वमेव स्यात्। अलौकिकश्चार्थ आत्मैव। तस्य प्रत्यक्ष माणैः कथमप्यग्राह्यत्वात्। प्रत्यक्षादिप्रमाणानामभावेऽपि सुषु स्वतः प्रकाशमानेन आत्मनैव प्रकाशितानां तेषां तत्प्रकाशनेऽस्व त्। तत्त्वमस्यादिमहावाक्यं तु तत्प्रकाशितमपि गुरुमुखाच्छ्र धर्मताऽनापन्ननिरपेक्षकैवल्यरूपेणार्थं जीवस्य ग्राहयत् तद्वी नं स्वस्य बोधकतां च निवर्तयति। अतो वस्तुतस्तस्य तद्बोधक जीवाज्ञाननिवर्तकत्वात्तद्बोधकत्वं व्यवह्रियत इत्यतिरोहितं गुरु एवं च अलौकिकात्मार्थज्ञापकत्वात् साक्षात् शास्त्रत्वं महावा क्येति सिद्धम्। अन्येषां पुनः परम्परया शास्त्रत्वम्। तथाहि। क्येन आत्मैक्यज्ञानं शुद्धान्तःकरणस्यैव। तथाच श्रीमद्भा

यर्ह्यब्जनाभचरणैषणयोरुभक्त्या
चेतोमलानि विधमेद् गुणकर्मजानि।
तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वं
साक्षाद्यथाऽमलदृशोः सवितृप्रकाशः॥ इति।

संक्षेपशारीरके च,

पुरुषापराधमलिना धिषणा
निरवद्यचक्षुरुदयापि यथा।
न फलाय भच्छुविषया भवति
श्रुतिसम्भवाऽपि तु तथाऽऽत्मनि धीः॥ इति।

अन्तःकरणशुद्धिश्च निष्कामस्वस्ववर्णाश्रमधर्मानुष्ठ
तथाच भगवान् शङ्कराचार्यः अपरोक्षानुभूतौ,

स्ववर्णाश्रमधर्मेण तपसा हरितोषणात्।
साधनं प्रभवेत् पुंसां वैराग्यादिचतुष्टयम्॥ इति

फलोद्देशेन विहितानामपि कर्मणां यज्ञेनेत्यादिवाक्यात् षायां विनियोगोऽस्त्येवेति अन्तःकरणशुद्ध्यर्थत्वं सूपपादम् श्रमधर्माणां यथावद् ज्ञानं च पूर्वमीमांसां विना न सम्भवत

नि तस्या अपि आत्मैक्यज्ञानसाधनान्तःकरणशुद्धिसाधनभूताना
णांश्रमधर्माणां ज्ञापकत्वेन शास्त्रत्वम्। एवमन्यत्राप्यूह्यम्।

अस्य च जैमिनिप्रोक्तस्य शास्त्रस्यार्थज्ञानं व्याख्यां विना
मतीनां न भवितुमर्हतीति भगवान् शबरस्वामी तद्भाष्यं चक
ततस्ततोऽप्यल्पबुद्धीनां तात्पर्यार्थानवगममालोक्य भट्टकुमा
प्रथमपादं श्लोकरूपेण, ततस्तृतीयाध्यायान्तं सविस्तरं, ततः सप्त
पर्यन्तं संक्षेपेण व्याचख्यौ। तत्र तत्र पूर्वमीमांसाशास्त्रे प्रवि
बौद्धादीनामाक्षेपांश्च निरास्यत्। स्थलविशेषेषु च भाष्यतो म
च प्रादर्शयत्। द्वयोरपि ग्रन्थयोर्गूढाभिप्रायतामवलोक्य भट्टस
श्वरः राणकेति प्रसिद्धां न्यायसुधां नाम टीकां व्यरचयत्। सा
टीका इदानीं दिदृक्षूणां दुर्लभतामापन्नोति महतोद्योगेन त
मठात् बाबूगोविन्ददासमहाशयपुस्तकालयात् अन्यतश्च पुस्त
आहृत्य महता श्रमेण शोधनादिपरिष्कारपूर्वकं बाबूहरिदास
मुद्रिता। तथापि तृतीयाध्यायस्य तृतीयपादे द्वितीयादीनि च
अधिकरणानि न कस्मिंश्चिदपि पुस्तके उपलब्धानीति तावान्
खण्डित एवाभवत्। तृतीयाध्यायस्य चतुर्थः पादः निर्वीतपा
प्रसिद्धः, एतत्पर्यन्तव्याख्यानस्यैव तन्त्रवार्तिकमिति प्रसिद्धि
भिप्रायेण न्यायसुधायां निर्वीतपादव्याख्यानसमाप्तौ ग्रन्थसमा
सकाः श्लोका उपलभ्यन्ते। टुपटीकाव्याख्यानत्वेन प्रसिद्धं त
च चतुर्थाध्याय एव प्रवृत्तमित्यतः तृतीयाध्यायान्तं तन्त्रव
मिति गम्यते। राणककारस्तु निर्वीतपादान्तभागस्यैव विस्तृ
त्वाद्भागस्यैव तन्त्रवार्तिकमिति संज्ञामभिप्रेतवान् अत एव
समाप्तिद्योतकान् श्लोकान् व्यरचयत्। तृतीयाध्यायस्य सप्त
पादयोर्व्याख्यानं च भट्टसोमेश्वरकृतमुपलब्धमिति टुप्टीकाव्
नेनापि भट्टसोमेश्वरकृतेन भवितव्यम्। श्लोकवार्तिकव्याख्यानं
ट्टसोमेश्वरकृतमस्ति नवेति शास्त्ररसिकैरन्वेषणीयम्। तन्त्रवा
का काचित् मैथिलपरितोषमिश्रकृता न्यायसुधातः
ऽस्तीति श्रूयते। राणकफक्किकाव्याख्यानामिका अन्नंभट्टकृता
च किञ्चिदुपलब्धा न पूर्णतयेति ग्रन्थप्रकाशनरसिकैः एतदु
अनुगृह्य प्रकाशनीयम्। १४४० संवत्सरीयप्राचीनपुस्तकाप

तः प्रागेव भट्टसोमेश्वरस्यैतद्ग्रन्थकृतिरित्यवगम्यते। भट्ट-
ोमेश्वरश्च कं देशं स्वजन्मनाऽलंकृतवानिति न निश्चीयते,
र्म अस्य पाण्डित्यं लोकोत्तरमिति तदीयग्रन्थदर्शनाद् व्यक्तं
ीमांसकानाम्। संकर्षकाण्डं च चतुरध्यायीरूपं द्वादशाध्यायीतो-
तिरिक्तं भाट्टचन्द्रिकाव्याख्योपेतमुपलभ्यते। शबरस्वामिकृतं
ाष्यं च तस्यास्तीति भाट्टचन्द्रिकालेखादेवावगतं नास्माभिरद्यापि
द् उपलब्धम्। संकर्षकाण्डस्योल्लेखश्च उत्तरमीमांसायां तृतीया-
ायस्य तृतीयपादे त्रिचत्वारिंशत्तमे सूत्रे श्रीमद्भगवत्पूज्यपादैः
ंकरस्वामिभिः कृतः। अतोऽस्य वार्तिकादिव्याख्यानानुपलब्ध्या
प्रामाणिकत्वं नाशङ्कनीयम् इत्यास्तां प्रासङ्गिकम्। एतत्पुस्तकशोधने
अहं हरिदासगुप्तेन प्रार्थितः यथामति अशोधयम्। तत्र यदि
मात्प्रमादाद्वा संजाता दोषा उपलभ्येरन् तान् संशोध्य अपूर्वग्रन्था-
रसमनुभवन्तु गुणग्राहिणो विद्वांस इति प्रार्थयते—

पूनाडेक्कनकालेजस्थसंस्कृतप्रधानाध्यापकः
आठल्येपाह्वमुकुन्दशास्त्री।

॥ श्रीगणेशायनमः ॥

# ॥ तन्त्रवार्त्तिकव्याख्या ॥

## ॥ न्यायसुधाख्या ॥

### ॥ श्रीमद्भट्टसोमेश्वरविरचिता ॥

आनन्दात्मनि विश्ववैभवभवाविर्भावसम्भावितः ।
स्वेच्छाधीसचिवः पुरन्दरपुरीशानः स्वयं खेलति ॥
तत्कारुण्यकटाक्षकुड्मलकलाकान्तोदयाघूर्णितः ।
स्वात्मानन्दसुधाम्बुधिर्विजयते धीमन्महेन्द्रामृतः ॥ १ ॥
यद्यप्यूषरसुप्तमेत्य गुरुणा बीजम्महेन्द्रामृतम् ।
क्षेत्रश्चित्रमनेकधोरु फलति प्राप्यात्मनोऽनर्घ्यताम् ॥
यन्मेघस्तुतवाङ्निरन्तरसुधासारैः समासिञ्चितम् ।
सोऽयं सर्वसुहृज्जनार्दनजगज्जीयाज्जगन्मण्डनम् ॥ २ ॥[1]
उमानन्दनमाराध्य शारदामीश्वरं गुरुम् ॥
कृत्स्नशास्त्रप्रसादेन व्याख्यास्ये तन्त्रवार्त्तिकम् ॥ ३ ॥

आम्नायस्य क्रियार्थत्वादानर्थक्यमतद-
र्थानां तस्मादनित्यमुच्यते ॥ १ ॥

अत्र भाष्यकारेणार्थवादानुदाहृत्य किं कंचिद्धर्मं प्रमि
उत नेति विचारितम् । तदयुक्तम् । प्रथमपाद एव सर्वाप्रामाण्यक
णनिरासेन सर्वात्मकवेदप्रामाण्यस्य सुस्थापितत्वात् । अथ
व्यसाधनेतिकर्त्तव्यतान्वितभावनाप्रतिपादकपदसमुदायमात्रेण
साधनरूपधर्मप्रमितिसिद्धेस्तदतिरिक्तानां वायुर्क्षेपिष्ठादिपदानां
र्मप्रमितावनुपयोगमाशङ्क्य उपयोगोऽत्रोच्यते । ततो विधिमन्त्र

१ इमौ श्लोकौ २ पु० न भवतः ।

मधेयान्यप्युदाह्रियेरन् । धर्मप्रमित्यनुत्पादकत्वेन चानुपयोगित्वे अर्थवादादेर्दोषाभावे ऽपि प्रामाण्यायोगादयमेव विचारः प्राग्भावि स्यात् । चोदनासूत्रप्रतिज्ञातप्रामाण्यस्य विधिभागस्य प्रसिद्धधर्मसंयोगस्य परतः प्रामाण्यनिरासेन प्राक् प्रामाण्योक्तावर्थवादादिविचारो ऽप्रतिज्ञातविषयत्वादसङ्गतः स्यादित्याशङ्काचतुष्टयं निराकर्तुमाह (१ पृ०) * सिद्धप्रमाणभावस्येति * तत्रार्थवादार्पितप्राशस्त्यमन्त्रस्मारितनामधेयावच्छिन्नधात्वर्थानुरक्तभावनाविषयप्रवर्त्तकपरत्वेन चोदनाशब्दस्य मन्त्रार्थवादाद्युपेतमहावाक्यविषयत्वाज्जिज्ञासासूत्रेण चाध्ययनविधिदृष्टार्थताप्रतिपादनेन सकलवेदप्रामाण्योपक्षेपादौत्पत्तिकत्वादियुक्तिसाधारण्याच्च वेदमात्रप्रामाण्यस्य प्रतिज्ञापरत्वे ऽपि यागेन स्वर्गमित्यादिसाध्यसाधनभावप्रतिपादकशब्दाभावेन धर्मप्रमित्यशक्तत्वादसम्भवदर्थविषयत्वमाशङ्क्य धर्मप्रमितिशक्तिप्रदर्शनार्थत्वेन चोदनात्वसङ्कीर्त्तनोपपत्तेरुपदेशो हि भवतीति चोदनाख्योपदेशत्वस्य हेतुत्वेन भाष्यकृता व्याख्यातत्वाद्वेदवाक्यानि धर्मे प्रमाणं चोदनात्वादिति प्रतिज्ञासूत्रार्थावधारणादर्थवादादिप्रामाण्यविचारस्य प्रतिज्ञासङ्गतिनिरूपणार्थं वेदग्रहणं, सिद्धे ऽपि सामान्यतो वेदप्रामाण्ये तद्विशेषस्यार्थवादादेस्तदसंभवाशङ्कानिरासार्थत्वेनास्य विचारस्यापौनरुक्त्यनिरूपणार्थं विधेककीर्त्तनम् । सिद्धग्रहणेन चैतद्दर्शयति । प्रमाकरणत्वं प्रमाणत्वम् । न च प्रथमे पादे धर्मप्रमोत्पत्तिसिद्ध्यङ्गीकारेण तत्र वेदस्य करणत्वमुच्यते । प्रत्यक्षादेस्तत्करणत्वनिषेधाच्छब्दस्य च प्रमाणान्तराद्दृष्टे ऽर्थे करणत्वासिद्धेः तस्मात्कारणाभावेन धर्मप्रमानुत्पत्तिमाशङ्क्य कारणान्तराभावे ऽप्याकाङ्क्षासन्निधियोग्यतासध्रीचीनपदार्थप्रतिपादनद्वारेणापौरुषेयत्वात्प्रमाणान्तरानपेक्षस्यात एव निरस्तदोषाशङ्कस्य वेदस्य कारणत्वोपपत्तेर्धर्मप्रमाख्यकार्यसद्भावस्तत्र प्रतिपादितः, इह त्वर्थवादादिरूपस्य वेदभागस्य तत्राकरणत्वमाशङ्क्य करणत्वं प्रतिपाद्यतइति स्पष्टमेवापौनरुक्त्यं करणनिरूपणार्थं तु प्रथमपादे सत्युपप्रमाणभावस्येत्यवक्ष्यत्।धर्मप्रमाया वेदकार्यत्वप्रतिपादनेन त्वर्थात्सद्भवदपि वेदस्य करणत्वं संमुग्धरूपेणैव सिध्येत्तत्रार्थवादादिविषरूपेणेति प्रतिपादयितुं सर्वेश इत्युक्तम् । अर्थवादादिप्रामाण्याद्धौ सर्वात्मकवेदप्रामाण्यासिद्धेः संमुग्धाभिप्रायः सर्वशब्दो व्याख्येयः । परतः प्रामाण्यादिद्वारा अप्रामाण्ये सकलस्य वेदस्य निरस्ते त्वर्थवादादीनामबोधकत्वेनाप्रामाण्यमाशङ्क्य धर्मबोधोपयोगित्वमिह प्रतिपाद्यमित्युपयोगशब्देनोक्तम् । अर्थवादोदाहरणं स्वामर्थ-

कथमतदर्थानामित्यविशेषश्रवणात् प्रदर्शनार्थं द्वारप्रविशेषप्रतिप
ने चार्थवादमात्रस्य द्वारविशेषो ऽत्राधिकरणे प्रतिपाद्यतइति द
यितुम्। सामान्यतस्तुत्युपयोगित्वासिद्धौ लाक्षणिकस्तुत्यादिद्व
विशेषस्याशक्यकल्पनत्वात्पूर्वं सामान्योपयोगे विचार्ये। सर्वेषा
वोदाहरणत्वमिति विध्यर्थवादमन्त्राणामित्यनेनोक्तम्। सिद्धे
धर्मप्रमाण्ये कार्ये कियतो वेदभागस्य तत्र कारणतेति वि
रावसरो भवतीत्यधुनेत्यनेनोक्तम्। तस्मात्सर्वमदुष्टं श्लोकं व्या
चष्टे * सामान्येत इति * यद्वा प्रतिपादितमपि सकलवेदप्रामाण्य
मर्थवादादिष्वसम्भवादाक्षिप्येह समाधीयते इति। अन्यथा श्लो
कं व्याचष्टे * अवधूतप्रामाण्यस्येति * अस्मिन्व्याख्याने साम
सर्वशब्दार्थः। विध्यर्थवादमन्त्राणामिति तस्यैव विवरणम्। वि
ध्यादिग्रहणस्योपलक्षणत्वाद्व्याख्याने नामधेयग्रहणम्। इह
द्विपर्वा विचारः। पूर्वं तावदेषामक्रियार्थत्वेनानुपयोगमाशङ्क्याध्य
यनविधिबलाद्विधिना त्वेकवाक्यत्वादिति सूत्रावयवेन तत्तुल्यं
साम्प्रदायिकमित्यनेन च सूत्रेण निराकृतं द्वारासम्भवात् पुनरुज्जी
व्यार्थवादानां तावत् द्वारविशेषो ऽस्मिन्नधिकरणे चिन्त्यते।
स्मादनेन सूत्रेण सामान्यविशेषरूपेण पूर्वपक्षद्वयं तन्त्रेणोच्यते
आम्नायस्य तद्भूतानां क्रियार्थेन समाम्नाय इत्यनेन न्याये
न क्रियार्थत्वावधारणादर्थवादादीनां तदसम्भवादानर्थक्यम्
अथाध्ययनविधिबलादेषां कथं चित्क्रियार्थत्वं कल्पयितुमारभ्य
तथाप्यर्थवादानां तावद् द्वारासम्भवाद् दुःपरिहरमानर्थक्यमिति
भाष्यमप्येवमेव योज्यं सामान्योपयोगप्रतिपादनं विना विशेषोप
योगप्रतिपादनासम्भवस्यातो यावद्वेद एव पुरुषार्थतया सकलमा
त्मानं न प्रतिपादयति तावदप्रमाणमित्यत्र वक्ष्यमाणत्वात्। तद
भिधीयतइत्यादिपूर्वपक्षभाष्यं व्याचष्टे * तत्रेत्यादिना प्रसिद्धमे
वातदर्थत्वमित्यन्तेन * विध्युपयोगस्यापि पूर्वपक्षिणो ऽनिष्टत्वात्सा
ध्यसाधनेतिकर्त्तव्यतान्वितभावनाप्रतिपादकपदसमूहपरो विधिश
ब्दः। चोदनोपदेशशब्दावपि तत्परौ पूर्वपक्षी मन्यते। तद्वैतद्ग्र
न्थपर्यालोचनयार्थवादादीनामेवेहोपयोगश्चिन्त्यते। पूर्वं तु विधिग्र
हणं न केवलं विधेरेवोपयोगः किं त्वर्थवादादीनामपीत्येवं नेयम्
धर्माधर्मोपयोगिविचारोपक्रमाद्धर्माधर्मविषयमेव प्रामाण्यमभिप्रेत
विधिनिषेधयोरेव चोदनोपदेशशब्दाभ्यां धर्माधर्मप्रामाण्याभिधाना
दतद्रूपस्यार्थवादादेर्न तत्र प्रामाण्यं नाप्यन्यत्र तद्भूतानां क्रियार्थेन
समाम्नाय इति सर्वस्य समाम्नायस्य क्रियार्थत्वावधारणेन भूतान्वा

ख्यानपरत्वानभ्युपगमादित्यर्थः । न चैतत्प्रक्रियामात्रं किं तु
स्यमेवेति यथाक्रमं फक्किकाद्वयेनोक्तम् * उक्तमेवेति * अर्थे
पलब्धे इत्यत्रेत्यर्थः । तदनेन क्रियेत्यादिः समामनन्तीत्यन्तोभाष्
वयवो व्याख्यातः तद्यानीत्यादिभाष्यं व्याख्यातुमतश्चेत्याद्युक्त
कं धर्मं प्रमिमीरन्निति काक्वा सूचितो ऽर्थो यथाश्रुतेत्यादिना
काशितः । एवं सर्वेषामनुपयोगित्वे पूर्वपक्षिते अध्ययनविधिस
र्थोपबृंहितसिद्धान्तसूत्रगततुशब्दोपक्षिप्तं तुल्यं साम्प्रदायिकसूत्रं
पादितपुरुषार्थानुबन्धित्वनिर्वाहाय अध्याहारादिनापि क्रियार्थ
यथासम्भवं कल्प्यमिति पूर्वविचारसिद्धान्तानिरूपणार्थमथोच्य
त्यादिभाष्यं तद्व्याचष्टे*अथ कया चिदिति* द्वारविशेषानिर्द्धार
पुनः प्रत्यवस्थानार्थं स कल्प्यमान इत्यादिभाष्यं तद्व्याचष्टे एव
पीत्यादिना ऽनर्थक्यमित्यन्तेन कः कल्प्येतेत्यनेनोक्तमनवधार
दर्शयितुमुद्ग्राह्यः प्रतिषेधाध्याहारोपन्यासः चिरवृत्तेष्टवियोगद
नादिना रोदनादिशक्यताशङ्कापरिहाराय शास्त्रविरोधोपन्या
रोदनवपोत्खननदिङ्मोहेषु यथाक्रमं मङ्गलाचारारम्भरक्षणप्राङ्
खभोजनशास्त्रविरोधः । अश्रुणश्च रजतपरिणामविरुद्धसद्यःशो
दर्शनाद् दृष्टविरोधः पुरास्य सम्वत्सराद् गृहे रोदनं भवतीत्यत्र
लाभावमादिशब्देनाह । धर्माधर्मपरत्वाभावे ऽपि सिद्धार्थकथने
नर्थक्योपसंहारानुपपत्तिमाशङ्क्योक्तम् * यत्तु भूतान्वाख्यानमा
मिति * क्रियतइत्यस्मिन्नर्थे प्रत्ययेन विवक्षिते तदनुग्रहार्थे पा
पचतीतिवत् प्रतिपाद्यतइतिधातुप्रयोगः । वायुक्षेपिष्ठादिवाक्या
स्वार्थसत्यत्वे ऽपि अनुवादमात्रत्वाद् धूमादिवाक्यानां च स्व
ऽप्यसत्यत्वादानर्थक्यम् । एवमपि प्राशस्त्यादिलक्षणया क्रियार्थत
सम्भवादानर्थक्योपसंहारो न युक्त इति सिद्धान्तिमतमाशङ्क्याह
* विध्येकवाक्यत्ववशेन वेति * तत्र निरासहेतुमाह * न चेति
लक्षणयैकवाक्यत्वकल्पने अन्योन्याश्रयापत्तेरितिभावः । श्रौत
र्थाभिधानं तु भिन्नवाक्यत्वे ऽप्युपपन्नमित्याह * भिन्नैरपीति * न
निष्प्रयोजनत्वप्रसङ्गभयेन प्रतीयमानविषयत्यागेन विषयान्तरक
ल्पनोचिता प्रत्यक्षादावदर्शनादित्याह * न चेति * ननु अस्तु
माणान्तरे तथाशब्दे तु प्रयोजनवत्त्वाय श्रौतार्थत्यागेनार्थान्तरकल्
ना युक्ता बहुक्षीरादिवाक्ये तथा दर्शनादित्याशङ्क्याह * सर्वाण
वेति * सर्वमेव वस्तु स्वविषयएव व्याप्रियते न ह्यूर्णनाभः क
चित्पदसूत्रं करोति । लौकिकवाक्ये तु प्रमाणं प्रत्यक्षादेरन्यथात्वक
ल्पनम् । तदभावे तत्रापि श्रौतार्थानतिक्रमादिति भावः । तार्कि

स्थितिपर्यालोचनयापि न प्रयोजनानुसारेण विषयकल्पनं
* तेनैवेति * प्रयोजनवत एव प्रमेयत्वे तस्य हानोपेक्षानुप
णानां वैफल्यं न स्यादित्यर्थः । अप्रतीयमानस्य च प्रयो
ज्ञातुमशक्यत्वात्तद्विषयत्वमशक्यनिरूपणमित्याह * अ
प्रयोजनानुसारेण प्रमाणविषयकल्पनं निराकृतमुपसंहरति
दिति * प्रमातृणां प्रयोजनवत्प्रमित्सायामपि प्रमाणश
त्प्रमेयानियम इत्याह * न हीति * पुरुषाधीनेऽपि च
व्यापारे प्रमेयानियमात्स्वतन्त्रे वेदे का वार्त्तेत्याह * यत्र
प्रमाणान्तरस्य प्रयोजनवद्विषयत्वानियमेऽपि वेदस्य
हितोपदेशित्वात् प्रयोजनवद्विषयत्वनियमेन भाव्यमित्य
* न चेति * कुतः प्रथममित्यपेक्षिते परीक्षात इति द
* अयमेव हीति * शास्त्रत्वस्यैव प्रागसिद्धेरिति भावः ।
दस्य निष्प्रयोजनार्थाभिधायित्वं तथाभूतस्य चादरणीयत्वं
ज्यामित्याह * तन्नेति * उभयत्र यथाक्रमं कारणमाह *
उत्तरकालतामुपपादयति * न हीति * परीक्षणेन[१] हि पु
प्रामाण्यापत्तेर्नाध्येत्रा ऽऽदरमात्रेण प्रयोजनवत्त्वनिश्चय इत
श्चादिति * यथा दर्शपूर्णमासप्रकरणाधीतानामपि पुरु
न्त्रणमन्त्राणां न तादर्थ्यनिश्चय इति दृष्टान्तार्थः । न चा
दिवाक्येषु प्रयोजनवद्विषयत्वदर्शनाद्वेदवाक्यत्वेन वायुक्षेपि
क्येष्वपि तथानुमानं युक्तम् । प्रतीतिविरोधादित्याभिप्राये
रति * तस्मादिति * इह च यानि त्वतिरिक्तार्थान्यर्थवाद
धेयानुपातीनीति सर्वेषां पूर्वनिर्दिष्टानां विध्येकवाक्यत्वव
षामित्यादिभिर्निर्दिष्टप्रतिनिर्दिष्टकैः सर्वनामभिः परामर्शाद्
ग्नेर्देवेत्यादीनामपीत्यत्राप्यादिशब्दस्योपक्रमवशेन सर्वे
त्सदृशविषयत्वे चार्थवादानामपि सर्वेषामपरामर्शापत्तेस
त्वेन चैतावता ग्रन्थेन सर्वानुपयोगप्रतिपादनपरतयैतद्भा
ख्यातमिति गम्यते । मन्त्रेष्वपि[२] च प्रयोगविध्येकवाक्य

१ अध्ययनोत्तरकालीनपरीक्षणेन अध्येत्रादरमात्रेण वा न प्रयोजनवत्त्व
परीक्षणेन हीति प्रथमपक्षे हेतुमाह पुरुषाधीनप्रामाण्यापत्तेरिति द्वितीयपक्षे
तैव दृष्टान्त उक्तः यथा पूषाद्यनुमन्त्राणां दर्शपूर्णमासप्रकरणपाठे सत्यपि न तद
त्रध्यादरमात्रेण न प्रकरणेन न च लिङ्गनिश्चयादित्यर्थः ।

२ लक्षणया विध्येकवाक्यत्वशङ्कया अर्थवादमात्रपरत्वमविष्यतीत्याशङ्क्याह
ति अर्थवादानामिव समभिव्याहारलक्षणैकवाक्यत्वाबाधेऽपि प्रयोगविध्येकवाक्यत्व
चाह प्रयोगेति लिङ्गसमवायाद्विधिमन्त्रनामधेययोः--प्रोक्षीनवह्नमीत्यादौ प्र
तिपत्तेः स्तुत्यत्वादितिभावः ।

पूर्वसाधनरूपलक्षणा सिद्धान्तिनोऽभिप्रेतैवेति न तद्बलेनाप्यर्थवादमात्रपरत्वनिश्चयः । व्याख्यातॄणां त्वर्थवादमात्रपरत्वेनेमं ग्रन्थं व्याचक्षाणानामभिप्रायं न विद्मः। इदानीमेतदेव भाष्यमर्थवादमात्रानुपयोगप्रातिपादनपरतया व्याचष्टे * यो ऽपि चेति * सर्वानुपयोगसाधारणोपपत्त्यनुकर्षणार्थश्चशब्दः । क्लेशेनेत्यप्रतीयमानैकवाक्यताकल्पनेनेत्यर्थः कल्प्येतेत्यनेनैतद्दर्शयति न तावत्स्तुतिनिन्दे एव निरूप्येते गुणदोषवत्त्वप्रतिपादनं हि स्तुतिनिन्दाशब्दाभ्यामभिप्रेतम् । तत्र यदीष्टानिष्टफलत्वं विधिप्रतिषेधविषयत्वं वा विशिष्टेतिकर्त्तव्यताकत्वं[१]वा गुणदोषवत्त्वं तदन्यतः सिद्धत्वान्नार्थवादापेक्षं न च वायुक्षेपिष्ठत्वादेर्गुणदोषवत्त्वं सर्वार्थवादाननुवृत्तेः श्रौतत्वाच्च तस्य लाक्षणिकस्तुतिनिन्दार्थत्वासिद्धान्तभङ्गापत्तेः । न चान्यौ गुणदोषौ निरूप्येते।प्ररोचना[२]द्वेषजनकत्वेन च स्तुतिनिन्दयोरर्थवत्त्वं प्रयोजनवत्त्वमिष्यते तत्र न तावदिच्छानिच्छे तच्छब्दवाच्ये विधिनिषेधावगतेष्टानिष्टफलत्वादेव तत्सिद्धेः । प्रवृत्तिनिवृत्तिप्रतिबन्धकविपरीतत्वेनालस्योत्साहभङ्गो ऽपि[३]न । प्रवृत्तिनिवृत्तिहेतुभूतविधिनिषेधसिद्धत्वात्तस्मान्न स्तुतिनिन्दाख्यः कश्चिदर्थः । न ह्यसावर्थवादगम्यो नापि तत्प्रयोजनमिति। एवं सिद्धान्त्यभिमतविधिनिषेधापेक्षितप्ररोचनाद्वेषजनकस्तुतिनिन्दासमर्पकत्वेन विधिनिषेधाभ्यां ग्रहणे निराकृते यदि भावनान्तर्गतिः स्यात् ततस्तद्द्वारेण विधिनिषेधग्रहणात् पुरुषार्थानुबन्धित्वं भवेत्तच्च नाशङ्क्यमेवेति भावः । अगम्यमानैकवाक्यत्वेष्वर्थवादेषु लाक्षणिकस्तुतिनिन्दार्थत्वकल्पने दुःपरिहरमितरेतराश्रयत्वमित्याह * अपि चेति * एतच्च पूर्वं सर्वानर्थक्याय योजितमपीदानीमर्थवादानर्थक्याय प्रकटितमित्यपौनरुक्त्यम् । अर्थवादानर्थक्यमेवोपसंहरति * तस्मादिति * तस्मादनित्यमुच्यते इत्येतत्सूत्रावयवव्याख्यानपरं तस्मादित्यादिभाष्यं स्पष्टत्वान्न व्याख्यातम् । वृत्तिकारान्तरैरेतत्सूत्रमर्थवादाप्रामाण्येन तदेकवाक्यतया साकाङ्क्षत्वाद्विध्युद्देशस्याप्यप्रामाण्यापत्तेः। प्राभाकरैरपि सकलवेदाप्रामाण्यपरतया व्याख्यातं तन्निराकरणार्थं स एष इत्यादिभाष्यम् । तत्र पूर्वपक्षे ऽर्थवादानां भिन्नार्थत्वेनैकवाक्यत्वायोगादेकदे-

---

१ एकत्र प्रयाजादि परत्र खड्गीत्वमादि ।

२ नापि स्तुतिनिन्दयोःप्रयोजनमित्याह प्ररोचनेति ।

३ न गुणदोषवत्त्वमित्यनुषङ्गः ।

शशब्दो न युक्त इत्याशङ्क्याह * स एष इति * व्याख्यानान्तरमाह * अथ वेति * एतच्च विभवार्थे न निर्द्धारणाइति षष्ठीसमासनिषेधात्सम्बन्धमात्रषष्ठ्यां च मध्यशब्दानुपपत्तेः। कर्मधारये ऽप्येकदेशशब्दस्योपसर्ज्जनत्वेन पूर्वनिपातापातादवयववाचित्वेन च कतिपयार्थस्याभावात् । नन्वित्यादिवृत्तिकारान्तराभिप्रायविवरणार्थं भाष्यं तस्योत्तरं नैवमित्यादि तस्यार्थः न तावत्सर्वो विध्युद्देशो ऽर्थवादापेक्षः शुद्धस्यापि वसन्ताय कपिञ्जलानालभतइत्यादेर्दर्शनात्कश्चिदेव तु वायव्यं श्वेतमालभेतेत्यादिस्तदपेक्षस्तस्यापि विधिविधेयसम्बन्धरूपावान्तरवाक्यार्थे ऽर्थवादपदनिरपेक्षस्य स्तुतिस्तुत्यसम्बन्धात्मके महावाक्यार्थरूपे ऽर्थान्तरएव तदपेक्षा ततश्चैकदेशाक्षेपरूप एव तेषामाक्षेपः । अर्थवादाप्रामाण्येन महावाक्यार्थविवक्षायामप्यवान्तरवाक्यार्थविवक्षा दुर्निवारेतिभावः । तत्र कश्चिदिति काक्वा सूचितमर्थं दर्शयति * तत्रेति * भाष्यार्थं व्याचष्टे * यान्यपीति * विधिप्रत्ययशून्येषु तर्हि समस्ताक्षेपः स्यादित्याशङ्क्य सिद्धसाध्यतामाह * यानि त्विति * यद्वा ऽनेनावृत्त्या खण्डशो भाष्यं व्याख्यायते कश्चित्पदसमूहो नैवं भवति नाप्रमाणत्वेन शङ्क्यो भवतीत्यर्थः । कश्चित्वर्थवादपैदः संयुज्यार्थान्तरे वर्त्तते तत्र तान्यर्थवादपदानि केवलान्याक्षिप्यन्ते । पुनस्तानीत्यादि शुद्धार्थवादविषयत्वेनैव व्याख्यातं यानि केवलान्यर्थवादपदानि तच्छब्दनिर्द्दिष्टानि तानि समस्तान्याक्षिप्यन्तइति ।

## शास्त्रदृष्टविरोधाच्च २

अत्र भाष्यकारेण स्तेनं मन इत्याद्युदाहृत्य एवं जातीयकानां धर्मं प्रति अप्रामाण्यं भूतानुवादादित्युक्तम् । तदेवं जातीयकानि कं धर्मं प्रमिमीरन्नित्यनेन गतार्थत्वात्पुनरुक्तमित्याशङ्क्य व्याचष्टे * वाङ्मनसयोरिति* अनेनैवं भाष्यं व्याख्यातं भूतशब्दः परमार्थवाची यादृशं परमार्थतः प्रच्छन्नरूपत्वादौपचारिकं मनसस्स्तेनत्वं प्रायिकं च वाचो ऽनृतवादित्वं तादृशानुवादमालोच्य धर्मं प्रत्यप्रामाण्यम्[१] अतथाभूतमुख्य[२] रूपस्तेनानृतवादित्वकीर्त्तने तु स्वार्थे ऽप्यप्रामाण्यमिति भूतानुवादादिति विशेषणोपादानसामर्थ्यात् सूचितम् । ततश्च पूर्वोदाहरणेष्वतीतार्थकीर्त्तनेन योग्यानुपलब्ध्यभा-

---

१ पूर्वोक्तविपरीतमितिभाव:

२ मुख्यरूपद २ पु. पा.

* चातुर्मास्ये साकमेधाख्ये पर्वणि महापितृयज्ञेष्टावित्यर्थः

वात्स्वार्थासत्यत्वानिश्चये ऽपि धर्मे प्रत्यप्रामाण्यमुक्तम् । इह स्वार्थे ऽप्यसत्यत्वमित्यधिकार्थत्वादपौनरुक्त्यमिति । अनेन चेहोद हरणे पूर्वसूत्रमेवं योजितम् । अनसस्तेनशब्दवाच्यपरस्वापह रित्वाभावाद्वाचश्चानृतवदनकर्तृत्वाभावान्मुख्यरूपस्तेनानृतवादिर्न त्वकीर्त्तने स्वार्थासत्यत्वादानर्थक्यमभिधेयशून्यत्वं यथाद्दष्टार्थाः वादे ऽप्यक्रियार्थत्वादानर्थक्यं निष्प्रयोजनत्वमिति । अध्याह रादिभिस्तु क्रियार्थत्वकल्पने प्रतिषेधशास्त्रविरोधापत्तेरानर्थक्यमे युक्तमिति शास्त्रविरोधसूत्रव्याख्यानार्थं विपरीणामादिभिरित्य दिभाष्यं तद्व्याचष्टे * अथ त्विति * न चेत्यादिभाष्यमाशङ्क्यापू व्याचष्टे * तत्रेति * अत्राशङ्कते * ननु चेति * पितृयज्ञे ऽतिदेशप्राप्तस्य होतृवरणस्य न होतारं वृणीतइति निषेधः श्रूय दर्शपूर्णमासयोश्चानारभ्य विधिप्राप्तस्य ये यजामहस्य नानुयाजेषु जामहं करोतीति । तत्रानयोर्नित्यं बाधो विकल्पेन वेति निरूपणा नञ् अयं प्रतिषेधार्थः पर्युदासार्थो वेति चिन्तायां पूर्वपक्षयिष्यते श्रुत्या नञः प्रधानभूतविधायकान्वयेन निषेधार्थत्वं प्रतीतमपि ई क्षेतेत्यत्र व्रतशब्दसामानाधिकरण्यादनङ्गीकृत्योपसर्जनीभूतधात्व र्थान्वयेन पर्युदासो ऽङ्गीकृतः न त्विह तथा विकल्पपर्युदासे ऽप्यपरि हार्यः तस्यापि पर्युदसनीयप्राप्तिसापेक्षत्वात् । अन्यथा न सौर ऽध्वर इत्यस्यापि पर्युदासत्वापत्तेः । किं चान्यत एव तदन्येषु प्रा प्तेस्तदन्यमात्रसङ्कोचार्थत्वे च पर्युदासोपसंहारयोरभेदापत्तेर्न पर्यु दासाख्यविध्यन्तरोपपत्तिः, तस्मात्प्रतिषेध एवायं ततश्च विहितप्रति षिद्धत्वाद्विकल्प इति तत्र प्राप्तिसापेक्षस्यापि सुरापानादिनिषेधः द्विशेषनिष्ठत्वाद् बलीयस्त्वं स्यादित्याशङ्क्य विशेषनिष्ठेनापि निषे नात्मलाभायोगापत्तेः सामान्यरूपस्यापि विधेः स्वविषयादप तु मशक्यत्वादनपनीतस्य च शास्त्रस्यात्यन्तबाधायोगाद्विकल्पो दुः रिहर इत्युक्तम् । न तुल्यहेतुत्वादुभयं शब्दलक्षणमिति सिद्धान्तर कर्तव्यत्वप्रतिपादनात्मकविधिविरोधित्वेनाकर्त्तव्यत्वप्रतिपादनात कनिषेधे जाग्रति विकल्पापत्तेस्तत्परिहाराय पर्युदासो ऽत्राङ्गीक्रि यते तस्य विषयसमर्पणेनानुकूलतया विकल्पानासञ्जकत्वात्तन्मा त्रसङ्कोचनार्थोपसंहारात्तदन्यमात्रसङ्कोचार्थस्य पर्युदासस्य स्पष्टं भे लक्षण्यमित्यनवद्यं परिहरति * सत्यमिति * दृष्टविरोधादीन्वक्ष्

१ अन्यत एव पर्युदासशब्दादेव पर्युदसनीयादन्येषु पर्युदसनीयादन्यमात्रं यत् यागाया साधारणस्तस्य सङ्कोचः यागमात्रस्य तत् विशेषवाक्येन आज्यभागौ यजतीत्यादिना क्रियतइत्य

माणान्सर्वान्हेतूनभिधेयशून्यरूपानर्थक्यप्रतिपादनपरतया सामान्य तो व्याचष्टे * अतः परामिति * अत्र भाष्यकारेण धूम एवाग्नेर्दिव ददृशे नार्चिरित्यादिदृष्टविरोधोदाहरणं दर्शयित्वा तस्मान्निषावधारणा सिध्यतीत्युक्तम्। तद्धूम एवार्चिरेवेत्यवधारणानुपपत्त्युपसंहारार्थत्वेन तावद्व्याचष्टे * रात्रिं दिवामिति * यद्वैतदवधारणद्वयानुपपत्त्युपसंहारस्य तस्मात् दृष्टविरुद्धमित्यनेनैव सिद्धत्वात्तदुपपाद्यस्य दिवाग्निरादित्यं गतो रात्रावादित्यस्तमित्यवधारणद्वयस्यासिद्धिप्रतिपादनार्थमेतद्भाष्यमित्याह * अथ वेति * स्वरूपपरत्वस्य वा सिद्धान्तिनो ऽनिष्टत्वात्तत्रासत्यत्वे ऽपि न कापि क्षतिरित्याशङ्क्य स्वार्थासत्यत्वे निरालम्बनस्तुत्यनुपपत्तिं तदनुपपत्त्या वा तत्कल्प्यमन्त्रविध्यनुपपत्तिमेकदेशाप्रामाण्ये वा समस्तवेदप्रामाण्यावधारणानुपपत्तिं प्रतिपादयितुमेतदित्याह * ततश्चेति * एतच्च स्वार्थासत्यत्वप्रतिपादनस्य पूर्वपक्ष्यभिप्रेतधर्माप्रामाण्योपयोगित्वप्रदर्शनार्थं व्याख्यानत्रयं न त्वनन्तरानिर्दिष्टस्य स्तुत्यादिरेवेति सर्वनाम्ना निर्देशो युज्यते। एकैकोदाहरणे चोभयाविरोधव्याख्यासिद्धेरुदाहरणद्वयमनर्थकम्। अथ परिहारवैलक्षण्यादुदाहरणद्वयम्। तथापि शास्त्रविरोधोदाहरणद्वयमुक्त्वा दृष्टविरोधोदाहरणं वाच्यं व्युत्क्रमे किं कारणमित्याशङ्क्याह * शास्त्रेति * प्रायादित्यनेनानृतवादिनीत्वालम्बने बाहुल्ये ऽभिहिते धूम एवेत्यवधारणे ऽपि भूयस्त्वाख्यस्य बाहुल्यस्यालम्बनत्वेन बुद्धिस्थत्वादनृतवादिनीत्वोदाहरणपरिहारानन्तरं धूमोदाहरणपरिहारे ऽपि भूयस्त्वशब्देनोक्तेनार्चिरित्यदर्शनोक्त्यालम्बने च समीपगमनक्लेशनिबन्धने दुर्ज्ञेयत्वे दूरशब्देनोक्ते ब्राह्मणयाज्ञानोक्तावपि स्वयपराधनिबन्धनस्य दुर्ज्ञेयत्वस्यालम्बनत्वेन बुद्धिस्थत्वात्तदनन्तरं परिहार इति परिहारक्रमकारणम्। परिहाराणां सूत्रक्रमेण भेदेन चेति विग्रहः। उदाहरणानेकत्वकारणत्वेन परिहारभेदोक्तिः। न चैतद्विद्म इत्यत्राक्रियार्थत्वादप्रमाणमिति भाष्यकारेणोक्तं तत्सिद्धान्त्यभिमतस्तुत्यर्थत्वनिराकरणपरतया व्याचष्टे * न चैतदिति * आर्षेयप्रवरणशब्देनात्र प्रवरे प्रव्रियमाणे देवाः पितर इति ब्रूयादित्यार्षेयवरणानुमन्त्रणविधिरभिप्रेतः तेन चेहोदाहरणे ऽनुमन्त्रणक्रियास्तुत्यप्रतीतेरानर्थक्यमित्याद्यं सूत्रं योजितम्। तदेवोपपादयति * न हीति केन चिदंशेनेति * विधेयस्तुत्यंशेनान्यान्निन्दांशेन वेत्यर्थः। यद्वा दृष्टविरोधित्वेनैव क्रियास्तुत्यर्थत्वासम्भवादानर्थक्यमनेनोक्तमित्येतदेव भाष्यमन्यथा व्याचष्टे * न चेति * अथायमर्थ इत्यनेनानर्थक्यएव दृष्टवि-

रोधो हेतुरुक्तः तद्व्याचष्टे * न चेति * चोदयति * कथं !
ति । शास्त्रेणैवेति * सवर्णायां स्वभार्यायामुत्पादितः
एवासवर्णायां मूर्द्धावसिक्तादिः । परभार्यायां जीवत्प
कुण्डो विधवायां गोलकः । पुनश्चोत्कर्षापकर्षाभ्यामन्यतर
त्तिरित्यादिशास्त्रैकगोचरत्वान्न प्रत्यक्षगम्यमित्यर्थः । प
* नायमिति * एतदेवाशङ्कापूर्वकं विवृणोति * कथं पुन
आशङ्किता स्वाभिप्रायमाविष्करोति * कस्मात्पुनरिति * 
न्द्रियव्यापारे प्रतीत्यभावान्न ब्राह्मणत्वादेः प्रत्यक्षत्वं युज्यते
च्चोत्पादकजातिज्ञानस्य सहकारित्वं सम्भवत्यात्माश्रयदोषापत्ते
गुत्पादकजातिज्ञानादाप्तवाक्यजनितं ज्ञानं न प्रत्यक्षत्वेनाश
त्यनाख्यातग्रहणेनोक्तम् । यद्धानेन ग्रन्थेन ब्राह्मण्यादिजाति
यते । सपिण्डानुवर्त्ती विजातीयेभ्यो व्यावृत्त आकारो जा
क्षत्रियादिभ्यो व्यावृत्तो ब्राह्मणेष्वनुवृत्तः कश्चिदाकारविशेषो
तापितृसम्बन्धज्ञेनापि प्रतीयते । तस्माद् ब्राह्मणादिशब्दव्यप
मातापितृसन्तानजन्यत्वौपाधिको ब्राह्मणादिशब्दो न जातिव
सन्तानस्य चानेकविप्रकृष्टकालपुरुषव्यासङ्गिनः प्रत्यक्षेण ग्रही
क्यत्वान्न तदुपाधिकस्य ब्राह्मण्यादेः प्रत्यक्षत्वं सम्भवतीति ।
ङ्काभिप्रायं परिहर्त्ता दूषयति * शब्दाभावादिति * अयमाशय
तापितृसम्बन्धज्ञस्यापत्ये ब्राह्मण्यादिप्रत्ययस्तावत्सन्देहबाधरा
स्वसंवेद्यः न च निर्विषयः प्रत्ययो ऽस्तीत्युक्तम् । न चास्य 
नविशेषजन्यत्वं विषयः । निरालम्बनशब्दप्रयोगायोगेन जा
तिरिक्तस्य सन्तानान्तरव्यावृत्तस्य विशेषस्यासम्भवात् । न च
द्ब्राह्मद्वित्रिसन्तानमात्रे सन्तानः समाप्यते । येन सम्बन्धि
णाव सम्बन्धः सन्तानिविशेषेण सन्तानो विशेष्टुं शक्यते ।
चैकदेशावस्थिता वृक्षा एव वनशब्देनोच्यन्ते । तथोत्पाद्योत्पाद
मेणावस्थिताः पुरुषा एव सन्तानशब्दवाच्याः न सन्तानाख्
चिद्वस्त्वस्ति । तस्मात्सर्वेषु ब्राह्मणेष्वनुस्यूतं प्रत्येकसमवेतं
णप्रत्ययविषयभूतं किंचिदवश्यमेष्टव्यम् । यच्चाकारविशेषो
तीयतइत्युक्तम् । तत्र यद्याकारशब्देन संस्थानं मुद्रापरनाम
भिप्रेतं ततस्तस्य जातित्वानङ्गीकाराददोषः । ब्राह्मणप्रत्ययवे
धर्मविशेषो ऽनुभवसिद्धत्वान्नापह्नवमर्हति । वृक्षत्वाद्यप्यनुभवा
पातिरेकेण निरूपयितुमशक्यम् । शाखादिमद्रूपस्य संस्थानात्मक
जातित्वाभावात्संस्थानविशेषस्य हि प्रतिव्यक्तिविलक्षणत्वात्सं
मात्रस्य त्वन्यजातीयेष्वपि समानत्वादवान्तरविशेषस्य चानिरूप

ावविन्यासविशेषात्मकस्य संस्थानस्य निरवयवेष्वसंभवान्न संस्थान-
ाकारमुद्रापरनामधेयं जातिरिष्यते । तस्मात्समानाकारेष्वपि पि-
डेषु विलक्षणब्राह्मणप्रत्ययवेद्यब्राह्मण्यादिजातिर्नापह्नोतुं शक्यते ।
चासौ शास्त्रस्य विषयः । प्रमाणान्तराग्रहीतायां जातौ अग्रहीत-
म्बन्धत्वेन ब्राह्मण्यादिपदार्थाज्ञानात् । ब्राह्मणाद् ब्राह्मण्यां यो जा-
ते स ब्राह्मण इतिवाक्यार्थानवधारणात्सम्बन्धाग्रहणादेव नानुमे-
त्वं सदृशानुपपद्यमानार्थाभावादुपमानार्थापत्त्यसम्भवात्पारिशेष्या-
त्यक्षत्वम् । उत्पादकजातिज्ञानात्तु प्रागप्रतीतेस्तस्य सहकारित्वं
ल्प्यते जात्यभेदे ऽपि व्यक्तिभेदेन जातिव्यक्तिसम्बन्धभेदादुत्पाद-
व्यक्तिसम्बन्धितया जातिज्ञानमुत्पाद्य व्यक्तिसम्बन्धितया जाति-
ाने कारणमित्यात्माश्रयत्वाप्रसङ्गः । सहकार्यपेक्षत्वे ऽप्यैन्द्रिय-
त्वाव्याघाते दृष्टान्तमाह * यथेति * शब्दोल्लेखप्रतीतौ १ चार्थं
ान्तः । आशङ्किता तु वृक्षत्वस्य स्वरूपग्रहणे सहकार्यनपेक्षणाद्वैष-
ह * नैतदिति * शब्दोल्लेखप्रतीतावपि २ शब्दातिरिक्तसहका-
पेक्षणादपरं वैषम्यमाह * अपि चेति * निमित्तान्तरग्रहणेनैत-
ायति । प्रतीत्यन्यथानुपपत्त्या कल्प्यमानमपि शब्दातिरिक्तस-
ारिग्राह्यात् ब्राह्मणत्वादन्यत्कल्प्यम् । न चोत्पादकगतं ब्राह्म-
वमुत्पाद्यगतात् ब्राह्मणत्वादन्यदित्येकस्य कर्मकरणत्वायोगान्न
य सहकारित्वं युक्तमिति । उपवीतादीनां तु व्यभिचारात्सहका-
वमनाशङ्क्यमेवेत्याह * नचेति * अध्यापनादीनां ब्राह्मणस्यैव
धानादव्यभिचारमाशङ्क्याह * अध्यापनाद्यपीति * क्षत्रियवैश्यौ
ियुज्यतइति क्षत्रियवैश्यप्रतियोगिक्षत्रियवैश्यौ वा प्रतियोगिनौ
ंसंबन्धिनौ यस्येत्यर्थः । नन्वध्यापनादिकारिणि लोके निर्विचिकि-
ब्राह्मणप्रत्ययदर्शनात् न क्वचिद्व्यभिचारमात्रेणाप्रामाण्याशङ्का
ेत्याशङ्क्याह * यस्त्विति * अध्यापनादीनां व्यभिचारित्वेन
विचिकित्सप्रत्ययोत्पादकत्वं न युक्तमितिभावः । परिहरन्तूष्णी-
तनेत्रस्य ब्राह्मणो ऽयमित्यसन्दिग्धाबाधितापरोक्षप्रत्ययोत्पत्तेर्ब्रा-
यप्रत्यक्षत्वापह्नवायोगादन्वयव्यतिरेकबलेनोत्पादकजातिज्ञानस्यो-
कारेण परिहृतात्माश्रयदोषस्य सहकारित्वकल्पनैवोचितेत्यभि-
ेणाह * नैष दोष इति * वृक्षे स्ववैषम्यलक्षणो ऽध्यापनादिनि-
त्वासम्भवलक्षणो वा न दोष इत्यर्थः । यदि चान्यजातिग्रहणे

१ नन्वगृहीतसङ्गतिनापि समनस्केन्द्रियसन्निकर्षे वृक्षत्वं गृह्यतएव तत्त्वेन परं न गृ-
ह्यत आह शब्दोल्लेखेति । वृक्षो ऽयमितिशब्दोल्लेखप्रतीतिरित्यर्थः
२ वृक्षत्वज्ञाने शब्दातिरिक्तं सहकारि नापेक्ष्यते ब्राह्मण्ये त्वपेक्ष्यतइति वैधर्म्यमित्यर्थः

सर्वत्रैकरूपं सहकारि स्यात्ततो ऽत्र तद्वैषम्यस्य दोषत्वं शङ्क्येतापि न त्वेतदस्ति आकृतिवादे तस्योपलक्षणं वापि क्वचित् केन चिदिष्यते इत्यादिना जातिविशेषेषु यथा दर्शनविलक्षणसहकार्यभिधानादित्याह * क्वचिदिति * रूपादेर्गुणविशेषस्यैव सुवर्णत्वादिजातिग्रहणे सहकारित्वदर्शनान्न जातेः सहकारित्वं कल्पयितुं युक्तमित्याशङ्क्यान्यत्रादृष्टमपीहैव प्रतीतिबलादवश्यं कल्पनीयमिति दर्शयन्नुपसंहरति * तेनेति * प्रतीतिबलादेव यथासम्भवं प्रत्यक्षानुमानाद्यवगताया सहकारित्वकल्पनं नायुक्तमित्याह * अयं चेति * न च प्रत्यक्षावगतमेव प्रत्यक्षज्ञाने कारणमिति नियमो युज्यते चक्षुरादौ व्यभिचारादित्याह * न चेति * न च जातिस्मरणव्यवधानमात्रेण चक्षुषोऽकारणत्वं वाच्यं प्रत्यक्षसूत्रे तत्र शब्दार्थसंबन्धमित्यादिना १ स्मरणव्यवधाने ऽप्यपरोक्षप्रतीतेः प्रत्यक्षत्वाभिधानादित्याह * आन्तरलिकेति * न च मातापितृसंबन्धानभिज्ञाप्रत्यक्षत्वमात्रेण तदभिज्ञाप्रत्यक्षत्वं विमनस्का यदा केचिदित्यादिना २ निराकृतत्वादित्या * न चेति * ननु स्त्रीव्यभिचारशङ्कया मातापितृसंबधानिश्चयान्नपत्ये ब्राह्मण्यानिश्चयः कस्य चिदपि सम्भवतीत्याशङ्क्याह * स्वचपराधात्विति * स्त्रीणां स्वातन्त्र्यनिषेधाद्भर्त्रादिभिः प्रयत्नेन रक्षणयोग्यानुपलब्ध्या व्यभिचारशङ्कायाः परिहर्तुं शक्यत्वाद् दुर्ज्ञानत्वमात्रं मातापितृसंबन्धानभिज्ञस्य भवेन्न तु सर्वात्मना ज्ञानाभाव इत्यर्थः । एतच्च दुर्ज्ञानत्वादज्ञानवचनं गौणमिति स्वचपराधेनेत्यत्र भाष्यकारो वक्ष्यतीत्याह * इति स्वयमेवेति * न च दुर्ज्ञानत्वमात्रेण प्रत्यक्षत्वं शङ्क्यं, गिरिशृङ्गारोहणजन्यस्यापि दूरस्थपदार्थज्ञानस्य प्रत्यक्षत्वसिद्धेरित्याह * न चेति * ननु स्त्रीणां प्रायेण चञ्चलत्वदर्शनान्न वै स्त्रैणानि सख्यानि सन्ति शालावृकाणां हृदयान्येता स्त्रिय अशास्यं मन इति च वेदे ऽनुवादात्सुरूपं वा कुरूपं वा पुमानित्येवं भुञ्जत इत्यादिस्मृतेश्च । व्यभिचारस्वभावत्वावधारणाददृष्टव्यभिचारास्वपि स्त्रीत्वेन व्यभिचारो ऽनुमास्यते पलाशत्वेनेव वृक्षत्वमित्याशङ्क्याह * न चेति * स्त्रीत्वस्य व्यभिचाराप्रयोजकत्वसूचनार्थो ऽनुमकल्पनाशब्दः । न च निर्मूलकत्वेन लोकस्याप्रामाण्यं प्रयत्नेन रक्षयोग्यानुपलब्धेर्मूलत्वसम्भवादिति दर्शयितुमाह * विशिष्टेन हीति महाकुलीनानां पुरुषाणां स्त्रीरक्षणमेवात्मरक्षणं जायायां रक्ष्यमाणायामात्मा भवति रक्षित इतिस्मरणात् । यद्वा दुष्कुलप्रसूतत्वं

१ साधर्ते शब्दसंबन्धौ माभूत्प्रत्यक्षता तयोः । तदप्रत्यक्षभावेन न त्वर्थस्यापि बाध्यते

२ तत्र शब्दार्थसंबन्धप्रमातुः स्मरतो ऽपि वा । बुद्धिः पूर्वं गृहीतार्थसन्धानादुपजायते

भिचारशीलत्वे प्रयोजकं न स्त्रीत्वमिति दर्शयितुं महाकुलीनत्वं स्त्रीणामुक्तम् । व्यभिचाराभावनिश्चयमेवाभियुक्तवृद्धव्यवहारेण द्रढयति * अनेनैवेति * व्यभिचाराभावानिश्चये हि निर्मूलत्वात् पितृपितामहादिपरम्परालेखनात्मकसमूहलेख्यं व्यर्थं स्यादितिभावः । कुलपरीक्षापूर्वकेदानींतनपुरुषगतविवाहादिव्यवहारेणापि तमेव दृढयति * तथा चेति * एतावत्प्रयत्नान्वेषणे योग्यानुपलब्धिपूर्विकया लोकप्रसिद्ध्या व्यभिचाराभावनिश्चयान्न स्त्रीत्वमात्रेणादृष्टव्यभिचारासु व्यभिचारानुमानं युक्तमित्युक्तम्। इदानीमनुमीयमानो ऽपि व्यभिचारो ऽनैकान्ततो वर्णसङ्करमापादयतीत्याह * न चेति * न च व्यभिचारोत्पन्नत्वाभावे ऽपि मातृव्यभिचारमात्रेणापत्ये वर्णसङ्करः शङ्क्यः। सावर्ण्योत्पत्तिकारणस्योत्पादकसवर्णत्वस्याविघातादित्याह * तदपराधनिमित्तस्त्विति * व्यभिचारोत्पन्नस्यापि वर्णान्तरव्यभिचारानिश्चये वर्णसङ्करानिश्चय इत्याह * न चेति * ननु विन्नास्वेव विधिः स्मृत इत्यादिवचनाद्भर्तृव्यतिरिक्तसवर्णोत्पन्नस्यापि वर्णान्तरापत्तिः स्यादित्याशङ्क्याह * सवर्णेन चेति* गवादावुत्पादकसजातीयापत्योत्पादकत्वदर्शनेनेहापि तथानुमानान्न वर्णान्तरापत्तिः सम्भवतीति ब्राह्मणादिविहितकर्म्मानधिकारप्रतिपादनपरं विन्नास्विति वचनं व्याख्येयं कुण्डगोलकवचनमपि सत्येव ब्राह्मण्ये ऽवान्तरसंज्ञाविशेषप्रतिपादनपरमिति उत्पादकासावर्ण्ये ऽपि क्वचिदन्यतरसवर्णोत्पत्तिस्मरणान्नात्यन्तं तदुच्छेदः किमुत तत्सावर्ण्यइत्यतिशयार्थमाह * सङ्करजातानामपि चेति * एवं हि स्मर्यते।

जात्युत्कर्षो युगे ज्ञेयस्सप्तमे पञ्चमे ऽपि वा ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरमिति ॥

अस्यार्थः क्षत्रियायां ब्राह्मणादुत्पन्ना कन्या मूर्द्धावसिक्ता ब्राह्मणाय दीयमाना मूर्द्धावसिक्तजातेरुत्कृष्टां[१] कन्यां जनयति सापि ब्राह्मणाय दीयमाना कन्यान्तरमेवेत्येवं पञ्चमे युगे पुरुषान्तरे ब्राह्मण्योत्पत्त्या जात्युत्कर्षः एवं वाशूद्रात् षष्ठे वैश्यायां सप्तमे शूद्रायामिति। मूर्द्धावसिक्तादिपुत्रपरम्परायास्तु क्षत्रियादिस्त्रीणां तथैव पञ्चमादिषु क्षत्रियादिजातीयापत्योत्पत्तेरपकर्ष इति पूर्ववच्चाधरोत्तरमित्युत्तरत्रातिदेशात्सूचितं, नन्वस्यार्थस्य प्रत्यक्षेण विवेक्तुमशक्यत्वाद् ब्राह्मण्यादेश्च शास्त्रविषयत्वानङ्गीकारेण निर्मूलमेतत्स्मरणं स्यादत आह * तत्र त्विति *

१ ब्राह्मणजातितोऽपकृष्टामित्यधिकं २ पु० ।

क चित्प्रत्यक्षावगतायां जातौ सम्बन्धग्रहणसम्भवात्. अ
केन शास्त्रेणान्यत्र तत्प्रतिपादनं युक्तमिति मात्रशब्देन स्
क्षावगतिसम्भवादन्यत्र शास्त्रव्यापारो नाङ्गीकृतः, इह इ
वाच्छास्त्रविषयत्वं नायुक्तमित्याह * न हीति * नन्वा
क चिदपि ब्राह्मण्यादिविवेकस्य प्रत्यक्षेणावगत्यसम्भवा
गम्यत्वमेवाङ्गीकार्यमित्याशङ्कां निराकुर्वन्नुपसंहरति * :
केन चिन्निमित्तेनेति * स्वरविशेषादिनेत्यर्थः । स्मर
न्त्र्येण प्रामाण्यायोगात्तन्मूलप्रदर्शनार्थं दर्शनग्रहणं त
कजातिस्मरणनिरपेक्षेन्द्रियजन्यत्वायोगात्पूर्वोत्पादकजा
त्सहकारीति निदर्शयितुं पारम्पर्यग्रहणं प्रत्यक्षत्वोप
पसंहरति * इति भवतीति * ननु

शमो दमस्तपः शौचं सत्यमार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म प्रचक्षते ॥

इत्यादिस्मृतिपर्यालोचनया तपःप्रभृत्याचारयोगनिमित्त
णशब्दप्रवृत्तेस्तस्य प्रत्यक्षत्वेन दृष्टविरोधसम्भवात्किमिति
जातिः साध्यते अत आह * येषामिति * प्रमाणाभावमुप
* सिद्धानां हीति * अनवस्थितत्वापत्तेरप्याचारनिमित्त
क्तमित्याह * स एवेति * कारणान्तरमाह * त
तपःप्रभृत्याचारयोगिनि लोके ब्राह्मणशब्दप्रयोगदर्शन
न्निमित्तत्वनिरासोऽत आह * एताभिरिति * ब्राह्मण
द्योतकत्वमात्रं तपःप्रभृतीनां न तु ब्राह्मणशब्दप्रवृत्ति
त्यर्थः यद्वा का तर्ह्यस्याः स्मृतेर्गतिरित्याशङ्क्यैतदुक्तम्
त्वमात्रं स्मृत्या प्रतिपाद्यते न तु तपआदीनां समुद
स्मृत्या प्रतिपाद्यतइत्यर्थः । यदा तु पूर्वोक्तार्थोपसंहार
विवक्षा व्याख्यायते तदा नैताभिस्तपःप्रभृतिभिरुपप
ह्मणः प्रतिपाद्यते द्योत्यतइति योज्यम् । किं त्वेताभि
सङ्गादिभिरुपपत्तिभिरयमर्थः प्रतिपाद्यते । तदुच्यते
समुदायो ब्राह्मण्यमिति । ननु तपःप्रभृतीनां आचार
रित्वेन प्रत्येकं ब्राह्मणशब्दप्रवृत्तिनिमित्तत्वायोगात् :
भावेन च समुदायाभावान्माभून्निमित्तत्वं तज्जनितस्य
भविष्यत्यत आह * नेति * माभूच्छब्दप्रवृत्तिनिमित्त
व्यञ्जकत्वं भविष्यत्यत आह * नेति * उभयत्र पूर्वो
त्रयमतिदेष्टव्यम् । एवं तर्हि व्यञ्जकाभावेनाप्रत्यक्षत्वं
निराकरणार्थं पूर्वोक्तमभिव्यञ्जकं स्मारयति * किं

नन्वाचारनिमित्तत्वाभावे मासेन शूद्रो भवति ब्राह्मणः क्षीरविक्रयादिति वचनमनर्थकं स्यादित्यतआह * तस्मादिति * न तु सत्यपि प्रत्यक्षविरोधे विकल्पेन प्रामाण्योपपत्तेः प्रत्यक्षविरुद्धं वचनमप्रमाणमिति भाष्यमयुक्तमित्याशङ्क्याह * पूर्ववच्चेति * विकल्पविषय एवायं न भवतीत्याह*अपि चेति * को हि तद्वेदेति*शास्त्रदृष्टविरोधोदाहरणे भाष्यकारेण पूर्वं तावदाद्यं सूत्रं योजितं * यदि प्रश्नइति * तद्व्याचष्टे * पूर्ववदेवेति * शास्त्रदृष्टविरोधप्रतिपादनार्थं यद्यनवक्लृप्तिरित्यादिभाष्यं तद्व्याचष्टे * निश्चितेति *

## तथा फलाभावात् ॥ ३ ॥

अत्र भाष्यकारेण शोभते ऽस्य मुखमित्याद्युदाहृत्य आद्यन्तावत्सूत्रं योजितं यदि भूतानुवादो ऽनर्थक इति तद्व्याचष्टे * यदि तावदिति * गर्गत्रिरात्रब्राह्मणोपक्रमोपन्यासस्य य एवं वेदेत्येवं शब्दव्याख्यानार्थत्वं गर्गत्रिरात्रब्राह्मणग्रहणेनोक्तम् । उदाहरणान्तरगतैवंशब्दस्य व्याख्यानार्थं वेदानुमन्त्रणग्रहणम् । विद्यमानयोरेवेत्यनेन यथादृष्टवचनत्वं भूतशब्दस्य दर्शितम् । सम्भवति च गर्गत्रिरात्राहीनविशेषविधायिब्राह्मणस्य परिहारसूत्रवक्ष्यमाणप्रकारेण मुखशोभावेदानुमन्त्रणस्य तु वाजिनमिति मन्त्रलिङ्गादपि गम्यते । प्रकृतसूत्रयोजनार्थम् । अथाध्ययनफलानुवाद इति भाष्यं तद्व्याचष्टे * अथ त्विति * मुख्यरूपयोर्मुखशोभावाजिजन्मनोर्योग्यानुपलब्धिर्बाधितत्वादिति भावः । कालान्तरफलत्वेन योग्यानुपलब्धिविरोधपरिहारशङ्कानिराकरणार्थत्वेन सौत्रतथाशब्दव्याख्यानार्थं कालान्तरइत्यादिभाष्यं तद्व्याचष्टे * वर्त्तमानापदेशाच्चेति * तदनेन यथाभूतं मुखशोभाद्यनन्तरफलत्वेन कीर्त्त्यते तथाभूतस्याभावादानर्थक्यामितिसूत्रं योजितम् । फलविधित्वेन कालान्तरभावित्वावगमात् वर्त्तमानापदेशो ऽयं न भवतीत्याशङ्क्य द्रव्यसंस्कारकर्मस्वित्यत्र निराकरिष्यमाणत्वान्नायं फलविधिरिति भाष्यकृतोक्तम् तत्र विद्याया द्रव्यादिबाह्यत्वात्तदधिकरणाविषयत्वमाशङ्क्य संस्कारान्तर्गतिं दर्शयितुमाह * कर्मानुष्ठानेति * तत्र हि यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति । तीर्थे स्नाति तीर्थमेव समानानां भवति । वर्म्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजा इज्यन्ते वर्म्म यजमानस्य भ्रातृव्याभिभूत्याइत्यादीनि द्रव्यादिविषयाणि वाक्यान्युदाहृत्य किमेते फलविधयः फलार्थवादा वेति विचारयिष्यते । तत्र पर्णतादेरप्राप्तत्वेनावश्यविधेयस्य फलाकाङ्क्षायां साक्षात्पुरुषार्थरूपश्च

फलसम्भवे पारम्पर्य्यपुरुषार्थरूपक्रतूपकाराख्यफलकल्पनायोगा-
दलविधित्वेन पूर्वपक्षयित्वा यथा कथं चित्पुरुषार्थरूपफलत्वेन वि-
ानुपपत्तिपरिहाराद्रात्रिसत्रादिवद्धिपरिणामकल्पनानुपपत्तेर्यथाश्रु-
वर्त्तमानफलत्वसङ्कीर्त्तनस्य चानुपलब्धिविरोधान्न फलविधित्वमि-
सिद्धान्तयिष्यते चिन्तयिष्यत्येतदित्यादिभाष्यं पौनरुक्त्याश-
ानिराकरणार्थत्वेन व्याचष्टे ※ न पौनरुक्त्यादिति ※ एवं तर्हि
ाद्धान्त्यभिमतं स्तुत्यर्थत्वमेव पूर्वपक्षिणा निराकार्यमित्याशङ्क्य
ार्थमेव स्वार्थासत्यत्वनिरूपणमित्याह ※ स्तुत्यर्थतेति ※

## अन्यानर्थक्यात् ॥ ४ ॥

अत्र भाष्यकारेण पूर्णाहुत्याद्युदाहरणेषु यदि भूतानुवादमा-
ानर्थकमित्यनेनाद्यं सूत्रं योजयित्वाऽथाफलविधिरन्येषामानर्थक्य-
त्यनेनान्यानर्थक्यसूत्रं योजितम् । तत्र फलाभावसूत्रमपि योज-
तुं शक्यत्वात् किमिति न योजितमित्याशङ्क्यानन्तरेणैव निर्णीत-
रार्थ्येषु फलविधित्वनिराकरणन्यायेनात्रापि फलाभावस्य सुज्ञान-
ादित्याह ※ अनन्तरेणैवेति ※ कथमेषां तदधिकरणाविषयत्वमि-
ाशङ्क्याह ※ पूर्णाहुतेरिति ※ यदीत्यादिभाष्यं व्याचष्टे ※ यदि पु-
रेति ※ न ह्यकृत्वेत्यादिनान्यानर्थक्योपपादनार्थं पौर्वापर्य्यमुपन्य-
म् । तत्र समानफलकर्माल्पत्वमहत्वमात्रेणान्यानर्थक्योपपत्तेः
र्वापर्योपन्यासो व्यर्थ इत्याशङ्क्याह ※ समानफलान्यपीति ※ अ-
ाब्देनाल्पत्वमहत्वमुपक्षिप्तमज्ञातस्यानुष्ठातुमशक्यत्वाद्युक्तमश्वमेध-
नस्य तदनुष्ठानात्प्राग्भावित्वं पूर्णाहुतिपशुबन्धयोस्तु कथमत
ह ※ पूर्णाहुतीति ※ अग्निहोत्राद्यङ्गभूताग्न्युत्पादकाधानाङ्ग-
ात्पूर्णाहुतेः प्राग्भावः स एष औपवसथ्येऽहनि छिदेवत्यः पशु-
लभ्यतइत्यनेन वचनेनाग्नीषोमीयस्येति भावः ※ प्रथमं वा निय-
तेति ※ वसन्ताय कपिञ्जलानालभेत इत्याद्युदाहृत्य किं त्र्यादयः
ार्द्धपर्य्यन्ता विकल्पेनालब्धव्या उत त्रय एवेत्येकादशे चिन्तयि-
ते । तत्र बहुवचनेन द्वित्वातिरिक्तसङ्ख्यासामान्यरूपबहुत्वा-
धायिनां तद्विशेषाकाङ्क्षायां परार्द्धातिरिक्तसङ्ख्याविशेषाभावा-
त्पर्य्यन्तत्र्यादिसंख्याविशेषाक्षेपात्समुच्चये संख्यान्तरोपजननेन स-
वेनाशापत्तेर्विकल्पेन विनियोग इति । बहुवचनेन सर्वप्राप्तेर्विकल्पः
ादित्यनेन पूर्वपक्षयित्वा प्रथमं वा नियम्येत कारणादतिक्रमः
ादित्यनेन त्रिसंख्योपादानं विना चतुराद्युपादानाशक्तेरवश्योपादे-
त्वमात्रेण बहुवचनोपपत्तेरतिरिक्ताक्षेपे प्रमाणाभावात् त्रित्व-

नियम इति सिद्धान्तयिष्यते । दृष्टान्ते पौर्वापर्य्यादरार्थमेव तेनैव पथेत्युक्तमित्याह ॥ तथा चेति ॥ भवत्वन्यानर्थक्यमत आह ॥ तस्मादिति ॥ फलविशेषार्थत्वेन तर्ह्यन्येषामर्थवत्त्वं भविष्यतीत्यत आह ॥ न चेति ॥ नन्वेवमपि सिद्धान्त्यभिमतस्तुत्यर्थत्वानिराकरणात्पूर्वपक्षो न सिद्धो ऽत आह ॥ न चेति ॥

## अभागिप्रतिषेधात् ॥ ५ ॥

अत्र भाष्यकृता न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीत्यप्रतिषेधभागिनमर्थं प्रतिषेधन्तीति बहुवचनं प्रयुक्तम् । तदयुक्तम् । पृथिवीचयनस्य प्राप्तेः प्रतिषेधभागित्वादित्याशङ्क्याह ॥ अपीति ॥ विज्ञायत एवेति भाष्यं व्याचष्टे ॥ अन्तरिक्ष इति ॥ अस्तु तर्हि पर्युदासो ऽत आह ॥ अतश्चेति ॥ प्रतिषेधग्रहणं पर्युदासस्याप्युपलक्षणार्थमिति भावः । उभयत्र सिद्धान्त्यभिमतं नित्यानुवादत्वं निराकर्तुमाद्यं सूत्रं योजयति ॥ अथापीति ॥ पृथिवीचयनस्याप्रतिषेधभागित्वप्रदर्शनार्थं पृथिवीचयनप्रतिषेधार्थं च यद्वाक्यं भवेत् चयननिषेधार्थमेव तदितिभाष्यं तदुपपादयति ॥ पृथिवीति ॥ अस्तु तद्बाधो ऽत आह ॥ बाधे चेति ॥ विकल्पेन चयनविधेरप्यर्थवत्त्वं भविष्यत्यत आह ॥ विकल्पे ऽपीति ॥ पाक्षिकबाधार्थमेवार्थं प्रतिषेधो भविष्यति नातिरात्रे षोडशिनं गृह्णातीतिवदत आह ॥ कामसंयोगाच्चेति ॥ पशुकामश्चिन्वीत प्रजाकामश्चिन्वीतेत्यादिभिर्वाक्यैः काम्यत्वावगमाद्विनापि प्रतिषेधं पाक्षिकत्वसिद्धेः प्रतिषेधानर्थक्यमिति भावः । न च कामाभावे पाक्षिकत्वं प्रतिषेधवशात्स्यतीति शक्यं वक्तुं काम्यस्य कामनाभावे प्राप्त्यभावेन प्रतिषेधायोगात् विशेषणोपादाने च तत्परतयावगतस्यास्य प्रतिषेधस्य क्रियायां कल्प्यत्वेन दौर्बल्याच्च पाक्षिकत्वापादने सामर्थ्यमस्तीत्याह दुर्बलश्चेति ॥ ननु दुर्बलेनापि प्रतिषेधेनागत्या पाक्षिकचयनाविबाधो नातीव दोषमावहतीत्याशङ्क्य अथाप्रमाणं नैष विरोधो भवतीत्यनेन भाष्येण प्रतिषेधाप्रामाण्येनागतिपरिहारः कृतस्तदतिस्पष्टत्वान्न वार्त्तिककृता व्याख्यातम् । ननु बहुतरक्लृप्ताग्निहोत्रादिविधिविरोधेनैकस्य कल्प्यस्य पूर्णाहुत्यादिविधेरप्रामाण्यं युक्तं इह द्वयोः प्रत्यक्षत्वेनाविशेषात्कथमेकान्ततः प्रतिषेधस्यैवाप्रामाण्यमित्याशङ्कानिराकरणार्थं भाष्यम् ॥ कथं तत्प्रमाणमित्यादि ॥ तत्र

---

१ अगत्येति इष्टकाभिरग्निं चिन्वीतेतिवचनासामर्थ्यात्पृथिव्यामेव चयनं प्राप्तं तत्र न प्राप्तमिति यथाश्रुते ऽर्थे ऽभ्युपेतव्ये विधिरनर्थकः प्रत्यगतिः ।

स्वयमाकुलत्वमुपपादयति * एतदेवेति * अप्राप्तस्य चयनस्थ
थिव्याधारत्वनिषेधायोगात्प्राप्तिस्तावदङ्गीकार्या पुनश्चानाधारत्व
नायोगात्तन्निषेधोऽपीत्येतदेवेत्यनेन परामृष्टम् । किं तद्विध्यन्त
मित्यपेक्षायामाह * विध्यन्तरं चेति * अस्य गुणपरत्वाच्चयनो
क्तिवाक्योपलक्षणार्थत्वं दर्शयितुमिष्टकावाक्योपन्यासः स्तुत्यर्थ
चानाशङ्क्यमेवेत्याह * प्ररोचनाबुद्धिस्त्विति *

अनित्यसंयोगात् ॥ ६ ॥

नन्वतः परं स्वार्थेनैवानर्थक्यं प्रतिपादयतीति वार्त्तिकव
चनात्स्वार्थासत्यत्वरूपानर्थक्यप्रतिज्ञायामयं हेतुर्गम्यते तच्च विरु
म् । अनित्यो ह्यत्र प्रवाहणापत्यं बबरः स्वार्थः प्रतीयते तत्रासत्य
सति अनित्यसंयोग एव न स्यात् [1] न चानित्यसंयोगेनानित्यसंयो
भावः साध्यो भवितुमर्हति * उच्यते[2] * अनित्यसंयोगप्रसङ्गो
हेतुर्विवक्षितः ततश्च स्वार्थसत्यत्वेऽनित्यसंयोगप्रसङ्गात्तत्परिहार
स्वार्थासत्यत्वं बबरः प्रावाहणिरित्यादीनामेष्टव्यमितिसूत्रार्थो भव
अनित्यसंयोगान्मन्त्रानर्थक्यमित्यत्राप्यर्थप्रकाशनपक्षे यस्य यो
स एव तेन प्रकाशयितव्यः क चिच्चानित्यैरकर्म्माङ्गभूतैः स्वार्थैरर्थ
न्तो मन्त्रा लक्ष्यन्तइत्युपक्रमवार्त्तिकाद्यचेतद्विवक्षितं तथा सत्या
मदर्थाभिधानाद्वेदस्य कृत्रिमत्वेनाप्रामाण्यं प्रसज्येतेति चोपसंह
वार्तिकादनित्यसंयोगः खल्वपि भवेन्मन्त्रेष्वभिधानार्थेष्विातिभाष
च्चायमेवार्थः प्रतीयते । अन्यानर्थक्याभागिप्रतिषेधयोरप्येवम
तत्रापि स्वार्थासत्यत्वे तयोरभावात्सूत्रव्याख्यानार्थमनित्यसंय
श्चेति भाष्यं तत्सोपस्कारमेव द्रष्टव्यम् । अनित्यसंयोगः स्वार्थ
त्वे प्रसज्येत तस्मादानर्थक्यमेव युक्तमिति तत्रानित्यसंयोगप्रस
ङ्गाभावात्स्वार्थस्य सत्यत्वं स्तुत्यर्थत्वं तु सिद्धान्त्यभिमतं निराकर्त्तु
शक्यमित्याशङ्क्याह * सर्वोपाख्यानेष्विति * अयमाशयः अन्यप
त्वं ह्युच्यमानं कार्यपरत्वं वा स्यात् स्तुतिपरत्वं वा तच्चोभयम
प्रतीत्यनारूढत्वान्न युज्यते तेन पारिशेष्यादर्थवत्त्वमङ्गीकुर्वता स्वा
परत्वमेव वाच्यं तत्र चानित्यसंयोगः प्रसज्येत इति । ननु पर

---

१ यदा स्वार्थासत्यत्वरूपानर्थक्यप्रतिज्ञा तदा बबरादीनामनित्यानामर्थानामभाव
मिप्रायेणाह नचेति ।

२ बबरादिवाक्यानि प्रतीयमानबाधितार्थकानि सत्यत्वे ऽनित्यसंयोगप्रसङ्गात् ।

३ साध्यं तदेव सत्यार्थत्वे ऽप्यानर्थक्यप्रसङ्गात् यथार्थत्वे प्रसज्यमानाप्रतिषेधभाग्य
तिषेधकत्वादिति ।

ासामान्यमात्रमित्यत्र बबरादिशब्दानां नित्यसिद्धवाय्वाद्यर्थाभि-
येत्वस्योक्तत्वात्स्वार्थपरत्वे ऽपि नानित्यसंयोगप्रसङ्ग इत्याशङ्का-
ाकरणार्थं वेदप्रामाण्ये सतीति भाष्यं तद्व्याचष्टे * स चेति *
माशयः। अनित्यार्थाभिधायित्वे कृत्रिमत्वेन वेदस्याप्रामाण्या-
त्तत्परिहारार्थं कथं चिन्नित्यसिद्धवाय्वाद्यर्थवचनत्वं कल्पितं
तु कथं चित्प्रामाण्यं न सम्भवति तदा यथाश्रुतार्थपरित्यागका-
भावान्न क्लेशेन बबरादिशब्दानां वाय्वादिवचनत्वकल्पनं युक्त-
ि। नन्वेवमप्रामाण्ये सति यथाश्रुतार्थपरित्यागकारणाभावा-
त्यार्थाभिधायित्वमनित्यार्थाभिधायित्वे बबरादिवाक्यानां कृत-
नाप्रामाण्यमितीतरेतराश्रयमाशङ्क्यैतदेकदेशवदित्युक्तम् * त-
ः * यथेतरेषामनित्यसंयोगरहितानामापो वै शान्ता इत्यादीना-
देशानामक्रियार्थत्वादप्रामाण्यं तथैतेषामनित्यार्थानामप्यक्रिया-
नैवाप्रामाण्यसिद्धेर्न इतरेतराश्रयत्वमिति। नन्वध्ययनविधि
त्सर्वस्य वेदस्य पुरुषार्थौपयिकत्वावगतेः कथमर्थवादानर्थक्य-
ा अत आह * तस्मादिति * अदृष्टार्थत्वे ऽपि पुरुषार्थौपयि-
ोपपत्तेर्नैकान्ततो ऽर्थपरत्वमध्यापनविधिराक्षिपतीति भावः।
ादीनामित्यनेनैतद्दर्शयति प्रथमसूत्रव्युत्पादितमध्ययनविधेर्दृष्टा-
मर्थवादेष्वेवासम्भवादाक्षिप्य तेन सर्वत्र विधेर्हि प्रयोजनाका-
ां दृष्टे सम्भवत्यदृष्टं न कल्प्यमिति तत्रोक्तम्। न च सर्वत्रै-
ध्येष्ण भाव्यमिति नियमो युक्तः। स्तोभादिष्वर्थपरत्वासम्भ-
। अथ तत्रापि नियतकालसामभागपूरणाद्यर्थत्वादर्थज्ञाना-
ाभावे ऽपि दृष्टार्थत्वमात्रेणैकरूप्यमुच्यते। ततो ऽत्रापि य-
भवति तत्प्रयोजनमित्यनेन रूपेणैकरूप्यं मत्वा सन्तोष्टव्य-
। यद्वा अध्ययनसंस्कृतैरक्षरैर्यच्छक्यते पुरुषार्थरूपं तत् कुर्या-
ाध्ययनविधिना वेदाध्ययनस्य शक्यफलसाधनत्वावगमादर्थवा-
ैः कस्य चित्पुरुषार्थरूपस्य कर्त्तुमशक्यत्वान्निष्प्रयोजनत्वमे-
ोक्तमित्याह * अथ वेति * प्रत्यक्षशब्देनापरोक्षाकारवाचिना
ग्रपर्यन्तमध्यापनमभिप्रेतं तस्योपेक्षाफलत्वमुपपादयितुं हेतुतया-
दजनितस्य[3] ज्ञानस्य हेयोपादेयार्थविषयत्वेन तद्वाक्यानामुपेक्षा-
त्वं दृष्टान्ताभिधेनोक्तं द्रष्टव्यम्। अर्थपरत्वाभावे ऽपि कर्मानुष्ठा-

---

१ ग्रहणपर्यन्ततायां प्रत्यक्षत्वं भवतीतिभावः।

२ तस्य ग्रहणपर्यन्ताध्ययनस्योपेक्षाफलत्वमुपपादयितुमर्थवादवाक्यानामुपेक्षाफलत्वं
ाभिधेय हेतुतयोक्तमिति संबन्धः।

३ अर्थवादवाक्यानामुपेक्षाफलत्वमुपपादयितुमाह अर्थेति।

नकाले उच्चारणार्थत्वसम्भवादर्थवादाध्ययनस्यादृष्टार्थत्वं निष्प्रयोजनत्वं वा पूर्वपक्षिणापि नाङ्गीकार्य्यमित्याशङ्कते * अथेति * परिहरति * प्रयोगेति * अव्यापाररूपत्वेन मन्त्राणां व्यापारग्राहिणा करणेन साक्षाद्ग्रहणायोगादुच्चारणद्वारा तद्ग्रहणं तद्ग्रहणाच्चोच्चारणार्थतेत्यन्योन्याश्रयापत्तेश्च प्रकरणपाठमात्रेण विनियोगो युक्तः सामर्थ्यात्त्वभिधानक्रियार्थत्वावगमे तद्द्वारा प्रकरणग्रहणोपपत्तेरनुच्चारितस्याभिधानाशक्तेः कर्म्मकालोच्चारणसिद्धिरिति भावः। मन्त्राधिकरणपूर्वपक्षन्यायेन चार्थवादानामर्थपरत्वाभावे ऽपि कर्म्मकालोच्चारणमत्रत्यःपूर्वपक्षी मन्यतइत्यनभिमतमपि प्रौढ्यानुजानाति * अथ वेति * अस्मिन्पक्षे सूत्रविरोधमाशङ्क्याह * यत्त्विति *

विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥७॥

पूर्वपक्षसिद्धान्तयोर्भिन्नविषयत्वापत्तेरपूर्वोदाहरणानुपपत्तिमाशङ्कते * पूर्वपक्षेति * नातिप्रयत्निनां परिहारमाह * केचिदिति* भाष्यकारस्यानिपुणत्वापत्तेरिमं परिहारं दूषयति*यद्यपीति * स्वमतेन परिहरति * तदभिधीयतइति * अत्र भाष्यकारेण वायुर्वैक्षेपिष्ठा देवतेति यद्यपि क्रिया नावगम्यते क्रियासम्बद्धं वा तथापि विध्युद्देशेनैकवाक्यत्वात्प्रमाणमित्युक्त्वा कथमेकवाक्यभाव इति पृष्टे पदानां साकाङ्क्षत्वाद्विधेस्तुतेश्चैकवाक्यत्वमित्यभिधानादेकवाक्यत्वं प्रामाण्यकारणं[1] स्तुत्यर्थत्वं त्वेकवाक्यत्वकारणमुक्तमिति प्रतिभाति । तच्चायुक्तं, विध्येकवाक्यत्वं विना लाक्षणिकस्तुत्यर्थत्वायोगादितरेतराश्रयापत्तेरित्याशङ्क्य व्याचष्टे * तत्रेति * स्तुत्यर्थत्वोपपादनद्वारेणैकवाक्यत्वस्योपयोगरूपप्रामाण्यकारणत्वमभिप्रेतं[2] न साक्षात् विधिस्तुतिपदसाकाङ्क्षत्वं तु समभिव्याहारावगतैकवाक्यत्वनिर्वाहायोक्तमित्यदोषः। तदेतद्भाष्यमाक्षिपति * एतावत्त्विति * सामान्यतःपुरुषार्थानुबन्धित्वासिद्धौ तदधीनलाक्षणिकस्तुत्यादिद्वारविशेषनिरूपणाशक्तेस्तदेवादौ साध्यमिति प्रथमशब्देनोक्तम् । स्वारसिकैकवाक्यत्वावगमे[3] श्रौतार्थत्यागस्य गङ्गायां घोष इत्यादौ दर्शनात्तद्व्युदासार्थं बलादित्युक्तम् । स्वरसतो प्रतीयमानाप्येकवाक्यता

---

१ प्रयोगसमवेतार्थप्रकाशनसामर्थ्यादित्यर्थः ।

२ धर्मप्रमाजनकत्वरूपप्रामाण्यकारणं तद्बाधितं ततो धर्मप्रमानुत्पत्तेः ।

३ ननु समभिव्याहारलक्षणैकवाक्यताप्रकृते स्वारसिकीसम्भवतीति चेत् विभज्यमानसाकाङ्क्षत्वे सत्येकार्थप्रतिपादकत्वं स्वारसिकमेकवाक्यत्वं विवक्षितं प्रकृते त्वर्थवादानां निराकाङ्क्षत्वेन तदभावात् ।

{पु}रुषार्थानुबन्धित्वलाभाय स्तुत्यर्थत्वावधारणात्तद्वशेन कल्प्यमाना {इ}तरेतराश्रयापादिकेत्याशङ्कां निराकर्त्तुं पुरुषार्थत्वं वेत्युक्तम्। पुरु{ष}ार्थानुबन्धित्वस्याप्यप्रमाणकत्वादितिभावः। बहुक्षीरादिवाक्येषु {रू}पभङ्गेनापि पुरुषार्थपर्य्यवसायित्वदर्शनाद्वेदे ऽपि तथानुमानं स्या{द}ित्याशङ्कते * लौकिकवाक्येष्विति * आक्षेप्ता पुरुषार्थपर्य्यवसा{यि}त्वे साध्ये वाक्यत्वस्य हेतोरप्रयोजकत्वं दूषणमाह * तत्रेति * {त}देवोपपादयति* लोके ऽपीति * समाधानान्तरमाशङ्कते * तत्रे{ति} * कथं तेन सूत्रेण पुरुषार्थपर्य्यवसायित्वसिद्धिरत आह * न {ह}ीति * आदरणान्यथानुपपत्तिः पुरुषार्थपर्यवसायित्वे प्रमाणं तेन {सू}त्रेण वक्ष्यतइति भावः। न च व्यामोहादादरोपपत्तिरित्याह * {य}द्यपीति * एतदेवोपसंहरति * तस्मादिति * एतदप्याक्षेप्ता दूषय{ति} * न त्वेतदिति * नन्वाप्तवाक्यवत्पुरुषाधीनप्रामाण्याङ्गीकरण{म}पि न दोषाय स्यादत आह * यदि हीति * अयमाशयः किमत्र {स्}वादरान्यथानुपपत्त्या प्रयोजनवत्त्वकल्पनं स्यात् पुरुषान्तरादरान्य{थ}ानुपपत्त्या वा। तत्राद्ये पक्षे स्वादरात्प्रयोजनवत्त्वावगमः प्रयोजन{व}त्त्वावगमाच्च स्वादर इत्यन्योन्याश्रयः स्यादित्यनेनोक्तम्। द्वितीये {त}ु मूलप्रमाणाभावेनान्धपरम्परेत्याह * अथेति * तदेव दर्शयति * {स}र्वत्र हीति * नन्वादरान्यथानुपपत्त्याध्येतृषु प्रयोजनवत्त्वज्ञाने क{ल्}पिते तत्कारणीभूतं किं चिन्मूलप्रमाणं कल्पयिष्यामो ऽत आह * {न} तेनेति * कस्य चिन्मूलप्रमाणस्यासम्भवाद् भ्रान्तिमूलत्वं प्रसज्ये{त} इति भावः। कथमसम्भवो ऽत आह * अतो यावदिति * एव{म}ाक्षिप्याध्ययनविधिरेव सर्वस्य पुरुषार्थपर्यवसायित्वे प्रमाणमिति {स्}वमतेन समाधातुमुपक्रमते * तदुच्यतइति * विध्यादिसाधार{ण्}यप्रदर्शनार्थं सकलग्रहणं पूर्वं तावत्सर्वोपयोगः प्रतिपाद्यते पश्चा{द}र्थवादानां द्वारविशेष इति तावच्छब्देनोक्तम्। निष्प्रयोजनाक्षरमा{त्र}ाध्ययने ऽपि बुद्धिपूर्वकारिणां पुंसां प्रवर्त्तयितुमशक्यत्वान्नैक{स्य}ाप्यक्षरस्य निष्प्रयोजनत्वमध्ययनविधिरनुमन्यते। न चैकदेशे दृ{ष्ट}ार्थस्यादृष्टार्थत्वमेकदेशान्तरे युक्तम्। एकत्र नियमविधिरपरत्राप्राप्त{वि}धिरिति वैरूप्यस्यापरिहार्य्यत्वात् तस्मात्सकलस्यैव वेदस्य प्रयोज{न}वदर्थपर्यवसायित्वमध्ययनविधिबलादवसीयतइति भावः। ननु {क}स्य चिदध्ययनविधेः पुरुषार्थपर्यवसायित्वे सिद्धे सत्यवैरूप्याय सर्व{स्य} तथाङ्गीकरणं युक्तं तदेव तु निष्प्रमाणकं समानपदोपात्तस्याध्य{य}नस्यैव भाव्यत्वोपपत्तेरित्याशङ्क्य प्रथमसूत्रोक्तं दृष्टार्थत्वे दर्शयि-

---

१ अर्थवादवाक्यं पुरुषार्थपर्यवसायि वाक्यत्वात् बहुक्षीरादिवाक्यवत्।

तुमाह * तत्रेति * कस्मिन्नंशे तर्हि तस्य निवेशो ऽत आह *
श्येति * साध्यांशानिवेशकारणस्य विधिविरोधस्याभावमा
थादित्यनेन दर्शयति । नामार्थस्य करणांशे निराकर्त्तुं सन्निधे
कम् । तेनात्र भाव्याकाङ्क्षायां श्रुतभाव्याभावादश्रुतादृष्टकल्प
तस्य स्वरूपं तज्जन्यत्वं तत्र चाध्ययनस्य शक्तिः कल्प्येतेत्यनः
ष्टकल्पनागौरवापत्तेर्दृष्टस्य जन्यत्वमात्रं कल्पनीयमित्याह * ते
एवं तर्ह्यनन्तरदृष्टाक्षरग्रहणमात्रेण नैराकाङ्क्ष्यात्राभिमतं वा
र्थज्ञानपर्यन्तत्वं सिद्ध्येदित्याशङ्क्य प्राक् पुरुषार्थसिद्धेर्नैराकाङ्क्ष
यं दर्शयति * तस्यापीत्यादिना । निराकाङ्क्षी भवतीत्यन्तेन । उ
नादिविधीनामपुरुषार्थरूपाहवनीयादिमात्रे नैराकाङ्क्ष्यदर्शनात्
तथा स्यादित्याशङ्क्याह * एवमिति * एवं तर्हि न साक्षात्पुरुषा
यसान्येव सर्वत्र फलमस्त्वत आह * न चेति * पारम्पर्येपुर
फलत्वेनापि विध्युपपत्तेर्न नियोगतः साक्षात्पुरुषार्थफलत्वे वि
त्प्रमाणमस्तीति भावः । एवमपि कथमत्र दृष्टफलत्वनिश्चय
आह * योग्यतया हीति * लाघवमनेन निश्चयकारणमुक्तम्
तर्हि होमादावप्याहवनीयप्राप्त्यादिदृष्टकार्यसम्भवाददृष्टकल्प
स्यात् वक्तव्यो वा विशेषो ऽत आह * तत्रेत्यादिना अदृष्टकल
न्तेन * पारम्पर्येणापि तस्य पुरुषार्थानुबन्धाभावात्फलत्वं न
वतीति भावः । नन्वेवमपि पारम्पर्येपुरुषार्थानुबन्ध्यक्षरग्रह
न्तरदृष्टत्वात्फलं स्यात्साक्षात्पुरुषार्थरूपं वा स्वर्गादिवाक्यार्थ
तूभयरूपरहितत्वात्फलत्वाङ्गीकरणमयुक्तमित्याशङ्क्य तत्प्राति
योगितया सामान्यन्यायं तावद्वक्तुमारभते * सर्वत्र चेति
हिते ऽवघातादावफलात्मकवैतुष्यादिदृष्टकार्यपरम्परायामानन्त
यत्पुरोडाशादि कृतये यागादि वा पुरुषार्थाय चोद्यते तदेव तस
पुरुषार्थस्य वा साधनम् । पूर्वस्य त्ववघातादिविधेः पुरोड
यागाद्युपकारार्थत्वमात्रं न पुरुषार्थपर्यन्ततेत्यर्थः । पेष
तर्हि कथमन्वयो ऽत आह * यानि त्विति * पेषणादि
कार्याण्यनुष्ठेयानि पेषणादीनि तानि पूर्वविहितस्यावघातादेः
पारमात्रतया द्वारमात्रतयान्वीयन्ते नान्तरीयकत्वात्तैर्विना
तादिना पुरोडाशादेः कर्त्तुमशक्यत्वात् । किमिति पेषणा
तादिसाध्यत्वं पुरोडाशसाधनत्वं वा नेष्यत इत्याशङ्क्योक्तम्
साध्यसाधनभावेनाचोदितत्वादिति * यदि ह्यवघातवि

१ अनुध्यानापिचयेत्यर्थः ।
२ किमपेक्षया प्रागत आह ।

तिपरिहारभाष्यं व्याचष्टे * तदभिधीयतइति * अनेनैवं व्याख्यातं भवतु निरपेक्षादर्थवादरहिताद्वसन्तादिवाक्येषु विध्यवगतिः न हि निरपेक्षे सत्यर्थद्वयासम्भवलक्षणो विरोधो ऽस्ति न चात्र शक्त्यभावाद्विध्यर्थत्वासम्भवः येनास्यैव क्व चिच्छक्तिः क्व चिदशक्तिरिति विरोधः स्यात्। बाधाबाधौ तु बाधकसदसद्भावाभ्यां न विरुध्येते इति काका सूचितम्। इह तु स्तुत्यर्थत्वस्योक्तन्यायेनावश्याङ्गीकार्यत्वद्वाक्यभेदप्रसङ्गेनाशक्यो विध्यर्थ इति। द्वौ चेदितिवाक्यभेदभाष्यं भिन्नाविमावर्थावित्यनेन पुनरुक्तमाशङ्क्य पूर्वव्युत्पादितस्यैव वाक्यभेदस्य स्तुतिसम्बन्धे सत्यशक्यो विध्यर्थ इत्युक्ते कुतो ऽशक्य इत्यापन्नहेतुप्रश्नोत्तरत्वेन पुनरुपन्यास इति परिहरति * प्रश्नोत्तरत्वेनेति * ननु यदि स्तुत्यसम्बन्ध एवात्र विवक्षितो न विधिविधेयसम्बन्धः ततो ऽनुष्ठानाप्रतिपादकत्वेनाक्रियार्थत्वाद्धर्मप्रामाण्यानुपपत्तेर्विध्युद्देशेनैकवाक्यत्वात् प्रमाणमित्युपक्रमानुपपत्तिः स्यादत आह * तस्मादिति * यस्मादन्यथा वाक्यभेदः प्रसज्येत तस्मात्प्ररोचनयैवात्र विधिः तथा सत्यैकार्थ्यादित्यर्थः अनेन चाथ यदुक्तमित्यनूदिता शङ्का निरासार्थत्वेन भाष्यकारावतारितस्तुत्यर्थेन विधीनां स्युरिति सूत्रावयवमेवं व्याख्यातं स्तुतेरर्थः प्रयोजनं प्ररोचना तद्द्वारेण कर्मव्युत्पन्नविधिशब्दोक्तानां क्रियाणामुपकारिणो ऽर्थवादा इति एतत्सूत्रावयवव्याख्यानार्थं स्तुतिशब्दा इति भाष्यम्। तत्रानुष्ठातॄणामिति षष्ठीमाक्षिपति * प्ररोचयमाना इति * नन्विक्श्तिपौ धातुनिर्देशइति धातुभूतरुचियोगे सम्प्रदानसंज्ञा विहिता न च तत्प्रयोगे पूर्वप्रकृतेर्धातुत्वमस्ति तथा सति धातुद्वयप्रसङ्गेन धातोरिति विवक्षितैकत्वधातूपरिविहितप्रत्ययानुपपत्तिप्रसङ्गादित्याशङ्कते * प्ररोचयतेरिति * परिहरति * अयमाशयः * सनाद्यन्ता धातव इत्यन्तग्रहणसामर्थ्यात्केवलस्य सनादेर्धातुत्वाभावेन धातुद्वयाप्रसक्तेर्न पूर्वप्रकृतेर्भूवादयो धातव इति विहिता धातुसञ्ज्ञा नापह्नवमर्हतीति संबन्धविशेषाविवक्षया चतुर्थ्यप्रसङ्गमाशङ्कते * अथेति * परिहरति * सापीति रुचिसंबन्धाविवक्षायां तद्व्यतिरेकषष्ठ्यनुपपत्तेः प्रातिपदिकार्थाव्यतिरेके प्रथमैव स्यात्। रुचिसंबन्धविवक्षायां तु तस्य चतुर्थी निमित्तत्वेन विशेषरूपत्वात्सामान्याविवक्षा कुतो न तस्येतिभावः। पदान्तरसंबन्धमङ्गीकृत्य षष्ठीमुपपादयति * तस्मादिति * एवं तु व्यवहितान्वयापत्तेरुपकरिष्यन्तीत्यनेनान्वयमाह * अथ वेति * अस्मिन्पक्षे क्रियाया इत्यस्य विच्छिन्नस्यार्थमाह * क्रियाया इति * क्रियाशब्देन

नाद्विषयत्वाद्विधिरभिप्रेतः तदेतत् दूषयति * इदं त्विति * किं स
म्बन्धयार्थाविवक्षया प्रत्ययत्यागो विधिमात्राविवक्षया वा तत्राद्
कल्पे तावत् दूषणान्याह * यदि हीति * ननु भूतिकाम आलभेत
कस्माद्यतो वायुः क्षेपिष्ठा देवतेति हेत्वाकाङ्क्षायामर्थवादान्वयस
भाष्यकृतोक्तत्वाच्छब्दभावनाकथम्भावासम्भवे ऽपि न कश्चिद्दोष
इत्याशङ्क्याह * यापीति * वेदावगतस्यार्थस्य हेत्वनपेक्षत्वान्न त
द्द्वारेणार्थवादान्वयः सम्भवतीति कल्पेतेति काका द्योतितं, यापि
भाष्यकृता कस्मादित्यपेक्षा दर्शिता सापि कस्मात्कारणान्मया प्रव-
र्त्तितव्यमिति प्रवृत्तिसिद्ध्यर्थं प्राशस्त्यरूपकारणविषयत्वाद्विध्यभावे
न युक्तेत्यर्थः। नन्वितिकर्त्तव्यताविषयत्वे कथमित्येवाकाङ्क्षा किमि-
ति न दर्शिता ऽत आह * शब्दान्तरेति * विधायकस्याध्ययनवि-
धिना पुरुषप्रवर्त्तनेतियुज्यमानस्य कथं मया पुरुषः प्रवर्त्तयितव्य
इत्यर्थवादान्वयासिद्ध्यर्थमचेतनस्यापि पुरुषगतचैतन्यारोपेणाकाङ्-
क्षोपचर्यते भाष्यकृता तु पारमार्थिकी पुरुषस्याकाङ्क्षा तद्विषयैव
दर्शिता न त्वनयोर्भिन्नविषयतेत्यर्थः । अथापि हेतुविषया कस्मादि-
त्यपेक्षा तथापि यागादिस्वरूपस्य द्रव्यदेवतामात्रेण सिद्धेः फलसा
धनत्वस्य च स्वसामर्थ्यमात्रेण सिद्धेः कर्त्तव्यत्वाभिधानं विना न यु
क्तेत्याह * सापि चेति * ननु क्रियानपेक्षितमपि प्राशस्त्यमर्थवा-
दोक्तं सत्कर्त्तव्यताङ्गमायिष्यतीत्यत आह * तदनपेक्षितं चेति *
प्राशस्त्यस्य श्रौतत्वाभावान्न स्वरसतो ऽर्थवादप्रतिपाद्यत्वं सम्भव-
तीत्यर्थः । प्रतिपादितस्यापि कथं चित्प्राशस्त्यस्य न तावद्धात्वर्थेन
सम्बन्धो ऽनपेक्षत्वादित्याह * न चेति * न केवलं प्राशस्त्यस्यासं-
बन्धः किं तु फलादेरपीति * कस्य चिदिति * काकोक्तम् । भाव-
नया सह तर्हि संबन्धो भवत्वत आह * भावना त्विति । किमपे-
क्षेतेति * न किं चिदित्यर्थः । अनपेक्षायां वा सर्वाभावः स्यादि-
त्याह * तस्मादिति * अथापि कथं चित्प्राशस्त्यमभिधीयते संब-
ध्यते च तथापि न कर्तव्यतामालम्भस्य गमयतीत्याह * उक्ते ऽपि
ति * माभूत्तर्हि कर्त्तव्यबुद्धिः प्राशस्त्यप्रतिपादनमात्रेणार्थवादप-
र्यवसानं भविष्यतीत्यत आह * अकल्पिते त्विति * आनर्थक्यप-
रिहारार्थमेव तर्हि कर्त्तव्यता कल्पयिष्यते ऽत आह * प्रत्यक्षं चेति *
श्रुतस्य कल्पना ऽनुचितेति भावः । न केवलमनुचिता किं त्वश-
क्यापीत्याह * न चेति * अशक्यत्वे कारणमाह * अनुक्तो हि
र्विति * एवं तावत्कर्त्तव्यतायाः कल्प्यत्वाच्चार्थवादकल्पत्वमित्यु-
क्तम् । अर्थवादानामपि तत्कल्पकत्वं सम्भवति प्ररोचनामात्रपर्यव-

नादित्याह * तथेति * ननु तर्हि नार्थवादैः प्ररोचनोच्यतां क-
व्यताप्रतिपादनेनैव पुरुषार्थानुबन्धित्वासिद्धेरत आह * अवश्य-
र्त्तव्या चेति* तया विना प्रवृत्त्यसिद्धेरिति भावः। ननु माभूदर्थवा-
नां कर्त्तव्यताप्रतिपादनपर्यन्तं व्यापारः तत्प्रतिपादितप्राशस्त्या-
थानुपपत्त्या सा कल्पयिष्यते अत आह * सर्व्वत्र चेति * यच्च
ल्यार्थत्वं समुच्चयासम्भवकारणमुक्तं तदसिद्धमित्याह * तुल्यार्थ-
श्चेति * न चात्राल्पभूयोविरोधिन्यायो ऽस्ति प्रत्ययत्यागे भूयसां
दर्थानां बाधापत्तेरित्याह * यदि चेति * परस्मैपदात्मनेपदरू-
पग्रहविशेषः । आदिशब्देन विधिभावनयोरुपादानम् । एतत्सर्वं
षपरिहारार्थं कल्पान्तरं शङ्कते * स्यादेतादिति * एतदपि निरा-
ष्टे * एतच्चेति * अशक्यत्वे कारणमाह * यत इति * उदित-
प्यविवक्षितं भविष्यत्यत आह * प्रतीतस्य चेति * ग्रहैकत्वं ह्य-
प्राप्तत्वान्नानुवदितुं शक्यते सम्मार्गभावनया गुणत्वेन प्रधानत्वेन
न्वयायोगान्न विधिना स्पृश्यते । इन्द्रियकामहोमस्त्वाश्रयमन्तरेण
णस्य फलसाधनत्वायोगाद्विधिमन्तरेण च प्रकरणावगतस्यापि हो-
स्याश्रयत्वे प्रमाणाभावात्प्रकरणावगतं स्वरूपमनूद्य गुणफलसंब-
न्धविध्यन्यथानुपपत्तिप्रसूतेन विधिना आश्रयत्वेन विधीयतएवेति
तेन विधिना वाक्यभेदप्रसङ्गेनापरिग्रहादविवक्षितत्वमिति ननु
ध्यसंस्पर्शादेव विधिरविवक्षितो भविष्यत्यत आह * न तावदि-
* विधिव्यतिरिक्तस्य विध्यसंस्पर्शित्वं विधिविवक्षाकारणं यु-
म् । विधेस्त्वविधिरहितत्वं विध्यसंस्पर्शाख्येनाविवक्षाकारणं स-
विधीनामविवक्षाप्रसङ्गादित्यर्थः । अनुवादो ऽपि विधेरयुक्त इत्याह
नापीति * कारणमाह * तस्यामिति । अयमाशयः * न तावद्य
लम्भः स प्रशस्त इत्यालम्भमात्रोद्देशेन प्राशस्त्ये ऽभिहिते ऽपि क-
व्यबुद्धिः सम्भवति येन प्ररोचनालब्धविधित्वानुवादो घटेत् ।
तच्चोक्ते ऽपि च प्राशस्त्यइत्यादिनोपपादितम् । यदि तु यो ऽयं वाय-
श्वेतालम्भः कर्त्तव्यः स प्रशस्त इतिकर्त्तव्यतारूपस्य विधेरनुवाद
च्यते । स तर्हि न सम्भवति । अनुवादावस्थायामप्राप्तत्वादिति । ननु
त्पक्षे वायव्यश्वेतालम्भः कर्त्तव्य इति विध्यर्थो भवेत् तस्य चा-
म्भः प्रशस्त इत्यर्थवादार्थेन नान्वयः स्यादित्याशङ्क्याह * भवति
वमिति * दृष्टान्तो ऽपि साध्यविकल इत्याह * यस्त्विति * दशमे
सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेर-
त्युदाहृत्य किं तत्र सहितानां कर्तृत्वमेकैकशो वेति सन्दिह्य बहु-
चनस्य श्रवणात् साहित्ये प्राप्ते त्का श्रुत्यैवोदवसानसमानकर्तृकत्वप्र-

तीतेरवगतसङ्ख्यत्वेन च बहुवचनस्थानपेक्षितसङ्ख्याविधायित्वायो गादपेक्षितधात्वर्थविशेषविधायिन्याख्याते यथाप्राप्तप्रचयशिष्टसङ्ख्यानुवादिबहुवचनप्रयोगोपपत्तेर्न प्राकृतैककर्तृकत्वबाधो युक्त इ सिद्धान्तो वक्ष्यते क्त्वाश्रुत्या ह्यनन्तरक्रियामात्रमाक्षेप्तुं न च नियो तः कर्त्तव्यता । न मांसं भुक्त्वा ऽधीयीतेति प्रतिषेधो ऽपि भुक्त्व व्रजतीति च वर्त्तमानापदेशे ऽपि क्त्वाश्रुतिदर्शनादित्यर्थः । न च वे चले कारणाभावाद्विध्यविवक्षानुचिता किं त्वतिव्याप्तेरपीत्याह यदि चेति * स्वमतेन व्याख्यातुमुपक्रमते * तस्मादिति * अत्रै भाष्यानुमतिमाह * तथा चेति * विधिविषयाभिप्रायेषु भाष्य कारीयविध्युद्देशशब्दे फलपदस्य विधिविषयसमर्थकत्वाभावादुप न्यासो न युक्त इत्याह * अन्यथेति * विध्यभावे च धात्वर्थस्य तद्विष यत्वायोगात्तदभिप्रायो विध्युद्देशशब्दो न युक्त इत्याह * न चा स्येति * कस्तर्हि विध्युद्देशशब्दस्यार्थो ऽत आह * तस्मादिति * विधेरुद्देशकः प्रतिपादक इति कर्तृव्युत्पन्नं करणव्युत्पन्नं वोद्देशशब्दम ङ्गीकृत्य षष्ठीसमासाश्रयणेन लिङादिरेव विध्युद्देशशब्देनोक्त इत्यर्थ किमर्थं तद्युद्देशग्रहणमत आह * विध्यर्थेन त्विति * विधिशब्दस्य लिङादिशब्दे तदर्थे चोभयत्र प्रयोगदर्शनादिह शब्दपरतयापि व्याख्यानेन सूत्रनाश इति चोद्यमिति । नन्वस्मिन्पक्षे प्रत्ययो विध्युद्देश इत्येवं वक्तव्यं न भूतिकाम इत्येवमन्त इत्यत आह * भूतिकाम इति * ननु यदि फलादिसङ्गत्युत्तरकालं तद्विशिष्टायां भावनायां पुरुषं नियुञ्जाने विधावनुग्रहार्थं स्तुत्यर्थावसरः तदभावे तर्ह्याकाङ्क्षाभावादर्थवादान्वयो न स्यादित्याशङ्कते * नन्विति * परिहरति * एवमेवैतदिति * का तर्ह्यर्थवादानां तत्र गतिरत आह * तथेति * यद्यपि विध्यभावेनार्थवादाः सम्बन्ध्यन्ते तथापि नानर्थक्यापत्तिः प्रयोगवचनेन पञ्चमलकारेण वा, कल्पितविधित्वे ऽर्थवादसङ्गतिसम्भवादिति वक्ष्यमाणानुषङ्गेण योज्यम् । आग्नेयो ऽष्टाकपालो भवतीत्यादौ भवति परस्य पञ्चमलकारस्य प्रयोजकव्यापारविधानाशक्तेः प्रयोगवचनेन वानुत्पन्नस्य प्रयोगासम्भवादुत्पत्तिरप्याक्षिप्यते उपांशुयाजमन्तरा यजतीत्यादौ पञ्चमलकारेण अव्यवस्था लिङर्थे लडिति पञ्चमलकारस्य विधौ स्मरणे ऽपि वर्त्तमानापदेशसन्दिग्धत्वात्पञ्चमलकारनिर्णयव्याक्षेदाद्विधित्वस्य कल्पितत्वमभिप्रेतम् । इदं तु प्रयोगवचनोत्पत्तिकल्पनं दुरुपपादम् । अनुत्पन्नस्य प्रयोगविधिविषयत्वायोगादुत्पत्तौ कल्पितायां प्रयोगविधिविषयत्वं प्रयोगविधिविषयत्वाच्चोत्पत्तिकल्पनमितीतरेतराश्रयापत्तेः । पञ्चमलकार-

चन्हाभावे न तन्निर्णयः स्यादित्यपरितोषादन्यथाविधित्वकल्पनसा-
* अथ वेति * ननूक्तेन प्रकारेणाग्नेयो ऽष्टाकपालो भवतीत्यादौ
धिं प्रकल्प्य तच्छेषत्वेनाङ्गिरसो वा इत उत्तमाः स्वर्गलोकमाय-
नित्यादेरर्थवादस्यान्वयो भवतु नाम ताभ्यामेतमग्नीषोमीयमेकाद-
कपालं पूर्णमासे प्रायच्छदित्यादौ त्वर्थवादमात्रकल्पविधिदर्श-
द्विधेः प्राक् स्तुत्यनवसरत्वप्रतिपादनमयुक्तमित्याशङ्क्याह * यत्रा-
ति * तत्रापि पूर्वचरितकीर्त्तनान्यथानुपपत्तिमात्रेण कर्त्तव्यतां
ल्पयित्वा शेषपदानां स्तुत्यर्थत्वेनान्वयः। ननु प्रागेव कस्य चि-
स्तुतिः प्रतीयतइत्यर्थः सिद्धरूपार्थकीर्त्तनाभिप्रायो ऽर्थवादशब्दो
स्तुत्यभिप्राय इति भ्रमितव्यम्। नन्वेवमपि सिद्धरूपार्थकीर्त्तनमा-
ण कर्त्तव्यतायाः प्रतीतिसिद्धेः प्रत्ययानर्थक्यं तदवस्थमित्याश-
ङ्क्याह * सम्भवत्यां त्विति * ननु श्रौतार्थद्वयाश्रयणे वाक्यभेदा-
त्तेः प्रत्ययश्रवणे ऽपि भूयो ऽर्थवादपदानुग्रहाय स्तुत्यैव कर्त्तव्य-
कल्पनमगत्याङ्गीकार्यमित्युक्तमत आह * यस्त्विति * प्राशस्त्य-
र्त्तव्यतयोर्विशेषणविशेष्यभावात्प्राशस्त्यविशिष्टकर्त्तव्यतात्वरूपै-
र्थप्रतिपादनादेकव्यापारोपपत्तेर्नार्थभेदनिबन्धनवाक्यभेदापत्तिरि-
र्थः। नन्वर्थभेदाभावे ऽप्यप्राप्तस्य विधिसम्बन्धात्प्राप्तस्य च विशेष-
भूतप्राशस्त्यसम्बन्धाद्वैरूप्यलक्षणो वाक्यभेदः प्रसज्येत अत आह
विधीयमानस्यैव हीति * प्राशस्त्यं विना विध्यपर्यवसानादप्राप्ता-
स्यैवालम्भस्य विधिनेव प्राशस्त्येनापि सम्बन्धादवैरूप्यमित्यर्थः।
न्वेवमपि विशिष्टार्थप्रतिपादनाद्गौरवापत्तिरत आह * यदि
ति * का तर्हि नायमभिसम्बन्धो विवक्षित इत्यादेर्भाष्यस्य गति-
त आह * तस्मादिति * अनेन ग्रन्थेनैवमेतद्भाष्यं व्याख्यातम्।
तिकाम आलभेत कस्माद्यतो वायुः क्षेपिष्ठेत्यनेन यः सार्थवादक-
विध्युद्देशस्य विधिस्तुतिसम्बन्धरूपो विशिष्टो ऽर्थो दर्शितः। नायं
ध्युद्देशमात्रेण विवक्षितः। किं तु सार्थवादकेनेति तत्रालभेतेति-
ध्यप्रतीकेन विध्युद्देशोपलक्षणं ततो भूतिरिति पूर्वप्रकृतवायुपराम-
तच्छब्दयोगिना भूतिपदेन स एवैनं भूतिं गमयतीत्यन्तार्थवादोप-
क्षणं विशेषणविशेष्यरूपार्थद्वयस्य विशेष्यप्रतिपादकविध्युद्देशमा-
णाभिधाने गौरवलक्षणवाक्यभेदापत्तेरिति विधित्वादीत्यादिशब्देन
लेतिकर्त्तव्यताग्रहणं किमर्थेत्याशङ्काभाष्यं विधिविवक्षायां तदि-
कर्त्तव्यताभूतस्तुत्याकाङ्क्षानिराकरणायोगादयुक्तमाशङ्क्य व्याचष्टे
किमर्थेति * अयमाशयः प्रवृत्तिप्रतिबन्धकालस्यादिभङ्गरूपा

१ भूतिकामास्त्विध्युद्देशप्रदर्शनमित्यर्थः।

प्ररोचनाविधेरितिकर्त्तव्यता । न स्तुतिः । स्वार्थं तु तया स्त
ङ्क्यते विध्यवगतश्रेयःसाधनत्वादेव तु प्रवृत्तिहेत्विच्छाज
द्विरोध्यालस्यादिनिराकरणसिद्धेरनर्थिका स्तुतिरिति भा
व्याख्येयं, यद्य ऽपि विधिस्तुतिरूपार्थद्वयप्रतिपादनं विध्युद्दे
न क्रियते तथाप्यर्थवादानर्थक्यं विधित एव प्ररोचनार्थि
र्थ्येन स्तुत्यनाकाङ्क्षणादिति, कथं रोचेतेत्युत्तरभाष्याभि
* कथमिति * श्रेयःसाधनत्वाधिगमे ऽपि बहुव्ययाया
स्द्वेषोत्पत्तेः स्तुतिमन्तरेणानिराकरणात् दुर्वारा स्तुत्याक
भावः । ननु प्रागित्याशङ्काभाष्यं किमर्था स्तुतिरित्यनेन पु
भासमानं तदभिप्रायविवरणार्थतया व्याचष्टे * नन्विति *
त्यादिपरिहारभाष्यं तस्यायमर्थः न तावत्प्राशस्त्यं विना
सम्भवतीत्युक्तम् । कथं रोचेतेत्यनेन । यदि तु विध्युद्देशेनैव प्र
क्षेपस्य वसन्तादिवाक्येषु दर्शनादिहापि तत एव प्राशस्त्याक्षे
स्तुतिपदानर्थक्यमुच्येत तन्निराकरणार्थं यदेत्याद्युक्तं तद्व्य
हीति * न हीत्यादिनैतदाहेत्यन्वयः । शक्तिद्वयनिराकरणासम
स्य ग्रन्थस्य दर्शयितुं विधीयते इत्येतत्समाप्तिपरत्वेन न तद्
व्याख्यातम् । अनेन च तदा पूर्वेण विधिरित्यत्रापि समाप्यत
हारो दर्शित इत्यवगन्तव्यम् । प्ररोचनया च विधिसमाप्तेः
शक्तिः समाप्त्युक्त्या दर्शिता, भवतीति न भाष्याऽवाच्यकत
रुमः । दृष्टान्तभाष्यं पूर्ववदेव व्याख्येयमित्याह * यथेति
स्माभिः प्रत्ययार्थवादयोः पुनरत्यन्तभिन्नानुग्राह्यानुग्राहक
त्समुच्चय इति प्रागुक्तं तदनेन दार्ष्टान्तिकयोजनाभाष्येण
कृतमित्याह * विधिशब्देनेति * नन्वेवं सतीत्याशङ्काभाष्य
धायकपदप्ररोचकत्वाभिप्रायं व्याख्यातुमाह * नन्विति
मित्यादिपरिहारभाष्यं प्रतीकेन गृहीत्वा तस्मिन्विद्यमानइत्य
प्यशेषं तस्मादित्यध्याहारपूर्वकं सावधारणत्वेन व्याचष्टे *
मिति * अविद्यमाने हि स्तुतिवचने विध्युद्देशमात्रस्य प्राश
शिष्टविधिरूपो ऽर्थो भवेदिह तु स्तुतिवचनस्य विद्यमानत्व
ऽर्थो न्याय्यो भवति सो ऽङ्गीकार्य इत्यर्थः । स्तुतिः प्रयोजनार्थ
प्यावयवमवतारयितुम् * कश्चासावित्युक्तम् * अर्थवा
स्तुतिप्रयोजनत्वाद्विवचनानुपपत्तिमाशङ्क्य * न तस्यैवेत्याह
अर्थवादाभावे त्वित्यनेन तस्मिन्नसतीति भाष्यावयवो व्याख्य
स्तत्स्वपीत्यादिप्रत्यक्षश्च वाक्यशेषभाव इत्यन्तं भाष्यं पूर्ववद्
ख्येयमित्याह * नन्विति * अत्राप्युपात्ते लघूपाये गुरूपाय

नुपपत्तिमाशङ्क्यानर्थक्यपरिहारायोपात्ते ऽपि लघौ गुरोराश्र
स्येतावतार्थतुल्यत्वमिति अतो ऽस्मादित्युपसंहारभाष्यं वि
पञ्चम्या विधेः स्तुत्यवगतिप्रतिपादनादभिप्रेतविरुद्धमाशङ्क
*अतो ऽस्मादिति * किं सम्बन्धनिबन्धनेयं षष्ठीत्यपेक्षिते आह
क्येति * पूर्वप्रकृतेर्वाक्यशेषो ऽस्मादिति सर्वनाम्ना परामृष्ट
रिति षष्ठ्या सम्बध्यतइत्यर्थः । एवं सत्येष भाष्यार्थो भव
* इत एवेति * अस्य विधेः सम्बन्धिन इतो वाक्यशेषादे
तिमवगच्छामो न स्वतो विधिमात्रादित्यर्थः । ननु निरपेक्षाद
शङ्काभाष्याभिप्रायमाह * नन्विति * भवत्विति परिहारभ
शङ्कानुज्ञानादयुक्तमाभासमानं सोपहासत्वेन व्याचष्टे * उ
स्त्विति * एवमर्थविरोधाशक्यत्वयोः परस्परव्याघातात्तत्परि
र्थं व्यवस्था यत्रासावित्यादिना दर्शिता सर्वे ऽमी विधि
सम्प्ररोचनाविधिपरा व्याख्येयाः अशक्यत्वोपपादनार्थं पूर्वोक्त
लक्षणवाक्यभेदस्मारकं वाक्यं हीत्यादिभाष्यं व्याचष्टे
कथं हीति । एकमेकस्यैवेति * वाक्यसंबन्धपदगतयोरेकवचन
वक्षितसङ्ख्यत्वं दर्शितं तच्चात्र विध्युद्देशरूपमभिप्रेतमिति
द्देश एवेत्यनेन दर्शितम् । संबन्धशब्देन चात्र कर्म्मव्युत्पत्त्या वि
विशेष्यरूपौ संबन्धिनावभिप्रेतौ * एष हि गुणो भवती *
वादप्राशस्त्यप्रदर्शनम् । यतस्ततोभूतिरितिवदिति कस्य नि
स्यात्तद्व्युदासार्थं * विध्युद्देशोत्थापितानामेकेत्याद्युक्तं * ना
संबन्धो विवक्षित इत्यादिना यत्प्रबन्धेन विध्युद्देशस्य प्राशस
कत्वं निराकृतं तस्य प्रकृतैकवाक्यतासिद्धिप्रयोजनतां दर्शि
भिप्रेतं सूत्रार्थमुपसंहरति * तस्मादिति * अनेनैव सूत्रं व्य
विधेयभावनांशाप्रतिपादकत्वे ऽपि तदनुष्ठापकानां विधीनाम
वादा स्युः केनोपकारेणेत्याक्षिप्ते स्तुत्यर्थेनेत्युक्तम् । विधिः
नसिद्ध्यर्थे स्तुतेरुपकारकत्वे ऽभिहिते विधिमात्रेणानुष्ठानसि
स्तुत्येत्याशङ्कानिराकरणार्थमर्थवादानां धर्म्मप्रमोपयोगित्व
वतिक्लिष्टलाक्षणिकस्तुत्यर्थत्वाङ्गीकारकारणं विधिनैकवाक्य
त्यनेनोक्तमिति ।

## तुल्यं च सांप्रदायिकम् ॥ ८ ॥

सामान्योपयोगप्रतिपादनं विनार्थवादानां द्वारविशे
गप्रतिपादनाशक्तेः सामान्योपयोगप्रतिपादनार्थमेतत्सूत्रं पूर्व
पि प्रथमसूत्रव्युत्पादिताध्ययनविधिदृष्टार्थत्वबलेन सामान्य

स्य सिद्धस्य विशेषोपयोगमन्तरेणानिर्वाहात्तत्सम्भवप्रदर्शनोत्तर
लं कृतम् । तत्र भाष्यकारीयपरिचोदनोपन्यासस्य प्रयोजनम्
* चशब्देति * तुल्यासांप्रदायिकत्वस्यादृष्टार्थत्वे ऽप्युपपत्तेः पूर्व
तिज्ञातस्तुत्यर्थत्वासाधकत्वाद्विध्येकवाक्यत्वलक्षणास्तुत्यर्थत्वसा
कहेतुसमुच्चयार्थे चशब्दायोगात्प्रमादपाठत्वशङ्कानिराकरणार्था
वत्त्वावगमलक्षणहेत्वन्तरसमुच्चयार्थत्वेन चशब्दो भाष्यकृता व
ख्यात इत्यर्थः । परिचोदनार्थं व्याचष्टे * आनर्थक्यमेवेति * ।
राकरणभाष्यं व्याचष्टे * तत्रैवमिति * एवं त्वर्थावगमप्रकारा
क्तेः साकाङ्क्षत्वप्रसङ्गादपरितोषेणान्यथा छेदं करोति * अथ वेति
अनेन च विधिना त्वेकवाक्यत्वादित्येतदेव सूत्रं प्रमादपाठत्वशङ्
निराकरणे ऽपि योजितम् । विध्येकवाक्यत्वेन स्तुत्यर्थतया ऽर्थवत्त्व
वगमादप्रमादपाठत्वनिराकरणएव हेत्वन्तरसमुच्चयार्थे तुल्यं स
प्रदायिकत्वं योजयति * किं चेति * सांप्रदायिकशब्दव्याख्यान
र्थमनध्यायादिधर्म्माणां वेदाध्ययनाख्यसम्प्रदायप्रयोजनत्वं भाष
कृतोक्तमुपपादयति * सम्प्रदायेति । तादर्थ्यस्मरणादिति[1] *

तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः ।
वेदः कृत्स्नो ऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥

इत्यादिना धर्म्मजातस्य सम्प्रदायार्थत्वस्मरणादित्यर्थः । पुरुष
र्थत्वं तु निष्प्रमाणकमित्याह * स्वर्गादीति * नन्वध्ययनस्वरूपे तत्व
र्थे च ग्रहणे धर्म्मजातस्यानुपयोगात्तत्पूर्वकज्योतिष्टोमादिकर्म्माङ्ग
भविष्यत्यत आह * न चास्येति * एतच्च द्वादशाधिकरणसिद्धमु
तत्र ह्यध्यायानध्यायादिधर्म्मजातस्याध्ययनप्रकरणपठितस्यापि त
स्वरूपे कार्ये चानुपयोगादध्ययनेनैव फलवत्कर्म्मावबोधं भावयो
स्यध्ययननियमस्यानारभ्य विहितस्याप्यध्ययनजनितज्ञानोपस्थापित
यकर्म्माङ्गतया सामर्थ्योपबृंहितेन सन्निधिनावधारणात्तद्द्वारा
र्माङ्गत्वावगतेरमावास्यादौ कर्म्माङ्गभूतयाज्यानुवाक्यादिमन्त्रोच्च
रणं न कार्यमिति । मन्त्राणां कर्मसंयोगे स्वधर्म्मेण प्रयोगः स्या
धर्म्मस्य तन्निमित्तत्वादितिसूत्रेण पूर्वपक्षयित्वा प्रकरणेनाध्ययना
तया ऽऽवधारितस्यान्यार्थत्वे प्रमाणाभावादविघ्नपरिसमाप्त्यर्थत्वेन
द्दुपयोगसम्भवात्कर्माङ्गत्वाभावेन कर्म्मकाले ऽध्यायानध्यायादि
र्म्मानादरेणामावास्यादावपि कर्म्माङ्गमन्त्रोच्चारणं कार्यमिति वि
प्रतिविधानाद्वा सर्वकालं प्रयोगः स्यात् कर्म्मार्थत्वात्प्रयोगस्येति
त्रेण सिद्धान्तयिष्यते । केनोपकारेणाध्ययनाङ्गत्वं कर्म्मजातस्ये

---

१ तरसंबन्धस्मरणादिति २ पु० पा० अयमेव समीचीनः प्रतिभाति ।

पेक्षायामविघ्नार्थत्वं भाष्यकृतोक्तमुपपादयति * सम्प्रदायाङ्गत्वे ऽपि चेति * विघ्ने सत्यध्ययनेनाक्षरग्रहणस्य कर्त्तुमशक्यत्वात् तत्सिध्यर्थमविघ्नमेवापेक्षितं * तादर्थ्यस्मरणाच्चेति *

अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी ।
ब्रह्माष्टमीपौर्णमास्यौ तस्मात्ताः परिवर्जयेत् ॥

इत्यादिना धर्म्मजातस्याविघ्नार्थत्वस्मरणादित्यर्थः।प्रकरणावगताध्ययनाङ्गत्वान्यथानुपपत्त्याप्यविघ्नो ऽर्थतो ऽवसीयतइत्याह * न हीति * एतदेव प्रपञ्चयति * यदि तावदिति * नन्वध्ययनजनितज्ञानसाध्यकर्म्मानुष्ठानजन्यापूर्वार्थत्वे ऽपि धर्म्मजातस्य व्रीहिसाध्ययागापूर्वत्वे ऽपि प्रोक्षणस्य व्रीह्यर्थत्वाविघातवदध्ययनाङ्गत्वाविघातः स्यादत आह * अथ पुनरिति * व्रीहीणां यागापूर्वार्थत्वात्तदुत्पत्त्युपयोगिप्रोक्षणादिधर्म्मग्राहकत्वं युक्तम् । अध्ययनस्य क्रत्वनङ्गत्वान्न तत्साम्यमिति भावः।कः पुनरध्ययनस्याविघ्नेनोपकारो जन्यतइत्यपेक्षायामक्षरग्रहणाख्यकार्ययोग्यतालक्षणमुपकारं दर्शयितुमाह * तस्मादिति * तुल्यसाम्प्रदायिकत्वस्य प्रकृतानर्थक्यनिराकरणोपयोगितां दर्शयति * न चेति * न चाध्ययनादिधर्मानियमस्मृतेर्निर्मूलत्वेनाप्रामाण्यं शङ्क्यं स्मृत्यधिकरणे स्मृतीनां वेदमूलत्वस्य वक्ष्यमाणत्वादित्याह * नियमस्मृतेश्चेति * तुल्यसाम्प्रदायिकत्वसाधितसामान्योपयोगोपसंहारपूर्वकं तस्य पूर्वसूत्रोक्तस्तुत्यर्थत्वलक्षणाविशेषोपयोगसिद्ध्युपयोगितामाह * स चेति * अत्रैवार्थे स्मरणं च दृढमित्यादिभाष्यं योजयति * स्मरणं चेति * इतिकरणः प्रभृत्यर्थः तत्र स्मरणं च दृढमिति वेदशब्दत्वाभिधाने योजितम् । अतो न प्रमादपाठ इति सामान्योपयोगोपसंहारे इतिकरणस्तस्य विशेषोपयोगित्वे यस्मान्न प्रमादपाठः अतः कारणात्प्रयोजनविशेषापेक्षायां सामर्थ्यात्स्तुत्यर्थतार्थवादानां सिध्यतीतिकरणो हेत्वर्थे व्याख्येय इत्यर्थः। साम्प्रदायिकशब्दो वा धारणाध्ययनपरतयानेन भाष्येण व्याख्यायतइत्याह * अत चेति * यत्त्वस्मिन्व्याख्याने पुरुषाधीनप्रामाण्यप्रसङ्गादित्यादिना दूषणं पूर्वसूत्रव्याख्योपक्रमे ऽभिहितं तत्परिहरति * सम्भाव्यते चेति * पूर्वोक्तमध्ययनविधिप्रमाणकं सर्वस्य वेदस्य प्रयोजनवदर्थपर्यवसायित्वमेतत्सूत्रारूढं कर्त्तुमध्ययनविधिपरतया साम्प्रदायिकशब्दं स्वयं व्याचष्टे * तुल्यं चेति * अनयोरपि व्याख्ययोरेतत्सूत्रोक्तस्य सामान्योपयोगस्य पूर्वसूत्रोक्तविशेषोपयोगसिद्ध्यर्थत्वप्रतिपादनार्थमतो नेत्यादिभाष्यमिति दर्शयितुं ग्रन्थशेषः ॥

अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः
स्याच्छब्दार्थस्त्वप्रयोगभूतः तस्मादुपपद्येत ॥ ९

सूत्रद्वयेनैव सिद्धान्तसिद्धेरुत्तरसूत्रानर्थक्यमाशङ्क्य पूर्व
क्षनिराकरणपरतया सामान्यतो व्याचष्टे * उक्तेति * अप्राप्ताम
पपत्तिमिति द्वितीयान्तं पदद्वयं साकाङ्क्षत्वादध्याहारेण व्याच
* शास्त्रेति * ह्रस्वपाठे अन्यथाध्याहारमाह * अथ चेति * प्रयो
हीति सूत्रावयवव्याख्या भाष्ये स्तेयादीनामित्यादिशब्देन, पूर्वोपन
स्तस्य रोदनादेरपि ग्रहणमिति व्याचष्टे * प्रयोगे हीति * सूत्रं
व्याचष्टे * अस्माकं पुनरिति * श्रौतार्थाभिप्रायोऽर्थ शब्दः प्रयुज
तेऽनेनेति व्युत्पत्त्या प्रयोजनवचनः प्रयोगशब्दः अविवक्षितश्चा
प्रयोजनं न भवतीत्यप्रयोगशब्देनाविवक्षितत्वमुक्तम् । नन्वनुष्ठा
विवक्षायां विरोधापत्तेस्तत्परिहारार्थं तस्यैवाविवक्षा वाच्या न श्रौ
तार्थाविवक्षात आह * न चेति * अतः शब्दार्थे चशब्दः निपात
नामनेकार्थत्वात् । विवक्षितत्वे हि श्रौतस्यार्थस्य। प्रयोजनवत्त्वम
द्धये ऽध्याहाराद्विनानुष्ठानकल्पना स्यात् यतस्त्वसौ न विवक्षि
अतः कल्पकाभावान्नाध्याहारादिभिर्विधिकल्पनेत्यर्थः अनेन च
नुष्ठानाविवक्षार्थं श्रौतार्थाविवक्षेत्युक्तम् । किं तर्हि विवक्षितमित्य
क्षायामुत्तरसूत्रवक्ष्यमाणं स्तुत्यर्थत्वमाकाङ्क्षानिवृत्तये ऽभिहितम्
ननु स्तुतेरपि श्रौतार्थकल्प्यत्वादविवक्षितस्य चासत्यत्वेन कल्पक
त्वायोगात्सद्विवक्षापत्तेरपरिहार्यो विरोधोऽत आह * न चेति
असत्येनापि स्तुत्युपपत्तेर्वक्ष्यमाणत्वान्नास्मत्पक्षे श्रौतार्थविवक्
पत्तिरिति भावः । स्तुत्यर्थत्वमेव चाशब्दार्थोऽस्त्वित्यनेनोच्यत इत
न्यथा व्याचष्टे * अथ चेति * तदानुष्ठानवचनएव प्रयोगशब्
प्राप्तशब्दार्थे च भूतशब्द इति न स्वार्थानुष्ठानेनेत्यादिनोक्तम् । ननु भ
ष्यकारेणाप्राप्ता चाऽऽनुपपत्तिरिति प्रथमान्तमेव पदद्वयं पठितं क
भवतान्यदेव पाठद्वयं व्याख्यातमत आह * अथोऽत्रेति * पाठत्र
विवेकार्थं पूर्वोक्तवाक्यशेषस्मरणायोत्तरो ग्रन्थः ।

गुणवादस्तु ॥ १० ॥

यदा शब्दार्थस्त्वप्रयोगभूत इत्यनेन श्रौतार्थाविवक्षोक्ता तदा गुण
वाद इति षष्ठीसमासाश्रयणादन्येन स्तुत्यर्थत्वं सिद्धान्तसूत्रो
पूर्वसूत्रेणैराकाङ्क्षयाय स्मार्यते स्वार्थासत्यत्वे वा कथं स्तुतिरित्य
क्षायां गुणाद्वाद इति पञ्चमीसमासाश्रयणेन स्वार्थसत्यत्वानाद

भिधीयते । यदा तु स्तुत्यर्थत्वमेव शब्दार्थस्त्वित्यनेनोक्तं तदा वि-
धिस्तुत्योर्भिन्नविषयत्वे कथं विधायकानुग्रहार्थत्वमर्थवादस्येत्या-
शङ्कानिराकरणार्थमेतत्सूत्रमिति भाष्यकारेण व्याख्यातम् । तत्र भि-
न्नविषयत्वे स्तुत्यर्थत्वासम्भवपरिचोदनादेकविषयत्वे स्तुतित्वं पूर्व-
पक्षिणो ऽभिमतमिति कस्य चिच्छङ्का स्यात्तत्रश्च सो ऽरोदीदित्यादि-
ष्वभयचोद्यानुपपत्तिरित्याशङ्क्याभ्युपेत्य वादमात्रेणैतदङ्गीकृत्य
भिन्नविषयत्वे तावत्परिचोदनेति व्याचष्टे *यत्र तावदिति * गौण
इति तद्धितं पञ्चमीसमासप्रदर्शनपरतया व्याचष्टे * गुणादिति *
उपचारश्चात्र गुणशब्देनाभिप्रेतः यत्सम्बन्धिनीति सम्बन्धिशब्दः
क्रियापेक्षः प्रकृत्यपेक्षो वेति द्वेधा व्याचष्टे * यत्क्रियाया इति *
अभिजनसंस्तवेन चेत्यादिभाष्यार्थमाह * यत्रेति * अभिजायते अ-
स्मादितिव्युत्पत्त्योत्पत्तिस्थानमभिजनशब्देनोच्यते। अश्मकशब्दो ज-
नपदविशेषवाची । कीदृशी स्तुतिरित्यपेक्षामाह * एतस्यास्त्विति *
ततसशाखया ऽवकाभिश्चाग्निं विकर्षत्यापो वै शान्ताः शान्ताभिरे-
वास्य शुचं शमयतीति श्रूयते । तत्र वेतसावकयोर्विधेयत्वेन स्तु-
त्यर्हत्वात्तदर्थे वापां स्तुतिप्रतीतेः शान्ताभिरिति सहयोगे तृतीया-
श्रयणेनाद्भिः सहचरितः सम्बन्धो वेतसावकीरूपो विकारः प्रकृति-
गुणयोगेन शान्तत्वादस्येति सर्वनामोपात्तस्य यजमानस्य कष्टापरप-
र्यायां शुचं शमयतीति वेतसावकयोरनेन प्रकारेण स्तुतिरित्यर्थः
रोदनाद्युदाहरणत्रये केवलमेव गुणवादसूत्रं स्तुत्यसम्भवपरिहारा-
र्थतया भाष्यकृता व्याख्यातम् । तस्य गुणवादप्रकारशेषानिरूपणेना-
सामर्थ्यमाशङ्क्याह * गुणवादेति * रोदननिमित्तस्य शब्दस्य दर्शा-
नादित्यादिनोक्तस्तत्सिद्धिकरत्वादिः प्रकारविशेषो यावत्तत्सिद्धिसूत्रे
वक्ष्यमाणतया नालोच्यते तावच्छुद्धेनैवेति तावच्छब्दस्यार्थः ते-
नाद्युदाहरणेष्वपि तर्हि सूत्रान्तरानर्थक्यं स्यादत आह * शेषेति *
तु तत्सिद्धिसूत्रेण गुणवादप्रकारविशेषनिरूपणे स्तेनाद्युदाहरणे-
ष्वपि शुद्धस्य गुणवादसूत्रस्य स्तुत्यसम्भवपरिहारसामर्थ्यादनिरूपणे
। रोदनाद्युदाहरणेष्वप्यसामर्थ्यात्किं कृतेयं व्यवस्थेत आह * त-
ति * यद्यपि तत्सिद्ध्यादीनां षण्णामेव गौणवृत्तिप्रकारत्वात्सर्व-
कारविशेषनिरूपणं तत्र करिष्यते तथाप्यस्मिन्नुदाहरणे ऽयं
कार इति स्तुत्युदाहरणनिष्ठतया सूत्रेणानिरूपणात्किं चि-
न्तारूप्याद्युदाहृतानां स्तेनं मन इत्यादीनां सम्बन्धितयैवोच्यते
अप्राधान्येन तु तत्र सर्वं गौणतानिमित्तं वक्ष्यतइति प्राधान्यवाचि-
। परशब्देनोक्तं गौणवृत्तिलक्षणकथनमात्रपरत्वात्तत्सिद्धिसूत्रस्येति

भावः। रोदनार्थवादे च गुणवादसूत्रयोजनार्थं विध्येकवाक्य
विनार्थवादान्वयायोगात्पूर्वं विध्येकवाक्यत्वमेव साकाङ्क्षत्वे भ
स्मो ऽरोदीदित्यादिना प्रश्नपूर्वकं भाष्यकृतोपपादितं तद्व्याचष्टे *
ऽरोदीदिति * यद्यपि निन्दानिषेधयोरत्रैकवाक्यत्वं तथापि स
दाहरणगतानामाकाङ्क्षाहेतुकविध्येकवाक्यत्वप्रतिपादकभाष्यार
साधारणो ऽयं व्याख्याग्रन्थ इति सूचयितुमुपलक्षणार्थं विधिस्तु
रित्युक्तं, प्रत्यवयवमित्यनेन पदानामिति बहुवचनार्थो दर्शितः अ
था हि पुरास्य संवत्सराद्गृहे रोदनं भवतीत्यनेनैव निन्दासिद्धेः
षपदानामानर्थक्यं स्यात् । अवान्तरपदवर्गाभिप्रायश्चात्र पद
ब्दः। एतदर्थवादोपक्रमस्य देवासुराः सम्यत्ता आसन्ते देवा विज
मुपयन्तो ऽग्नौ वामं वसुसन्यदधतेदमुतो भविष्यति यदि नोजे
न्तीति तदग्निर्न्यकामयत तेनापाक्रामत्तं देवा विजित्यावरुरुत्समाना
न्वायन् तदस्य सहसा दित्सन्तेत्यस्याप्येकवाक्यत्वसिद्ध्यर्थं रो
दित्यादिभाष्यं व्याचष्टे * स इतीति * स इत्युक्ते तस्य प्रकृत
प्रत्ययादित्यर्थः। यद्वा स इत्यस्य सर्वनामत्वपाठात्कथं प्रकृतापेक्षत
मित्याशङ्क्य सर्वनामतच्छब्दादेशेन स इत्यनेन स्थानिनस्तच्छब्द
प्रत्ययादित्यन्यथा व्याचष्टे * अथ वेति * तद्रजतमित्यस्य भाष
कारेणानुपन्यासात्स्वयं तत्संबन्धं दर्शयति * एवमिति * उपपत्ति
श्चेति भाष्यं व्याचष्टे * सर्वा चेति * उपरितनस्येत्युक्ते ऽप्युपरि
नग्रन्थोपन्यासस्य प्रयोजनमाह * को ऽसाविति * हेतुत्वेनो
भाष्यं व्याख्यातुमाशङ्कते * केनेति * रजतदानस्य रोदनोत्पा
कत्वे को हेतुरित्यर्थः। उत्तरत्वेन भाष्यं व्याचष्टे * ततुपपाद्यतइति
भाष्ये ऽयमिति पूर्वोक्तरोदनप्रभवत्वरूपार्थपरामर्शः। पूर्वोपन्यस्त
निषेधस्य पुनरुपन्यासे प्रयोजनमाह * तस्मादिति * कथं वि
रुपकुर्वन्तीति पृष्ट्वा गुणवादेनेत्यादिनोक्तत्वेन गुणवादसूत्रं भाष
कृता योजितं तद्व्याचष्टे * निन्द्येति * दोषसङ्कीर्तनात्मकत्व
न्निन्दाया गुणशब्दानुपपत्तिमाशङ्क्य तत्प्रतिषेधस्येत्यादिभाष्यकृतं
क्तं कथं पुनरित्यादिना निरालम्बनस्तुत्यनुपपत्तिमाशङ्क्यालम्बन
भिधानपरतया पुनरेतदेव सूत्रं योजितं तद्व्याचष्टे * गुणवादइ
ति * अरोदीदित्यस्यालम्बनप्रतिपादनार्थं रुद्र इत्यादिभाष्यं व्याच
ष्टे * रुद्रशब्देति * रोदिते रोदनार्थत्वाद्रक्प्रत्ययस्य च कर्त्रर्थत्व
द्रोदनकर्तृवाची रुद्रशब्दो व्याकरणादवगम्यते तस्य च त्वमग्ने रु
असुरो महो दिव इत्यादावग्नौ प्रयोगदर्शनाद्रुद्रो वा एष यदग्नि
ति चार्थवाददर्शनाद्रुद्रमग्निं द्विजाः प्राहुरिति * चारवयकपर्या

कुमारसम्भवोपाख्यानदर्शनात् * प्रस्तरे यजमानकार्यकर्तृत्ववत्त-कार्यकारित्वेन रोदनकर्तृत्वकल्पनेत्यर्थः तैत्तिरीयकशाखागतार्थ-ादर्शनादग्नौ रुद्रशब्दोऽस्माभिर्व्याख्यातः। अन्येषां तु कपर्दिनीमं द्रशब्दं व्याचक्षाणानामभिप्रायं न विद्मः। अश्रुप्रभवत्वाभिधानाल-बनप्रतिपादनार्थं वर्णसारूप्यादितिभाष्यं व्याचष्टे * अश्रुणश्चेति* ादि नामेत्यनेन द्रवत्वमात्रेण वैलक्षण्यमित्युक्तम्। अनेन चान्यत्र कृतिविकारयोः सादृश्यदर्शनादिहापि सादृश्येन प्रकृतिविकारभा-ोत्प्रेक्षा दर्शिता। रोदनं भवतीत्यस्यालम्बनाभिधानार्थं निन्दश्चेति ाष्यं व्याचष्टे * धनत्यागेनेति * नन्वेवमपि मुख्यस्यार्थस्यासत्य-ात्तल्लक्षिता निन्दाप्यसत्या स्यादत आह * एवमिति * नावि-भावेनोपाख्यानादेर्मुख्यस्यार्थस्य स्तुतिनिन्दालक्षकत्वं किं तु वि-ानिषेधापेक्षितस्तुतिनिन्दारूपार्थप्रतिपादनोपायमात्रत्वेनोपाख्या-द्यर्थवादैः प्रतिपाद्यते। न चोपायमात्रत्वेनःकल्पितस्यासत्त्वं तद्द्वा-र्थप्रतिपत्तेरसत्यत्वं प्रतिपादयति। किबादेरसत्यत्वे ऽपि तद्द्वारस्य द्धान्वाख्यानस्य सत्यत्वदर्शनादिति भावः। वपोत्खननार्थवादस्य ध्येकवाक्यत्वप्रतिपादनार्थं तथेत्यादिभाष्यं व्याचष्टे * एवमिति* थं गुणवाद इत्यनेन कीदृशी स्तुतिरिति पृष्ट्वेत्थं नामेत्यादिना तुतिस्वरूपं भाष्यकृता दर्शितं तद्व्याचष्टे * आत्मेति * ईदृश्यपि तुतिर्भवतीति दर्शयितुं दृष्टान्तमाह * यथेति * कथं पुनरित्यनेना-द्वृत्तान्तान्वाख्यानानुपपत्तिमाशङ्क्योच्यतइत्यादिना किमसतार्थेन त्यसम्भवाभिप्रायेयमाशङ्का निरालम्बनान्वाख्यानासम्भवाभि-या वेति विकल्प्याद्ये कल्पे तावदपारमार्थिकस्याप्युपायत्वं किवा-वत्सम्भवतीत्युक्तं तदुपपादयति * वृत्तान्तेति * अनेन चोपा-ानानामसत्यत्वे ऽपि तत्रार्थवादानामतात्पर्यात्तात्पर्यगोचरीभूते प्राशस्त्याप्राशस्त्यरूपे ऽर्थे सत्यत्वान्न तावदप्रामाण्यापत्तिरित्यु-म्। कथं पुनरसत्यस्य पारमार्थिकस्तुतिनिन्दोपायत्वमित्याशङ्क्या- * शब्दभावनाङ्गं वेति * अयमाशयः धूमादेर्ज्ञानापेक्षत्वे ऽपि रूपेण कारणत्वात्तस्य चार्थाभावे ऽपि तद्विषयत्वरूपेण सत्यत्वा-ज्जुसर्पज्ञानस्येव भयकारणत्वं युक्तमेवोपायत्वमिति। अर्थसत्ता-क्षत्वप्रदर्शनायैव सा चेत्याद्युक्तम् * प्रवर्ते ऽहमिति * विज्ञानोत्पा-यः शब्दस्य व्यापारः स एव शब्दभावनाशब्देनोच्यते। एवं विध-ज्ञानोत्पादकत्वमेव शब्दस्य प्रवर्त्तकत्वं न तु वाद्यादिवदौदासीन्य-थावकत्वम्। यथोक्तम्।

प्रवर्त्ते ऽहमिति ज्ञानं येन शब्देन जन्यते।

स चोदनोच्यते यद्वा प्रवर्त्तनफला मतिः ॥

इति तदेवात्र प्रवृत्तिविज्ञानशब्देनोक्तम् । तस्मा शब्दभावनोपयुज्यते प्रवर्त्ते ऽहमिति विज्ञानं यावता स्यैस्योत्पाद्यते तावन्मात्रेण पर्यवस्यति नातिरिक्तमपेक्षतइ र्थः । तच्चार्थसत्तानपेक्षात्प्राशस्त्यज्ञानमात्रात्सिद्ध्यतीति द यितुं नार्थेनेत्युक्तम् । केचित्तु प्रकृतोपयोगानुसारेणैवं व्य क्षते तत्प्रवृत्त्यङ्गभूतप्राशस्त्यविज्ञानमात्रेण सोपयुज्यते । प्रवृत्त्युत दे समर्थो भवतीति । नन्वेवं सत्युपाख्यानवत्स्वर्गयागादिसाध्य धनभावसङ्कीर्त्तनस्यापि प्रवर्त्तनोपायमात्रत्वापत्तेरसत्यता स्याद्त अ * अर्थात्मिकायां त्विति * उपाख्यानानामपुरुषार्थौपयिकत्वेन द स्य तद्व्यापारात्प्रमाणान्तरानुपलब्धेश्चासत्यत्वं ज्ञातं । साध्यसा नभावे तु वेदस्य व्यापाराभावे निष्फलत्वापत्तेरतुल्यत्वम् । वेदप्र तस्यापि तु प्रत्यक्षविरोधे ऽसत्यता स्यान्न त्वसावस्तीत्यविसंवादः णेनोक्तं शब्दभावनायामपीतिकर्त्तव्यताभूतप्राशस्त्यज्ञानोपायम कस्मिंश्चिद्विसंवादो न तु पुरुषप्रवृत्तिविधिज्ञानप्राशस्त्यज्ञानरूपे स ध्यसाधनेतिकर्त्तव्यतांशे अर्थभावनायां त्वितिकर्त्तव्यतोपाये द्रव्यदेवतादौ न विसंवाद इति सर्वत्रेत्यनेनोक्तम् । एतदेव प्रश्न कं विवृण्वन्नाह * अथेति * उत्तरमाह * सुतरामिति * स्वार्थ त्यत्वेन तात्पर्यशङ्कायां स्तुतिपरत्वानिश्चयादितिभावः । एतदेवो पादयति * काममिति * इति ब्रवीतीतिकरणो ऽर्थवादगताभिध प्रकारनिर्देशार्थः । अनेन वपोत्खननादिना प्रकारेण गुणवन्तः ब्रवीतीत्यर्थः । नन्वर्थसत्तानपेक्षप्राशस्त्यज्ञानमात्रात् । प्रवृत्तावना क्तेनापि प्रवृत्तिः स्यात् अत आह * ततश्चेति * नन्विष्टानिष्टप्रा परिहारहेतुत्वाद्राजादेरनतिक्रमणीयत्वं स्यात् वेदस्य तत्कथः आह * वेदश्चेति * इष्टानिष्टसाधनबोधकत्वाद्वेदो ऽप्यनतिक्रमण य इति भावः । ततः किमिति चेदत आह * तेनेति * येन कार न वेदः प्रमाणं तेन कारणेन तदनुरूपं व्यवहर्त्तव्यमित्यर्थः । प्रा स्त्याप्राशस्त्यज्ञानयोरसत्योपायकत्वेनासत्यत्वादनादरमाशङ्क्योप यासत्यत्वे ऽपि वेदकृतत्वेनानयोः सत्यत्वं दर्शयितुम् * प्रवृ त्याद्युक्तम् * ये इह विधेयनिषेध्यार्थविषये प्राशस्त्याप्राशस्त्यज्ञाने वलस्ते वेदेनोत्पादिते यस्मात्तस्मात्तदनुरूपमिति यस्माच्छब्दाध्या रेण योज्यं ज्ञानोत्पत्तौ विप्रतिपत्तिं निराकर्त्तुम् * स्वसंवेद्यत्व क्तम् * वेदादरणीयत्वाय प्रवृत्तिनिवृत्त्यनुग्राहकत्वाभिधानम

१ राजानतिक्रमणीयः स्यादिति २ पु० पा०

अनुग्राहकत्वोपपादनाय पुंग्रहणं न चैतदलौकिकमित्याह * लोके ऽपीति * प्रवर्त्याभिप्रेतसौभाग्याद्यपेक्षया वचाभक्षणादि-क्रियाफलस्य मेधादेः फलान्तरत्वाभिधानम् । तदित्यव्ययं पञ्चम्यर्थो नियोगं परामृशति तस्मान्नियोगात्प्रवृत्तः क्रियाश्रयंतन्निमित्तं मेधादिफलं प्राप्नोतीत्यर्थः । ननु सौभाग्यादेरपारमार्थिकत्वं यो न जानाति स एव प्रवर्त्तेतां यस्तु प्ररोच्यमानः स्वाभिप्रेतफलासत्यत्वं जानाति स कथं तदुद्देशेन प्रवर्त्तेतइति तदाह * यद्यपि चेति * तदसत्यत्वे ऽपि आप्ताभिप्रेतफलानुमानेन प्रवर्त्ततइत्यर्थः तत्प्रकृते योजयति * एवमिति * ननु यदि प्ररोचनावगतफलानुसारेण न प्रवृत्तिः किमुद्दिश्य तर्हि प्रवृत्तीति तत्राह * यत्त्विति * परस्तादनुष्ठानोत्तरकालं यत्फलं भविष्यति तत्तु विधेरुपगतमिति[1] विध्याश्रयं तत्प्रमाणकमित्यर्थः उपसंहरति * तस्मादिति * प्रमाणान्तरेष्वपेक्षितार्थलाभेनोपायासत्यत्वं व्यवहारं दर्शयतीत्याह * न हीति * शुक्तिकायामदृष्टं सत्यं पारमार्थिकं रजतं येन स तथोक्तः विफलारम्भताभिसन्धानम् । अथालम्बनसद्भावात्तत्र व्यवहारसिद्धिस्तदत्रापि समानमित्याह * शुक्तिकावत्त्विति * कथं पुनरनुखिन्नायामित्यस्यैव चोद्यस्येह निरालम्बनान्वाख्यानासम्भवाभिप्रायकत्वं कथं पुनर्निरालम्बनमन्वाख्यायतइत्यनेनाशङ्क्य नित्यः कश्चिदित्यादिना भाष्येण द्विविधालम्बनाभिधानेन निराकृतं तद्व्याचष्टे * यथेति * यथेत्यनेनासत्वृत्तान्तान्वाख्यानं स्तुत्यर्थेनेत्यादेः परिहारस्य सर्वसदन्वाख्यानविषयत्वं सूचितम् । अत एव पूर्वपक्षिकायां सर्वत्रेत्युक्तम् । वृष्ट्यादीनां वपात्वं मध्यवर्त्तिसारत्वलक्षणगुणयोगेनोपपादयति * वाय्वादीनामिति * वृष्ट्युत्पत्त्यवसानयोर्वाय्वायतत्वात्तन्मध्यवर्त्तित्वं सनेम्यश्वं मरुतो जुनन्तीत्यादौ च वृष्टिहेतुत्वेन वायुस्तुतौ तत्सारत्वं वृष्टेः । अवकाशाभावे वायोरवृत्तेस्तन्मध्यवर्त्तित्वं वायुरहितस्य चापवरकाद्याकाशस्योष्मदुःखोत्पादकत्वात् तत्सारत्वं रश्मेरादित्यावयवत्वात् । तन्मध्यवृत्तित्वं रश्म्यायत्तत्वाच्च प्रकाशकत्वस्य तत्सारत्वम् । ताम-प्राविस्यादिभाष्यं व्याचष्टे * तामप्राविति * वैद्युतस्याबिन्धनत्वप्रसिद्धेस्तत्र वृष्टेर्निक्षेपकल्पना । ऋचीशशब्दस्य शरीरवाचित्वात्तदन्तर्वर्त्त्यग्निरावीशो ऽभिधीयते तस्मिन्वायोर्निक्षेपकल्पनायामालम्बनमन्तश्चरत्वसामान्यमादित्यो वा ऽस्तं यन्नग्निमनुप्रविशतीत्यादिदर्शनात् स्वरूपेण स्वर्गस्थस्यादित्यस्य भूमिष्ठाग्निप्रवेशायोगाद्रश्मि-

१ रूपगतमिति २ पु० पा०

अर्थेशकल्पना । बीजादिष्वजशब्दप्रयोगे निमित्तमाह * ततो
इति * बीजादेरन्नस्योष्मणा विना प्ररोहादर्शनात्तस्य च तेजोगुणत्
वान्नेभ्य ओषधय इति च लिङ्गादग्न्युदकसंयोगजत्वावगतेस्तत्
मान्यात् सृष्ट्येवद्युतसंयोगस्य कारणत्वाभिधानम् । जाठराग्निपा
नव्यान्नरसस्य व्यानाख्येन वायुविशेषेणाबीजभूतेभ्यो विण्मूत्रा
भ्यो विविक्तीकृतस्य चरमधातुरूपेण परिणामाद्वायोर्बीजकारणत्व
भिधानं वीरुधादेर्व्रीह्यादिवदेव भौमाग्निजन्यत्वान्निदाघकाले च
रोहदर्शनेनादित्यरश्मिजन्यत्वावगमाद्रश्म्यग्निसंयोगजन्यत्वं ल
माग्नौ स्मरणात् । तदर्थतयोपयुज्येति पदं व्याचष्टे * तमालभ्येति
आलम्भादिमेधनस्य प्रजापशूत्पत्तिकारणत्वाभिधानालम्बनमाह * श
श्वयज्ञानामिति * एतच्च व्याख्यानत्रयं वैकल्पिकं युगपद्दर्शितं
दूषयति * एतस्मिंस्त्विति * प्रक्रमो रीतिर्व्याख्यानप्रकार इ
त्यावत् । एवशब्देन स्तुतिसिद्ध्यर्थसालम्बनत्वानुरोधेन प्रधानभू
त्वनुनिबाधो ऽङ्गगुणविरोधन्यायादयुक्त इति सूचितम् । स्वमते
व्याख्यातुं प्रतिजानीते * अत इति * सृष्ट्यादिविषयमेतदुपाख्या
व्याख्यातुं तदनङ्गीकारादनुपपत्तिमाशङ्क्याह * मन्त्रेति * वस्तु
पुरस्था सृष्टिप्रलयाभावे ऽपि मन्त्रादिव्याख्यालम्बनत्वेनोपायमात्रत
या तदङ्गीकरणमिति भावः । व्याख्यानमाह * तत्रेति * आत्मनः पशु
रूपनिर्माणशक्तिद्योतनार्थं योगिग्रहणं पुण्यकर्म्मणामेव मन्वादीन
सृष्ट्यादावुद्भवः पुराणादिष्वभ्युपगम्यते । यद्वा पुण्यस्यैव कर्म्मण
फलभूतानामुद्भवः ।

अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ।
चतुष्पात्सकलो धर्म्मः सत्यं चैव कृते युगे ॥

इति स्मरणात् । ततो ऽजस्तूपर उदगादित्यत्र तत इति पञ्च
म्यानन्तर्यप्रदर्शनार्थेति व्याचष्टे * तत इति * वपापुरोडाशाङ्ग
प्रचारात्मकत्वात्पशुयागस्य वपाप्रचारमात्रेणासमाप्तिः । आनन्त
र्याभिधानस्य स्तुत्युपयोगमाह * ईदृशमिति * वपोत्खननाभिधान
स्योपयोगमाह * एवं चेति * सालम्बनत्वाभिप्रायः सत्यशब्दः
प्रसङ्गाद्वृत्तान्तान्वाख्याने ऽपीत्याद्यधस्तनभाष्यं दूषयति * प्रतिसृष्टि
चेति * दिङ्मोहोदाहरणे देवशब्दालम्बनमाह * कर्मस्त्विति *
के त इत्यपेक्षायामृत्विजस्तइत्युक्तम् । दिङ्मोहशब्दालम्बनाभिधा
नार्थमप्राकृतस्येति भाष्यं व्याचष्टे * देवयजनेति * देवयजन यज्ञ
भूमिः दृष्टश्च लोके व्याकुलीभावे दिग्भ्रमव्यपदेश इत्याह * तथा
चेति * अदितेर्ज्ञापकत्वाभिधानस्यालम्बनप्रतिपादनार्थमवधारणेति

भाष्यं व्याचष्टे * तत्रेति * कथमादित्यागेनावधारणास्यावकाशो दर्शयिते अत आह * यावद्धीति * दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति दर्शपूर्णमासानन्तरं सोमयागस्तस्य चापूर्वत्वाद्दर्शपूर्णमासयोरनभ्यस्तस्याङ्गजातस्योपस्थापनाद्व्यामोहमात्रं प्रायणीयेष्ट्यापनीयते सा हि सोमस्याङ्गं दर्शपूर्णमासयोश्च विकार इति पूर्वाभ्यस्तदर्शपूर्णमासिकेकर्तव्यतानुष्ठानेन करिष्यमाणेषु कर्मस्ववधानं भवतीति भावः ः पथ्यां स्वस्तिमयजन्प्राचीमेव तया दिशं प्राजानन्नग्निना दक्षिणां सोमेन प्रतीचीं सवित्रोदीचीमदित्योर्ध्वामिति मोहापनयेन स्तुतिः ।

रूपात्प्रायात् ॥ ११ ॥

अत्र भाष्यकारेण स्तेनानृतवादाद्यर्थवादस्य हिरण्यहस्तधारणापूर्वकग्रहणविधिशेषत्वमुक्त्वा निन्दाया विधिशेषत्वानुपपत्तिमाशङ्क्य निन्दावचनमित्याद्युक्तं तदुपपादयति * इहेति * ननु निन्दया निषेध एव कल्प्यतां किमित्यसावन्यस्तुतिपर्यन्तं नीयते ऽत आह * या निन्देति * निषेधैकवाक्यत्वं विना निन्दात्वानवधारणान्न दूबलेन निषेधकल्पनं युक्तम् । न चैवमानर्थक्यापत्तिः निन्दामात्रपर्यवसानाभावादिति भावः । कथमस्या विधिशेषतेत्याशङ्क्याह तदुपपादनस्येति * वक्ष्यते च दशमे विधिसन्निधौ श्रुताया निन्दाया निषेधाकल्पनेन विधेयस्तुत्यर्थत्वमित्याह * यथेति * तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा जुहुयान्न ग्राम्यान्पशून् हिनस्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसा ऽग्निहोत्रं जुहुयादिति विधेः अनाहुतिरिति च निन्दया निषेधानुमानाद्विधिनिषेधाविति प्राप्ते सिद्धान्तयिष्यते । न चेदन्य प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्याच्चेति । शिष्ट्वा प्रतिषेधः स्यात् इति पूर्वाधिकरणसूत्रानुषङ्गेणेदं योज्यम् । न चेदन्यं विधिं प्रकल्पयेद्यत्र प्रत्यक्षो विधिः सन्निहितो न स्यात्तत: षोडशिग्रहणवाक्यवदेकेन शिष्ट्वा परेण प्रतिषेधः स्यात् इह तु पयसा ऽग्निहोत्रं जुहुयादिति विध्यन्तरस्य प्रक्लृप्तत्वात्तच्छेषभूतो ऽयमर्थवादः स्यात्, अन्यथा निषेधैकवाक्यत्वं विना निन्दात्वानवधारणेनानाहुतित्वकीर्त्तनस्य निषेधकल्पकत्वासम्भवादानर्थक्यापत्तेः । कथं चित्कल्पितस्यापि वा निषेधस्य षोडशिग्रहणनिषेधवद्विकल्पार्थत्वात्तस्य चात्र पयःप्रभृतिद्रव्यान्तरविधानादेव सिद्धेरानर्थक्यापरिहारात् यवागूस्तुतिनिन्दयोः कथं पयःस्तुत्यर्थत्वमित्याश-

१ अयं पा० २ पु० ना०

परसामर्थ्याच्चेत्युक्तं ग्राम्यारण्यपशुहिंसानापादकत्वेन प्रशस्ता-
पि जर्त्तिलगवीधुकानां पयःप्रयोगापेक्षया दुष्टत्वात्पयः प्रशस्तत-
ति परेण पयोविधिनान्वये सामर्थ्यादित्यर्थः । एवं चैकवाक्यत्वे
त्वत्यनेकादृष्टानुबन्धिवाक्यभेदापादकाविधित्वाङ्गीकरणायोगात्
गादिति लिङो ऽपि स्तुत्यर्थत्वसिद्धिः ।

## दूरभूयस्त्वात् ॥ १२ ॥

धूमार्थवादस्य भाष्यकृता मिश्रलिङ्गमन्त्रविधिशेषत्वमुक्तम् ।
पादयति * तस्मादिति * उदाहृतयोर्मिश्रलिङ्गत्वं दूषयति
र्थं पुनरिति * परमतेन समाधत्ते * केचिदाहुरिति * तद् दू-
ते * तदयुक्तमिति * न केवलं प्रमाणाभावात् ज्योतिः
स्याग्निसूत्रशब्दपर्यायत्वाभावः किं तु बाधकसद्भावाद-
ाह * अन्यतरेति * भाष्यानादरेण स्वयं मिश्रलिङ्गम-
त्रविधिशेषत्वमाह * तस्मादिति * अत्रैवार्थे भाष्यं योजयति
स्मिन्नपि त्विति * अनेन च प्रातरितीतिकरणः काकुत्वेनैवं
ख्यातः सत्यप्यस्मिन्प्रक्रमे यदग्नये च प्रजापतये च सायं जुहो-
ात् सूर्याय च प्रजापतये च प्रातर्जुहोतीत्यग्निसूर्ययोः केवल-
वतात्वेन विहितत्वात्केवलदेवत्यमन्त्रयोर्लिङ्गतो ऽपि प्राप्तिस-
। मिश्रलिङ्गमन्त्रविधिपर्युदस्तप्रतिप्रसवमात्रार्थत्वेन केवलदेवत्य
ाविधानस्य स्तुत्यनाकाङ्क्षत्वान्नास्य तच्छेषतेति तत्पर्युदासेन मि-
ङ्गयोरपूर्वस्य विधानस्याकाङ्क्षितत्वात्तच्छेष इति । एवं भाष्यका-
ेन ब्राह्मणेनाप्यग्निसूर्यविधिमङ्गीकृत्य केवललिङ्गमन्त्रविधेस्त-
ास्त्रतादोषपरिहाराय प्रतिप्रसवमात्रार्थत्वात् स्तुत्यनाकाङ्क्ष-
ा । इदानीमाघाराग्निहोत्राधिकरणे वाक्यभेदभयाद् ब्राह्मणे चा-
सूर्यविधेर्निराकरिष्यमाणत्वाल्लिङ्गतः प्राप्त्यभावात् तदर्थशास्त्र-
ावेनापूर्वविधित्वात् स्तुत्याकाङ्क्षोपपत्तेरस्यैवायं शेष आह
थ वेति * यद्यप्यनयोर्विध्योर्मध्ये पठितस्तथापि मिश्रलिङ्गवि-
ग्नये सायं जुहुयादासूर्याय वृश्चेत् यत्सूर्याय प्रातर्जुहुयादासू-
वृश्चेत देवताभ्यः सम । दन्दध्यादग्निर्ज्योतिर्ज्योतिः सूर्यः स्वा-
सायं होतव्यं सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातस्तयोरु-
यां प्रातर्न देवताभ्यः सम दन्दधातीति देवताद्रोहापादकत्वेन
लदेवत्यनिन्दापूर्वकस्य देवताद्रोहानापादकत्वलक्षणप्रशंसान्तर-
ावेन निराकाङ्क्षत्वात्केवलदेवत्यविध्योरेवायं प्रशंसेत्यर्थः ।
यं चैवमस्मिन्नर्थे योज्यं, मिश्रलिङ्गयोरित्यनादरे षष्ठी सप्तमी वेयं

तोऽपि सन्निधौ मिश्रलिङ्गयोर्मन्त्रयोर्विहितयोः प्रशंसान्तरसङ्का-
न तयोः स्तुत्यनाकाङ्क्षत्वादुदाहृतकेवललिङ्गमन्त्रविधानस्यैवेय-
काङ्क्षितत्वाच्छेष इति। अस्मिन्पक्षे स्तुतिस्वरूपं दर्शयति * य-
गाद्विति * व्यवस्थितशब्देनोभयोरित्यादिभाष्यं नक्तमग्नेर्दिवा च
र्यस्य सन्निधाने व्यवस्थया होम इत्येवं व्याख्यातम्। जुहोतिचोदि-
याव्युद्देशांशे भागरूपे देवतान्वयमभिप्रेत्य यष्टव्याविर्त्युक्तम्। पूर्वं
ख्याने तूभयशब्दो मिश्रवचनः। दूरभूयस्त्वादित्यदर्शनाभिधा-
लम्बनप्रतिपादनार्थं भाष्यं प्रश्नपूर्वं व्याचष्टे * कथं त्विति *
स्यस्य भूयस्त्वेन यद्दर्शनं नाम दर्शनगतोऽतिशयो दृशिना ल-
तः स नञा निषिध्यते पशुशब्दलक्षितमिव प्राशस्त्यमपशुशब्देन
शवो वा अन्ये गोअश्वेभ्य इत्यनेन नञेति भावः * केन चिदि-
* दूरभूयस्त्वांशेनादर्शनं स्तुतेरालम्बनमित्यर्थः।

## स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनम् ॥ १३ ॥

न चैतद्विद्म इत्यस्य प्रवरे प्रव्रियमाणे ब्रूयादित्येतद्विधिशे-
भाष्यकृतोक्तम्। तत्र विध्यंशपूरणपूर्वकं स्तुत्युपयोगित्वमुप-
यति * प्रवरइति * अज्ञानवचनालम्बनाभिधानार्थं दुर्ज्ञान-
दितिभाष्यं व्याचष्टे * ज्ञायमाने त्विति * दुर्ज्ञाने कथम-
शब्दप्रवृत्तिरित्यपेक्षायामाह * यत्सुखेनेति * पूर्ववदत्रा
ालगतसौकर्यलक्षणो गुणो विदितो विदिलक्षितो नञा निषिध्य-
र्थः। स्त्र्यपराधेनेति दुर्ज्ञानत्वोपपादनार्थत्वेन व्याचष्टे * तत्रे-
* ननु स्त्र्यपराधेऽपि बीजाधीनिर्बलीयसीत्यनेन न्यायेन मा-
ह्मण्यमात्रेण क्षत्रियब्राह्मण्येन वा पुत्रे ब्राह्मण्यासिद्धेः कथं दुर्ज्ञा-
याशङ्कानिराकरणार्थतया कर्तुश्च पुत्रदर्शनेनेति भाष्यं व्याचष्टे
त्यपि चेति * किं तत्कर्तुः पुत्रदर्शनमित्यपेक्षयां माता भस्त्रा
पुत्रो येन जातः स एव स इत्याद्युदाहृतम्। जनकब्राह्मण्य-
त्ते ऽपि पुत्रब्राह्मण्ये कथं दुर्ज्ञानत्वमत आह * जनयितुश्चे-
* साक्षात्कर्तृपुत्रदर्शनं स्वयमुदाहृत्य भाष्यकारीयमुदाहरणं
त्वेन योजयति * वेदे ऽपि चेति * उपपादितं स्तुत्युपयोग-
हरति * तेनेति * दुर्ज्ञानत्वेनाब्राह्मण्यशङ्कासम्भवादब्राह्म-
पि प्रवरानुमन्त्रणाद् ब्राह्मण्यं भवतीत्येवंरूपा प्रशंसा युक्तेत्य-
ननु ब्राह्मण्यस्य मातापितृसंबन्धनिमित्तत्वात्प्रवरानुमन्त्रणा-
वाभिधानं किमालम्बनमत आह * निरूढेति * निरूढं प्र-
ब्राह्मण्यं येषां प्रवराणां प्रव्रियमाणानां सङ्कीर्त्यमानानां तेषां

सङ्कीर्त्तनादित्यर्थः ।

## आकालिकेप्सा ॥ १४ ॥

सूत्रं व्याचष्टे * यत्तदानीमेवेति * ईप्सापदव्याख्यानार्थं स्वेत्युक्तम् । न यच्चिरभावीत्यनेनाकालिकस्यैवाप्तुमिच्छेति साधारणत्वं दर्शितम् । अनेन चानवक्लृप्तिवचनमनभिमतत्वेनामुष्मिनिन्दितुमित्युक्तं भवति । आमुष्मिकानिन्दाया विधेः स्तुतिपर्यवसनप्रतिपादनार्थं प्रत्यक्षफलत्वेन स्तुतिरितिभाष्यं व्याचष्टे * तस्मादिति * चिरभाव्यनभिमतत्वादित्यर्थः । अतीकाशाः छिद्राणि प्राग्वंशः पत्नीशाला स्तुतिस्वरूपमाह * तद्धीति * अनवक्लृप्तिवचनालम्बनाभिधानार्थमनवक्लृप्तिवचनमिति भाष्यं व्याचष्टे * तदपेक्षया चेति * अत्रापि यदमुष्मिन् लोकइत्यामुष्मिकफलपरामर्शिना यच्छब्देन तद्गतमभिमतत्वं लक्षयित्वा तस्यानवक्लृप्तिः वद्येदेत्यनेनोच्यते । भाष्ये च गौणग्रहणेन रूपात्प्रायादिति पञ्चम्युपात्तगुणवादनिमित्तत्वमनुकृष्याकालिकेप्सा गुणवादनिमित्तमित्येसूत्रं योजितम् । कामिनः काम्यमानफलाभिमतेरपि प्रत्यक्षत्वादनवक्लृप्तिवचनानुपपत्तिमाशङ्क्य तदपेक्षयेत्युक्तम् । यथा प्रत्यक्षफलं सर्वाभिमतं नैतत्तथेत्यर्थः । समानकालावाद्यन्तावस्येत्यर्थविवक्षायामन्वाख्यानादाकालिकपदात्तदानीमुत्पत्त्याख्यार्थालाभमाशङ्क्य विशिष्टे ऽर्थे त्वाख्यातमपीदं पदमेककालक्षणाया प्रत्यासत्त्योत्पत्त्याख्यैककालत्यवाचीति दर्शयितुमाह * पाठे त्विति * आद्यन्तवचनइतीतिकरणेनोपक्रमोक्ताकालिकपदार्थपरामर्शाद्दीर्घपाठे तदानीमेवोत्पाद्यमानमनेन सूत्रेणाकालिकमन्वाख्यातमित्यर्थः । पाठान्तरमिति क्वचिद्वार्त्तिकपाठः । तत्र भाष्योपन्यस्तस्यापि दीर्घपाठस्यानभिमतत्वसूचनार्थं पाठान्तरोक्तिः । पूर्वविवक्षितार्थलाभोपपादनाय ह्रस्वपाठव्युत्पत्तिं दर्शयितुमाह * अकालिकामिति चेति * इस्येकादेशात्कालिकपदासिद्धिः ।

## विद्याप्रशंसा ॥ १५ ॥

अनेन सूत्रेण यासौ गर्गत्रिरात्रवेदानुमन्त्रणाविद्या मुखशोभावाजिजन्महेतुत्वेनोक्ता सा गर्गत्रिरात्रवेदानुमन्त्रणयोः प्रशंसेत्युच्यत इति गर्गत्रिरात्रविधेरित्यादिना भाष्येणोक्तम् । तत्र विद्यायाः केन चित्पाराथ्यानवगमात्तद्विषयफलश्रुतेः कथं प्रशंसार्थतेत्याशङ्कानिराकरणपूर्वकं फलाभावसूत्रोक्तमनुपलब्धिविरोधं निराकरोति

अध्ययनेनेति * अध्ययनविधिना ज्ञानस्याध्ययनफलत्वं वदता
निष्प्रयोजनस्य फलत्वायोगात् कैमर्थ्यापेक्षायां सामर्थ्यात्कर्म्मानुष्ठा-
नयोग्यपुरुषकरणार्थत्वेन तच्छेषावगमादित्यर्थः । स्वयं मुख्यया
वृत्त्या मुखशोभावाजिमत्वानुवादमुपपाद्याधुना भाष्योक्तं गौणत्व-
मनुसरति * अथापीति * स्तुतिपरत्वादित्यनेन सूत्रोक्तस्य प्रशंसा-
र्थत्वस्यानुपलब्धिविरोधपरिहारार्थत्वं दर्शितम् । घृतवन्तं कुलायिनं
रायस्पोषं सहस्रिणं वेदो ददातु वाजिनमित्याह । प्रसहस्रं पशूनां
आप्नोत्यस्य प्रजा जायां वाजी जायते य एवं वेदेत्यत्र यज्ञपतिप्रथमव-
र्ग मन्त्राभिधानस्यार्थवादालम्बनत्वसम्भवे ऽपि मन्त्राभिधाने ऽप्या-
लम्बनाकाङ्क्षानिवृत्त्यर्थं कुले सन्तताध्ययनश्रवणादित्युक्तम् ।

## सर्वत्वमाधिकारिकम् ॥ १६ ॥

फलवचनं स्तुतिरिति भाष्येण पूर्णाहुतिपशुबन्धयोः सर्वका-
मलोकफलत्ववचनमश्वमेधविद्यायाञ्च मृत्युतरणादिफलत्ववचनं
प्रशंसार्थत्वान्नानुपलब्धिविरुद्धमिति पूर्वसूत्रानुषङ्गेण सर्वत्वमिति
सूत्रावयवो व्याख्यातः । तत्सिद्ध्यर्थं पूर्वोक्तमप्यर्थवादविषयत्वं
स्मारयति * संस्कारेति * पूर्णाहुतिविद्ययोः संस्कारत्वात्पशुबन्ध-
स्य चारादुपकारककर्म्मत्वादित्यर्थः । सर्वकामफलस्येति भाष्येण स-
र्वत्वमित्यवयवावृत्त्या सर्वकामावाप्तिवचनालम्बनाभिधानार्थत्वेनैत-
त्सूत्रं व्याख्यातं तद्व्याचष्टे * स्तुतिस्त्विति * उक्ते ऽर्थे सूत्रं योजय-
ति * सूत्रे चेति * असर्वेष्विति भाष्येण सर्वत्वानुपपत्तिपरिहारा-
र्थत्वेन पुनरेतत्सूत्रं व्याख्यातं तदाशङ्कापूर्वं विवृणोति * ननु
चेति * एकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते सर्वेभ्यो ज्यो-
तिष्टोम इत्यधिकृतस्य ज्योतिष्टोमस्य सर्वकामसाधनत्वात्तदङ्गभूतस्य
पशुबन्धस्य तद्द्वारा सर्वलोकसाधनत्वं स्तुत्यर्थमुपचारादुक्तमित्येवं
सूत्रं योज्यं, विद्योदाहरणे तु पूर्वसूत्रागतविद्याशब्दानुषङ्गेण विद्या-
स्याधिकारिकीति विपरिणामेनाधिकृताश्वमेधफलं मृत्युतरणादि
तदुपकारिण्यां विद्यायामश्वमेधस्तुत्यर्थमुपचारेणोक्तमिति योज्यम् ।

## फलस्य कर्म्मनिष्पत्तेस्तेषां लोकवत्परिमाण-
## तः फलविशेषः स्यात् ॥ १७ ॥

अन्वारुह्य वचनस्य प्रयोजनमाह * तच्चैतदिति * दक्षिणा-
परिमाणसाम्ये ऽपि फलाधिक्यमन्तरेणासारद्रव्यदानेनापि क्रतु-
सिद्धौ सारद्रव्यदाने प्रवृत्त्ययोगात्सूत्रातिरेकेण भाष्ये सारग्रहणम् ।

विशेषमुपपादयति * साधनेति * अत्राशङ्कते * इतिस्थित इति * परिहरति * तदभिधीयतेति * स्थानादपीयं व्यवस्था सिद्ध्यतीत्याह किं चेति श्लोकं व्याचष्टे * यथैवेति * कर्मगोचर इत्यादिना समुदायाभिप्रायः स्वगोचरशब्दः निर्द्धारणे च सप्तमी व्यवस्थावचनश्च विभागशब्द इति व्याख्यातः ।

ब्रह्महत्याश्वमेधाभ्यां न परं पुण्यपापयोः ।
आभूतसंप्लवान्तं च फलमिष्टं तयोर्द्विज ॥

इत्यादिस्मरणादपि व्यवस्थावसीयतइत्याह * स्मरणादपीति * यदग्निहोत्रं जुहोति अथ दशगृहमेधिन आप्नोत्येकया रात्र्या यदा दश संवत्सरानग्निहोत्रं जुहोत्यथ दर्शपूर्णमासयाजिनामाप्नोति यदा दश संवत्सरान् दर्शपूर्णमासाभ्यां यजते ऽथाग्निष्टोमयाजिनामाप्नोतीत्याद्यन्यार्थदर्शनादपि व्यवस्थासिद्धिरित्याह * चातुर्मास्यसोमेषु चेति * चातुर्मास्यवत्सोमे ऽपीत्यर्थः ।

## अन्त्ययोर्यथोक्तम् ॥ १८ ॥

अभागिप्रतिषेधपरिहारे स्तेयानृतवादार्थवादन्यायातिदेशार्थत्वेन यथोक्तपदव्याख्यानार्थं पृथिव्यादीनामिति भाष्यम् । तत्र हिरण्यं निधायेत्यनेन पृथिव्याधारस्यैव हिरण्यस्य विधेः पृथिवीनिन्दानुपपत्तिमाशङ्क्य व्याचष्टे * यथैवेति * एवमपि शुद्धपृथिवीनिन्दामात्रेण हिरण्यस्तुतिसिद्धेरितरनिन्दानर्थक्यादादिशब्दानुपपत्तिमाशङ्क्याह * नान्तरिक्षइति * एतदेव विवृणोति * यथेति * अनित्यसंयोगपरिहारार्थत्वेन यथोक्तपदव्याख्यानार्थं यच्चेति भाष्यं व्याचष्टे * अनित्यसंयोग इति * प्रकर्षेण वहतीति कर्त्तरि प्रावाहणिशब्दव्युत्पत्तिसम्भवात् बबरशब्दस्य च शब्दानुकृतित्वेन नित्यवायुपरत्वोपपत्तेर्नाप्रसिद्धप्रवाहणाख्यपुरुषकल्पनेन तदपत्यपरता नित्यानित्यसंयोगाविरोधापादिका कल्पनीयेति भावः । ननु विध्युद्देशप्रामाण्यमात्रेणांशत्रयोपेतभावनानुष्ठानसिद्धेरनर्थवादप्रामाण्यचिन्ता निष्प्रयोजनेत्याशङ्क्याह * प्रयोजनमिति * एतच्चोपलक्षणार्थम् । अक्ताः शर्करा इत्यत्र सन्दिग्धनिर्णयस्याश्वप्रतिग्रहेष्ट्यवधारणकल्पनस्य वमनेष्ट्यां च वैदिकसोमवमननिमित्तकत्वस्याध्वयुप्रभृति गृह्णातीत्यत्र चतुष्टुद्वयकल्पनस्य जोतिष्टोमशब्दस्य सोमयागपरत्वस्य धाय्यानां च समिध्यमानवती समिद्धवत्यन्तरालनिवेशस्य सोमं विद्या प्रजानां चावश्यकत्वस्य द्वयोः प्रणयन्तीत्यस्य च

१ आह्निक पु० २ मा०

ध्यमपर्वेद्वयविषयत्वस्यार्थवादप्रामाण्याधीनत्वात् ।

विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥

विषयविवेकार्थमिहेतिभाष्यं व्याख्यातुमाह * एवमिति *
ानर्थक्यमुपाख्यानम्। आदिशब्दोपात्तं चादृष्टार्थत्वं प्रतियोगिविरोधि
र्गां तेष्वित्यर्थः । एतच्च पूर्वेणाध्यायषट्केन प्रत्यक्षविदितधर्मकेषु
पूर्णमासादिषु व्याख्यातेषु इदानीमविहितेतिकर्त्तव्यताकेष्वैन्द्रा-
ादिषु चिन्तयितुमिष्यतइति सप्तमाद्यभाष्यवत्सर्वेष्वर्थवादेष्वान-
क्यादिप्रतियोगित्वेन व्याख्यातेषु यथासम्भवं केषु चिद्विधिप्रति-
गितेदानीं विचार्यतइति विशेषकपरं व्याख्येयम् । पूर्णाहुत्या-
र्थवादानां विद्धिवन्निगदार्थवादानामपि व्याख्यातत्वात्किमस्येति
न्देहभाष्यं पूर्वपक्षासम्भवेनाक्षिपति * कुत इति * सन्देहसमर्थ
तुद्धा पूर्वपक्षं सम्भावयति * पूर्वत्र हीति * श्रौतत्वमनेन विधि-
ाङ्गीकरणे कारणमुक्तम् । अनन्यलभ्यत्वाच्च विधिरित्याह
विध्यंशश्चेति । इत्युक्तामिति * विध्युद्देशस्यैव द्वे शक्ती कल्पयि-
ाम इत्यत्रेत्यर्थः।प्रधानत्वादपि विधिरित्याह *अपि चेति* विशे-
गशब्देनाङ्गमुक्तम् । प्रधाने विशेषणे च यत्सम्भवति तस्येत्यर्थः ।
ाथम्यादपीत्याह * समासे चेति * फलरूपश्चात्र भावनांशो विधे-
ऽभिप्रेतः तस्य च सर्वादौ निवेशः प्रथमाकाङ्क्षणादितरयोस्तु ता-
र्थ्येन तस्यैव प्राधान्यादित्याह * विशेषेण त्विति * आसामुपप-
ीनां सूत्रकाराभिमतत्वं दर्शयितुमाह *इत्यादीति* श्रौतस्यार्थान्त-
पूर्वत्वाभावादनन्यलभ्यस्य चानन्यकारणकत्वात्प्रधानस्य विधेया-
रापेक्षाभावादपूर्वशब्दे न लक्षणा, प्राथम्यं तु न विद्यते ऽस्मात्पूर्वमि-
ि बहुव्रीहिणा बोध्यते । आदिशब्देन त्वर्थान्तरपूर्वत्वाभाव एवो-
यते । ननु स्तुतेरपि पूर्वाधिकरणे अर्थवत्त्वोपपादनादानर्थक्या-
भिधानमयुक्तमत आह * तदपेक्षयेति * पौनरुक्त्यमाशङ्कते * ननु
ाति * एकस्यार्थस्याद्विरुक्त्यानर्थक्ये ऽप्यस्य प्राथम्यादपुनरुक्तते-
केषां समाधानमाह * तत्रेति * अस्याधिकरणस्य पौनरुक्त्या-
ावे ऽप्यानर्थक्यापरिहारे ऽप्याकुलीभावेन श्रोतॄणामर्थानवधारणा-
त्तेर्विलम्बो ऽनुचित इत्येतत्समाधानं दूषयति * सत्यमेवमिति *
ोतृचित्तसमाधानायापौनरुक्त्ये परिहार्ये प्राप्ते चतुरः प्रकारानुपन्यस्य
षयति *तत्र* इत्यादिना पूर्वाधिकरणेनैवेत्यनेन फलविधिस्वरूपा-
णामपि पूर्वाधिकरणविषयत्वं दर्शितम् *तथा च* इत्यनेनैतदेवं पूर्वा-

---

१ विशेषणपरमिति २ पु० पा०

धिकरणोदाहृतफलविधिसरूपार्थवादनिदर्शनेन स्फारितं पूर्वोक्तस्याप्यर्थवादत्वस्य विसम्वादेनेहासम्भवादानर्थक्यपरिहाराय पर्णमय्यधिकरणनिराकृतस्य फलविधित्वस्य प्रतिप्रसवशङ्कां निराकर्त्तुमेतदधिकरणमिति प्रकारान्तरमुपन्यस्य निराचष्टे * के चिदिति * शरीरस्येन्द्रियाधिष्ठानत्वेन प्राधान्यादुपचारात्प्राधान्येनाधिकरणप्रतिपाद्यं शरीरशब्देनोक्तम् । तत्र पर्णमय्यधिकरणशरीरादभिन्नमित्यर्थः। अभ्युच्चयहेतुत्वे कारणं *विसम्वादो ऽपि च* इत्यनेनोक्तम् । सर्वविधिसरूपविषयत्वादस्य फलविधिसरूपमात्रविषयेण पर्णमय्यधिकरणेनापौनरुक्त्यम् । इति प्रकारान्तरमाशङ्कते * तस्मादिति * निरस्यतीहापीति । फलविधिसरूपांशेनास्यापि तेन गतार्थत्वमपरिहार्यमिति तावच्छब्देन सूचितम् । एतद्दोषपरिहारार्थं फलविधिसरूपव्यतिरिक्तानामेवात्रोदाहरणत्वमिति प्रकारान्तरमाशङ्कते * इति व्यवस्थयेति * हेताविति करणत्वं निरस्यति * अत्र वदाम इति * ननूदाहरणभेदस्याधिकरणभेदाक्षेपकत्वादारभ्यमेवाधिकरणद्वयमित्यत आह * न हीति * किं तर्ह्यधिकरणभेदाक्षेपकमत आह * न्यायेति * न चास्य फलविधिसरूपव्यतिरिक्तसर्वविधिसरूपविषयतास्तीत्याह * द्रव्यादिविधयो ऽपीति * कुत्र विचारिता इत्यपेक्षायामाह * के चिदिति * एवं पौनरुक्त्येनाधिकरणारम्भे दूषिते पौनरुक्त्यं परिहर्त्तुमशक्नुवतां मतेनारम्भं तावत्समाधत्ते * अतश्चेति * यथैव चतुर्थे सह शाखया प्रस्तरं प्रहरतीति शाखाप्रहरणस्य प्रतिपत्त्यर्थकर्मत्वसन्देहे तृतीयया अर्थकर्मत्वे प्राप्ते सहयोगनिमित्तत्वात्तृतीयायां द्वितीयावगतप्राधान्यप्रस्तरसाहचर्याच्छाखाया अपि प्राधान्यावगतेः प्रतिपत्तित्वे सिद्धान्तिते द्वितीयायाः प्राधान्यव्यभिचारशङ्कापरिहारार्थयोरर्थे ऽपीति चेन्न । तस्यानधिकारात् । फलस्याधिकृतत्वादितिसूत्रयोः सक्त्वधिकरणगताभ्यां सूत्राभ्यां द्रव्योपदेश इति चेन्न । तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वादितिसूत्राभ्यां पौनरुक्त्यमाशङ्क्य नातीव पुनरुक्तता महान् दोषो बहुकृत्वो ऽपि पथ्यं वदितव्यमिति परिहारं भाष्यकारो वक्ष्यति तथैवात्रापि वक्तव्यमित्यर्थः । स्वयमिदानीं चतुरः पौनरुक्त्यपरिहारप्रकारानाह *अथ वेति* एकस्यैव साध्यसाधनसम्बन्धाभावप्रतिपादनन्यायस्यात्र साधनांशस्तत्र साध्यांशः साध्यत इत्यर्थः । द्वितीयं प्रकारमाह * स्पष्टं चेति * सर्वविधिसरूपाणामिति फलविधिसरूपाणां पर्णौदुम्बराद्यर्थवादानां यजमानः प्रस्तर इत्यादीनां च द्रव्यविधिसरूपाणां विदुग्धादीनां च गुणविधिसरूपाणां माषपाकादिविषयाणां च क्रिया-

धिसरूपाणाम्। आग्नेयो वै ब्राह्मण इत्यादीनां देवताविधिरूपाणां
लार्थवादनिरपेक्षविधिनिराकरणेनेत्यर्थः। फलादिसम्बन्धोत्तर-
लमर्थवादान्वयात्पर्णोदुम्बरतादावार्थवादिकफलकल्पनमशक्यं
पक्षयितुमित्याशङ्क्यार्थवादकल्पिते विधावित्युक्तं क्लृपूसामर्थ्ये
धातोर्घञन्तात्कृपो रो ल इति लादेशे कृते तत्करोति तदाचष्ट-
समर्थं करोतीत्यस्मिन्नर्थे णिचमुत्पाद्य निष्ठायां कल्पित इति
तेनार्थवादेनाङ्गभूतेन विधौ प्रवृत्त्युत्पादनसमर्थे कृते विधिसा-
र्येनार्थवादान्वयात्प्रागेवाक्षिप्तस्य फलस्यानिर्द्धारितविशेषस्य विशे-
काङ्क्षावेलायामित्यर्थः। यथाध्ययनभावनायां फलाश्रवणे ऽपि
धिसामर्थ्यात्किं चित्समीहितं फलं भावयेदित्यनिर्द्धारितविशेष-
ठान्वये ऽवधारिते वेदाध्ययनरूपकरणान्वयोत्तरकाले योग्यतया-
ानरूपफलविशेषनिर्द्धारणमविरुद्धं तथात्रापीति भावः * अन्या-
त * विहितपर्णोदुम्बरतास्तुत्यर्थामित्यर्थः। फलविधित्वमपीत्य-
ाब्देनौदुम्बराधिकरणसिद्धार्थवादत्वाङ्गीकरणेन तदाक्षिप्तफल-
धिप्रतिपादनाद्विध्यर्थवादसमुच्चयेन पर्णमय्यधिकरणपूर्वपक्षइ-
क्तम् * अर्थवादत्वमेवेति * केवलार्थवादत्वेन सिद्धान्तो दर्शि-
। निवीताद्यर्थवादानामपि सिद्धवत्कीर्त्तनान्यथानुपपत्त्या विध्या-
कत्वात्समुच्चयेन पूर्वपक्षं कृत्वा विक्षेपे प्रकरणादुत्कर्षापत्तेः।
च केवलार्थवादत्वेन प्रकरणानिवेशासम्भवोपपत्तेः। केवलार्थ-
दत्वेन सिद्धान्तो निवीताद्यधिकरणेषु करिष्यतइत्याह * एतेन-
* कृत्वा चिन्तात्वेन वा तेषां पुनरारम्भ इत्याह * अथ वेति *
कृतिपुराकल्पाधिकरणमपि कृत्वा चिन्तेत्याह * तथेति * इति
माहबहुकुर्वाष्णिमाषान्मे पचत न ह वा एतेषाऽ हविर्गृह्णन्तीत्येक-
र्तृकमुपाख्यानं परकृत्याख्यम्। उल्मुकैर्हस्मपूर्वे समाजग्मुस्तानसु-
रक्षाऽसि निर्जघ्नुरितिचानेककर्त्तृकम्मुपाख्यानं पुराकल्पाख्यमु-
हृत्य किमिमौ माषपाकोल्मुकसंयोगविधी उतारण्याशनगृहपत्य-
ानिर्वापस्तुत्यर्थौ निन्दार्थवादाविति सन्दिह्यार्थवत्त्वाद्विधीति पूर्व-
मङ्गीकृत्य परकृत्युदाहरणे किं सर्वेषामेव दर्शपूर्णमासयाजिना-
पवसथ्याहे माषभोजनं विधीयते वृष्णिगोत्राणामेव वेति चिन्त-
ष्यते। तत्र वार्ष्णिशब्देन वृष्णिगोत्रविशेषसम्बन्धितया भोजनार्थ
षपाककीर्त्तनात्तदन्यथानुपपत्त्या विधिः कल्प्यमानो न सर्वविष-
कल्पयितुं शक्यतइति पश्चावत्त्ववद्व्यवस्थेति प्राप्ते विशिष्टपुरुषा-
रेतत्वेन माषस्तुत्यर्थतया वार्ष्णिसम्बन्धकीर्त्तनोपपत्तेर्विशेषवि-
त्सायां वार्ष्णिबहुव्यतिरिक्तानां वृष्णिगोत्राणामपि विधानापत्तेः

दर्शपूर्णमासयाजिनामारण्यभोजनादिना सह वैकल्पिकं
विधीयतइति पक्षान्तरमुक्त्वा तस्मादारण्यमेवाश्नीया-
न्तरैकवाक्यत्वेनारण्याश्नस्य प्रशस्ततरत्वद्योतनार्थं जर्त्ति-
वन्निन्ध्यानामपि माषाणां स्तुतिरिति सिद्धान्तयिष्यते।
हरणे ऽपि गृहपतेरेवाग्निषु निर्मन्थ्य निर्वपरन्निति वि-
श्यत्वेन निर्म्मन्थिताग्निसंसर्गस्तुत्यर्थमुल्मुकसंसर्गे नि-
निन्दाकल्पनिषेधबलेन प्रापकाविधिकल्पनं पूर्वमहर्ष्या-
वा पृथग्विधिकल्पनं युक्तमिति सिद्धान्तः करिष्यते ।
। श्रेष्ठस्तत्तदेवेतरो जन इति न्यायात् । पूर्वाचरितोपन्या-
कल्पनमित्येवंविधपूर्वपक्षसाम्यमात्रेणानयोरुदाहरणयोः
तु पुराकल्पोदाहरणे कृत्वा चिन्ता का चिदस्ति तस्मा-
ाकल्पयोर्मध्ये एकस्मिन्परकृत्युदाहरणे कृत्वा चिन्तेति
ाप्तमी व्याख्येया । अर्थैकत्वजर्तिलाधिकरणयोः कथं निवे-
ह * एवमिति * सापि कृत्वा चिन्तेत्यर्थः । चिन्तान्तरस्य
: कृत्वा चिन्तानुपपत्तिमाशङ्क्याहबाधप्रसङ्गेनेत्युक्तम् । य-
चिन्तान्तरं न कृतं तथापि सा मोहोपोद्घातप्रसक्तानुप्र-
त्वा स्तुवतइति विधिरर्थवादो वेति चिन्तायाः करिष्यमा-
योगितया विधिपक्षे किमतिदेशप्राप्तस्तुतिसाधनसामा-
धेनैकगाधारत्वं विधीयते उताप्रगीतगेकत्वम् । तत्र पूर्व-
युत्पन्नस्य साम्न उत्तरयोरगानादूहाप्राप्तेरितरस्मिन् पक्षे
ाश्रितत्वाबाधादूहोपपत्तेरिति चिन्तान्तरं कल्प्यं जर्त्तिल-
ा बाधप्रसङ्गेन करिष्यमाणत्वादथो खल्वाहुरनाहुतिर्वै
गवीधुकाश्चेति अस्य निषेधार्थत्वे ऽपि किं जर्त्तिलगवीधुका-
ात्वद्योतनार्थो ऽयं निषेधो विकल्पार्थो वेति चिन्तातरम् ।
ाघपक्षे बाधानापादकत्वाद्विकल्पपक्षे तदापादकत्वात्क-
भावः । कृत्वा चिन्तात्वाभावे ऽपि चौदुम्बराधिकरणव्यु-
यर्थवादत्वमुदाहरणविशेषेष्वाक्षिप्य समाधानाय सा चि-
ःथो व्याख्येयः । अस्मिन् व्याख्याने षष्ठस्यापि पुराकल्पो-
ाषयस्य विचारस्यानेनैव न्यायेन कृत्वा चिन्तात्वाभावे ऽपि
परिहृतं भवति । एवं शब्दश्च यथाधिकारप्रसङ्गेन षष्ठ-
ता एवमेषापीत्येवञ्ज्ञेया ॥ तत्सिद्धिसूत्रस्याप्यपौनरुक्त्यमाह ।
सूत्रे त्विति मीमांसाप्रक्रियामात्रेण विध्यर्थवादचिन्तेति भा-
वेधिसरूपाणामौन्दुबराधिकरणेनैवार्थवादत्वसिद्धौ पुराक-
हरणेषु कृत्वाचिन्तानुपन्यासादाक्षेपहेतुत्वाभावाच्च पौनरु-

त्या परिहारेण परिहारितोषात्प्रकारान्तरमाह * अथ वेति * पृथक्
फलपदसद्भावे ऽपि फलविधौ निराकृते तदभावे फलविध्याशङ्काय
दूरनिरस्तत्वेनात्रापि अपरितोषाच्चतुर्थं प्रकारमाह * अथ वेति *
परार्थनिर्ज्ञाने कारणमाह * अत्र हीति * स्वातन्त्र्येणेति जुहूसबन्ध
नैरपेक्ष्येणेत्यर्थः । एतदेवोपपादयितुं सामान्यन्यायान्तावदाह * स
र्वत्र हीति * प्रकृते योजयति * तदिहेति * किं सम्बध्यतामित्यनार
भ्याधीतत्वेन पर्णमयीत्वस्य प्रकृताश्रयालाभादिति भावः। वाक्येना
श्रयदानमाशङ्क्य निरस्यति * जुह्वारिति * अभ्युपगम्यापि जुहूसंब
न्धं नैराकाङ्क्ष्यन्नास्तीत्याह * सापि चेति * अतः फले पर्णमयी
त्वविध्ययोगाज्जुह्वर्थत्वेन सिद्धो विधिरित्युपसंहरति * तस्मादि
ति * पर्णमयीत्वेन जुहूं भावयेदिति वचनव्यक्तिरितरशब्देनोक्ता
जुह्वनुवादेन पर्णमयीत्वस्य विधौ सिद्धे यथापारार्थ्यनिर्ज्ञातं भवि
तथा दर्शयति । तत्र चेति । एवं निर्ज्ञातपारार्थ्यस्यापि पर्णमयी
त्वस्यापापश्लोकश्रवणात्मकफलश्रुतेः फलार्थतापि दध्यादिवदस्त्वि
पर्णमय्यधिकरणे पूर्वपक्षं कृत्वा सकृच्छ्रुताया पर्णत्वजातेर्जुह्वङ्गत्वे
निराकाङ्क्षी कृताया द्व्यर्थत्वायोगात्फलश्रुतिरर्थवादमात्रमिति सि
द्धान्तः करिष्यतइत्याह * ततश्चेति * औदुम्बरत्वस्य तु सौम
पौष्णं त्रैतमालभेत पशुकाम इति विकृतपशुप्रकरणे श्रुतस्यातिदेश
प्राप्तनिर्ज्ञातजातिविशेषयूपार्थत्वेन विध्ययोगात्पारार्थ्यानवगतेः पर्ण
मय्यधिकरणविषयत्वन्नास्तीत्याह * इह पुनरिति * एतदेव प्र
श्नपूर्वकमुपपादयति * कथमिति * नन्वाश्रयालाभात्कथमस्य प
लविधिराशङ्क्यते ऽत आह * यापि चेति * प्रकृतावग्नीषोमी
पशुनियोजनाख्यकर्मसंबन्धितया विहितस्य यूपस्यात्र चोदकप्रा
स्यौदुम्बरजात्याश्रयत्वेन ग्रहणादित्यर्थः । कर्मसंबन्धाभिधानत्वम
श्रययोग्यताप्रदर्शनार्थमतः सिद्धं पर्णमय्यधिकरणेनापौनरुक्त्यमौ
म्बराधिकरणस्येत्याह * तेनेति * कः पुनरेतेषां चतुर्णां पौनरुक्त
परिहारप्रकाराणां मध्ये अभिमत इत्यपेक्षिते प्रथमोपन्यस्तस्यैकस्
न्यायस्य क्व चित्काश्चिदंशः शोध्यतइत्यस्यैवाभिमतत्वमाह * इदा
ति * न विद्यते परमुत्कृष्टमस्मादित्यर्थः । उदुम्बरत्वजातेरपि
कृताश्रयत्वालाभाच्चोदकप्राप्तस्य निर्ज्ञातसाधनत्वेन नैराकाङ्क्ष्यात
र्थविहितसाधनान्तराग्राहकत्वाद् गुणफलसंबन्धायोगेनौदुम्बरत्वं
यूपं भावयेदितिवचनव्यक्त्याश्रयणात्पारार्थ्यावगतेः पर्णमयीन्या
विषयत्वाच्चतुर्थो ऽपि प्रकारो न युक्त इति भावः । किं तदित्य
क्षिते विवेचयितुमारभते * औदुम्बरवाक्यमिति * उदाहरणा

कथमपौनरुक्त्यमित्यपेक्षिते प्रश्नपूर्वकं परिहरति * कथमिति *
नु साध्यसाधनांशयोरन्योन्याविनाभावादेकसिद्ध्यैवेतरासिद्धेरंशद्वय-
विचारो ऽनर्थको ऽत आह * साध्येति * अस्यार्थस्य सार्वत्रिक-
वसूचनार्थस्तावच्छब्दः सर्वत्रैव तावदेवमित्यर्थः कः पुनरंशः क्व
चेचार्यतइत्यपेक्षायामाह * तत्रेति * ननु यदि द्वयोर्योग्यपदोपादानं
वेना साध्यसाधनसंबन्धो न युज्यते तर्ह्येकनिराकरणेनैवेतरानिरा-
करणासिद्धेरंशद्वयनिराकरणमनर्थकमत आह * यत्रेति * अनि-
राकृतो ऽशो ऽप्रतिषिद्धमनुमतं भवतीत्यनेन न्यायेनाङ्गीकृतः स्यादिति
यवतिशब्देनोक्तं, तेनायमर्थः यत्साध्यं साधनं वा यदात्मना साध्य-
त्वेन साधनत्वेन वा निराकरणाभावात्प्रतिपादितं भवति तत्पदान्त-
रणादिशब्दोपात्तेन सामर्थ्येन वोपात्तेन प्रतियोगिविशेषेण साधनेन
साध्येन वा संबध्यतइति । एतदेव विभज्य कथयति * तत्रेति *
औदुम्बराधिकरणे हि ऊर्गवरोधापापश्लोकश्रवणाद्यनिराकृतत्वा-
साध्यमित्यवधृते तत्सन्निधौ श्रुतमौदुम्बरपर्णतादिश्रुतशब्दाङ्गयो-
ग्यत्वे ऽपि अर्थापत्त्या योग्यशब्दान्तरकल्पनया साधनं गम्यते एवं
पर्णमय्यधिकरणे निराकरणाभावादुदुम्बरपर्णतादिसाधनावधारणे
ऽपि तत्साध्यं गम्यत इति शेषः । एतदेवोपसंहरति * इति द्वाव-
शेति * साधनस्य विधिविषयत्वं स्वरूपं साध्यस्य च कर्मपदोपा-
त्तत्वमिति द्वयोरपि साध्यसाधनांशयोः स्वरूपान्निरूपयितव्यमित्य-
र्थः । नन्वस्याधिकरणस्य साधनांशमात्रनिराकरणार्थत्वे विधौ वा-
क्यभेदः स्यादिति साध्यांशनिराकरणं पर्णमय्यधिकरणस्य च सा-
ध्यांशमात्रनिराकरणार्थत्वे सत्युत्पत्तेश्चातत्प्रधानत्वादिति साधनां-
शनिराकरणमयुक्तं स्यादत आह * तदिहेति * भिन्नांशविषयत्वेन
पौनरुक्त्ये परिहृते प्रकरणसङ्गतिमाक्षिपति * नन्विति * हेत्वधि-
करणे ऽर्थवादविचारादसमाप्तमर्थवादाधिकरणं, न चास्य विचारस्य
विध्यभावे श्रेयः साधनत्वबोधः सम्भवति उत नेत्येवं रूपत्वात्तेन
सङ्गतिर्युक्तेत्यर्थः । अर्थवादाधिकरणेनेत्यधिकरणशब्देनाधिकारः
प्रस्तावः प्रकरणमुक्तं विधिशेषत्वेनार्थवादानां धर्मप्रमोपयोगे प्रति-
पादिते विध्यभावे ऽपि श्रेयः साधनत्वबोधसम्भवाद्विधेरेव धर्मोप-
योगित्वाभावात्कथं तद्द्वारेणार्थवादायामुपयोगितेत्यर्थवादाधिकर-
णसिद्धान्ताक्षेपेणैतदधिकरणपूर्वपक्षोत्थानाद्विध्युद्देशचिन्तात्वे ऽपि
तत्सङ्गत्युपपत्तिः । यद्वार्थवादानां धर्मप्रयोगे प्रतिपादिते को ऽर्थ-
वादः को वा नेति कोष्ठशोधनिकार्थत्वेनाधिकरणद्वयस्यार्थवादाधि-

१ अर्थवादाधिकरणेन सङ्गतिर्न युक्तेत्यन्वयः ।

करणशेषत्वाभ्युपगमाद्विध्युद्देशचिन्तात्वे ऽपि तदसम्भवाशङ्केयम् । अधिकरणद्वयेन सर्वार्थवादाव्याप्तेः कथं कोष्ठशोधनिकेति चेदुच्यते आद्ये विध्येकवाक्यत्वेन स्तुत्यर्थत्वे ऽभिहिते सिद्धैकान्तिकाविध्येकवाक्यत्वानामपि येषां साध्यसाधनांशाभिधानाद्विध्युद्देशान्तर्गतिराभाति तेषां तन्निराकरणेन स्तुत्यर्थतेह स्थाप्यते, हेत्वधिकरणे ऽपि अन्वयवाक्यकल्पनेन द्रव्यादिसाधनांशाभिधानाद्विध्युद्देशान्तर्गत्याशङ्कैव निराक्रियते पृथग्विधित्वाशङ्कानिराकरणमधिकरणान्तरेषु भविष्यति तस्मादधिकरणान्तरानिराकृतपृथग्विधित्वाशङ्कानां सम्भवद्विध्येकवाक्यत्वानामसम्भवद्विध्युद्देशान्तर्गतानां सर्वेषामर्थवादत्वमिहैव स्थापितं भवति प्रकृतार्थवादत्वसिद्ध्यर्थत्वाद्विध्युद्देशचिन्ताऽत्र नासङ्गतेति परिहरति * नैष इति * विध्युद्देशचिन्तावशेन प्रकृतार्थवादस्वरूपार्थपरिच्छेदादित्यर्थः । एतदेव विवृणोति * यदि हीति * साधनांशो विचार्यमाणइत्यत्र प्रकृतः साधनांशोऽसाविति सर्वनाम्ना परामृश्यते एतदधिकरणपूर्वपक्षे च विध्युपयोगानभ्युपगमात्[2] अज्ञातज्ञापनाभिप्रायं विधीयमानतयेति व्याख्येयं तेन यद्यसौ साधनांशो ऽज्ञातज्ञाप्यतया ऽपूर्वेण साधनांशप्रतिपादकेनौदुम्बरो यूपो भवतीत्यनेन वाक्यभागेनावगतस्ततो ऽपेक्षावशेनोर्जो ऽवरुध्याइत्यस्य फलसमर्पकत्वान्नार्थवादत्वमित्यर्थः । पूर्वपक्षमाह * तत्रेति * ननूर्जो ऽवरुध्याइति तादर्थ्यचतुर्थ्या साध्यावगमे ऽप्यपापश्लोकश्रवणादेः साध्यत्वावगमाभावादुर्जो ऽवरुध्याइत्यस्यापि च तैत्तिरीयादिशाखास्वश्रवणात्कथं साध्यसन्निधानइत्युक्तम् । उच्यते औदुम्बरत्वादेः प्राप्तयभावाद्विध्येकवाक्यत्वं च विनार्थवादत्वायोगादर्थवादाच्च विधिकल्पने ऽन्योन्याश्रयत्वापत्तेरवश्यविधेयत्वाद्विधेश्च भावनैकगोचरत्वाद्यूपादेश्चौदुम्बरत्वादिभवनस्य पुंव्यापाराधीनत्वात्पुंव्यापाराधीनकर्त्तव्यत्वप्रतिपादकपदकल्पनेन भवतिशब्दस्यैव वान्तर्नीतप्रयोजकव्यापारवचनस्य पञ्चमलकारकल्पनेन भावनाविधिप्रतीतेः । भावनायाश्च भाव्यनिष्ठत्वाद्योग्यत्वेनोर्गवरोधापापश्लोकश्रवणादेः साध्यत्वावगतेः साध्यसन्निधानाभिधानं विध्यभावाभिधानं[3] चौदुम्बरत्वाद्युत्पत्तिविधानार्थं कल्पितस्य प्रत्ययस्यान्यत्र व्यापारासम्भवेन साधनत्वबोधकारणत्वाभावाभिप्रायं, ननु तृतीयां विना ऽपि योगस्य विधिसामर्थ्यात्साधनत्वं युक्तम् । इह तु

१ एकान्तविध्येकेति २ पु० पा०

२ उत्पत्तिविध्युपयोगानभ्युपगमादित्यर्थः ।

३ तादूप्येणानुपात्तमित्यनार्धाविध्यभावाभिधानम् ।

दश्रवणात् उत्पत्तिसिद्ध्यर्थश्च कल्पितस्य विधेरन्यत्राव्यापारात्कथं
।धनत्वावगतिरत आह * तत्रेति * समभिव्याहारमात्रेण सा-
।साधनसंबन्धावगतिसम्भवान्न विधिना कश्चिदुपयोग इति भावः
मभिव्याहारमात्रात्साधनत्वावगमेऽपि पुरुषप्रवृत्तिसिद्ध्यर्थं वि-
पेक्षा भविष्यतीत्याशङ्कते * पुरुषमिति * साधनत्वावगतौ स-
मिच्छयैव प्रवृत्तिसिद्धेस्तदर्थमपि न विध्यपेक्षेति परिहरति * स
ते * यद्वा यूपानुवादेन विधीयमानस्यौदुम्बरत्वस्य यूपद्वारेण
वर्थत्वावगमात्तत्प्रयोगवचनेनैवानुष्ठानसिद्धेर्न तदर्थमिह विध्य-
त्याह * अथ वेति * क्रत्वर्थस्यापि समभिव्याहारावगतं फला-
त्रमपि दध्यादिवदविरुद्धमिति भावः । उत्पत्तिविधिरेव वागत्या
ज्ञापको भविष्यतीत्याह * पञ्चमी वेति * अर्थवादाद्वा प्रवृत्ति-
द्धेर्न तदर्थं विध्यपेक्षेत्याह * अर्थवादेति * ऊर्जोऽवरुद्ध्याइ-
य पूर्वपक्षे विध्युद्देशान्तर्गत्यभ्युपगमात्सिद्धान्ताभिप्रायेणैकदेश-
णं विधिनिरपेक्षस्यार्थवादस्य प्रवर्त्तकत्वानुपपत्तिमाशङ्क्य प्रत्य-
वातिवादिमतेनैतदुक्तमिति दर्शयितुमुक्तमेवेत्युक्तं सूत्रं व्याख्याय
त्रेवन्निगदेष्वित्यादिभाष्यं तात्पर्यतो व्याचष्टे * तस्मादिति *
ाद्विध्यभावेऽपि समभिव्याहारमात्रेण साध्यसाधनसंबन्धबो-
सम्भवति तस्मात्तस्मिन् फले औदुम्बरतायाः साधनतया विधि-
ज्ञापनमित्यर्थः । प्रायेणैवक्रमशब्देन फलसमर्पणादपि चेत्यादि-
ोक्तं चतुर्थ्या फलसमर्पणमयुक्तमाशङ्क्योर्जोऽरुध्याइत्याद्युक्तं
वधिरित्यत्र विधिशब्दस्य शौण्डादिष्वपाठात्सप्तमीसमासानु-
: षष्ठीसमास एवायं स्यादित्याशङ्क्याह * नन्विति * विवक्षि-
ठाभायान्यथापि कल्पनं युक्तमिति भावः । भावार्थाधिकरणे फ-
यानिषेधात् भावस्य भावनाख्यस्यार्थः प्रयोजनं फलं विधेयं न
त्र ।चन्त्यते लिप्सासूत्रस्याद्यवर्णकतद्भावार्थाधिकरणमिहो-
। नन्वस्य फलपरत्वे स्तुत्यभावाद्विधिरवसीदेदत आह * ऊ-
ार इति * पूर्वाधिकरणे लाक्षणिकस्तुत्युपयोगाभिधानादि-
क्याभिधानमयुक्तमाशङ्क्याह * तस्मादिति * साध्यसाध-
प्रतिपादनस्य प्रवृत्तिविशेषकरत्वेनार्थवत्तरत्वात्तदपेक्षया स्तु-
क्यमिति भावः । यस्मादुक्तप्रकारेणौदुम्बरतायाः फले वि-
म्भवति तस्मादित्यर्थः । अनेन च वादमात्रं ह्यनर्थकमित्यस्य
ादस्य निष्प्रयोजनत्वाभिधानप्रतिपादनपरत्वप्रतिपादनार्थमि-
ं भाष्यं मुख्यार्थरहितत्वप्रतिपादनार्थं च न चेति भाष्यं त-
याख्यातम् ।

## लोकवदिति चेत् ॥ २० ॥

लौकिकस्यापि स्तुतिमात्रस्यानर्थक्यात्साध्यविकलत्वमाशङ्क्याह * लोके तावदिति * क्रेतव्येति भाष्यं व्याचष्टे * तत्र चेति * अस्यापि फलपरत्वाद्दृष्टान्तत्वमाशङ्क्याह * न चेति * तद्वदिति भाष्यं व्याचष्टे *एवमिति* लक्षणादोषं परिहरति *श्रुतीति*

## न पर्वत्वात् ॥ २१ ॥

* नैतदेवेति * भाष्यं व्याचष्टे * नायमिति * लोके इति भाष्यं व्याचष्टे * स्तुतेरिति * अविदित इति भाष्यं द्वेधा व्याचष्टे * वेदे त्विति * पूर्ववचनाद्धिवेति भाष्यं पूर्ववदेव द्वेधा व्याचष्टे * पूर्वेति * विदितत्वादेवेति भाष्यं व्याचष्टे * न चेति * वैदिकेष्विति भाष्यं जाताशङ्कत्वं द्विधोपपादयन् व्याचष्टे * वेदे त्विति * । लौकिकी स्तुतिर्विरुद्धा प्रमाणान्तरेणास्याविदितपूर्वत्वादिति वैदिक्याः स्तुतेः दार्ष्टान्तिकत्वनिराकरणपरतया सूत्रव्याख्यानार्थमपि गति भाष्यं व्याचष्टे * अपि चेति * अधर्मशब्दवद्विरुद्धवचनेनासंवादशब्देन विसंवादोऽभिप्रेतः। विसंवादोपपादनार्थमूर्जोऽवरुध्या इति भाष्यं व्याचष्टे * वर्त्तमानेनेति * स्तुतौ स्वार्थसत्यत्वानादरत्वस्योक्तत्वाद्विसंवादेऽपि स्तुतिनिर्वाहमाशङ्क्य विदितत्वादित्येद्भाष्योक्तलौकिकस्तुतिविषयस्वार्थसत्यत्वादरन्यायेनात्रापि पूर्वप। स्थित्वा तदादरमाह * तत्रेति * ऊर्गुदुम्बर इति भाष्यं व्याचष्टे : स्वरूपत इति * ऊर्क्शब्दाभिधेयमन्त्रत्वं भवत्पक्षे पक्षधर्मत्वेनासिद्धम्। तस्य चाप्रसिद्ध्या यूपप्रकृतित्वेनौदुम्बरो यूपो भवतीत्यसिद्धम्। अन्वयाप्रसिद्धिमेवोपपादयति * न हीति * पक्षधर्मत्वचितहेतुत्वान्यथानुपपत्तिकल्पितं यद्यदन्नं स स यूप इत्यन्वयाक्यमङ्गीकृत्यैतदुक्तं हेतुत्वाप्रसिद्ध्या साध्याप्रसिद्धिप्रतिपादनार्थं तनादिति भाष्यमूर्गुदुम्बर इत्यनृतवचनादन्यदप्यस्य यत्साध्यं यस्मागुदुम्बरस्तस्मात्तन्मयो यूपः कर्त्तव्य इति तदप्यनृतमिति सुयोजान्न व्याख्यातं।विसंवादाभिधानस्य प्रकृतोपयोगमाह*तस्मादिति*

## उक्तं तु वाक्यशेषत्वम् ॥ २२ ॥

अत्र भाष्यकृता वाक्यशेषत्वे विध्येकवाक्यत्वं हेतुमनुवदता शब्दः स्तुतिद्वाराङ्गत्वाभिप्रायो व्याख्यातस्तत्रोर्जं पशूनाप्नोतीतदन्तेन स्तुतिसिद्धेरूर्जोऽवरुद्ध्या इत्यस्य फलपरत्वमविरुद्धमित्याशङ्क्याह * ऊर्गुदुम्बर इति * उभयसम्भवे तर्हि फलपरतैव क-

स्मान्नेष्यते ऽत आह * तत्रेति * यद्यप्यौदुम्बरो यूपो भ
लिङादिः स्यात्तथाप्यूर्गुदुम्बर इत्यादि कृत्स्नवाक्यशेषमर्थवा
गृह्णीयान्न फलपरतयेति सावधारणं द्रष्टव्यं लिङादेर्विधायक
र्थवादापेक्षत्वात्सुतरामित्युक्तं फलाकाङ्क्षानिवृत्तिस्तु प्रकरणा
त्वर्थत्वावगतेः सेत्स्यतीति वक्ष्यमाणो ऽभिप्रायः। भवतीति तु
मानापदेशो न फलपरतया वाक्यशेषं ग्रहीतुं शक्त इत्याह *
तेति * विपूर्वस्य दधातेः करोत्यर्थवाचित्वादुत्पादनं विधिश
भिप्रेतं तेनायमर्थः। न तावद्यावच्छ्रुतस्य भवतीतिवर्त्तमाना
स्य फलाकाङ्क्षा तदन्यथानुपपत्त्या कल्पिते भावनाविधौ सत्य
फलाकाङ्क्षायामौदुम्बरत्वस्वरूपोत्पादनार्थं कल्पितस्य लिङादे
न्मात्रोपरमान्न साधनत्वबोधे व्यापारो ऽस्तीति। नन्वौदुम्बरत्व
व्यतार्थं कल्पितस्य विधेः फलपर्यन्तत्वानभ्युपगमे फलाभाव
स्वादः स्यादत आह * प्रकरणाच्चेति * वैकृतस्याप्यौन्दुम्बरत्वस
कृतयूपाख्याङ्गसम्बन्धित्वेनोत्पत्तेः पृषदाज्यादिवत्प्रकरणग्रहण
रोधः, विधिरहितस्य समभिव्याहारमात्रस्य फलप्रतिपादकत्व
ङ्क्षावाचकादित्युक्तम्। अवाचकमितिपाठे नास्तिवाचकं यस्यो
धादिनः फलस्य तदिति बहुव्रीहिः। समभिव्याहारात्मना वा
फलार्थत्वावगमात् प्रकरणबाधमाशङ्कते * प्रकरणमिति * स
व्याहारावगतस्य फलार्थत्वस्य वक्ष्यमाणनिराकरणाभिप्रायेण प
राति * नेति * अबाधमेवोपसंहरति * तस्मादिति * कृत्स्न
वाक्यशेषस्य फलपरत्वे विध्युद्देशस्यैव शक्तिद्वयकल्पनापत्ते
स्यादित्यर्थान्तरन्यासेमाह * प्ररोचनापि चेति * न च तत्क
विना विधिपर्यवसानमित्याह * अन्यत्रेति * अत्र तु प्ररोचनाव
नमप्यतिक्लेशेन निर्वोढव्यं विधेरपि कल्प्यत्वादित्याह* इह त्वि
विध्युद्देशातिगौरवपरिहारार्थं तर्हि प्ररोचनापि वाक्यशेषादेव
विष्यतीत्याशङ्क्य तन्निराकरणार्थं पर्णमय्यधिकरणन्यायमुपन्य
* न चेति * अस्तिप्रयोजनसिद्धिरित्यनेन पारार्थ्यं दर्शितं का
शेषपरिच्छेदकत्वेन चौदुम्बरजातेर्लिङादपि पारार्थ्यमवसीय
त्याह * जातिविशेषस्येति * ऐकान्तिककाष्ठाङ्गतया ऽक्रियारूप
फलार्थत्वयोग्यता निराकृता सत्यपि काष्ठाङ्गत्वे यूपाङ्गत्वं कथं सि
तीत्यपेक्षायां यूपशब्दो ऽपि चेत्याद्युक्तं पारार्थ्यसाधनस्योपयोग
*अतश्चेति*यत्तु पौनरुक्त्यपरिहारावसरे पारार्थ्याभावार्थं प्राकृत
द्विरादित्वालाभान्नैराकाङ्क्ष्यमुक्तं तदनुभाष्य दूषयति*यत्त्विति*
श्येने यस्य शरमयं बर्हिरिति प्रत्यक्षोपदिष्टैः शरैरतिदेशप्राप्तानां कुश

बाधस्तद्वदत्रापीत्यर्थः । बाधप्रसङ्ग एव तर्हि दोषो ऽत आह
* न चेति * वरं क्रत्वर्थत्वे समानविषयत्वाद् बाधो युक्ततर इत्याह
* एतावांस्त्विति * प्रकृताश्रयालाभादप्यत्र गुणफलसम्बन्धो न
युक्त इत्याह * न चात्रेति * तमेवोपपादयति * यो हीति * पशु-
विशेषणयागस्य सौमा पौष्णं त्रैतमालभतेति त्रिवर्णपशुद्रव्यकत्वेनौ-
दुम्बरवृक्षद्रव्यसाध्यत्वायोग्यतोपपादनार्थम् । न चाप्रकृतस्यापि नि-
योजनस्यातिदेशप्राप्तस्याश्रयत्वं शङ्कनीयं, प्रकृतौ हि प्रत्यक्षोपदिष्टस्य
होमप्रणयनादेः पश्वाशाधनापेक्षायां पयश्चमसादिवत्फलार्थस्यापि
विधिगोदोहनादेराश्रयभूतसाध्यापेक्षादर्शनादुभयाकाङ्क्षावशात्साध-
नत्वमवसीयते । न चैतावताङ्गत्वप्रसङ्गः तादर्थ्येन विधानाभावात्
अत एव गुणकामप्रयोगे प्रासङ्गिकोपकारिणा गोदोहनादिना सि-
द्धौ चमसादेरनङ्गत्वेन तदभावे वैगुण्याभावादनादरः विकृतौ
अवखण्डकरणोपकारमुखेन क्लृप्तोपकारप्राकृतखादिरत्वादिविशिष्ट-
स्यैव नियोजनस्यातिदेशात्साधनानाकाङ्क्षस्य परार्थे विहितसाध-
नान्तरग्राहकत्वञ्च युक्तम् । अन्यतराकाङ्क्षाहेतुकस्य संबन्धस्ये-
तराकाङ्क्षोत्थापनपूर्वकत्वाद्विधिमन्तरेणाकाङ्क्षोत्थापनायोगात् ।
ननु प्रकृतः पशुयागः साक्षादयोग्यो ऽप्यङ्गभूतयूपद्वारेणाश्रयो भ-
विष्यत्यत आह * न चेति * एवं कल्प्यतइति प्रधानादवतीर्य
तदङ्गाश्रयत्वेन कल्प्यतइत्यर्थः । वचनव्यक्त्यन्तरमित्यौदुम्बरत्वे-
नोर्गवरोधं भावयेदितिवचनव्यक्त्यपेक्षयौदुम्बरत्वेन यूपं भावयेदि-
त्यभिप्रेतम् । न चावतरणमित्यचोदकाश्च संस्कारा इति वक्तुशब्दार्थे
शब्दः न त्ववतरणं सम्भवतीत्यर्थः । यद्वा तेनाभ्युपगम्यावतरणं
होमसाधनत्वेन साक्षादङ्गभूतायां जुह्वां सम्भवाद्यूपे न सम्भवती-
त्युच्यते । अस्मिन्व्याख्याने सम्मतं यूपे यदवतरणं तन्न सम्भवति
न सिध्यतीति सम्मतवचनः सम्भवशब्दः । अनेकार्थत्वान्निपात-
योपसर्गाणां सम्यगर्थस्य वा संशब्दस्य लक्षणयात्र सम्मतवचनत्व-
मुक्तं यूपानवतरणे च यूपशब्दानर्थक्यप्रसङ्गो दोषः । ननु प्रकृता-
श्रयालाभे ऽपि वाक्येनाश्रयलाभो भविष्यत्यत आह * न चानेनै-
वेति * न केवलमनेकार्थविधिलक्षणो वाक्यभेदः किं तु वैरूप्यल-
क्षणो ऽपीत्याह * युगपच्चेति * यूपस्याश्रयभूतस्यौदुम्बरतोपका-
रत्वेन गुणभूततयोपादेयत्वात्तं प्रत्युदुम्बरताया उद्देश्यत्वादिति
भावः । नन्वाश्रयस्यापि साध्यत्वेन प्रधानतयोद्देश्यत्वाद्वैरूप्यं स्या-
दत आह * अथेति * एवं सत्युद्देश्ययोः फलयूपयोर्गुणभूतौदुम्ब-
रावशीकाराभावेनान्योन्यनियमायोगादाश्रयालाभस्तदवस्थ एवेति

भावः । प्रत्युद्देश्यं वाक्यसमासैर्वाक्यभेदो ऽपि च
एवं पर्णमयीन्यायेन स्तुत्युपयुक्तस्य परावृत्त्य फलपर
म्बर इत्यादेः फलपरत्वे प्ररोचनार्थत्वाभावाद्विध्युद्देशा
हार्यमिति प्रकृतोपयोगः। ननु समभिव्याहारादेव फल
तौ सत्यां विधिमन्तरेणेच्छयैव प्रवृत्तेर्न प्ररोचनया
* यत्त्विति * साधनत्वप्रतिपत्तौ विधिव्यापारानभ्यु
या भाव्यापेक्षायामप्यौदुम्बरो भवतीत्यादुम्बरत्वस्यैव
सन्निधावुपात्तस्य साध्यांशे निवेशापत्तेरूर्ज्जो ऽवरुध्या इ
वधावुपात्तस्याप्यूर्गवरोधस्य तदवरुद्धायां भावनायां
यूपविशेषणत्वापत्तेरपुरुषार्थौपयिकत्वान्नौदुम्बरत्वभा
पूर्वकारी कश्चित्प्रवर्त्ततेत्यर्थः । नन्वौदुम्बरो यूपो भ
विधेः फलसाधनत्वबोधे व्यापाराभावादप्रवर्त्तकत्वे
चनात्प्रवृत्तिः सेत्स्यतीत्युक्तमत आह * यत्त्विति *
भावात्पुरुषार्थत्वे सति क्रत्वर्थत्वायोगादिति भावः। प
स्य चाडागमादिचिह्नाभावेनानिश्चयात्कल्प्यस्योत्पत्तिवि
त्प्रयोगे ऽपि व्यापारो न युक्त इत्याह * पञ्चमेति *
स्यालम्बनं दर्शयन् सिद्धान्तमुपसंहरति * तस्मादिति
करणव्युत्पाद्यं विधिरहितस्य श्रेयःसाधनत्वबोधास
च्छब्देन परामृष्टं फलाभावसूत्रोक्तानुपलब्धिविरोधो
भिधायित्वादित्यनेन । चतुर्थे चेति प्रस्तुतसाधनांश
तुत्वेन साध्यांशनिराकरणं वक्ष्यमाणमुक्तं सर्वेभ्यो
वित्यादौ चतुर्थ्या फलसमर्पकत्वाभ्युपगमात्समभिव्याह
लसमर्पकत्वनिराकरणपरमेवं कामशब्दरहितस्येति
प्रधानफलमेवेदमित्यनेन फलकीर्त्तनालम्बनं दर्शितम् ।
त्रैतमालभेत पशुकाम इति पशूनामदनीयत्वेनोर्क्शब्दवा
प्रधानफलत्वादङ्गे पूर्णाहुतिवदुपचारः । न पूर्वत्वादिति
थवर्णकोक्तस्य विसम्वादस्यानुभाषणं पूर्वं निराकरणा
त्यादिभाष्यं व्याचष्टे * सर्वत्र चेति । गुणवादेनेति
फलसङ्कीर्त्तने सम्वादाभिधाने तावदङ्गे प्रधानगामिनि
चारो ऽभिमतः सम्पूर्णाहुतिन्यायेनोक्तप्रायत्वान्नेह भा
पक्षधर्म्मतान्वयकीर्त्तनसम्वादाभिधाने त्वग्निमाणवकव
णशब्देनाभिप्रेतम् । तत्र किं सादृश्यमित्यादिप्रश्नपूर्वकं
तिपादनार्थं भाष्यं व्याचष्टे * साधनत्वे ऽपि चेति *
हेतुत्वमुक्तम् । अत्रगतेन प्रीतिसाधनत्वेन तद्विशेषतृ

था गुणेनोदुम्बरे ऽन्नशब्दाभिधेयत्वसम्भवात्साधने ऽपि सम्वाद इत्यर्थः। प्रीतिसाधनत्वमप्यौदुम्बरवृक्षस्याभक्ष्यत्वान्नास्तीत्याशङ्क्य प्रीतिसाधनौदुम्बरफलोत्पादनशक्तियुक्तं वृक्षं प्रशंसितुमुपचारात्प्रशंसावाचिना प्रीतिसाधनशब्देनोच्यते इत्युक्तम्। अनेन च नात्र यद्यदन्नं स स यूप इत्यन्वयवाक्यं कल्प्यते किं तु यद्यदन्नं तत्तत्प्रशस्तमित्येवं तच्च प्रसिद्धमेवेति सूचितम्।

विधिश्चानर्थकः क्व चित्तस्मात्स्तुतिः प्रतीयेत
तत्सामान्यादितरेषु तथात्वम्॥ २३॥

अत्र भाष्यकृताप्सु योनिर्वा अश्व इत्यादीनामानर्थक्यापत्तेर्विधित्वं न सम्भवतीत्युक्तम्। तदयुक्तम्। फलविधिसरूपाणामेव पूर्वपक्षिणा विधित्वस्योक्तत्वादित्याशङ्क्याह * यदि चेति * विध्यन्तरैकवाक्यभूतानामपि विधिपरत्वाङ्गीकारे तुल्यन्यायात्सर्वत्राप्यापाद्य दूषणमुच्यतइत्यर्थः। सर्वग्रहणं वायुर्क्षेपिष्ठादीनामपि तर्हि कस्मान्न विधित्वमापद्यत इत्याशङ्कानिवृत्त्यर्थं क्व चिद्ग्रहणं तर्हि सूत्रे किमत आह * तत्रेति। क्व चिदिति * निवीतं मनुष्याणामित्यादय इत्यर्थः। शमयित्रीभिरित्यादिभाष्यं स्तुतिस्वरूपप्रदर्शनार्थत्वेन व्याचष्टे * कीदृशीति * आक्षिपति * तत्रेति * अग्रन्थः प्रतिभातीति मत्वा समर्थयन्तइत्यर्थः। अग्रन्थत्वमेव वा समर्थयन्तइति। स्वयं समर्थयते * तत्र त्वियमिति * पूर्वव्याख्यायां व्याख्यातॄणां समर्थनं दर्शयतीत्यवतारणीयं तत्रावकाशमयित्रीत्वानुपन्यासं तावत्प्रत्याचष्टे * वेतसेति * अश्वावकयोः सम्बन्धस्य तु भाष्यकारेणाकथितत्वादनुपन्यासो न दोषायेत्याह * न चायमिति * इह च वैतसे कटे अश्वं चिनोति अप्सु योनिर्वा अश्वो ऽप्सुजो वेतसः यं वैनं योनौ प्रतिष्ठापयतीत्यत्रावकानामद्भिः सम्बन्धाश्रवणे ऽपि वेतसशाखयावकाभिश्चाग्निं विकर्षत्यापो वै शान्ताः शान्ताभिरेवास्य शुचं शमयतीत्यत्र वेतसवत्तासामप्यद्भिः सम्बन्धस्य स्तुतिसिद्ध्यर्थं वाच्यत्वादप्सुजो वेतस इति अप्सुजत्वाभिधानमवकानामप्सुजार्थेसाहचर्यादुपलक्षणमित्याभिप्रेत्यावकाग्रहणम्। ननु वेतसग्रहणेनोपलक्षितत्वादवकानामग्निविकर्षणसाधनत्वेन विहितानां स्तुत्यर्थं भवतु नाम भाष्ये ऽद्भिः सम्बन्धकथनं शमयित्रीत्वविशेषणत्वमपां किमर्थमत आह *तावता त्विति* यद्यपि स एवैनं योनौ प्रतिष्ठापयतीत्यप्सुजे वेतसे ऽश्वचयने कृते प्रकृतिविकारयोरभेदोपचारेण वे-

तसप्रकृतिभूतास्वप्सु चयनात्स्वयोनौ प्रतिष्ठापनं कृतं भवतीति स्तुति
प्रतीयते, तथापि स्वयोनिप्रतिष्ठापनमात्रेण प्ररोचनाऽनुपपत्तेर्वे
सशाखयावकाभिश्चाग्निं विकर्षत्यापो वै शान्ताः शान्ताभिरेवास्य शु
शमयतीति वाक्यान्तरगतार्थवादाभिहितमपां शमयित्रीत्वं यजमा
धशमनसाधनत्वोपपादनार्थं भाष्यकृतोक्तम् । अवकानां त्वप्सु
वेतस इत्यनेन सहचरणलक्षणयाद्भिः सम्बन्धानभिधाने ऽपि अ
विधानादनपेक्षितस्तुत्यप्रतीतेर्वाक्यान्तरगतार्थवादेनापां शमयि
त्वे ऽभिहिते ऽप्यग्निविकर्षणसाधनत्वेन विहितयोर्वेतसावक
स्तुत्यप्रतीतेस्तत्प्रशंसोपपादनार्थमाद्भिः संबन्धो भाष्यकृता कथि
अर्थवादान्तरापेक्षाप्रवृत्तानामित्यश्वविषये ऽर्थवादान्तरस्यापेक्ष
प्रवृत्तानामिति षष्ठीसमासगर्भस्तृतीयासमासः । अवकावि
त्वर्थवादान्तरेणेति तृतीयासमासगर्भः । अर्थवादान्तरमुदाहर
* आप इति * कथमस्यार्थवादान्तरस्याप्सुयोनिर्वा अश्व इत्यने
पेक्षा कथञ्चानेनार्थवादान्तरेणाप्सुजो वेतस इत्यस्यापेक्षा इत्या
ङ्क्याह * अनेन हीति * अश्ववेतसाभिजनभूतानामपां शमयित्रीत
प्राशस्त्याभिधानेन तदभिजातयोरश्ववेतसयोः प्राशस्त्यावगमात्
दर्थमपेक्षेत्यश्वविषये अर्थः अवकाविषये त्वविधेयानामपां शम
त्रीत्वेन प्राशस्त्यमुच्यते न विधेययोर्वेतसावकयोरिति तत्प्राशस
वगमायाप्सुजत्वाभिधानापेक्षेति व्याख्येयं, कीदृशीं स्तुतिं दर्शय
त्यपेक्षायामाह * तत्रेति * कस्य चित्प्रसिद्धाप्संबन्धस्य वेत
वकस्याप्सुजो वेतस इत्यप्संबन्धमात्रकीर्त्तनादेवापो वै शान्ता इ
र्थवादप्रतिपाद्या स्तुतिः सिद्ध्यति । अन्येषां त्वप्रसिद्धाप्संब
नामश्वादीनां वस्तुतो ऽसन्नप्यप्संबन्धः प्राशस्त्यज्ञानार्थं कीर्त्ये
कीदृशं प्राशस्त्यमित्यपेक्षिते प्रसिद्धेत्याद्युक्तम् । प्रसिद्धः शान्त
सह संबन्धो यासामपां तास्तथोक्ता इति व्याख्येयम् । भाष्य
योज्यम् । अश्वस्यावकानां चेति चकारेण वेतसग्रहणम् । त
श्वविषये अश्वस्य वेतसस्य च शमयित्रीभिरद्भिशान्ताभिरेवा
शुचं शमयतीति सहयोगतृतीयान्तपदनिर्दिष्टाभिः सहसंबन्धो
शब्दनिर्दिष्टस्य यजमानस्य शुक्शब्दवाच्यं कष्टं शमयतीत्यर्थः ।
वकाविषयत्वे ऽवकानां वेतसस्य चाद्भिः संबन्ध इत्यर्थः । स्वयमुद
तेष्वर्थवादान्तरेषु स्तुतिस्वरूपमाह * एवमिति * तत्सामान्या
ति सूत्रावयवव्याख्यानार्थं तथेतिभाष्यं व्याचष्टे * इति स्तुति
इति * अनेन यावत्स्वर्थवादेषु अप्सु योन्याद्यर्थवादसमानप्रका
तावत्सु स्तुतित्वमिति व्याख्यातम् ।

## प्रकरणे च सम्भवन्नपकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥

सूत्रतात्पर्यमाह * विधिपक्षे चेति * स्वयं यथाश्रुतवचनव्यक्तिपक्षे सूत्रं योजयति * यदीति * अपकर्षणं स्यादित्यर्थकथनार्थं व्युत्पत्तिस्तु यथाभाष्यं कर्मण्येव । यद्वेयमन्यां देवतामुत्पत्तिशिष्टामपकर्षतीति कर्तृव्युत्पत्तौ ऽपकर्षशब्द इत्याह * इयं वेति * नु विदाहादेर्निमित्तकत्वेन निर्ऋत्यादेर्देवतान्तरस्य नित्याग्न्यादिदेवताबाधकत्वं युक्तमेवेत्याशङ्कानिराकरणार्थत्वेन प्रकरणे च सम्भवन्निति सूत्रावयवं व्याचष्टे *तत्रेति । अभ्युदितेष्टिवदिति * यदामावास्याभ्रान्त्या चतुर्दश्यामन्वाधानं क्रियते तदामावास्यायामुषसि तन्त्रप्रक्रमविधानात्प्रक्रान्ते तन्त्रे चन्द्रोदये सति यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति स त्रेधा तण्डुलान्विभजेद्ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालन्निर्वपेद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधँश्चरुं ये ऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमिति तण्डुलग्रहणोपलक्षितानां सर्वेषामोषधिदधिपयसां प्राकृतानां हविषां प्राकृताभ्यो देवताभ्यो विभजेदित्यनेनापनये विहिते तस्मिन्नेव प्रक्रान्ते ऽसमाप्ते कर्मणि मध्यमादिवाक्यैर्दात्रादिदेवतान्तरविधिरिति ष्ठे वक्ष्यते साभ्युदयेष्टिः । अभ्युदितश्चन्द्रमा यस्यामिष्टौ साभ्युदितेष्टिरिति व्युत्पाद्या ऽमावास्येष्टिरेवोच्यते । यद्यपि विभजेदित्यपनयनविधिना तत्र प्रकृतिगताग्न्यादिदेवताबाधो न देवतान्तरविधिना तथापि नित्यदेवतादिबाधेन नैमित्तिकदेवतान्तरविधिसाम्यात् दृष्टान्तता । भाष्यकृतातु यत्र नैर्ऋतस्तत्र विदग्धता नीयेतेति वदता यत्तदोर्व्यत्ययः कृतस्तत्स्वाभिप्रायं व्याचष्टे * अथेति * विध्यानर्थक्यं हीति सूत्रावयवव्याख्यानार्थं दर्शपूर्णमासकर्मेतिभाष्यं स्पष्टत्वान्न व्याख्यातम् । सूत्रं चैवं पूर्वसूत्राद्विधिः क चिदिति पदद्वयमनुकृष्य यथाभाष्यं योज्यं विधिः सन् क चिद्विदग्धादावप्रकृष्टः कल्प्येत। न चैतद्युक्तं कस्मान्न युक्तमित्यपेक्षिते प्रकरणे च सम्भवन्निति हेतुगर्भं विशेषणम् । विध्यानर्थक्यं हि तं कर्मशेषं प्रतीत्यपकर्षकारणमुक्तम् । यथा वार्त्तिकं तु कर्तृव्युत्पत्तिपक्षे क चिन्नैर्ऋतादावपकर्षः कल्प्येत विध्यानर्थक्यं हि तमाग्नेयादिपुरोडाशं प्रतीत्येतावान्विशेषः । कर्म्मव्युत्पत्तौ त्वग्न्यादिरुत्पत्तिशिष्टो ऽपकृष्टः कल्प्येत निर्ऋ-

१ अपकृष्येति १ पु० पा०

स्यादिविध्यानर्थक्यं हि तमनपकृष्टः स्वदेवताकं पुरोडाशं प्रतीति

विधौ च वाक्यभेदः स्यात् ॥ २५ ॥

औदुम्बर इत्यादिभाष्यादौदुम्बरो यूपो भवतीत्यस्यापि प्राश स्त्यपरत्वं प्रतिभाति । तच्चायुक्तम् । विध्येकवाक्यत्वं विनार्थवा त्वायोगात् । सोमापौष्णविध्येकवाक्यत्वाभ्युपगमे त्वौदुम्बरो यू प्रशस्त इतिभाष्यानुपपत्तिप्रसङ्गादित्याशङ्क्याह * स्तुतित्वेनेति न स्तुत्यर्थत्वेनेदमुपन्यस्तं किं तु स्तुत्यन्वयवशेनास्मिन्वर्त्तमानाप शसन्दिग्धे पञ्चमलकारत्वनिश्चयात् विधावाश्रीयमाण इति स्तु निश्चयेन विधित्वप्रतिपादनार्थमिति भावः * उपजनय्येति * निश्च य्येत्यर्थः ।

हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥

अधिकरणविषयप्रदर्शनार्थमथेति भाष्यं व्याचष्टे * इहेति पूर्वप्रकृतापेक्षित्ववाच्यथशब्दप्रतिपादितपूर्वाधिकरणसङ्गतिसूचना हिशब्दादिभिरित्युक्तम् । पूर्वत्र श्रेयःसाधनत्वप्रतिपादकविधिश ब्दाभावेनौदुम्बरो यूपो भवतीत्यादीनां विधित्वे निराकृते तेन ह्य क्रियतइति हेतुत्वप्रतिपादकहिशब्दसद्भावेन हेतुत्वं भविष्यतीति र्वाधिकरणसिद्धान्तहेतुप्रत्युदाहरणरूपेणात्र पूर्वपक्षोत्थानात्स तिः । न च परमार्थहेतव इत्यनेन हेतुवदिति वतेर्व्यावर्त्यं दर्शि चतुर्गृहीतान्याज्यानि भवन्ति न ह्यत्रानुयाजान् यक्ष्यन्भवतीत्याद परमार्थहेतवः । आतिथ्येष्टावनुयाजाभावे ऽपि अष्टावुपभृति ग ह्णातीति प्रकृतौ विहितस्योपभृत्यष्टगृहीतस्य चोदकप्राप्तस्य निवृत्त्य चतुर्गृहीतत्वे विधीयमाने ऽनुयाजाभावस्य हेतुत्वाभिधानात् य यत्रानुयाजाभावस्तत्र तत्राष्टगृहीताभाव इति ज्ञायते । प्रकृतौ चा ग्रहस्य चतुष्टवद्वयलक्षणार्थत्वद्योतनात्प्रयाजार्थं जुह्वां समानय नियोगतो ऽर्द्धमेव समानेतव्यमिति ज्ञायते हेतुः स्यादिति पूर्वपक्ष भाष्यं हेतुविध्यभिप्रायमनुवादाभिप्रायं वेति विकल्प्य विधिप तावदौदुम्बराधिकरणनिरस्तत्वादयुक्तमित्याक्षिपति * तत्रेति यथा तत्र यदिह फलवचनं तदौदुम्बरस्य यूपस्येत्यादिना प्रत्यक्ष विधेरभावात्कल्प्यस्य च कार्यविशेषसम्बन्धित्वेनैव कल्पयितुं शक्य तया कार्यान्तरं प्रत्यभावात्फलपरत्वे स्वरूपविधानाशक्तिप्रसक्तेः फ लवचनानर्थक्यमुक्तं तथेहापि प्रत्यक्षविध्यभावात्कल्प्यस्य च हेतु त्वे ऽन्नकरणमात्रस्य होमसाधनत्वविध्यनुमानेन शूर्पस्यापि प्राप्तिस म्भवाच्छूर्पहोमसम्बन्धविधानानुपपत्तेस्तत्र हेतुविध्यानर्थक्यम्

अन्नकरणमात्रस्य तु होमसम्बन्धं प्रति हेतुविधानमितरेतराश्रया-पत्तेरनाशङ्कयमेवेति शूर्पहोमसम्बन्धं प्रतीति काका द्योतितम् । अनुवादपक्षे त्वानर्थक्येन पूर्वपक्षः प्रसज्येत । तत्त्वर्थवादाधिकरणे निरस्तमित्याह * अथेति * ततश्च पूर्वपक्षासम्भावनयाऽधिकरणारम्भो न युक्त इत्याह * इतीति * समाधत्ते * उच्यतइति * अस्यार्थः नानेन शूर्पस्य होमसाधनत्वमुद्दिश्य तत्रान्नकरणत्वस्य हेतुत्वविधिराशङ्क्यते यः पूर्वन्यायेन निरस्येत यच्चान्नान्नकरणहेतुकन्दर्व्यादेर्होमसाधनत्वं विधेयमाशङ्क्यते तन्न यावच्छ्रुतेन विधीयते येन गौरवापत्त्या निरस्येतेत्यनेनैवेत्येवकारेण सूचितम् । एतच्च केवलहेतुत्वेन पूर्वपक्षमङ्गीकृत्योच्यते । यदा तु शूर्पेण जुहोतीति विधिमङ्गीकृत्य तेन ह्यन्नं क्रियतइत्यस्य तच्छेषत्वेनार्थवादत्वमभ्युपगम्य तदालम्बासिद्ध्यर्थं हेतुविधिरपि दर्व्यादिप्राप्तिफलको भविष्यतीति हेत्वर्थवादसमुच्चयेन पूर्वपक्षः क्रियते तदा पूर्वन्यायनिरस्तत्वाशङ्कैव नास्तीति तावच्छब्देन सूचितम् । न चेत्यानर्थक्यपरिहारायोक्तम् । किं तर्ह्यस्य प्रयोजनमिति पृष्टे सिद्धवदुपदिष्टस्य हेतुत्वस्य यावत्यन्वयांशे प्रसिद्ध्या शङ्का तत्रांशे अर्थापत्तिलभ्याद्वचनात्सिद्धिरित्युक्तं हेतोरन्वयकल्पकत्वोपपादनाय प्रसिद्धिपूर्वकत्वादित्युक्तम् । न चात्र सिद्धवच्छब्दप्रयोगमात्रेण हेत्वनुवादाशङ्का । अप्राप्तानुवादायोगादुपदिष्टस्येति यस्य ते हेतुविधिरित्येतद्भाष्यव्याख्यायां च तव हेतुविधिर्वादित्वादित्यभ्युपेत्य वादे च यद्यपि हेतुविधानमिति स्पष्टं विधेयत्वाभिधानात्साधुशब्दाधिकरणे च व्याकरणस्यासन्देहप्रयोजनत्वनिराकरणावसरे तथा हेतुविधिर्हेत्वर्थवादो वेति हेत्वधिकरणविचार्यं स्वयमेव दर्शयिष्यति । अज्ञातज्ञाप्यत्वरूपस्य चात्र विधेयत्वस्यानुष्ठाप्यरूपाविधेयत्वाभावप्रतिपादनार्थेन सिद्धवच्छब्देनाभिप्रेतत्वान्नाव्यापारत्वे हेतुत्वस्याविधेयत्वं वाच्यम् । गौरवं तु कल्पपदसहितैः श्रुतैः पदैर्हेतुविधिपूर्वकं तदन्यथानुपपत्त्या ऽन्वयकल्पनाभिधानात्परिहृतम् । ननु सर्वस्य विधिपरत्वे ऽर्थवादाभावाद्विधिरवसीदेदत आह * यापि चेति * कस्मादेतत्कर्त्तव्यमित्याशङ्कायामर्थवादाः संबन्ध्यते साचात्र हेतुनैव पूरितेति भावः । यद्यपि कथं भावापेक्षयार्थवादाः संबन्ध्यते तथापि कर्त्तव्यमित्युक्ते कस्मादिति या पुरुषस्यापेक्षा जायते सेह हेतुपूरणार्थत्वाय दर्शिता । यद्यपि चेयं प्राशस्त्यविषयापेक्षा तथापि सादृश्यादुभयाविषयत्वभ्रमः पूर्वपक्षिण इति मन्यतइत्यनेन सूचितम् । यद्वा हेत्वर्थवादसमुच्चयेनायं पूर्वपक्षो न केवलहेतुत्वेनेत्याह * अथापीति *

तदर्थवादत्वमन्तर्निर्णीतं हेतुत्वमस्मिन्नित्यर्थः । भवतु तर्हि तेन
मित्यर्थवादस्तदुन्मीलितः शूर्पेण जुहोतीति विधिस्तथापि तेने
वादानुसाराद्दर्व्यादीनामपि शूर्पतुल्यता न तु व्यावृत्तिः अत
शूर्पशब्देन लक्षणयान्नकरणेन जुहोतीति विधीयते । अस्मि
वादे सालम्बनत्वाय हेतुत्वेनाप्युपयोग इति हेतुरपीत्यपिशब्देन
मुच्चयो दर्शितः । होमस्याविधेयत्वेन हेत्वनाकाङ्क्षत्वात्तं प्रति
विधानमयुक्तमाशङ्क्य होमशब्दस्य संबन्धलक्षणार्थत्वमाह * स
न्धस्य चेति * नन्विति भाष्यस्य परेषां व्याख्यानं दूषयितुमुप
स्यति * नन्विति * अन्यत्राप्येवमेवोक्त्या भाष्यकृत्सम्मतिं प्र
यति * तथा चेति * यद्धि यस्य कारणभूतं दृष्टं सिद्धे तच्चेत्स
ऽपि कारणभूतमवगतं भवेत् तत्तस्य साधनमिति भाष्ये वक्ष्यते
षयति * तत्त्विति * स्वयं त्रेधा व्याचष्टे * अत इति * क्रिया
मान्यवाचिना करोतिना ज्ञानाख्यक्रियाविशेषो लक्ष्यत इतिभ
शङ्कते * नन्विति * अङ्गभूतनियमरूपसंबन्धोपलक्षणत्वेनायम्
न्यस्तो नाङ्गत्वेनेति परिहरति * सत्यमिति * अनुमाने व्यव
यते * अनेनेति * नियमो ऽनुमानव्यवहारशब्देनोक्तः । एवं तु
क्षितलक्षणाप्रसङ्गाद्गम्यगमकलक्षणार्थाभ्यां कार्यकारणशब्दाभ्यां
रेण भावप्रत्ययेन कृत्तद्धितसमासेषु भावप्रत्ययेन संबन्धाभिधानं
तिस्मरणात्, गम्यगमकसंबन्धाभिधानाद्गम्यगमकयोश्च नियमल
णस्य संबन्धस्य शक्तिरूपत्वात्तत्प्रतिपादनायैतदुक्तमिति पूर्वापरि
षाद्व्याख्यानान्तरमाह * यद्वेति * ननु शक्तिनिरपेक्षस्य हे
व्याप्तिमात्रेण गमकत्वात्तत्प्रतिपादनं व्यर्थमत आह * ययोरे
हीति * ययोरेव सा शक्तिरवधृता तत्रैव तयोरेव मध्ये एकस्ये
रत्प्रतिहेतुता तत्रेति निर्द्धारणे सप्तमीद्विवचनं गमकस्य चाधार
गम्यस्य च विषयत्वं गम्यविषयागमकाधारेत्यर्थः । कीदृशी शक्ति
रित्यपेक्षिते गम्यगमकसामर्थ्यात्मनेत्युक्तं तृतीयेत्थं भूतलक्षणे ग
म्यगमकसामर्थ्यरूपेत्यर्थः । तस्याः प्रतिपत्त्युत्तरकालत्वेनानङ्गत्वमा
शङ्क्य * व्याप्तिग्रहणकाल * इत्युक्तं कार्यावसेयत्वाच्छक्तेः क
ततः प्रागवधारणमित्याशङ्क्य कार्यकारणभावित्वेनेत्युक्तम् । अ
यमाशयः नियमलक्षणः संबन्धो ऽनुमानाङ्गम् । न चासाववि
नाभावमात्रेण भवति सत्यप्यविनाभावे हिंसात्वाधर्मसाधनत्वयो
र्नियम्यनियामकत्वाभावात् किं त्वाक्षेप्याक्षेपकभावेन यद्यस्मिन्स

१ यद्धि वह्न्यादिः यस्य धूमादेः सिद्धे महानसे साधो ऽपि पक्षे ऽप्रोत्यर्थः ।
२ प्रतीरयुत्तरेति २ पु० पा०

नावश्यं भवितव्यमिति यदाक्षेपकशक्तत्वेनावसीयते तदेव तेन
न्तुं शक्यते स्वरूपप्रयुक्तं हि साहित्यं नियमः प्रयोजकत्वं चाक्षे-
त्वम् । एतच्च विस्तरेणाचार्यैरनुमानवादे ऽभिहितम् ।

व्यासेश्च दृश्यमानायाः कश्चिद्धर्म्मः प्रयोजकः ।
अस्मिन्सत्यमुना भाव्यमिति शक्त्या निरूप्यते ॥
तस्माद्य एव यस्यार्थो नियतो ऽदृष्टशक्तितः ।
स एव गमकस्तस्य न प्रसङ्गान्वितो ऽपि यः ॥
साध्यहेतुत्वमर्थानां व्याप्तिशक्त्यनुरोधतः। इति च ।

सा चाक्षेपशक्तिर्व्याप्तिग्रहणकालएवावधार्यते * तथा हि* धूम-
ग्नेसाहित्यं नित्यं दृश्यते तस्य धूमस्वरूपप्रयुक्तत्वाभावे नित्यत्वा-
दर्थापत्त्या धूमस्वरूपस्य प्रयोजकत्वं कल्प्यते तत्र धूमत्वश्यामत्वो-
त्याद्यनेकसम्पाते धूमत्वमेवप्रयोजकं नान्यादिति व्यवस्था शक्त्या
नुपपद्यमाना शक्तिं कल्पयति अतो ऽनुमानाङ्गभूतनियमलक्षण-
धसिद्ध्यर्थेयं शक्तिर्न गम्यगमकभावसिद्ध्यर्था येन तदुत्तरकाला-
ग स्यात् सत्यां तु शक्तौ नियमवच्च तेन गम्यगमकभावो भवि-
ति भाविनीं गम्यगमकतामालोच्य गम्यगमकशक्तिरित्युच्यते।
कार्यकारणभावित्वेनेति भविष्यत्कालवाचिगम्यादिपठितभा-
ब्दप्रयोगेण दर्शितं कार्यकारणशब्दौ गम्यगमकपरौ व्याख्यातौ ।
न्सामर्थ्ये सति नियामकमग्न्यादिगम्यं भविष्यति नियम्यं च
दिगमकं तत्कार्यकारणभाविसामर्थ्यं तस्य भावः कार्यकारण-
त्वं तेनेतीयमपि तृतीयेत्थं भूतलक्षणार्थैव । अनेन च भाष्य-
भावशब्दो भवतेर्णिजन्तादेरजित्यच्प्रत्ययमुत्पाद्य भावनार्थो
यातः। भावनं चोत्पादनं तच्च शक्त्यधीनमिति कार्यकारणभा-
देन गम्यगमकभावापादिका शक्तिरुक्ता भवति । एवमपि का-
रणशब्दयोर्लक्षणावृत्त्यपरिहाराद्भावशब्दस्य शक्तावप्रयुक्तत्वाद्-
षात्स्वमतेनान्यथा व्याचष्टे * अथ वेति * काणादा ह्यस्येदं
कारणं संयोगिसमवायि एकार्थसमवायिविरोधि चेति लैङ्गिक-
नुमानाङ्गभूताविनाभावोपाधित्वेन कार्यकारणभावादिच्छन्ति
ऽपि त्वेवमेव दृश्यते । इह चान्नकरणत्वेन द्रव्यादेर्होमसाध-
विधीयमानमन्त्रकरणत्वकारणकमेव भवति । भाष्यगतहोम-
च्चात्रत्यो ऽपि संबन्धलक्षणार्थः । आक्षेपभाष्यमुपसंहरति
मादिति * हेतुव्यपदेशशब्देनैतदुक्तं हेतुर्हि प्रमाणान्तरप्रसि-
व्यपदेश्यः सिद्धवत्कीर्त्तनीयो भवति न चायं तथेति न हे-
युक्तमिति । सत्यमिति समाधानभाष्यं व्याचष्टे * सत्यमिति *

अनेन च विधायिष्यते कार्यकारणभावो दृष्टान्तवचनेन कल्प्ये
व्याख्यातम् । दृष्टान्तशब्देन दृष्टश्चासावन्तश्चेति समीपवचना
शब्दाङ्गीकारेण सह दृष्टिरूपाख्या व्याप्तिरुक्ता कल्पिताया अपि व
सेरशाब्दाः शाब्देन हेतुना ऽनन्वयमाशङ्क्यान्वयसिद्ध्यर्थे वचने
ल्पनमुक्तम् । सप्तमे ऽपि वचनं पुनर्द्विविधं प्रत्यक्षमानुमानिकं चे
वदता भाष्यकारेण श्रुतार्थापत्तेः शब्दकल्पकत्वमेव प्रकटितम् । श
कल्पकत्वानङ्गीकारे चाग्नये जुष्टन्निर्वपामीत्यादेर्मन्त्रस्य विकृताव
न्निहिताग्न्यादिपदनिवृत्त्या साकाङ्क्षस्यापि सूर्यादिनार्थेन नैराक
ङ्क्ष्यसिद्धेर्न सूर्यादिपदप्रक्षेपेणोहः सिद्ध्येत् सूत्रकृताप्यर्थाद्वा कल्प
कदेशत्वादिति स्रुवेणावद्यतीत्यादिश्रुतवाक्यैकदेशादश्रुत इव द्र
मित्यादिपदकल्पनैवोक्ता । चतुर्थे ऽप्यश्रुतफलेष्वेकाहकाण्डपठि
विश्वजिदादिषु चोदनायां फलाश्रुतेः कर्म्ममात्रं विधीयते न ह्यश
विधीयतइति फलप्रतिपादकशब्दाभावान्निष्फलत्वं पूर्वपक्षयित्वा
चाम्नानसामर्थ्याच्चोदनार्थेन गम्येत अर्थानां ह्यर्थवत्त्वेन वचना
प्रतीयन्ते अर्थतो ह्यसमर्थानामानन्तर्ये ऽपि असम्बन्धः तस्म
च्छ्रुत्येकदेशः स इति श्रुतवाक्यैकदेशभूतस्वर्गकामादिपदकल्प
मेव वक्ष्यते । अर्थस्य शब्दैकदेशत्वायोगाच्छ्रुतार्थापत्तिमाहुर्ये
ब्दस्याकल्पिकामतः सूत्रभाष्यन्यायतन्त्रविरोधात्ते निराकृताः । कं
दृशं दृष्टान्तवचनमित्यपेक्षिते दर्शयति * यद्यदिति * शूर्प्पेण हो
इति भाष्यं हेतुः स्यादित्यनेन पुनरुक्तमाशङ्क्य उपसंहारार्थत्वेन व्य
चष्टे * तेन चेति * शूर्प्पेण होम कर्त्तव्ये इति द्वितीयपूर्वपक्षाभि
प्रायेणोक्तं प्रथमपूर्वपक्षे तु समस्तस्य वाक्यस्य केवलहेतुपरत्वात्त
र्थानुपपत्तिकल्पितसर्वान्नकरणसाधनत्वविधिप्राप्तत्वेन शूर्प्पस्य त
च्छ्रुतेरवयुत्यानुवादत्वादुपलक्षणार्थं शूर्प्पग्रहणम् । शूर्प्पेणान्ये
वा होमः कर्त्तव्य इत्यर्थः । किं प्रयोजनमिति प्रश्नभाष्यं व्याप्तिवचनक
ल्पनेन प्रयोजनस्योक्तत्वादयुक्तमाशङ्क्य व्याचष्टे * किं प्रयोजन
मिति * द्वितीये पूर्वपक्षे चैतदुक्तं तदा हि शूर्प्पेण जुहोतीति वि
धेस्तेन ह्यन्नं क्रियतइत्यर्थवादनिराकाङ्क्षत्वे सत्यपि शूर्प्पासम्भवे
ऽनुकल्पभूतदर्व्यादिप्राप्त्यर्थं तेन ह्यन्नं क्रियतइत्यस्यापि परावृत्त्य हे
तुपरतेष्यते । तत्र शूर्प्पगतान्नकरणत्वहेतुत्वमुच्यमानं न दर्व्यादेर्हो
मसाधनत्वमापादयितुं शक्नोतीति व्यर्था परावृत्तिकल्पनेति प्रश्ना
भिप्रायः । प्रथमपूर्वपक्षे तु शूर्प्पश्रुतेरुपलक्षणार्थत्वात्तेन ह्यन्नं क्रि
यतइत्यविशेषेणान्नकरणत्वमात्रस्य हेतुत्वप्रतिपादनान्न हेतुपरत्वे
व्यवस्था लभ्यत इति श्रुतविधित्यागेनाश्रुतविधिकल्पनस्य किं प्रयो

ज्ञानमिति प्रश्नाभिप्रायो व्याख्येयः । द्विविधमपि प्रश्नाभिप्रायन्निरा-
कर्त्तुमन्यदपीत्युत्तरभाष्यं व्याचष्टे * अपरस्त्वाहेति * शास्त्रस्य म-
ह्याविषयत्वं पुरुषस्य चानुष्ठानसौकर्यमश्रुतविधिकल्पनस्य अनेन प्रयो-
जनमुक्तम् । अन्नकरणत्वाविशेषात्सर्वेषां होमसाधनत्वे ऽभिहिते
कुत इति प्रश्नभाष्यन्निरभिप्रायमाशङ्क्याह * कुत इति तेनेति * शू-
पपरामर्शितत्प्रातिपदिकात्परया तृतीयया शूर्पगतस्यैवान्नकरण-
त्वस्य हेतुत्वाभिधानात् कुतो दर्व्यादिप्राप्तिरिति यः सिद्धान्ताभिप्रायः
दि च हेतुरित्यत्र सूत्रे लक्ष्यते स एवात्र प्रश्ने ज्ञेय इत्यर्थः । अभि-
प्रायान्तरमाह * अथ वेति * अभिप्रायद्वयनिराकरणार्थत्वेन सौत्रा-
र्थत्वपदव्याख्यानार्थं तस्यापीति भाष्यं व्याचष्टे * इतरस्त्वाहेति *
तृतीयोपात्तस्य करणत्वस्य हिशब्दोपात्तहेतुत्वविधावुद्देश्यत्वात्प्रा-
तिपदिकान्वयलाभेन शूर्पगतत्वेन विशेष्टुमशक्यत्वात् अन्नकरणमा-
त्रस्य हेतुत्वाद्दर्व्यादिप्राप्तिसिद्धिरित्याद्यभिप्रायार्थः । करणत्वं चार्थ-
त्वशब्देनाभिप्रेतं द्वितीये रूपयोगित्वं[1] दर्व्यादेः पाकाद्यपेक्षया वि-
प्रकर्षे ऽपि यदन्नक्रियायामुपयोगित्वं तदेवात्यन्तविप्रकृष्टलाङ्गला-
पेक्षया साधकतमत्वेन विवक्ष्यतइत्यर्थः । शक्यते चेति भाष्यं सौ-
त्रोपपत्तिशब्दव्याख्यानार्थतया व्याचष्टे * शक्यते चेति * पौनरु-
क्त्यमाशङ्कते * पूर्वेण त्विति * परिहरति * तेनेति । कर्त्तुमिति *
करोतिना अन्नक्रियाविषयाविवक्षा लक्ष्यते तेनान्नं क्रियतइति विवक्षि-
तुं शक्यतइत्यर्थः वेदे वक्तृभावाद्विवक्षानुपपत्तेर्व्याचिख्यासात्र
विवक्षाशब्देनाभिप्रेता । एतदेव व्याचष्टे * यदेव हीति * एवंचार्थ-
त्वपदोक्तोपयोगित्वे सत्यपि साधकतमत्वाभावात्करणत्वानुपप-
त्त्याशङ्कानिराकरणार्थत्वेनोपपत्तिपदस्य पौनरुक्त्यं परिहृतम् । पदा-
र्थत्वशब्देन[2] करणत्वनिर्देशालम्बनत्वमुक्तम् । उपपत्तिशब्देन तु क्रि-
यतइति वर्त्तमानान्नक्रियत्वनिर्देशालम्बनमिति स्पष्टमेवापौनरुक्त्य-
माह * अथ वेति * होमं प्रति साधनत्वानुपपत्तिमाशङ्क्यासौ-
त्रोपपत्तिशब्देनोपपत्तिं भाष्यकृद्ददाति * शक्यते चेति * ग्रन्थेने-
त्यर्थः । तत्र शक्यइत्यनेन करोतेः शक्तिलक्षणार्थत्वमुक्तम् । लटो
भूतभविष्यत्काललक्षणार्थत्वं चशब्देन सूचितम् । एतद्धीति
ग्रन्थं साध्याहारं व्याचष्टे * तत्रेति * कथं चाकारि करिष्यते
वाभिधीयतइति अत्राप्यध्याहार्यं न हीत्युत्तरभाष्यं व्याचष्टे *
वर्त्तमानेति * वर्त्तमानान्नक्रियस्य होमसाधनत्वासम्भवात्करोतिना

१ रूपयोगित्वमिति २ पु० ना०

२ यदार्थत्वशब्देनेति २ पु० पा०

घा शक्तिर्लक्ष्यते लटो वा भूतभविष्यत्कालत्वमित्यर्थः । भाष्य यस्मान्न वर्त्तमानान्नक्रियाकालः कश्चिद्धोमसाधनमस्ति तस्माल्लक्ष श्रयणमिति योज्यम् । एतदेवोत्तरभाष्यमेकग्रन्थत्वेन व्याचष्टे * इति * लक्षणापत्तेरुभयपक्षसाम्येनादोषत्वप्रतिपादनार्थस्य स्तुतिरन्याय्येति चेदिति वक्ष्यमाणसूत्रस्य सर्वपूर्वपक्षोपपत्तिसङ्ग नाय व्याख्यानार्थे यदि चेति भाष्यं व्याचष्टे * यदि चेति * यावर्त्तमानत्वयोरेकपदोपादानादन्योन्यनिरपेक्षयोश्चानुपपत्त्यभा दैक्यमङ्गीकृत्योभयोरित्युक्तं वर्त्तमानत्वशब्देन च क्रियावर्त्तमानत्व भिप्रेतं चोद्यसामान्यमात्रेण दोषत्वानपायात्सूत्रभाष्यापेक्षितपरि रसाम्यमपि दर्शयति * तेनेति * हेताविति भाष्यं कथन्तदपेक्षित आह * हेताविति * भाष्यकृतान्वर्थवत्वपदस्यैव श्रौतार्थवत्वपरत व्याख्यातत्वात् सूत्रान्तरव्याख्यानार्थं यदि चेत्यस्मात्प्राक् पठितमि दोषः । तदिदानीं व्याचष्टे * स्तुताविति * न ह्यन्नकरणत्वाविशे द्दर्व्यादिवच्छूर्प्पस्य प्राप्तेः शूर्प्पेण जुहोतीत्यनर्थकं स्यादत आह * र्प्पेणेति * भाष्यकृद्व्याख्याने हेतुत्वप्रतिज्ञायां हेत्वनभिधानाद र्थवत्त्वोपपत्तिहेत्वोश्च साध्यानभिधानात्सूत्रस्य न्यूनत्वापत्तेः । स्वयं व्य ख्यानान्तरमाह * इत्थं वेति * विधिर्वा स्यादपूर्वादितिपूर्वाधि रणपूर्वपक्षहेतोरत्राप्यनुषङ्गेण पूर्वपक्षप्रतिज्ञायां हेत्वपेक्षापूरण स्याच्छब्देन चान्वयवाक्यकल्पनया हेतुत्वायोगशङ्कापरिहारं मत्वा न्वयवाक्यस्य दर्व्यादिप्राप्तिफलत्वोपपादनार्थत्वेनार्थवत्त्वोपपत्त्यं साध्याकाङ्क्षापूरणात्सूत्रस्यान्यूनत्वं भाष्यकृतोऽभिप्रेतम् ।

## स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥ २७ ॥

अत्र भाष्यकृताऽन्नकरणताया हेतुत्वस्य प्रमाणान्तरानवसे यत्वेन शब्दैकसमधिगम्यत्वाच्छब्देन च शूर्प्पेण होमकर्त्तव्ये ऽन्नकर णत्वस्य हेतुत्वाभिधानात्तस्य च शूर्प्पेण जुहोतीति विधिसिद्धत्वे हेत्वनपेक्षतया स्तुतिमात्रार्थत्वावगतेः शूर्प्पस्यैव शब्दविहितत्वात्तद वरुद्धे होमे दर्व्यादेरचोदनेत्येवं सूत्रं व्याख्यातं तद्विवृणोति * शू र्प्पेणेति * विरोधसिद्ध्यर्थं द्वारैक्यप्रदर्शनार्थं करणग्रहणं समर्थः पदविधिरिति पदमात्रविधौ सामर्थ्यापेक्षास्मरणाच्छूर्प्पस्य दर्व्यादि सापेक्षत्वे शूर्प्पप्रातिपदिकस्य विभक्त्यनन्वयप्रसङ्गान्निरपेक्षत्वं विभ क्तिग्रहणेनोक्तम् । समुच्चयनिरासार्थं चैतद् द्वयम् । श्रुतिग्रहणं बलीयस्त्वाद् बाधविकल्पनिराकरणायोक्तम् । न केवलं विभक्त्य-

१ द्वारैक्ये सति विरोधः विरोधे सति करणयोः समुच्चयासम्भवः ।

न्वयान्यथानुपपत्त्या शूर्पस्य दर्व्याद्यनपेक्षत्वं स्यात्किं त्वसामर्थ्याद‐पीत्याह * होमश्चेति * ननु हेत्वपदेशान्यथानुपपत्त्यान्वयविधायिश्रुत्यनुमानावश्यंभावाद्बलाबलविशेषे ऽपि मुख्यानुकल्पव्यवस्थया विरोधपरिहारो भविष्यतीत्यत आह * अनुत्थितायामिति * अत्रैवाचोदना च तस्येति सूत्रावयवं योजयति * तेनेति * हेत्वपदेशान्यथा ऽनुपपत्तिनिराकरणार्थतया स्तुतिग्रहणं व्याचष्टे * हेत्वपदेशश्चेति * आद्यं पूर्वपक्षं निरस्यति * शूर्पश्रुतिश्चेति * किमालम्बनस्तर्हि हेतुनिर्देशो ऽत आह * तस्मादिति * वक्ष्यमाणपक्षापेक्षया यद्वाशब्दस्तेन विध्युद्देशेनानन्तरमाकाङ्क्षितमर्थेन विधिसामर्थ्येनोपप्लुतं हेत्वपेक्षं यत्प्राशस्त्यं तस्य हेतुरिति विग्रहः। न केवलं हेतुपरत्वासम्भवात् प्राशस्त्यपरत्वं किं त्वश्रुतान्वयवाक्यकल्पनानापादकत्वादपीत्याह * कल्पनेति * एतदेव सूत्रमन्नस्वरूपस्य होमसाधनतया कल्प्येन शब्देन चोद्यमानतयेष्टत्वाद्दर्व्यादेरकरणत्वादचोदनेत्यन्त्यप्रतीकेनावतात्पर्या ऽन्यथा व्याचष्टे * अचोदना चेति * भाष्यमप्यस्यां व्याख्यायामेवं योज्यं शब्दश्चान्नकरणहेतुरित्याह * तच्च शूर्पहोमेति * शूर्पेण जुहोतीत्येतद्वाक्यविधेयाङ्गीक्रियमाणे ऽस्य स्तुत्यर्थत्वात्प्रमाणान्तरानुसारेण गौणत्वाद्युज्यते दर्व्यादिहोमे ऽनुकल्पेन वाक्येन विधये ऽङ्गीक्रियमाणे तस्य करणत्वाभावान्न युज्यतइति। व्याख्यानान्तरस्य प्रयोजनमाह *एवं चेति*

## व्यर्थे स्तुतिरन्याय्येति चेत् ॥ २८ ॥

एतत्सूत्रार्थस्य पूर्वमुक्तत्वादनुभाष्यतार्थतयैतत्सूत्रमिति पुनर्यदुक्तमिति वदता भाष्यकृता व्याख्यातं तद्व्याचष्टे *यत्पुनरिति*

## अर्थस्तु विधिशेषत्वाद्यथा लोके ॥२९॥

अर्थशब्दव्याख्यानार्थमस्मत्पक्षइति भाष्यं व्याचष्टे* अस्मत्पक्षइति * विधिशेषत्वादितिसूत्रावयवव्याख्यानार्थं वाक्येति भाष्य व्याचष्टे * वाक्येति * सत्यपि विधिशेषत्वे कथमर्थसत्तेत्याशङ्का निराकरणार्थं सम्वादश्चेति भाष्यं व्याचष्टे * तदा चेति * वर्त्तमानान्नक्रियत्वाभिधानोपपादनार्थं तदा चेति भाष्यं व्याचष्टे * अनेनेति * करोतेरपि शक्तिलक्षणार्थत्वमनेन भाष्येण वर्त्तमानमितीतिकरणेन अक्रियं वा स्तोतुं सत् क्रियमित्युपदिशन्तीत्यपि सूचनादर्शितं भवतीति व्याख्यातुमाह * अथ वेति * अनेन चैवं भाष व्याख्यातं कृतं करिष्यमाणं वा स्तोतुं क्रियतइति वर्त्तमानशक्तिः

वा स्तोतुं क्रियतइत्युपदिशतीति । अर्थस्तु विधिशेषत्वादित्यर
तिरेकप्रदर्शनार्थं त्वत्पक्षइति भाष्यं व्याचष्टे * तव त्विति *
मानशब्देन क्रियामप्युपलक्षयेति दोषापादनार्थं विधौ हीति
प्रश्नपूर्वकं व्याचष्टे * किं कारणमिति * परशब्दार्थः प्रतीय
नेन वाच्यतया प्रतीतिरुक्तेति कथं चिद् भ्रान्तिः स्यात्तच्च जह
र्थतापत्तेरयुक्तमिति प्रयोजनपदप्रक्षेपेणोक्तार्थं योजयति *परा
प्रयोजनपदप्रक्षेपे कारणमाह * परेति * न तु वाच्ये इति
कस्य शब्दस्यार्थे कः शब्दो ऽत्र कल्प्यतइत्यपेक्षायामाह *तदि
भूतवाचिनो ऽकारीति लुङो भविष्यद्वाचिनो वा करिष्यतइति
स्थार्थे वर्त्तमानवाची शब्दः क्रियते इति लट् प्रत्ययः कल्पनीयः
वर्त्तमानभावाचिनो वा शक्यत इति शक्नोति स्वार्थे क्रियावाची
क्रियत इति करोति धातुः कल्पनीय इत्यर्थः । न चेति भाष्यं श
ङ्कां व्याचष्टे * अथेति * सत्क्रियमित्यप्यत्र द्रष्टव्यम् । अश
क्यत्वमेव दर्शयति * न हीति * तव तु विधिवादित्वादित्य
द्विनीयपूर्वपक्षदूषणमुक्तं तदुपसंहरति * तस्मादिति । उभयथ
लाक्षणिकत्वे मुख्यत्वे च विधिवादिनः क्रियत इति विप्रतिषिः
स्यर्थः । दृष्टान्तव्याख्यानार्थमस्मत्पक्षइति भाष्यं व्याचष्टे* अस्म
न्निति * सत्यप्यन्यस्मिन्प्रकृष्टबले देवदत्तस्यापि बलसद्भावा
गौणतेत्याशङ्क्य भूम्न्यतिशायने वै युक्तम् * स्मरन्ति हि *

संयोगे ऽस्तिविवक्षायां नित्ययोगे ऽतिशायने ।
भूमनिन्दाप्रशंसासु भवन्ति मतुबादयः ॥

इति इह च यज्ञदत्तादीन्प्रसहतइति वाक्यशेषाद् भू
तिशायने चेति ज्ञायते दृष्टान्तदार्ष्टान्तिकयोरापेक्षिकातिश
द्भावान्मुख्यत्वं शङ्कते * नन्वेवमिति * नानेन भाष्येण
कृष्टमात्रापेक्षया प्रयोगे गौणत्वमुक्तं किं तु सर्वापेक्षयोगे
कृष्टमात्रापेक्षया प्रयोगविषयस्य मुख्यस्यातिशयस्योपचारस्थ
न्यास इति परिहरति * सत्यमिति * मुख्यत्वं चात्र सम
मात्रेणोच्यते न प्रकृतोपयोगितया परशब्दार्थग्रहणमित्युपक्रमात्
र्त्तमानक्रियत्वस्य गौणत्वे देवदत्तः पचति यो ऽधुना भुङ्क्त
दृष्टान्तो दातव्यः विधिपक्षे ऽपि तद्वापेक्षिकं मुख्यमेव साधक
भविष्यतीत्याशङ्क्याह * भवतस्त्विति * वर्त्तमानक्रियत्वस
त्वयोर्दृष्टान्तत्वेनात्रोपादानं यथा वर्त्तमानक्रियत्वोपादानवत्सः
असाधकतमत्वस्य क्रियां प्रत्युपादानात्तस्य च यथा वर्त्तमानि
त्वस्य गौणत्वे निमित्तं नास्ति तथा साधकतमस्य न्यूनापेक्षायां

मित्ते नास्तीत्यर्थः ।

यदि च हेतुरवतिष्ठेत निर्देशात्सामान्यादिति चेदव्यवस्था विधीनां स्यात् ॥ ३० ॥

यद्यपि च भवेदित्यनुज्ञादर्शनाद्विधिपक्षो ऽपि सम्मत इति कस्य चिद् भ्रान्तिः स्यात्तन्निवृत्त्यर्थमाह * अभ्युपेत्येति * अस्य च प्रयोजनं चतुर्गृहीतान्याज्यानि भवन्ति न ह्यत्रानुयाजानिति बहुवचनात्सर्वानुयाजाभावस्य हेतुत्वावगतेरवभृथे बर्हिरनुयाजमात्राभावे ऽतिप्रसङ्गनिवृत्तिः तद्भाष्यं व्याचष्टे * यद्यपीति * अत्यन्तसाधकतमत्वाभावे ऽप्यापेक्षिकसाधकतमत्वप्रदर्शनाय भाष्ये दर्विपिठरप्रकाराणामित्युक्तं निर्देशादित्येतत्सूत्रावयवव्याख्यानार्थं शब्दाद्धित्यादिभाष्यं व्यवस्थाहेतुप्रश्नपूर्वकं व्याचष्टे * कुत इति * सत्यपि हेतोः शब्दोक्तत्वे कथं व्यवस्थेत्याशङ्क्य शब्दश्चेति भाष्येण शूर्पगतस्यैवान्नकरणत्वस्य हेतुत्वाभिधानादिति परिहृतं तदुपपादयितुमाह * सो ऽपि चेति * शूर्पगतस्यैवान्नकरणत्वस्य हेतुत्वं शब्देनोक्तम् । इत्येतदेव कथमवगम्यत इत्याशङ्क्य तद्धि निर्दिश्यतइत्यादिभाष्यकृतोक्तं तस्याभिप्रायमाह * शूर्पे चेति * अनेन च निर्दिश्यतइति प्रतिज्ञाभिप्रायं व्याख्यातम् । प्रकृतशूर्पनिर्देशकसर्वनामपरया तृतीयया तद्गतस्यैवान्नकरणत्वस्याभिधानात्तस्यैवं हिशब्देन हेतुत्वमुच्यते इत्येवं च तद्भाष्यं व्याख्येयमिति दर्शयितुमाह * सन्निधेश्चेति * एकपदोपादानलक्षणा श्रुतिः सन्निधिशब्देनाभिप्रेता । ननु लोके व्याप्त्यविरोधेन सामान्यरूपस्यैव धूमादेर्हेतुत्वावगमात्तद्दृष्टान्तेनात्रापि तथात्वापत्तेः साध्यधर्मिणा विशेषणमयुक्तमित्याशङ्क्याह *लोके ऽपि चेति* वेदे तु हेत्वन्यथानुपपत्तिकल्प्यस्य दृष्टान्तवाक्यस्य सामान्यव्याप्तिविषयत्वायोगान्न तदनुरोधेन हेतोः सामान्यरूपतापत्तिरित्याह * वेदेति * कीदृशं तर्हि अत्र दृष्टान्तवाक्यं कल्प्यते इत्यत आह *तस्मादिति* शूर्पत्वैकार्थसमवायिनो ऽन्नकरणत्वस्यैव हेतुत्वविधायकविधिवचनद्वारान्नकरणत्वावान्तरसामान्योपलक्षणार्थं शूर्पग्रहणं विशेषदृष्टसंज्ञकं चैतदनुमानं लोके ऽपि प्रसिद्धमित्याह * तदेतदिति * शब्दे ऽपि ज्ञाने गमेर्डोरिति गोशब्दव्युत्पत्तिनिमित्तत्वेनोपात्तस्य गमनस्य प्रतिपाद्येन सास्नादिमता विशेषणदर्शनात्तद्दृष्टान्तेनेहापि व्यवस्थासिद्धिरित्याह * यथा चेति * नन्वेवं तर्हि शूर्पेण जुहोतीत्येतावतैव सिद्धेर्हेत्वभिधानानर्थक्यं स्यादत

आह * तत्रेति । यथेति * दृष्टान्तभाष्यं व्याचष्टे * यथेति *
संहरति * तस्मादिति * प्रत्ययश्रुतिबलेन पदश्रुतिबाधात्साम
मात्रस्य हेतुत्वाभिधानाय सामान्यादिति चेदिति सूत्रावयवव्य
नार्थमथेति भाष्यं व्याचष्टे * यदि पुनरिति * आनर्थक्याप
त्ययश्रुतिबाधायाऽव्यवस्था विधीनां स्यादिति सूत्रावयवव्याख्या
म्मव्यवस्थेति भाष्यं व्याचष्टे * तत इति * हेत्वनभिधाने ऽपि
शब्दानर्थक्यापत्तिशङ्कानिराकरणार्थम्मस्मत्पक्षे पुनरिति भाष्यं
त्वान्न व्याख्यातं तस्मादित्युपसंहारभाष्यम्मसमर्थं शूर्पव्यावृत्त्य
त्वभिधानोपपत्तेरयुक्तमाशङ्क्य व्याचष्टे * तस्मादिति * अभ्यु
वादमात्रमेतत् वस्तुगत्या शूर्पत्यापि मुख्यान्नकरणत्वाभावा
च्च लक्षणायोगाद्धेतुत्वानुपपत्तिरितिभावः ।

**तदर्थशास्त्राद्वाक्यनियमाद्बुद्धशास्त्रादविद्यमानव-**
**चनादचेतनार्थबन्धनादर्थविप्रतिषेधात्स्वाध्यायवद-**
**वचनादविज्ञेयादनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ ३१ ॥**

ग्रन्थान्तरेष्वदर्थैकं सूत्रं तत्सिद्धिसूत्रवत् व्याख्यायै ख
ऽपाठि भाष्यकारादिभिस्त्विदं किमर्थवन्तो मन्त्रा उतानर्थका इति
न्तरकारोपन्यस्तसन्देहत्यागेन भाष्यकारीयस्य सन्देहान्तरोपन्य
कारणं परोपन्यस्तसन्देहस्य दुष्टत्वं वक्तुमुपन्यासं तावत् व
* इहेति * मन्त्रानर्थक्यमित्यानर्थक्यश्रवणं भ्रान्तिकारणमु
पयति * तत्त्विति * समुद्रो वा महासत्त्व इतिवदिवार्थे वा
श्लोकं व्याचष्टे * सर्वत्र हीति * उत्तरानानुगुण्यादप्ययनार्थक
यपक्षो न युक्त इत्याह * न चेति * अविशिष्टस्तु वाक्यार्थ
सिद्धान्तसूत्रेणाप्यर्थवत्त्वं सिद्धवद्वक्ष्यते तच्चार्थाभिधानानाद
पक्षीकृते तन्निराकरणे च उभयपक्षसम्प्रतिपन्नं हेतुत्वेन वक्तुं
ते आनर्थक्ये तु पूर्वपक्षीकृते अर्थवत्त्वमुत्तरं परं प्रति साध्यं स्य
प्रतिज्ञामात्रेण साधयितुं शक्यमित्यर्थः । प्रतिज्ञामात्रेण साध्य
त्वमेषामिति विग्रहः अतः पूर्वपक्षासम्भवेन परोपन्यस्तसन्देह
क्तत्वात्तत्परित्यागेनान्यथोपन्यासो भाष्यकारस्येत्याह *तस्मा
वचनमर्थाभिधानं तत्किं कर्मकाले मन्त्रविधिना परिगृहीतन्न
र्थः । एतदेवोत्तरभाष्येण विवृतं सतो ऽर्थस्याविवक्षाकारणाम
स्मिहापि विचारे पूर्वपक्षासम्भवमाशङ्कते * नन्विति *
त्यर्थस्योच्चारणेदमर्थ्याभावेनाविवक्षाया दर्शनात्पूर्वपक्षसम्भ

माह * नैष इति * ननूच्चारणस्यार्थपरत्वाभावे ऽर्थो ऽनभिधेय एव स्यादित्याशङ्क्य नान्तरीयकत्वेनार्थाभिधानमुपपादयति * उच्चारणेति * उच्चारणनान्तरीयकत्वं यदेकस्मादपूर्वं तदेतरत्तदर्थमित्यनेन न्यायेन दृष्टान्ततयोक्तं भाष्यकारीयसन्देहसमर्थनमुपसंहरति * इत्यस्तीति * भाष्यकृता ऽस्य विचारस्य प्रयोजनद्वारेण प्रमाणलक्षणासङ्गतिन्दर्शयितुं यद्युच्चारणमात्रेणेत्यादिना विचारप्रयोजनमुक्तं तदाक्षिपति * कः पुनरिति * विचारस्वरूपवत्प्रयोजनस्यापि शेषलक्षणासङ्गतत्वान्नास्य विचारस्य प्रमाणलक्षणसङ्गतिरित्यर्थः। समाधत्ते * पूर्वमेवेति * आम्नायसूत्रोक्तमक्रियार्थत्वेनाप्रामाण्यमेव मन्त्रेष्वपि यथापूर्वपक्षस्तथापूर्वमेवार्थवादाधिकरणोपक्रमएव यानि त्वतिरिक्तान्यर्थवादमन्त्रनामधेयानुपात्तानि सो ऽरोदीदिषेत्वोर्जेत्वोद्भिदेत्येवमादीनीत्यादिनोक्तमित्यर्थः । अनेनोच्चारणमात्रेणोपकारकत्वे बर्हिर्लवने बर्हिर्देवसदनं दामीतिमन्त्रस्याप्रामाण्यमभिधानेनोपकारकत्वे सामर्थ्यालोचनेन प्रामाण्यमिति प्रामाण्याप्रामाण्यप्रयोजनत्वेन लक्षणसङ्गतिर्भाष्यकृता दर्शिता धर्मप्रमाणभूतविध्येकवाक्यत्वेनार्थवादप्रामाण्ये ऽभिहिते तदभावान्मन्त्राणामप्रामाण्यमित्यर्थवादप्रामाण्यहेतुप्रत्युदाहरणरूपेण पूर्वपक्षवादिनः प्रत्यवस्थानादर्थवादविचारसङ्गतिरथेदानीमिति वदता भाष्यकृतोक्ता को ऽर्थवादः को वा नेति कोष्ठशाधनेनाधिकरणद्वयस्यार्थवादाधिकरणशेषत्वादव्यवधायकत्वमिदानीं शब्देनोक्तं प्रकरणान्तरत्वेनानन्तराधिकरणसङ्गत्यभावो न दोषः। ननु यद्यक्रियार्थत्वेनाप्रामाण्यमत्र पूर्वपक्षस्ततो नोच्चारणं पूर्वपक्षे ऽङ्गीकार्यम् । अर्थानभिधाने ऽपि कर्म्मकालोच्चारणस्यापि प्रयाजादिवददारादुपकारकत्वेन क्रियार्थत्वोपपत्तेरित्याशङ्क्याह * तदुत्तरेणेति * तस्याक्रियार्थत्वेनाप्रामाण्यस्य यदुत्तरं तुल्यसाम्प्रदायिकत्वं चकारादध्ययनविधिदृष्टार्थत्वं च तेनैव मन्त्रेष्वक्रियार्थत्वशङ्कानिवृत्तेर्न पुनराक्रियार्थत्वमभिहितमित्यर्थः नैराकाङ्क्ष्यमुपपादयति * एवं हीति * क्रिया तत्संबन्धानभिधायिनां तत्कालाप्रयोज्यानामपि चार्थवादानां यत्र क्रिया संबन्धापादनं तत्र मन्त्रेषु क्रियाकालप्रयोज्येषु तत्संबन्धे कः सन्देह इत्यर्थ अतो ऽक्रियार्थत्वस्यात्र शङ्कितुमशक्यत्वात्किमुच्चारणमात्रेण क्रियार्थत्वमभिधानेन वेति तद्विशेषविचारो भाष्यकारीयो युक्त इत्याह * तस्मादिति * नन्वेवमपि लिङ्गादिवद्विधायकत्वेनार्थवादवद्धस्तावकत्वेन क्रियार्थत्वसम्भवात्किमित्युच्चारणेनाक्रियार्थत्वाङ्गीकरणमित्याशङ्क्याह * तत्रेति * स्वयमेव भाष्यकारो ऽपि वा प्रयोग

सामर्थ्यान्मन्त्रो ऽभिधानवाची स्यादित्यत्र निराकरिष्यतीत्यर्थः। न मन्त्रत्वाविशेषात्साम्नायमपीहोदाहरणत्वप्रतीतेस्तेषां चावाचकत्व दर्थपरत्वानुपपत्तेरव्यापकः सिद्धान्तः स्यादृत आह * सामसु त्वि ति * अर्थपरत्वाक्षराभिव्यक्तिपरत्वे साम्नामपि तद्द्वारार्थपरत्व सम्भवात् किं तेषामात्मप्रयोगमात्रपरत्वमुताक्षरव्यक्तिपरत्वमित्ये तद्विषयः सन्देहो भाष्यकृतोक्त इत्यर्थः। नन्वेवमपि श्रुत्यसंयुक्ता बर्हिर्देवसदनं दामीत्यादीनामर्थपरत्वाभावे लैङ्गिकविनियोगासम्भ वेन कर्मकालोच्चारणे प्रमाणाभावादव्यापकः पूर्वपक्षः स्यादि शङ्कते * कथं पुनरिति * परमतेन परिहरति * के चिदिति का तर्हि सन्देहविवरणभाष्यस्य गतिरत आह * अत इति * अत नैवैतदसेत्यन्वयः। प्रयोजनभाष्यमपि गमयति * यद्पीति * एवं त्वानर्थक्यापत्तेस्तस्य च सामान्योपयोगाभिधानेन प्रागेव निरा कृतत्वाद्भाष्यानार्जवापत्तेश्चापरितोषान्मतान्तरमाह * अथ वेति दर्शनं सम्प्रदायः समाचारः प्रसिद्धिरित्यनर्थान्तरं, ननु प्रसिद्धे स्मृतिरूपत्वेन निर्मूलायाः प्रामाण्यायोगात्सदसन्मूलत्वेन तामवि चार्य सिद्धवद्विशेषविचारो न युक्त इति शङ्कते * किमर्थमिति स्मृत्यधिकरणवक्ष्यमाणप्रामाण्यायाः सदाचाररूपायाः याज्ञिकप्र सिद्धेरसन्मूलत्वाशङ्का न युक्तेति परिहरति * तत्रेति * स्मृतिन्या येन शिष्टत्रैवर्णिकदृढपरिग्रहेणैषां मन्त्राणां प्रयोगित्वं दृढमवस्थित तस्य चानेन विचारेण मूलविशेषनिरूपणमित्यर्थः। याज्ञिकप्रसि द्धिबलेन कर्मकाले मन्त्रोच्चारणाभ्युपगमे पूर्वपक्षे ऽपि बर्हिर्लव नादावेव बर्हिर्देवेत्यादीनामुच्चारणापत्तेर्न नियोगतो बर्हिर्देवसद दामीत्येष बर्हिषां लवने विनियुज्यतेति भाष्यमयुक्तं स्यादित्यपरितो षात्स्वमतेनार्थपरत्वाभावे ऽपि कर्मकाले मन्त्रोच्चारणमुपपादयन्पूर्व पक्षमारभते * अथ वेति * नन्वदृष्टार्थत्वेनाप्यध्ययनविधिविहित स्याध्ययनस्य पुरुषार्थानुबन्धित्वोपपत्तेः कथं कर्मकाले मन्त्रोच्चार णाध्यवसानमत आह * तथा हीति * प्राकृताङ्गनिराकाङ्क्षाया विकृतेरुभयाकाङ्क्षालक्षणप्रकरणायोगात्तद्विषयं क्रमग्रहणं सर्वा ङ्गसाधारणनामस्य न्यायस्य दर्शयितुं यावच्छब्दः अङ्गत्वप्रतिपत्त्यु त्तरकालीनः फलेनोपकारत्वेन स्वीकारो ऽभिहितः। ननु श्रुत्ययु क्तानां मन्त्राणां क्रमप्रकरणापठितानां विध्यभावेन कैमर्थ्यानपेक्ष णादध्ययनविधौ च कर्मासन्निधानाद्विश्वजिन्न्यायेन स्वर्गार्थत्वाव सायात् गोदोहनादिवत्क्रमप्रकरणसंस्पर्शे ऽप्यङ्गत्वेन स्वीकारो न युक्त इत्याशङ्क्याह * मन्त्रेति * स्वीक्रियत इत्यनुषङ्गः वि-

र्थवादाध्ययनवदस्याप्यवैरूप्याय दृष्टार्थत्वाध्यवसानात्कर्मकालोच्चारणमात्रार्थत्वे ऽपि तदनपायात्साकाङ्क्षत्वेन क्रमिप्रकरणिभ्यां स्वीकारो युक्त इति भावः । ननु मन्त्रस्वरूपवत्प्रयाजादिवाक्यस्य स्वरूपस्यापि क्रमप्रकरणसंस्पर्शात्कर्मकालोच्चारणापत्तिरत आह * तत्रेति * कर्माङ्गभूतार्थाभिधानेन नैराकाङ्क्ष्यान्न तत्स्वरूपस्य क्रमप्रकरणसंस्पर्शे ऽप्यङ्गत्वेन स्वीकार इति भावः । मन्त्राणां तु प्रयाजादिवाक्यवत्कर्माङ्गभूतार्थानभिधायकत्वात्प्रधानवाक्यवच्च कर्मविधायकत्वस्य तच्छेषवद्वा स्तावकत्वस्य च द्वितीये निराकरिष्यमाणत्वात् अनुतिष्ठासितार्थस्मृतेश्च ध्यानादिना सिद्धेः साकाङ्क्षत्वेन क्रमप्रकरणाभ्यां स्वरूपस्यैवाङ्गत्वावसायाद्ग्रहणमित्याह * मन्त्राः पुनरिति * एवं तावन्मन्त्रस्वरूपस्य क्रमप्रकरणाभ्यामङ्गत्वावसायात्तस्य च निर्व्यापारस्याङ्गत्वायोगादवश्यकल्पोच्चारणव्यापाराङ्गीकरणात्कर्मकालोच्चारणसिद्धिस्तावन्मन्त्रे पर्यवसानं चोक्तम् । इदानीमध्ययनविधिनापि क्रमप्रकरणपाठार्थवत्त्वाय कर्माङ्गत्वमाक्षिपतोच्चारणं विना तदयोगात्कर्मकालोच्चारणमात्रं कल्प्यते । तावन्मात्रत्वेन ग्रहणसंस्कार्यत्वोपपत्तेर्मार्थाभिधानपर्यन्तत्वं कल्पयितुं शक्यमित्याह * स्वाध्यायेति * प्रयाजादिवाक्यानां तु कर्माङ्गभूतपदार्थविधानार्थत्वात्तस्य च शास्त्रार्थावधारणकालीनत्वेन कर्मकालोच्चारणानपेक्षत्वाददृष्टार्थोच्चारणकल्पनं न युक्तमित्याह * प्रयाजादीति * रूपग्रहणमेव प्रसक्तमित्यापातप्रतिभानमात्रेणोक्तं मन्त्राणां तु कर्मकालोच्चारणनिरपेक्षार्थानभिधायकत्वादवश्यम्भाविकर्मकालोच्चारणमित्याह * न त्विहेति * ननु कर्मकालप्रयोज्यानां मन्त्राणामर्थाभिधानार्थता प्रतीयमाना नापह्नोतुं शक्येत्याशङ्क्याह * शब्दे चेति * ध्यानादिनाप्यनुतिष्ठासितार्थस्मृतिसिद्धेरभिधानार्थत्वे कल्पनापत्त्यविशेषादुच्चारणाभिधानयोः किं विवक्षितमिति सन्देहप्राथम्यावश्यकत्वाभ्यामुच्चारणविवक्षैव न्याय्येति भावः । पूर्वपक्षमुपसंहरति * तस्मादिति * ननु भाष्यकृता तदेतदवगच्छाम उच्चारणमात्रेणोपकुर्वन्तीति पूर्वपक्षं प्रतिज्ञाय कुत इति प्रश्नपूर्वकं तदर्थशास्त्रादीनि कारणानि उक्तानि कस्मात्तत्परित्यागेन प्राथम्यावश्यकत्वादिकारणान्तरं भवतोक्तमत आह * तथा चेति * पूर्वोक्तन्यायेनाविवक्षितार्थत्वं सिद्धे तदर्थशास्त्रादीनि सूत्रभाष्यकाराभ्यां करणत्वेनोच्यन्ते लिङ्गमात्रत्वात्तेषां तस्य च न्यायप्राप्तार्थद्योतकत्वादिति भावः । परिहारसूत्रक्रमानुसारात्पश्चादुदाहार्य्यस्यादावुदाहरणमयुक्तमाशङ्क्य

हृ * परिहारेति * यथा साक्षइति भाष्ये साक्षत्वमवास्तवमेव प्र तीतिमात्रेणोक्तमिति व्याचष्टे * यथेति * नन्वर्थवादार्थमिति भा ष्यं विधिशेषत्वं विनार्थवादत्वायोगादयुक्तमाशङ्क्य व्याचष्टे * न न्विति * न हि येनेतिभाष्यमभिमतविपरीतार्थत्वादयुक्तमाशङ्क्य छित्वा व्याचष्टे * न हीति * न चेति भाष्यं व्याचष्टे * प्रदेशान्त-रस्थस्य त्विति * तथेत्युदाहरणभाष्यं व्याचष्टे * तथेति * देव-स्यत्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण च्छ-न्दसाददे ऽङ्गिरस्वदभ्रिरसि नारिरसि पृथिव्याः सधस्थादग्निं पुरीष्य-मङ्गिरस्वदाभर त्रैष्टुभेन च्छन्दसाददे ऽङ्गिरस्वदभ्रिरसि नारिरसि त्व-या वयं सधस्थे ऽग्निं शकेम खनितुं पुरीष्यं जागतेन त्वा च्छन्दसा ऽऽददे ऽङ्गिरस्वत् हस्तआधाय सविता बिभ्रदभ्रिं हिरण्ययी तयाज्योतिरजस्र-मिदमग्निं स्वान्वीनआभर आनुष्टुभेन त्वा च्छन्दसा ऽददे ऽङ्गिरस्वदित्ये-षां चतुर्णामपि मन्त्राणामाददइत्यभिधानसामर्थ्यादेवादाने प्राप्तत्वा-दित्यर्थः । भाष्यकृता चतुः संख्यालक्षणगुणविधानार्थं पुनः श्रवण-माशङ्क्यान्तरेणापि वचनं तेषु चतुःसंख्येत्युक्तं तदा दानाङ्गतया चतुःसंख्याविधानाभ्युपगमात्ताद्रूप्येण चाप्राप्तेरयुक्तमाशङ्क्य व्या-चष्टे * चतुःसंख्यापीति * अयमाशयः संख्या विधीयमाना योग्य-त्वात्परिच्छेदकतया विधीयते मन्त्रपरिच्छेदिका चेहासौ प्रतीयते न क्रिया परिच्छेदिकेति कारणमाह * न हीति * आश्रितवचनो गु-णशब्दः परिच्छेदार्थश्च गमिः नान्याश्रितो ऽन्यपरिच्छेदको भवती-त्यर्थः । क्रियाङ्गत्वमपि न सम्भवतीत्याह *न चेति* मन्त्राविधानान्ना-णैकहायनीन्यायः सम्भवतीति भावः । अतः क्रियाङ्गत्वासम्भवात् सम्भवतश्च मन्त्रपरिच्छेदकत्वस्य पाठादेव प्राप्तेर्वचनानर्थक्यमित्युप-संहरति * तेनेति * भाष्यकृता लिङ्गाद्विकल्पप्राप्तौ समुच्चयार्थं वचनमित्याशङ्क्य समुच्चयशब्दस्याभावादित्युक्तं तत्समुच्चयवाचि-शब्दाद्यभावे ऽप्यरुणैकहायनीवन्मन्त्रसंख्ययोः परस्परनियमात्स-मुच्चयासिद्धेरयुक्तमाशङ्क्य व्याचष्टे * क्रियेति * ननु विकल्पे म-न्त्राणां प्रत्येकमेकत्वाच्चतुःशब्दानुपपत्तिः स्यादित्याशङ्क्य पूर्वपक्षे विकल्पाप्रसक्तेनैष दोष इत्याह * अस्मत्पक्षे पुनरिति * अश्वा-भिधान्युदाहरणे भाष्यकृता रशनादाने प्राप्तत्वान्मन्त्रस्य विधानान-र्थक्यमुक्तं तदादानविधानेनार्थवत्त्वोपपत्तेरयुक्तमाशङ्क्य व्याचष्टे * उभयोरिति * नन्विति भाष्येण परिसंख्यार्थत्वमाशङ्कितं तदुभय-प्राप्तावेकविधेः परिसंख्याशब्दवाच्यत्वाद् गर्दभरशनायाश्चात्राविधे-स्तदयुक्तमाशङ्क्य व्याचष्टे * परिसंख्येति *

प्रवर्त्तेऽहमिति ज्ञानं येन शब्देन जन्यते ।
स चोदनोच्यते यद्वा प्रवर्त्तनफला मतिः ॥

इति संख्याशब्दव्याच्यायां बुद्धेरपि प्रवर्त्तनफलाया विधि-ाभ्युपगमात्परेश्च वर्जनार्थत्वाद् गर्दभरशनां वर्जनीयतया बोधय-त्युक्तं भवतीति भावः । न शक्नोतीति परिहारभाष्यं व्याख्यातु-ाह * सापीति * अश्वाभिधानीमादत्त इति वचनव्यक्तौ आदाने र्दभरशनायाः परिसङ्ख्या इत्यश्वाभिधानीमितिवचनव्यक्तौ मन्त्रे ान्मन्त्रमर्थादादानमित्यर्थः । ननु परिसङ्ख्यानङ्गीकरणे वाक्यस्य ा गतिरित्याशङ्क्याप्राप्तविधित्वात्पूर्वपक्षे न दोषः इत्याह * अद्द-र्थत्वे त्विति * ननु परिसंङ्ख्याया अपि वस्तुतो प्राप्तविधित्वान्न ष इत्याशङ्क्याह * यदि चेति * अश्वाभिधानीत्येकः शब्द इतीति ापरः तयोः सम्बन्ध इति द्वन्द्वगर्भः षष्ठीसमासः मन्त्राश्वाभि-नीसम्बन्धे सति दोषपरिहारः स्यान्न त्वसौ युक्त इति भावः । ो प्राप्तविधित्वेऽप्यादानवच्च मन्त्रविध्यापत्तेस्तस्य चोद्देश्यत्वे-श्वाभिधान्या विशेष्टुमशक्यत्वाल्लिङ्गप्राप्त्यवैलक्षण्याद्परिहार्य-नर्थक्यमित्याशङ्क्याह * तेनेति * आदानव्यक्तिभेदेऽप्यश्वाभिधा-ा विशेषणायोगादेकत्वमुक्तम् । ऐकरूप्येऽपि प्रकरणसंयोगभेदे ण्डापितृयज्ञे बर्हिर्वन्न धर्मान्वयः स्यात् प्रकरणसंयोगाविशेषेऽपि भिन्नापूर्वसंयोगे सति आज्यौषधसान्नाय्यवन्न धर्मसाङ्कर्यं त् न त्वेतदुभयमप्यस्ति प्रकृताग्न्यपूर्वसंयोगाविशेषादिति प्रकर-युक्तम् । अतो न प्रमाणमिति भाष्यं यद्युच्चारणमात्रेणेत्यनेन रुक्तमाशङ्क्य तस्योपक्रमगतत्वेन सङ्कल्प्यर्थत्वावधारणादस्य चोप-ारगतत्वेन प्रयोजनकथनार्थत्वात्परिहरति * प्रयोजनमिति * च प्रमाणशब्दप्रयोगान्मन्त्रप्रमेयार्थान्तरसिद्धिरपि पूर्वपक्षे चेता तथा हि ।

प्रयाजादिस्मृतिलिङ्गत्वमन्त्राणां वक्ष्यतेऽत्र यत् ।
देवताकल्पनं यच्च मान्त्रं तस्माद्यजिश्च यः ॥
मन्त्रवर्णाश्च यच्चोतुः पूर्वपानं वदिष्यते ।
मे देहीत्यात्मवादित्वान्मन्त्राणां याजमानता ॥
करणानामार्त्विजत्वेऽप्यङ्गसाध्यफलस्य यत् ।
स्वामिगत्वं क्रियार्थस्य कर्तृगत्वं च वक्ष्यते ॥
मन्त्रक्रमानुरोधाच्च ब्राह्मणक्रमबाधनम् ।
छागस्य नियमो यश्च पशावूहश्च मन्त्रगः ॥
तदर्थपरतायां स्यात्सर्वं नैवान्यथा भवेत् ।

सर्वसाधारणत्वेन विचारस्य प्रयोजनम् ॥
कर्मकाले नुसन्धेयो मन्त्रार्थो ऽर्थपरत्वतः ।
इषेत्वादिषु चोच्चार्य च्छिनद्मीत्यादिपूर्तये ॥
असावित्यादिशब्दस्य स्थाने यद्वादि नाम च ।
सिद्धान्ते मन्त्रलोपश्च प्रकाश्याभाव इष्यते ॥
यथाम्नानं प्रयोगस्तु केवलो ऽर्थाविवक्षणे ।
यदि त्वर्थपरत्वे ऽपि नैतावत् स्यात्प्रयोजनम् ॥
ततो धर्मप्रमाणत्वं मन्त्राणान्नैव सिद्ध्यति ।
लवनादिस्वरूपस्य प्रकाश्यत्वे हि धर्मता ॥
समीहिताङ्गताभावान्न कथं चित्प्रतीयते ।
अपूर्वसाधनत्वेन यद्यप्येतत्प्रकाश्यते ॥
विधिप्राप्तानुवादत्वान्न तथापि प्रमाणता ।
अपूर्वसाधनत्वाच्च लवनादौ समीहिते ॥
आत्मनो ऽङ्गत्वबोधेन मन्त्रः प्रामाण्यमश्नुते ।
अश्रुतद्रव्ययागादिकल्पनाच्च प्रमाणता ॥
स्फुटैवार्थपरत्वे स्यादिति सर्वमसूसुचन् ॥

नन्वर्थपरत्वाभावे विनियोजकप्रमाणाभावेनानङ्गत्वादप्रयो- एव स्यात्सद्भावे वा तद्वशात् तद्वचनस्थापत्तेर्विनियो- ाीकरणाद् बर्हिलवनसम्बन्धापह्नवो न युक्त इत्याशङ्क्याह तदा हीति * लैङ्गिकविनियोगाभावेनाङ्गसंबन्धाभावे प्राकरणिकप्रधानविनियोगात्तत्प्रयोगाबहिर्भावववर्त्तित्वमात्रव- यतइति भावः । कीदृशं तर्हि पूर्वपक्षे मन्त्रोच्चारणा- ानं स्यादित्यपेक्षयामाह * पाठेति * श्रुत्यसंयुक्तमन्त्राभिप्रायं तु इषेत्वादीनां छेदनादिषु विनियोगेनाङ्गकर्मानादरायोगात्सर्व- ो ऽप्येवमेव व्याख्येयः । सकृच्छब्देन लवनाद्यावृत्तावप्यनावृ- ृत्त्वा पठित्वेति च मुखं व्यादाय स्वपितीतिवत्पूर्वकालत्वानादरेण ानकर्तृकत्वमात्राभिप्रायेणोक्तम् । सिद्धान्तासम्भवे हेतुत्वेन वा- ानियमं व्याख्यातुं नियतेत्यादिभाष्यं व्याचष्टे * अग्निरिति * यक्षसाधनत्वेनैतमेव हेतुं व्याख्यातुमथेति भाष्यं व्याचष्टे * य- त्वेति * नन्वर्थपत्वे ऽपि नियमादृष्टसिद्ध्यर्थं पदक्रमनियमो ान्भविष्यत्यत आह * अथेति * प्रत्यायनक्रमनियमस्योच्चार- मनियमाधीनत्वात्प्राथम्यावश्यकत्वाभ्यां तस्मादेवादृष्टं युक्तमि- भावः । नन्वित्यादिभाष्येणार्थपरेष्वपि क्रमनियमदर्शनान्न तेना- विवक्षा साधयितुं शक्यतइत्याशङ्क्य विपर्यये ऽर्थप्रत्ययाभावात्

क्रमादर इत्युक्तम्। तदिन्द्राग्निपदे विपर्यये ऽप्यर्थप्रत्ययदर्शनाद्र क्रमाशङ्कोपलक्षणपरत्वेन व्याचष्टे *यस्त्विति* तुल्यन्यायत्वाद्ध ष्यानुपन्यस्तप्रकृतिप्रत्ययोपन्यासः। अथशब्दप्रसङ्गं विवृणोति *अज दीति* इन्द्रशब्दस्याजाद्यदन्तत्वनिमित्तः पूर्वनिपातो ऽजाद्यन्तमिं स्मर्यते नीलशब्दस्य विशेषणत्वाद्विशेषणं विशेष्येण बहुलमिति पूर्व निपातः राजशब्दस्य च षष्ठ्यन्तत्वात्षष्ठीति प्रथमानिर्दिष्टं समासउप सर्जनमित्युपसर्जनं पूर्वमितिपूर्वनिपातः। चित्रशब्दस्य विशेषणत्वा त्सप्तमीविशेषणे बहुव्रीहाविति पूर्वनिपातः। निःशब्दस्य निरादय क्रान्ताद्यर्थे पञ्चम्येति प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात्पूर्वनिपातः। आ दिशब्द उदाहरणान्तरस्यापि घिसंज्ञानिमित्तपूर्वनिपातप्रदर्शनार्थः अ तो भवति विपर्यये प्रत्येकं पदसाधुत्वे ऽपि समासस्यापशब्दत्वमि त्याह * तेनेति * इतिकरणः प्रभृत्यर्थः राजशब्दादेरप्युपसर्जनत्वा दिनिमित्तपूर्वनिपातस्मरणात्। नीलोत्पलराजपुरुषचित्रगुशब्दानां क्रमविपर्यये विशेषणविशेष्यभावान्यथात्वापत्तेरर्थान्यत्वमपि स्यादि- त्याह * पुरुषेति * इतिकरणप्रकारवचनः निष्कौशाम्बिशब्दस्य क्रमविपर्यये निष्क्रान्तः कौशाम्ब्या इत्यस्यार्थस्याप्रतीतेरर्थान्तरे च स- मासास्मरणादसाधुत्वमानर्थक्यं च स्यादित्याह * कौशाम्बिनिरि- ते * कथं तर्हि क्वचिदग्नीन्द्राविति प्रयोगो ऽत आह * यस्त्विति * नु प्रकृतिप्रत्ययादिष्वपशब्दत्वापत्तेर्विपर्ययानाश्रयणादत्राप्यमन्त्र- वापत्तेस्तदनाश्रयणं भविष्यतीत्याशङ्कते * नन्विति *अर्थपरत्वाभावे वयवार्थासम्भवात्समुदायप्रसिद्ध्या विशिष्टक्रमकपदसमहात्मकवा ग्यविशेषस्य मन्त्रत्वावधारणाद्विपर्यये युक्तममन्त्रत्वं सति त्वर्थपरत्वे ानार्थान्मन्यतेर्मनोतेर्वा गुपूविपतिवचियमिमनितनिसन्दिच्छदि- यस्त्रन्नित्यौणादिके त्रन् प्रत्यये कृते मन्त्रशब्दव्युत्पत्तेर्विपर्यये ऽप्यर्थज्ञा- कत्वानपायान्मन्त्रत्वन्न नश्यतीति परिहरति * तदेवेति * एतमेव रिहारं सूत्रारूढं करोति *तेनेति* येन कारणेनार्थपरत्वे विपर्यये पेमन्त्रत्वं न हीयते तेन मन्त्रत्वप्रसिद्धौ प्रयोजनभूतायां विशिष्टपद- मसमूहात्मकं वाक्यनियमादित्यपि सूत्रं योज्यमित्यर्थः। सूत्रैकदेशे स्मादावर्त्तते सूत्रमितिवत्सूत्रशब्दप्रयोगो ग्रामैकदेशे ग्राम आयात ते प्रयोगदर्शनात्। यद्वाध्याहारानौचित्यमाशङ्क्य सूत्रत्वाददोष ते हेतुत्वेनोक्तम्। प्रसङ्गादपरं व्याख्यानत्रयमाह * अथ वेति * द्रशास्त्रव्याख्यानार्थं बुद्धेः खल्वपीत्यादिभाष्यं अविरुद्धदृग्विषयप्रे- ऽर्थवत्त्वसम्भवादयुक्तमाशङ्क्याह * न हीति * ज्ञाते च वाचनं यविद्वान्विहितो ऽस्तीति तृतीयाधिकरणवक्ष्यमाणन्यायेनाविदुषो

ामानवद्यार्थविज्ये ऽप्यनधिकारादित्यर्थः । नन्वित्याशङ्काभाष्यं
व्यष्टे * अथेति एवमिति * परिहारभाष्यं स्मृतिहेतुसंस्कारो-
ध्यक्ताभिधानार्थत्वेन दृष्टार्थत्वस्योक्तत्वात्पूर्वपक्षानापत्तेरयुक्त-
ङ्कानभिमतमपि वचनशब्दस्योच्चारणार्थत्वे संस्कारशब्दस्यापू-
त्वमापाद्यैतदुक्तमिति व्याचष्टे * तदपीति * नन्वपूर्वात्मको
संस्कारो ऽर्थाभिधानाद्भविष्यतीति मन्त्रस्य दृष्टार्थत्वानपायात्
पूर्वापक्षापत्तिरत आह * यदि हीति * अविद्यमानवचनव्या-
ार्थं यज्ञ इत्यादिभाष्यं व्याचष्टे * चतुःशृङ्गादीति * ननु
गाह्रुत्या चतुश्शृङ्गादिरूपस्य यागादेर्विद्यमानत्वात्कथमविद्यमान-
त्वमत आह * यद्यपि चेति * तस्य गौणरूपस्यानुष्ठानाभा-
प्रतिपादनमदृष्टार्थं स्यादित्यर्थः। यज्ञप्रकाशने च तस्य विततत्वेन
विशेषानवधारणात्पाठक्रमानुरोधेनोच्चारणापत्तेः पूर्वपक्षसि-
स्यादित्याह * न चेति * मामाहिंसीरित्यस्याचेतनवेदिविष-
द्चेतनार्थबन्धनोदाहरणत्वं युक्तं न त्वविद्यमानवचनोदाहर-
ाहिंसनस्य विद्यमानत्वादीत्याशङ्क्याह * मामेति * प्रस-
न्वात्तदपेक्षस्य प्रतिषेधस्याविद्यमानतेत्यर्थः । अचेतनार्थबन्ध-
व्याख्यानार्थमचेतने खल्वपीत्यादिभाष्यमर्थशब्देन संबोधनं प्रेषणं
नत्तामिति प्रतिपादयेयुरिति वदन्नाहेति व्याचष्टे *औषध इति*
प्रतिषेधव्याख्यानार्थमर्थैत्यादिभाष्यं व्याचष्टे * द्वित्वमिति *
देवतात्वात्तद्विपरीतमेकैकमपि रूपं विप्रतिषिद्धमितिस्वयम-
व्याचष्टे * कथं वेति * ननु स्तुत्यर्थमविद्यमानस्यापि गु-
ान्चारेणाभिधानोपपत्तेरेकस्यानेकरूपत्वं देवतायाश्च देवतान्त-
रमिति हेतुद्वयं परिहरिष्यत्यत आह * न चेति * स्वाध्या-
वाच्यानि मन्त्राक्षराणि यथाध्ययनकाले ऽभ्यस्यन्ते नैवमर्था-
र्मिति स्वाध्यायवदवचनव्याख्यानार्थं स्वाध्यायकालइत्यादि-
ान भ्यासमात्रेणाविवक्षावगमस्याशक्यत्वादयुक्तमाशङ्क्य व्या-
* स्वाध्यायेति * अभिधेयार्थसन्निधिनिमित्ताभिधानानाद-
नराकरणार्थं पूर्णिका ऽवहन्ति करोतीति भाष्यकृतोक्तम् ।
त्यादिभाष्यमर्थविशेषानभिधायित्वेन मन्त्राणामविज्ञेयत्वप्र-
ार्थमम्यक्सात इत्यादिष्विन्द्रस्तुतिरूपवाक्यार्थज्ञानादयुक्त-
ाह * केचिदिति * सामान्यतो वाक्यार्थज्ञाने ऽप्यम्यगा-
ज्ञानात्सकलस्य मन्त्रस्यार्थवत्त्वं न सिद्ध्यतीति भावः । सृ-
ादीनां तु वाक्यार्थो ऽपि न ज्ञायतइत्याह * केषांचित्वि-
ननु श्रोतुरप्रतिपत्तावपि मन्त्रस्याभिधायकत्वन्न विरुद्ध्यते

अन्धस्येव रूपाप्रतिपत्तावपि प्रदीपस्य प्रकाशकत्वादत आह *
न चेति * यदेकान्तेन कर्त्तुं शक्यमुच्चारणं तदेव मन्त्राणां कार
मित्यर्थः । कचित्तु यदेकान्तेन कार्यमुच्चारणं तदेव शक्यमिति
पाठः तत्र यदेकान्तेन पक्षद्वये ऽप्यनुष्ठेयमुच्चारणं तदेव मन्त्राण
कार्यमवधार्यते शक्यमिति कृत्वेति योज्यम् । अनित्यसंयोगव्या
ख्यानार्थमनित्यसंयोगः खल्वपीत्यादिभाष्यं कुसीदवृत्त्यादिनित्यार्थ
सम्भवादयुक्तमाशङ्क्याह * अर्थेति * यस्य मन्त्रस्य यो ऽर्थः स्व
रसतः प्रतीयते स एव तेन कर्मकाले प्रकाशनीयो नोत्प्रेक्षामात्रक
ल्पित इत्यर्थः । अतो भवत्यर्थपरत्वे केषु चिन्मन्त्रेष्वनित्यसंयोग
इत्याह * केचिच्चेति * अनित्यस्यार्थस्याकर्माङ्गत्वेन प्रकाशनानर्हत्वा
त्तत्संयोगस्यार्थाविवक्षाहेतुत्वोपपादनाय कर्माङ्गभूतैरित्युक्तम् । अ
नित्यसंयोगोदाहरणं व्याख्यातुमाह * यथेति * नाशिरं दुह्रे
यन्ति धर्मआनोभर प्रमगन्दस्य वेदो नैचाशाखं मघवत् रन्धयान
ति मन्त्रशेषः ऋषिप्रत्ययाधीनत्वादर्थतश्च निर्णयस्यार्षकथनम् ।
पहारसामर्थ्यद्योतनार्थं त्रैलोक्यैश्वर्यवचनं किं कृतेनेति वदन्त
ति कीकटशब्दनिर्वचनम् । तप्ते घृते पयोनिक्षेपेण निस्यन्दिते य-
च्छुष्कं तद्धर्मशब्देनोच्यते । भृञ् भरणइति भौवादिकस्य भृञो
ात्वन्तरेणार्थकथनं व्याख्यानार्थम् । डुभृञ् धारणपोषणयोरिति
होत्यादिकस्य भृञो रूपं बिभृहीति दर्शितं यदीत्यानित्यसंयोगोप-
हारभाष्यं व्याचष्टे * यद्येतदिति * नन्वनित्यसंयोगपरिहारायाा-
न्तरमस्य मन्त्रस्य वक्ष्यामो ऽत आह * न चेति * अर्थाविवक्ष-
ाप्यनित्यसंयोगपरिहारसम्भवान्नाप्रतीयमानार्थकथनं युक्तमित्या-
ायः । मन्त्रानर्थक्यप्रतिज्ञाव्याख्यानार्थं तदेतैरिति भाष्यं व्याचष्टे
* अत इति *

## अविशिष्टस्तु वाक्यार्थः ॥ ४० ॥

सिद्धान्तसूत्रव्याख्यानार्थमविशिष्टस्त्वितिभाष्यं प्रतीतिमा-
ण विवक्षानुपपत्तेरयुक्तमाशङ्क्योपपादयति * मन्त्रेति । अयमा-
ायः * मन्त्रोच्चारणस्य कर्म्माङ्गत्वं प्रयाजादिवत्साक्षाद्वाऽभ्युपग-
ते प्रोक्षणादिवद्वा मन्त्रद्वारेण साक्षादप्यङ्गत्वं प्रकरणेन वा
ादध्ययनविधिसामर्थ्येन वा न तावत्प्रकरणेन कर्म्मप्रकरणे मन्त्रो-
ारणस्याविधानात् स्वाध्यायाध्ययनविधिना यथाम्नानवेदाध्यय-
विधानात्कर्मप्रकरणपठितानां तत्रैवाध्ययनं विदधता कर्मप्रकरणा-

१ प्रोक्षणादीनामवघातादिद्वारा यथा परम्परया कर्माङ्गता तद्वदिति ।

ध्ययननियमार्थवत्त्वाथ तदङ्गत्वमाक्षिपतोच्चारणं विनाङ्गत्वायोगा
त्कर्मकालोच्चारणविधिकल्पने कृते कैमर्थ्यापेक्षायामुच्चारणस्य क
र्माङ्गत्वमाक्षिप्यतइति चेत् न । मन्त्राङ्गत्वनिर्वाहाय कल्पितस्योच्चा
रणस्य मन्त्राक्षराभिव्यक्तिमात्रेण निराकाङ्क्षस्य साक्षात्कर्माङ्गत्वा
योगात् । नापि मन्त्रद्वारेणोच्चारणस्य कर्माङ्गत्वं मन्त्राक्षराणाम
क्रियारूपत्वेन प्रकरणाग्राह्यत्वात् यथोक्तम् ।

नावान्तरक्रियायोगादृते वाक्योपकल्पितात् ।
गुणाद्द्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः ॥

इति अध्ययनविध्याक्षिप्तस्याप्यङ्गत्वस्य स्वव्यापारं विनानुपपत्तेरु
च्चारणस्य पुंव्यापारत्वेनाभिधानमन्तरेणानिर्वाहात् । अत एव श्रुतिवि
नियुक्तानामपीषेत्वादीनामभिधानं विनाङ्गत्वानुपपत्तिः । न च पदार्था
भिधानव्यापारमात्रेणाङ्गत्वं कर्मानुष्ठानानौपयिकत्वेन तस्य वाक्यार्थ
मात्रप्रतिपादनमात्रे पर्यवसानात् । अतः प्रकरणावधारिताङ्गभावानां म
न्त्राणां कर्मानुष्ठानौपयिकवाक्यार्थप्रतिपादनव्यापारेणाङ्गत्वावसाय
त्कर्मकाले मन्त्रोच्चारणार्थस्यार्थाभिधानपर्यवसानासिद्धिरिति कर्म
समवेतानुष्ठास्यमानार्थस्मृतिफलत्वेनेति करणामन्त्राभिप्रायं क्रियमा
णानुवादिनामनुष्ठीयमानार्थस्मृतिफलत्वात् । अनुमन्त्रणादीनां
कृताकृतप्रत्यवेक्षणायानुष्ठितार्थस्मृतिफलत्वात्प्रोत्साहनार्थानां चाग्
नमस्वः संज्योतिषा भूमेत्यादीनां यदेव श्रद्धया करोति तदेव वीर्यव
त्तरं भवतीति वाक्यावधारितकर्माङ्गभूतश्रद्धाजननार्थमनुष्ठेयकर्म
स्मृतिफलत्वात्स्तोत्रशस्त्रमन्त्राणां चारादुपकारकत्वं स्तुत्यर्थत्वेन क
र्मसमवेतार्थप्रकाशनानियमात् । एवं च कर्मौपयिकार्थाभिधानार्थत्वे
प्रकरणपाठार्थत्वोपपत्तेर्नादृष्टकल्पना युक्तेत्याह * अतश्चेति * न
प्रकारान्तरेणाप्यनुष्ठेयार्थस्मृतिसिद्धेर्मन्त्रनियमस्यादृष्टार्थत्वं त्वत्प
ऽपि कल्प्यमत आह * यद्यपि चेति * लिङ्गाच्च दृष्टार्थतावगते
दुर्बलप्रमाणवशेनादृष्टार्थत्वं कल्पयितुं शक्यमित्याह *अवश्यं चेति
ननु प्रकरणबाधे सामान्यसंबन्धाभावात्तत्सापेक्षत्वेन लिङ्गस्यापि
नियोजकत्वं स्यादत आह * न चेति * नात्र प्रकरणावगम्यकर्त
संबन्धाख्यसामान्यसंबन्धो बाध्यते विरोधाभावाद् द्वारविशेषसंब
न्धे तु विरोधः तत्र च प्रकरणस्य शक्तिरूपलिङ्गसापेक्षत्वात्तद्बाध्य
त्वं युक्तमेवेत्याशयः । दृष्टार्थत्वेनाविरोधान्न कस्य चिद् बाध इत्या
* तस्मादिति * अभिधानार्थत्वाभावे च निर्व्यापाराणां मन्त्राणां

१ उच्चारणेनाभिव्यक्तानामित्यर्थः ।

२ मन्त्रव्यापारत्वाभावात् अतो ऽर्थाभिधानलक्षण एव मन्त्रव्यापारः ।

णग्रहणायोगादुच्चारणं व्यापारद्वारेण प्रकरणग्रहणे तस्यानुष्ठा-पिथिकत्वेनाभिधानवत्कर्मविधिनानाक्षेपादविधानाच्चोच्चारणे-ण प्रकरणग्रहणं प्रकरणग्रहणाच्चोच्चारणमितीतरेतराश्रया-रुच्चारणविधिकल्पनं विना कर्मकालोच्चारणकर्त्तव्यतायां प्र-णाभावाद्याज्ञिकाचारदर्शनेनोच्चारणविधिकल्पने क्लेशः स्यादित्य-तरन्यासेनाह * एवं चेति * उपसंहरति * अत इति * नैव-माशङ्काभाष्यं व्याचष्टे नैवमित्यभिधानार्थत्वे ऽप्यसमवेतार्थप्रका-स्याहष्टार्थत्वापरिहारात्तत्पर्यन्तत्वकल्पनं न युक्तमित्याशयः। त-यतइति परिहारभाष्यं व्याचष्टे * तत्रेति * ततश्च वचनान्नैषा-रार्थं प्रयुज्येतेत्यसमवेतस्यापि समवेतविशेषणत्वेनाभिधानस्य न-वक्ष्यमाणत्वाद्विशिष्टरूपप्रकाशनस्याहष्टार्थत्वापरिहारात्तात्पर्य-कमनुष्ठितमभ्युदयकारि भवतीति नियमादृष्टकल्पनेन न्याभिधा-र्थत्वोपपत्तेः काममित्युक्तं तस्मादस्तीत्युपसंहारभाष्यं व्याचष्टे तस्मादिति * नन्वस्तु श्रुत्यविनियुक्तानामुक्तेन न्यायेनार्थप्राधा-श्रुतिविनियुक्तानां त्वर्थप्राधान्ये ऽभ्यादानादिमन्त्राणां लिङ्गा-विनियोगासिद्धेस्तदर्थशास्त्रानर्थक्यं स्यादत आह * तां चतु-रिति * इतिकरणो ऽत्र मन्त्रविनियोजकश्रुतिमात्रपरिग्रहार्थः। तुर्भिरितितृतीयया मन्त्राणां करणत्वे ऽभिहिते स्वव्यापारं विना योगात् उच्चारणस्यात्तद्व्यापारत्वात्कर्मोत्पत्त्यनुपयोगित्वाच्च व्यापारकर्मोत्पत्त्युपयोग्यभिधानव्यापारेण करणत्वाध्यवसायाच्च-भिरभ्यादानमभिदध्यादिति वाक्यार्थावगमे ऽइति करणविनियु-नामर्थक्रियारूपत्वेन कथम्भावाग्राह्यत्वात् द्रव्यदेवतावक्रियो-त्युपयोगित्वावगतेः कारकत्वावसायात्करणव्यतिरिक्तकारकत्वा-पपत्तेः करणत्वानिश्चये सति पूर्ववदभिधानार्थत्वासिद्धेः स्तोत्रश-मन्त्राणां च स्तौतिशंसतिभ्यामेवाभिधानार्थत्वावसायात्तां चतु-भिरादत्तइत्यादिश्रुतिविनियोज्येष्वभ्यादानादिमन्त्रेषु तदर्थशास्त्रान-र्थक्यप्रसङ्गायोगेनाप्यर्थप्राधान्यमविहतमित्यर्थः। अनेन च नन्वि-त्याशङ्काभाष्यस्य काममित्युत्तरभाष्यं व्याख्यातं अथेत्याशङ्कानिरा-करणार्थत्वेन।

## गुणार्थेन पुनः श्रुतिरिति ॥ ४१ ॥

सूत्रमवतारयितुं न हीति भाष्यं व्याचष्टे * वदामइति *

१ उत्पत्त्यपूर्वानुपयोगित्वात् द्रव्यदेवताप्रकाशकस्यैव कर्मोत्पत्त्यनुपयोगित्वमन्यस्य तु फ-लापूर्वोपकारित्वम्।

नन्विति प्रोक्तामाशङ्कामनुभाष्य चतुःसंख्याविशिष्टमिति भा
रिहृतं तदादानस्यापीष्टकाम्रुच्चयनार्थमर्थात्प्राप्तेगुणार्थेनेति
विरोधादयुक्तामित्याशङ्क्य व्याचष्टे * यद्यपीति * अर्थप्र
दाने संख्याविधौ भवत्यादानसंख्याविशिष्टतेत्यर्थः । विशिष्ट
ष्ट्यभावादरुणैकहायनीन्यायानुपपत्तेः अर्थप्राप्तस्य चादान
धत्वेनैकविधावितरेण विशेष्टुमशक्यत्वाल्लिङ्गतश्चैकैकस्यैव
प्राप्तेः । संख्यानाकाङ्क्षत्वात्समुच्चयासिद्धेरपरितोषात् प
णार्थत्वप्रतिपादनपरत्वेनान्यथा व्याचष्टे * अथ वेति *

परिसंख्या ॥ ४२ ॥

अत्र भाष्यंकृता परिसङ्क्षाणे चेति पूर्वोक्तदो
भाष्य लिङ्गाप्राप्तमन्त्रादानसम्बन्धविधानानर्थक्यापत्तेः ।
स्यात् तदप्राप्तमन्त्राश्वाभिधानासम्बन्धविधानात्तु नैव
क्तिरिति नैवमित्यादिना स्वार्थहानिं परिहृत्य लिङ्गादित्यादि
परिच्छिन्ने ऽर्थे लिङ्गस्याविनियोजकत्वाद्गर्दभरशनासम्बन्धा
सबाधः प्राप्त्यभावादेव च गर्दभरशनान्नेति प्रतिषेधायोग
कल्पनाभाव इति दोषत्रयं परिहृतम् । तत्र प्राप्तबाधपरि
तावदृजुत्वाद्व्याख्यातुमाह * यावद्धीति * नन्वप्रामाण
नाम रशनामात्रे मन्त्रविनियोजकश्रुतिः कल्प्यतां लिङ्गादेः
नियोगस्सेत्स्यत आह * नचेति * उक्ते ऽर्थे भाष्ये यो
तदेतदाहेति * श्रुत्यभिप्रायो भाष्ये वाक्यशब्दः स्वार्थहा
भाष्यमिदानीं व्याचष्टे * यदपीति * गर्हार्थेनापिशब्देन
स्य भाष्यस्य सूचितं सामान्येनेत्यभिप्राय इति शाकपार्थिव
ध्यमपदलोपी समासः सामान्यशब्देन निर्विशेषणत्वमुक्तं
दाने मन्त्रस्य सम्बन्धो विधीयते येन लैङ्गिकप्राप्तिः । सम्ब
शास्त्रानर्थक्यप्रसक्तेः स्वार्थहानं स्यादित्यर्थः । किमित्येवं
यते इत्यपेक्षायां यतः क्रिययैव मन्त्रस्य सम्बन्धो युक्तः इ
रेण योज्यम् । तदेव कुत इत्यपेक्षायां कारकाणां साक्षात्स
म्बन्धाभावादित्युक्तं तेनादानसम्बन्धनिराकरणभाष्यस्याय
तीत्याह * तस्मादिति * का तर्ह्यश्वाभिधानीमिति
म्बन्धप्रतिपादकस्य भाष्यस्य गतिरत आह * किं तर्हीति * द्वि
कर्मशक्त्याक्षिप्तविशिष्टक्रियासम्बन्धविवक्षयेदमुक्तमिति भ
व्याख्यायमाने विशिष्टानुवाददोषापत्तेरपरितोषादश्वाभिधा

---

१ क्लिष्टत्वञ्च मन्त्राश्वाभिधान्योः कारकयोः संबन्धप्रतिपादनात् ।

न्त्रविशिष्टादानविध्युत्तरकालं परस्परनियमलभ्यकारकसम्बन्धा-
प्रायेणान्यथा व्याचष्टे *अथ वेति* नन्वश्वाभिधानीविशिष्टे ऽप्यादा-
रशनादानत्वाविशेषेण लैङ्गिकमन्त्रप्राप्तिसम्भवात्तदर्थशास्त्रत्वम-
रेहतं स्यादत आह *सर्वथेति* परिसंख्याफलत्वेनायं दोषः परिहार्य
प्राशयः। नन्वश्वाभिधान्यां मन्त्रविशिष्टादानविधौ वर्जनबोधकत्वा-
वान्न परिसंख्यात्वं स्यादित्याशङ्कते * नन्वेवमिति * परिहरति
फलेनेति * न चैवमौपचारिकत्वापत्तिः फलत एव परिसंख्या-
पदेशादित्याह * सर्वत्र हीति * प्रसङ्गान्नियमव्यपदेशो ऽपि
लेनैवेति दर्शयितुं नियमग्रहणं परिसंख्या वर्जनबुद्धिस्तदर्थो नञा-
: परिसंख्याशब्दः तस्माद्वा ब्राह्मणो न हन्तव्यो नेक्षेतोद्यन्तमादि-
मित्यादीनामेव श्रुत्या परिसंख्यात्वं निषेधपर्युदासव्यपदेशविशे-
त्तु व्यवहारासिद्धेः न परिसंख्याव्यपदेशः सत्यमेव वदितव्यमि-
दीनामेवकाराच्छ्रुत्या नियमत्वम् । अन्यत्र तु फलेनैव नियमप-
संख्याव्यपदेशः । ननु प्रोक्षणादावप्यौदासीन्यनिवृत्तिकर्त्तव्यता-
यमदर्शनादवघातादौ चाप्राप्तप्रापणाद्दलनादिनिवृत्तिदर्शनादिमा-
गृह्णन्नित्यादावपि चाप्राप्तप्रापणकर्त्तव्यतानियमदर्शनात् फलतो
पदेश तत्सङ्करात् विध्यादीनां सङ्करप्रसङ्ग इत्यभिप्रायेण पृच्छति
कस्तर्हीति * फलासङ्कराभिप्रायेणोत्तरमाह * उच्यतइति *
ोक्तं व्याचष्टे * विधिरेव हीति * को ऽसौ विशेष इत्यपेक्षाया-
ह * तत्रेति * विधेयस्वरूपप्राप्तेरेवात्र फलत्वसम्भवान्न तत्र नि-
ौदासीन्यनिवृत्त्योर्विप्रकृष्टयोः फलत्वं युक्तमिति भावः। अवघाता-
तु नियमताफलत्वान्नियमव्यपदेशमाह * यत्र त्विति * ननु
ाप्यर्थाक्षेपात् प्रागेव प्रत्यक्षेण विधिनावघातादेरप्राप्तस्यैव विधेः
रूपप्राप्तिरेव फलं स्यादत आह * तण्डुलेति * नन्वर्थतः प्राप्तिस-
वान्माभूत्प्राप्तिमात्रस्य फलत्वम्। अप्राप्तांशपूरणवत्त्वन्यनिवृत्तेरपि
ीयमानायाः कस्मान्न फलत्वं स्यादत इत्याह * तदप्राप्तीति । अ-
ाशयः * अप्राप्तांशपूरणात्प्रागुपायान्तराक्षेपस्य निराकर्त्तुमश-
त्वात्तन्निवृत्त्यनुपपत्तेः उत्तरकालं चानुनिष्पादितत्वेन सिद्धेर्न प्र-
जनापरपर्यायमन्यनिवृत्तेः फलत्वं युक्तमिति । प्रसिद्धनियमव्य-
शहान्यापत्तेरपि नास्याः फलत्वमित्याह * न चेति * अविधेय-
त्वेन च विप्रकृष्टत्वान्नान्यनिवृत्तिः फलमित्याह * प्रत्यासन्नं चे-
* नन्वन्यनिवृत्तेः फलत्वाभावे विध्यनिवारितत्वादुपायान्तरा-
मप्याक्षेपः प्रसज्येतेत्यत आह * तत्प्रसक्तीति * अन्यनिवृत्तिं वि-
नियमानुपपत्तेर्नान्तरीयकान्यनिवृत्त्यवगतेरुपायान्तराक्षेपवारण-

मित्याशयः । यदि चाऽक्षिप्तेषूपायान्तरेष्वयं विधिः प्रवर्त्तेत ततः शास्त्रमन्तरेण प्राप्तोपायान्तरनिवृत्त्ययोगाच्छास्त्रस्यैवान्यनिवृत्तावपि तात्पर्यकल्पना स्यान्न त्वेतदस्ति श्रुतिकल्पनं विनार्थाक्षेपस्याप्राप्तत्वेन मन्थरत्वाच्छीघ्रप्रवृत्तेन प्रत्यक्षेण विधिनैवैकोपायनियमे नैराकाङ्क्ष्येणार्थाक्षेपानुपपत्तेः। प्रापकाभावादेवोपायान्तरनिवृत्तिसिद्धेर्न शास्त्रस्य तत्पर्यन्तं व्यापारः कल्प्यतइत्यभिप्रायेणाह * न चेति * उपसंहरति * सा चेति * उभयोस्तु नित्यप्राप्तौ पुनर्वचनस्य स्वरूपप्राप्तिनियमफलत्वायोगेनान्यनिवृत्तिफलत्वात्परिसंख्याव्यपदेश्यत्वमित्याह * यत्पुनरिति * प्राप्तइति सप्तम्यास्तत्र चान्यत्र चेति सप्तमीभ्यां वैयधिकरण्येनान्वये तत्र चान्यत्र च प्राप्नुयादित्यर्थो भवति सामानाधिकरण्ये तु तच्चान्यच्चेति । यथासंख्येनोभयत्रोदाहरणमाह * यथेति * चातुर्मास्येषु साकमेधपर्वणि पूर्वेद्युर्गृहमेधीयेष्टिं विधाय श्रुतमाज्यभागौ यजति यज्ञताया इत्युदाहृत्य दशमेऽष्टधा चिन्तयिष्यते तत्रातिदेशप्राप्तयोराज्यभागयोरनुवादमात्रमेतादित्याद्यः पक्षः, द्वितीयस्त्वानर्थक्यपरिहारायोभयत्र विहितयोराज्यभागयोरिहाभ्युदयकारित्वकल्पनया प्रकृतिवदित्थं कर्त्तव्यमित्युपदेशातिदेशाभ्यां संहृत्य विधिरिति तृतीयस्तूभाभ्यां विधानस्यादृष्टार्थत्वापत्तेर्यज्ञताया इति च स्तुतिदर्शनात् प्रकृतगृहमेधीयस्तुत्यर्थमिति चतुर्थस्तु गृहमेधीयविध्येकवाक्यत्वाभावेन तत्प्रशंसार्थत्वायोगात् यज्ञताया इत्याज्यभागस्तुतिप्रतीतेरनन्यपरं पुनः श्रवणमाज्यभागधर्मककर्मान्तरविधानार्थमिति। पञ्चमस्त्वाज्यभागशब्दस्य धर्मलक्षणार्थत्वापत्तेः कर्मान्तरविध्ययोगादतिदेशेनाज्यभागयोः प्रयाजादिषु च प्राप्तेष्वाज्यभागपुनःश्रवणमन्यपरिसंख्यार्थमिति सोऽयमिह दर्शितः। षष्ठस्तु चोदकप्राप्तेः प्राथम्यात्फलतः परिसंख्यानुपपत्तेस्त्रिदोषत्वापरिहारादुपदिष्टाज्यभागवर्जमतिदेश इति सप्तमस्त्वखण्डकरणोपकारातिदेशद्वारेण युगपत्सर्वपदार्थप्राप्तेस्तद्वर्जनपक्षस्य तृतीये चोदनार्थकार्त्स्न्यात्तु मुख्यविप्रतिषेधात्प्रकृत्यर्थमित्यत्र निराकृतत्वादाज्यभागयोरेवातिदेशापसंहार इति । इममपि पक्षमतिदेशस्य क्रत्वर्थपदार्थविशेषगोचरत्वेन सामान्यविधिरस्पष्टः संह्रियेत विशेषत इत्युपसंहारायोग्यत्वान्निराकृत्य क्लृप्तोपकारप्राकृताज्यभागानिराकाङ्क्षत्वेनातिदेशाभावाद् गृहमेधीयस्यापूर्वत्वज्ञापनार्थमिदं वचनमिति सिद्धान्तो वक्ष्यते। नन्वन्यनिवृत्तिफलत्वे परिस-

१ लिङ्गरूपसामर्थ्येनाक्षेपः ।

२ विधेः फलम् । नियमविधिफलम् ।

नेवृत्तेः प्राप्तिपूर्वकत्वात्प्राप्तमन्त्रविषयत्वापत्तेः त्रिदोषत्वं-
र्ं स्यादत आह * अत्रापि चेति * नन्वेवं सत्यानुमानिक-
तेबन्धकफलत्वेनार्थवत्त्वोपपत्तेर्न गर्दभरशनानिवृत्तिफलत्वं
ाह * सर्वस्येति * अप्राप्तविधित्वे ऽपि फलतः परिसं-
विस्तरेणोक्तम् । सुखग्रहणार्थं सफलयति * तेनेति *
ानिरूपणस्य तदर्थशास्त्रतापरिहारोपयोगितामाह * इत्य-
ादिति *

र्थवादो वा ॥ ४ ३ ॥

नन्विति * भाष्येण ब्राह्मणाम्नातस्य वाक्यस्य मन्त्रप्रदेशा-
ाविशेषलिङ्गप्रकरणानुमितविधिशेषत्वाभावादर्थवादत्वं न
ा प्रागुक्तां शङ्कामनुभाष्य नायमित्यादिना मन्त्रस्तुत्यसम्भवे
ास्तुतिर्भविष्यतीति परिहृतं तद्व्याचष्टे *यद्यपीति* प्रथ-
मत्वेनाविधेयत्वात् । स्तुतिरयुक्तेति शङ्कते * ननु चेति *
ा * नैतदिति * आनर्थक्यात्तर्ह्यविधेयं प्रथममत आह *
ेवेति * अस्तु वा नियोगतः प्राप्तिस्तथाप्यर्थाक्षेपात्प्रागध्व-
ग्रसिद्ध्यर्थं विधिरर्थवान् भविष्यतीत्याह * एवं चेति *
ति * तस्मादिति * मन्त्रः पुनरिति भाष्यमवतारयितुमा-
ः एवमपीति * एतदाशङ्कानिराकरणार्थत्वेन व्याचष्टे
* कथं मन्त्रोपादानेन प्रथनस्तुतिरित्यपेक्षायां स्तुति-
नार्थमित्थमिति भाष्यं व्याचष्टे * प्रथनमिति * प्रसङ्गाद्य-
ानं पुरोडाशप्रथनस्य फलत्वेन कीर्त्यते स्तुत्यर्थं चेति जिज्ञा
ामेतदिति पृष्टं तद्व्याचष्टे * किमिति * फलत्वेन मन्त्रार्थ-
न्धानमनेकयजमानकेषु च विकारेषु यजमानशब्दवद्यज्ञप-
ाेह इति जिज्ञासाप्रयोजनम् । नेति ब्रूम इत्युत्तरभाष्यम-
ाप्रायेण तावत् व्याचष्टे * नेत्याहेति * एवं तु मान्त्रवर्णि-
ञ्पनसम्भवेन यज्ञपतिप्रथनस्य फलत्वानपायात्पर्याभयाधि-
नेराकृतत्वेन च जिज्ञासानुपपत्तेरपरितोषान्मन्त्राभिप्रायेण
* मन्त्रो ऽपि त्विति * [1]करणविभक्तिनिर्देशाभावे ऽपि
र्चो विहवेष्वस्त्वितिपूर्वमग्निं गृह्णातीत्यादिषु तृतीये किमु-
ातया वर्चःप्रभृतिफलमाशास्यं यजमानगामितया चेति वि-
नेन फलकल्पनाभ्युपगमादिति करणावगतक्रियासंबन्धा-

[1] ऽत्रापि करणविभक्त्यैव विनियोगः ननु उरु प्रथस्वेति अयमपि करणमन्त्रः न
।

न्यथानुपपत्तिकल्पितकरणतान्वयसिद्ध्यर्थं श्रुतार्थापत्त्या करणविभक्तिकल्पनमभिप्रेत्य करणविभक्तिविनियुक्तानामित्युक्तम् । कथमित्यादिना भाष्यमाक्षिपति * कथमिति * कस्येति कर्मणि षष्ठी किंविषये इत्यर्थः । समाधानं प्रतिजानीते * उभयथा ऽपि त्विति * पुरोडाशप्रथनविषयत्वमङ्गीकृत्य प्रश्नं तावदुपपादयति * अस्तु तावदिति * सो ऽयं याज्ञिकमतानुसारीत्यर्थः * स्वसिद्धान्तेनेति* निष्प्रमाणकत्वं सूचितम् । उत्तरमुपपादयति * तत्रेति * यस्त्वयमध्वर्युकर्तृकः पुरोडाशविषयः प्रयोजकव्यापारात्मकः प्रथनरूपो ऽर्थो नास्तीत्युक्तः स यद्यपि पूर्वमेव कृतत्वादिदानीं नास्त्येव न वर्त्तते तथापि यथा सत्ता वर्त्तमानता भवति तथा मन्त्रेणोच्यतइत्यर्थः इत्थम्भूतलक्षणे सत्तयेति तृतीया । ननु पुरोडाशकर्त्तृकः प्रयोज्यव्यापारो मन्त्रेणानुष्ठेयतयोच्यते नाध्वर्युकर्त्तृकः प्रयोज्यव्यापारं वर्त्तमानतयेत्याशङ्क्योपपन्नः शब्दार्थ इत्युक्तम् । अनुष्ठातृरूपप्रयोजकव्यापारानभिधाने ऽपि प्रेषणात्मकप्रयोजकव्यापाराभिधानादुपपन्नः प्रथयतिशब्दार्थ इति भावः । अनेन च यज्ञेत्यादिभाष्यं व्याख्यातं लिङ्गान्मन्त्रस्य प्रथनाङ्गत्वावगतेरभिमर्शनकाले प्रयोज्यत्वानुपपत्तेरपरितोषात्पुरोडाशप्रथनविषयएवान्यथाभाष्यं व्याचष्टे *अथवेति * अस्मिन्पक्षे कथमसत्यनुक्ते पुरोडाशकर्त्तृके प्रयोज्यव्यापाररूपे प्रथने प्रयोजकव्यापारवाची प्रथयतीतिशब्द इति प्रश्नभाष्यार्थः । उत्तरभाष्यं व्याचष्टे * तदुपपादयतीति * प्रतीकेनैकदेशेन गृहीतो यो मन्त्रस्तेनोपात्तः प्रयोज्यव्यापारो यस्मिन्ब्राह्मणे तत्प्रथयतीति प्रयोजकव्यापारं विधत्तइत्यर्थः । यज्ञेति भाष्यं प्रथस्वेति प्रेषणरूपे प्रयोजकव्यापाराभिधानेन प्रयोज्यव्यापाराभिधानानुपादानादस्मिन्पक्षे ऽनुपपन्नमाशङ्क्य प्रयोज्यव्यापारोपादानपरतया व्याचष्टे * यज्ञेति * नन्वेतयान्नाद्यकामं याजयेदित्यादिषु प्रयोज्यव्यापारानुपादाने ऽपि प्रयोजकव्यापारोपादानदर्शनात्तत्पूर्वकत्वनियमो नास्तीत्युत्तरं कस्मान्नोक्तमत आह * यद्यपि चेति * अर्थक्रमानुसारिशब्दक्रमनियमादर्शनेनास्याभिप्रायस्यातितुच्छत्वात्प्रश्नोत्तरभाष्ययोश्चोभयोरप्यनार्जवापत्तेरपरितोषात्स्वमतेनार्थवादगतयज्ञपतिप्रथनप्रश्नविषयतया व्याचष्टे * अथ वेति * अत्रैवोत्तरभाष्यं व्याचष्टे * तदभिधीयतइति * नन्वस्मिन्पक्षे मन्त्रेणेत्यादिभाष्यं पुरोडाशप्रथनाभिधायित्वादयुक्तं स्यादत आह * मन्त्रेणेति * नन्वेवं तर्ह्युरु ते यज्ञपतिः प्रथतामिति ब्रवीति यज्ञोरु ते यज्ञपतिः प्रथतामिति ब्रूत इति च वक्तव्यमत आह * प्रथस्वेत्ययमिति * त

एवं भाष्यार्था भवतीत्याह * यज्ञैवमिति * यज्ञोरु ते यज्ञपतिः
प्रथतामिति शब्दोच्चारणेन यज्ञपतिं प्रथयतीत्यर्थः। कथं शब्दोच्चा-
रणमात्रेण प्रथनकर्तृत्वं स्यादत आह * गुणवादादिति * प्रेषण-
रूपप्रयोजकव्यापारकर्तृत्वमुत्पादनरूपप्रयोजकव्यापारकर्तृत्वेनोपच-
र्यतइत्यर्थः। यद्वा तत्करोति तदाचष्टे इत्याख्याने ऽपि णिजुत्पत्ति-
स्मरणान्मुख्यवृत्तित्वेन प्रथनाख्यानात्प्रथयतिशब्दोपपतिरित्याह
* अथ वेति * एवं व्याख्याने यज्ञपतिप्रथनस्य फलत्वाभावे निरा-
लम्बना स्तुतिर्न युक्तेत्याशङ्कोत्थानात्पूर्वग्रन्थसङ्गतिः समञ्जसेत्येत-
देव व्याख्यानमभिप्रेतम्।

अविरुद्धं परम् ॥ ४४ ॥

यदुक्तमिति भाष्येणार्थपरत्वे विशिष्टपदक्रमसमूहात्मकवा-
क्यनियमार्थक्याशङ्कानुभाषणार्थत्वेन परमिति सूत्रावयवं व्याख्याय
नाममित्यादिना परिहारार्थत्वेनाविरुद्धमिति सूत्रावयवो व्याख्या-
तस्तस्य तात्पर्यमाह * दृष्टार्थेति * क्रमान्यत्वे ऽप्युच्चारणाविशेषा-
दागमाद्दृष्टान्तरं विनोच्चारणक्रमनियमानर्थक्यापत्तेरदृष्टद्वयकल्प-
नात्पूर्वपक्षे गौरवमित्याशयः। वाक्यनियमहेतोर्व्याख्यानान्तरेष्व-
प्येतदेव सूत्रं परिहारार्थत्वेन योजयति * एतेनेति * एतेन निय-
मादृष्टकल्पनायामपि दृष्टार्थस्याविरोधेनादृष्टार्थहेतुत्वेन मन्त्रत्वादि-
नियमो निराकृत इत्यर्थः। एतदेव विवृणोति * सत्स्वपीति *

सम्प्रैषे कर्मगर्हानुपालम्भः संस्कारत्वात् ॥ ४५ ॥

अथेति भाष्येण बुद्धशास्त्रानर्थक्याशङ्कानुभाषणार्थत्वेन सम्प्रै-
षे कर्मगर्हेति सूत्रावयवं व्याख्याय तन्नेत्यनेन च परिहारप्रतिज्ञार्थ-
त्वेनानुपालम्भ इति सूत्रावयवं व्याख्याय कर्त्तव्यमित्यनेन च हेतुप्र-
तिपादनार्थत्वेन संस्कारत्वादिति सूत्रावयवं व्याख्याय पुनरुपाया-
न्तरेणापि सा प्राप्नोतीत्यन्यथापि स्मृतिसिद्धेरानर्थक्यमाशङ्क्याने-
नोपायेनेत्यनेन भाष्येणादृष्टसंस्कारत्वादित्यावृत्त्या स एव व्याख्या-
तस्तत्सर्वं तात्पर्यतो व्याचष्टे * येयमिति * संस्कारत्वादिति सूत्रा-
वयवं स्वयमन्यथा व्याचष्टे * अथ वेति *

अभिधाने ऽर्थवादः ॥ ४६ ॥

चत्वारीत्यादिभाष्येणाविद्यमानवचनपरिहारार्थत्वेन तावदे-
तत्सूत्रं व्याख्यातम्। तत्र कस्य स्तुतिः किमर्था वेत्यपेक्षायामाह

* चत्वारीति * अस्मिंस्तु व्याख्याने प्रदेशविशेषापरिज्ञानान्मन्त्र
स्यादृष्टार्थत्वापत्तेरपरितोषाद्विनियोगानुसारेण स्वयमन्यथा व्याच
* होत्रे त्विति * हौत्रं प्रवचनमृग्वेदः तद्विहितानां मन्त्राणां नं
त्साहकरत्वं यजुर्वेदविहितानामेव केषांचित्तथात्वदर्शनादिति वच
हौत्रग्रहणं विषुवन्नामैकाहविशेषः तत्रातिदेशतश्च चत्वार्याज्यसं
कानि शस्त्राणि होतृमैत्रावरुणब्राह्मणाच्छंस्यच्छावाकप्रयोज्या
प्राप्तानि । तत्रान्येषामनाग्नेयत्वाद्धौतृविशेषणम् । ततः किमि
चेदत आह * तस्येति * आग्नेयं होताज्यं शंसतीति श्रुतिर्हौतुर
ज्यस्याग्नेयत्वं सूर्यदेवत्यं ह्येतदहरिति श्रुतेर्विषुवत्संज्ञकस्याह्न आ
त्यदेवतत्वमातिदेशप्राप्तानेकैन्द्रवाय्वादिदेवतात्वान्न वस्तुवृत्त्याऽऽ
त्यदेवतत्वमस्तीतिं कृत्वा संस्तवादित्युक्तं तेजस्त्वादिसामान्यं च
दित्यधर्माणामग्नावुपचारस्यालम्बनं स्तोत्रशस्त्राणामदृष्टार्थत्वात्क
समवेतदेवतानादरेणाव्यक्तलिङ्गत्वादस्य मन्त्रस्यास्येति च सर्वना
युक्तत्वात्सन्निहिताग्निस्तुत्यर्थत्वावधारणं यज्ञसमृद्धयइत्यादि
ष्येण एतदेव सूत्रमचेतनार्थबन्धनपरिहारार्थत्वेनाप्यौषध्यादावचे
नचैतन्याभिधानेनार्थवादत्वं परिहार इत्यावृत्त्या व्याख्यातम् । तत
रणमन्त्राणामदृष्टसाधनस्तुत्यर्थत्वानुपपत्तेरयुक्तमाशङ्क्याह * ए
मिति * अविद्यमानवचने यथा स्तुतित्वं परिहारः एवमचेतना
बन्धनेऽप्यनेन स्तुतित्वमात्रेण कर्मसाधनस्मृतिपरिहार इत्यर्थ
कर्मसाधनस्मृत्यर्थस्यापि मन्त्रस्य विशेषणांशे स्तुत्यर्थत्वोक्ति
भावः । सकलस्य तर्हि मन्त्रस्य कारणत्वं न सिद्ध्येदित्याशङ्क्या
तावदित्युक्तम् । करणमन्त्रोच्चारणे कर्मसाधनस्मृतिस्तावद्भवति
तत्राकर्मसमवेतार्थाभिधायिनामपि पदानां समवेतार्थपदशेषत
स्मृत्यर्थत्वोपपत्तेः सकलस्य मन्त्रस्य करणत्वसिद्धिरित्याशयः ।

## गुणादविप्रतिषेधः स्यात् ॥ ४७ ॥

यस्त्वर्थविप्रतिषेधः शङ्कितः स गौणत्वात्परिहर्त्तव्य इत
सूत्रं व्याख्यातुमदितिरित्यादिभाष्यं व्याचष्टे * अदितिरिति
स्तुतिविषयत्वाद्गौणत्वस्य स्तुतित्वस्य चार्थवादाधिकरणव्युत्पादि
स्याप्यौदुम्बराधिकरणविधित्वशङ्कानिराकरणेन प्रतिष्ठानादौदु
राधिकरणवदित्युक्तम् ।

## विद्यावचनमसंयोगात् ॥ ४८ ॥

यत्त्वित्यादिना भाष्येण विद्याकाले सन्निहितस्याप्यर्थस्य
वचनमनभिधानं तत्तस्य कर्मानङ्गत्वाद्युक्तमिति सूत्रं व्याख्यात

गनुपन्यासादयुक्तमाशङ्क्याह * यद्यपीति * व्याचष्टे * * नन्वित्यादिना प्रागुपन्यस्ताभिधानानभ्यासाशङ्का ऽनु- ं परिहृता तद्व्याचष्टे * तदनभ्यासस्त्विति *

तः परमविज्ञानम् ॥ ४९ ॥

व्याख्यानार्थे विद्यमाने ऽपीति भाष्यं व्याचष्टे * यस्त्विव- काप्रयुक्तपदार्थस्य केनापि ज्ञातुमशक्यत्वात्कथं सत्त्वाव- ाङ्क्य निगमेत्यादिभाष्यकृतोक्तं तद्व्याचष्टे * तत्र चेति * र्थे पदान्तरसामानाधिकरण्यादियोग्यता प्रकरणं प्रक्रमः त्र लोकवेदयोरर्थज्ञानोपायत्वं प्रसिद्धम् । सूक्तं देवताज्ञा- ङ्क्षायामृचि देवताज्ञानहेतुत्वेनार्थज्ञानोपायः । आर्षज्ञान- भवं सूर्यश्चेत्यादावस्मदर्थज्ञानहेतुत्वेनार्थज्ञानोपायत्वं नि- प्रसिद्धमेवार्थज्ञानोपायत्वम् । सूक्तदेवतादिस्मरणाद- ामर्थज्ञानोपायत्वं विदुषामभिमतमिति निश्चीयतइत्याह ाति * ननु स्वार्थज्ञानस्योपायत्वे भूतांशो नाम ऋषिर्जराम- ायाश्विनौ तुष्टावेत्येवमार्षस्योपाख्यानादनित्यसंयोगे नित्य- पद्येतात आह * यथैवेति * ननु लोपविकारादीनामु- वेनापारमार्थिकत्वात्पदानित्यत्वापादकत्वन्न जातमार्षे तु शङ्क्यार्षस्याप्युपायत्वेनाङ्गीकारेण तत्परिहारमाह * तत्रे- रमार्थिकत्वे ऽपि वा मन्त्राणामृषिकृतत्वाभावात्प्रयोगस्य रूपेण सर्वदा सद्भावान्न वेदानित्यत्वापादकत्वमित्याह ति * ननु वृद्धव्यवहारावगतपदार्थानुसारेणैव मन्त्रार्था- भवान्नास्मदादीनां ऋषिप्रत्ययबलेन मन्त्रार्थप्रतिपत्तिरित्या- ः प्रत्ययेति * आर्षस्मरणादेरदर्शनात् ऋषिसम्प्रदायानुसा- न्त्रार्थतत्त्वावधारणं भवति नान्यथेति भावः।सृण्येव जर्भरी तु- र्तौ शेव तुर्फरीपर्फरीका उदन्यजेव जेमना मदेरूता मेजरा स्वज- ाति मन्त्रार्थतत्त्वावधारणायार्षोपाख्यानं दर्शयति *तत्रेति* चः सूक्तादित्वाभावात् उभा उ नूनं तदिदर्थयेथे इत्यादिनैका- सूक्तेन सृण्येवेत्यादिनोपमानरूपेणाश्विनौ स्तुतवानिति व्या- भाष्यकारेण च द्विवचनान्तत्वादाश्विनोरभिधानानीत्युक्त्वा ाादिष्वपि द्विवचनोपपत्तेः कथमश्विपरत्वनिर्णय इत्या- ाकरणायाश्विनोः काममित्युक्तं तद्व्याचष्टे * भूतांश इति* ख्यापरतया देवताभिधानानि चेत्यादिभाष्यं व्याख्यातुमाह । * चत्वारः पादा द्वौ दन्तौ शुण्डा च पुच्छं वेत्यष्टावङ्गा-

नि कस्य चिज्जन्तोः पिपासायामनुत्पत्तेस्तत्र जातावित्युक्तम
ङ्क्य चातकयोः पिपासाकालः प्रावृडिह लक्ष्यतइति प्रावृषि ज
वित्युक्तं कथं जेमनशब्देनोदकवत्त्वमुच्यतइत्याशङ्क्योदकवाचिनो
मशब्दस्य पामादिषु पाठाल्लोमादिपामादिपिच्छादिभ्यः शने
इति यथासंख्यन्यायेन पामादिभ्यः परो विहितो नप्रत्ययो जेम
ब्दात्परो भवतीत्युक्तम् । मे इतिषष्ठ्याः शरीरसम्बन्धजनितत्वं
र्शयितुं मे शरीरमित्युक्तम् । पदार्थान्व्याख्याय वाक्यार्थं व्याच
तेनेति * एवं सर्वत्रेति भाष्येणोत्तरयोरपि मन्त्रयोः सूचितां व
ख्यां वक्तुमभ्यक्सात इन्द्रऋषिरस्मे सनेम्यश्वं मरुतो जुनन्ति
ग्निश्चिद्धिष्मा ऽतसे शुशुक्वा नापो नद्वीयं ददाति प्रयान्सीत्येत
ऋच्यार्षोपाख्यानं तावद्दर्शयति * अभ्यगिति * मरुत्वत्गुणक
द्रस्य देवतात्वं वक्तुं विनियोगं दर्शयति * इयं चेति * छन्दोम
ह्नाकानां त्रयाणामह्नां मध्ये द्वितीये ऽह्नि मरुत्वतीयसंज्ञके शस्त्रे
सि त्वामिन्द्र यत एतानीति सूक्तमिति श्रुत्या विनियुक्तेत्यर्थ
पदार्थास्तावद्व्याचष्टे * तत्रेति * अकारस्य छान्दसवर्णव्यत्य
कारादभ्यगिति रूपसिद्धिः चिच्छब्दस्येवार्थे प्रयोगादुपमाना
हिस्मेतिपदयोः पदपूरणार्थत्वादर्थाकथनम् ।नकारस्येवार्थत्वकथ
याप इवेत्युक्तम् । द्वीपं पुलिनम् । वाक्यार्थं व्याख्यातुमाह *
क्यार्थे त्विति * द्वीपमन्नाद्यानि चेति चकारो ऽत्र कल्पः । एव
प्रतिधापि वत्साकं सरांसि त्रिंशतं इन्द्रः सोमस्य काणुकेत्यृचं व
चष्टे * एकयेति * कान्तं प्रियं कमुदकं सोमं रसात्मकं येषु त
कान्तकानि । सर्वत्र शब्दसूचितां मन्त्रान्तरव्याख्यां दर्शयि
भाष्यं व्याचष्टे * तदेवमिति *

उक्तश्चानित्यसंयोगः ॥ ५० ॥

यस्त्वनित्यसंयोगः शङ्कितः स परं तु श्रुतिसामान्यमित
सूत्रे प्रत्युक्त इति । सूत्रव्याख्यानार्थं परं त्विति भाष्यं व्याचष्टे *
रमिति * श्रुतिसामान्यमात्रतां दर्शयति * यजमानस्तावदिति
प्रमगन्दनैचाशाखशब्दयो राजनगरविशेषसंज्ञत्वे सत्यनित्यसंयोग
त्तेरन्यथा व्याख्यानम् ॥

लिङ्गोपदेशश्च तदर्थवत् ॥ ५१ ॥

तदर्थशास्त्रादीनि पूर्वपक्षलिङ्गानि परिहृत्य सिद्धान्ते लि
त्रयं दर्शयितुं सूत्रत्रयम् । तत्र तेषां मन्त्राणामर्थो यथा ऽस्ति त
लिङ्गोपदेशो भवतीति सूत्रव्याख्यानार्थमाग्नेय्येति भाष्यं व्याच

आग्नेय्येति * लिङ्गशब्दस्य सामर्थ्ये मीमांसकानां प्रसिद्धत्वात्त-
द्तप्रतिपादिताग्निदेवत्यत्वकल्पितं देवताभिधानसामर्थ्यं लिङ्गश-
न विवक्षितमिति व्याख्यानान्तरं लिङ्गशब्दस्योक्तं तृतीया चेत्थं-
तलक्षणार्था । नन्वविवक्षितार्थत्वे ऽप्यभिधानमात्रेणाग्निलिङ्गत्व-
पपत्स्यते ऽत आह * देवतेति * ननु देवतात्वमप्यभिधानमात्रेण
त्स्यत्यत आह * यं चेति * एकदेवत्ये मन्त्रे त्वां हिमं इत मम-
र्शोकैरित्यादावनेकेन्द्रवाय्वादिदेवतान्तरपदप्रयोगे सत्यप्यनेक-
त्यव्यपदेशाभावादित्यर्थः । नन्वस्तु नामात्राग्नेः प्राधान्येनाभि-
नं तात्पर्यं तु नास्तीत्याशङ्क्याह * प्राधान्येति *

ऊहः ॥ ५२ ॥

भाष्यकारेणोहश्च तदर्थवदिति पूर्वसूत्रगतपदद्वयानुषङ्गेणेदं
त्रमूहदर्शनं चेत्यनेन व्याख्याय वेदे क्व चिदूहः कार्य इत्यश्रवणा-
रूमूहदर्शनमिति पृष्टे न माता वर्द्धते न पितेत्यूहप्रतिषेधस्यैवाप्रा-
प्रतिषेधायोगेनोहप्रापकत्वात् मात्रादिविशेषोपादानसामर्थ्येन वा
ब्दान्तरोहप्रतीतेरूहदर्शनमित्युत्तरे दत्ते मात्राद्यर्थस्येह वृद्धिप्रतिषे-
त्कथं शब्दोहप्रापकत्वमित्याशङ्कानिराकरणार्थं वृद्धेः प्रत्यक्षत्वेन
तेषेद्धुमशक्यत्वाच्छब्दवृद्धिप्रतिषेध इति प्रत्यक्षमिति भाष्येणोक्तं
द्व्याचष्टे * ऊहदर्शनमिति * शब्दवृद्धेरपि वर्णान्तरोपजननादि-
पपत्तेः । तस्यार्थपरत्वे ऽपि वचनमन्तरेणाप्राप्तेर्न सिद्धान्तिलिङ्गत्व-
ति प्रतिपादनार्थं का पुनरिति भाष्येण पृष्ट्वा यद् द्विवचनबहुवच-
संयोग इत्युक्तं तद्व्याचष्टे * तत्रापीति * वर्णान्तरोपजनने पदा-
रत्वापत्तेरपदत्वापत्तेर्वा तत्पदवृद्ध्यसम्भवात्स्थौल्यादेश्च नादध-
त्वेन वर्णेष्वसम्भवाद् द्विवचनबहुवचनान्तत्वेनाधिकार्थद्वारा
दवृद्धिरूहात्मिकेह प्रतिषिद्ध्यतइत्यर्थः । ऊहदर्शनस्य सिद्धान्त-
ङ्गत्वं भाष्योक्तमुपपादयति * स चेति प्रसक्तत्वादिति भावः ।
त्रादिशब्दोहदर्शनस्य सिद्धान्तलिङ्गत्वमुपपाद्य शब्दान्तरोहदर्श-
योपपादयति * या चेति * अर्थपरत्वे च कल्प्यते इत्यनुषङ्गः ।
न्वेडानिगदगतयज्ञपतिशब्दवन्मात्रादीनां पारार्थ्याद्[2] पारार्थ्ये ऽपि
कैकमात्रादिसंबन्धे पशुभेदो ऽपि मात्रादिशब्दोहस्यानाशङ्क्यत्वा-
ात्रादिभेदे ऽप्येकपशुसंबन्धाभावात् संबन्धिभेदेनैव भेदसिद्धेः
ायादेवानूहावगतेः प्रतिषेधायोगात्कथं तद्बलेनोहप्राप्तिरत आह

१ तस्य वास्तुत्वयैलात्पारार्थ्यम् ।
२ पश्वर्थत्वादित्यर्थः ।

* यद्यपीति * न्यायसिद्धानुवादस्यापि प्रयोजनापेक्षायां न्यायरहितेषूहप्राप्तिरेव प्रयोजनमवसीयतइति भावः । अविवक्षितार्थत्वेः सिध्येदित्याह * अन्यथेति * ऊहदर्शने स्वयमुदाहरणान्तरमाः * तथेति * त्वं ह्यग्ने प्रथमो मनोतेति मनोता सूक्तस्य वायव्ये पशावतिदेशप्राप्तस्योहः प्रसक्तो ऽनेन वचनेन वार्यते । उदाहरणान्तरमाह * एवमिति * गवादिपशुके अतिदेशप्राप्तस्य छागस्य वपाया मेदसो ऽनुब्रूहीति मन्त्रस्योहप्रसक्तौ उस्रादिपदयुक्तस्यार्थपरत्वे छागपदस्थाने ऽस्य प्रयोगपाठः अपर्यायान्तरनिवृत्त्यर्थः । अर्थवान् भविष्यतीत्यर्थः । नन्वर्थपरत्वे ऽप्युस्रादिपदनियमस्यादृष्टार्थपरिहारात् केन विशेषेणाविवक्षितार्थता निराक्रियते इत्याशङ्क्याविवक्षितार्थे कल्पनागौरवमाह * इतरथेति *

विधिशब्दश्च ॥ ५३ ॥

भाष्यकारेण विधिशब्दश्च तदर्थवदिति पूर्वसूत्रगतपदानुषङ्गेण सूत्रं व्याख्याय शतं हिमा इति मन्त्रगतहिमाशब्दव्याख्यानार्थं शतं वर्षाणीत्यर्थवाद उदाहृतः । तत्र विधिशब्दानुपपत्तिमाशङ्क्याह * विधिरेवेति * सिद्धान्तमुपसंहरति * तस्मादिति *

इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिमाधवभट्टात्मजभट्टसोमेश्वरविरचितायां सर्वानवद्यकारिण्यां न्यायसुधाख्यायां तन्त्रवार्तिकटीकायां प्रथमस्याध्यायस्य द्वितीयः पादः समाप्तः ॥



# ॥ न्यायसुधायाम् ॥

## प्रथमाध्यायस्य तृतीयपादः

॥ अथ स्मृतिप्रामाण्याधिकरणम् ॥ १ ॥

### धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥ १ ॥

अत्र भाष्यकारेण सङ्गतिप्रदर्शनार्थमेवं तावदिति वृत्तमनुकीर्त्तितं तच्च नामधेयप्रामाण्यस्यानुक्तत्वादयुक्तमाशङ्क्य व्याचष्टे * एवं तावदिति * अयमाशयः नामधेयानां विध्युद्देशान्तर्भावात्स्यंश एव वेदः कृत्स्नश्चासावर्थवादाद्यनुपयोगनिराकरणेन प्रमाणतया साधितः । नामधेयाधिकरणे तु विधिस्तुतिस्मृतिवन्नामधेयत्वमपि प्रामाण्यद्वारं भवति वा न वेति चिन्तयिष्यते । नामधेयस्य धर्मप्रयोगाभावात्त्वानर्थक्येन पूर्वपक्षकरणं नामधेयं रूपाभिप्रायम् गुणविधित्वेनापि उद्भिदादिपदानां दध्यादिपदवत्प्रामाण्योपपत्तेः स्वरूपेणाप्रामाण्यं शङ्कितुं युक्तम् । न चैवमुभयथापि प्रामाण्यसिद्धेः प्रमाणलक्षणासङ्गतिः शङ्कनीया । को धर्मः कथं लक्षणश्चेत्येकेनैव सूत्रेण व्याख्यातं चोदनालक्षणोऽर्थो धर्म इत्यत्र कथमिति प्रकारवचने थाल्प्रत्ययप्रयोगेण प्रामाण्यप्रकारविशेषनिरूपणास्यापि प्रतिज्ञासूत्रार्थत्वेनोक्तत्वात् । अन्यथा हि किंलक्षण एवावक्ष्यत् अत एव स्मृतिविचारस्यापि सङ्गतिः । अनवगतस्वरूपस्य हि वेदस्य प्रामाण्यायोगात्स्वरूपावगतिः प्रामाण्यप्रकारः । तत्र किं प्रत्यक्षावगतिरेव प्रकारोऽथ स्मृत्याचारद्वारेणाप्यवगतिरिति प्रामाण्यप्रकारविशेषनिरूपणरूपत्वास्मृतिविचारस्यापि सङ्गतिः सिद्धा अतः स्मृत्याचारद्वाराया अपि चावगतेः सत्याः प्रामाण्यप्रकारत्वस्य निराकर्त्तुमशक्यत्वात्सैव सम्भवति न वेति इह चिन्त्यते । यद्वा स्मृत्याचारावगतानामपि कर्मणां परिग्रहदार्ढ्यात् धर्मत्वावगतेश्चोदनैवेत्यवधारणाक्षेपेण सङ्गतिः तत्समाधानार्थमेव चेह चोदनामूलत्वमस्ति न वेति चिन्त्यते । चोदनाशब्दस्य वा प्रत्यक्षाप्रत्यक्षचोदनासाधारण्यादप्रत्यक्षचोदनानां च स्मृत्या चारोपस्थापनं विना

प्रामाण्यायोगात् स्मृत्याचारप्रामाण्यमपि प्रतिज्ञातं भव
तिः । जिज्ञासासूत्रेण वा सकलधर्मप्रमाणजिज्ञासा
धानाच्चोदनासूत्रप्रतिज्ञातवेदप्रामाण्यप्रतिपादने पर्यव
दार्थप्रसिद्धादीनामपि प्रसिद्धं(प्रामाण्यं ययोः स्मृत्याच
द्धप्रामाण्ययोः स्मृत्याचारयोरपि) प्रामाण्यमिह चिन्त
तत्तावच्छब्देन सूचितम् । वेदस्य तावदुपयोगः सा
ऽन्यस्यापि साधयितव्य इति प्रतीतेः परतः प्रामाण्या
माण्यस्य प्रथमपादएव निराकृतत्वे ऽपि प्रामाण्यप्रकारा
माण्यमाशङ्क्य प्रकारविशेषनिरूपणं द्वितीयपादेन कृत
शब्देनोक्तम् । अथेदानीमिति भाष्येण वर्त्तिष्यमाणसङ्गः
वेदमूलकत्वनिबन्धनत्वात्स्मृतिप्रामाण्यस्य वेदप्रामाण्या
स्मृतिप्रामाण्यविचारसङ्गतिरथशब्देनोक्ता। प्रत्यक्षवेदग
विचारात्पूर्वं स्मृतिविचारानौचित्यमाशङ्क्य कस्याश्चित्
यमूलत्वाभावेन तदनपेक्षत्वान्महोक्षं वा महाजं वा श्रो
ल्पयेदित्यादिस्मृतेस्तु तद्यथैवादौ मनुष्यराजआगते ऽ
त्युक्षाणं वा वेहतं वा क्षदन्त इत्याद्यर्थवादमूल
दन्नमात्मन इत्यादिस्मृतेश्च केवलाद्यो भवति केवल
न्त्रमूलत्वात्तत्प्रामाण्ये प्रतिपादिते नामधेयविचारात्पू
माण्यं वक्तुमुचितमिति सूचयितुमिदानीमित्युक्तम् ।
र्शनपरतया तावद्व्याचष्टे * इदानीमिति * पौरुषेयीषि
माण्यहेत्वभावो दर्शितः । स्मर्यमाणो ऽर्थो ऽवधिर्मय
नार्थमतिक्रम्य तस्य प्रमाणमपि विषयीकुर्वन्तीत्यस्मर
स्मर्यमाणार्थविधिष्वित्यनेनोक्तम् । एतच्चाप्रामाण्योप
णद्वयम् । अस्मर्यमाणार्थावधिष्विति पाठे त्वितः प्रभृत
प्रवृत्तेत्यस्मर्यमाणो ऽर्थस्यावधिर्यासामिति षष्ठीतत्पुरुषग
सिद्धान्तोपयोगिविशेषणं मन्वादिप्रणीतो ग्रन्थो निबन्
मिति शिष्टप्रणीतत्वं मन्वादिप्रणीतनिबन्धनास्वित्यनेन
योगिविशेषणमुक्तम् । आचारग्रहणेनाशब्दत्वपूर्वपक्ष
मान्यसिद्धान्तहेतुसाम्यादाचाराणामप्यधिकरणविषयत्व
ननु यत्रेत्यादिभाष्येणैव विषयावगतिसिद्धेः तत्स्वरूपग
शेषस्यात्राविचार्यत्वादष्टकादिस्वरूपोदाहरणं व्यर्थमित्या
तत्रेति * स्वरूपगतविशेषाविचारे ऽप्युदाहरणविशेषं वि
त्त्यभावादष्टकाद्युदाहरणमिति भावः । मन्वादिस्थानां स

१ अयं पा० २ पु० ना० ।

न्येन ज्ञातुमशक्यत्वात्कथं विचाराविषयत्वमित्याशङ्क्य तद्ग्रन्थसमर्पितानीत्युक्तम् । विषयप्रदर्शनार्थतया भाष्यं व्याख्याय सन्देहहेतुश्चानेन भाष्येणाभिधीयतइत्याह * सन्देहेति * कथमित्यपेक्षिते पूर्वपक्षप्रतिभानार्थत्वेन यत्रेति भाष्यं व्याचष्टे * पारतन्त्र्यादिति * सिद्धान्तप्रतिभानार्थत्वेनाथ वेति भाष्यं व्याचष्टे * अप्रामाण्येति * श्लोकं विवृणोति * मन्वादीति * (शब्दानामर्थपरत्वे स्वतः प्रामाण्ये च सत्यपि वक्तृज्ञानानुमानं विनार्थाभावव्युदासरूपपरिच्छेदाख्यविज्ञानानुत्पादकत्वाद् ज्ञानमात्रस्य च प्रामाण्याभावाद्वक्तृज्ञानानुमानद्वारा विज्ञानोत्पादकत्वावगतेर्मन्वादिवचनस्य स्मृत्यपेक्षतोक्ता भाष्यकृता । आचाराणामप्युदाहरणत्वसिद्ध्यै वाक्यानुदाहरणे ऽपि पूर्वोत्तरपक्षहेतुसाम्यात्तेषामप्युदाहरणत्वोपपत्तिसूचनार्थं वचनोक्तः[1]) । तदुच्यतइति पूर्वपक्षभाष्यं व्याचष्टे * तत्रेति * पूर्वविज्ञानं मूलप्रमाणं तस्य यो विषयस्स एवास्येति पूर्वविज्ञानविषयविषयमित्येको ऽत्र विषयशब्दो लुप्तो द्रष्टव्यः । श्लोकं विवृणोते * सर्वेति * ननु शब्द एवात्र मूलप्रमाणं भविष्यत्यत आह * शब्दो ऽपीति * ननु प्रत्यक्षानुपलब्धो ऽपि कल्पयिष्यते[2] आह * प्रत्यक्षेति * प्रमाणशब्देन भावव्युत्पत्त्या कल्पनमाभिहितम् । तदेव तावन्निष्प्रमाणकत्वात्कल्पाद्धर्मास्तित्वाद्विप्रकृष्टं दूरे तत्स्पृशतीत्यर्थः योग्यानुपलब्ध्यभावाद्धर्मास्तित्वकल्पनापेक्षया सन्निकृष्टं धर्मास्तित्वं[3] शब्दास्तित्वस्य योग्यप्रत्यक्षानुदयेनाभावनिश्चयात्तत्कल्पना विप्रकृष्टतरा । श्लोकं व्याचष्टे * शब्दस्य तावदिते * अभ्युपगतमित्यनेन कल्पनार्थत्वेन प्रमाणशब्दो व्याख्यातः । न्वनुमानादिनापि शब्दावगतिसम्भवात्प्रत्यक्षमेव प्रमाणमित्ययुक्तमत आह * न चेति * श्लोकं व्याचष्टे * यथैवेति * आगमं निराकरोति * न चेति * कृतके नास्ति विश्रम्भ इत्येतद्व्याचष्टे * यपीति * दुष्टैः प्रतारकैः पुरुषैराकुलितं भ्रामितं चेतो येषामस्मदादीनामित्यर्थः । नित्यो नैवोपपद्यतइत्येतद्व्याचष्टे * नित्यस्य त्विति * नु धन्वन्निव प्रपेत्यादिमन्त्रलिङ्गानां प्रपादिस्मृतिमूलत्वदर्शनाद्वेदमूलत्वाभिधायिनां मन्वादीनां तद्दृष्टान्तेन सत्यवादित्वावगतेः कृतके नास्ति विश्रम्भ इत्ययुक्तमत आह * न चेति * एवं तर्हि मूलान्तरसूचकत्वान्नित्यो नैवोपपद्यतइत्ययुक्तमत आह * न चेति * कर्त्ते-

---

१ अयं पा० २ पु० ना० ।

२ कल्पयितव्य इ० २ पु० पा० ।

३ धर्मास्तित्वमिति १ पु० ना० ।

व्यतानुवादे विधिसूचनं स्यात्स्वरूपमात्रानुवादस्तु यदृच्छासिद्ध पादिविषयत्वेनोपपन्नो न विध्याक्षेपायालमित्याशयः । मन्त्रलिङ्गा च स्मृतिमूलसूचकत्वनिराकरणेन नित्यानुमेयश्रुतिमूलत्वमपि नि राकृतं भवति । अन्धपरम्परान्यायापत्त्या स्मरणेन नित्यानुमे श्रुतिकल्पनस्य निराकरिष्यमाणत्वात् प्रत्यक्षश्रुतिमूलत्वे त्वैकरूप्य त्तस्यास्तन्मूलानां स्मृतीनामप्यैकरूप्यं स्यान्न त्वेतदस्ति ।

यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।
न तन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥

इत्यादिविगानदर्शनादित्याह * न चेति * ननूपलब्धश्रुति मूलत्वे ऽपि विगीतानेकश्रुतिमूलत्वात् स्मृतिविगानमविरुद्धम
१२ आह * न चेति * श्लोकं व्याचष्टे * यदि हीति * विधिरूपं वाक मन्वादिभिर्निरूपितमुपलब्धमिति यदि विज्ञायेत ततः क्वापि विगी तानेकश्रुतिमूलत्वादिकल्पना स्यात् अर्थवादपरेष्वपि त्वद्यत्वे ऽपि य यदि हवा अपि मृषा वदति सत्यं हैवास्योदितं भवति य एवमेतत्स त्यस्य सत्यत्वं वेदेत्यादिषु मृषोद्याभ्यनुज्ञाभ्रान्तिदर्शनेन मन्वादिष्वपि भ्रान्तिशङ्काया निराकर्त्तुमशक्यत्वादेकश्रुतिमूलत्वे ऽपि भ्रान्त्यवसि तानेकतात्पर्यविगाननिमित्तस्मृतिविगानोपपत्तेर्नानेकश्रुतिमूलत्वक ल्पनोचितेति भावः । प्रलीनशाखामूलत्वं तर्ह्यस्त्वत आह * स्मृते ति * प्रासङ्गिकं परिसमाप्य प्रकृतमुपसंहरति * तस्मादिति * उपमानं निराकरोति * उपमानं त्विति * अर्थापत्तिं निराकरोति * अर्थापत्त्यापीति * श्लोकं व्याचष्टे * यदि हीति * सामान्यतो दृष्टग्रहणं दृष्टान्तार्थमतो निर्मूलत्वादित्युपसंहारभाष्यं निर्मूलस्मृ त्यसम्भवेन कस्य चिद् भ्रान्त्यादेरवश्यकल्प्यत्वादयुक्तमाशङ्क्य व्या चष्टे * तस्मादिति * नन्विति भाष्यमर्वाचीनाभिप्रायेण तावद् ग्रन्थ योजयति * नन्विति * अर्वाचीनानां कर्त्तव्यत्वाज्ञानाद्ये विदुरि त्ययुक्तमित्याशङ्कते * नन्विति * वदनानुमेयत्वात्परिज्ञानस्य वद न्तीत्युक्तं तेषामपि मन्वादिवाक्यश्रवणाद्भवति कर्त्तव्यत्वज्ञानमिति परिहरति * कथमिति * एवं कर्त्तव्यज्ञानात्कर्त्तव्यत्वाभिधानयोर्वि- प्रतिषेधप्रतिपादनपरत्वेन व्याख्याय न विदुषामुपदेशो नावकल्पत- इत्यनेन न्यायेनोपदेशान्यथानुपपत्त्या मन्वादेः पूर्वज्ञानकल्पनाशङ्का- र्थमेतद्भाष्यमित्यन्यथाचष्टे * अथ वेति * ये कर्तव्य इति न विदुः कथमिव ते वदिष्यन्तीत्यमसौ पदार्थः कर्त्तव्य इति व्यत्ययेनास्मि- न्व्याख्याने भाष्यं योज्यम् । निषेधाभावेन त्वकर्त्तव्यत्वस्यानाश- ङ्क्यत्वात्कर्त्तव्यत्वाज्ञानमेवाकर्त्तव्यत्वज्ञानमुखेनाकर्त्तव्यो यस्मिन्नि-

तोक्तम् । विवक्षितार्थलाभाय च व्यत्ययाङ्गीकरणमदोषः ।
णानुपपत्त्येति भाष्यमर्वाचीनानां स्मरणानुपपत्त्यैवेव कैश्चि-
ख्यातं तन्मन्वादिवाक्यश्रवणजनितस्यार्वाचीनानामष्टकादिक-
ताज्ञानस्याकर्त्तव्यत्वाभिधानविरोधित्वेनोपन्यस्तस्य स्मृतित्वे-
ङ्कृतत्वादयुक्तमित्यभिप्रायेण दूषयति * स्मरणेति * तदर्वा-
नामष्टकादिकर्त्तव्यत्वज्ञानमाशङ्कावादिनैव तावन्न स्मृतित्वेने-
स्तस्य स्मृतित्वनिराकरणमयुक्तमिति तावच्छब्दस्यार्थः । ननु
दीनामपि स्मरणं निराकर्त्तुमशक्यं तदभावे ग्रन्थरचनानुपप-
याशङ्क्याह * मन्वादीनामपीति * तस्माद्व्याख्यानद्वये ऽपि ७२
द्यभिप्रायेणैवैतत्परिहारभाष्यं योज्यमिति भावः । तत्रार्वाची-
प्रायशङ्काव्याख्याने मन्वादिवाक्योत्पन्नकर्त्तव्यत्वज्ञाना अप्य-
मन्वादीनां स्मरणानुपपत्तिमालोच्याकर्त्तव्यत्वं वदन्तीति
म् । द्वितीयव्याख्याने तूपदेशकल्प्यस्मरणस्य पूर्वविज्ञानकार-
विनानुपपत्त्या नोपदेशस्य तत्कल्पकत्वं सम्भवतीत्यसम्भवतो
त्त्या कल्पयितुमशक्यत्वादिति भावः । विदितपूर्वस्याप्यस्मृतस्यो-
मशक्तेः स्मरणद्वारेणोपदेशस्य ज्ञानकल्पकत्वात्स्मरणनिराक-
ज्ञानमेव निराकृतम् । वन्ध्यादौहित्रोदाहरणस्य प्रश्न-
भिप्रायमाह * कस्मात्पुनरिति * कारणाभावेन कार्याभावो
ष्टान्तो वाच्य इति दौहित्रस्य कारणभूतदुहित्रभावेनाभावो
नीयः । दुहितुस्तु वन्ध्याकारणमस्तीति न कारणाभाव इत्या-
। उपदेशान्यथानुपपत्त्या मन्वादिस्मरणे ऽवश्यकल्पे सम्यक्-
त्रमिह निषेध्यमिति सूचयितुं दृष्टान्तभाष्ये सम्यग्ग्रहणम् ।
शित्याशङ्काभाष्यं पूर्वविज्ञानकारणाभावे स्मृतिप्रामाण्यानुपप-
क्तमाशङ्क्य पूर्वविज्ञानकारणभूतवेदवाक्यानुमानाभिप्रायत्वेन
ष्टे * यथैवेति * एवं तर्हि नैतदेवमिति परिहारभाष्यं पूर्ववि-
ारणाभावे हेत्वप्रदर्शनादयुक्तं स्यादित्याशङ्क्यागृहीताभिप्रा-
व्याचष्टे * इतरस्त्विति * एतदेव भाष्यमवयवशो व्याचि-
वैदत्वस्मृतिप्रामाण्योपपत्तिप्रतिपादकं तावत् प्रत्यक्षेणेतिभा-
एवं व्याचष्टे * वेदः पुनरिति * ननु वर्णस्वरूपस्य प्रत्यक्षत्वे
स्य वेदावेदसाधारण्याद्वेदत्वस्मृतिर्निर्मूलैव स्यादत आह *
त * वेदशब्दवाच्यत्वमात्रमेव तत्राप्रत्यक्षं तदपि तु वृद्धव्यव-
गम्यत्वान्न निष्प्रमाणकं ग्रन्थान्तरविलक्षणमेतत्स्वरूपं प्रत्य-
ति भावः । एतदेवोपपादयति * प्रागपि हीति * वेदशब्द-
क्षणत्वात् ऋग्वेदादिविशेषमन्त्रब्राह्मणोपन्यासः । ननु वेदशब्दा-

त्प्रागपि वेदादिस्वरूपप्रतीतौ वेदादिसंज्ञानां डित्थादिवत्पौरुषेय
त्विष्प्रमाणकत्वं स्यादित्याशङ्क्याह * सर्वेषां चेति * नन्वेवमपि
दादिशब्दोल्लेखावगतेर्वृद्धव्यवहाराधीनशब्दार्थसम्बन्धप्रतीत्युत्त
लीनत्वात् प्रत्यक्षत्वं न स्यादत आह * इतीति * शब्दोल्लेख
तिनिर्देशार्थ इतिकरणः । संज्ञाद्वारेण तदुल्लेखेनोत्तरकाल
गम्यमानानां प्रत्यक्षसूत्रे तत्र शब्दार्थसम्बन्धप्रमातुरित्यत्र प्र
त्वं साधितमित्यर्थः । दार्ष्टान्तिके वैषम्यप्रतिपादनार्थमष्टका
त्विति भाष्यावयवं व्याचष्टे * नन्विति * कुम्भकारक्रियास्वि
वैधर्म्यदृष्टान्तः । एतदेवोपपादयति * यदीति * अन्धपरम्परा
येनेति व्याख्येयतयोपक्षिप्तस्यान्धपरम्परानिदर्शनस्य प्रयोजनं त
दाह * सर्वस्येति * वेदत्वस्मृतिवदष्टकादिस्मृतावप्यनादित्वा
माण्यप्रसिद्ध्यभिमानं निवर्त्तयितुमन्धपरम्परानिदर्शनमित्यर्थः । क
मनेन निदर्शनेन प्रामाण्यप्रसिद्ध्यभिमाननिवृत्तिरित्यपेक्षिते ऽस्मि
दर्शनेऽनादित्वस्याप्रामाण्यापादकत्वदर्शनादित्याह * वेदे हीति
९३।१ एतदेव प्रश्नपूर्वमुपपादयन्निदर्शनभाष्यं व्याचष्टे * कथमिति *
ष्टान्तिके योजयति * तादृशं वेति * ननूभयविधदृष्टान्तोपलब्धौ
थमष्टकादिस्मरणस्यान्धरूपस्मृतितुल्यत्वं न तु वेदत्वस्मृतितुल्य
निर्णय इत्याशङ्क्य पूर्वविज्ञानकारणाभावादिति भाष्योक्तहेतुव्या
नार्थं पूर्वोक्तमेव चोदनामूलत्वनिराकरणं स्मारयति * न चो
मूलसद्भावे प्रमाणं नास्तीत्युक्त्वा तदभाव एव तु स्मर्त्तव्यास्मरण
माणमस्तीत्याह * यदि चेति * अनेन चाप्तोक्तिनिबन्धनेषु व
हारेषु प्रामाण्यहेतुभूतस्य मूलस्य स्मरणेन व्याप्तत्वाद्व्यापकस्मर
भावेन व्याप्यमूलाभावानुमानमुपन्यस्तमर्थापत्तिर्वा व्यवहारा
व्यवहारहेतुमूलविस्मरणानुपपत्तेर्दृश्यादर्शनवद्वा स्मर्त्तव्यास्मर
स्याप्यनवगतपूर्वातिताभावज्ञानकरणतायाः स्वरूपमात्रं दृष्टं च प
त्किञ्चित्स्मरन्नपि तत्रान्येनास्तितां[1] पृष्टस्तदेव प्रतिपद्यत इति वदद्भि
चार्यैरिष्टत्वादभावाख्यमेव प्रमाणमनेनोपन्यस्तम् । नन्वविच्छिन्न
म्पर्यदृढस्मरणमात्रेण व्यवहारसिद्धिरवश्यस्मर्त्तव्यत्वविशेषणा
वादस्मरणमात्रस्य च चिरवृत्तेषु सत्स्वपि पदार्थेषूपलब्धेरभावात्स
कत्वान्नास्मरणेन मूलाभावसिद्धिरित्याशङ्कते * स्यादेतदिति *
मूलस्य स्मरणस्याप्रामाण्येन व्यवहारासाधकत्वान्मूलस्यावश्यस्म
व्यत्वं साधयति * तद्युक्तमिति * अवश्यसमर्पणीयासमर्प
दपि स्मृतिमूलभूतानां चोदनानामभावो ऽवसीयतइत्याह *

१ तत्रत्यनास्तितामिति २ पु० पा०

ते * ननु स्वयंदृष्टस्य मूलस्यावश्यसमर्पणीयत्वं भवेत् मन्वादि-
स्तु स्मृतिमूलभूतानां चोदनानां स्वयमदृष्टत्वादशक्यं समर्पणमि-
शङ्क्याह * यदि हीति * एवमपि मन्वादिभ्यः पूर्वैराचार्यैः
दृष्टत्वे समर्पणीयत्वापत्तेरदृष्टत्वे वा नित्यानुमेयत्वापत्तेस्तस्य च
ाकरिष्यमाणत्वान्निर्मूलत्वमेव बलादापद्यतेति भावः । ननु पू-
ार्यैः समर्पितमपि स्मृतेर्मूलं प्रलीनत्वेन मन्वादिभिः स्वयमदृष्ट-
न्न समर्प्यते ऽत आह * यदि त्विति * ननु मन्वादिभिः स्वयं
नामपि मूलानामन्यैरपि स्वयं दृष्टत्वादसमर्पणमित्याशङ्क्यास्मि-
े स्मृतिप्रणयनवैयर्थ्यमाह * अथेति * इतश्च वैयर्थ्यमित्याह
ुक्ततरा चेति * किं चान्यैः स्वयंदृष्टानामपि वेदवाक्यानां ता-
ाज्ञानेनेदमस्याः स्मृतेर्मूलमिति निर्णेतुमशक्यत्वात्तात्पर्यज्ञाप-
ं मन्वादिभिरवश्यं समर्पणं कर्त्तव्यमित्याह * न चेति * प्र-
शून्यो मूलविशेषनिर्णयो ऽशक्य इत्यन्यथैव दृष्टान्तमाह
श्येति * ननु

यः कश्चित्कस्य चिद्धर्मो मनुना परिकीर्त्तितः ।
स सर्वो ऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥

इति मन्वादिभिः सामान्येन स्वस्मृतीनां वेदमूलत्वाभिधा-
द्विशेषासमर्पणो ऽपि स्मृत्यनुरूपमूलविशेषनिर्णयो भविष्यत्यत
् * न चेति * अतो ऽनादर्त्तव्यमित्युपसंहारभाष्यं व्याचष्टे । ७
ादिति ।

अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥२॥

अत्र भाष्यकारेण प्रमाणं स्मृतिरिति सौत्रं प्रमाणशब्दं सि-
त्तप्रतिज्ञानार्थत्वेन व्याख्याय विज्ञानं हि तत्किमित्यन्यथा भवि-
ति करणव्युत्पन्नेन विज्ञानशब्देन विज्ञानोत्पादकत्वं हेतुत्वेनो-
तद्व्याचष्टे * सर्वथेति * पक्षद्वये ऽपि विज्ञानोत्पादकत्वं ता-
विप्रतिपन्नमिति हेतुत्वोपपत्त्यर्थं दर्शयितुं * सर्वथेत्युक्तम् * म-
दिस्थानां स्मरणानां पुरुषान्तरं प्रति ज्ञानोत्पादकत्वाभावमाश-
निबन्धनद्वारेण ज्ञानोत्पादकत्वं सूचयितुं * सन्निबन्धना इत्यु-
् * विद्यमाननिबन्धना इत्यर्थः । शोभनार्थेन वा सच्छब्देन सा-
बन्धनत्वाभिधानादसाधुशब्दभूयिष्ठनिबन्धनत्वेन शाक्यादिव-
न्धुर्मन्वादेरप्रत्यायितत्वानुमानं प्रत्युक्तम् । स्मृतिशब्दस्य धर्म-
न्त्रेष्वेव प्रसिद्धत्वात्पुराणादीनां प्रामाण्यमिह न प्रतिपाद्यतइति
चिच्छङ्का स्यात्तन्निवृत्त्यर्थं वेदातिरिक्तसमस्तविद्यास्थानविषयत्वं

दर्शयितुं * शेषाणि च विद्यास्थानानि * इत्युक्तं भाष्यकारेण पूर्वं-विज्ञानमस्य नास्ति कारणाभावादिति कारणाभावेन स्मृतिमूलभूत-विज्ञानाभावमप्रामाण्यहेतुं पूर्वपक्षोक्तमनुभाष्य तन्निराकारणार्थत्वे-ानुमानं स्यादिति सूत्रावयवो ऽस्या एव स्मृतेरित्यादिना ग्रन्थस्त्व-ुमीयतइत्यन्तेन व्याख्यातस्तदुपपादयितुमाह * मन्वादीनां चेति * ात्यक्षत्वे मन्वादीनां तत्स्मृतिमूलविज्ञानमूलस्य द्रष्टुं शक्यत्वाददृष्ट-ल्पनानुपपत्तेरप्रत्यक्षत्वादित्युक्तम् । ननु कल्पना नामादृष्टं विज्ञा-कारणं तत्तु चोदनाख्यमेवेति कथमध्यवसीयते ऽत आह * तत्रे-े * श्लोकं व्याचष्टे * सर्वत्रैवेति * भ्रान्तेस्तावद् दृष्टानुगुण्येनासा-ात्वमाह * तत्रेति * सम्यङ्निबद्धाच्छास्त्राद्यष्टकादीनां धर्मत्व-र्शनं तद्विरोधापत्तिरित्यर्थः । मन्वादीनामिति कर्त्तरि षष्ठी । स्मृ-ग्रन्थग्राहिणः पुरुषान्प्रति स्वज्ञानस्य भ्रान्तस्यापि भ्रान्तत्वपरिहा-पन्यासो मन्वादिकर्त्तृकः कल्प्यतइति शेषः । अनुभवस्याह * अ-भवे ऽपीति * पुंवाक्यस्याह * पुरुषेति * विप्रलम्भनस्याह * त-ति * अनुवृत्तिहेतोर्भ्रान्तत्वपरिहारोपन्यासस्यादिशब्देनोपादानं प्रलम्भे न केवलमनेकादृष्टकल्पनाप्रसङ्गः किं तु दृष्टप्रामाण्यविरोधो ित्याह * उत्पन्नस्य चेति * चोदनायास्तु दृष्टानुगुण्येन साध्य-ाज्ज्यायसी कल्पनेत्याह * तस्मादिति * ननु चोदनाकल्पने दृ-नुगुण्यसाध्यत्वस्य हेतुत्वे कर्त्तृसामान्यादिति सौत्रं हेत्वभिधानम-ार्कं स्यादित्याशङ्क्य सम्भावनामात्रे ऽसौ हेतुर्न निर्णायक इति सूच-तुं मन्वादीनां विज्ञानस्य चोदनामूलत्वसम्भावनामाह * सम्भा-ते चेति * एतमेवार्थं वक्ष्यमाणभाष्यारूढं करोति * तदर्थमेवा-े * नन्वेवमप्यनेनैव हेतुना चोदनामूलनिर्णये सिद्धे किम-र्थकेन सम्भावनामात्रहेतुनेत्याशङ्क्य म्लेच्छस्मृतिवैषम्यप्रदर्शना-सम्भावनाहेतूपन्यास इति सूचयितुं म्लेच्छार्यस्मृत्योर्वैषम्यमाह ानि पुनरिति * अनुभवपुंवाक्यपरम्परयोर्मिथ्यात्वहेतुनामापाद्य ृष्टयोक्तिः । प्रत्यक्षानुपलब्धे चेति श्लोकोक्तं योग्यानुपलम्भविरोधं हर्तुमनुभाषते * यत्त्विति * परेषां परिहारं दूषयितुमुपन्यस्यति ्त्रेति * अनुच्चरितानामज्ञातत्वेनाबोधकत्वान्मूलत्वानुपपत्तिमाश-*कथमिति * मन्वादिभिरप्यस्मदादिवत्पूर्वाचार्यस्मरणान्यथानु-त्यानुच्चरितानामपि ज्ञातुं शक्यत्वान्मूलत्वोपपत्तिरिति परिहरति ैष इति * पूर्वाचार्याणामपि चोदनोपलम्भं विना कुतः स्मरण-ाशङ्क्य पारम्पर्येणेत्युक्तम् । एवं सत्यनवस्थापत्तिमाशङ्क्य पा-विच्छेदवादित्युक्तम् । एकपुरुषपाठस्याविश्रम्भणीयत्वेन चोद-

नाप्याथात्म्यनिश्चायकत्वायोगात्पारम्पर्याविच्छेदेनैव निश्चायकत्वमङ्गीकार्यमनादित्वाच्चानवस्थादोषाभावः तद्वदत्रापीत्याशयः । एतदेव विवृणोति * यथैव हीति * प्रतिस्मर्तृपूर्वपूर्वाचार्यस्मरणान्यथानुपपत्त्या श्रुतिज्ञानं प्रतिज्ञातयेत्यर्थः । इमं परिहारं दूषयति * तन्विति: * अयमाशयः यद्यप्यष्टकादिकर्त्तव्यत्वस्मरणस्य पूर्वविज्ञानायत्तत्वात्तस्य च श्रुतिज्ञानं विनानुपपत्तेर्मन्वादीनां श्रुतिज्ञानं कल्प्यते तथाप्यनुच्चरितानां प्रत्यक्षत्वायोगाद्व्याप्त्याद्यभावेन चानुमानाद्यप्रवृत्तेर्मूलप्रमाणासम्भवात्प्रमादिमूलापत्तेर्न श्रुत्यस्तित्वनिश्चयोपपत्तिरिति । दृष्टान्तवैषम्यमाह * लिङ्गादीनां त्विति * स्मृतेरनित्यत्वेन पूर्वज्ञानापेक्षत्वात्तस्य चानुच्चरितश्रुतिज्ञानासम्भवेनानुपपत्तेः पारिशेष्याद् भ्रान्त्यादिमूलत्वापत्तिसूचनार्थं लिङ्गादीनां नित्यत्वाभिधानम् । परिहारान्तरमाह * तेनेति * नित्यत्वव्याघातापत्तेरत्राप्यपरितोषसूचनार्थं वरमित्युक्तम् । अध्येतृपरम्पराविच्छेदाभावात्प्रलयानुपपत्तिमाशङ्क्याह * न चेति * अन्यत्रासक्तिः प्रमादस्तत्रानासक्तिरालस्यमादिशब्देन विघ्नयोगादिभिरध्यापकपुरुषक्षयाच्च स्वल्पो वेदाध्येतृणां विषयो दृश्यतइत्यर्थः । सबीजत्वायास्य पक्षस्य पूर्वोक्तं दोषं परिहरति * न चेति * स्वमतमाह * यद्वेति * अस्मिन्मते ऽनुपलब्धिविरोधं परिहर्त्तुमनुभाषते * कथमिति * परिहरति * उच्यतइति * नानादेशपठ्यमानानां शाखानां प्रमादिभिः पुरुषैस्तद्देशागमनाच्छ्रोतुमशक्तेस्तद्गतश्रुत्यनुपलब्धिसंभवः एकशाखागतानामपि श्रुतीनां नानाप्रकरणस्थानां तत्तत्कर्तृधर्मत्वधावेन पुरुषधर्मत्वस्य प्रमादिभिर्निर्णेतुमशक्तेः स्मृतिमूलत्वनिरूपणानुपलब्धिसम्भव इत्यर्थः । स्मर्त्तव्यास्मरणस्याभावसाधनत्वेनोपन्यस्तस्य विस्मरणमप्युपपद्यतइति भाष्ये निराकरिष्यमाणत्वात्तदुपेक्ष्य समर्पणीयासमर्पणमभावसाधनत्वेनोपन्यस्तं निराकर्त्तुमनुभाषते * यत्त्विति * निराकरोतिः * सम्प्रदायेति * समर्पणेः सम्प्रदायविनाशापत्तिमुपपादयति * विशिष्टेति * यस्य व्रत्येहनि पत्न्यनालम्भुका स्यात्तामवरुध्य यजेतेत्यवरोधवचनाद्दर्शपूर्णमासयोरुदक्या संवादाप्रसक्तेर्न मलवद्वाससा सह संवदेदिति प्रतिषेधः प्रकरणादुत्कृष्यते ब्राह्मणावगोरणाप्रतिषेधस्य ऋत्विगानमनार्थं प्रसक्तावपि (देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन् तेशंयुं बार्हस्पत्यमब्रुवन्निमन्नो यज्ञं स्वगाकुर्विति सो ऽब्रवीद्वरं वृणे येदेवा ब्राह्मणोक्तो श्रद्दधानो यजाते सनियज्ञस्याशीरसदिति तस्माद् ब्राह्मणोक्तो श्रद्दधानो यजते

१ विघ्नयोगः तैरिति २ पु० पा० ।

शंयुमेव बार्हस्पत्यं यज्ञस्याशीर्गच्छत्वेतन्ममेत्यब्रवीत्किं मे
या इति यो ऽवगुराति तं शतेन यातयाद्यो निहनत्सहस्रेण या
लोहितं करवद्यावतः प्रस्कद्य पांसून् संगृह्णात्तावतः संव
पितृलोकं न प्रजानादिति तस्माद् ब्राह्मणो नावगुरेत्तेन निह
लोहितं कुर्यादेतावता हैनसा भवति[2]) इत्याद्यर्थवादात्सर्वेभ्यो
नावगतेरवगोरणप्रतिषेधस्य ब्राह्मणमात्रविषयत्वावसायात्प्र
दुत्कर्षः *कर्मौपयिकमात्रं चेति* येन यत्कर्मानुतिष्ठासितं स
पयिकमात्रमधीयीतेत्यर्थः । स्वयमपठितत्वादन्यसमर्पणमुप
स्याह * न चेति * स्वयमपठितायाः श्रुतेः कथं मूलत्वमि
ङ्क्याह * ते हीति * यत्त्वसमर्पणे मूलविशेषस्य निर्णेतुमशक्य
वश्यं समर्पणीयत्वमुक्तं तन्निराकरोति * न चेति * असिद्ध
समर्पणं सामान्येन वेदमूलत्वस्य समर्पितत्वादित्याह *
चेति* आत्मा वेदमूलाभिधायितया बध्वा नियम्य समर्पित इ
यत्तु वेदमूलत्वाभिधानस्य लोकवञ्चनार्थत्वशङ्कया मूलस
सामर्थ्यमुक्तं तन्निराकरोति * तच्चैतदिति * यथैव शिष्टत्रैव
दृढपरिग्रहान्यथानुपपत्त्या मन्वादीनां श्रुतिदर्शनं कल्प्यते त
त्कालीनानां तद्ग्रन्थपरिग्रहीतॄणामपि तत्कल्प्यमित्याशयः
द्धान्तमुपसंहरति * अत इति * एवं स्वमतेन दृष्टानुसाराद्
ल्पनालाघवं तर्कोपबृंहितशिष्टत्रैवर्णिकदृढपरिग्रहान्यथानुप
सवयार्थापत्त्या वेदमूलत्वकल्पनेन स्मृतिप्रामाण्यं साधितं व
मान्यं तु चोदनामूलत्वसम्भावनहेतुत्वेन व्याख्यातम् । अन्यैस्
ख्यातृभिः साक्षात् प्रामाण्यानुमाने वेदमूलत्वानुमाने वा लि
कर्तृसामान्यं व्याख्यातं मन्वादिस्मृतिप्रमाणम् । वेदार्थानुष्ठात
नुष्ठीयमानार्थत्वात् वेदवत्, वेदमूला वा वेदवादिस्मृतित्वात्
वेदार्थस्मृतिवत् स्मृत्यर्थो वा श्रेयोहेतुर्वेदमूलो वा वेदार्थानु
भिरनुष्ठीयमानत्वात् । प्रत्यक्षवेदार्थवदिति दूषयितुमुपन्यस्य
यस्त्विति * स्वतन्त्रशब्देन सम्भावनानैरपेक्ष्यमुक्तम् । दू
७७।१ * तस्येति * अनुमानस्य स्मृत्याचारयोस्तुल्यत्वादाचारग्रहणेन
तिमप्युपलक्षयति पठ्यमानस्य तावद्वेदवाक्यस्य श्रूयमाणस्यैव
तॄन्प्रति प्रमाजनकत्वमश्रोतुः प्रमानुपपत्तेर्लिङ्गादिकल्प्यस्यापि
माणमन्त्रादिश्रुत्यधीनमेव प्रामाण्यं दृष्टमित्यव्यभिचारान्मन्
स्मृतेरपि श्रूयमाणश्रुत्यधीनमेवास्मदादीन्प्रति प्रामाण्यं प्र
तेति साध्यधर्मविशेषविपरीतसाधनाद्विरुद्धत्वम् । न च मन्

१ अयं पा० १ पु० ना० किं तु किं मे प्रजाया इति पा० १ ।

नः श्रूयमाणत्वात्सिद्धसाध्यताशङ्का तान्प्रति स्मृतेः प्रामाण्याभावा-
: प्रत्यक्षवेदार्थस्मृतौ चैवमेव, वेदवादिस्मृतित्वस्य श्रूयमाणश्रु-
तमूलत्वलक्षणेन श्रुत्यधीनत्वेन सह व्याप्त्युपलब्धेर्धर्मविशेषविपरी-
साधनत्वम् । तदा च श्रूयमाणश्रुत्यधीनत्वापत्तेर्विरुद्धतेति यो-
यम् । कथं तर्हि सूत्रभाष्ययोरनुमानशब्दोऽत आह * तस्मादि-
* एवमस्या एवेत्यादिभाष्योक्तं चोदनाकल्पनमुपपाद्यैतदेव भा-
मवयवशो व्याचष्टे * अस्या एवेति * द्रढिम्न इति पञ्चमी ष-
वेत्यर्थः । कारणविशेषाकाङ्क्षायामनुपपत्तिमनुभवस्य कारणमु-
त्वा न हीत्यादिभाष्येणानुपपत्तिरुपपादिता तत्र मनुष्यग्रहणस्य क-
फलसंबन्धानुसन्धानासम्भवकारणमरणधर्मकत्वप्रदर्शनमस्मिंश्च
न्मनि विश्वजिन्न्यायावगतां विमिश्रसुखात्मकस्वर्गाख्याष्टकादिफ-
पभोगस्य मनुष्यशरीरेणासम्भवप्रदर्शनं प्रयोजनमिति च दर्शयितुं
ाचष्टे * न हीति * जन्मान्तरीयस्य कस्य चिदर्थस्यास्मरणाच्चिः
षस्मृतिबीजसंस्कारनाशकत्वं मरणस्यावसीयते । जातमात्रस्य
स्तन्यपाने प्रवृत्तिर्यादृच्छिकी प्रथमस्त्रीभोगप्रवृत्तिवत् । किं तर्हि
रणमनुमीयते इत्यपेक्षिते ग्रन्थस्त्वनुमीयतइत्युक्त्वा सौत्रहेतु-
ाख्यानार्थकर्तृसामान्यात्स्मृतिवैदिकपदार्थयोरिति भाष्यकृतोक्तं
दानुमाने कर्तृसामान्यस्य हेतुत्वं दर्शयतीति भ्रान्तिं व्यावर्त्तयि-
ाह * स्मृतीति * मन्वादीनां वेदसंयोगोपपत्त्यर्थं त्रैवर्णिकत्वं
शेषणत्वेनोपात्तमुपपादयितुं (स्मृतिवैदिकपदार्थयोः कर्तृसामान्या-
त्युक्तम् । पदार्थशब्दः स्मृतिशब्देन स्मृतेः पदार्थ इति वैयधिक-
येन संबद्ध्यते वैदिकशब्देन सामानाधिकरण्येन) वैदिकपदार्थकर्तृ-
त्रैवर्णिकैः स्मार्त्तानां पदार्थानां क्रियमाणत्वात्तेषां चात्रैवर्णि-
कपदार्थाननुष्ठातृत्वस्वभावदर्शनात्स्मृतिप्रणेतॄणां त्रैवर्णिकत्वं
प्यतइत्यर्थः । यद्वा स्मृतिकर्तॄणां मन्वादीनां वैदिकपदार्थकर्तॄणां
ानीन्तनानां शिष्टानां त्रैवर्णिकत्वेन समानत्वादिदानीन्तनवन्म-
दीनामप्युपपन्नो वेदसंयोग इत्यर्थः । सम्भवद्वेदसंयोगत्वप्रति-
नप्रयोजनं च चोदनाख्यस्य मूलस्य सम्भावनापदलाभ इति
चोदनेत्यनेनोक्तम् * नन्विति भाष्येणानुपलब्ध्याविरोधाच्चोदनाक-
ानुपपत्तिमाशङ्क्यानुपलभ्यमानोऽपीत्यनेन विप्रकीर्णशाखानेकप्रक-
स्थत्वेनोपलब्ध्ययोग्यत्वापनुपलब्धिमात्रस्य चाभावासाधनत्वा-
रोधमुक्त्वा विस्मरणमप्युपपद्यतइत्युक्तं तत्प्रलीनत्वनिमित्तानु-
म्भप्रतिपादनपरत्वेन तावत्सोपपत्तिकं व्याचष्टे * विस्मरण-

१ अयं पा० २ पु० नो० ।

मपीति * नित्यत्वव्याघातापत्तेस्त्वेतत् पक्षापरितोषाद्धिय
नशाखामूलत्वपक्षएव स्मर्त्तव्यास्मरणात्तदभावमाशङ्क्य सा
न्यतो वेदमूलत्वस्याभियुक्तैः स्मरणाद्विशेषस्य त्वनौपयिक
नावश्यस्मर्त्तव्यत्वाभावादस्मरणमात्रस्य चाभावासाधकत्वादवि
धप्रतिपादनपरतया स्वमतेन व्याचष्टे * यदा त्विति * त
पपन्नत्वादित्युपसंहारभाष्यं मन्वादीनां त्रैवर्णिकत्वेन सम्भवद्वेद
योगतया पूर्वविज्ञानोपपत्तेरिदानीन्तनानां च त्रैवर्णिकानां स्मृ
मूलाविशेषास्मरणस्यानुपलम्भस्य चोपपन्नत्वेनाभावासाधकत्वा
न्यथानुमानाविरोधोपसंहारार्थतया स्पष्टत्वान्न व्याख्यातं स्मृतिप्राम
श्ये लिङ्गदर्शनान्युपन्यस्याष्टकालिङ्गो मन्त्रो भाष्यकृतोदाहृतः

यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् ।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ॥

अष्टका यैस्तु राधसे स्वाहेति तस्याष्टकादेवताराः
प्रकाशकत्वादेषा वै संवत्सरस्य पत्नी यदष्टकेति संवत्सरपत्
त्वसंस्तुताष्टकाप्रकाशकत्वाच्चाष्टकालिङ्गत्वं स्पष्टमेवेति तदपि
व्याख्यातम् । तथेति भाष्यं व्याचष्टे * तथेति * आक्षिपति * एत
दिति* श्लोकं व्याचष्टे *न हीति* ननु धर्माप्रामाण्यमेवानेन प्रक
रेणोक्तमिति शङ्कते *स्यादेतदिति* निराकरोति *तथा सतीति
वेदमूलत्वनिराकरणार्थस्तर्हि दृष्टार्थत्वोपन्यासो भविष्यतीत्यत आ
*न चेति* वैदिकेष्वपि च सर्वत्र दृष्टार्थत्वस्योत्प्रेक्षितुम् शक्यत्वा
तेनावैदिकत्वासिद्धिरित्याह * सर्वत्र चेति * लोकपंक्तिर्लोकोपसं
ग्रहस्तदुत्पादकत्वरूपादनादेर्दृष्टार्थताध्यापनादेः शिष्यादिसहायोपा
दानोत्पादकत्वरूपा सवनस्थक्षत्रियवैश्यवधे ब्रह्महत्येति यागस्यात्म
रक्षणोत्पादकत्वरूपा कुटुम्बभरणस्य प्रीत्युत्पादकत्वरूपेत्यर्थः
पारमार्थिक्यपि दृष्टार्थता नावैदिकत्वसाधिकेत्याह * न चेति *
दृष्टार्थत्वस्य वेदमूलत्वाविरोधित्वमुक्तमुपसंहरति * तस्मादिति *
भवत्ववघातादीनां नियमादृष्टार्थाद्वेदमूलत्वं गुर्वनुगमनादीनां तु क
थमित्याशङ्क्याह * अतश्चेति * निष्पन्नाविधैरप्यनुष्ठीयमानस
गुर्वनुगमनादेर्दृष्टार्थत्वायोगादवश्यकर्त्तव्यतान्यथानुपपत्तेरकरणनि
मित्तप्रत्यवायपरिहार्थत्वावसायात्तस्य चानन्यप्रमाणकत्वाद्वेदमूलत्व
सिद्धिरित्याशयः । यत्तु दृष्टार्थत्वं भाष्यकृतोक्तं तदानुषङ्गिकमि
त्याह * दृष्टं चेति * निष्पद्यतइत्यनेनानुषाङ्गिकत्वं दर्शितं दृष्टार्थ
त्वे ऽपि वा नियमस्यादृष्टार्थत्वाद्वेदमूलत्वं सेत्स्यतीत्यभिप्रायेणाह
* नियमाच्चेति * षष्ठे च सकृदसकृदनुष्ठानविचारात्सूत्रकारस्यापि

केवलदृष्टार्थत्वाभिप्रायो लक्ष्यतइत्याह * एवं चेति * गुरुगमनावृ-त्तौ तदनुगमनमावर्त्तनीयं न वेति सन्दिह्य गुरुगमनस्य निमित्तत्वा-भावे ऽपि तदभावे ऽनुगमनस्यासम्भवात् तत्काले ऽनुष्ठेयत्वोपपत्ते-र्निमित्तत्वे प्रमाणाभावात्सकृदनुष्ठानेन शास्त्रार्थसिद्धेरनावृत्तिप्राप्तौ वक्ष्यते आचारानुमितस्य विधेरधिकारिविशेषणापेक्षायामावश्यक-त्वोपपत्तये गुरुगमनस्य निमित्तत्वेनाधिकारविशेषणत्वावसायाद्भेदेन होमादिवन्नैमित्तिकत्वाद् गुर्वनुगमनस्याप्यावृत्तिः सिद्धा कथं तर्हि दृष्टार्थत्वादेवेत्येवकारो ऽत आह * यत्त्विति * तथा चेति गुर्वनु-गमनलिङ्गदर्शनभाष्यं तावदतिक्रम्य प्रपा इति भाष्यं न धर्मायेत्यदृष्टा-र्थत्वनिषेधेन प्रपादेर्गुर्वनुगमनादिवत् केवलदृष्टार्थत्वप्रतिपादकत्वेन बुद्धिस्थत्वाद्व्याचष्टे * सभेति * प्रपादिष्वपि स्मृत्यनुरूपानेकश्रु-तिकल्पनौचित्यात् पूर्वभाष्यपदस्याप्यतिशयार्थत्वसूचनार्थं * यद्य-पीत्युक्तम् * परोपकारश्रुतेः सर्वसाधारण्यप्रदर्शनार्थं समस्तग्रह-णम् । अतिक्रान्तलिङ्गदर्शनं व्याचष्टे * तस्मादिति * प्रपालिङ्ग-मपि स्तुतिपरं मन्त्रावयवं व्याचष्टे * यथेति * स्थलयोदकम्परिगृ-ह्णन्तीति जानपदकुण्डगोणस्थलेत्यादिसूत्रेणाकृत्रिमे स्थले ङीष्प्रत्यय-विधानात्कृत्रिमे टाप्प्रत्ययानपवादप्रतीतेः स्थलाद्राष्ट्रस्य कृत्रिमतीर-प्राचित्वात्तडागलिङ्गं स्पष्टत्वान्न व्याख्यातम् । शिखाकर्मणो दृ-ष्टार्थत्वप्रतिपादकं गोत्रचिह्नमित्यपि भाष्यमतिशयार्थमेवेति व्याचष्टे * गोत्रेति * चतुरवत्तस्य सामान्येन विहितस्य पञ्चावत्तं भृगूणामि-त्यपवादाच्चतुरवत्तपञ्चावत्तविभागं कर्माङ्गं वसिष्ठशुनकात्रिवा-ध्यश्वानां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषामिति द्वितीय-प्रयाजविभागस्ताभिर्यथर्ष्याप्राणीयादित्याप्रासूक्तविभागश्चादिशब्दो-क्तः । तदुपयोगित्वादौपचारिकी गोत्रस्य कर्माङ्गभूततोक्ता त-दाश्चार्षसंख्याशिखाविधानाच्छिखाकल्पस्त्रिशिखपञ्चशिखत्वादिरू-पश्चिह्नमिति दर्शनं चेति भाष्यं कुमारा विशिखा इवेति नानाशिख-द्योतकशिखाकर्मलिङ्गदर्शनप्रतिपादनार्थतया स्पष्टत्वान्न व्याख्यातं तेत्युपसंहारभाष्यस्य तात्पर्यं व्याचष्टे * तेनेति * यद्यप्यत्र वेद-मूलतया स्मृतीनां धर्मप्रामाण्यं प्रतिपाद्यं तथाप्यर्थकामविषयासु प्रमाणान्तरमूलत्वेन प्रामाण्योपपत्तेस्तत्प्रणेतॄणामासत्त्वावधारणाद्-धर्मविषयासु वेदमूलत्वं सुकल्प्यमिति दर्शयितुं सामान्यतः प्रयोज-नत्वाभिधानम् । अदृष्टार्थस्मृतिप्रामाण्यं प्राधान्येनेह प्रतिपाद्य-मिति सूचयितुं व्युत्क्रमेण विवेककथनम् । धर्मविशेषस्यापि मोक्षस्य ब्राह्मणपरिव्राजकवद्भेदेनोपादानम् । भाष्ये तु कर्मव्युत्पत्त्या पदार्थ-

प्रामाण्याभिधानम् । अनेन च भाष्येण वेदातिरिक्तसकलवि
स्थानप्रतिपाद्यानां पदार्थानां दृष्टादृष्टप्रयोजनभेदेन मूलविवेककथनं
तमिति दर्शयितुं पुराणेतिहासगतेषु दृष्टादृष्टोपदेशवाक्येषु तावद्ध
शास्त्रोक्तं विवेकमतिदिशति * तथैवेति * ननूपाख्यानासत्यत्वे
तिहासपुराणप्रणेतॄणामनाप्तत्वावसायात्कथमत्रोपदेशवाक्यानां
६ लप्रमाणकल्पनमित्याशङ्क्याह * उपाख्यानानि त्विति * तेषामप्य
वादन्यायेन प्रयोजनत्वं प्रामाण्यं चोक्तमित्यर्थः । पृथिवी विभाग
थनस्य कथं प्रयोजनत्वप्रामाण्ययोः सिद्धिरित्यपेक्षायामाह * यदि
ति * धर्माधर्मसाधनप्रदेशो जम्बूद्वीपस्य भारतवर्षे तत्कथनं द
नपूर्वकं तदतिरिक्तफलोपभोगप्रदेशकथनं भारतवर्षस्य च धर्मा
र्मसाधनत्वं वेदमूलम् । वंशानुक्रमणस्य प्रयोजनं मूलं चाह *वंशेति

तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला ॥
हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् ।
तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥

इति देशपरिमाणं निमेषकाष्ठाकलामुहूर्ताहोरात्रमासवर्षभेदे
च कालपरिमाणं लोकव्यवहारसिद्ध्यर्थं ज्योतिःशास्त्रव्यवहारसि
द्ध्यर्थं च दर्शनपूर्वकम् । चन्द्रसूर्यान्तरालादिदेशपरिमाणं युगादि
कालपरिमाणं च ज्योतिःशास्त्रव्यवहारसिद्ध्यर्थं गणितविषयसम
द्यायोत्थानुमानपूर्वकमित्याह * देशेति * कलावधर्मभूयिष्ठाः स
भविष्यन्त्यल्पीयसापि धर्मेण भूयानभ्युदयो भविष्यतीत्यादिभविष्य
त्कथनस्य प्रयोजनं युगस्वभावनिबन्धनस्य धर्माधर्मानुष्ठानवैचित्र्य
फलपाकवैचित्र्यस्य च ज्ञानं तत्कारणत्वेन वा धातागच्छान् उपब
हिवृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् इत्युत्तरार्द्धर्चः ( आ
ता गच्छान् उत्तरा युगानि इति पदानि घ निश्चितम् । घा इति दीर्घच्छान्द
सः । तानि उत्तराणि युगानि आगच्छान् आगमिष्यन्ति । यत्र जाम
बालिशाः अजामि अतिरिक्तानि शास्त्राविरुद्धानि कर्माणि कृण्व
करिष्यन्तीति नियमोक्तिः । अत्रेदं निरुक्तम् । आगमिष्यन्ति त
न्युत्तराणि युगानि यत्र जामयः करिष्यन्त्यजामि कर्माणि जाम्यति
कनामबालिशस्य वा समानजातीयस्य वोपजनउपधेहि वृषभाय बाहु
न्यमिच्छस्व सुभगे पतिं मदिति व्याख्यातं )मित्यादिर्वेदोमूलमित्याह
भविष्यत्कथनमपीति * नित्यवेदविषयत्वाविरोधायानादिकालप्र

१ चयंपा २ पु० ना० । धातागच्छानुत्तरायुगानियत्र जामयः कृपावन्नभामीत्यादि
दोमूलमिति २ पु० पा० ।

युगस्वभावस्योक्तम् । अङ्गानां मूलप्रयोजने विवेचयिष्यत्सा-
त्तावद्यथासम्भवं क्रत्वर्थप्रतिपादनं पुरुषार्थप्रतिपादनं च प्र-
लोको वेदश्च मूलमित्याह * अङ्गेति * शिक्षायां वर्णादिस्व-
थनं लोकमूलं तद्विज्ञानपूर्वकस्य तूच्चारणस्य क्रत्वर्थपुरुषा-
थनं वेदमूलमित्याह * तत्रेति * अकारादयो वर्णाः संवृता-
करणान्युदात्तादयः स्वराः ह्रस्वादयः कालाः । कण्ठादिस्थाना-
शब्देनोक्तानि । कल्पेषु सूत्रेषु च क्रत्वर्थपुरुषार्थाङ्गप्रधानप्रति-
प्रयोजनं वेदश्च मूलमित्याह * कल्पेति * अर्थवादमन्त्र
ां विधीनामुपसंहारो विविक्तीकरणं शाखान्तरविप्रकीर्णाना-
त्र सन्निवेशो न्यायलभ्यानां तात्पर्यनिर्णयस्तत्तद्विधिरूपमि-
ये तु कल्पसूत्रेष्वर्त्विगादीनां को यज्ञ इति प्रश्नोत्तरादिव्य-
स्तेषामनुष्ठानसौकर्यादिमुखं प्रयोजनं दक्षिणा प्रश्नोत्तरादि-
राणां चार्थः प्रयोजनं लोकश्चाभयत्र मूलमित्याह * लोके-
व्याकरणे शब्दान्वाख्यानं लोकमूलं साध्वसाधुप्रयोगयोस्त्व-
हेतुत्वकथनं वेदमूलमित्याह * व्याकरणे ऽपीति * निग-
क्तयोर्लौकमूलपदार्थज्ञानप्रयोजनत्वस्य स्पष्टत्वादनुपन्यासः ।
विचित्याङ्गायत्र्यादिविवेककथनं लोकवेदमूलं तद्विज्ञानपूर्वकस्य
पुरुषार्थत्वकथनं वेदमूलमित्याह * छन्दोविचित्यामपीति *
चासौ श्रुतिरित्याह * तथा चेति * ज्योतिःशास्त्रे तिथ्या-
तं गणितानुमेयत्वाल्लोकमूलं ग्रहसौस्थ्यादिनिमित्तेष्टानिष्टफ-
कसूचनं तु वेदमूलमित्याह * ज्योतिःशास्त्रे ऽपीति * क-
ाकनक्षत्रे स्थिताश्चन्द्रादयः ततः प्रभृत्यात्मनो गतिविशेषेण
न्दत्वरूपेणान्यान्यन्यानि नक्षत्राण्युपसंक्रामन्ति तेषां च नक्ष-
सञ्चरतां शीघ्रमन्दत्वविशेषेण गतिपर्यायवैलक्षण्यं भवति
त्यगतिविशेषावच्छिन्नस्य च कालस्य तिथिनक्षत्रव्यपदेश्य-
ादित्यगतिविभागज्ञानेन तिथिनक्षत्रज्ञानं भवति एतावन्त
त्ययोर्गतिपर्याया एकस्मिन्युगे भवन्तीत्यवगतेषु तद्भागेषु
ादिष्विहेदानीं चन्द्रमा इहेदानीमादित्य इत्येवं चन्द्रादित्या-
विभागज्ञानस्य तिथ्यादिज्ञानोपयोगित्वम् । एतावद्भिर्युगपर्या-
वन्तश्चन्द्रादित्यगतिपर्याया इति च युगपरिवर्त्तपरिमाणज्ञा-
द्रादित्यादिगतिविभागो ज्ञायते एतावन्तो युगपरिवर्त्ता जाता
ते ऽस्य युगस्यैतावन्त्यहोरात्राण्यस्यैतावन्तीति समस्तातीता-
ख्यानात्मकमहर्गणं कृत्वा ऽस्य ग्रहस्येदानीमीदृशी गतिर्वर्त्तते
ति ज्ञानं भवतीति युगपरिवर्त्तपरिमाणज्ञानस्य चन्द्रादित्यादि-

गतिविभागज्ञानोपयोगित्वं यथा दिवसस्याष्टमो ऽयं मुहूर्त्तस्तेनास्मिन्मुहूर्त्ते नभोमध्ये सूर्य इति मुहूर्त्तसंख्यानेनादित्यस्य गतिविशेषज्ञानं भवतीत्यर्थः । यथा च प्रकृतिप्रत्ययादिप्रक्रिया साधुशब्दावधारणे लिङ्गं तथात्र गणितं तस्य चास्मिन् गणिते सत्यस्मिन्देशे चन्द्राद्यो भवन्तीति प्रत्यक्षेणैव केन चिदाभियुक्तेन व्याप्तिं गृहीत्वाऽन्यस्मै गणितलिङ्गोपदेशे कृते तस्याप्याप्तोपदेशे कृते तस्याप्याप्तोपदेशावगतान्वयस्यानुमाने जाते स्वप्रतिपत्तिवत्परस्यापि प्रतिपत्तिं कर्त्तुमुपदेश इति सम्प्रदायाविच्छेदान्न निर्मूलत्वाशङ्केति दर्शयितुमविच्छिन्नेत्युक्तं, ग्रहसौस्थित्यनिमित्तपूर्वकृतस्य शुभकर्मणः फलविपाकः ग्रहदौःस्थित्यनिमित्तो ऽशुभस्य तद्गतशब्देन सौस्थित्यदौःस्थित्यविषयतोक्ता, ज्योतिःशास्त्रे ग्रहदौःस्थित्ये शान्तिविधानात्सौस्थित्ये च्योपनयनादिविधानात्तस्य च वेदमूलत्वात्कर्मफलविपाकसूचनं वेदमूलमित्यर्थः । ज्योतिःशास्त्रन्यायं साधुमुद्रादिष्वतिदिशति * एतेनेति * पूर्वं शान्त्यादिविधानद्वारेण वेदमूलत्वमुक्तम् । यद्वा साक्षादेव तत्प्रतिपादका विधयो ऽनुमातव्या इत्याह * ईदृशा चेति * गृहसन्निवेशो वास्तुविद्याविषयः । शरीरसन्निवेशः सामुद्रविषयः आदिशब्दोपात्तानां ग्रहाणां सौस्थित्यदौःस्थित्यरूपः सन्निवेशो ज्योतिःशास्त्रविषयः मीमांसाया धर्मज्ञानप्रयोजनत्वस्य प्रथमसूत्रेणैवोक्तत्वात्तदुपेक्ष्य लोको मूलमित्याह * मीमांसात्विति * कथं लोकात्प्रवृत्तेत्यपेक्षिते प्रत्यक्षानुमानादिभिरित्युक्तम् प्रत्यक्षादिसिद्धत्वे शास्त्रानर्थक्यमाशङ्क्याविच्छिन्नसम्प्रदायानां पण्डितानां व्यवहारो यैरित्युक्तम् । सम्प्रदायविच्छेदस्य प्रयोजनमाह * न हीति * मीमांसामूलप्रयोजने न्यायविस्तरे ऽतिदिशति * एतेनेति * ननु प्रत्यक्षादिलक्षणपरस्य न्यायविस्तरस्य कथं धर्मज्ञानप्रयोजनत्वमित्याशङ्क्य वाक्यार्थधर्मप्रतिपत्त्युपायभूतपदार्थविवेकहेतुप्रत्यक्षादिविवेचनेनेति श्लोकद्वयेनाह * विषय इति * वेदस्वरूपावधारणद्वारेणार्थस्य धर्मज्ञानोपयोगित्वमाह * वेदो ऽपीति * प्रत्यक्षमात्रेण वेदावधारणसिद्धेरादिशब्दानर्थक्यमाशङ्क्य विप्रकीर्णात्मकेत्युक्तम् प्रतीकग्रहणेन मन्त्रशेषस्यानुमेयत्वात्स्वयमश्रुतस्यापि कस्य चिद्वेदभागस्याप्तवाक्यावसेयत्वाद्विश्वजिदादौ च ज्योतिष्टोमवदित्यादिवाक्यशेषस्योपमानाधीनावगतित्वात्स्वर्गकाम इत्यस्य वार्थापत्तिगम्यत्वाद्विचित्रप्रमाणगम्य इत्यर्थः । न्यायविस्तरस्य धर्मज्ञानोपयोगित्वं मनुनाप्युक्तमित्याह * तथा चेति * त्रयमित्युपलक्षणार्थमुक्तम् । ननु तर्कस्य धर्मज्ञानो-

पयोगित्वे बौद्धादितर्काणामपि धर्मज्ञानोपयोगित्वं प्रसज्येतेत्याश ङ्क्य तेषामपि पूर्वपक्षप्रतिपादनार्थत्वेनोपयोगादनिष्टापत्त्यभावं द र्शयितुमाह * प्रायेण चेति * कुमार्गप्रवृत्तावधर्मवासितान्तःकर णत्वं हेतुः । निश्चितचन्द्रैक्यस्य दोषवशाद् द्विचन्द्रभ्रमोत्पादे ऽपि द्वित्वानध्यवसायाद्धर्मतत्त्वज्ञस्याधर्मवासनादोषात् कुमार्गप्रवृत्ताव पि तत्राध्यवसायानुपपत्तिमाशङ्क्य * तत्त्वज्ञानप्रतिबद्धत्वमुक्तम् * स्वोत्प्रेक्षितत्वनिरासार्थं लोकादिमूलोपन्यासः । सर्वासां विरुद्धाना प्रतिपत्तीनां यानि मुखानि विषयास्तेषां प्रदर्शनं क्रियतइति शेषः तेषां च मुखानामुपपत्तयः कथ्यन्तइति वक्ष्यमाणमाख्यातं विपरि णमय्यानुषज्यते । तासां चोपपत्तीनां बलाबलसम्प्रधारणपूर्वक तत्त्वनिश्चयस्य द्वारनियमे चोपपत्तिरिति कथ्यतइत्यर्थः । ननु स्वो त्प्रेक्षितेनापि तर्केण तत्त्वनिश्चयोपपत्तेः किं लोकादिप्रसूतैस्तर्कशा स्त्रैरित्याशङ्क्याह * अन्यथा पुनरिति * भ्रान्त्युत्पादनशक्तिहेतुत्वे नोक्तं बहुजनवचनसम्मतत्वमुपपादयितु *मज्ञानबाधनादित्युक्तम्* न्यायविस्तरानभिज्ञत्वेनोपपत्तिबलाबलज्ञानरहितानां पुंसां बोधो त्पादनादित्यर्थः । ननु न्यायविस्तरस्योपदेशशास्त्रत्वाभावात्कथं तेन बलाबलावधारणमित्याशङ्क्याह * सर्वासु त्विति * स्वातन्त्र्येणेति* प्रत्यक्षादिप्रमाणानुसारेणेत्यर्थः । ननु धर्मप्रमाणनिरूपणार्थस्य तर्क योक्तेन प्रकारेणास्तु धर्मज्ञानोपयोगित्वं यस्तु सर्वं जगन्नित्यमेवेति सांख्यानां नित्यत्वैकान्तप्रतिपादनं बौद्धानां च सर्वं जगदनित्यमेव सर्वात्मना पृथग्भूतं चेत्यनित्यत्वपृथक्त्वैकान्तप्रतिपादनमद्वैतवादि नां च सर्वेषामेकत्वैकान्तप्रतिपादनं सामान्यविशेषयोश्च व्यतिरेकै कान्तप्रतिपादनमौलुक्यानामादिशब्दोपात्तं वा व्यतिरेकैकान्तप्रति पादनं सांख्यानां तस्य कथं धर्मज्ञानोपयोगितेत्याशङ्क्य निष्कृष्टैक पदार्थांशनिरूपणार्थत्वेनोपयोगमाह * यदपि चेति * ननु संमु ग्धेनापि वस्तुना वाहनदोहनादिव्यवहारसिद्धेः किमंशनिष्कर्षेणे त्याशङ्क्य वाक्यार्थप्रतिपत्तेः पदार्थप्रतिपत्तिहेतुकत्वात्पदार्थानां च वस्त्वंशविषयत्वात्तन्निष्कर्षो ऽवश्यकार्य इत्याह * अवश्यं चेति * तदेव व्यतिरेकमुखेनोपपादयति * अन्यथेति * मन्त्रार्थवादी यः स्तुतिनिन्दालक्षणनिरूपणार्थमप्येकान्तप्रतिपादनमवश्यकार्यमित्याह * मन्त्रेति * ननु येषा सुखदुःखमोहात्मकसत्वरजस्तमोरूपं प्रधा जगत्कारणमिति प्रक्रिया स्थितिसिद्धान्तापरपर्याया सांख्यैः पुरुष ति ब्रह्मविद्भिरीश्वर इति पातञ्जलीयैः परमाणव इत्यौलुक्यैरादि द्वात्तत्तत्कार्यं जगदिति यथाक्रमं सांख्यादिभिः प्रतीताः प्रतिग

ताः प्रतिज्ञाताङ्गीकृताः किमासां सर्वासां मूलमित्याशङ्क्याह * यता इति * सृष्टिप्रलयादिरूपेणेति प्राधानादिभ्यो जगतः सृष्टिप्रलदिरूपेणेति प्रधानादिभ्यो जगतः सृष्टिरुत्पत्तिस्तेष्वेव च प्रलय इपादानकारणत्वमुक्तमादिशब्देनेश्वरस्य निमित्तकारणत्वमुक्तं तृतीयेत्थम्भूतलक्षणार्थां सूक्ष्माद्वटबीजात् स्थूलवृक्षोत्पत्तिदर्शनात्प्रधानादेः सूक्ष्मात् स्थूलं जगदुत्पद्यतइत्यनुमानमित्यर्थः । प्रयोजने सत्यपि वेदप्रामाण्ये स्वर्गयागादीनां साध्यसाधकत्वावबोधे कथं सूक्ष्मादपूर्वात्स्वर्गादेः स्थूलस्योत्पत्तिः सम्भवतीति हेतुकानां विचिकित्सानिवृत्तिरित्याह * प्रयोजनतेति * सृष्टिप्रलयाङ्गीकरणस्य प्रयोजनमाह * सर्गेति * यस्मात्सत्यसति वा पुरुषकारे तदूबलेदैवबलेन कार्यं प्रवर्त्तते दैवोपरमे चोपरमति, सृष्ट्यादौ तु पुरुषकाराभावे ऽपि दैवमात्राज्जगदुत्पत्तेः प्रलयकाले च सत्यपि पुरुषकारे दैवोपरमे जगदुपरमते तस्माद्दैवस्याधिकः पुरुषकारात्प्रभावः सामर्थ्यमिति मत्वा श्रौतस्मार्त्तकर्मानुष्ठाने यतितव्यमिति सृष्टिप्रलयविषयस्यापि तर्कस्य धर्मोपयोगितेति भावः । विज्ञानमात्रादिप्रक्रियायां मूलप्रयोजनं चाह * विज्ञानमात्रेति * निवर्त्तयितुं वादानामित्यन्वयः एवं बाह्यतर्काणामपि कथं चिद्धर्मज्ञानोपयोगसम्भवाज्ज्ञानिष्टापत्तिरित्युक्त्वा प्रकृतं सकलं वेदातिरिक्तविद्यास्थानप्रामाण्यमुपसंहरति * इत्युपपन्नमिति * अतश्चोपसंहारभाष्ये दृष्टादृष्टप्रयोजनभेदेन मूलविवेककथनं सर्वविषयमेव योजनीयमित्याह * सर्वत्र चेति * वृश्चिकविद्याग्रहणेनायुर्वेदोपलक्षणादादिशब्देन च नीतिशास्त्राद्युपसंग्रहात्त्रैवर्णिकपरिगृहीतानामर्थकामोपयोगिनामपि विद्यास्थानानां प्रामाण्यं सूचितं त्रैवर्णिकापरिगृहीतानां बौद्धादिग्रन्थानां प्रामाण्याभ्यनुज्ञानाशङ्कया निषेत्स्यमानत्वात् ।

॥ अथ श्रुतिप्राबल्याधिकरणम् ॥ २ ॥

## विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ॥ ३ ॥

सङ्गतिमाह * स्मृतीति * कथमपोद्यतइत्यपेक्षिते सूत्रारूढं तत्स्वरूपमाह * विरोधे त्विति * कस्मिन्नसतीत्यपेक्षिते विरोधे वेदवाक्येनेत्युक्तं विरोधे ऽपि वैपरीत्यपरिच्छेदात्प्रागनुपसञ्जातविरोधित्वाच्छ्रुत्यनुमानसम्भवाच्च प्रत्यक्षश्रुतितः प्रागनुमानं प्रवर्त्तते मन्थरत्वादित्युक्तं तेन चार्थेनाधिष्ठिते इति वेदवाक्येन स्मृत्यर्थे वैपरीत्येनापरिच्छिन्ने परिच्छेदात्प्रागित्यर्थः । सङ्गतिमुक्त्वा विषयप्र-

१ प्रतिगताइति २ पु० ना० ।

दर्शनपूर्वकं सन्देहमाह * यावतीति * सम्प्रधार्यतइत्यनेन यत्र श्रुतिविरोधस्तत्र कथमिति भाष्यगतः कथं शब्दः सन्देहप्रदर्शनार्थत्वेन व्याख्यातः । अकथिते च विषये सन्देहस्य वक्तुमशक्यत्वादेतदेव भाष्यं विषयकथनार्थमपीति वक्ष्यमाणोदाहरणभाष्यानादरायोदाहृत्येत्यनेन सूचितम् । यावन्तीत्यादिना चानादरकारणमुक्तम् पर्युदस्यतइत्यनेनापवादत्वं दर्शितम् । निषेधस्य विकल्पापादकत्वेनापवादत्वायोगात् । प्रश्नपूर्वकं सन्देहहेतुमाह * कुत इति * ननु कथं प्रतीयमानस्य विरोधस्य परिहारः कथं वा तस्मिन्सति बाधमन्तरेणागतिरित्याशङ्क्य सामान्यन्यायप्रदर्शनपूर्वकमुभयमुपपादयति * एकविषयेति * विचाराविषयत्वापत्तेर्विरोधपरिहारेण पूर्वपक्षो न युक्त इत्याशङ्कित विरोधयोरपीत्युक्तम् । * केन चित्प्रकारेणेति * वेष्टनस्मृतेर्द्विच्यङ्गुलव्यतिरिक्तविषयत्वात्स्पर्शश्रुतेश्च तन्मात्रविषयत्वाद्राजक्रयाग्नीषोमीयावध्योश्चापद्विषयत्वादष्टाचत्वारिंशद्वर्षब्रह्मचर्यस्मृतिकृष्णकेशाधानश्रुत्योश्च गार्हस्थ्यायोग्यायोग्यविषयत्वादित्यर्थः । विधेयप्रतिषेध्ययोर्वेत्यनेन सत्यप्येकविषयत्वे विरुद्धार्थोपसंहारित्वाभावादपि विरोधपरिहारः * सम्भवतीत्युक्तम् * राजक्रयादूर्ध्वं विधेयस्याभोजनसङ्कल्पस्य प्रतिषेध्यस्य च राजक्रयात्प्राग्भोजनस्य विरोधाभावेनैकस्मिन्नपि दीक्षितान्नरूपे विषये समुच्चयसम्भवादित्यर्थः । स्पर्शवेष्टनयोः कृष्णकेशाधानाष्टाचत्वारिंशद्वर्षब्रह्मचर्ययोरन्यैकविधानेनार्थादितरप्रतिषेधमभिप्रेत्य वेष्टिताया अपि स्पर्शसम्भवात् कृष्णकेशत्वस्य चानवस्थितवयोवस्थां कालविशेषत्वेनाष्टाचत्वारिंशद्वर्षब्रह्मचर्योत्तरकालमपि कस्मिंश्चित्पुरुषे सम्भवाद्विरोधपरिहारो वक्तुं शक्यते सति वा तुल्यमूल इत्येतद्व्याख्यातुम् * एकप्रयोगेत्याद्युक्तम् * विकल्पाश्रयणे ऽप्युभयप्रामाण्यमुपपत्स्यतइत्युक्तं विरोधिनोः समावेशायोगात्कथमुभयप्रामाण्यमित्यशङ्क्य * अत्यन्तविरोधाभावादित्युक्तम् * कथं विरोधाभाव इत्याशङ्क्योभयोः प्रामाण्याङ्गीकरणेनेत्युक्तम् । प्रामाण्यशब्देनात्रानुष्ठानलक्षणफलानपहारो ऽभिप्रेतः समुच्चय एव तर्हि कस्मान्नेष्यतइत्याशङ्क्यैकप्रयोगान्तरत्वासम्भवादित्युक्तम् । कथं तर्हि फलानपहार इत्याशङ्क्य प्रयोगान्तरे चोभयानुग्रहः स्यादित्युक्तम् * प्रत्यक्षानुमेयश्रुत्योस्तुल्यबलत्वाद्विकल्पासम्भवमाशङ्क्य * प्रक्षत्येत्याद्युक्तम् * समन्वयिककायोजनं त्वेवं यथाशङ्कितविरोधयोरपि भिन्नविषयत्वेन व्यवस्था सिद्ध्येद्यदि वैकस्मिन्नपि विषये विधेयप्रतिषेध्ययोर्विरोधाभावेन समुच्चयासम्भवात्तुभयप्रामाण्यमुपपत्स्यते एकप्रयोगग-

तत्वासम्भवाद्विकल्पाश्रयणे ऽपि यद्युभयप्रामाण्यमुपप
विरोधविषये ऽपि स्मृतिप्रामाण्यमादर्त्तव्यमिति सिद्धा
भिधानार्थं * बाधो वा तद्धि पर्ययादिति यदुक्तम् * तद्धि
८३।१ * अथ त्विति * महान् बलाबलविशेष इति महच्छब्देन
तिविरुद्धाया श्रुतेरनुमानमेव नास्तीति सूचितम् । लौकिक
मानवदिति दृष्टान्तेन चैतदेव प्रकटितं प्रत्यक्षविरोधे त्वनुम
त्तिरेव प्रतिबद्ध्यते यथोक्तं मूले तस्य ह्यनुत्पन्नपूर्वेण वि
इति । पूर्वपक्षमारभते * किं तावदिति * अन्यथा ह्यविरे
प्रामाण्यप्रसङ्गे सत्यप्रामाण्येन विरोधमर्यादातिक्रमात्पूर्वा
सिद्धान्तः प्रत्युद्ध्रियेतेत्यर्थः : एतदेवोपपादयति * अनाश
अतिप्रसक्तिप्रदर्शनार्थं हेतुदर्शनाद्युपन्यासः । आदिशब्दे
भवपारतन्त्र्यमभिप्रेतम् । खिलानि परिशिष्टानि । शाखा
लानि प्रकरणानि वा आदिशब्दोक्तानि काण्डानि तेषां ये
भेदास्तैर्भिन्ने त्विति विग्रहः लिङ्गादीत्यादिशब्देन समस्त
प्रामाण्याभिधानं नामादीत्यादिशब्देनातिदेशकवचनाभिध
तिलिङ्गाद्यात्मकश्चोपदेशो नामादिद्वारश्चातिदेशस्तदात्मक
चित्राः प्रमाणभागा येषां वेदानामिति विग्रहः । ननु वि
ङ्गानिराकरणेनान्यत्र प्रामाण्यस्याध्यवसातुं शक्यत्वात्कथं
प्रामाण्यप्रतिघातापत्तिरित्याशङ्क्याह *तथा हीति* ननु त्वत्प
भ्रान्त्यादिमूलत्ववारणमत आह *एकेनेति* एवं तावत् (सि
पेक्षणे एकमूलव्यवस्थोपेक्षणे अप्रामाण्यनिवृत्त्यर्थं मूलान्तर
या न शक्येत्यन्वयः। सिद्धान्तिमते स्मृत्यधिकरणसिद्धान्तः[1])
द्धान्तहानिभयाद्विरोधे ऽपि वेदमूलत्वं न निराकार्यमित्युक्ता
विरोधो मूलभूतवेदनिराकरणं कर्त्तुमपि न शक्नोत्यनैकान्तिक
८४।२ त्याह * किं चेति * श्लोकं व्याचष्टे * यदा त्विति * क
स्यापि वचनस्य शाखान्तरीयत्वेनानादरशङ्का निराकर्त्तुं स
खाप्रत्ययकर्मव्यवहारिणामिति । यदुक्तं तद्व्याचष्टे * न न्त्रो
न च प्रमाणाभावेनाकल्पनामिति यच्च दृढस्मरणोपस्थापितशब्दे
तदुपपादयति * अध्ययनवच्चेति * न शोभतइत्यनेनोभयोरा
श्रम्योरन्वयः । एतदेवोपसंहरति * तस्मादिति * अर्द्धवें
पत्तेरपि नेह श्रुतिमूलत्वं निराकार्यमित्याह * किं चेति * ए
धर्मसंहितायामर्द्धमस्यार्थान्तरेण वैशसं विरोध इत्यर्थः । ३
क्रियालक्षणाश्चास्मिन्पक्षे दोषः स्यादित्याह * मूलान्तरमिति

१ अयं पा० २ पु० ना०

चतां क्रियामतिक्रम्य क्रिया ऽतिक्रिया का पुनरुचिता क्रियेत्य-
ायामाह * तेनेति * एकस्मिंश्च धर्मशास्त्रे क चित्प्रामाण्यसि-
र्थे भ्रान्त्यादिमूलानामसम्भवः क चिच्च बाधसिद्ध्यर्थं स-
वो ऽङ्गीकार्य इति विरुद्धसम्भवासम्भवापादकत्वादपि स्मृति-
धो न युक्त इत्याह * किं चेति * विरोधपक्षे बाधो बाधपक्षः पक्षे
बाधो न युज्यते किन्तर्हि युज्यते ऽत आह * तेनेति * केन चित्पा-
तेन सर्वजरत्या योषितो ऽनुपभोग्यत्वात्सर्वतरुण्याश्च वृद्धे ऽप्यरु-
सङ्गादर्द्धजरत्यानयने दूतः प्रेषित इति लोकप्रवादो ऽर्द्धजरतीयशब्दे
ोपमानत्वेनोक्तः । अस्तु तर्ह्यैकरूप्याय सर्वासामप्रामाण्यमत आह
रुद्धत्वं चेति * विशिष्टपुरुषप्रणीतत्वं प्रामाण्यकारणत्वेनोक्तं वि
ऽपि निराकर्त्तुमशक्यमित्याशयः । यच्चात्र हेतुदर्शनं स्मृत्यप्रामा-
कारणमुच्यते तदपि स्थितसिद्धान्तहान्यापादकत्वादयुक्तमित्याह
ह्यमाणेति * उत्प्रेक्षणीयो हेतुर्यस्य धर्मशास्त्रस्य तत्तथोक्तो लो-
ः सर्ववेष्टनादिस्मृतिहेतुत्वं न केन चित्प्रमाणेनावगतं किं तूत्प्रे-
ात्रेणोच्यते सा चाष्टकादावपि शक्या कर्त्तुमित्याशयः । एत-
प्रपञ्चयति * रागेति * रागः प्रीतिर्द्वेषो ऽप्रीतिः मदो गर्वः उ-
ो ग्रहावेशः प्रमादालस्ये त्वन्यासक्तयनासक्तयर्थे व्याख्याते लु-
ा लिप्सातिशयः प्रत्युत प्रामाण्यहेतुकल्पनमेव सुलभमित्याह
दुष्टे न हीति * जिज्ञासुचित्तेन मन्वादिष्वदुष्टेन निराशङ्केने-
ः । यदि चोत्प्रेक्षामात्रकल्पितेन हेतुना प्रत्यक्षश्रुतिविरोधेन वा
ण्यमपह्नूयते ततो वेदस्यापि सर्वस्याप्रामाण्यं प्रसज्येतेत्याह
ा चेति * न चेयमुत्प्रेक्षास्माभिरेव श्रूयते किंत्वन्यैरेव सर्वा-
ण्यवादिभिः कृतेत्याह * लोकायतिकेति * उत्प्रेक्षाभिनिवे-
षां मूर्खत्वं मुग्धत्वं भ्रान्तत्वाख्यं कारणत्वेनोक्तम् । कर्मव्य-
ः कस्मादन्यदपेक्षिते यावत्किं चिदित्यादिना सार्द्धश्लोकेन
ीतम् ।

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेयं बृहस्पतिः ॥

इत्यग्निहोत्रादीनां दृष्टार्थत्वं नास्तिकैरुक्तम् । अग्नीषोमीयादि-
विधेश्च न हिंस्यात्सर्वाभूतानीति निषेधेन विरोधो योजितः ।
वंस्वभावानां लौकायतिकानामवकाशदानमशेषमेव धर्ममार्ग
दित्याह * तेभ्यश्चेह इति * ईषदर्थे नामशब्दः । एतदेव ह-
वेनोपपादयति * प्रसरमिति * ननु विरोधहेतुदर्शनकारण-
माण्यमुच्यमानं तदभावे कथं चार्वाकैरापाद्यते ऽत आह * क

चिदिति * धाम स्थानं तस्मात्तेभ्यो ऽवकाशो न क्व चिद्देय इत्याह *तस्मादिति* लोकायतं नास्तिकशास्त्रं तत्र तिष्ठन्तीति लोकायतस्थाश्चार्वाकाः धर्मो नाश्यते येन युक्तिजालेन तत्संपन्नाः ।

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥

इति च निषिद्धत्वात्स्मृतिप्रामाण्ये विचिकित्सा न कार्येत्याह *यच्चादाविति* राजाद्याज्ञाया यत्कार्यत्वेन सिद्धं निश्चितं तद्वेदे विचारितमाज्ञासिद्धमुच्यते आज्ञासिद्धं प्रमाणत्वं यस्य पुराणादेचतुष्टयस्य तत्तथोक्तं कथमविचारितसिद्धतेत्यपेक्षायामादौ न्यायनिरूपणात्प्रागनादिकालमहाजनपरिग्रहदार्ढ्यप्रसवया श्रद्धया पुराणादिचतुष्टयमाज्ञासिद्धप्रमाणत्वरूपेण सिद्धमित्युक्तम् । न चैतावता न्यायशून्यत्वं शङ्कनीयमिति दर्शयितुं* पुनर्न्यायेन साधितमित्युक्तम् * विचिकित्सायां को दोषः स्यादित्यपेक्षायामाह * सर्वमिति * पराभवभयादपि नान्तरा श्लथयितव्यमित्याह *पक्षइति* एवं तावदुत्प्रेक्षामात्रकल्पितं दृष्टार्थत्वं न वेदमूलत्वनिराकरणायालमित्युक्तमिदानीं वास्तवमपि दृष्टार्थत्वं विरोधवदनैकान्तिकत्वान्न तन्निराकरणायालमित्याह * वेदश्चेति * श्रूयमाणविरोधि वेतीवार्थे समुद्रो वा महासत्त्वैस्त्वइति यद्वा शब्दः । अनैकान्तिकत्वं दर्शयति *यद्वा त्विति* ननु पुरुषार्थसाधनत्वलक्षणं दृष्टार्थत्वमिह हेतुः न चावघातादीनां तदस्ति क्रत्वर्थपुरोडाशनिष्पत्त्यर्थं तण्डुलीभावादिसाधनत्वादित्याशङ्क्योदाहरणान्तरमाह * ऋत्विग्भ्य इति * ऋत्विगभिमतदक्षिणालाभहेतुत्वेन दानस्य पुरुषार्थतापि वक्तुं शक्यतेति सूचयितुम् * ऋत्विग्भ्य इत्युक्तम् * तानूनप्त्रं परस्परमृत्विजां यजमानस्य चाव्यभिचारार्थं कर्मारम्भे शपथकर्म अतश्च सिद्धमनैकान्तिकत्वाद् दृष्टार्थत्वस्यासाधकत्वमित्याह * यदा चेति * तस्माद्विरोधहेतुदर्शनाभ्यां न वेदमूलत्वं निराकर्त्तुं शक्यमित्युपसंहरति *तेनेति* वेदमूलत्वानिराकरणाच्च न प्रामाण्यं निराकर्त्तुं शक्यमित्याह * तस्मादिति * पूर्वपक्षमुपसंहरति * अविशेषमिति * ईदृशं मूलश्रुत्यनुमानद्वारमविशिष्टं सामान्यतः सर्वासां स्मृतीनां यत्पूर्वन्यायेन प्रमाणत्वं प्राप्तं तदधुना विरुद्धश्रुत्यन्तःपर्यालोचनकाले सत्यपि विरोधे युक्तमित्यर्थः । साध्याहारं सूत्रं योजयन्सिद्धान्तमारभते * एवमिति * निर्मूलस्मृत्ययोगाद्वेदमूलत्वाभावे किमन्यमूलं स्यादित्याशङ्क्याह * यात्विति * स्पष्टग्रहणानन्यपरश्रुतिमूलत्वे ऽप्यप्रामाण्योपपत्तेस्तात्पर्यमात्रापवादो ऽप्य-

मेति दर्शितम्। न च सत्यपि वेदमूलत्वे स्वातन्त्र्येण प्रामाण्यं भ-
विष्यत्यत आह ❋ स्वातन्त्र्येणेति ❋ अस्तु तर्हि वेदस्यैवानुमानमत
आह ❋ वेदेति ❋ ननु सत्यपि प्रत्यक्षश्रुतिविरोधे किमिति नानु-
मीयते ऽत आह ❋ वेदेति ❋ तस्यानुमेयस्य वेदवाक्यस्य यो ऽर्थे
औदुम्बर्यादिस्तद्विषयं प्रत्यक्षं वेदवाक्यं यावन्नोपलभ्यतइत्यर्थः।
अनुमानस्यासन्निकृष्टार्थविषयत्वात्सन्निकृष्टस्य च ताद्रूप्यतद्विपर्ययप-
रिच्छेदयोस्तुल्यत्वाद्विपर्ययपरिच्छिन्नस्याननुमेयत्वे ताद्रूप्यपरिच्छिन्नं
दृष्टान्तयति ❋ न हीति ❋ एतदेव विवृणोति ❋ स्मृतीनामिति ❋ निवारणे
कारणमाह ❋ तावदेवेति ❋ ननु प्रत्यक्षेणानुमानस्योत्पत्तिप्रतिबन्ध-
लक्षणो बाधो भवति स्मार्त्ते तु सर्ववेष्टनादिकर्त्तव्यताज्ञानं विरोधे
ऽप्युत्पद्यमानं कथं बाध्यते न ह्युत्पन्नस्य ज्ञानस्य मिथ्यात्वलक्षणो
बाधः सम्भवतीत्याशङ्क्याह ❋ कृत्तमूला इति ❋ मूलप्रमाणापेक्षत्वा-
त्स्मृतिप्रामाण्यं तदभावे इदं न सम्भवतीत्याशयः। एतदेवोपपा-
दयति ❋ न हीति ❋ यतो वेदाख्यान्मूलात्स्मृतिप्रामाण्यं स्यात्त-
दाख्यं मूलं न विद्यतइत्यर्थः। किमिति न विद्यतइत्यपेक्षिते पू-
र्वोक्तमेव प्रत्यक्षशास्त्रेण मूलश्रुत्यनुमानप्रतिबन्धमुपपादयितुं स्मार-
यति ❋ प्रत्यक्षेति ❋ उपपादयति ❋ नैराकाङ्क्ष्यादिति ❋ अयमाश-
यः गृहीतव्याप्तिकस्याप्यजिज्ञासोर्धूमादिदर्शने ऽप्यग्न्यादिज्ञाना-
नुपलम्भात्परोक्षार्थविषयज्ञाने जिज्ञासापि सहकारिकारणमवसी-
यते। स्पर्शश्रुत्या चावेष्टितत्वरूपेणौदुम्बर्याः परिच्छिन्नत्वात्कीदृ-
गौदुम्बर्यङ्गमिति जिज्ञासा नास्तीति जिज्ञासैवात्राकाङ्क्षाशब्देनो-
क्ता। कथं नैराकाङ्क्ष्यमित्याशङ्क्याह ❋ प्रमेयमिति ❋ यत्पर्वतादिप्रमेयं
केन चिदग्निमत्त्वादिरूपेण परिच्छेद्यं भवेत्तस्य पर्वतादेस्तेन रूपेण
परिच्छेदात्सावकाशप्रमाणता स्यादित्यन्वयः। अवकाशः प्रमाणस्य
प्रमेये प्रवर्त्तितुं मार्गो जिज्ञासोपलक्षणो ऽभिप्रेतः। प्रमाणं तस्मि-
न्प्रमेये सावकाशं स्यादिति समासार्थः। नन्वसत्यामपि जिज्ञासायां
व्याप्यमित्यनुमानं न प्रवर्त्तते व्याप्यज्ञानं हि व्यापकज्ञाने कारणम्।
न तु क्व चिद्व्याप्यज्ञाने ऽपि व्यापकाज्ञानं तद्व्याप्त्यस्मरणादप्युपप-
द्यते। द्रव्यत्वस्य चानौष्ण्यव्याप्तिस्मरणे ऽपि तैजसस्यानौष्ण्यानुमा-
नानुपपत्तिः प्रत्यक्षेणौष्ण्यावगतौ तैजसो विपक्षत्वे सति तद्वृत्तेर्द्रव्य-
त्वस्य व्याप्तिभङ्गादुपपत्स्यते इह तु स्पर्शश्रुत्या वेष्टनाभावावगमे ऽपि
सर्ववेष्टनस्मरणस्य श्रुतिकल्पकस्य सद्भावाद्विरुद्धश्रुतिदर्शनस्य
चानैकान्तिकत्वेन सर्ववेष्टनश्रुत्यभावानुमापकत्वायोगात्कथं श्रुत्य-

१ शास्त्रीयस्यज्ञानस्येति २ पु० पा०।

नुमानानुपपत्तिरित्याशङ्क्याह * ताद्रूप्येणेति * प्रत्यक्षावगते ऽग्नौ व्याप्तिस्मरणे सत्यपि धूमज्ञानस्याग्निज्ञानजनकत्वादर्शनादजिज्ञासैव तत्रानुमानानुत्पत्तिकारणमवसीयतइति भावः। नन्वेवमपि स्मृत्य परिच्छिन्ने श्रुतेरप्रवृत्तिरिति विपरीतं कस्मान्न स्यादित्याशङ्क्या * भिन्नेति * भिन्नयोः सन्निकृष्टविप्रकृष्टत्वरूपेण विलक्षणयोः कक्षयोः प्रकोष्ठयोः स्थिते प्रमाणे तत्रैकस्मिन्प्रमेये धावतइत्यर्थः। नन् प्रत्यक्षशास्त्रस्यापि पदपदार्थपर्यालोचनादिसापेक्षत्वेनार्थपरिच्छेदविक्षेपात्तद्विरोधात्पूर्वं मन्थरस्याप्यारब्धव्यापारत्वात्कथमप्रवृत्तिरित्या
१ शङ्क्याह * तद्धीति * एकमपीत्यपिशब्दो यद्यपि शब्दार्थे व्याख्येयः। यद्यपि तन्मन्थरं प्रमाणं दूरमपि प्राप्तं बहूनपि व्यापारान् कृतवत् एकमेवार्थपरिच्छेदाख्यं पदमगतमर्थपरिच्छेदमात्रं न कृतवदित्येवकाराध्याहारेण व्याख्येयम्। तथापीतरेणादौ गतेनार्थपरिच्छेदं कृतवता जीयतइति तथापि योत्वौ शब्दो ऽत्राध्याहार्यः। मन्थरत्वाविशेषात्तर्ह्यविरोधे ऽप्यप्रामाण्यापत्तेर्मर्यादातिक्रमः स्यादित्याशङ्क्याह * यत्रेति * नन्वेवं सत्यर्द्धवैशसादिदोषपरिहारार्थं विरोधे ऽपि प्रामाण्यमिष्यतामित्याशङ्क्यार्द्धवैशसं परिहर्त्तुमारभते * न हीति * यस्मादेवमैकरूप्यनियमो नास्ति तस्माच्छीघ्रप्रमाणभावाभावयोर्मन्थरप्रमाणप्रवृत्त्यप्रवृत्तिव्यवस्था न विरुद्धेति हिशब्दयोजना। एतदेवोपपादयितुं सामान्यन्यायं तावद्व्युत्पादयति * सर्वमिति * मूलमेव निकृत्यते मुखं वा विरुध्यतइति च पूर्वश्लोकोक्तस्य विरोधस्यैव द्वैविध्यमुक्तम्। श्रुत्या हि लिङ्गादीनां मूलं विनियोगहेतुः श्रुतिरेव छिद्यते नास्तित्वेन बोध्यते लिङ्गादिभिस्तु वाक्यादीनां मुखं विनियोजकश्रुत्यनुमानस्य द्वारं लिङ्गादि प्रतिबध्यते श्रुत्यननुमापकत्वेन ज्ञाप्यते। न च रोधारोधव्यवस्थैव न युक्तेति वाच्यमित्याह * न चेति * अवाच्यत्वे कारणमाह * उत्सर्गश्चेति * कथं तर्ह्युत्सर्गापवादयोर्व्यवस्थेत्याशङ्क्याह * विषयाविषयाविति * उत्सर्गस्य विषयमपवादस्याविषयं ज्ञात्वा बाधाभावः। अपवादस्य विषयमुत्सर्गस्याविषयं ज्ञात्वा बाध इति विवेक इत्यर्थः। व्यवस्थानभ्युपगमे तु व्यवहारविरोधः स्यादित्याह * यो हीति * यस्तु कश्चिद्वैयात्यादेवमपि व्यवहर्त्तुमारभते तस्य लोकविरोधमाह * तावदेव हीति * अनुमानस्य च प्रत्यक्षविरोधाविरोधयोर्बाधाबाधव्यवस्था लोकप्रसिद्धैवेत्याह * अनुमानमिति * सामान्यन्यायमुक्त्वा प्रकृते योजयति * एवमिति * न्यायलभ्यव्यवस्थाप्रतिपादनस्यार्द्धवैशसादिदोषपरिहारोपयोगितामाह * अत इति * अर्द्धवैशस-

।मातिक्रयार्द्धजरतीयत्वयोरप्युपलक्षणार्थम् । कथं न्यायतो
र्थत्यपेक्षायामुक्तामेव व्यवस्थां सुग्रहणार्थमनुसन्दधाति * प्र-
वाप्रमाणत्वइति * अतश्चैकरूप्यमेवायुक्तमित्याह * तस्मा-
* सिद्धान्तमुपसंहरति * तेनेति * ननु मृगतृष्णानुमानादेः
वस्तुविषयत्वेन वैकल्पिकतया विरोधपरिहारासम्भवाद् बाधो
। स्मृतेस्तु कार्यविषयतया विकल्पेनोभयानुग्रहसम्भवादत्यन्त-
न युक्त इत्याशङ्कते * विकल्प इति * परिहरति * उच्यत
ः पूर्वार्द्धेनात्यन्तबाधादपि विकल्पः पापीयानित्युक्तमुत्तरार्द्धेन
कृते ऽपि विकल्पे स्मृतेरत्यन्तबाधो ऽपरिहार्य इत्युक्तमिति वि-
। विकल्पस्य सुखाभ्युपगम्यत्वाभावोक्त्या तुल्यबलयोरगत्या
करणमिह तु स्मृतेरत्यन्तबाधेन गत्यन्तरसम्भवाद्विकल्पाङ्गी-
त्यन्तमन्याय्यमिति सूचितं तत्तावद्व्याचष्टे * तुल्यबलेति *
यां विलक्षणाभ्यामन्तरितेन विलक्षणीकृतेन श्रुतिस्मृत्योः प्रा-
र विषमत्वेन शिष्टयोरवगतयोः श्रुतिस्मृत्योर्विकल्प इति वि-
किमुतेत्यनेनोक्तमतुल्यबलाविकल्पस्यात्यन्तान्याय्यत्वमुक्तमु-
ति * तथा हीति * न च स्मृतिरपि निरपेक्षा येन तुल्य-
ादित्याह * स्मृतेरिति * ननु सापेक्षत्वे ऽप्यनुमीयमानायाः
त्यक्षया सह तुल्यबलत्वाद्विकल्पो भविष्यत्यत आह * परा-
* यदि विरोधे ऽपि श्रुतिरनुमीयेत ततः पराधीनप्रमाण- २०।१
त्या बाधितापि पुनरुज्जीवितुं क्षमा स्यान्न त्वेतदस्तीत्युक्तम्
माणपदे स्थितेति * श्रुत्याख्यं प्रमाणं पद्यते गम्यते ऽनेनेति
ानं प्रमाणपदं तत्त्वमस्थिता अननुमितश्रुतिकेत्यर्थः । विकल्प-
षत्वमुपपादयितुमारभते * तुल्यकक्षेति * तुल्या समाना
प्रयोस्ते तुल्यकक्षे तयोर्विकल्प इति विग्रहः व्रीहियव-
नियमार्थत्वेनान्यनिवृत्तिपर्यन्तत्वाद् व्रीहिशास्त्रप्रामाण्ये य-
नुपपत्तेर्यवशास्त्रप्रामाण्ये च व्रीहिप्रयोगानुपपत्तेरितरे-
ाण्यकल्पनं विना विकल्पो न युक्त इत्यर्थः । ततः
चेदत आह * प्रमाणस्येति * कीदृशं दोषद्वयमित्यपेक्ष-
* प्रमाणत्वमिति * प्रतीतप्रमाणत्वापह्नवः प्रतीतिविरोधा-
इत्यर्थः। अप्रतीताप्रामाण्यकल्पनं च द्वितीयो दोष इत्याह *
* सन्देहविपर्ययर्योर्दोषजन्यत्वाद्वेदे च तदभावात्प्रामाण्या-
मेवाप्रामाण्यं वाच्यं तस्मिंश्च प्रामाण्योपलम्भाभावः प्रमा-
तच्छब्देन दर्शितम् । तस्य प्रमाणस्याप्रमाणत्वमित्यर्थः । कथं
ण्योपलम्भस्याभाव इत्यपेक्षिते * प्रामाण्योपलम्भस्य भावे

सतीत्युक्तम् * यत्परिकल्पत इति यच्छब्दस्य क्रियाविशेषणत्व ऽप्यप्रमाणत्वकल्पनरूपो दोषः स्यादित्यनेनान्वयः । प्रमेयवचनो शब्दः । प्रमाणप्रमेययोः प्रामाण्योपलम्भाभावात् प्रमाणत्वयोः स्परं विपर्ययाद्विरोधादित्यर्थः । कल्पिताप्रामाण्यस्य च शास्त्र स्य प्रामाण्योपजीवनं विना तदर्थानुष्ठानायोगात्तदर्थानुष्ठान तस्मिन्नेव शास्त्रान्तरे परं दोषद्वयं स्यादित्याह * अङ्गीकृत्यापीति कीदृशमित्यपेक्षिते कल्पिताप्रामाण्यत्यागं तावद्दोषमाह * यद्भ प्रमाणत्वमिति * प्रामाण्योपलम्भाभावः प्रमाणं यस्याप्रमाणत्व स्तथोक्तमेतस्याप्रमाणत्वस्येत्यर्थः । निराकृतप्रामाण्योपजीवनं च तीयो दोष इत्याह * प्रत्यक्षमिति * शास्त्रान्तरवर्जनाश्रयणयोः पादितं दोषचतुष्टयमुपसंहरति * एवमिति * वाक्यान्तरे ऽ दोषचतुष्टयं योज्यमित्याह * एत एवेति * द्वितीये ऽपि वाक्ये प्रत प्रामाण्यापह्नवे ऽनुपलब्धे चाप्रामाण्ये कल्पितस्य चाप्रामाण्यस्य त्य निराकृतस्य च प्रामाण्यस्योपजीवने प्रकल्पितइत्यर्थः । यद्यप्येवं विकल्पः कस्माद् व्रीहियवादिष्वाश्रीयते ऽत आह * एवमिति गत्यन्तराभावमेवोपपादयति * व्रीहीति * ततः किमितिचे आह * द्वाभ्यामिति * अश्वमुखीभ्यां किंनरीभ्यामिवेत्यर्थः । ए स्मिन् श्रुत्यर्थे बुद्धिमुपसंहर्त्तुमपश्यन्तं श्रोतारं प्रत्युभयोः श्रुत्ये प्रामाण्यं प्रसज्येतेत्यर्थः । अस्तु तर्ह्युभयाप्रामाण्यमेवात आह *
१२ नेति * किमत्र गत्यन्तरमित्यपेक्षायामाह * एकस्य चेति एका माण्यमात्राद्गतिसम्भवे न द्वयोरप्रमाणता युक्तेति साध्याहारं योज्य कस्मान्न युक्तेत्याशङ्क्याह * सिद्ध इति * एकं विनाशयितुं शी एषां चानेकस्तेषाम्मध्ये सर्वनाशे समुत्पन्ने ह्यर्द्धं त्यजति पण्डि इति अयं लोकप्रवादः प्रसिद्ध इत्यन्वयः । भवति च प्रस्तुतो ऽ ऽस्य प्रवादस्य विषय इत्याह * सचायमिति * उभयोः श्रुत्योर्या र्थौ तयोरपरिग्रहादित्यर्थः । ननु मिश्रैर्यागादुभयोरनुग्रहो भवि ष्यत्यत आह * मिश्रैर्वेति * अप्यर्थे वाशब्दः मिश्रैरपि यागं कुर्व णस्योभयोः श्रुत्योर्नाश इत्यनुषङ्गः । ननु विधिस्त्वेकश्रुतित्वादित्य नेन न्यायेन सर्वाङ्गोपसंहारिणा प्रयोगवचनेन व्रीहियवयोः स च्चयावगमात्कथं मिश्रविधेरदर्शनमत आह * नियमार्थे हीति * अ प्राप्तविधिगोचरप्रयाजादिविषयो ऽसौ न्यायः । व्रीहियवयोस्तु नियमविधिगोचरत्वात्समुच्चयो न युक्त इत्याशयः । ननु समुच्चये ऽ नियमफलस्य नित्यत्वस्य सिद्धेरविरोध इत्याशङ्क्याह * प्राप्ते ह्येति पुरोडाशाक्षेपादेव प्राप्तेषु व्रीह्यादिषु द्रव्यान्तरप्रसक्तिनिमित्तानिय

त्वनिवृत्त्यर्थेनियतत्वफलस्य नियमस्य समुच्चयानुपपत्तिरित्याशयः
ननु श्रुतव्रीहियवातिरिक्तगोधूमादिनिवृत्त्यापि नियमोपपत्तेर्न व्रीह-
यवयोरितरेतरनिवर्त्तकत्वमित्याशङ्कयाह * व्रीहय इति * समर्थः
पदविधिरिति पदमात्रविधेः सामर्थ्यापेक्षत्वाद् व्रीह्यादिप्रातिपदिकस्य
च यवादिसापेक्षत्वेन व्याघातापत्तेर्विभक्त्यन्वयायोगान्निरपेक्षाणा-
मेव व्रीहियवानां तृतीयया करणत्वप्रतीतेर्मिश्रत्वं न युक्तमिति
भावः । किं चादृष्टार्थत्वे सत्यनिर्ज्ञातोपायपरिमाणत्वेन प्रधानस्यैका-
ङ्गविधानेन नैराकाङ्क्ष्याप्रतीतेः समुच्चयः स्यात् व्रीह्यादेस्तु प्रदेयप्र-
कृतित्वेन दृष्टार्थत्वादेकविधानेन नैराकाङ्क्ष्यावगतेः समुच्चयो न
युक्त इत्यभिप्रायेणाह * नैवेति * यथाश्रुतैर्निरपेक्षतया प्रदेयप्रकृति-
त्वेन श्रुतेरित्यर्थः । तस्मादुभयार्थोपरिग्रहवन्मिश्रयागे ऽप्युभयना-
शः स्यादित्युपसंहरति * एवमिति * अप्रतिपत्तिरपरिग्रहः एकस्य
वाप्रमाणत्वमित्यादिना पर्यायेणैकैकाप्रामाण्याश्रयणं नाम यद्वत्यन्त-
मुपपादितं तदुपसंहरति * तेनेति * एतच्चैकैकाप्रामाण्यमसम्भ-
वात् क्व चिदङ्गीक्रियते न तु दोष एव न भवतीति शङ्कनीयमित्या-
ह * सेयमिति * येयमेकैकाप्रमाणता द्वयोरप्यनवस्थिता सात्यन्त-
न्याय्येत्यर्थः । कथमन्याय्येत्यपेक्षायामाह * अव्यवस्थेति * अयु-
क्तत्वे हेतुमाह * सर्वत्रैव हीति * एवं तर्ह्यप्रतीयमानमपि गत्यन्तरं
क्व चित् व्रीहियववाक्ययोरपि मृग्यतां न त्वत्यन्तान्याय्यविकल्पा-
ङ्गीकरणं युक्तमित्याशङ्क्याह * तदेतदिति * श्रुतिस्मृत्योस्त्वेकरूपत्वे
व्यवस्थितं चिह्नमस्तीत्याह * श्रुतीति * किं तदित्यपेक्षायामाह *
स्वरूपेणेति * ततः स्वरूपादित्यर्थः । अन्यशब्दस्य नित्यसापेक्षत्वा-
त्समासाविघातः । कथमनयोर्व्यवस्थाकारणत्वमित्याशङ्क्याह * यो
स्येति * न च श्रुतेः स्वरूपाश्रयस्य प्रामाण्यरूपस्य धर्मस्य बलव-
त्कारणान्तरं बाधकमस्तीत्याह * न चेति * ततश्च स्मृतेः स्वरूपा-
श्रयस्याप्रामाण्यरूपस्य धर्मस्य बाधकं मूलश्रुत्यनुमानं प्रत्यक्षश्रुतिवि-
रोधान्नास्तीत्यर्थादुक्तं भवति । अन्यापेक्षस्य तु स्मृतेः प्रामाण्यरूपस्य
श्रुतिरेव बाधिकास्तीत्याह * स्मार्त्तस्येति * ततश्च श्रुतेरन्यापेक्षस्या-
प्रामाण्यरूपस्य धर्मस्य कारणाभाव एव बाधको ऽस्तीत्येतदप्यर्था-
दुक्तं भवति । कथं श्रौतप्रत्ययस्य स्मार्त्तप्रत्ययाद् बलवत्त्वमित्याश-
ङ्क्याह * प्रत्यक्षे चेति * सन्निकृष्टविप्रकृष्टार्थत्वादपि श्रुतिस्मृत्यो-
र्बलाबलव्यवस्था प्रतीयतइत्याह * श्रुतिलिङ्गेति * ननु श्रौतप्रत्ययस्य
समकालमेव स्मार्त्तप्रत्ययोदयात्कथं सन्निकर्षविप्रकर्षावित्याशङ्क्या-
ह * स्मृत्येति * प्रतीतिमात्रं स्मृत्या तदा क्रियते न श्रुतिवत्प्रमि-

तिरित्यर्थः । क्व चिद्विपरीतपाठस्तत्र । प्रमीयतइति भावे लकार
यावत् स्मृत्या श्रुत्यनुमानेन प्रमाणीभूयते भवितुमारभ्यते तावच्छ्
त्यार्थ एव प्रतीयतइत्यर्थः । नन्वर्थपरिच्छेदाय प्रवृत्ता स्मृतिः प
दपि तावदर्थपरिच्छेदं करिष्यतीति किमिति विकल्पो न स्यादित
शङ्कापवादसिद्ध्यर्थं जिज्ञासाविरहेऽशैकप्रमाणपरिच्छिन्ने ऽर्थे
माणान्तराप्रवृत्तिं पूर्वोक्तामेव विकल्पनिरासार्थं स्मारयति * वि
छेति * प्रमेयाकाङ्क्षानिराकरणेन प्रमात्रा आकाङ्क्षैवं निराकृता ता
च्यपरिच्छिन्ने ऽपि मन्थरं न प्रवर्तते किमुत वैपरीत्यपरिच्छिन्नइत्य
ह * न चेति * ननु श्रुत्यर्थपरिच्छेदकाले यद्यपि स्मृत्यार्थो न
रिच्छिद्यते तथापि श्रुतिस्तावदनुमीयते ततश्चानुमितायाः श्रुतेः प्र
क्षया सहाविशेषात्किमिति विकल्पो न स्यादित्याशङ्क्याह * स्मृ
चेति * स्मार्त्तार्थपरामर्शमात्रं तदोत्पद्यते न श्रुत्यनुमानमित्यर्थ
नन्वन्यतः परिच्छिन्नो ऽप्यर्थो सत्यामपि जिज्ञासायां स्वसाम
स्मृत्यापि पश्चाच्छेत्स्यते ऽत आह * किं कर्त्तव्यमिति * यदि चै
मभविष्यत्ततः सन्निकर्षविप्रकर्षविशेषाभावाद् बलाबलव्यवस्था न
भविष्यदित्याह * युगपदिति * यदि च श्रुत्यर्थपरिच्छेदसमका
मेव स्मृत्या स्वमूलं स्मृतिरनुमीयेत ततो ऽर्थविप्रकर्षे ऽपि श्रुत्यव
१ म्भात् बलाबलव्यवस्था न स्यान्न त्वेतदस्तीत्याह * यद्वेति * तास्मि
न्नेव क्षणे मूलं यदि कल्पयेदिति यदिशब्दो ऽध्याहार्यः यद्वेति
यच्छब्द एव यदिशब्दार्थे व्याख्येयः यतस्तु स्मृत्या गृहीते ऽप्य
मूलान्तरनिषेधयुक्तिपर्यालोचनापेक्षत्वाच्चिरेण श्रुतिकल्पनेति तु
ब्दाध्याहारेण व्याख्येयः । ननु श्रुत्यनुमानासम्भवे ऽपि स्वतन्त्र
स्मृतिः प्रतिष्ठास्यतीति विकल्पो ऽपरिहार्य इत्याशङ्क्याह * स्मृ
तिरिति * अतो ऽस्ति श्रुतिस्मृत्योरेकरूपत्वे व्यवस्थितं चिह्नमित्यु
संहरति * तदपेक्षेति * ततश्चेत्यस्मिन्नर्थे पुनः शब्दः । एवं विक
ल्पस्याष्टदोषत्वान्न तावत्स्वाभ्युपेयतेति पूर्वार्द्धं व्याख्याय पाक्षि
चाप्रमाणत्वे स्मृतयः सुनिराकरा इत्युत्तरार्धं व्याख्यास्यन्विवेका
पूर्वार्द्धोक्तं बाधप्रकारमुपसंहरति * एव तावदिति * उत्तरा
व्याचष्टे * द्वितीयेनेति * विकल्पपदवीं गतायाः स्मृतेरत्यन्त
बाध इति द्वितीयः प्रकार इत्यर्थः । कथमित्यपेक्षायामापन्नापाक्षिव
बाधमित्युक्तम् । अत्रैवार्थे ऽनारब्धव्याख्यानमपि भाष्यं प्रसङ्गाद्वि
क्तुं योजयति * तद्दर्शयतीति * नास्ति व्यामोहविज्ञानइत्यादि भा
ष्येणैको बाधप्रकार उक्तः । विकल्पे त्वित्यादिना द्वितीय इति वि
वेकः । पाक्षिकबाधापत्तावपि कथमात्यन्तिको बाध त्याशङ्क्याह

* तदा चेति * भाष्योक्तः श्रुतिप्रमाणपक्षस्तदाशब्देन परामृष्टः। किं तु तदानीं स्मृत्यप्रामाण्यकल्पनावेलायां सा स्मृतिरश्रुतिमूला-वधार्यते यतस्तस्याः प्रमाणत्वं श्रुतिमूलत्वकारितमित्यन्वयः। ननु श्रुतिमूलत्वाभावे ऽपि स्वातन्त्र्येण प्रामाण्यसम्भवात्कथमत्यन्तबाध इत्याशङ्क्याह * श्रुतीति * विप्रलम्भादेर्निराकृतत्वात्कथमापत्तिरि-त्याशङ्क्य निराकृतेत्युक्तम्। स्वातन्त्र्यनिरासायाविगानेत्युक्तम्। नि-यत्वद्वारेत्यनेन नित्यत्वं विना स्वातन्त्र्यं न सम्भवतीत्युक्तम्। न-न्वेवमपि प्रमाणान्तरमूलतया प्रामाण्यं भविष्यतीत्यत आह * श्रु-तेमिति * स्मृतेरतीन्द्रियार्थविषयत्वात्प्रमाणान्तरं मूलं न सम्भ-वतीत्याशयः। श्रुतेरिवेति पूर्वोपन्यस्तं वैधर्म्यदृष्टान्तं विवृणोति * व्रीहीति * अयमाशयः सन्देहविपर्ययोस्तावद्दोषजन्यत्वाद्वेदे च दभावादसम्भवः। विज्ञानानुत्पत्तिलक्षणमप्रामाण्यं संवेदनविरोधा-युक्तं, न च यथा सामान्यशास्त्रादेरापाततो विशेषशास्त्राद्यवरुद्धे ऽपि विषये प्रवृत्तिप्रतीतावपि विरोधपरिहारार्थापत्त्या विशेषशा-स्त्राद्यनवरुद्धे ऽर्थे तात्पर्यावसायात्तात्पर्यावधारणसहकृतेन सामा-न्यशास्त्रादिना तत्रैव विषये परिच्छेदफलात्मकाविशिष्टज्ञानाख्यं वि-ज्ञानमुत्पाद्यतइति विशेषशास्त्राद्यवरुद्धे ऽर्थे विज्ञानमुत्पत्तिलक्षणम-प्रामाण्यं जातं तथात्रापि यवशास्त्रस्य यवव्यतिरिक्तद्रव्यमात्रनिवृ-त्त्यर्थत्वप्रतीतावपि व्रीहिशास्त्रपर्यालोचनया व्रीहिव्यतिरिक्तद्रव्या-न्तरनिवृत्तौ तात्पर्यावसायात्तदवधारणसहकृतस्य यवशास्त्रस्य तत्रैव विज्ञानोत्पादकत्वाद् व्रीहिनिवृत्त्यंशे विज्ञानानुत्पत्तिलक्षणमप्रामाण्यं भविष्यतीति वाच्यम्। तथा सति मिश्रत्वस्य निराकर्त्तुमशक्यत्वा-त्। किञ्च व्रीहियवशास्त्रयोर्निरपेक्षव्रीहियवविधानत्वे ऽपि प्रयोग-भेदेनोभयोर्निरपेक्षसाधनत्वोपपत्तेर्विनियोगावस्थायां विरोधाभावा-देकस्याप्यप्रामाण्यं कल्प्यं प्रयोगावस्थायां त्वेकोपादानेनैव कार्यसि-द्धेरितरोपादानानर्थक्याद्विरोधः स्यात्। न चानयोर्विनियोगविध्योः प्रयोगविधानार्थत्वमस्तीति विरोधाभावाद्वस्तुतो नास्त्येवाप्रामा-ण्यम्। प्रयोगविधेस्तु समस्ताङ्गप्रधानशास्त्रपर्यालोचनपूर्वकत्वेन व्रीहियवशास्त्रालोचनया व्रीहयो वा यवा वा प्रयोगभेदेनोपादेया इत्येवं रूपस्यैव कल्प्यत्वान्नाप्रामाण्यशङ्का तस्माद् व्रीहियवशास्त्रयोः प्रयोगविधानार्थत्वाभावे ऽपि स्वविषयानुष्ठापकत्वस्य सर्वविधिसा-धारणस्य स्वरसतः प्रतीयमानस्य निराकर्त्तुमशक्यत्वान्निरपेक्षव्रीहि-यवानुष्ठापकत्वस्य चैकस्मिन्प्रयोगे विरोधादवश्यमेकस्यानुष्ठापकत्वे शास्त्रान्तरस्याननुष्ठापकत्वमङ्गीकार्यं दृष्टं चैकस्यापि विधेः सामर्थ्या-

द्यपेक्षया देशकालपुरुषविशेषापेक्षमनुष्ठापकत्वमननुष्ठापकत्वं
न कश्चिद्विरोधः अतश्चानुष्ठापकयोरपि व्रीहियवशास्त्रयोरेकप्र
काले शास्त्रान्तरस्यौदासीन्ये ऽनुष्ठानाख्यफलापहारादारोपि
व प्रामाण्याभावरूपमप्रामाण्यमिति प्रयोगान्तरकाले वा
वनोज्जीवितेन तत्प्रामाण्येन बाधो युक्त इति । ननु
तिप्रामाण्यस्यापि प्रयोगान्तरवेलायामुज्जीवनसम्भवात्कथमत्य
अः प्रतीघात इत्याशङ्क्याह * नन्विति * ननु प्रयोगान्तरकाले
स्याः स्मृतेः श्रुतिमूलत्वं कल्पयिष्यते ऽत आह * न हीति *
प्रथमप्रयोगकाले स्मृतेर्भ्रान्त्यादिमूलकल्पने माभूत्प्रयोगान्तरे
प्रामाण्योज्जीवनं प्रागगृहीतविरुद्धश्रुतिकेन तु श्रुतिमूलत्वकल्प
स्मृत्यनुसारात्प्रथमप्रयोगे कृते प्रयोगान्तरकाले विरुद्धश्रुतिग्र
ऽप्यनुमितायाः श्रुतेः प्रत्यक्षया सहाविशेषाद्विकल्पो दुर्वार इत्य
ङ्कते * आहेति । एतस्येति * सर्वदा प्रतिघातस्येत्यर्थः। यदि
सर्वैः श्रुतिरेव प्रथमं ग्रहीतव्या न स्मृतिरिति नियमः स्यात्तथ
पौर्वापर्यनिबन्धनः सर्वान्प्रति बलाबले विशेषः स्यान्न त्वेतदस्तीत
ह * न चेति * नन्वस्तु तर्हि प्रथमश्रुतिग्राहिपुरुषापेक्षो ऽयं
तिप्रामाण्यापवाद इत्याशङ्क्य पौर्वापर्यस्य बलाबलकारणत्वाभ
दृष्टान्तमाह * आद्यइति * तत्प्रथतीति पाठे येन पुरुषजातेन
वक्तव्यं स्वपरशाखाविहितानां च सत्यपि पौर्वापर्ये कल्पसूत्रकारै
प्रातरुपोदयं व्युषित उदिते वेत्यादिवदद्भिर्विकल्पाङ्गीकरणात्पौ
पर्यस्य बलाबलकारणत्वं नास्तीत्याह * स्वशाखेति * जैमिनेरपि
चैकं प्रतिशिष्यतइति सर्वशाखोपसंहाराभिधानात्पौर्वापर्यस्य ब
बलकारणत्वमनभिमतमित्यागमविरोधो भवत्पक्षे स्यादित्याह *
चेति * पौर्वापर्यस्य बलाबलकारणत्वाभावमुपसंहरति * तस्म
दिति * मातापितृप्रणीतोपदेशवत्पौर्वापर्यश्रवणमनाश्रित्य सर्वा
र्वश्राविणः पश्चाच्छ्राविणश्च पुरुषान्प्रति निर्विचिकित्समेव प्रामाण्य
मान चैकं प्रतिशिष्यतइत्यनेन न्यायेन जिज्ञासुभिरभ्युपगन्तव्यमित
न्वयः । पौर्वापर्यश्रवणानाश्रयणहेतुत्वेन बलाबलापर्यालोचनात्व
बलाबलहेतुत्वे हि सति पौर्वापर्यश्रवणमाद्रियेत तस्य तुनित्या
स्थितासु शाखासु वस्तुतः पौर्वापर्यरहितास्वात्मीयाशक्तिमात्रका
रितत्वाद् बलाबलहेतुत्वं नास्तीत्यर्थः । आत्मीयाशक्तिमात्रकारित
पौर्वापर्यस्य बलाबलहेतुत्वाभावे दृष्टान्तत्वेनैकवाक्यगतपूर्वोत्तरव
र्णादित्युक्ते वर्णानां प्रत्येकमप्रत्यायकत्वेनार्थप्रतीत्यर्थतया तत्पौर्वाप
र्यस्याशक्तिमात्रकारितत्वाभावेनादृष्टान्तत्वात्पदवदिति दृष्टान्तान्तर

र्क, वेदवाक्यगतपदपौर्वापर्यस्य वेदो वा प्रायदर्शनादित्यत्र बलाबलहेतुत्वाभिधानाल्लौकिकवाक्यगतपदपौर्वापर्यमत्र दृष्टान्तः । वर्णपौर्वापर्यमपि बलाबलहेतुर्न भवतीत्येतावता दृष्टान्तितम् । पौर्वापर्यस्य च बलाबलहेतुत्वे तस्यानवस्थितत्वेन बलाबलस्यानवस्थितत्वेन प्रामाण्यानवस्थानं स्यादित्याह * अन्यथा हीति * पौर्वापर्यस्य च बलाबलकारणत्वाभावे स्वोत्प्रेक्षामात्रेण विकल्पभ्रान्त्यादिमूलत्वकल्पनया स्मृत्यप्रामाण्यमङ्गीक्रियमाणमर्द्धवैशसपरिहारार्थमविरोधे ऽप्यापादयेदित्याह * इत्थं चेति * ऐकरूप्यमेवोत्प्रेक्षितुं युक्तमित्याह * सर्वे वेति * प्रथमं स्मृतिग्रहणे ऽपि पश्चाद्विरुद्धश्रुतिदर्शनेन पूर्वोत्पन्नमूलश्रुत्यनुमानबाधाद्विकल्पे सर्वदा प्रामाण्यं प्रतिहन्येतेति परिहरति * उच्यतइति * अत्रैव दृष्टान्तमाह * यो हीति * द्वात्रिंशत्कृष्णलरजतपरिमाणः कार्षापणः कूटाकूटविलक्षणविवेकज्ञानेन जनिता व्युत्पत्तिः कूटत्वनिश्चयो यस्य स तथोक्तः । ननु श्रुत्यर्थपरिग्रहकाले मूलश्रुत्यनुमानबाधो ऽपि पूर्वं स्मृत्यर्थपरिग्रहकाले बाधाभावाद्विकल्पो भविष्यत्यत आह * न चास्येति * ननु द्वितीयप्रयोगे विरुद्धश्रुतिदर्शने ऽपि पूर्वोत्पन्नस्य मूलश्रुत्यनुमानस्य प्रतिबन्धायोगादनुमितायाश्च श्रुतेरत्यन्तबाधानुत्पत्तेर्दुर्वारो विकल्पः स्यादित्याशङ्क्ते * ननु चेति * अप्रमितस्यार्थस्यानुष्ठातुमशक्यत्वादेकप्रयोगकालोत्पन्नायाश्च प्रमितेः प्रयोगान्तरकाले विनष्टत्वात्तन्मूलस्य स्मरणस्यानुवृत्तावपि मूलप्रमाणालोचनं विना निश्चायकत्वायोगात्प्रतिप्रयोगमनुष्ठेयपदार्थविषयप्रमाणालोचनापेक्षणाद्वेष्टितौदुम्बर्यङ्गमिति प्रथमप्रयोगवेलायां स्मृतिमूलस्मृत्यनुमानान्निश्चिते ऽपि पुनः प्रयोगान्तरवेलायां कीदृश्यौदुम्बर्यङ्गमित्याकाङ्क्षायां स्मृत्या श्रुतिमनुमिमानो विरुद्धश्रुतिदर्शनान्निवार्यतइत्यननुमितमूलायाः स्मृतेरत्यन्तबाधो विकल्पाङ्गीकरणे प्रसज्येतेति परिहरति * नैतदेवमिति * एतदेव याज्ञिकाचारेण दृढयति *यदि हीति* ननु सङ्कर्षे व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत यवेभ्यो यवैरिष्ट्वा यवैरेव यजेताव्रीहिभ्य इति वाक्यमुदाहृत्य किमनेनाग्रयणाभ्यासो विधीयते दर्शपूर्णमासयोर्वा द्रव्यनियम इति सन्देहाग्रयणप्रकरणे पाठाद्यजेस्तद्विषयत्वप्रतीतेर्व्रीह्याग्रयणेनेष्ट्वा पुनर्व्रीह्याग्रयणेन यजेतेत्याग्रयणाभ्यासविधिरयमिति व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत यवेभ्य इत्याग्रयणाभ्यासः प्रकरणादित्यनेन सूत्रेण पूर्वपक्षयित्वाभ्यासविधौ प्राप्ते कर्मण्यभ्यासद्रव्यरूपानेकगुणविधानेन वाक्यभेदापत्तेः कर्मान्तरविधौ च गौरवापत्तेः । प्रकृताग्र-

यणप्रकृतित्वेनोपस्थापिते दर्शपूर्णमासाख्ये कर्मणि व्रीहियवयोर्वि
कल्पेन प्राप्तयोर्यवव्रीह्याग्रयणावधिव्यवस्थाविधानार्थमेतद्वाक्यमि
दर्शपूर्णमासयोर्वान्तरालसंयोगान्न ह्यन्यत् प्रत्यक्षं विधत्त इति सू
सिद्धान्तयिष्यमाणत्वात्कथं * यावज्जीवं तैरेव यजेतेत्युक्तम् *
च्यते । अग्निहोत्री वै नानादयिता तस्याः पयसा जुहुयादित्याग्रय
ष्टिस्थाने अग्निहोत्रस्थाने अग्निहोत्रविशेषविधानात्तत्पक्षाश्रयणे
उक्तमित्यदोषः अव्यवस्थितविकल्पो ऽपि व्रीहियवयोरकृताग्रय
विषयतयैव व्याख्येयः । एतदेवोपसंहरति * नेति * यद्यपि स
स्ताङ्गोपेतप्रधानविषयप्रयोगशास्त्रालोचनेनानुष्ठानं प्रवर्तते तथा
तस्य प्रत्येकपदार्थावधारणपूर्वकत्वात्तस्य च विनियोगशास्त्राधीनत्
त्तदालोचनमिहोक्तम् । प्रयोगशास्त्रस्य त्वनुष्ठानमात्रफलत्वेनाङ्गा
भावे प्रमाणत्वाभावात्तदभिप्रायः प्रमाणशब्दो न युज्यते । यच्चात्
न्ताप्रामाण्यवादिमते पौर्वापर्यानवस्थानात्प्रामाण्यानवस्थानमुक्तं त
स्मिन्नपि विकल्पवादिमते प्रथमश्रुतिग्रहणे ऽत्यन्तस्मृत्यप्रामाण
ङ्गीकरणेन पर्यनुयोगसाम्याद्विकल्पवादिना वा पौर्वापर्यानादरेर
न्ताप्रामाण्यवादिनापि तदनादरेण परिहारसाम्यादवाच्यमित्य
* यच्चेति * पर्यनुयोगसाम्यमुपपादयति * यदा हीति * न
पर्यनुयोगसाम्ये ऽपि प्रथमं स्मृतिग्रहणे विरोधादर्शनेन मूलश्रुते
वश्यकल्प्यत्वात्क्लृप्तायाश्च श्रुतेरत्यन्तबाधायोगात्पौर्वापर्यानादरेर
न्ताप्रामाण्यसिद्धेः परिहारसाम्यं नास्तीत्याशङ्क्याह * कालान
ऽपीति * क्लृप्ताया अपि श्रुतेर्विरुद्धश्रुतिदर्शने सत्यभावावधारणस
क्तत्वादत्यन्ताप्रामाण्यवादिमते ऽपि पौर्वापर्यमकारणं तदनङ्गीकृ
मेव तु पौर्वापर्यस्य बलाबलहेतुत्वमापाद्य विकल्पवादिना निरस
मित्याशयः । किं च प्रथमं स्मृतिग्रहणे ऽपि पुरुषान्तरदृष्ट
श्रुत्या तदानीमपि मूलश्रुत्यनुमानबाधाद्विकल्पो न युक्त इत्य
*पूर्वेति* ननु पुरुषान्तरस्य विरुद्धश्रुतिदर्शने ऽपि स्वयमदर्शनात्
थं बाधो ऽत आह * पुरुषान्तरेति * एवं तर्हि व्रीहियवश्रुत्योर
पुरुषान्तरबाधेनाङ्गीकृतप्रामाण्यमपि पुरुषं प्रत्यप्रामाण्यापत्तेः ।
वान्प्रत्यप्रामाण्यं प्रसज्येतेति शङ्कते * यवेति * श्रुतेरननुष्ठाप
त्वमात्रमप्रामाण्यं,न च पुरुषान्तराननुष्ठापकत्वेन पुरुषान्तरं प्रत्य
ष्ठापकत्वं बाध्यते । न चैवं पुरुषव्यवस्थया विकल्पानापत्तिः श
नीया पठ्यमानत्वाविशेषेण प्रमाणीकृतयवश्रुतिकमपि पुरुषं प्र
।२ कालान्तरे यवश्रुतेः प्रामाण्याभ्युपगमादिति परिहरति * उच्य
इति * प्रतियोगित्वेन व्रीहिश्रुतेरपि बुद्धिस्थत्वात्तयोरिति द्विव

नम्। ननु स्मृत्यनुमितायाः अपि श्रुतेः पुरुषान्तरगतविरुद्धश्रुतिद शनेनानुष्ठापकत्वरूपं निमज्जनमात्रं करिष्यते नाभावावधारणमि त्याशङ्क्याह * स्मृतिस्त्विति * सर्वेषां प्रथमस्मृतिग्रहणे निष्प्रति द्वन्द्वानुमानसिद्धेः पश्चाद्विरुद्धश्रुतिदर्शने सति निमज्जनमात्रकल्प भवेदपि केषांचित्तु प्रथमश्रुतिग्राहिणां स्मृतिमूलश्रुत्यभावावधार सत्येकस्याः श्रुतेः सदसत्त्वविरोधात्पुरुषान्तरगतमपि श्रुत्यनुमा मिथ्येति निश्चीयतइत्याशयः। सर्वदा तावतां पुंसामभावात् स्मृतिरप्रामाण्येन मुच्यतइत्याकारप्रश्लेषेणान्वयः। कर्त्तरीयन्त तीया। अप्रामाण्यं स्मृतिमात्मनः सकाशान्न मुञ्चतीत्यर्थः। प्राम ण्येनेति तु पाठे यदि सर्वदा तावतां भावः स्यात्ततो न प्रामाण्ये मुच्यते न त्वेतदस्ति। प्रथमश्रुतिग्राहिणामपि केषांचिद्भावादि व्यवधारणाकल्पनया योज्यम्। अभ्युपगमवादमात्रं चैतत्परमार्थ तस्तु सर्वेषामपि प्रथमश्रुतिग्रहणे पश्चात्तेन विरुद्धश्रुतिदर्शनेन र्वोत्पन्नस्मृतिमूलश्रुत्यनुमानमिथ्यात्वनिश्चयाद्विकल्पो न युक्त इत्या * अप्रामाण्यपदं चेति * पारतन्त्र्यमप्रामाण्यपदम्। ननु सत्यपि वि रुद्धश्रुतिदर्शने विकल्पेनोभयप्रामाण्यसम्भवात्किमिति स्मृत्यनुमि तायाः श्रुतेरभावोऽङ्गीक्रियतइत्याशङ्क्याह * अध्यारोप्येतेति * गत्यन्तरसम्भवेऽष्टदोषदुष्टविकल्पापादकश्रुत्यनुमानस्यायुक्तत्वा स्मृत्यप्रामाण्यकल्पनमेव न्याय्यमित्याशयः। एतदेव विवृणोति विरुद्धयोर्हीति * एवं च सति श्रुतिविरोधेऽत्यन्तदुष्टविकल्पपरिह रार्थं भ्रान्त्यादिमूलत्वकल्पनया स्मृत्यप्रामाण्याङ्गीकरणस्य न्याय्य त्वेनार्द्धवैशसानापादकत्वाच्च तत्परिहारार्थमविरोधेऽप्यप्रामाण्यम पादनीयमित्याह * नन्विति * यत्तु सर्वत्रैकरूप्योत्प्रेक्षैव युक्तेत्यु तद्विरोधाविरोधाभ्यां सर्वत्र व्यवस्थादर्शनादयुक्तमित्याह * य थेति * नास्त्येकरूपतेत्यतः शब्दाध्याहारेणोपसंहारः। अधिकरण र्थं व्याख्याय भाष्यमनुसन्दधानस्तत्र यथेत्युदाहरणभाष्यं पूर्वाधि करणप्रतिपादितश्रुत्यनुमानद्वारस्मृतिप्रामाण्यापवादार्थेऽस्मिन्नधि रणे प्रत्यक्षश्रुत्यर्थोपसंहारपरकल्पसूत्रकारवचनस्यानुदाहार्यत्वाद युक्तमित्याशङ्क्य समर्थयते * यद्यपीति * कल्पसूत्राधिकरणे स्व तन्त्र्यस्य निषेत्स्यमानत्वात्पौरुषेयत्वेन च वस्तुतोऽप्यनुपपत्तेः कल्प सूत्रमूलभूतानामपि श्रुतीनां शाखान्तराधीतानामनुमेयत्वाविशेष त्प्रत्यक्षश्रुत्यर्थोपसंहारपरत्वलक्षणस्य वैलक्षण्यात्मकस्यान्तरस्याव्या पकत्वेनाल्पत्वाद्युक्तमुदाहरणत्वमित्याशयः। सर्ववेद्यनस्मृतेर्जैमिनि

१ कलीति २ पु० ना०।

त्रैवर्णिकायनिब्राह्मणागतश्रुतिमूलत्वे ऽप्यस्मदादीनां मूलादर्श
नस्योदाहरणत्वं क्रीतराजकभोज्यान्नत्वस्मृतिमूलस्य तु तस्माद्दी
क्षितस्य विज्ञातस्य क्रीतराजकस्य भोज्यं भवतीत्यथर्ववेदे पठ्यमा
स्मदादिप्रत्यक्षत्वेन निराकर्त्तुमशक्यत्वात् क्रीतराजको भो
इत्युदाहरणभाष्यमयुक्तमाशङ्क्य समर्थयते * क्रीतेति * बाध
सम्भवशङ्कानिरासमाम्याद्धुयत्क्रमो न दोषः । तथापि स्मृतिप
ध्यत्वे निक्षेपादुदाह्रियतइत्यन्वयः । अग्नीषोमीयसंस्थावधिभ
प्रतिषेधविरोधादिति बोध्यत्वे हेतुः विरोधे ऽपि कथं बाध इ
ङ्क्य * अधिकृतानधिकृतत्युक्तम् * अधिकृतानधिकृतविवेका
स्येत्याद्युक्तं कथमधिकृतानधिकृतयोर्बलाबलविशेष इत्याशङ्क्य
रणविशेषादिति प्रकरणाधीतसामिधेनीपाञ्चदश्यानारभ्याधी
मन्त्र्यबलन्यायोदाहरणं दीक्षितान्नभोजनस्यायज्ञाङ्गत्वेन यज्ञ
परन्यायाविषयत्वात्स्वासंमतिसूचनार्थम् * भाष्यकारेणेत्यु
भाष्यकृतश्चायं ऽभिप्रायः त्रयीप्रतिपादितस्य दीक्षितान्नभोजन
धस्यावध्यपेक्षायामथर्ववेदप्रतिपादितस्यावधेर्दूरस्थत्वेन विल
त्वादथर्ववेदप्रतिपादितस्य तु तस्माद्दीक्षितस्याविज्ञातस्याक्री
कस्याभोज्यं भवतीति प्रतिषेधस्य निर्ज्ञातावधित्वेनावध्यनपेक्ष
बल्यमिति अष्टाचत्वारिंशद्वर्षब्रह्मचर्योदाहरणमयुक्तम् । कृ
शत्वस्यानवस्थितवयोवस्थाविशेषत्वेनानवस्थितवर्षसंख्यारूपका
परत्वेन चोत्तरकालमपि सम्भवात् । न च जातपुत्रो ऽग्नीन
तेत्युत्तरकालं पुत्रजन्मप्रतीक्षणाद् बहुकालातिक्रमे सति कृष्ण
स्यापनयः शङ्कनीयः । जातपुत्रस्य पक्षान्तरत्वसम्भवेन स
धस्य संदिग्धत्वादित्याशङ्क्य समर्थयते * कृष्णकेशत्वं चेति *
पि व्यक्त एव विरोधो दृश्यतइत्यन्वयः । कथमित्यपेक्षिते स्म
काशितस्यार्थस्य यौवनावस्थारूपस्य जातपुत्रत्वकृष्णकेशत्वाभ्
त्थवार्द्धक्यव्यवच्छेदेन परिग्रहाद्युपलक्षणादित्युक्तम् । कृष्ण
त्वजातपुत्रत्वयोः प्रत्येकमाधानाधिकारिविशेषणत्वे ऽष्टदोषवि
पत्तेर्विशेषणविशेष्यभावाप्रतीतेश्च समुच्चयायोगाद्दारपरिग्रह
काले च कृष्णकेशस्य नियमेनाधानप्राप्तेः पलितकेशव्यावृत्त्य
कृष्णकेशत्वविशेषणत्वाविशेषणस्य परिसंख्यार्थत्वापत्तेरजातपु
पि च हरिश्चन्द्रादेः पुत्रार्थयागोपाख्यानेनाहिताग्नित्वदर्शनेन
पुत्रत्वस्य स्वरूपेण विशेषणत्वानुपपत्तेः । स्मृत्यनुसाराच्चौभ
वनावस्थोपलक्षणार्थत्वमवसीयतइति भावः । ननु यौवनाव
किं विच्छेदे ऽपि स्मृत्यनुसारोपपत्तेर्विरोधः स्यादित्याशङ्क्य *

तो वेत्युक्तम् * शतायुर्वै पुरुष इति श्रुतेः पञ्चाशद्वर्षस्यार्द्धं व
भवति तावता यौवनावस्थासमाप्तिरित्याशयः । तथापि कथं विरो
इत्याशङ्क्य * अष्टाचत्वारिंशद्वर्षेत्याद्युक्तम् * पञ्चवर्षोपनयनप
सातिरेकाणि द्विपञ्चाशद्वर्षाणि गर्भाष्टमपक्षे सातिरेकाणि चतुः
ञ्चाशदिति । तत्प्रमाणमशक्यत्वादिति पूर्वपक्षसिद्धान्तभाष्ये स
ष्टत्वान्न व्याख्याते । वस्त्रान्तरितौदुम्बरीस्पर्शो ऽप्यौदुम्बरीं स्पृ
ति बुद्ध्यनपायात् स्पर्शनसर्ववेष्टनयोरविरोध इति कथमशक्यतेत्य
विरोधाशङ्काभाष्याभिप्रायं व्याचष्टे * ननु चेति * नौपचारिक
शब्दप्रयोगमात्रेणानुपलब्धिविरोधात् वस्त्रान्तरितौदुम्बरीस्पर्शानु
धकल्पना युक्तेति स्पर्शनविधानादित्यादिपरिहारभाष्याभिप्रा
व्याचष्टे * कथमिति * ननु व्यक्तिद्वारेणेव जातेर्वस्त्रद्वारेणौदुम्बय
स्पर्शो भविष्यतीत्याशङ्कां निराकर्त्तुमाह * न चेति * जात्योर्व्य
क्त्योः स्पर्शयोश्चेति विग्रहः । औपचारिकस्पर्शाङ्गीकरणे तु विध्य
नर्थक्यमित्याह * अथेति * अविरोधवादी स्वाभिप्रायं विवृणोति
* नन्विति * बुद्धिवैलक्षण्यमेव व्यवहारेण द्रढयति * तथा हि
ति * परिहर्त्ता व्यवहारमन्यथोपपादयति * सत्यमिति * किं
चण्डालस्पृष्टवस्त्रस्पर्शकारितामित्यर्थः । तद्वस्त्रं स्पृश्यमानमित्य
ध्याहारः । कथं तस्याशुद्धिकारणत्वमित्याशङ्क्याह * तथा चेति
नन्वशुचिस्पर्शो निषिद्धत्वादशुद्धिकारणं वस्त्रस्य च चाण्डालादि
वत् स्वतो ऽशुचित्वाभावान्मनुष्यवच्च निषेधाधिकाराभावेन नि
षिद्धाचरणनिमित्ताशुचित्वाभावात्तत्स्पर्शस्याशुद्धिकारणत्वानु
पत्तेः पतितचण्डालसूतिकोदक्याशवस्पृष्टिवत्तत्स्पृष्टस्पर्शने सचैल
जलमाविशेदित्यस्य च मनुष्यमात्रविषयत्वोपपत्तेर्न चण्डालस्पृष्टव
स्त्रस्पर्शे दोष कल्पनं युक्तमित्याशङ्क्ते * कथं पुनरिति * न
सूत्यादिवदनिषिद्धो ऽपि वस्त्रस्याशुचिस्पर्शो शुचित्वमापाद
यिष्यतीत्याशङ्क्यानिष्टापादनेन प्रत्याचष्टे * कथं वेति * तत्स्पृष्टे
स्पृश्यमानेष्विति विग्रहः । अनिष्टापत्तिं तावत्परिहरति * तद्
च्यतइति * काष्ठादीनां चण्डालादिस्पर्शोपादितस्याप्यशुचित्वस्य

अष्टाङ्गुलं भवेत्काष्ठं तृणमुष्टिर्यदा भवेत् ।
मारुतेनैव शुद्धिः स्यादूर्ध्वं स्पृष्टिर्न दूष्यति ॥
इति स्मृतेरादिशब्दोक्तानां च रथ्याकर्दमादीनां
रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतेनैव शुद्ध्यन्ति पक्वेष्टकाचितानिति ॥
स्मृतेर्वायुस्पर्शेनापनयात्तत्स्पर्शस्य च दोषकारणत्वं

जातमशुचित्वानापादनादित्याशयः । ननु निर्वातस्थस्
प्रादेश्चण्डालादिस्पृष्टस्यापि शुद्ध्यन्तरास्मरणेन मारुतः
तेरशुचित्वानापत्तिप्रतिपादनपरत्वावसायाच्च तावस्त
न वस्त्रस्याशुचित्वापत्तिर्वक्तुं शक्यते न च प्रक्ष
ल्लिस्मृतेर्वस्त्रस्याशुचित्वापत्तिर्वक्तुं शक्यते तस्याः गन्धलेपा
शौचममेध्यस्येति लेपापकर्षणोपदेशाल्लिप्तविषयत्वप्रतीतेरि
*नन्विति* प्राक्तनलेपापकर्षणविषयत्वेनापि विध्युपपत्तेर्ना
प्तविषयत्वकल्पनं युक्तमिति परिहरति * नेति * तुशब्दः श
स्यर्थः । यद्यपि केन चिदमेध्येन लिप्तस्येति लिप्तपदं प्रक्षिप्य
ते तथाप्यभियुक्तबहुजनापठितत्वान्नासावार्षः पाठ इति चिर
हणेन सूचितम् । एवं तर्हि वस्त्रस्यामेध्यत्वाभावान्नानेन शुद्धि
स्यादित्याशङ्क्याह * चण्डालेति * आशङ्कावादी स्वाभिप्रायं
यति*ननु चेति * गवाश्वादितुल्यत्वावधारणहेतुः स्वाभाविका
त्वनिषेधाधिकाराभावलक्षणः प्रागेवास्माभिरुक्तः । स्वाभावि
चित्वनिषेधाधिकारयोरभावे ऽपि प्रक्षालनविधिसामर्थ्याच्चण
दिस्पर्शेन वस्त्रस्याशुचित्वापत्तिरवसीयतइति परिहारवादी स्व
प्रायं प्रकटयति * उच्यतइति * चण्डालस्पृष्टवस्त्रस्पर्शनिमि
त्तप्रतिपादनस्य प्रकृतौदुम्बरीस्पृष्टवस्त्रस्पर्शनिमित्तौदुम्बरीस
द्भावाभावोपयोगितामाह * अतश्चेति * शाखान्तरे चौदुम्बर्या
स्पृष्टव्य इति विधानात्तस्याश्चाचेतनत्वेन स्पर्शसंवेदनलक्षण
योगात्प्राप्तिमात्रवचनत्वेन स्पर्शश्रुतेः प्राप्तेश्च व्यवधाने ऽनुप
विरोधाशङ्कैव नास्तीत्याह * यदा त्विति * ननु कस्यां चिच्छा
यामौदुम्बर्याश्रयत्वमात्रविधानाद्वस्त्रान्तारिताया अपि चौदुम्
पतनप्रतिबन्धकत्वेनाश्रयत्वोपपत्तेराविरोधो भविष्यतीत्याशङ्क्या
अपाश्रयणेति * अस्पृष्टायाः संयोगाभावेनाश्रयत्वायोगादपाश्र
हस्तसंयोगाद्यनेकोपायसाध्ये च स्पर्शे ऽपाश्रयणनियमार्थत्वेनापा
णविधेरपाश्रयणेनैवोदुम्बरीं स्पृष्ट्वेत्येकवाक्यत्वावसायादस्त्येव
रोध इत्याशयः । ननु संयुक्तस्यापि वस्त्रस्य पतनप्रतिबन्धकत्वाय
त्संयुक्तसंयोगो नास्पृष्टाप्यौदुम्बर्यैवाश्रयो भविष्यतीत्याशङ्क्याह
परेति* संयुक्तसंयोगमात्रेणाश्रयत्वाङ्गीकरणे विन्ध्यसंयुक्ताकाश
युक्तस्य हिमवतो ऽपि विन्ध्याश्रयत्वापत्तेर्वस्त्रस्यैवोदुम्बरीसंय
लब्धस्थैर्यस्य पतनप्रतिबन्धकत्वं प्रसज्येतेत्यपाश्रयणस्पर्शयोर्विर
ऽस्तीत्याशयः । ननु सत्यपि विरोधे सर्वशब्दस्य कतिपयवेष्टने
न्तबाधानापत्तेः । स्पर्शश्रुतेश्चौदुम्बरीसम्बद्धयस्तुस्पर्शे ऽप्यौपच

वेनोत्पत्तेः कथं चिद् बाधमात्रेण चानुपपत्तिपरिहारसम्भवे ऽत्य-
बाधायोगान्न सर्ववेष्टनस्मृतेर्व्यामोहत्वं युक्तमित्याशङ्क्य कथं चि-
बाधो ऽपि श्रुतेः कारणाभावादयुक्त इति तामुद्रायतेतिभाष्येणो-
ः सर्वेत्यनेन स्मृतेर्बाधकारणत्वमाशङ्क्य नन्वित्यनेन निर्मूलत्वा-
राकृत्य वैदिकमित्यनेन श्रुतिमूलत्वमाशङ्क्य भवेदित्यादिना प्र-
क्षश्रुतिविरोधान्मूलश्रुतिकल्पनासम्भवमुक्त्वा कथं न हीत्यनेन किं
ई मूलमिति पृष्ट्वा व्यामोहादित्युत्तरे दत्ते कथमित्यनेन व्यामोहमू-
वे किं प्रमाणमिति पृष्ट्वा श्रौतेत्यनेन विरुद्धश्रुत्यवगता यथार्थत्वान्य-
नुपपत्तिः प्रमाणमित्युक्तं, तत्सर्वं संक्षेपेण तात्पर्यतो व्याचष्टे *इति
कमिति * पूर्वोक्तबलाबलहेतुपरामर्शार्थो ऽयमिति करणः अथे-
शङ्काभाष्यं श्रुतिमूलत्वस्य निराकृतत्वात्स्वातन्त्र्येण चाप्रामा-
ादविधित्वाच्चायुक्तमाशङ्क्य विकल्पाङ्गीकरणेन विरोधपरिहार-
भवाच्छ्रुतिकल्पनोपपत्तिमङ्गीकृत्यैतदुक्तमिति व्याचष्टे * अथे-
* नासतीत्यादितुल्यकारणत्वादित्यन्तं भाष्यं तात्पर्यतस्ताव-
ाचष्टे * नासतीति * (हसे हसने मृङ् प्राणत्यागे गॄ निगरणे
गतौ वा गतिगन्धनयोः अम गतौ दम उपशमे लूञ् छेदने पूञ्
ने धुर्वी हिंसायाम् हस्तः करनक्षत्रयोः । मर्तः भूलोकः । गर्तः
टः । पतः कर्बुरः । वातो वायुरोगश्च । अन्तः अन्ते ऽन्तिके च ।
ः दशनम् । लोतः अश्रुवह्नयोः । पोतः बालवहित्रयोः । धूर्तः
ः[1])। औणादिके तप्रत्यये कृते गम्यते ऽसावित्यस्मिन्नर्थे ऽयमन्तश-
। एकेनाम्यते गम्यते प्राप्यते यो ऽसावेकान्तव्यामोहश्चासावेका-
श्चेति तृतीयासमासगर्भः कर्मधारयः। विकल्पे ऽङ्गीक्रियमाणे पूर्वो-
ाव तुल्यकक्षविकल्पो ऽपीत्यादिना मार्गेण व्यामोहस्यैकविज्ञानगत-
कल्पनामवश्यमापन्नां पूर्वोक्तेनैव द्वितीयेन प्रकारेणेत्यादिना मार्गे-
स्मृतावेव नियच्छतीति प्रथमपादावृत्त्या योज्यम् एतदेव भाष्य-
यवशो व्याचिख्यासुर्व्यामोहविज्ञानसमासं द्वेधा विगृह्णाति *
व्यामोहेति * विकल्पं त्विति भाष्ये न पाक्षिकीत्यपाक्षिकत्वाभि-
ामेकस्मिन्प्रयोगे ऽङ्गीकृतप्रामाण्याया अपि स्पर्शश्रुतेः प्रयोगान्त-
व्रीह्यादिश्रुतिवदप्रामाण्याङ्गीकरणोपपत्तेरयुक्तमाशङ्क्योपपादयति
विकल्पं त्विति * अपाक्षिकं चेति पाठे सर्ववेष्टनस्मरणं चेति
क्रमश्चाकारः । पक्षे तावदित्यादिपाक्षिकत्वोपपादनार्थमिति
चष्टे * एवमिति * यथाश्रुतिरपाक्षिकी तथा स्मरणमपीत्येवं

१ अयंपा० २ पु० ना० २ हसिमृगृगवाभिदमितमिलूपूसूधूर्विभ्यस्तन्नित्यमिर्गत्यर्थस्य-
पु० पा० इत्यत्रैव तात्पर्यं लेकमेव प्रतिभाति ।

शब्देनाभिधानाद्विभ्रमत्वं सूचितं पाक्षिकं चेति तु पा
ऽङ्गीक्रियमाणे पाक्षिकत्वमेवात्यन्ताप्रामाण्यहेतुरिति व्य
पाक्षिकं चेति * ततश्चाव्यामोहे तस्मिन्स्पर्शनविज्ञाने
ऽपीत्यध्याहृत्य भाष्यं योज्यम् । ननु पक्षान्तरे स्पर्श
मोहत्वात्स्मृतिमूलश्रुतिकल्पनं भविष्यतीत्याशङ्कानिवृत्त्यर्थं
सावितिभाष्यं व्याचष्टे * एकदापि चेति * यदेव ही
ष्यं श्रुत्यपाक्षिकत्वोपपादनार्थतया व्याचष्टे * इति समर्थ
१०।११ ति * तस्याव्यामोहत्वस्य निरपेक्षप्रमाजनकत्वं मूलं त
त्वात्तद्वशेनैव च स्मृतिव्यामोहत्वस्यापाक्षिकत्वात्सर्वदा
कित्सश्रुतिप्रामाण्यसिद्धिरिति भाष्यार्थः । ननु पक्षान्तरे
ठत्वान्निरपेक्षप्रमाजनकत्वं न सम्भवतीत्याशङ्कानिरासार्थं
ति भाष्यं व्याचष्टे * न हीति * स्मृतेः श्रुत्यादिमूलत्वं वै
न्तत्वेनोक्तम् । तेनेति भाष्यं श्रुत्यपाक्षिकं चोपसंहारार्थत
द्व्याचष्टे * तेनेति * व्यामोहादिति हेतौ पञ्चमीत्यर्थः
र्थान्तरशब्दयोगानिमित्तपञ्चम्यङ्गीकरणेन वा तेन श्रुति
रिहारासम्भवेन नैतत्स्मार्त्तविज्ञानं व्यामोहपक्षात्प्रामाण्यरू
न्तरं संक्रान्तं किं तु दुःश्रुतादिविज्ञानं सर्वदा तस्य मूलमि
भाष्यं योज्यमित्याह * यद्वेति * दुःश्रुतस्वप्नादिमूलत्वे
कृतेन सर्वदापन्नेन हेतुना पक्षान्तरं न संक्रान्तमित्यर्थः । न
विरोधे शिष्टत्रैवर्णिकदृढपरिग्रहस्य श्रुतिकल्पनहेतोर्भावा
श्रुतिर्न कल्प्यतइत्याशङ्क्य प्रमित्सानिरपेक्षपरोक्षार्थविषय
त्पत्तेर्न विरोधे श्रुतिकल्पनं युक्तमिति प्रतिपादनार्थं न ही
किं कर्त्तव्यमिदानीं चेत्यनेन पूर्वमेव व्याख्यातप्रायत्वान्न
तम् । तस्मादित्युपसंहारभाष्ये तुल्यकारणत्वं व्याचष्टे
ति * विषमशिष्टत्वादपि विकल्पो न युक्त इति प्रतिपाद
चेति भाष्यं प्रमाणायां स्मृतावित्यत्रोभयं प्रामाण्याविरोधा
र्शनादयुक्तमाशङ्क्य विरोधप्रतिपादनपरतयैव तावद्व्याचष्टे
चेति * इतरस्मृतिप्रामाण्यं श्रुतिप्रमाण्यं चेतरच्छ्रुति
स्मृतिप्रामाण्यं वा नाश्रयतीति नञ्समासो नन्वयमकारो
त्याशयः । अन्यतो बलाबलपरिच्छेदाभावे तुल्यबलत्वाव
कल्पः स्यात्सति तु तस्मिन्नष्टदोषविकल्पाङ्गीकरणं न युक्त
ष्याभिप्रायः । क पुनरितरेतराश्रयाविरोधे ऽन्यतः परिच्छे
इत्याशङ्क्याह * परस्परेति *

प्रतिज्ञा यत्र बाध्येत पूर्वोक्तैर्यस्य बाधकैः ।

तत्पराजयतः कार्यो निर्णयो बाधवर्जनात् ॥

इत्यत्रोक्तो विरुद्धाद्व्यभिचारिणो विरोधे ऽन्यतः परिच्छेदो
ान्वितः । प्रमाणशब्दमाक्षिपति * प्रमाणशब्दस्येति * प्रमा-
ाब्दस्य स्मृतिसामानाधिकरण्यप्रयोगेण ज्ञानसामानाधिकरण्या-
ग्रात् स्मृतेश्चाप्रमितित्वेन भावोत्पन्नल्युडन्तत्वायोगाज्ज्ञानेन का-
द्यर्थेन नपुंसकलिङ्गत्वसिद्धिरित्याशङ्क्य प्रमाणशब्दस्य वेदाः प्र-
ामित्यादिप्रयोगेण लोके नियतलिङ्गत्वावधारणात्, क्षरणसाध-
ा ऽपि ज्ञानशब्दवत्सामान्यविवक्षया नपुंसकलिङ्गत्वात् भावे
ट् चेति ल्युट्प्रत्ययस्मरणात्तदाश्रयणेन नपुंसकलिङ्गत्वसमर्थनार्थं
ः प्रमाणमिति निदर्शनं ज्ञानसामानाधिकरण्येनेति च तस्य ज्ञान-
देश इति करणव्युत्पन्नस्यापि ज्ञानशब्दस्य नपुंसकलिङ्गत्वदर्शना-
व ज्ञानशब्दस्याधिकरणमभिधेयं नपुंसकलिङ्गं तदेवास्यापीति
व्येयं ज्ञानशब्दस्य च विषयाव्यभिचारिबुद्धिविशेषवाचित्वादव-
र्थप्रत्यभिज्ञानेन च रूढित्वायोगाद् बुद्धिबोधादिसामानाधिकर-
विशेषेण चानेकलिङ्गतापत्तेरव्युत्पन्नस्यैव प्रमाणशब्दस्य ज्ञानश-
र्यायत्वाभिप्रायं सामानाधिकरण्यव्याख्यानं कथं निर्वहतीति न
ः।भावव्युत्पत्तौ तु स्मृतिजन्यसर्ववेद्यज्ञानलक्षणया स्मृतिशब्द-
माणशब्दसामानाधिकरण्यं द्रष्टव्यम् । करणविशेषविवक्षा-
ाति विशेषशब्देन पूर्वं सामान्यविवक्षा द्योतिता समर्थनं प्रति-
ाते * तमिममिति * समर्थयते * प्रमाणमिति * मूलप्रमा-
गतायाः स्मृतेः श्रुत्या सह स्पर्द्धा भवति न स्वतन्त्रायाः इति प्र-
दयितुं प्रमाणशब्दात्परात्रायगताविल्येष धातुर्भाष्यकृता प्रयुक्तो
द्धः प्रमाणशब्दः ततश्च प्रमाणमयनायां गच्छन्त्यां प्रमाणायां
ो स्पर्शनं व्यामोहो न तन्निरपेक्षायामिति भाष्यार्थो भवतीत्या-
। योजना चैवम् । यतः स्मृतिः प्रमाणमयते तस्मात्प्रमाणो-
धात्वन्तरेण यतिधात्वर्थव्याख्यानार्थम् * यातीत्युक्तम् *
त्प्रमाणमित्यपेक्षिते * मूलभूतां श्रुतिमित्युक्तम् * नन्वयतेर्य-
न्तरत्वात्कथं प्रमाणेति रूपसिद्धिरित्याशङ्क्य क्विपो वलादि-
लोपोव्योर्वलीति यकारलोपे सत्येतद्रूपसिद्धिरिति सूचनार्थं
क्बन्तादयतेरित्युक्तम् * ननु कृताकृतप्रसङ्गितया नित्यत्वेन
लोपस्य प्राथम्यात् वलः परभूतस्याभावे सति कथं यकार-
स्यादित्याशङ्क्य वलप्रत्ययपरत्वनिमित्तयकारलोपाभ्युपगमे-
तावत्परिहरति * तत्रेति * प्रत्ययलोपे प्रत्ययलक्षणमिति-
ात्प्रथमं क्विपो लोपे ऽपि तत्कार्यसिद्धिरिति भावः । नन्विदं

वल्ग्रहणं वर्णविषयं तथा सति गोधाया अपत्यमित्यस्मिन्नर्थे
या ढ्रगिति विहितढ्रक्प्रत्ययादिभूतढकारस्यायनेयीनियियः
च्छघां प्रत्ययादीनामित्ययादेशे कृते लोपोव्योर्वलीति यलोप
इति रूपं सिद्ध्यति प्रत्ययविषयत्वे तु प्रत्ययमध्यगतस्य
रेफमात्रस्य प्रत्ययत्वाभावात्प्रत्ययमध्यगतयकारलोपनिमित्त
१०२।१ वेन रूपसिद्धिः स्यादित्याशङ्क्याह * न चेति *
हणस्य वर्णविषयत्वेन प्रत्ययविषयत्वेन च द्वेधा वै
णैर्व्याख्यानादिह लक्ष्यानुसारेण प्रत्ययविषयत्वाभ्युपगमे
लादिप्रत्ययनिमित्तो ऽत्र यलोपः प्रत्ययलोपलक्षणेन युक्त
भावः । माभूद्वा वल्प्रत्ययपरत्वनिमित्तो यकारलोपः
पि यदि वा कानि चिदन्यान्यपि वर्णाश्रयाणि कार्याणि
लोपलक्षणेन भवन्ति तद्वदिदमपि भविष्यतीत्युक्त्वा ऽथ वैवं
मि लोपोव्योर्वलि ततः वेर्व्यन्तस्य व्योर्लोपो भवतीति भाष्ये
लिना वेरपृक्तस्येति योगविभागाभिधानाद्विभक्तस्य वेरिति
येनविधिस्तदन्तस्येति स्मरणेन व्यन्तस्येत्यर्थावगतेः कृताकृ
ङ्गित्वेन च नित्यत्वे ऽपि विलोपस्य प्रथमकरणे व्यन्तशब्द
वेरिति सूत्रस्यानवकाशापत्तेः सावकाशनिरवकाशयोर्निरव
विधिर्बलवानिति विलोपप्राथम्यबाधेनास्य व्यन्तत्वानपाय
व्योरिति पूर्वसूत्रगतपदद्वयानुवृत्त्या व्यन्तस्य वकारयकार
इति सूत्रार्थनिष्पत्तेर्व्यन्तत्वनिमित्तो यकारलोपो भविष्यतीति
हारान्तरमाह * यद्वेति * वेरितीतिकरणाध्याहारेणैव योज्यं
तिं योगविभागेन लोपो भविष्यतीत्युक्ते कथमित्यपेक्षायां व
वकारश्च यकारश्च लुप्यत इत्येवमर्थावगमादिति न केवलं
त्वनिमित्त एव वकारयकारयोर्लोपः किं तु व्यन्तत्वनिमित्तो
चकारार्थः । ननु यकारलोपे ऽप्यकारस्य ह्रस्वस्य पिति कृति
तुगागमापत्तेरनित्यमागमशासनमिति स्मरणाद्वा तदकर
शुद्धस्याकारस्यादन्तत्वाभावात्प्रमाणपदसंहितायां वा दीर्घत्
टाप्प्रत्ययाभावेन याडाप इति तन्निमित्तयाडागमाभावात्कथ
णायामिति रूपसिद्धिरित्याशङ्क्याह * यलोपे चेति * शुद्ध
तुगागमदीर्घत्वापादके निराकृते शुद्धस्याप्याद्यन्तवदेकस्मिन्नि
वत्कार्यसिद्ध्या टाप्प्रत्ययोत्पत्तिसमर्थनार्थम् * तदन्तावधिक
क्तम् * यः शुद्धः परिशिष्टाकारः स एवान्तरूपो विधिः स्वा
त्ययः । तस्मादन्तरूपावधिभूतादतः पश्चात् स्त्रियां विष
क्रियतइत्यर्थः । ननूपपदाकारसंहितायाः प्रथमातिक्रमकारण

र्वैकार्यत्वाद्दीर्घत्वापत्तेष्टाप्प्रत्ययानुत्पत्तिः स्यात् पूर्वाकरणे वा अ-
वसरत्वेन पश्चादप्यकार्यत्वात्प्रमाणेतिरूपं न सिद्ध्येदित्याशङ्क्याह
अक इति * एकपदाकारसंहितायाः पदान्तरसंहितातः शीघ्र-
तीतेर्दीर्घादीर्घयोश्चाधातुप्रत्ययाकारयोर्दीर्घादेशस्यान्तरतमत्वातिश-
ङ्घातूह्रस्वाकारद्वयदीर्घादेशाच्छीघ्रप्रतीतेः परयोर्धातुप्रत्ययगतयो-
काराकारयोरकः सवर्णदीर्घत्वं पूर्वं कृत्वा ततः पूर्वेणाप्युपपद्रा-
ारेण अकः सवर्णदीर्घत्वं कृत्वा प्रमाणेत्यनुगम्यतइति योज्यम् ।
दितरेतराश्रयमित्युपसंहारभाष्यमपीतरेतरविरोधपरतया पूर्वव-
्याख्यातं भवतीत्याह * तदेतदिति * उपक्रमोपसंहारानुरोधेन
। विवरणभाष्यमेवेतरेतराश्रयपरमध्याहारेण व्याख्येयमित्याह *
ह्येति * प्रमाणायामित्यत्र स्पर्शने व्यामोहे स्मृतिः प्रमाणामित्य
ाहारः स्पर्शनइत्यत्र स्मृतौ व्यामोहे स्पर्शनं प्रमाणमिति । (प्रमा-
त्याद्यमध्याहृतं भाष्यमिष्यमाणार्थत्वेन व्याख्यायते रुदित्युपसं-
ारभाष्यं श्रुतावारोप्यमाणाप्रामाण्यपरतया व्याख्यातम् । एवं त-
त्यादिना संहारभाष्यमावृत्त्या स्मृत्यप्रामाण्यसमानार्थत्वेन व्या-
ख्यायेत्यध्याहृतं स्पर्शने प्रमाणे इत्यादिभाष्यं श्रुतिप्रामाण्यासमर्थ-
र्थत्वे व्याख्यातम् । एतच्छ्रुतिप्रामाण्यपक्षे ऽप्यन्योन्याश्रयस्य सुप-
हरत्वं स्मृतिप्रामाण्यपक्षे ऽन्योन्याश्रयस्य दुःपरिहरत्वं वक्ष्यमाण-
भिप्रेत्योक्तम्[1]) । तत्राद्यश्लोकेनेष्यमाणार्थतयाध्याहृतं भाष्यं व्या-
ख्यायारोप्यमाणार्थतया पठितं व्याख्यातम् । द्वितीयेन समर्थ्यमाना-
तया पठितं व्याख्याय निश्चीयमानार्थतयाध्याहृतं भाष्यं व्याख्यातं,
नु श्रुतिप्रामाण्यगतमितरेतराश्रयं सिद्धान्तवादिनो ऽपि समानत्वा-
द्भावनीयमित्याशङ्क्याह * तदिदमिति*तस्यैकत्रैवेतरेतराश्रयं तच्च
परिहरमिति भावः। अन्यतः परिच्छेदप्रदर्शनार्थं तत्रेति भाष्यं तत्प्रद-
नासमर्थत्वेनाक्षिपति *तत्रेति * तत्रेतरेतराश्रये ऽन्यतः परिच्छेदस्य
तिज्ञातत्वात् स्फुटमत्यन्तव्यतिरिक्तं हेत्वन्तरं वाच्यम् । भाष्यका-
स्त्वेवमुक्त्वा तयोरेव श्रुतिस्मृत्योर्धर्ममेकं श्रुतिप्रामाण्यपरिच्छेदे
लृप्तमूलत्वं स्मृत्यप्रामाण्यपरिच्छेदे चैकं कल्प्यमूलत्वं हेतुमिह
ृ प्रमाणं किमप्रमाणमिति परिच्छेदवेलायामुक्तवानित्यर्थः। (श्रुतेः
लृप्तमूलं स्मृतेः कल्प्यमूलत्वं धर्ममुक्तवान् न च सधर्मिणो ऽन्यो
मधर्मिणोरभेदात् तेन नान्यतः परिच्छेदो ऽयमित्याशयः[2]) द्वितीय-
ख्याने तु श्रुतिप्रामाण्यगतेतरेतराश्रयस्य सुपरिहरत्वपरिच्छेदे

१ अयं पा० २ पु० ना० ।

२ अयं पा० २ पु० ना० ।

हेतुं क्लृप्तमूलत्वं स्मृतिप्रामाण्यगतेतरेतराश्रयस्य दुःपरिहरत्व
च्छेदे कल्प्यमूलत्वमिह किं सुपरिहरं किं दुःपरिहरमिति परि
च्छायामित्यर्थः । समाधत्ते * नैवेति * श्रुतिस्मृत्योर्विपर्य
स्वकृतमितरेतरविरोधित्वमितरेतराश्रयत्वं तु श्रुतिस्मृतिप्राम
प्रामाण्ययोः स्वरूपकृतं समाहितं भाष्यं व्याचष्टे * स्वतः
स्मृतिप्रामाण्यगतेतरेतराश्रयस्य दुःपरिहरत्वपरिच्छेदे कल्प
त्वस्य हेतुत्वमुपपादयति * ततश्चेति * नन्वात्मलाभाय स
स्वप्रमाणापेक्षत्वे ऽप्यर्थप्रतिपादने निरपेक्षतया पुरुषवाक्यव
प्रमाणत्वेन श्रुत्यप्रामाण्यानपेक्षत्वात्तत्परिग्रहपक्षे वैकल्पिकश
स्मरणस्य श्रुत्यप्रामाण्याध्याहारोपे ऽपीतरेतराश्रयानापत्तिरि
त्युक्तम् * न चेति * न तुल्यबलयोर्विकल्पः सम्भवतीत्याश
श्रुत्यनेनैतदेवोपपादयति * बलवन्तमिति * स्मृतिप्रामाण्यग
तराश्रयस्य दुःपरिहरत्वमुपसंहरति * एवं तावदिति * श्रु
माण्यगतेतरेतराश्रयस्य सुपरिहरत्वपरिच्छेदे क्लृप्तमूलत्वस्य
त्वमुपपादयति * यदा त्विति * तदा पूर्वसिद्धस्मृत्यप्रामाण
ण्यायां पूर्वानुभवपारतन्त्र्यलक्षणस्मृतिस्वरूपाश्रयमप्रमाणत्व
तः सिद्धमेव प्राप्य श्रुतिः प्रामाण्यमश्नुत इत्यन्वयः । श्रुतेः
प्रामाण्यात्स्मृत्यप्रामाण्यलिप्सानुपपत्तिमाशङ्क्य तत्रापि श्रुत
निरपवादप्रामाण्यावधारणसिद्धेः * पराधीनत्वादित्युक्तम् *
मन्यतामित्यपेक्षिते * प्रतिपक्षेत्याद्युक्तम् * पर्यालोचनापेक्षानि
ये प्रमाणमात्रमपीत्युक्तम् उपसंहरति * तेनेति * अननुमिता
या मित्यनेनाद्य पदक इति व्याख्यातम् । क्लृप्तकल्प्यमूलस्यान्यतः
च्छेदहेतुत्वप्रतिपादनार्थत्वेन सो ऽसाविति भाष्यं व्याचष्टे *
ति * सर्वमेव वा सतश्चेत्याद्येतद्भाष्यव्याख्यानार्थं ततः क्लृ
कल्प्यमूलत्वादुक्तेन प्रकारेणान्यतः परिच्छेद इत्यर्थः । उक्तमेव इ
कल्प्यमूलत्वादित्यादिभाष्यारूढं कर्त्तुं संक्षिप्य यथाक्रमं दर्श
* तेनेति * उक्तेन प्रकारेणैकत्र स्मृतिप्रामाण्यगतेतरेतराश्रये
तराश्रयस्य स्वतः सिद्धस्य प्रामाण्यस्यापवादासम्भवेनापेक्षितश्रुत
प्रामाण्यालाभाद् दुःपरिहरत्वावसानं परिच्छेदो भवति अवसीयत
नात्र लकारः । अन्यत्र श्रुतिप्रामाण्यगतेतरेतराश्रये स्मृत्यप्र
ण्यस्यापेक्षितस्य लाभात्सुपरिहरत्वस्यावसानमित्यर्थः । नन्वेवं
स्यापेक्षितस्मृत्यप्रामाण्यलाभमात्रेण श्रुतिप्रामाण्यगतेतरेतराश्र
सुपरिहरत्वपरिच्छेदसिद्धेः किमर्थं भाष्यकृता ऽनुपूर्वी दर्शितेत्य
शङ्क्याह * कृत्वेति * अपेक्षितलाभालाभोपपादनार्थमुभयताप्यानु

ानीयेत्याशयः। श्रुतिप्रामाण्यगतेतरेतराश्रयपरिहारायापेक्षितो यः
त्यप्रामाण्यरूपो ऽर्थस्तमाद्ये क्षणे दृढासिद्धत्वेनावधिं कृत्वा विरोधे
त्यप्रामाण्याच्छ्रुत्यबाधः श्रुत्यबाधाच्च तद्विरोधे स्मृतिमूलश्रु-
कल्पनानुपपत्तिर्यावत्तावद्गच्छेत्तावताह्यपरश्रुतिप्रामाण्यगतेतरेत-
ायपरिहारसाध्यः श्रुतिप्रामाण्यरूपो ऽर्थः सिद्ध्यति । तथा स्मृ-
ामाण्यगतेतरेतराश्रयस्यापरिहार्यत्वायापेक्षितो यः श्रुतिप्रा-
रूपो ऽर्थस्तमाद्ये क्षणे दृढसिद्धत्वेनावधिं कृत्वा विरोधे श्रुति-
ाण्यात् स्मृतिमूलश्रुत्यकल्पनं तदकल्पनाच्च स्मृतेर्भ्रान्त्यादिमूल-
कल्पनं यावत्तावद्गच्छेत् तावता ह्यपरः स्मृतिप्रामाण्यगतेतरेतरा-
ापरिहार्यत्वसाध्यः स्मृत्यप्रामाण्यरूपो ऽर्थः सिद्ध्यतीत्यर्थः ।
; भाष्यकृतैकविधानुपूर्वीकथनादानुपूर्वीद्वयाभिधानं भाष्यव्या-
ानानुपयोगित्वादनर्थकं स्यादित्याशङ्क्याह * तदेकेनेति * उपल-
ार्थमेकानुपूर्वीकथनमित्याशयः। कीदृशी तर्हि द्वितीयानुपूर्वी द-
ायेत्यपेक्षायामाह * द्वितीयेति * स्वयं पूर्वोक्तस्यान्यस्य मार्गस्य
योक्तापेक्षया द्वितीयत्वम् । नन्वित्याशङ्कापूर्वकं तुल्यबलविक-
पपत्तिप्रतिपादनार्थं भाष्यं व्याचष्टे * व्रीहीति * तस्माद्युक्तमि-
सूत्रार्थोपसंहारभाष्यं व्याचष्टे * अत इति *

॥ अथ दृष्टमूलकस्मृत्यप्रामाण्याधिकरणम् ॥ ३ ॥

## हेतुदर्शनाच्च ॥ ४ ॥ १८

ाव्याख्यानार्थं लोभादित्यादिभाष्यं सर्ववेष्टनादिस्मृतीनां लोभ-
ापुंसकत्वप्रच्छादनप्रयोजनमूलत्वे प्रमाणाभावादयुक्तमाशङ्क्य
ातिरिक्तसम्भवे मूलमात्रोपलक्षणार्थतया व्याचष्टे * इतश्चेति*
ोधो व्यभिचारशब्देनोक्तः । श्लोकं व्याचष्टे * श्रुतीति * ननु
ापि विरोधे भ्रान्त्यादिमूलत्वं विना बाध्यत्वायोगाद् बाध्यत्वेनैव
न्त्यादिमूलकल्पनायामितरेतराश्रयं स्यात् इत्याशङ्क्याह * स्मृ-
ाति * विरोधपरिहारायावश्याङ्गीकार्ये ऽन्यतरस्य बाध्यत्वे स्मृते-
भ्रान्त्यादिमूलत्वसम्भवेन बाध्यत्वोपपत्तेर्बाध्यत्वनिश्चयेन भ्रा-
ादिमूलत्वनिश्चयापत्तेरितरेतराश्रयपत्तिरित्याशयः । उपपन्नतरं
ादिति वक्ष्यमाणवर्णकभाष्यमिहापि योज्यमिति सूचयितुमाशङ्को-
त्वेन व्याचष्टे * यथैवेति * भाष्यकृतास्यैव सूत्रस्याधिकरणा-
विषयत्वेन वर्णकान्तरं कृतं तत्पूर्वापरितोषविषयव्याप्तिव्यतिरे-
ा क चिद्वर्णकान्तरस्य प्रयोजनान्तरा दर्शनात्तयोश्चापरितोषका-
विषयान्तरादर्शनेनासम्भवादयुक्तमित्याक्षिपति * सर्वेति * न

च तयोर्मध्ये ऽन्यतरदप्यत्रास्तीति शेषः । समाधातुमपरितोषक
तावन्मन्दप्रयोजनत्वमाह * अपरितोषस्तावदिति * विषयव्याप्ति
प्यत्राविरुद्धस्मृतिविषयत्वादस्तीत्याह * विरोधेन चेति * स
प्यस्याविरुद्धस्मृतिविषयत्वे कारणान्तरेणापि केन चिदपवादान्त
पपत्तेः कथं विषयव्याप्तिरित्याशङ्क्य कारणान्तरासम्भवाद्वाप
दा * न्तरोद्भव इत्युक्तम् * वैसर्जनहोमीयमित्यादिविषयप्रदर्श
र्थं भाष्यं व्याचष्टे * वैसर्जनहोमीयमिति * श्रुत्यविरुद्धानाः
स्मृतीनां लोभादिमूलत्वसम्भवेनाप्रामाण्याङ्गीकरणे दायधर्मादिः
तीनामप्यप्रामाण्यं स्यादित्याशङ्क्य मन्वादिमहर्षिनिबन्धनस्य वेद
लत्वकल्पना हेतोरविरोधे कल्पकत्वप्रतिबन्धाभावान्मूलान्तरकः
नानुपपत्तावप्यविरुद्धानामाचारानुमितानामर्वाचीनमनुष्यस्मृतिः
दृष्टमूलासम्भवेनैव वेदमूलत्वस्यापि वा कारणाग्रहप्रयुक्तानि प्र
येराश्रित्यत्र वक्ष्यमाणत्वात्तत्सम्भवे ऽपवादविषयत्वोपपादनार्थं
कमेवैतदित्युक्तम् तत्कर्तृसामान्यादिति पूर्वपक्षसिद्धान्त
भाष्यद्वयमेकहेलया व्याचष्टे * तत्रापीति * इदानीं धर्मबुद्ध्यानुष्ठ
ऽपि पूर्वप्रवृत्तिकाले लोभादिमूलत्वसम्भवप्रदर्शनार्थं पूर्वग्रहणम्
लोभस्य मूलत्वसम्भवः पूर्वं कालान्तरे यस्मिन्कर्तृसामान्ये तस्म
दिति हेतुगर्भं विशेषणम् । लोभमूलत्वसम्भवमुपपादयति * त्र
न्विजो हीति * आशङ्काशब्देन लोभमूलत्वानिश्चये ऽपि वेदमूल
त्वनिश्चयस्तावन्नास्तीति सूचितं, ननु वेदमूलत्वस्यापि सम्भवात्त
थमप्रामाण्यनिश्चय इत्याशङ्क्य निराकरणार्थमुपपन्नतरं चेदिति भाष्
व्याचष्टे * पूर्ववच्चेति * ननु वेदमूलत्वाभावनिश्चयाभिधानपर
त्वे ऽस्य भाष्यस्य पूर्वलोभमूलत्वानिश्चयाभिधानपरत्वेन योजनमयुक्त
स्यादित्याशङ्क्याह * इदं चेति * दृष्टे सम्भवत्यदृष्टकल्पनमयुक्त
मिति न्यायस्य वेदमूलत्वाभावान्यमूलत्वयोर्निश्चयकारणस्य तुल्य
त्वादुभयत्रापि योजितामित्यर्थः । यथाभाष्यमधिकरणद्वयं व्याख्याय
दूषयितुं प्रतिजानीते * एतावत्त्विति * सर्ववेष्टनस्मरणस्य लोभ
मूलत्वानिराकरणेन तुल्यन्यायतया यूपहस्तिदानादिस्मरणस्यालोभ
मूलत्वानिराकरणाद्धर्मबुद्ध्या चेदानीमनुष्ठीयमानानां दृष्टमूलत्वक-
ल्पनासम्भवाद् * अधिकरणद्वये ऽपीत्युक्तम् * प्रत्यक्षश्रुतिविरो-
धे हि स्मृतिमूलश्रुत्यभावः साधकाभावाद्वा स्याद् बाधकसद्भावाद्वा।
तत्र त्रैवर्णिकदृढपरिग्रहादरस्य स्मृतिमूलश्रुतिसाधकस्य विरोधे
ऽप्यनपायात्साधकाभावस्तावन्नास्तीत्याह * स्मृतीनामिति * यत्तु
जिज्ञासां विना प्रमाणाप्रवृत्तेः साधकाभाव इत्युक्तं तदेवं परिहर्त्तव्यं

ापि परिच्छिन्ने प्रमेये तत्परिच्छेदार्थं श्रुत्यनुमानं न प्रवर्त्तते तथा-
किमियं स्मृतिः प्रमाणमप्रमाणं वेति जिज्ञासायां तत्परिच्छेदार्थं
यनुमानप्रवृत्तिर्न वारयितुं शक्यते। प्रमाणान्तरपरिच्छिन्ने ऽपि
ङ्खशौक्लये शङ्कितपित्तोपघातस्य किं मे चक्षुर्दुष्टमदुष्टं वेति जि-
सया चक्षुर्विस्फुरणदर्शनात्परमाणवादौ च कदा चिदनुपलब्ध-
द्व्यवहारानुपयोगित्वाच्च जिज्ञासिते ऽप्युपलब्धस्थूलादिकार्यो-
पत्तिपरिहारार्थं प्रमाणप्रवृत्तिदर्शनाच्च जिज्ञासादरः। किं च स्मृ-
ूलप्रमाणोपस्थापनमात्रेण कृतार्थत्वाच्चौदुम्बरी प्रमेया तत्प्रमेया-
: श्रुतेः प्रत्यक्षश्रुत्यविषयत्वेन तया परिच्छेत्तुमशक्यत्वाच्चानुमान-
ाबन्धो युक्त इति। बाधकं तु स्मृतिमूलश्रुत्यभावव्याप्तं लिङ्गं
ष्टश्रुतिदर्शनस्यानैकान्तिकत्वप्रतिपादनेन पूर्वपक्षवेलायामेव नि-
ाम्। अनुपलब्धिस्त्वस्मदादीनां विप्रकीर्णशाखान्तरगतश्रुत्यु-
म्भाशक्तेः स्मर्तृप्रत्यक्षस्य च स्मृत्यधिकरणसाधितत्वेनेदानींत-
ुरुषान्तरप्रत्यक्षत्वस्य चोपनयादिस्मृतिमूलश्रुतिदृष्टान्तेनानुमानो-
त्तेः। सर्वान्प्रत्यसिद्धत्वाच्चाभावसाधनायालमित्याह * शाखान्त-
ं * न च स्मर्तृपुरुषाधीनप्रत्ययत्वमात्रेणानुमेयश्रुतिष्वनाश्वा-
अध्यापकपुरुषाधीनप्रत्यक्षत्वेनेतरास्वप्यनाश्वासापत्तेरित्याह
तत्रेति * नन्वग्निहोत्रादिश्रुतीनां प्रत्यक्षत्वाच्च तास्वनाश्वासाप-
रित्याशङ्क्य वर्णस्वरूपस्य प्रत्यक्षत्वे ऽप्यनादिसम्प्रदायागतत्वस्य
षाधीनत्वात्तुल्यतामाह * वेदो हीति * न च स्मरणार्थत्वेन १
दृष्टघटादिवन्नित्यत्वानवधारणं शङ्कनीयमग्निहोत्रादिश्रुतिष्वप्य-
शेषादित्याह * अनुच्चारणकालेति * उपसंहरति *तेनेति*
; वेदविरोधेन स्मर्त्तुरनाप्तत्वाच्च मूलश्रुत्यनुमानं सम्भवतीत्याश-
प्रत्यक्षवेदमूलोपनयनादिस्मृतिप्रणेतृत्वेनावधारितत्वाप्तभावस्य
वादे एकदेशविरोधे ऽप्यनाप्तत्वकल्पनं न युक्तमित्याह * स्मृती-
* किं च नित्यानुमेयायाः श्रुतेर्न्यायेन बाधो युज्येतापि शाखा-
रपठितश्रुतिबाधे तु प्रत्यक्षविरोधाशङ्का दुःपरिहरेत्याह * बाधि-
चेति * उपरिष्टात्ते इति शब्ददर्शनात्त्वया न्यायविदा भूत्वेत्य-
हारेण योज्यम्। न च्चिरादित्यव्ययान्वये ऽपि नञो विभाषा-
कारे नञ्समासस्मरणाच्च होतारं वृणीतइतिवदसमासाच्चलो-
भावो न दोषः। प्रत्यक्षविरोधाशङ्कया च त्वदुक्तस्य न्यायस्य
ायकत्वानवधारणान्न्यायाभासेन मूलश्रुत्यनुमानबाधाङ्गीकरणे
ादातिक्रमादि सर्वं पूर्वोक्तमपरिहार्यं स्यादित्याह *बाधेति* न्यायं

१ अवधारितत्वाप्तस्य मन्वादेरिति २ पु० पा०।

दूषयित्वोदाहरणानि दूषयन्नाद्यं तावदुदाहरति तामूर्ध्वे
ससा परिवेष्टयन्तीति प्रत्यक्षश्रुतिमूलत्वात् दूषयति * यच्चै
एतच्छान्दोग्यानुपपदे जैमिनिकृते सूत्रग्रन्थे जैमिनिनैवौदु
रणे चेत्यादिना दर्शयतीत्यन्तेन स्वग्रन्थेन शाट्यायनिब्राह्मण
मूलत्वेनान्वाख्यातमित्यन्वयः । शाट्यायनिनां शाखिनामौदुः
रणे तामूर्ध्वदशेनेति श्रुतिरुभयत्र विघुत्यामौदुम्बर्यां च वा
र्शयतीति जैमिनिग्रन्थस्यार्थः । उभयत्र शब्दः किं विषय इ
वैघृतइत्याद्युक्तं स्तोत्रीयपरिगणनार्थानामौदुम्बरीणां प्रादे
कुशानां विधृतिशब्दवाच्यानां स्थापनार्थं वासो वैघृतमुच
स्मिन् श्रीर्वै वासः श्रीः सामेत्यर्थवादपुरः सरं प्रत्यक्षश्रुति
दर्शिते तत्प्रसङ्गेनौदुम्बरीवेष्टनवाससा ऽपि प्रकाशश्रुतिमूल
न्वाख्यातं तामूर्ध्वदशेनेति प्रकृतौदुम्बरीपरामर्शिप्रतीकोपन्
१०७। र्थः । उपसंहरति * ततश्चेति * अविरोधादपीदं नोदा
क्तमित्याह * विरुद्धत्वे चेति * औदुम्बरी परिवेष्टयितव्
न्मात्रं सूत्रकारेणोक्तं न सर्वेति तत्र यथोपनेष्यमाणमहतेन
छादयन्तीति चक्षुर्मुखानाच्छादने ऽपि शास्त्रार्थसम्पत्ति
तथात्रापि भवतीत्याशयः। ननु सर्वशब्दाभावे ऽपि परिशब्दे
शब्दार्थसम्पत्तेर्विरोध इत्याशङ्क्याह * यदीति * औ
त्तरदेशे पृष्ठेन तां स्पृशतोदङ्मुखेनोपविष्टेनोद्गातव्यं तेन
रीमध्यस्योत्तरभागे द्वित्राङ्गुलमात्रं स्पृश्यते तदनुरोधेन न
गतो मध्ये द्वित्राङ्गुलं विमुच्यते सर्ववेष्टने ऽपि परिशब्दार्थ
विरोध इत्यर्थः । एतदेव श्लोकद्वयं यथाक्रमं श्लोकद्वयेन
* सर्वेति * भाष्यकारेण गौरवात्कस्मिंश्चित्सूत्रे कल्पे
ब्दो भविष्यतीति कल्पनां निराकर्त्तुं * न हीत्युक्तम् *
वचने हि कर्णयोर्वेष्टनं कृत्वा वंशो निधेयो मूलं च वेष्टयित
तव्यं स्यान्न चैवं याज्ञिकाः कुर्वन्ति परिशब्दस्तु समन्ता
देशवेष्टनं ब्रूते । न कृत्स्नाया इत्यौदुम्बरीमध्योत्तरभागा द्वि
ञ्जितसर्वौदुम्बरी वेष्टने ऽप्यर्थवानित्यर्थः । हेतुदर्शनोदा
प्यस्य न सम्भवतीत्याह * लोभमूलं चेति * यदि तर्हि
यंत्तदित्यव्यये मूलाग्रयोश्च वंशाधारयोः कर्णयोः परि
दीर्घवासोलाभाल्लोभमूले तदनुष्ठाने याज्ञिकाचारविरोधः
अयं चापरो ऽचारविरोधो लोभमूलत्वे प्रसज्येतेत्याह * अन
पूर्वापरकाययोरन्तरस्य मध्यस्य परिधानार्थमधोवासो नान
शस्य कल्पयित्वान्तरीयतामाचामेदिति प्रयोगदर्शनादन्तर

तें।अधरीयोत्तरीये हीत्यपि पाठे तदेवोक्तम्। कौशेयस्य गुणाभावा-
र्पासस्य गुणराहित्यम्। लोभमूलत्वे च कुशवेष्टनपूर्वकत्वोर्ध्वदेश-
नियमौ न स्यातामित्याह *प्राक्चेति* उदाहरणान्तरमपि दूषय-
* किं चेति * अष्टाचत्वारिंशद्वर्षब्रह्मचर्यस्य चाष्टाचत्वरिंशद्वर्षं
ं वेद ब्रह्मचर्यमित्यादि अथ सर्ववैदिकविहितत्वादनुदाहरणता
कारसूचिता पूर्वोक्तबलाबलविशेषं निराकरोति * यदीति * किं
र्थान्तरमित्यपेक्षयामाह * शान्तीति * न चास्यानारभ्याधीत-
ायेन दौर्बल्यम्। तस्य कल्प्यक्रतुसम्बन्धमनारभ्याधीतं क्लृप्तं
तुसम्बन्धात्प्रकरणाधीताद् दुर्बलं· क्रतुसम्बन्धविप्रकर्षादित्येवंरू-
य क्रत्वङ्गविषयत्वादस्य च क्रत्वङ्गविषयत्वाभावादित्याह * न
ति * एतदेवोपपादयति * न हीति * विरोधपरिहारस्तर्हि कथ-[1]
त्यपेक्षयामाह * वाक्यान्तरैरिति *

दशाहं शावमाशौचं सपिण्डेषु विधीयते।
अर्वाक्सञ्चयनादस्थनां त्र्यहमेकाहमेव च॥

इत्याशौचच्छेदकालानां यथा व्यवस्थितो विकल्पस्तथेहापि
विष्यतीति व्यवस्थितविकल्पसूचनाय दृष्टान्ताभिधानं परत्वाशौ-
कालानाम्।

एकाहाच्छुध्यते विप्रो यो ऽग्निवेदसमन्वितः।
त्र्यहात्केवलवेदस्तु·द्विहीनो दशभिर्दिनैः॥

इति वचनान्तरेण (दन्तजातपदेन वर्द्धमानोपलक्षकः कुमारा-
नुजातपदेन वध्वोपलक्षकः कृतचूडपदेन वर्षत्रयोपलक्षकः।')

दन्तजाते ऽनुजाते च कृतचूडे च संस्थिते।
अशुद्धा बान्धवाः सर्वे सूतके च तथोच्यते॥

इत्युपक्रमानुसारेण वा व्यवस्थावगमान्न तद्दृष्टान्तेने-
विकल्पाङ्गीकरणे युक्तमित्यगृहीताभिप्रायः शङ्कते * ननु
ति * अग्निवेदसमन्वितस्य दशाहाशौचानुवृत्तावुभयसाध्य-
मिजपादिलोपाद्भूयसी धर्मपीडा स्यात्केवलवेदस्य तन्मात्रसा-
यजपादिलोपादल्पा द्विहीनस्याल्पतरेति धर्मपीडाल्पत्वमहत्वा-
क्षया आदिशब्दाज्जातदन्ताद्यपेक्षया चाशौचकालो ऽपि व्यव-
स्थितविषय इत्यध्याहारेण योज्यम्। उभयत्र समविकल्पाना-
यणे कारणं पक्षयोरसाम्यं तावदाह * यस्य हीति * यस्तु वि-
धं चापरं विकल्पानाश्रयणे कारणं दृष्टान्ते तावदाह * एकरात्र-
ति * दार्ष्टान्तिके ऽप्याह * एवमिति * ननु यो ऽल्पेन कालेनाहं

[1] अयं पा० २ पु० ना०।

शुद्धः स्यामिति सङ्कल्पयति तस्याल्पेन कालेन शुद्धिः बहुका
तु बहुनेति परिग्रहव्यवस्थया ऽशौचकालानामविरोधः । यश्च
नराजकस्य दीक्षितस्यान्नं न भोक्ष्यइति सङ्कल्पयति तं प्रति ता
मभोज्यान्नता पशुसंस्थावधिसङ्कल्पे तावत्कालमित्युभयत्रा
विरोधपरिहारमाशङ्कते * स्यादेतदिति * यथा यः प्रागुद
दयोत्तरकाले ऽग्निहोत्रं होष्यामीति सङ्कल्पयति तं प्रत्युदयो
ऽग्निहोत्राङ्गं यस्तूर्ध्वोदये सूर्योदयात्प्राक्काले होष्यामीति
यति तं प्रत्यसाविति परिग्रहाव्यवस्थाया प्रागूर्ध्वोदययोः
विरोधस्तथेहापीत्यर्थः । प्रागूर्ध्वं चोदयो याभ्यामिति विग्रह
प्यपि वैकल्पिकेषु व्रीहियवादिषु परिग्रहव्यवस्थायै वावि
समविकल्पत्वाविघातः । आशङ्किता विकल्पे इमं परिहारं
* युक्तमिति * परिग्रहव्यवस्थया वस्तुविरोधपरिहारो
ऽनुष्ठानविरोधपरिहारो वा तत्र वस्तुस्वरूपस्य पुरुषेच्छा
तद्वशेन वस्तुविरोधपरिहारः सम्भवति उदितानुदितहोम
ष्ठानात्मकत्वाद्वस्तुविरोधो नास्त्यनेन श्लोकेनोक्तम् । अथ
विरोधपरिहारः परिग्रहव्यवस्थयानेन दृष्टान्तेनोच्यते त
पक्षद्वयस्य हि साम्ये सति पुरुषेच्छावशाद्विकल्पेनोभयानुष्ठ
न दृष्टान्ते च पक्षद्वयसाम्यात्तद्युक्तमित्याह * न चेति
शरीरायासः क्षयो न्यूनद्रव्यत्वं व्ययो ऽत्यन्तनाशः । आ
त्कालीनलौकिककार्यान्तरबाधः । दार्ष्टान्तिके तु सिद्धे
सदसत्त्वविरोधस्यापरिहार्यत्वाद्विकल्पो * न सम्भवतीत्यु
न च दीर्घकालस्य परिग्रहः सम्भवत्याशौचाहवृद्धेर्निषिद्धत्व
१७९,१२ * इह त्विति * न केवलं सदसत्त्वविरोधान्निवार्यते किं
मनुवचनेनेत्यपिशब्दार्थः । ननु दीक्षितान्नभोज्यत्वस्य दीर्घ
निषेधाभावात्परिग्रहव्यवस्थयानुष्ठानविरोधपरिहारो भवि
शङ्कोभयत्राप्यल्पकालनिरोधेन कृतार्थस्य बहुकालनिरोधे
म्भवाद्दीर्घकालवाक्ययोरानर्थक्यमेवापद्येतेत्याह * कुशेति
भयत्रापि समविकल्पासम्भवमुपसंहरति * तेनेति * व
धात्पक्षयोश्चासाम्याद्विषयान्यत्वमेव विरोधपरिहाराय वा
विकल्पो युक्त इत्यर्थः । स चान्यो विषयो दृष्टान्ते दर्शित
* स चेति * ननु यस्यापि धर्मपीडा नास्ति तस्याप्याशौ
निषिद्धत्वान्नेयं विषयव्यवस्था युक्तेत्याशङ्क्य निषेधो ऽपि
पद्येत्याह * तत्र चेति * धर्मपीडाद्यपेक्षयेत्यादिशब्दसूचि
चकालानां व्यवस्थान्तरमाह * दन्तेति * आहिताग्न्या

ज्जातशब्दस्य परनिपातः। मानवीयानुदात्तपदस्यानुपश्चाज्जातमपत्यस्मादिति व्याख्यानार्थो ऽन्यशब्दप्रक्षेपः। चितिक्रियाशब्दश्चतुरहोपलक्षणार्थः चितिक्रियाऽयहैकाहा ये विहितास्ते दन्तजातादिविषया इत्यर्थः। पारिशेष्याद्दशाहं कृतचूडे चेति चकारसूचितोपनीतविषयोऽवगम्यते। कथमेषा व्यवस्था प्रतीयतइत्यपेक्षायां * क्रमादित्युक्तम् * दन्तजातादिषु संस्थितेष्वशुद्धा बान्धवा इत्युक्ते कस्मिन्संस्थिते कियन्तं कालमशुद्धतेत्यपेक्षायां दशाहादीनामुक्तत्वात्स्मृत्यन्तरपर्यालोचनया प्रातिलोम्यक्रमेणेयं व्यवस्था प्रतीयतइत्यर्थः। अस्मिंश्च पक्षे वृद्धिनिषेधो ऽप्येकशास्त्रगतत्वादेतद्विषय एवेत्या * तत्र चेति * नन्वस्तु प्रातिलोम्यक्रमेणैकाहादीनां दन्तजातादिविषयत्वं धर्मपीडाल्पत्वाविषयत्वे तु किं कारणं दक्षवचनाच्चाग्निवेदसमन्वितादिमात्रविषयत्वं प्रतीयते, न चाग्निवेदसमन्वितत्वं धर्मविषयत्वेन नियतं दाम्भिकादौ व्यभिचारदर्शनादित्याशङ्क्य दक्षवचनस्य धर्मपीडाविषयत्वद्योतनार्थं गौतमवचनमुदाहरति *तथेति कार्यशब्दस्य धर्मविषयत्वात्तत्साहचर्येण च स्वाध्यायशब्दस्या स्वाध्यायसाध्यजपादिधर्मविषयत्वप्रतीतेस्तद्विघातार्थं सद्यः शौ विदधताल्पाशौचस्य धर्मपीडापरिहारार्थत्वद्योतनान्महत्यामापद्यग्निवेदसाध्यकर्मानुष्ठानं विना प्रतीकारासम्भवे ऽनुष्ठात्रन्तराभावा तत्प्रतीकारार्थकर्मानुष्ठानमात्रविषयाशौचाभावप्रतिपादनपरं काहाच्छुद्ध्यते विप्र इति दक्षवचनं व्याख्येयमिति भावः। यश स्माभिर्दक्षवचनस्य धर्मपीडापरिहारार्थत्वाङ्गीकरणेनाल्पाशौचकालानां * तद्विषयत्वमुक्तम् * गौतमेनापि तथोक्तं द्योतितमित्यर्थः नन्वेवं सति तत्कालमात्राशौचाभावप्रतिपादनपरत्वेनोत्तरकाला वृत्तेरनुज्ञातत्वाज्जातदन्तादिविषयाणां चाशौचकालानां भिन्नविषयत्वेन वृद्धेरप्रसक्तत्वान्निषेधो न युक्त इत्याशङ्क्य विषयान्तरम * अथ वेति *

अन्तर्दशाहात्स्यातां चेत्पुनर्मरणजन्मनी।
तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम्॥

इति पूर्वाशौचासमाप्तावाशौचान्तरनिमित्तसन्निपाते पूर्वाशौचकालशेषेण मनुना शुद्धिमुक्त्वा निमित्तावृत्तौ नैमित्तिकाशौचनावृत्तिरन्याय्येत्याशङ्कानिराकरणार्थं पूर्वाशौचपरिच्छेदार्थप्रवृत्तं दशाहादिना प्रसङ्गेनान्तः पतितस्याशौचान्तरस्यापि परिच्छेत्तुं शक्यत्वादाशौचानावृत्तेर्न्याय्यत्वं न वर्द्धयेदघाहानीत्यनेनोक्तमिति भावः एतदेव विवृणोति *न वर्द्धयेदिति* प्रसङ्गन्यायमात्रं योजयति *

वृत्त इति * नन्वसमासेनापि दशरात्राद्यवधिना शौचान्तरस
देशवर्त्तिनः कथं व्याप्तिरित्याशङ्क्याह * वितत्येति * नात्राह
शौचपरिच्छेदकत्वं किं तु संख्यायाः तस्याश्च व्यासज्यवृत्तित्वे
न्त्ये ऽहन्युपजायमानायास्तत्कालवर्त्तित्वाविशेषात्पूर्वापरीभूताने
शौचापरिच्छेदकत्वमविरुद्धमित्याशयः । नन्वेवं तर्हि पूर्वाशौच
लशेषेण तदन्तःपात्याशौचान्तरनिवृत्तेर्न्यायसिद्धत्वाद्वचनान
नर्थक्यं स्यादित्यशाङ्क्याह * शुद्धीति * अयमाशयः । शब्दैक
धिगम्यो ऽर्थो न स न्यायस्य विषयः तथा सत्यपेक्षाबुद्धिहेतुक
नैकत्वातिरिक्तसंख्यायाः संख्येयाहर्विशेषसमूहापेक्षत्वात्तस्य
जातमृतबन्धुभेदेन जन्ममरणावधिभेदेन भेदाज्जन्ममरणसाम
विवक्षायां शावेन सूतिशुद्धेरसम्भवादाशौचनिमित्तसामान्यवि
क्षायां वा सूत्यापि शावशुद्ध्यापत्तेः । यत्तु न वर्द्धयेदघाहानीत्य
शेषाहः शुद्धेर्न्यायमूलत्वदर्शनं तच्छुद्धिप्रतीक्षि जातोष्टिमासिकादि
न्नविषयशेषशुद्ध्यभिधानशङ्कानिवृत्त्यर्थमिति । नन्वेवं तर्ह्याशौच
लवद्दीक्षितान्नकालयोरपि व्यवस्थैवास्तु व्यवस्थितः कल्पो विव
इति तु व्युत्पत्त्या व्यवस्थामेव विकल्पशब्देनाभिप्रेत्याशौचचे
कालवदित्युक्तमित्याशङ्क्याह * नन्वेवमिति * अस्मिन्विषये
यमवधिरिति विषयव्यवस्थितो ऽवधिर्विषयावधिरिति मध्यम
लोपीसमासः तस्य कारणं विषयविशेषावधिव्यवस्थापकं का
भोजनान्वये ऽप्यवधेर्नित्यमवधिसापेक्षत्वात्कारणशब्दसमासावि
तः। तस्माद्दार्ष्टान्तिके विकल्पव्यवस्थयोर्द्वयोरप्यसम्भवाद्विरोधप
हाराशक्तेर्दीर्घावधेश्चाल्पावधिबाधं विनात्मलाभायोगादल्पावधे
इत्याशङ्किता स्वाभिप्रेतसिद्धिमुपसंहरति * तत्रेति * एवमाश
विरोधपरिहारवादी स्वाभिप्रायं प्रकटयति * तस्मादिति * यव
दल्पावधेरपि वैदिकत्वात् बाधो न युक्तः तस्मादशौचच्छेदकार
दिहापि भोजनावधिद्वये वैषम्यस्य व्यवस्थाया हेतुर्विषयभेदो वा
न तु कस्य चिद् बाध इत्यर्थः । कीदृशो विषयभेद इत्यपेक्षाया
ह * अत्रापीति * अनापद्यपि वा दीक्षितनियुक्तपुरुषान्तरदत्त
स्य राजक्रयोत्तरकालं भोज्यत्वमिति परिहारान्तरम् * दीक्षिते
त्युक्तम् * अत्र सत्रिणो ह्यन्यैः प्रदापयेदन्नं भोज्यं तद्विजसत्त
रिति स्मृतिपर्यालोचनया सूतकादिसन्निपातभयान्मासादिप
ब्राह्मणभोजनार्थमन्नमुपकल्प्यान्यमन्नं दानाय नियुङ्क्ते अग्नीषो
योत्तरकालं तु दीक्षितदत्तान्नभोजनमप्यदुष्टमित्याशयः । एतच्च प
रिहारान्तरं दीक्षितो ददातीति निषेधेन अग्नीषोमीयोत्तरकालमपि

क्षेतस्यान्नदानायोगादापातप्रतिभानमात्रेणापारमार्थिकमेवोक्तमित्य-पेशब्देन सूचितम्। नन्वन्नान्तरासम्भवे ऽपि निषिद्धान्नभोजनं न कार्यमित्याशङ्क्याह * आपद्धर्मइति * ननु करिष्यमाणप्रायश्चित्तब-ठनापत्काले ऽप्यनुष्ठितस्य निषिद्धस्य निर्दोषत्वाभावादनुज्ञाशास्त्रम-प्रमाणमित्याशङ्कते * हन्तैवमिति * आपद्यपि निषिद्धानुष्ठानस्य दो-षत्वोपपादनायेतिहासमुदाहरति * जग्धवानिति * स च दोषं प्राप्तवानितिशेषः। श्वमांसभक्षणस्याननुज्ञानात्सदोषत्वं क्रीतराजका-न्नभोजनस्य त्वनुज्ञानान्निर्दोषत्वमिति परिहरति * उच्यतइति * विशेषरूपेणानुज्ञानस्यात्यन्तनिर्दोषत्वसूचनार्थम् * महानित्युक्तम्। नन्वापत्काले निषिद्धान्नभोजनस्य।

जीवनात्ययमापन्नो यो ऽन्नमत्ति यतस्ततः।
आकाश इव पङ्केन न स पापेन लिप्यते॥

इति सामान्येन मनुनानुज्ञातत्वाद्विशेषानुज्ञानर्थिकेत्याशङ्क्या-ह * सामान्येनेति * अनुज्ञासाफल्यप्रदर्शनार्थः स्तोकशब्दः। सा-मान्यानुज्ञातानुष्ठानस्य अल्पदोषत्वं कथमवगम्यतइत्यपेक्षायामाह * तथा चेति * विशेषानुज्ञातादन्येषां निषिद्धानां पापत्वे ऽपि तानि शेषाण्यल्पानीति अल्पवाची शेषशब्दः अन्ते शौचं भविष्य-तीत्यापद्धर्मगतं प्रत्युक्तामितीतिकारणाध्याहारेण योज्यम्। मनुव-चनमुदाहरति * कर्मणेति * ननु कथं धर्ममाचरेदित्यस्य शौचवि-धानार्थतावसीयतइत्यपेक्षायामाह * धर्मश्चेति * फलार्थस्य धर्मस्य वाक्यान्तरविहितत्वेन विध्यानर्थक्यादापत्कालीनस्य वा कार्यकर-णस्य निर्दोषत्वे धर्माधिकारनिवर्त्तकत्वायोगात्प्रतिप्रसवार्थमपि वि-धानुपपत्तेः सदोषत्वे वा प्रायश्चित्तं विना धर्माधिकाराभावात्प्राय-श्चित्तविधानार्थमेवेदं वचनमिति भावः। अतो विशेषानुज्ञानस्या-त्यन्तनिर्दोषत्वज्ञापनार्थत्वान्नानर्थक्यमित्युपसंहरति * यत्त्विति * ननु क्रीतराजकान्नभोजनस्यात्यन्तनिर्दोषत्वे द्वितीयो ऽवधिरनर्थकः स्यादित्याशङ्क्यानापदि सदोषत्वात्तद्विषयो ऽसाविति दर्शयितुमाह * तत्रापि त्विति * एवमाशौचच्छेदकालवदापदनापद्विषयत्वेना-वधिद्वयस्य व्यवस्थामुपपाद्याशौचकालानां जातदन्तादिविषयत्वपक्षे तत्साम्यार्थमन्यथा व्यवस्थामाह * यदि वेति * कालवैषम्यात्सम-विकल्पत्वाभावे ऽप्यविरोधो ऽवधार्यतइत्यपि शब्दाध्याहारेण यो-ज्यम्। कथमित्यपेक्षायाम् *अर्थभेदव्यवस्थानादित्युक्तम्* तस्मा-द्दीक्षितस्याविज्ञातस्य क्रीतराजकस्याभोज्यं भवतीत्याथर्ववैदिकस्य दीक्षितान्नभोजननिषेधो ऽर्थस्तस्य तस्माद्दीक्षितस्य विज्ञातस्य क्रीत-

राजकस्य भोज्यं भवतीत्याथर्ववैदिको ऽवधिर्न दीक्षितस्याश्नीयादिति त्रयीगतस्याभोजनसङ्कल्पविधिरर्थः । तस्य त्रयीगतोऽवधिरिति त्रय्यथर्ववेदगतयोर्वाक्ययोरर्थभेदेन तद्विषयतया विधिद्वयस्य व्यवस्थानादविरोध इत्यर्थः अर्थभेदं दर्शयति * दीक्षितान्नमिति * नित्यत्वप्रदर्शनार्थम् * ध्रुवमित्युक्तम् * न भोक्ष्यइति भोजनविषये मनोव्यापारः सङ्कल्पो विधीयतइत्यर्थः नन्वभोजननियमस्यापि भोजननिषेधार्थत्वात्तत्करणे दोषापत्तेः क्रीतराजकस्याप्यभोज्यान्नत्वस्यादित्याशङ्क्य फलार्थं वर्ज्जनीयस्यानुष्ठानं न दोषापादकमिति दर्शयितुं दृष्टान्तद्वयमाह * यथैवेति * श्राद्धभोजनमांसभक्षणयोरपि निषिद्धत्वेन दोषवत्त्वात्साध्यविकलत्वाशङ्कानिराकरणार्थं न * सर्वत्र निषिध्यतइत्युक्तम् * क निषिद्धता क वा नेति विवेकापेक्षायामाह * श्राद्धमिति * सदेति सपिण्डीकरणात्प्रागूर्ध्वं चेत्यर्थः सपिण्डीकरणोत्तरकालमप्येकोद्दिष्टमप्यन्येषां स्मर्तॄणां मतेनानिषिद्धमिति द्योतना * येकेषामित्युक्तम् * प्रेतत्वनिवृत्त्या पितृत्वप्राप्त्यर्थात्सपिण्डीकरणात्प्राक् पार्वणस्याविधानेन सपिण्डीकरणानन्तरभाविपार्वणश्राद्धस्येत्यादिप्रेतश्राद्धस्याभावात्पित्र्यशब्देनाभिधानम् । मांसभक्षणे ऽपि विवेकमाह * तथेति * एतदेव मनुवचनेन द्रढयति * यथाहेति * श्राद्धभोजनमांसभक्षणाभ्यां दीक्षितान्नभोजनस्य वैषम्यमाशङ्कते * ननु चेति * निःश्रेयसेन कारणेन प्रयोजनेनेति चतुर्थ्यर्थे तृतीया निःश्रेयसार्थं नियमयतीत्यर्थः । न दीक्षितस्याश्नीयादित्यस्याथर्ववैदिकवच्छ्रुतशब्दसामानाधिकरण्यविकल्पप्रसक्तिरूपपर्युदासकारणाभावान्निषेधार्थत्वप्रतीत्यविशेषेण स्वरूपभेदे ऽप्यर्थैकत्वमभिप्रेत्य वाक्यैकत्वाभिधानम् । अन्यत्राव्युत्पादितमप्यवधिद्वयान्यथानुपपत्तेः पर्युदासकारणत्वं न्यायोपेतत्वादिहाङ्गीकार्यमित्यभिप्रायेण परिहरति * स्यादिति * प्रत्यक्षस्यापि वाक्यद्वयस्याभिन्नार्थत्वं न्यायकल्पमभिप्रेत्य * कल्पितामित्युक्तम् * कथमवधिद्वयेन भिन्नार्थत्वकल्पनेत्यपेक्षायामाह * यः पूर्वइति * यः प्रतिषेधः स क्रीतराजके स्थितो निवृत्तः कथं निवृत्ततावसीयत इत्यपेक्षिते * पूर्वइत्युक्तम् * अक्रीतराजकस्येति क्रयप्रागभावावगमात्प्रतिषेधस्योत्तरकालं व्यापाराभाव इत्यर्थः । ततश्च तस्य केवलप्रागभावित्वेनैकरूपत्वाद्द्वितीयो ऽवधिर्नावकल्पतइत्येकत्वादित्यनेनोक्तम् । यदि ह्यसौ प्रतिषेधो राजक्रयात्प्रागुत्तरकालं च व्याप्रियेत ततस्तस्यैवापदनापाद्वियत्वेनावधिद्वयमवकल्पेत । अतो ऽन्यथानुपप

१ तरसर्वत्र त्युक्तमिति २ पु० पा० ।

ाथर्ववैदिकादन्यस्य त्रयीगतस्य पर्युदासार्थत्वं कल्पनीयमित्याह
द्वितीयेति*नन्वभोजनविधित्वेऽपि तत्र कालविशेषाश्रवणात् क्रीते
भोजनं नामेति निष्प्रमाणमित्याशङ्क्य * अथान्तरालिकइत्युक्तम् *
धेनैव प्राग्वर्जनसिद्धेः पर्युदासानर्थक्याद्राजक्रयाग्नीषोमीयान्त-
ठकालविशेषवत्त्वमपि निश्चीयतइति भावः। दृष्टान्तं विवृणोति
यथेति * देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो ह-
भ्यामग्नये जुष्टं निर्वपामीति निर्वापमन्त्रे सवित्रश्विपूषशब्दा-
मसमवेतदेवताप्रकाशनार्थत्वायोगादन्यदेवत्यायां विकृतावनूहे
तेपादिते किमर्थस्तर्हि सवित्रादिशब्दप्रयोग इत्याशङ्क्य सवित्रा-
ाब्दानां यजमानपरत्वात्प्रसवशब्दस्य चानुज्ञार्थत्वाद्यजमानानुज्ञाप्र-
ानार्थत्वेऽभिहिते यजमानबहुत्वे तदूहो भविष्यतीत्याशङ्क्य पूर्वा-
ातत्वेनेदानीं तत्प्रकाशनानर्थक्यान्निर्वापस्तुत्यर्थत्वेन तत्प्रकाशनस्य
ार्थ्याद्यज्ञपतिशब्दवदनूह इति निगमसिद्धो दृष्टान्तः। ननु निर्वा-
ाले ऽपि यजमानहविर्निर्वप्स्यामीत्यध्वर्युणानुज्ञायां पृष्टायामों नि-
ति यजमानेनानुज्ञानात्तदनुसन्धानार्थं निर्वापमन्त्रे प्रकाशनं भ-
ष्यतीत्याशङ्कानिरासार्थं * तदानीन्तनेत्युक्तम् * पूर्वमेवानुज्ञा-
ात्त निर्वापस्तुत्यर्थमिति भावः। दार्ष्टान्तिके योजयति * तथेहे- ११
* उभयथापि सम्भवे तर्हि कथं पर्युदासत्वावधारणेत्याशङ्क्य न
ारं वृणीतइति तद्विकल्पप्रसक्त्यैव पर्युदासत्वावधारणमाह *प्र-
षेद्वेति * क्रयोत्तरकालमर्थप्राप्तदीक्षितान्नभोजनप्रतिषेधे पूर्व-
ेषेधगतस्याक्रीतराजकस्येति विशेषणस्यानर्थक्यापत्तेः शास्त्रानुज्ञा-
तिषेधस्याभ्युपगमनीयत्वाद्विकल्पप्रसक्तिरित्यर्थः। उपसंहरति
दीक्षितान्नेति * ननु माभूदनुज्ञाग्नीषोमीयोत्तरकालं दीक्षिता-
ोजनस्य विधिरयं भविष्यतीत्याशङ्क्य दृष्टार्थस्यादृष्टार्थत्वायोगा-
शेष्टविधौ च गौरवापत्तेः फलाश्रवणात्प्रकृताश्रयालाभादनेक-
ोपादानाच्च फले गुणविध्ययोगाद्विधित्वं युक्तमित्याह * अह-
ेति * न दीक्षितस्याश्नीयादित्यस्य त्वदृष्टार्थतोभयसाधारण्याद्-
णम्। द्वितीयानुपपत्त्या च पर्युदासत्वं न्याय्यमेवेति भावः।
ऽनयोः पक्षयोर्मध्ये सम्मत इत्यपेक्षायामापद्विषयत्वेऽनुकल्पत्वेन
त्सावगततुल्यकल्पत्वबाधापत्तेरथर्ववैदिकस्य च निषेधस्यावध्य-
क्षत्वेन तस्माद्दीक्षितस्य विज्ञातस्य क्रीतराजकस्य भोज्यं भवती-
यावधिसमर्थकत्वायोगाच्छ्रेयो ऽथमयं यजते न प्रायश्चित्तार्थमि-
ं विज्ञातस्य क्रीतराजकस्यान्नमदुष्टमेवेत्यवध्यन्तरदर्शनजनितदो-
ाङ्कानिराकरणार्थत्वप्रतीतेर्द्वितीयस्य पक्षस्य सम्मतत्वं दर्शयितु-

माह * एवमिति * ऐतरेयब्राह्मणगतस्य स्वशितव्यं वपायां हु तायामित्यस्याग्नीषोमीयसंस्थावधिवाक्यवत्पर्युदस्तदीक्षितान्नभोजन नुज्ञानार्थत्वे ऽपि बह्वल्पफलगुरुलघुकल्पत्वेनावधिद्वयव्यवस्थानाद विरोध इत्येवंशब्देन सूचितम् । पर्युदस्तानुज्ञानार्थत्वसाम्येन चैत द्वयधिद्वयमेकीकृत्यावधिद्वयोपन्यासः अष्टाचत्वारिंशद्वर्षब्रह्मचर्य स्मृत्युदाहरणमपि दूषयति * अष्टेति * स्मार्त्तत्वेन तुल्यत्वाद्वि कल्पेनाविरोधं वक्तुं * स्मृतावेवेत्युक्तम् * स्मार्त्तत्वाविशेषे ऽपि पक्षाणामनाम्याद्विकल्पानुपपत्तेरपरितोषाद्विषयव्यवस्थां वक्तुमाश्र यान्तरेण्युक्तमिति विवेकः । कीदृशानि पक्षान्तराणीत्यपेक्षिते मनु वचनं तावदुदाहरति * तथा हीति * अविप्लुतब्रह्मचर्यो गृहस्था श्रममावसेदित्युत्तरार्द्धं तत्र द्वेधा विषयव्यवस्थामाह * सामर्थ्ये ति * यो ऽल्पेन कालेन बहून्वेदानध्येतुं समर्थस्तं प्रति बहुवेदपक्षे ऽसमर्थं प्रत्यल्पवेदपक्ष इति सामर्थ्यमङ्गीकृत्यः गार्हस्थ्याश्रमायोग्यं प्र ति बहुवेदपक्षस्तद्योग्यं प्रत्यल्पवेदपक्ष इत्याश्रमयोग्यत्वमङ्गीकृत्यापे क्षैतन्मनुनोच्यतइत्यर्थः ।

इह षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् ।
तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥

इति मनुनैवोक्तत्वात् ग्रहणान्तिकपक्षे सामर्थ्यापेक्षावर्षसंख्यापक्षे त्वाश्रमयोग्यत्वापेक्षेति विवेको ऽवसीयते ।अष्टाचत्वारिंशद्वर्षब्रह्मचर्य कमर्थां गौतमेनापि पक्षान्तरमुक्तमित्याह*गौतमेनापीति*तत्राप्यष्टा चत्वारिंशत्पक्षो गार्हस्थ्याश्रमायोग्यविषय इत्याह * तत्रैवमिति * नन्वाश्रमान्तरं तान्प्रति कस्मान्न विधीयतइत्याशङ्क्य तेषां बहुक्लेश त्वादविरक्तानधिकाराच्चाल्पक्लेशबहुफलोपकुर्वाणकत्वेनैव बहुका लक्षपणायैतद्विधानमित्याह * नैष्ठिकेति * उपकुर्वाणको ऽध्ययनार्थं गुरुकुलवासी ब्रह्मचारिविशेषः । गमिष्यतीत्येतदुच्यतइत्यन्वयः स्वाध्यायमात्रेणेष्टगतिप्राप्त्युपपादनार्थं द्वैपायनवचनमुदाहरति * द्वैपायनादयश्चाहुरिति * ब्रह्मयज्ञफलातिशयोपयोगितापि स्वाध्या यतदर्थज्ञानभूयस्त्वस्यास्तीत्याह * यानि चेति * प्रतिदिनं प्र तिदिनं प्रयुज्यमानैर्ऋगादिभिर्यो ब्रह्मयज्ञः तन्निमित्तानि यानि यं यं क्रतुमधीयित तस्य तस्याप्नुयात्फलमिति क्रतुसाध्यानि फलानि क्र त्वधिकृतेभ्यो गृहस्थवानप्रस्थेभ्यो निवृत्तत्वादनधिकृतविषयत्वेनाव तिष्ठन्तइत्यर्थः । ब्रह्मयज्ञस्याग्निहोत्रादिवन्नित्यकाम्योभयरूपत्वाद्य थायोगं व्यवस्था न विरुद्धेत्याशयः । द्वादशवर्षपक्षो ऽपि गौतमी येनैव शीघ्रवेदग्रहणसमर्थविषयेण ग्रहणान्तं वेति पक्षान्तरस्मरणा

स्वविषयाद्व्यावर्त्तितत्वान्न सर्वगृह्यस्य विषय इत्याह * यो वेति * वाशब्दो ऽष्टाचत्वारिंशत्पक्षविषयः पूर्वपक्षीकृतौ स्वविषयाद्व्यावर्त्तिताविर्यर्थः उपसंहरति * इतीति * भाष्यभङ्गमुपसंहरति * तेनेति * स्वयं द्वेधा सूत्रद्वयं व्याचष्टे * तेनात्रेति * ननु न्यायानिष्ठत्वान्मीमांसायाः प्रयोगनिरूपणमयुक्तमित्याशङ्क्य प्रयोगार्थत्वादस्य तत्साम्ये ऽपि यत्र प्रयोगवैषम्यं तत्र तन्निरूपणीयमित्याह * एतद्धीति * किं प्रतिपाद्यतइत्यपेक्षायामाह * यावदिति * ननूभयोः प्रामाण्ये कथं नियमेनैकार्थानुष्ठानमित्याशङ्क्याह * व्रीहीति * व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत यवेभ्यो यवैरिष्ट्वा यवैरेव यजेत व्रीहिभ्य इत्याग्रयणो ऽवधिव्यवस्थया व्रीहियवव्यवस्थाविधानादग्निहोत्री वै नानादयित्वात्तस्याः पयसा जुहुयादित्येतत्पक्षाश्रयणाविषयो ऽत्रत्यो यावज्जीवशब्द इति प्रागेवोपपादितं श्रुत्या सह तुल्या कक्षा यस्याः सा तथोक्ता अनुष्ठाननियमे कारणमाह * यानीति * वेदवचनस्य विश्रम्भणीयत्वं वदता स्मृतेर्यथाश्रुतमूलानिश्चयेनाविश्रम्भणीयतार्थादुक्ता। कथमस्मिन्नर्थे सूत्रं योज्यमित्याशङ्क्याह * सूत्रार्थो ऽपि चेति * यकाररहितः पूर्वपाठः तत्सहितो द्वितीयः तावच्छब्दाध्याहारे कारणमाह * तदानीन्तनेति * तावत्कालीनव्यवहारप्रतिपादनार्थत्वाङ्गीकरणे प्रयोजनमाह * ततश्चेति * आशङ्काशब्दो यथाश्रुतमूलानिश्चयाभिप्रायः मात्रशब्दव्यावर्त्यमाह * यदा त्विति * ननु प्रामाण्यस्य तुल्यत्वे ऽपि केन चिद्विशेषेणैकार्थादरे भिन्नशाखागतयोरुदितादिश्रुत्योरपि पठितत्वविशेषेणैकार्थादरापत्तेरेवं प्रातरुपोदयं व्युषिते उदिते चेत्याश्वलायनस्य समविकल्पाभिधानं विरुद्ध्येतेत्याशङ्कते * नन्विति * स्मृतेर्विध्याक्षेपकमन्त्रार्थवादमूलत्वस्यापि सम्भवान्नैकस्यै बहवः सह पतय इत्यर्थवादाक्षिप्तस्य च निषेधविधेर्नैका बह्वन्पतीन्विन्दतेति श्रुतिनिषेधविध्यनुसारेणाविवक्षितसाहित्यानेकपतिमात्रनिषेधपरतया व्याख्यानदर्शनादुच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सहते सूर्येणेति मन्त्राक्षिप्तस्य चाश्वदानफलविधेर्न केसरिणो ददातीति श्रुतनिषेधानुसारेण साक्षाद्विहिताश्वदानाविषयत्वेन व्याख्यानदर्शनात्तन्मूलानां स्मृतीनां प्रत्यक्षश्रुत्यनुसारेणान्यथाव्याख्यानसम्भवात्प्रत्यक्षमूलादर्शने यथाश्रुतमूलानिश्चयादनादरो न वैलक्षण्यमात्रमित्यभिप्रायेण परिहरति * सत्यमिति * अभिप्रायं विवृणोति * अतश्चेति * विप्रलम्भमूलत्वाभावान्नात्यन्तबाध्यत्वं यथाश्रुतमूलानिश्चतान्च नात्यन्ततुल्यतेत्यर्थः। एवं च वदता यथाश्रुतमूलानिश्चया-

[अ]भिप्रायेणासति ह्यनुमानमिति सूत्रावयवस्य हेतुदर्शनसू[त्र]स्य च यथाश्रुतमूलत्वनिश्चयानिश्चयरूपविशेषस्यात्यन्तातुल्यत्वहेतु[द]र्शनादित्येवं व्याख्या सूचिता । भाष्यं च यथाश्रुतार्थ[प्र]मायाभावाभिप्रायत्वेन समाहितम् । उदाहरणभाष्यमप्यव[स्था]मूलावस्थास्मृतिविषयत्वेन नेतव्यमिति सर्वमदुष्टम् । द्वितीयव्याख्या[ने]न प्रपञ्चयति * यद्वेति * यान्येतानि सांख्यादिपरिगृहीतानि [विप]र्यीतगृहीतयोर्द्धर्माधर्मयोर्निबन्धनानि यानि च बाह्यान्तराणि [म्ले]च्छाचारस्य बहुसमाहतैकदेशामिश्राद्मभोजनाचरणस्य निबन्धना[नि] तेषामेवैतदनपेक्षणीयत्वं प्रतिपाद्यतइत्यन्वयः । न च तदप्रामाण्य[स्वी]करणे पूर्वोक्तमर्यादातिक्रमादिदोषापत्तिः शिष्टत्रैवर्णिकपरि[ग्र]हादरस्य स्मृतिप्रामाण्यहेतोस्तेष्वसम्भवादिति त्रयीविद्भिर्न परिगृही[]तानीत्यनेनोक्तम् । त्रयीवित्परिग्रहाभावे ऽप्यहिंसासत्यवचना[दि]वाक्येषु वेदमूलत्वदर्शनेन वाक्यान्तरेष्वपि वेदमूलत्वानुमानसम्भ[व]ात्कथमप्रामाण्यमित्याशङ्क्य किं चित्त्रयीमिश्रस्य धर्मकञ्चुक[प्र]च्छायायां पतितानीत्युक्तम् । यथा नर्त्तकी स्वाङ्गवैकृत्यं कञ्चुकेन छादयति तथा लोकवचनार्थं चैत्यवन्दनादिवाक्यानां मिथ्या[त्वं] छादयितुं क्वचिद्वेदमूलार्थाभिधानं न सर्वत्र तथात्वानुमानायलमित्य[र्थः] । किं तेषां लोकवचनं प्रयोजनमित्यपेक्षायां लोकोपसंग्रहादि[]प्रयोजनपरत्वमुक्तम् । कस्मात्पुनः क्वचिद्वेदमूलत्वदर्शनेनान्यत्र [त]थात्वानुमानं न सम्भवतीत्याशङ्कानिराकरणार्थम् * त्रय्येत्युक्तम् [अ]न्यप्रामाण्यापादकत्वात्तद्विपरीतेनात एवातन्मूलत्वात्तदसम्बद्धे दृष्टशोभाभिप्रायेण तत्प्रधानेन तन्मूलेनोपनिबद्धानीत्यर्थः । प्रत्य[क्ष]ादिमूलत्वस्य प्रागेव निरस्तत्वात्प्रत्यक्षाद्याभासेष्वेव पराभिमान[प्र]त्यक्षादिशब्दप्रयोगः । एवं तर्हि प्रामाण्याशङ्कानुपपत्तेस्तन्निराकर[ण]मयुक्तमित्याशङ्क्य * विषचिकित्सेति * पूर्वपक्षबीजमुक्तम् [।] [वि]षचिकित्सादिसमर्थानां कतिपयमन्त्रौषधीनां या कादाचित्का [सि]द्धिस्तद्दर्शनबलेन जीविकाप्रधानस्यार्थान्तरस्योपदेशकानीत्य[र्]थः । ननु विषचिकित्सादिदृष्टान्तेन प्रामाण्याध्यवसाने जीविकाप्राधा[न्]याद्यनुष्ठानादरे सत्यपि धर्मत्वाध्यवसाने किं कारणमित्याशङ्क्य * [अहिंसा]दिस्तोकार्थगन्धवासितत्वमुक्तम् * ननु प्रत्यक्षादीनां धर्मे प्रामाण्यनिराकरणेन प्रत्यक्षसूत्रएव तन्मूलानां बाह्यस्मृतीनां प्रा[म]ाण्यस्य निराकृतत्वात्पुनरुक्तमेतत्स्यादित्याशङ्क्याह * न चैत[]दिति * वेदमूलत्वं पूर्वमनिराकृतमिह निराकार्यमित्याशयः [।] ननु वेदमूलत्वस्य परैरनङ्गीकृतत्वेन तन्निराकरणमतिप्रसिद्धत्वा[]

र्यमित्याशङ्क्याह * न चेति * मीमांसकातिरिक्तैः सामवायिकार्थ-
ोत्यभ्युगमेन कस्मिंश्चिच्छब्दे वाचकत्वानङ्गीकरणाद्गाव्यादिश-
ाचकत्वस्य परैरनङ्गीकृतस्यापि निराकरणं लोके वाचकविवेक-
प्रसिद्धत्वाद्यथायुक्तं नैवं बाह्यस्मृतीनां वेदमूलत्वानिराकरणं यु-
मतिप्रसिद्धत्वादिति वैधर्म्यदृष्टान्तः । यद्वा यथा गाव्यादिशब्दाना-
ाचकत्वे प्रामाण्यस्यातिप्रसिद्धत्वादनादरे लौकिकानां वाचका-
वकेषु समदृष्टित्वापत्तेस्तत्कथनं साधुशब्दाधिकरणे करिष्यते
ा बाह्यत्वधर्माधर्मनिबन्धनाप्रामाण्यस्याप्यतिप्रसिद्धत्वादनादरे-
कथने लौकिकानां मन्वादिनिबन्धनेषु बाह्येषु च समदृष्टित्वाप-
तत्कथनीयमित्युत्तरशेषः साधर्म्यदृष्टान्तः । यद्वा शोभादिविशे-
शेन कलिकालवशेन वा ऽधर्मप्राबल्याद् बाह्येष्वेव श्रद्धाविशेषाप-
श्रौतस्मार्त्तार्थस्यैव त्यागः प्रसज्येतेत्याह * शोभेति * सन्तु
लौकिकाः परीक्षकाणामपि सम्भवद्वेदसंयोगत्रैवर्णिकप्रणीतत्वा-
शेषात्समदृष्टित्वापत्तिरित्याह * ब्राह्मणेति * बाह्यस्मृत्यप्रामा-
स्यावश्यप्रतिपाद्यतामुपसंहरति * तेनेति * पूर्वपक्षमाह * म-
न्नेति * (आदिपदेनानुपलब्धिविरोधपरिहाराय मूलश्रुतेरपि
पान्तरवर्तित्वमुपादीयते[1])ननु विरोधे का गतिरित्याशङ्क्याह * त-
ते * विरोधे ऽप्युक्तेन न्यायेन मूलश्रुत्यनुमानाविघाताद्व्यवस्था
कल्पो वा भविष्यतीत्याशयः । मूलानुमानस्य चानुपलब्धिविरोधः
प्रक्षश्रुतिमूलत्वपक्षे तु विरोधशङ्कैव नास्तीत्याह * यैश्चेति *
स्मन्पक्षे यस्मै यद्रोचते तत्प्रमाणीकुर्यादिति पूर्वोक्तं दूषणं परि-
न्नुपसंहरति * ततश्चेति * सूत्रेण सिद्धान्तमाह * अत आ- ११
ते * ननु पारतन्त्र्ये सति विरोधे मूलानुमानासम्भवेनानपेक्षत्वं
द्वेदवत्तु स्वातन्त्र्यसम्भवे मूलानुमानासम्भवे ऽपि न किंचिद्
यतीत्याशङ्क्याह * पारतन्त्र्यं तावदिति * अतो वेदमूलत्वमात्रं
ाकार्यं तच्चापसिद्धान्तापत्तेर्बौद्धादिभिर्वक्तुं न शक्यतइत्याह
वेदमूलत्वं पुनरिति * यदि तु तावदेकदेशी कश्चिदभ्युपगच्छेत्तं
ानेन सूत्रेण निराकरोति * अन्यथेति * वेदविरुद्धस्यापि म-
ादिवाक्यस्य वेदमूलत्वाभ्युपगमान्न तेन वेदमूलत्वं निराकर्त्तुं श-
ामित्याशङ्क्य समस्तविद्यास्थानविरुद्धत्वमुक्तम् । ग्रन्थकाराणां वा-
। सूत्रेण वेदविरोधो ऽभिधीयतइत्याह * त्रयीमार्गेति * वेद-
रुद्धाचरणानां तन्मूलोपदेशानुपपत्त्या वेदमूलानुमानस्य बाध
ाशयः । वेदाविरोधिभ्यश्च समर्पणं वेदाविरोधिनां वेदमूलोप-

[1] अयं पा० २ पु० ना०

देशपरिग्रहानुपपत्तेर्वेदमूलानुमानस्य बाधकमित्याह *त्रयी
भ्यश्चेति * चतुर्थवर्णः शूद्रः । निरवसितो वर्णाश्रमाचारर
परिग्रहीतॄणामपि वेदविरोधो वेदमूलानुमानस्य बाधको ऽन्
न्थेनोक्तो भवति । आत्मविरुद्धाचरितृत्वेन च शाक्यादे
हितैषित्वस्य दूरनिरस्तत्वात्तदुपदेशस्य प्रमाणमूलत्वानुमानं
कमित्याह *स्वधर्मेति* एतदेवाभियुक्तवचनेन द्रढयति *
चेति * मनोस्तु क्षत्रियस्यापि प्रवर्तकत्वे यद्वै किं चिन्मनुरव
द्भेषजामिति वेदानुज्ञातत्वादविरुद्धमित्याशयः । स्वधर्मातिक्र
वालङ्काराभिमानादत्यन्तमूढत्वं प्रतीयतइत्याह *बुद्धादेः पुन।
तद्ग्रन्थपरिग्रहीतॄणामपि न शूद्राय मतिं दद्यादित्यादिप्रतिषेध
मसामर्थ्येन ब्राह्मणनिन्दां तत्कारित्वेन च शाक्यस्तुतिं कुर्वत
न्तमूढत्वमाह *स किलेति * तद्ग्रन्थविहिताचरितॄणां च वे
रोधो वेदमूलत्वस्य बाधक इत्याह *तदनुशिष्टेति* एतत्स्व
११७।२ सूत्रं योजयति *तेनेति* बाह्यग्रन्थजातं वेदविरोधादनपेक्ष्
प्रथमव्याख्याने ऽर्थः। ग्रन्थकारिणां वेदविरोधात्तत्कृतं ग्रन्थजा
पेक्ष्यमिति द्वितीये परिग्रहीतॄणां वेदविरोधात्तेभ्यः समर्पका
न्थकारिणां सम्बन्धिग्रन्थजातमपेक्ष्यमिति तृतीये परिग्रहीतॄणां
विरोधात्तत्परिगृहीतं ग्रन्थजातमनपेक्ष्यमित्यर्थोक्ते चतुर्थे ग्रन्थ
णामात्मविरुद्धाचारितृत्वात्तत्कृतं ग्रन्थजातमनपेक्ष्यमिति पञ्
श्चाचरितॄणां वेदविरोधात्तदनुस्मृतं ग्रन्थजातमनपेक्ष्यमिति ष
दविरोधाभावे ऽप्यनुपलब्धिविरोधेन पठितश्रुत्यनुमानायोगा
त्वबाधापत्तेश्च प्रलीनशाखागतश्रुत्यनुमानायोगाद् बाह्यग्रन्थः
शयबाधमित्याह *न चेति* ननु मन्वादिस्मृतिवद्विप्रकीर्णश
गतश्रुतिमूलत्वेनानुपलब्धिविरोधपरिहारो भविष्यतीत्याशङ्क्य
क चित्सम्वाददर्शनात् तद्दृष्टान्तेनान्यत्रापि वेदमूलत्वानुमा
कमिति इह तु क चिदपि सम्वादाभावाद्वैषम्यमित्याह *न ही।
अहिंसादिवचनस्यापि विषयविशेषानवच्छिन्नस्य विहितव्यति
विषयहिंसादिनिषेधश्रुत्या सम्वादो नास्तीत्याशयः । ननु श्रु
लत्वासम्भवे ऽपि प्रमाणान्तरमूलत्वेन प्रामाण्योपपत्तेर्ग्रन्थप्रा
बाधनं न युक्तमित्याशङ्क्याह *मूलान्तरेति* अत्रैव हेतुद
श्चेतिसूत्रं योजयति *लोभादीति* किं चात्रोत्प्रेक्षणीयलोभ
विषयतया हेतुशब्दव्याख्यानेन युक्त एव हेतुशब्दाभिधेया धर्माध
पदेशमूलत्वेन तेरुपन्यस्ताः प्रत्यक्षं दृश्यन्ते इत्याह *शाक्याद
ति * ननु याज्ञवल्क्यादिभिरपि ।

यदुच्यते द्विजातीनां शूद्राद्धारोपसंग्रहः ।
न तन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥

तेन पुनरित्यादिहेतुदर्शनपूर्वकं धर्माधर्मोपदेशनान्न तन्मात्रेण वेदमूलत्वनिराकरणं युक्तमित्याशङ्क्य वेद एव द्विजातीनां निःश्रेयसकरः परः इत्यादिना तैः प्राधान्येन वेदमूलत्वादिभिधानात्तेन ह्यश्क्रियतइतिवदर्थवादार्थं हेत्वभिधानं विज्ञायते । ननु शाक्यादिभिर्वेदमूलत्वं क्वचिदुक्तमित्याह * न चेति * हेतुमूलत्वेनैव तर्हि प्रामाण्यं भविष्यत्यत आह * हेतवश्चेति * हेत्वाभासास्तेन सम्यग्घेतव इति भावः । हैतुकत्वेन वा शाक्यादीनामनपेक्ष्यत्वप्रतिपादनार्थैतत्सूत्रमित्यर्थान्तरन्यासेनाह * एत एव चेति *

पाषण्डिनो विकर्मस्थान्वैडालव्रतिकाश्छठान् ।
हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥

इति स्मरणाद्वाङ्मात्रेणापि येषामर्चनं न कार्यन्ते शाक्यादय एवेत्यर्थः । पाखण्डित्वं विकर्मस्थत्वं च प्रसङ्गादुक्तम् । हेतुदर्शनाच्चेति चकारसूचितं वा । अस्यैव सूत्रस्यानपेक्षत्वहेतोर्वेदबाह्यत्वस्य कुदृष्टित्वस्य च दर्शनादिति चतुर्थं व्याख्यानमाह * एतदीयेति * स्वाभिप्रेतं सिद्धान्तमुपसंहरति * तस्मादिति *

॥ अथ पदार्थप्राबल्याधिकरणम् ॥ ४ ॥

## शिष्टाकोपे ऽविरुद्धमिति चेत् ॥ ५ ॥

अत्र भाष्यकारेणाचमनादीन्युदाहृत्य किमेतानि श्रुतिविरुद्धानि न कर्त्तव्यान्युताविरुद्धानि कार्याणीति विचाररूपं दर्शितं, तच्छ्रुतिविरुद्धस्मृत्यर्थाकर्त्तव्यत्वस्य पूर्वाधिकरणे सिद्धत्वादविरुद्धार्थकार्यत्वस्य चाद्याधिकरणसिद्धत्वादनर्थकं भोजनादिनिमित्तस्य चाचमनस्य शुद्ध्यर्थत्वेन पुरुषार्थस्य यज्ञोपवीतस्य च हिरण्यादिवत्पुरुषार्थरूपेण नित्यधार्यतया विहितस्य दक्षिणाचारत्वस्य च भोजनादौ पुरुषार्थतया विहितस्यानाशङ्क्य विरोधत्वेन पूर्वपक्षासम्भवादयुक्तमाशङ्क्य व्याचष्टे * एवं तावदिति * उक्तेन न्यायद्वयेन यद्यपि सर्वासां पुरुषार्थानां क्रत्वर्थानां च स्मृतीनामविरोधाविरोधयोः प्रामाण्याप्रामाण्ये निरूपिते, यद्यपि च तावन्मात्रेण पुरुषार्थानामाचमनादिस्मृतीनामनाशङ्क्य विरोधत्वेन पर्यवसितं निरूपणं तथापि सम्प्रति क्रत्वर्थानां यज्ञोपवीतादिस्मृतीनां विरोधाविरोधमात्रमेव विचार्यतइत्यर्थः । ननु क्रत्वर्थस्मार्त्तपदार्थानुष्ठानस्य श्रौतपदार्थपरिमाणविरोधाविरोधशङ्कास्तु नाम न तु किंचिन्मात्राधिक्येन पूर्वाह्ला

द्विकालविरोधशङ्का । न च सर्वादावनुष्ठीयमानस्य क्रम
शङ्क्याशङ्क्य बहुश्रुत्यर्थेत्युक्तम् । श्रौतपदार्थानां बहुत्वेन सव
हादिव्याप्तत्वात्किंचिदाधिक्ये ऽपि कालातिक्रमापत्तिस्तन्मध्ये
र्त्तपदार्थानुष्ठानक्रमबाधापत्तिरित्याशयः । ननु विरोधाविरोध
निचार्यत्वे कार्याकार्यशब्दावनर्थकौ स्यातामित्याशङ्क्य विच
ञ्जनप्रतिपादनार्थत्वेन तयोः साफल्यमाह * तन्निर्णये त्विति *
चमनादीनां निषेधाश्रवणे विरोधोऽनाम्नि श्रवणे विरोध इति
हानुपपत्तिमाशङ्कते * कथं पुनरिति * नात्र निषेधश्रवणाश्रव
सन्देहः किन्तु स्मार्त्तपदार्थानुष्ठाने श्रुत्यर्थवैगुण्यापत्त्यनापा
हादिति परिहरति * श्रुत्यर्थेति * एतदेव विवृणोति * य
प्रकृतिमनुप्रवेश्यमानानि प्रयोगवचनेन निराक्रियन्ते तन्निर
च सामिधेनीसाप्तदश्यवद्विकृतिमनुप्रवेश्यमानानि प्राकृता
काङ्क्षत्वाच्चोदकेन न परिगृह्यन्तइत्यर्थः । यद्वा नात्र विरोधा
मात्रं विचार्यते किं तु सत्यपि विरोधे किमाचमनादीनां ध
बलीयस्त्वाद्बाधः प्रमाणदौर्बल्याद् बाध इति विरोधाधिकर
दार्थं विचार्यतइत्यन्यथा सन्देहभाष्यं व्याख्यातुमाह * अन्या
सन्देहः किं कर्त्तव्यान्युताकार्याणीत्येवं रूप इति शेषः । अ
क्षे सिद्धान्तवचनव्यक्तिप्रतिपादकमुताविरुद्धानि कार्याणि
ध्यमविरुद्धानि विरुद्धान्यपि वा धर्मितया बलीयस्त्वेनाबा
त्कार्याणीति द्विविधसिद्धान्तप्रतिपादकतया व्याख्येयम्
श्रौतैः क्रमकालपरिमाणैर्विरोधे ऽपि तदीयैः पदार्थैरविरुद्धत
र्याणीत्येकरूपसिद्धान्तप्रतिपादकतयेति । यद्यपि शाखान्तरा
णसमाम्नातावपि वा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां व्यवतिष्ठेते
त्रेण क्रमकालपरिमाणविरोधाच्छाखान्तरीयपदार्थानुपसंहा
ङ्क्य विरोधेनार्थसंयोगादैकधर्म्ये तत्संयोगाद्विधीनां सर्वप्रत्य
सूत्रेण पदार्थानां क्रमादिबाधकत्वं वक्ष्यते तथापि स्मार्त्तानां
र्थानां प्रमाणदौर्बल्याद् बाध्यत्वाशङ्का न विरुध्यते तत्रत्यस्यै
यबलाबलस्य प्रमाणबलाबलबाधायात्रोपन्यासात्तस्यापि नाने
रुक्त्वं शङ्कनीयम् । यद्यपि च पिकनेमाधिकरणे स्वरूपबला
श्रयबलाबलस्य बाध्यत्वं वक्ष्यते तथाप्यनादित्वेन लब्धात्म
त्समुदायप्रसिद्धेराश्रयदौर्बल्ये ऽपि क्लृप्तत्वेन स्वरूपबलीय
लब्धात्मकावयवप्रसिद्धिबाधकत्वे ऽपि प्रमाणदौर्बल्ये प्रमेय
लाभायोगादलब्धात्मकस्मर्तृप्रमेयबाधकत्वं युक्तमित्याशङ्कात्र
रुद्ध्यते । आश्रयदौर्बल्येन त्वात्मलाभायोगाशङ्का तत्र निरा

े विवेकः । प्रत्यक्षश्रुतिविरोधे तु स्मृतिमूलश्रुत्यननुमाने
र्तपदार्थानामात्मलाभायोगाद्विरोधे ऽपि श्रुत्यनुमानमङ्गीकृत्य
श्रुतमूलानिश्चयात्प्रत्यक्षश्रुत्यनुरोधवृत्तित्वप्रतिपादनपरतया ना-
ामेव बाध्यत्वं, न चाप्यत्यन्ततुल्यतेत्यनेन यत्पूर्वाधिकरणस्य
्यानं कृतं तदभिप्रायेण पूर्वाधिकरणोक्तस्य श्रुत्यनुरोधवृत्ति-
ापवादार्थमेतदधिकरणमिति योजयितुम् * अन्यदर्शनमित्युक्त-
ः एतदेव विवृणोति * तथा हीति * कथं धर्मिणां बलवत्ते-
क्षायां द्वादशाधिकरणन्यायमुदाहरति * वक्ष्यति हीति * यथा
ष्ट्या पशुना सोमेन वा यजेत सो ऽमावास्यायां पौर्णमास्यां
दक्षिणीयेष्ट्यादीनामङ्गानां प्रधानस्य च सोमस्य बहुदिनव्यव-
नोभयोः पर्वकालत्वसम्पादनाशक्तेः किं पर्वणि सोमो पर्वणि
। विपरीतं वेति सन्दिग्धे प्राथम्यात् दीक्षायाः पर्वकालत्वे प्राप्ते
नस्यादूगुण्यार्थत्वादङ्गानुष्ठानस्य प्रधानस्यैव पर्वकालतेति वक्ष्यते
ापि प्रधानस्याचमनादेर्यथाश्रुतस्यानुष्ठानक्रमादेस्तनुरोधेनान्य-
रणं प्रतीयतइत्यर्थः । सूत्रं च मुख्यं वा पूर्वचोदनाल्लोकवदिति-
धिकरणसूत्रात्प्राथम्यार्थं मुख्यशब्दं प्राधान्यार्थत्वेनानुषज्य वि-
षिद्धधर्मसमवाये भूयसां स्यात् स्वधर्मत्वमिति तत्पूर्वसूत्राच्च
र्मत्वशब्दं मुख्यशब्दान्वयाय भावप्रत्ययलोपेनानुषज्य प्रधानगु-
ाङ्गगुणेन सह विरोधे मुख्यं प्रधानं स्वधर्मकं कार्यं प्रधानार्थ-
ङ्गगुणस्येति योज्यं, नन्वस्तु क्रमपरिमाणयोर्द्धर्मरूपत्वाद्दौर्बल्यं
स्य स्वतन्त्रद्रव्यत्वेन धर्मिरूपत्वात्कथं दौर्बल्यमित्याशङ्क्याह
न चेति * अनुष्ठेयपदार्थावच्छेदकत्वेन कालस्यापि वि-
वात्स्वतन्त्रविधेयत्वस्य धर्मित्वेन विवक्षितस्याभावात्क्रमपरि-
वद्धर्मत्वनिश्चय इत्याशयः । नन्वस्तु प्रमाणाप्रमेयबलाबलयो-
म्वादः कथं त्वाचमनादीनामकर्त्तव्यत्वं कथं वा कार्यतेत्यपेक्षा-
ाह * तत्रेति * सिद्धान्तोपक्रमार्थत्वेन सूत्रं व्याख्यातुमिति
ति भाष्यं व्याचष्टे * किं युक्तमिति * द्वितीयविचारे ऽपि ११०
ान्तद्वैविध्ये क्रमादिविरोधे ऽपि वा पदार्थैः सहाविरोधाद्विरो-
ावाभिधानमविरुद्धम् । नन्वविरोधे ऽपि शीघ्रप्राप्तैः श्रौतैरे-
र्निराकाङ्क्षत्वेन मन्थराणां स्मार्त्तानामङ्गानां क्रत्वपूर्वैरग्रहणा-
ष्ठानं सिद्ध्यतीत्याशङ्क्य क्रत्वपूर्वाणामनिर्ज्ञातोपायपरिमाणतया
ाङ्गमात्रेण नैराकाङ्क्ष्याभावाल्लिङ्गादिगम्याङ्गवत्स्मृत्याचारप्रापि-
ानामपि ग्रहणमित्याह * यथैवेति * भावनाभिर्भाव्यैरपूर्वै-
षिकथम्भावेन प्रार्थिताः सन्तस्ते सर्वे ऽनारभ्यवादाधीतैः सह य-

थेऽङ्गभावेन गृह्यन्ते तथैव स्मृत्याचारार्पिता अपि गृः
यः । स्मृत्याचारार्पितानामवैदिकत्वेनापूर्वग्राह्यत्वाश
णार्थम् * साधनांशवदित्युक्तम् * यथाष्टकादयः साध
त्याचारार्पिता अप्यपूर्वैर्गृह्यन्ते तथेतिकर्त्तव्यतांशा अपीत्
देव विवृणोति * कथम्भावेति * उपसंहरति * तस्मा

न शास्त्रपरिमाणत्वादिति ॥ ६ ॥

पूर्वपक्षसूत्रमवतारणपूर्वकं व्याचष्टे * इतीति *
दिपदार्थः कर्त्तव्यो भवेदिति नञर्थव्याख्या । अभ्यधिक
ति शास्त्रपरिमाणत्वादित्यस्य विरोधोपपादनार्थत्वेन व्या
सत्यपि विरोधे प्रमेयबलाबलानुसारेणाचमनाद्यनुष्ठानं
त्याशङ्क्य प्रमाणाधीनत्वात्प्रमेयसिद्धेः प्रमाणबलाबलस्य त
लीयस्त्वाभिधानार्थं शास्त्रशब्दं व्याचष्टे * शास्त्रितमिति *
त्रकृता परिमाणशब्देनेयत्ताबाधापत्तेरुक्तत्वात् शास्त्रपरिच्छि
त्यादिक्रमकालबाधापत्त्यभिधानभाष्यमयुक्तमित्याशङ्क्य नेयत्
परिमाणशब्दः किं तु परिच्छेदश्चात्रैतत्क्रमका एवैतत्संख्याक
त्काला एवेति त्रिविधावधारणरूपान्तराचमनाद्यनुष्ठाने बाध
*शास्त्रेण हीति* आशुनिर्माणशब्देन प्रधानप्रत्यासत्तिः पूर्वा
तिक्रमः प्रयोगशैघ्र्यं चेति त्रिविधा कालावच्छिन्नतोक्ता ।
श्चात्र शास्त्रेण परिमाणं येषां पदार्थानामिति बहुव्रीहिरभिम
शास्त्रेण क्रमेयत्ता कालावगतिः । किं च तेषां बाधकमित्यपेक्षा
* द्वाभ्यामिति * प्रयोगविधिश्रुत्याङ्गप्रधानविशिष्टभावनावि
युगपदनुष्ठानाक्षेपादत्यन्तयौगपद्याशक्तेश्च प्रधानप्रत्यासत्ति
प्रयोगप्राशुभावलक्षणश्च कालोऽवगम्यते । पूर्वाह्णादिकालः
ह्णादिश्रुत्याङ्गान्तरविनियोजकैः श्रुतिलिङ्गादिभिः प्रचयशिष्ट
ख्यावगम्यते । क्रमनियामकैः श्रुत्यर्थादिभिः क्रमस्तेषां श्रौत
र्थेषु प्रविशन्तः स्मृत्याचारप्राप्ताः पदार्था बाधका इत्यर्थः । प्रयो
चनावगतस्य प्रधानप्रत्यासत्तिलक्षणस्य च शेषरूपप्रत्यासत्ति
णस्य च कालस्य पूर्वाह्णादिविनियोजकश्रुत्यवगतस्य च पूर्वाह्ण
कालस्य स्मृत्याचारप्राप्तपदार्थानुष्ठाने बाधापत्तिं विवृणोति *
हीति * अनेन च भाष्यकारीयस्य दक्षिणाचारप्रधानकालयोर्वि
रोधोपन्यासस्योपलक्षणार्थत्वं दर्शितम् । प्रयोगवचनावगम्यस्य
त्यासत्तिलक्षणस्य च कालस्योपपाद्यत्वेनाभ्यर्हितत्वात्पूर्वं तद्बा
प्रसङ्गापादकभाष्यव्याख्येति व्युत्क्रमदोषाभावः । क्रमबाधप्रस

ये प्रकृतोदाहरणविषयं श्रुतिग्रहणं क्रमप्रमाणमात्रोपलक्षणार्थे-
ग्रमनग्रहणं च प्रयोगमध्यपातियज्ञोपवीतकरणोपलक्षणार्थमिति
चष्टे * क्रमश्चेति * ननु वेदवेद्यन्तरालाचमनविध्यभावात्सर्वा-
च क्रियमाणस्य क्रमाविरोधाभावात्कथमन्यथात्वप्रतिपत्तिरित्या-
ग्र *क्षुतादिनिमित्तेत्युक्तम् * ननु क्षुतादिनिमित्ताचमनप्रस- १२
तावदाश्रयः क्रमो भविष्यतीत्याशङ्क्य * विज्ञातेत्युक्तम् * य-
श्रयणं प्रमाणानां च परिमाणमेतावत्त्वं विज्ञातं स तथोक्तः की-
माश्रयपरिमाणमित्यपेक्षिते यावन्तो वैदिकाः पदार्थास्तावन्त एवे-
*वैदिकेत्यनेनोक्तम् * प्रमाणपरिमाणं तु श्रुत्याद्यनुक्रमणेन ज्ञा-
वान्तराले यज्ञोपवीतस्य नैमित्तिकस्याप्यप्राप्तेः कथं क्रमान्यथा-
पादकत्वमित्याशङ्क्या * यासेत्युक्तम् * नन्वन्तराले स्मृत्या-
प्रमाणकपदार्थप्राप्त्यभावे वैदिकमात्राश्रयत्वे ऽपि तत्प्राप्तावधि-
श्रयत्वं भविष्यतीत्याशङ्क्याह * यो हीति * प्रमाणान्तरं तर्हि
पयिष्यते ऽत आह * उक्तेति * अङ्गपरिमाणप्रमाणस्येति पाठे
ञ्चुगतिपूजनयोरिति गत्यर्थादञ्चतेरकर्त्तरि च कारके संज्ञाया-
ते को भवता दायो दत्त इत्यादिषु संज्ञाव्यभिचार्यत्वाच्च कारक-
संज्ञायामपि कर्मणि घञमुत्पाद्य चजोः कुघिण्यतोरिति कुत्वेन
शब्दार्थे गमिति रूपानुसारेणावगतपरिमाणस्येत्यर्थः। नन्विय-
याः केन चिच्छास्त्रेणाविधानात्तद्बाधे ऽपि न शिष्टकोपापत्ति-
माशङ्क्य तस्या अपी शास्त्रीयतामाह * तथेति * किं कश्चित्पदा-
विस्मृतः कृतं वा सर्वमिति सन्देहस्यानुष्ठेयपदार्थसंख्यासम्प-
र्यालोचनं विना निराकर्त्तुमशक्यत्वात्प्रयोगवचनेनेयत्तावधार-
प्यर्थादाक्षिप्यते। अज्ञातस्य परिमाणस्यानुष्ठानकाले ऽवधारणा-
भवमाशङ्क्य श्रुत्याद्यवगतानां पदार्थानां प्रचयशिष्टमित्युक्तम्।
विस्मरणे ऽपि सकलवैदिकपदार्थानुष्ठाने कृते सम्पूर्णफलप्राप्ते-
कश्चिद्दोष इत्याशङ्क्याह * ततश्चेति * यतश्च पदार्थपरिमाणम-
ारणीयं ततश्च स्मार्त्तपदार्थानुष्ठानेन न्यूनफललाभप्रसङ्ग इत्यन्व-
। अपूर्वदौर्बल्येनेति न्यूनत्वकरणम्। अपूर्वदौर्बल्ये किं कार-
मित्यपेक्षायामनिवृत्ते वैगुण्याशङ्कस्येति हेतुगर्भं विशेषणं किं कृतं
वा नेति कृताकृतनिश्चयो वैगुण्याशङ्काकारणम्। कृताकृतनि-
कारणं पूर्वावधारणभ्रंशः। कथं तस्यानिश्चयकारणत्वमित्यपे-
ते सम्यक्कृतत्वदार्ढ्यनिमित्तसंस्कारपाटवाभावादित्युक्तम्।
म्यग्घ्यैतत्कृतमिति स्मृतिदार्ढ्यस्य यन्निमित्तं संस्कारपाटवं तस्या-

प्रचयशिष्टज्ञातमिति २ पु० पा०।

भावादित्यर्थः । अनुष्ठानात्पूर्वं ह्येतावन्तो ऽनुष्ठेया इत्यवधारि
धन्तो ऽनुष्ठेयास्तावतामनुष्ठानोत्तरकाले ऽनुष्ठितत्वावधारणात्त
तत्संस्कारपाटवेन सम्यक्कृतत्वस्मृतिदार्ढ्यात्कृताकृतसन्देहो
र्सेत नान्यथा । ननु स्वहेयत्तायाः पूर्वमवधारणात्कथं स्मार्त
र्धानुष्ठाने पूर्वावधारणभ्रंश इत्याशङ्क्य प्रथमेत्युक्तम् । प्रयोगव
श्रुत्याद्यवगतपदार्थमात्रपर्यवसायित्वेन स्मार्त्तेष्वव्यापारात्प्रथ
योगवचनव्यापारवेलायामियत्ताश्रयत्वेनापरिकल्पितस्य प
व्यापारपर्यवसानोत्तरकालं स्मृतिवशादागतस्य प्राप्तस्य पदा
नुष्ठानेन पूर्वस्य प्रयोगविधिव्यापारकालीनस्येयत्तावधारणस्य
दित्यर्थः । वैदिकस्य सुमेदेन होमादेर्नैमित्तिकस्यापि प्रयोग
व्यापारवेलायामेवानुष्ठेयत्वावधारणान्न तदनुष्ठाने पूर्वावधा
शापत्तिः वैगुण्याशङ्कायां चापूर्वातिशयहेतुश्रद्धाविरहादपूर्व
त्यमात्रं भवति न तु सर्वथानुपपत्तिः । तदुत्पादकसमस्ताङ्ग
नानुष्ठानस्य निष्पन्नत्वाच्छ्रद्धायाश्चापूर्वातिशयहेतुत्वं यदेव वि
करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीत्यतिशयवा
प्रत्यययुक्तया श्रुत्या ।

श्रद्धयेष्टं च पूर्त्तं च नित्यं कुर्यादतन्द्रितः ।
श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः ॥

इति स्मृत्या चाक्षयहेतुत्वं श्रद्धाया वदन्त्यार्थान्तरभावे
त्वप्रतिपादनादवसीयते । ननु किं चित्फललाभे ऽपि विधेरर्थव
शिष्टकोपापत्तिरित्याशङ्क्याह * तच्चेति * विधिसिद्धप्रवर्त्तना
यार्थेनार्थवादेन प्रवर्त्तनातिशयावसेयफलातिशयवसायात्तत्फ
र्वं समग्रमतिशयवच्चार्थवादसहिताद्विधेरवगतमिति कृत्वा
त्वासहिष्णुतया फलातिशयहेतुश्रद्धाविरहवैगुण्याशङ्कापादव
र्थान्तरविधायकत्वेन विरुद्धामाचमनादिस्मृतिं बाधतइत्यर्थः
त्ताविरोधएव सूत्रं योजयति * परिमितेति * अङ्गशास्त्राण
त्परिमाणं तदेवाङ्गजानामित्यर्थः । क्रमकालेयत्तासाधारणापू
व्यानापेक्षो वा शब्दः प्रयोगविधिप्रमितप्रधानप्रत्यासत्त्याक्षिप्तप्र
शैघ्र्यविरोधं प्रधानप्रत्यासत्तिविरोधाभिधानेनार्थादुक्तमपीदानीं
योगविधिना साक्षादपि प्रयोगशैघ्र्यावगमात्पदार्थान्तरानुष्ठा
विरोध इति प्रकारान्तरेणाह *संहेति* उपसंहरति *तस्मा

## अपि वा कारणाग्रहे प्रयुक्तानि प्रतीयेरन्निति ।

सूत्रमवधिद्वयेन पूर्वपक्षनिराकरणार्थतयावतारयति *

तइति* पूर्वपक्षोक्तविरोधाङ्गीकरणेन प्रमाणबलाबलात् प्रमेयब-
ालबलीयस्त्वमात्रेण सिद्धान्ते पूर्वा ऽवधिः पूर्वा समाप्तिः विरो-
नावसिद्धान्ते द्वितीयेति व्यवस्थार्थो वाशब्दः । ननु भाष्यकृता-
त्तरसूत्रावयवत्वेन पठितत्वात्कथमेतत्सूत्रशेषत्वमित्याशङ्क्याह
अनन्तरेति * विप्रतिपत्तिशब्दोपात्तस्य विरोधस्यैतदवगताया १२
ाावोक्तेर्विरुद्धत्वेनानन्तरसूत्रे ऽनुपयुज्यमानत्वाद्विरोधाभावसि-
न्तपक्षे चेह सूत्रे पूर्वपक्षसूत्रोक्तविरोधाभावस्यावश्यवचनीयत्वा-
यर्थः। ननूत्तरसूत्रे ऽपि यवादिशब्दानां साधारणत्वे प्रियङ्ग्वादि-
प्रकार्ये विकृतावनूहितयवादिशब्दप्रयोगाविरोधप्रतिपादनार्थत्वे-
ायोगो भविष्यतीत्याशङ्क्याह * उपयोगेति * सकृत्पठितस्यापि
ख्यानवेलायामुच्चारणानुकृतिरनुषङ्गः । सकृदुच्चरितस्यैवोभयशे-
या व्याख्याने तन्त्रत्वम् । आद्यावधिना विरोधे ऽपि प्रमेयबला-
बलीयस्त्वेन सिद्धान्तप्रतिपादनार्थमपि चेत्यादिभाष्यं व्याचष्टे
अपि चेति * प्रयुक्तानि प्रतीयेरन्निति सूत्रावयवस्य शिष्टैरनुष्ठि-
ाचमनादीनाद्रियेरन्नित्येवं व्याख्यानार्थं प्रमाणपदमुत्तरार्द्धेन
ख्यातम् । विरुद्धताशब्देन बाध्यतोक्ता । श्लोकं व्याचष्टे * वि-
ाति * प्रमाणबलाबलबलीयस्त्वाभिप्रायं नन्वित्यादिशङ्काभाष्यं
ाचष्टे * इयत्तेति * प्रमेयबलाबलबलीयस्त्वाभिप्रायं नैष दोष
। सिद्धान्तभाष्यं व्याचष्टे * पदार्थेति * पूर्वपक्षाभिप्रायं विवृ-
ते * उच्यतइति * श्लोकं व्याचष्टे * प्रमेयेति * नन्वापाततः
ायमानमपि प्रमेयबलाबलं प्रमाणाधीनत्वात्प्रमेयसिद्धेः पश्चादा-
च्यमानेन प्रमाणबलाबलेन बाधिष्यतइत्याशङ्क्याह * येषामिति* १२
श्रुतिविरोधिन्याः स्मृतेर्भ्रान्त्यादिमूलत्वेनाप्रामाण्यादाचमनादे-
प्रमेयत्वानुपपत्तेः कथं बलीयस्त्वमित्याशङ्क्याह * नित्यमेवे-
* विरोधे ऽपि श्रुत्यनुमानप्रतिबन्धाभावेन भ्रान्त्यादिमूलत्वायो-
द् बलवद्विरोधापेक्षमुपक्रमविरुद्धोपसंहारवत्तदनुरोधवृत्तित्वेना-
ाश्रुतत्वमात्रं स्मृतेरप्रामाण्यं, न चाचमनादिस्मृतेर्बलवद्विरोधो
त बलवत्प्रमेयावष्टम्भेन स्मृतेर्दौर्बल्याभावादित्याशयः । इममेवा-
प्रायं विवृणोति *न चेति* हिशब्दार्थे चशब्दः । ननु श्रुतिप्रमेय-
ादिबाधे श्रुतिबाधापत्तेः तस्याश्चाप्रमादपाठत्वेन बाधायोगादग-
स्मृतिरेव बाधनीया स्यादित्याशङ्क्याह *न चेति * अबाधे का-
ामाह * तावतेति * न हि प्रमेयबलीयस्त्वमात्रेण स्मृतिः ।
तें बाधितुं शक्नोति श्रुतिकल्पनव्याक्षेपेण गततेजस्त्वादित्यर्थः ।
ायबलीयस्त्वस्य तर्हि क उपयोग इत्यपेक्षायामाह * एतदेवेति *

प्रमेयबलीयस्त्वेन स्मृतेरबाध्यत्वमात्रं भवति न तु श्रुतिबाध
मित्यर्थः। द्वितीयावधिना विरोधाभावसिद्धान्तप्रतिपादना
चेत्यादिभाष्यं तात्पर्यतस्तावद्व्याचष्टे * युगपदिति * नन्व
त्प्राप्तानामपि श्रुतिलिङ्गादिविनियोज्यानां पदार्थानां विरोध
नान्न युगपत्प्राप्तिरेव विरोधे हेतुरित्याशङ्क्य तुल्यकार्ययोरित्यु
इह तु करणोपकारसाधनपदार्थप्रयोगावच्छेदकत्वेन क्रमादीः
दार्थगुणत्वाभिधानेनैव तुल्यकार्यत्वं निरस्तं, युगपत्प्राप्तिरप्यत्र
न सम्भवतीति द्वयमपि *नास्तीत्युक्तम्* ननु वैदिकपदार्थप्रा
रकालीनानामपि क्रमादीनामाचमनादिभिः स्मार्तैः पदार्थैः
यौगपद्याद्विरोधो भविष्यतीत्याशङ्क्याह * कालेति * प्रयोगा
यां क्रमाद्यपेक्षा स च सकलपदार्थप्राप्त्युत्तरकालभावीत्यार
इदानीमवयवशो भाष्यं व्याचिख्यासुः क्रमाविरोधनिरासभाष
वद्व्याचष्टे * प्राप्तेषु हीति * इयत्तावधारणस्याविहितत्वेनो
न्तरेणाविस्मरणसिद्धावनादरणीयत्वात्तद्बाधे वेदविरोधशङ्का
त्वाद्भाष्यकृतोपेक्षितेति स्वयंशब्देन सूचयत्स्वयमियत्ताविरो
रिहरति * परिमाणमिति * इयत्तायाः क्रमवत्पदार्थाश्रितत्व
नार्थस्तदनन्तरं विरोधपरिहारः। कालस्य तु स्वतन्त्रत्वात्पदार्थ
गावच्छेदकत्वमात्रेण पदार्थधर्मत्वाभिधानं श्लोकं व्याचष्टे
केन चिदिति * यदिशब्देन ध्यानाद्युपायान्तरसम्भवः स
१२३।४ तथेति कालविरोधपरिहारभाष्यं व्याचष्टे * कालोऽपि चे
ननु यद्यपि प्रधानसाहित्यं शैघ्र्यं च स्मार्त्तैः सह यादृशं सम
तादृशाङ्गीकरणादविरोधस्तथापि पूर्वाह्णादिकालातिक्रमो भूयि
नुष्ठाने दुर्वार एवेत्याशङ्क्याह * कालो हीति * प्रधानस्यैव
द्विहितः कालः स च प्रयोगाङ्गत्वात्प्रयोगस्य च साङ्गप्रधाना
त्वात् प्रधानद्वाराङ्गेषु प्राप्नोतीति प्रधानस्य स्वकालसम्पा
स्याङ्गेषु यथासम्भवं सम्पाद्यमानो न विरुध्यतइत्याशयः। सा
सम्पत्तिं विवृणोति * अङ्गैरिति * आशुत्वमपि सर्वाङ्गस
स्यैवेति तुल्यन्यायत्वादुक्तं भवति। उपसंहरति * तस्मादि
विरोधनिरासे तेष्विति सूत्रावयवं द्वेधा योजयति * इतीति
मादीनामाचमनाद्यनपेक्षत्वेऽप्याचमनादेः स्वतन्त्रपदार्थत
नाद्यवधायकत्वात्तद्विरोधाभावप्रतिपादनार्थमपि चेति भाष
चष्टे * अपि चेति * आचान्तेन कर्त्तव्यमित्यादिकर्त्तव्यमात्र
विधानात्सर्वस्याचमनादेरङ्गप्रधानार्थतेत्याशयः। न चाङ्गस्य
धायकत्वमस्त्यतुल्यकक्षत्वादित्याह * अतदङ्गेन हीति * 

ानमेव दर्शयति * वेदमिति * कृत्वेत्यनेन।

क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने।

कर्मस्थ एषु नाचामेद्दक्षिणं श्रवणं स्पृशेत्॥

इति स्मृतिपर्यालोचनया पदार्थमध्येऽनाचमनं सूचितं कथ-
चमने कृते वेदिः कृता भवतीत्याशङ्क्याह * वेदिरेवेति * नन्व-
प्रधानार्थस्याप्याचमनस्य हस्तावनेजनादिवत्सर्वादौ सकृत्कृतस्य
र्वोपकारकत्वात्कथमन्तरानाचमने वैगुण्यमित्याशङ्कानिरासार्थ-
न भाष्यगतं शौचशब्दं व्याख्यातुं शुद्धेत्युक्तं शुचिना कर्त्तव्यमि-
शुद्धेरपि कर्म्माङ्गत्वेन विधानात् क्षुताद्यापादिताशुद्ध्यनिवृत्तौ
गुण्यं स्यादिति भावः। नन्वल्पकालत्वेनाप्यव्यवधायकत्वोपपत्तेः
ानार्थत्वमात्रेण निराकाङ्क्षस्याङ्गार्थतापि किमित्यङ्गीकृतेत्याशङ्क्य
ल्पकालत्वमात्रेणाव्यवधायकत्वं भवतीत्यभिप्रायेण परिहरति
इममेवेति * तस्मादित्युपसंहारभाष्यमविरोधसिद्धान्ताभिप्रा-
ा व्याचष्टे * तस्मादिति * एवं यथाभाष्यमधिकरणं व्याख्या-
दाहरणानि प्रत्यक्षश्रुतिदर्शनेन दूषयति * नन्विहेति * आदि-
दो दर्शपूर्णमासविकृतिष्वस्य विधेरतिदेशतः प्राप्त्यर्थः। नन्वस्यो-
ीयवासोविन्यासविशेषविधानार्थत्वात् त्रिसूत्रनवतन्तुकत्रिवृद्ग्र-
यज्ञोपवीतविधायकत्वं नास्तीत्याशङ्क्य वाक्यान्तरं दर्शयति
तथेति * सर्वकर्मार्थत्वायानारभ्यविधित्वोपन्यासः। आचम- १२
ाधिं दर्शयति * तथेति * नन्वस्य ब्रह्मयज्ञप्रकरणपाठाद्दर्शपू-
ासादिष्वाचमनविधायकत्वं न सम्भवतीत्याशङ्क्याह * यद्य-
ते * ब्रह्मयज्ञे पूर्वगृहीतस्वाध्यायाध्ययनस्य कल्पसूत्राधिकरणे
ाभ्यासानुसन्धानं विध्यर्थश्चानुगम्यत इत्यत्र प्रयोगप्राशुभावोपयो-
र्मानुसन्धानप्रयोजनकत्वस्य वक्ष्यमाणत्वेन तदनुसन्धानस्य च
ावगतशक्त्यनुसारेणाध्ययनसंस्कृतैरक्षरैः क्रियमाणस्यादृष्टार्था-
नाद्यनपेक्षत्वादाचमनस्य नापूर्वलक्षणार्थं प्रकरणापेक्षास्तीति प्र-
णानादरेण वाक्यात्स्वाध्यायाध्ययनमात्राङ्गत्वप्रतीतेः। सर्वयज्ञेषु
मन्त्ररूपस्वाध्यायाध्ययनसद्भावात्तद्द्वारेणाचमनस्य सर्वयज्ञाङ्ग-
ावसीयते अध्ययनस्य त्वदृष्टार्थत्वेऽपि तत्संस्कार्याणामक्षराणां
अपेक्षितनियमाद् दृष्टोपयोगिवेदत्वसम्पत्त्यर्थक्रमस्वरविशेषवदा-
नाद्यपेक्षा न विरुध्यते यथैव प्रत्यक्षस्यापि यूपादेरदृष्टोपयोगिरूपं
णान्तरागोचरत्वात्तदर्थविहिततक्षणादिसकलसंस्कारसमुदाय-
त्वेनावसीयमानमेकसंस्कारवैकल्येऽपि नोत्पद्यते तथा वेदस्या-
ष्टोपयोगिरूपम्।

तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः ।

वेदः कृत्स्नो ऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥

इत्यादिवाक्यपर्यालोचनया तदर्थविहितसकलधर्म्मसम्पा
मवर्म्यते ऽतो ऽलौकिकरूपानभ्युपगमे च वेदवाक्यानामपि लौ
कत्वानपायाल्लौकिकवैदिकव्यपदेशभेदो निरालम्बनः स्यात् तस्म
दाचमनस्य वेदत्वसम्पादनार्थत्वाद्वाक्येन प्रकरणं बाधित्वा सर्वस्मि
न्वेदकार्ये प्राप्तिरिति श्रौतत्वाच्च स्मार्तोदाहरणत्वमिति भावः । त
वच्छब्देन च दर्शपूर्णमासप्रकरणे पठितः स वै व्रतमुपैष्यन्नन्तरा
वनीयं च गार्हपत्यं चोपविश्याप आचामतीत्याचमनविधिः क्रत्व
ङ्गाचमनविधानार्थः सूचितः । नन्वस्तु नामेदं सर्वयज्ञाङ्गमाद्यम
चमनं प्रयोगान्तःपाति तु नैमित्तिकमिह क्रमविरोधित्वेनोदाहर्त्तव्
तच्च प्रत्यक्षश्रुतिविहितं नास्तीत्याशङ्क्य प्रयोगान्तःपातिनैमित्ति
काचमनप्रापकं लिङ्गं दर्शयति * तथा चेति * दक्षिणाचारत्वप्र
पकस्यापि वैदिकस्य लिङ्गस्य दर्शनात्तदपि नेहोदाहर्त्तव्यमित्या
* दक्षिणेति * साक्षाद्विधिना यत्र विषये सव्यस्याञ्जलेर्वा चोद
तस्मादेव विषयाद्दक्षिणाचारत्वं निवर्त्तेत अन्यत्र तु विषये तद्दक्षि
णाचारत्वस्य निवर्त्तनं नाशङ्क्यते ऽपीत्यर्थः किमिति नाशङ्क्यते इत
पेक्षिते मनसि कृतं लिङ्गमुद्भावयति * यथा वा इति * प्रागुदक्
वणं देवयजनं प्रत्यक् दक्षिणाप्रवणं श्मशानकरणं यथा वै दक्षिण
पाणिरेवं देवयजनं यथा वै सव्यस्तथा श्मशानकरणमिति देवयज
स्य यज्ञभूमेः प्रागुदक्प्रवणत्वं विहितमौचित्येन सोऽतु दक्षिणः पाणि
रुपमानं कृतं तदेव यजनवद्दक्षिणस्य पाणेर्यज्ञाङ्गत्वे सत्यवकल्प
नान्यथेत्यर्थः । नन्वनारभ्य विहितस्यापि यज्ञोपवीतस्यायज्ञरूपे
दर्विहोमादिषु प्राप्तस्तेष्वपि वा कथं चिद्यज्ञत्वेन मन्त्रोच्चारणवत्त्वे
वा प्राप्तिसम्भवे ऽप्यानुषङ्गिकप्रयोगप्राशुभावोपयोगिकर्मानुसन्धान
प्रयोजनत्वे ऽपि ब्रह्मयज्ञस्याहरहःस्वाध्यायमधीयीतेति नित्यत्वश्रुते
रकरणे च प्रायश्चित्तस्मरणाददृष्टार्थत्वावधारणेनादृष्टार्थोपायापे
क्षित्वात्तत्प्रकरणपठितस्याचमनस्यान्यत्राप्राप्ते वाक्येन कथं चित्प्रा
भावपि प्रयोगारम्भे कृतस्य तत्प्रयोगान्तवर्त्तिसमस्तमन्त्रोच्चारणोप
कारकत्वेन प्रतिमन्त्रमनावृत्तेरन्तराले प्राप्त्यभावेन क्रमादिविरोधि
त्वाच्च सोमेनोच्छिष्टा भवन्तीत्यस्य च स्मृतिप्राप्ताचमनप्रतिषेधार्थ
त्वेनाप्युपपत्तेर्यथा वै दक्षिणः पाणिरित्यस्य च यज्ञाङ्गभूतदक्षिणह
स्तविध्याक्षेपकत्वे यथासव्यस्तथाश्मशानकरणमित्यस्यापि प्रेतकर्मा
ङ्गभूतसव्यहस्तविध्याक्षेपकत्वापत्तेराचारविरोधप्रसङ्गात्स्मृत्याचार

दक्षिणहस्तोपमार्थत्वोपपत्तेर्विध्याक्षेपकत्वाभावात् क्रमादिवि-
प्रत्यक्षाचमनादिविध्यभावान्नोदाहरणदूषणं युक्तमित्याशङ्क्याह
तेनेति * क्रमादेः प्रयोगाङ्गत्वात्प्रयोगस्य चाचारपर्यन्तप्रमाणप्रा-
पदार्थविषयत्वात्सकलपदार्थप्राप्त्युत्तरकालभावित्वेन विरोध-
पक्षायोगात्स्मृतेश्च यथाश्रुतमूलानिश्चये प्रामाण्याभावेनाचमना-
त्प्रमेयत्वायोगान्निश्चये वा प्रमाणदौर्बल्यानुपपत्तेः प्रमेयबलाब-
प्रमाणबलाबलबाधसिद्धान्तायोगादनुदाहरणतेत्याशयः। नन्वे-
र्ह्यग्रवन्ति प्रागग्राण्युदगग्राणि वापवर्गवन्ति प्रागपवर्गाण्युदग-
र्गाणि वेत्याद्युदाहरणं भविष्यतीत्याशङ्क्य तत्राप्युक्तदोषसाम्याद्
बेधस्यापि विचारस्यानुपपत्तेरधिकरणान्तरमेवेदं न भवतीत्याह
स्मादिति * का तर्हि सूत्राणां गतिरित्यपेक्षायामाह * सूत्राणि
ति * बाह्यस्मृतिविषयस्य विरोधाधिकरणस्याक्षेपपरिहारार्थं सू-
यं तृतीयं तु स्मृत्यधिकरणोक्ताचारप्रामाण्याक्षेपपरिहारार्थमि-
विवेकः। आद्यं सूत्रं विरोधाधिकरणाक्षेपे योजयति यत्तर्हीति
द्वितीयं परिहारे पठित्वा योजयति * परिमितान्येव हीति * १२

पुराणन्यायमीमांसाधर्म्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्दश॥

इति स्मृत्यैव चतुर्दशानां धर्म्मप्रमाणत्वमुपपादितं च स्मृ-
प्रकरणे अथ।

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव तु॥

इति स्मृत्या पूर्वैः सह संख्यानेनायुर्वेदादीनामपि क्रत्वर्था-
वेक्षणादिसिद्ध्यर्थचिकित्सादिग्विजयार्थं शास्त्रविद्यागानौपयिक-
ादिद्रव्यार्जनोपयोगिनीति द्वारेण धर्म्मप्रमाणत्वं तथापि बौ-
देग्रन्थानां तन्मध्यपाताभावान्न धर्म्मप्रामाण्यमित्यर्थः। आयुर्वे-
नुर्वेदगन्धर्ववेदास्त्रय उपवेदाः मीमांसान्यायविस्तरौ द्वे तूपाङ्गे
ारणीविशेषविषया च द्विविधा शिक्षा तत्र साधारण्याद्वेदाङ्ग-
धर्म्मप्रामाण्ये ऽपि कात्यायनादिप्रणीताया विशेषविषयायाः प्र-
क्यं प्रतिपदं चोच्चारणं नियच्छन्त्या धर्मप्रमाणत्वाभावशङ्का-
करणार्थं पृथगुपादाने ऽपि शिक्षात्वेनैक्यान्नातिरेकापत्तिः।
नीतिरर्थशास्त्रम्। ननु परिमिते विद्यास्थानबाह्यत्वे ऽपि तत्सं-
नां बौद्धादिग्रन्थानां कस्मान्न धर्म्मप्रामाण्यमित्याशङ्क्याध्ययन-
वशाद्वेदादेवावगम्यानुष्ठितं कर्म्म श्रेयः साधयतीति नियमप्रती-
द्धादिग्रन्थादवगम्यानुष्ठितस्यापि वेदार्थस्य श्रेयःसाधनत्वाभा-

वाच्छेदादिपूर्वशास्त्रार्थस्य गोचरस्य बुद्धादिकृतस्य वाक्यस्य
प्रामाण्यं नास्तीत्याह * प्रतीति * एतदेव व्यवहारेण द्रढय
तथा चेति * नन्वेवं सति मन्वादिग्रन्थानामप्यप्रामाण्यं स्या
शङ्कयाह * वेदेनैवेति * मन्वादीनां धर्मप्रवक्तृत्वस्य वेदानुज्ञ
र्यति * तथा चेति * नन्वनादेर्वेदस्यादिमन्मन्वादिपुरुषविशे
धायित्वायोगाच्छ्रुतिसामान्यमात्रेण मन्यते ज्ञायते तेनेति व्यु
मनुशब्देन वेदाभिधानात्तानेन वाक्यशेषेण मनोः प्रवक्तृता
यतइत्याशङ्कयाह * न चैतदिति * ननु मनोः प्रवाहनित्यत्वे
तत्स्मृतेरनित्यत्वान्न वेदेन प्रामाण्यानुज्ञानं सम्भवतीत्याशङ्कय
प्रतीति * ननु कल्पान्तरे मनूनामभावात्तद्वाक्यप्रामाण्यपरत्वे
दस्यानित्यत्वं स्यादित्याशङ्कयाह * स्थिताश्चेति * दृष्टान्तं वि
ति * प्रतियज्ञमिति * मन्वादेः प्रवाहनित्यता कथमवगम्यतइ
१८।१ क्षिते मनुवचनमुदाहरति * उक्तं चेति * दृष्टान्तान्तरमाह *
हार्मेति * उपसंहरति * तेनेति * कथं पुनर्वेदातिरिक्ताना
तन्मूलानां ग्रन्थानां धर्मप्रमाङ्गत्वमतन्मूलानां च तत्संवादिनाम
नङ्गत्वमित्यवगम्यतइत्यपेक्षायामुभयद्योतकं लिङ्गं दर्शयति *
चेति * वेदमूलानां धर्मप्रमाङ्गत्वद्योतकत्वमस्योपपादयति * अ
था हीति * बाह्यानां धर्मप्रमानङ्गत्वद्योतकमुपपादयति *
चेति * वेदमूलग्रन्थनिबन्धनानां धर्मप्रामाण्यं न बाह्याना
यदि नाश्रीयते तथा सति बाह्यानां विज्ञातप्रत्यक्षातिमूलत्वान्नैवा
ज्ञातमूलं किंचिदित्यर्थः । अतः साक्षात्परम्परया वा वेदाद
म्यानुष्ठितोऽर्थः श्रेयःसाधनमिति शास्त्रार्थावधारणाद्वेदार्थस्य
बाह्यस्मृत्यवगतस्य श्रेयःसाधनत्वं नास्तीत्यप्रामाण्याभिधानाभि
प्रकटयति * तस्मादिति * एतदेव दृष्टान्तद्वारेण विवृणोति
यथैवेति* अतिक्रान्तं वेदोक्तं यथा मर्यादया तया व्यवहारिणामि
विग्रहः धर्मविप्लावकत्वाच्च शाक्यादीनामश्रद्धेयवचनत्वमित्य
।१ * स्मर्यते चेति * ननु विसंवादिशाक्यादिवाक्यानामग्राह्यत्वे
संवादिनामहिंसादिवाक्यानां ग्राह्यत्वं भविष्यतीत्याशङ्कयाह * य
ति * परपीडात्मकात्कर्मणस्तदनुरूपमात्मनः पीडात्मकं फलम्भ
तीति कर्मानुरूप्योपमानं वैदिक्यपि हिंसा लौकिकीवदधर्मं
सामान्यतो दृष्टदुःखोपभोगस्य पापफलत्वान्नादुःखोपभोगात
पक्षयो भवतीत्यर्थापत्तिः तद्बलाच्छाक्याद्यभिप्रायकल्पितानां
मीमांसानां मध्ये पतितमित्यर्थः। संवादोत्तरकाले तर्हि ग्रहीष्यतइत्या
शङ्कयाह * यदेति * सिद्धान्तमुपसंहरति *तस्मादिति * तृती

सूत्रं स्मृत्यधिकरणोक्ताचारप्रामाण्याक्षेपपरिहारे योजयितुमुपक्रमते * यत्त्वेतदिति * धर्मजिज्ञासाधिकारे ऽप्यर्थकामाचाराणामपि दृष्टप्रमाणमूलत्वेन प्रसङ्गान्प्रामाण्यसिद्धिमभिप्रेत्य त्रिवर्गग्रहणं स्मृतिन्यायसिद्धस्याचारप्रामाण्यस्याक्षेपानुपपत्तिमाशङ्क्य तत्समर्थनार्थं सन्देहहेतुप्रदर्शनपूर्वकं पूर्वपक्षमाह * तद्विपरीतेति * त्रिवर्गविपरीतैरधर्मानर्थदुःखसाधनैरात्महननादिभिराचारैः सङ्कीर्णो व्यवहारो येषामिति विग्रहः वैद्यश्चासावातुरश्चेति कर्मधारयं कृत्वा पूर्वपदेन कर्मधारयः कार्यः अत्यन्तविलक्षणानन्ताचारमूलभूतैकश्रुत्ययोगात्प्रत्याचारं च मूलकल्पने ऽनन्तश्रुतिकल्पनापत्तेर्नाचारमूलश्रुतिकल्पनं सम्भवतीति वक्ष्यमाणप्रकारेणाचाराणां श्रुतिकल्पकत्वासम्भवमभिप्रेत्याशब्दत्वोक्तिः विरोधं दर्शयति * सदाचारेषु हीति * लोभाद्यभिभवात्सन्निहितानर्थादर्शनेनाधर्माचरणं धर्मव्यतिक्रमः। दृष्टस्याप्यनर्थस्य बलदर्पेणानादरादधर्माचरणं साहसं वहता व्यतिक्रमं साहसं च यथासम्भवं दर्शयति * प्रजापतेस्तावदिति * इन्द्रस्यापि गौतमभार्यागमनेनागम्यागमनरूपादधर्माचरणाद्धर्मव्यतिक्रम इत्यनुषङ्गेण योज्यम्। इन्द्रे ब्रह्महत्याभयादपक्रान्ते नहुषः स्ववीर्येणेन्द्रपदमधिष्ठाय तद्भार्यां शचीमभिगन्तुं यत्नं चकार वसिष्ठपुत्रे शक्तौ राक्षसैर्भक्षिते तच्छोकान्मर्त्तुकामो जलं प्रवेष्टुमारेभे विश्वामित्रः क्षत्रियमपि त्रिशङ्कुं ब्राह्मणकन्याहरणकुपितस्य पितुः शापाच्चाण्डालत्वमापन्नं याजयामास। उर्वशीवियोगशोकात्पुरुरवा मर्त्तुमियेष विचित्रवीर्ये ऽनपत्यएव मृते तद्भार्यायामम्बिकायां धृतराष्ट्रमम्बालिकायां पाण्डुमम्बिकाप्रेषितायां दास्यां विदुरं कृष्णद्वैपायनो जनयामास विधवानियोगो ऽपि ब्रह्मचारिणो ऽनुचित इति गृहीतेत्यनेन सूचितं, नियोगविधेरप्येकापत्यविषयत्वादनेकोत्पादनानौचित्यं प्रसङ्गशब्देन सूचितम्। भीष्मस्यानाश्रमित्वमपत्नीकस्य च स एष भीष्मः कुरुवंशकेतुर्येनाहुतास्त्रिशतो वाजिमेधाः क्रतुप्रयोग इति धर्मव्यतिक्रमद्वयम्, रामवदित्यनेन तस्यापि पत्नीत्यागेनैकाकिनः क्रतुप्रयोगाद्धर्मव्यतिक्रमः सूचितः धृतराष्ट्रस्यान्धत्वेनानधिकृतस्य यागकरणाद्धर्मव्यतिक्रमः। अन्धस्य निरंशत्वेन धनाभावाद्यागासम्भवमाशङ्क्य।

तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः।
अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः॥

इति दर्शनात्पाण्डुवर्जितैर्धनैरित्युक्तम्। सुहृदश्चापि धर्मात्मा धनेन समतर्पयदिति च पाण्डुना धृतराष्ट्रादिभ्यः स्वार्जितधन

। व्याख्येयम् । का तर्ह्युभयप्रामाण्यस्मृतेर्गतिरित्याशङ्क्याह * त-
श्चेति * श्रुतिस्मृतिसम्वाद्याचारात्मतुष्टिविषया स्मृतिरित्याशयः ।
न चाचारमूलमूला श्रुतिर्मन्वादिभिर्दृष्टा न वा तत्र तैरदर्शनैर्धारणे-
नां दर्शनस्यासम्भवनीयत्वान्निर्मूलत्वापत्तेराचारप्रमाणस्मृतेर-
प्रपरतैवाङ्गीकार्येत्याह * स्वयमिति * श्रुत्यभावे च स्मृतिपार-
म्पर्याच्छ्रिष्टानां तदाचारप्रामाण्याभिधानं स्मृतिकाराणां न शोभ-
इत्याह * स्मृतीति * आचारमूलश्रुतिदर्शनं तु मन्वादेर्न कल्प-
यितुं शक्यं तदर्थानिबन्धनादित्याह * न चेति * यदि ह्याचारमू-
लभूता श्रुतिर्मन्वादिभिर्दृष्टा स्यात्ततः परोक्षापि स्वरूपेणासमर्पिता-
युपनयनादिश्रुतिवदर्थद्वारेण स्मर्येत तदर्थो निनिबध्येतेत्यर्थः । पू-
पक्षमुपसंहरति * तस्मादिति * सिद्धान्ते सूत्रं पठित्वा योज-
ति * इति प्राप्तइति * दृष्टं फलमनुष्ठानकारणत्वेनाचारसृभि-
श्रितं येषु कर्मसु तानि दृष्टकारणहीनानि धर्मबुद्ध्या यानि क्रियन्ते
त्यर्थः विशेषणस्य व्यावर्त्यमाह * शरीरेति * अस्मिन्सूत्रे हेत्व- १
भिधानात्स्मृत्यधिकरणसिद्धान्तसूत्रोक्तं हेतुं योजयितुमाह * ध-
त्वेनेति * तान्युदाहरति * प्रदानानीति * शक्रध्वजमहः श-
ध्वजोत्सवः महेति पाठे शक्रध्वजे महायात्रेति सप्तमीसमासः दे-
तायतनेष्वित्यत्र महायात्रेत्यनुषङ्गः । सर्ववर्णसाधारण्यार्थे * स-
र्वेषामित्युक्तम् * उदाहरणान्तराण्यपि दर्शयत्कारणाग्रह-
मुपपादयति * प्रदीपेति * प्रदीपानां कार्त्तिकशुक्ल-
प्रतिपदि दानं मोदकादिभिश्चतुर्भिर्द्रव्यैः तत्साध्यानि दानभक्षणादी-
ने लक्ष्यन्ते । माघसप्तमीपौर्णमासीभ्यां तत्कालानुष्ठेयं कर्म लक्ष्य-
ते । फाल्गुनीपौर्णमास्यनन्तरायां प्रतिपदि वसन्तनिमित्त उत्सवः ।
स्मृतितो ऽपि सदाचारप्रामाण्यमवसीयतइत्यतिप्रसङ्गदोषाभावं व-
क्ष्यमाणमभिप्रेत्याह * स्मृतिकाराश्चेति * सर्वाचारसाधारण्यप्रद-
र्शनार्थः सामान्यशब्दः उत्सवात्मकस्याचारस्य चोक्तं स्मृत्यन्तर-
मुदाहरति * तथेति * वैदिकमप्युत्सवलिङ्गमुदाहरति * वेदे ऽपि
चेति * सिद्धान्तमुपपाद्य धर्मस्य शब्दमूलत्वादिति पूर्वपक्षहेतुं सा-
भिप्रायविवरणमनुभाष्य निराकरोति * यत्त्विति * इहाचारेष्वन-
न्तेषु परिमितशास्त्रमूलत्वासम्भवादशब्दत्वेनानपेक्षत्वं यदुक्तं तद् ।

भ्रान्तेरनुभवाच्चापि पुंवाक्याद्विप्रलम्भनात् ।
दृष्टानुगुण्यसाध्यत्वाच्चोदनैव लघीयसी ॥

इति पूर्वोक्तेन प्रकारेण वेदमूलत्वानुमानात्प्रत्याख्येयमि-
त्यर्थः । आचारप्रामाण्यप्रतिपादिकायाश्च स्मृतेर्निर्मूलत्वयोगा-

द्याचारमूलश्रुतिकल्पनमवश्यं भावीत्याह * न चे
चारमूलभूतानां श्रुतीनामानन्त्यात्पठितुमशक्तेरप
न्यायोगान्निर्मूलत्वमपरिहार्यमित्याशङ्क्याह * विस
न्तानां संक्षेपवचनमूलत्वमित्याशङ्क्याह * शङ्क्यं
न्यनुरूपाश्रुतिः कल्प्या कल्प्यमाना साध्वाचर
र्थत्वप्रतिपादिका कल्प्येत तत्र शास्त्रव्यापार
शास्त्रानर्थक्यमसिद्धौ वा शास्त्रादाचरणं समुपल
प्रवृत्तिरितीतरेतराश्रयं स्यादित्याशङ्क्याह * तथ
१।३।२ विवृणोति * न हीति * ननु व्यापाररूपत्वात्प्रद
नत् स्वरूपेणापि शास्त्रगम्येन भवितव्यमित्याशङ्
त्यपि चेति * पूर्वसिद्धत्वादेव च नेतरेतराश्र
इति * ननु यदि शास्त्रप्रवृत्तिमनुपलभ्यैव शिष्टप्रवृ
नानुष्ठितप्रदानादेर्भोजनादिवत्फलसाधनत्वसिद्धेः
परिहृतं स्यादित्याशङ्कानिराकरणार्थम् * क्वाचि
शिष्टप्रवृत्त्युत्तरकालं तर्हि शास्त्रस्य प्रवृत्तेरादिमत्
* सर्वकालं त्वित्युक्तम् * ननु शिष्टाचारस्यापि
शादिषु विगानदर्शनात्कथमुपलक्षणत्वमित्याशङ्क्या

यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते

इति मनुना सदाचारशब्दार्थस्य निर्णीतत्वाद्वि
तन्मात्र श्रुतिरपि विशिष्टविषयैव कल्प्येत्याह *
सरस्वत्या विनशनं तिरोभावः । सारस्वतसत्रारम्
नस्या यत्र प्लक्षात्प्रस्रवणं सारस्वतसत्रोत्थानदेश
चारस्वरूपावधारणे यत्पूर्वमितरेतराश्रयत्वमुक्तं त
न्यस्योपलक्षणत्वे योजयन्परिहारायानुभाषते * न
शति * श्लोकं विवृणोति * प्रत्यक्षेति * ननु साक्ष
निबन्धनस्यापि शिष्टत्वस्य वेदाधीनत्वाद्वैदिके विधौ
रोपलक्षणत्वं सम्भवतीत्याशङ्क्य वैदिकत्वाभेदो ऽ
न्द्राश्चात्माश्रयापत्तिरिति दृष्टान्तेनोपपादयति * तत्
ध्ययनविध्याक्षिप्तत्वाद्वेदाङ्गमीमांसाव्याकरणादि
नयोरध्यापनविधिविहितत्वाच्चाध्यापनस्य शुश्रुवाति
वैदिकौ वेदविहितश्रवणज्ञानप्रवचननिमित्तत्वाद्वेदा
एवं विद्वान्स्वाध्यायमधीयीत तत्र यो वै गतश्रियः
मणी राजन्य इति गतश्रियं लक्षयित्वा गतश्रीरज

त्कामं यो ऽनूचानः श्रोत्रियः स्यात्तस्य प्रवृञ्ज्यादिति वेदविहितेष्व-
ध्ययनादिषु तेनैव तल्लक्षितस्तेन शुश्रूषुत्वादिना कृत्वा लक्षित
इति तथापि शब्दार्थे पुनः शब्दमङ्गीकृत्य व्याख्येयम् । नन्वेवमपि
वेदप्रवृत्तौ सत्यां साक्षाद्विहितकारित्वलक्षणं शिष्टत्वं तस्मिंश्च सति
शिष्टप्रयोज्यत्वोपलक्षिताचारप्रामाण्यप्रतिपादकवेदप्रवृत्तिरितीतरे-
तराश्रयं स्यादित्याशङ्क्याह * तेनेति * यत्तु स्वयमज्ञातमूलाश्चेत्या-
दिना मन्वादिभिराचारमूलश्रुत्यदर्शने ऽन्येषां दर्शनस्य दूरोत्सारित-
त्वादभाव एव प्रसज्येत दर्शने चोपनयनादिश्रुत्यर्थवदाचारमूलश्रु-
त्यर्थो ऽपि निबन्धनीयः स्यादित्युक्तं तन्मन्वादीनामपि सर्वशाखा-
ध्यायित्वनियमाभावात्तद्दर्शनमात्रेणाभावकल्पनानुपपत्तेर्दर्शने ऽपि-
च सदाचारः प्रमाणमिति सामान्याभ्यनुज्ञानमात्रेण सिद्धेर्ग्रन्थगौर-
वभयाद्विशेषरूपेणानिबन्धनोपपत्तेर्भविष्योत्तरादौ च होलाकाद्या-
चाराणां निबद्धत्वात्परिहृतमित्याह * स्मृतिरपीति * वेदविहित-
कारिणां धर्मबुद्ध्याचरणस्य वेदमूलत्वं विनानुपपत्तेराचाराद्वेद-
मनुमायापि स्मर्तृप्रणयनमुपपन्नमित्यभिप्रेत्या * चारमित्युक्तम् *
ननु विस्तरवचनानामपीत्यनेन प्रत्येकमाचारमूलश्रुतिकल्पनमुक्तं
किमुत संक्षेपवचनस्येत्यनेन स्मृत्यनुरूपसामान्यश्रुतिकल्पनं तत्को
ऽनयोः पक्षयोः सम्मत इत्यपेक्षायामुभयथापि दोषाभावप्रतिपाद-
नार्थं पक्षद्वयोपन्यासः । परमार्थतस्त्वश्रीरातनूर्भवति रुशती
पापयामुया पतिर्यद्वध्वो वाससा स्वमङ्गमभिधित्सत इत्याद्यानां
श्रीवासोपरिधानाद्याचारमूलभूतानां बह्वीनां श्रुतीनां दर्शनात्प्र-
त्येकश्रुतिकल्पनपक्ष एव ज्यायानिति सूचयितुमाह * इत्यदोष
इति * हेतुदर्शनमनुभाष्य परिहरति * यत्त्विति * एतदेव विवृणो-
ति * वेदे ऽपि हीति * ननु दृष्टार्थत्वसम्भवे ऽपि वेदमूलत्वक- १
ल्पने धर्माचारस्यार्थकामाचाराभ्यां विवेको न स्यादित्याशङ्क्याह
* यानि त्विति * ननु म्लेच्छादिसाधारण्यात्कृष्यादेर्धर्मत्वानभ्यु-
पगमे देवपूजादेरपि धर्मत्वाभावापत्तेर्दानन्दयादमः क्षान्तिः सर्वेषां
धर्मलक्षणमित्यादिस्मृतिविरोधः स्यादित्याशङ्क्याह * किं त्विति *
ननु सर्वसाधारणस्य कथमसाधारण्येन शिष्टाचारगतत्वमुच्यत इ-
त्याशङ्क्य शूद्रादिभिरपि शिष्टत्वायैव धर्मबुद्ध्याचरणादसाधारण्य-
सिद्धिरिति परिहरति * लोके हीति * अतो ऽस्ति विवेक इत्युप-
संहरति * तत्रेति * यत्त्वात्मतुष्टेरपि प्रामाण्यापत्तेर्न स्मृतेराचा-
रप्रामाण्यप्रतिपादनपरतेत्युक्तं तदात्मतुष्टेरपि प्रामाण्योपपादनेन दू-
षयति * एतेनेति * वेदविहितकार्याचारस्य वेदमूलत्वं विनानु-

धपरैर्वेदमूलतयाचारप्रामाण्यप्रतिपादनेन वेद
स्कृतान्तःकरणानामात्मतुष्टेरपि वेदमूलत्वं हि
ध्यधर्मनिर्णयार्थत्वेन प्रामाण्यं वेदएव प्रसिद्धमि
निर्णयो ऽभिहितः । श्लोकं विवृणोति * तथैः
नस्याव्यवस्थितत्वनिराकरणार्थं तथैवेत्युक्तम् ।
भित्याभित्योच्यतइति वेदवाक्यगतार्षशब्दस्य ।
सम्भवतीत्युक्तम् । एतदेव दृष्टान्तेनोपपादयति *
न्दिग्धार्थनिर्णायकत्वमात्मतुष्टेर्द्रढयितुमभियुक्त
चेति * प्रसिद्ध्युपपादनायविद्वद्ध * वचनानि
दर्शयितुं कालिदासवाक्यमुदाहरति * सतां
शकुन्तलेयं मम परिणेतुमुचिता न वेति सन्दिह्य
हक्षमा यदार्यमस्यामभिलाषि मे मन इत्यात्मतु
कथमात्मतुष्टिमात्रेण निश्चय इत्याशङ्क्य सतां हि
वाक्यस्याभिप्रायमाह * बहुदिनेति *एवं तावच्छि
मार्गानुसारित्वात्स्मृत्याचारवद्धर्मप्रतिज्ञापकहेतु
त्मतुष्ट्या स्वविषयस्य कस्य चित्कृत्याद्यविरु
साधनशक्तिरूपं धर्मत्वमुत्पाद्यत इति कारकहेतत्व
वचनादेवेत्यात्मनस्तुष्टिरेवेत्यत्रानुषज्यमानस्य धर्म
त्पादकत्ववाचित्वमभिप्रेत्योक्तम् * धर्मेति * आ
चारात्मतुष्ट्यादिधर्ममिति तस्मै हितमित्युपकारार्थे
द्धर्मोपकारिता धर्महेतुतेत्यर्थः । स्वभावभिन्नाना
देकशक्त्याविर्भावः सम्भवतीति दृष्टान्तेनोपपादितं
देवदत्तादीनामेकपुण्यक्रियायोगाद्ध्यायमानानां श्रे
था भिन्नानामपि कर्मणामेकाशयात्मतुष्टियोगात्
त्यर्थः । तस्माच्छब्देन पुण्यकृद्ध्यानस्याश्रयः साधन
ध्यात्वा पुण्यकृतोऽध्यापयेति वचनं परामृष्टम् । आ
हारमतिदिशति * आचारेष्वपीति * आचारश्चैव
पि श्रुतिस्मृत्यविरुद्धं यत् किं चिच्छिष्टैः क्रियते
नमित्युच्यतइत्यर्थः । अत्रैव दृष्टान्तान्तरमाह *
भिन्नानामपि मन्त्राणामुच्चारयितृयोगादोषधीनां
द्रुवां पुण्यकृद्योगादेकशक्त्याविर्भावो यथेत्यर्थः
योजयन्नुपसंहरति * तथेति * धर्मव्यतिक्रममनुभा
यस्त्विति * प्रजापतौ तावच्छ्रुतिसामान्यं विवृणोति

१ तदिति २ पु० ना०

ावदिति * इन्द्रे विवृणोति * एवमिति * नहुषे श्रुतिसा- १
न्यमात्राद्धेति वाशब्दसूचितं सदाचारत्वाभावं विवृणोति * न-
ण पुनरिति * सदाचारस्य प्रमाणत्वेनाभ्युपगतस्य व्यभिचा-
परिहर्त्तव्यः नहुषाचारस्य त्वनन्तरमेवाजगरत्वप्राप्त्या सदाचा-
वाभावनिश्चयाद्व्यतिक्रमे ऽपि धर्मबुद्ध्या क्रियमाणस्याचारस्य
ातिक्रमाभावान्न दोष इत्याशयः। परदाराभियोगोक्त्याभियुज्यमा-
यां शच्यामपि शङ्कितं व्यतिक्रमं निराकर्त्तुमाह * शच्याश्चेति *
शिष्टाचारस्यापि पुत्रशोकजनितव्यामोहनिमित्तत्वाख्यानाद्धर्मबु-
ध्या क्रियमाणत्वाभावात्सदाचारत्वाभावनिश्चय इत्याह * व-
ष्ठस्यापीति * श्लोकं व्याचष्टे * यो हीति * विश्वामित्रे
जोबलवशेनेति परिहारं विवृणोति * तेनेति * स हि व्यामो-
भावे ऽप्यापदि मत्कुटुम्बं भृतवतस्त्रिशङ्कोः प्रत्युपकर्त्तव्यं मयेति
युपकर्त्तव्यं मयेति प्रत्युपकारेच्छया चण्डालमपि वा सशरीरं
र्गं नयामीति स्वप्रभावख्यापनेच्छया त्रिशङ्कद्वेष्टरि वशिष्ठे द्वे-
ाच्च तपोबलेन पापं नाशयामीत्यध्यवसाय चण्डालं याजयामा-
। येन कारणेन कामादिहेतुकस्याचारस्य धर्मादर्शनं नास्ति तेन
ारणेन विश्वामित्रचरितमपि न धर्मादर्शत्वं प्रतिपद्यतइत्येवं तेन
ब्दो योज्यः सर्वं बलवतः पथ्यमित्येतमेव न्यायं प्रकृते योजयितु
ाह * महान्ति चेति*द्वैपायने गर्हानिरासार्थं यथा वा न विरुद्धत्व-
ाति परिहारमुपक्रम्यापरितोषात्तेजोबलवशेन वेत्येतमेव परिहारं
ायति * द्वैपायनस्यापीति * कथं पराशरपुत्रस्य द्वैपायनस्य शन्त-
पुत्रो विचित्रवीर्यो भ्रातेत्याशङ्क्य मातृसम्बन्धवचनम्। सत्यव-
ामनूढायां पराशराद् द्वैपायनो जातः शन्तनुना पश्चादूढायां वि-
त्रवीर्यः। एवमपि।

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः।
तामनेन विधानेन निजो विन्देत देवरः॥

इति नियोगस्य वाग्दत्ताविषयत्वादम्बिकाम्बालिकयोश्च वि-
त्रवीर्येण परिणीतत्वाद्दास्याश्च भ्रातृजायात्वाभावाद् ब्रह्मचारिणा
मैथुनस्य निषिद्धत्वादपरितोषेणा प्राक्कृतेत्युक्तम्। रामभीष्म-
ोर्यथा वा न विरुद्धत्वमिति परिहारं विवृणोति *रामेति* र-
ापुत्रार्थत्वनिरासाय मातृशब्दः * नन्वेवं सति *

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति।
तस्या रजसि तं मासं पितरस्तस्य शेरते॥

इति विहितातिक्रमात्प्रत्यवायः स्यादित्याशङ्क्य स्नेहपितृ

[illegible] भक्तिवशादित्युक्तम् ॥ रामेण सीतास्नेहा-
[illegible]र्भीष्मेण च शान्तनवे सत्यवतीं तत्पितरं य
[illegible] राज्याभिलाषुके तिष्ठत्येतस्याः पुत्राणां राज्य
[illegible] तत्पित्रा प्रत्याख्यातेन राज्यं नाहं करिष्याम
[illegible]ष्यपि त्वत्सन्ततिभयान्नैतस्याः सन्तती
[illegible] तत्पित्रा पुनः प्रत्याख्यातेन ।

[illegible]पत्यहेतोरपि च करोम्येतद्विनिश्चयम् ।
[illegible] प्रभृति मे दाश ब्रह्मचर्यं भविष्यति ॥

[illegible] पितृभक्त्या ब्रह्मचर्यव्रतग्रहणान्निमि
[illegible]कालगमनस्य बाधाद्धर्ममात्रार्थमहं
[illegible] परिभाष्य परिणीतायामगमने
[illegible] । एवमप्यनपत्यत्वेन पितॄणाम
[illegible]त्याशङ्क्य ॥ साक्षादित्युक्तम् ॥ साक्षाद्प
[illegible]त्रा ऽनृण्यो रामः व्यवहितैर्विचित्रवी
[illegible]पित्रानृण्यो भीष्मः । ननु रामस्य धर्म
[illegible] सीतां पत्नीं हिरण्मयीमिति ति
[illegible] स्यादित्याशङ्क्याह ॥ हिरण्मयीति ॥
[illegible] सीता तद्गतं तद्विषयं यदानृशंस्यमनैष्ठुर्यं
[illegible]मित्यर्थः । रावणापहारदूषितां सीतां रामो
[illegible]णाग्नौ त्यक्ता न सीताया दुष्टत्वात्
[illegible]दिति द्योतयितुं लोकापवादभीतिं प्र
[illegible]र्शनाय त्यक्तशब्दस्य सीताशब्देन सह
[illegible] । कथं व्यवहितापत्यकृतपित्रानृण्यता भीष्
[illegible] ॥ ननु तयोर्द्धर्ममात्रार्थदारसद्भाव
[illegible]स्यानुक्तः केवलप्रमाणेनावगम्येतेत्या
[illegible] ॥ अपिशब्देनापत्यहेतोरद्य प्रभृतीति च विशे
[illegible] सूचितं, ननु मोहादप्यनुष्ठानोपप
[illegible]तीत्याशङ्क्य ।

[illegible]काले मम पितुर्मया पिण्डः समुद्यतः
[illegible] पिता मम हस्तेन भित्त्वा भूमिमयाचत ॥
[illegible] कल्पनिर्दिष्ट इति निश्चित्य चाप्यहम्
[illegible]ष्वेव तदा पिण्डं दत्तवानविचारयन् ॥

[illegible] भीष्मस्यात्यन्तनैपुण्यान्मोहासम्भवं द्र
[illegible]राष्ट्रे ऽप्येतमेव परिहारं दर्शयति ॥ धृतराष्ट्रे

पुत्रेषु शोकार्तेन धृतराष्ट्रेण सकृत्पुत्रदर्शनं प्रार्थितं व्यासेन योगबला- त्सम्पादितमित्याश्चर्यपर्वणि कथापरिहारवैभवाय प्रकारान्तरेणाविरोधमाह * यद्वेति * नन्वेवं सत्यश्वमेधशतैरीजे धृतराष्ट्रो महामखैरित्यश्वमेधशब्दानुपपत्तिमाशङ्क्यौपचारिकत्वेनोपपादयति *क्रतुफलेति * युधिष्ठिरग्रहणेन पञ्चानामप्येकपत्नीत्वलक्षणस्य धर्मव्यतिक्रमस्य सूचितत्वात्तत्र मनुष्यप्रतिषेधाद्वेति परिहारं दर्शयितुमाह * या चेति * प्रतिकूलतयापादितागमिता निराकृतेत्यर्थः। द्वैपायनीयमुपपादनप्रकारमाह * यौवनेति *

कुमारी चैव तन्वङ्गी वेदिमध्यात्समुत्थिता।
श्यामा पद्मपलाशाक्षी पीनोन्नतपयोधरा ॥ १ ॥
द्रौपद्येषा हि सा जज्ञे सुता ते देवरूपिणी।
पञ्चानां विहिता पत्नी कृष्णा पार्वत्यानिन्दिता ॥ २ ॥
स्वर्गस्त्रीपाण्डवार्थाय समुत्पन्ना महामखे

इत्यादिबहुप्रकारममनुष्यत्वोपपादनादविरोध इत्याशयः।नन्वमनुष्यत्वात्तस्या निषेधाभावे ऽपि पाण्डवानां मनुष्यकुन्तीमाद्रीयोनिजत्वेन मनुष्यत्वान्निषेधो भविष्यतीत्याशङ्क्याह * सा चेति * लक्ष्मीश्चैषा पूर्वमेवोपदिष्टा भार्या चैषां द्रौपदी दिव्यरूपा कथं हि स्त्री कर्मणो ऽन्ते महीतलात्समुत्तिष्ठेदन्यथा दैवयोगादिति द्वैपायनेनैव तस्याः स्त्रीत्वव्युत्पादनाच्छ्रिया सर्वसेव्यत्वादनिषेध इत्यर्थः। द्वैपायनीयस्य वेदिमध्योद्भवत्वाद्यभिधानस्यानिषिद्धत्वायामनुष्यत्वोपपादनार्थतामभियुक्तवचनेन द्रढयितुमाह * अत एव चेति *

यदि मे पतयः पञ्च वरमिच्छामि याचितुम्।
कौमारमेव तत्सर्वं सङ्गमे सङ्गमे भवेत् ॥

इति पूर्वजन्मनि तया च पञ्चकृत्वः पतिं मे देहीति याचितेनेश्वरेण पञ्च ते पतयो भविष्यन्तीत्युक्ते पुरुषसंयोगजयोनिक्षताभावरूपं कौमारं प्रार्थितमित्यभिधानात्प्रत्यहमक्षतयोनित्वरूपं कन्यात्वं तस्याः सूचितमिति मत्वा जगाद विप्रर्षिः कृष्णद्वैपायन इत्युक्तम्। कृष्णेनापि कर्णं भेदयितुं पाण्डवास्त्वामेव मातृसम्बन्धाज्ज्येष्ठं भ्रातरं मत्वा राज्ये ऽभिषेक्ष्यन्तीत्यादिप्रलोभयित्वा षष्ठे च त्वामहनि द्रौपद्यागमिष्यतीत्यभिधानादमनुष्यत्वेनानिषिद्धत्वं तस्याः सूचितमित्याह * अत एव चेति * यस्त्वश्रद्दधानतयेममागमिकमपि परिहारं नानुमन्यते तं प्रत्येकपत्नीत्वमेव पञ्चानामसिद्धमिति दर्शयन्नन्यथा परिहारद्वयमाह * अथ वेति * निश्छिद्रत्वायापारमार्थिको ऽपि साधारण्यव्यवहारः पाण्डवानां नीतिशा-

नुसारात्सम्भवन्तीति दृष्टान्तेनोपपादयन्नाह * यथेति *
ष्टायाः स्वयं सभागमनस्यात्यन्तमसम्भवाद् दुःशासनस्य
धार्तराष्ट्र एव मामानयतीति ख्यापयितुं रजस्वलावेषं कृ
त्यर्थः । आनायनख्यापनप्रयोजनं सपुत्रकस्येत्युक्तं दुःशास
तुल्यख्यापनेनायशो ऽतिशयोत्पादनं चशब्देन सूचितम् ।
यमानामिति पाठे दुःशासनो मां प्रत्यन्याय्यं करोतीत्य
ऽन्याय्यप्रातिपदिकात्तत्करोति तदाचष्ट इति णिचमुत्पाद्यातं
यकारलोपे कृते कर्मणि लडादेशे शानचि परे सार्वधातुके
यकि कृते णेरनिटीति णिलोपाद्रूपसिद्धिः स्वापमानख्यापनप्र
स्य पाण्डवानां कोपातिशयोत्पादनं भीत्वदर्शनप्रयोजनं भी
रायणस्य वांशा वयमिति शत्रून्प्रति ख्यापनं परिहारवैभवमात्रा
परिहारद्वयस्य सूचयितुमादिशब्देनानवक्लृप्त्यभिधानं दुराच
ऽभ्युपगमेन धर्मबुद्ध्यानाचरणादसङ्कर इति परिहारवैभवार्थमे
र्गेन परिहारान्तरं दत्तम् । युधिष्ठिरस्याचार्यब्राह्मणवधार्थ
वधे रागादिकृतत्वमेव परिहार इति प्रायश्चित्तकरणेन द
* तथा चेति * ननु कामतो ब्राह्मणवधे निष्कृतिर्न विधीय
स्मृतेः कामकृते प्रायश्चित्तं नास्तीत्याशङ्क्य कामकृते ऽप्येव
स्मृतिरुदाहृता । अन्ते ऽपीत्यपिशब्देनास्य दुराचारत्वेनापि यु
प्रायश्चित्तकरणान्नातिगर्हणीयो युधिष्ठिर इत्युक्तम् । कृष्णा
मद्यपानमातुलदुहितृपरिणयने यथा वा न विरुद्धत्वमित्येतं
रन्नाह * यथेति * ननु सर्वा न पेया ब्रह्मवादिभिरिति
ध्ययनयोगात्त्रैवर्णिकमात्रस्य त्रिविधसुरानिषेधावधारणेन ब्राह्म
जन्यो वैश्यश्च न सुरां पिबेदिति सामान्यशब्दस्यापि त्रि
राचिपरत्वनिश्चयात्र सुरा वै मलमन्नानामिति वाक्यशेषात्
पैष्टीमात्रविषयत्वं युक्तमित्याशङ्क्याह * मधुसीध्वोस्त्विति *
धुमाड्डी । त्रिविधसुराव्यतिरिक्तताडादिप्रभवमद्यमात्रनिषेधं
नीयं यथा केवलब्राह्मणविषयः तथा मानवीयो ऽपि त्रिविध
निषेधो ब्रह्मवादिशब्दस्य ब्राह्मणमात्रविषयत्वात्केवलब्राह्मण
इत्यर्थः । को ऽसौ मानवीयो निषेधः केवलब्राह्मणविषय इत्यपे
माह * यदपीति * एतदपि मनुवचनं गौतमवचनवत्केवल
णविषयमिति विपरिणमतानुषक्तेन पूर्वेण समापनीयं कथम
३७१ वलब्राह्मणविषयत्वेत्यपेक्षायामाह * ब्रह्मेति * ननु ब्रह्मवचन
त्वादेरपि त्रिष्वपि वर्णेषूपपत्तेस्तन्निमित्तत्वे ऽपि कथं ब्राह्मणम
त्रयतेत्याशङ्क्याह * प्रवचनेति * वदतेरुच्चारणमात्रार्थत्वे

णामपि तच्छीलत्वादिसम्भवात्ताच्छील्यादिवचनस्य णिनेरविशेषक-
त्वेनानर्थक्यापत्तेः । शूद्रनिवृत्तेश्च कर्तृमात्रवचनतृजादिप्रत्ययप्रयोग-
मात्रेण सिद्धेः प्रवचनार्थे वदत्याश्रयणेन यस्यैव प्रवचनमध्यापनम-
स्ति स एवाध्यापनरूपब्रह्मवदनप्रवृत्तिस्वभावत्वात् ब्रह्मवदनशील-
स्तस्यैवाध्यापनं स्वधर्म इति ब्रह्मवदनधर्मा स एवाभ्यासवशेनास्ख-
लिताध्यापनशक्तत्वाद् ब्रह्मवदनसाधुकारी वा ब्रह्मवादिशब्देन विव-
क्षितो भवतीत्यर्थः । कथं वदतेः प्रवचनार्थतेत्याशङ्क्य ब्रूञ्वदत्योरे
* कार्थत्वादित्युक्तम् * प्रवचनमपि वर्णत्रयसाधारणं कस्मान्न भ-
वतीत्याशङ्क्य प्रब्रूयाद् ब्राह्मणस्तेषां नेतराविति निश्चय इति स्मृति-
रुपन्यस्ता उपसंहरति * तस्मादिति * केवलब्राह्मणविषयत्वमे-
वास्य वचनान्तरे ब्राह्मणग्रहणेन द्रढयति * तथा चेति * न तु पै-
ष्टीनिषेधस्य वर्णत्रयविषयत्वाऽभ्युपगमाद्यथैवैका तथा सर्वेति सुरा-
मात्रनिषेधस्य वर्णत्रयविषयत्वप्रतीतेर्न केवलब्राह्मणविषयत्वं युक्त-
मित्याशङ्क्यैतद्वचनं ब्राह्मणविषयत्वे योजयति * तस्मादिति * ननु
मद्यान्तरनिषेधवत्सुरान्तरनिषेधस्यापि ब्राह्मणमात्रविषयत्वशङ्कानि-
वृत्त्यर्थं पदद्वयमप्यर्थवद्भविष्यतीत्याशङ्क्य पूर्वोदाहृतेन मानवीयेनैव
श्लोकेनैतच्छङ्कानिवृत्तेरानर्थक्यं समर्थयते * श्लोकान्तरेति * न-
न्वेवमपि कृष्णार्जुनयोः क्षत्रियत्वात्पैष्टीपानं विरुद्धमेवेत्याशङ्क्य
तयोर्माध्वीपानस्मरणान्न पैष्टीपानशङ्कास्तीति परिहरति * तेनेति *
केशवार्जुनयोर्माध्वासवपानस्याविरुद्धत्वमेव द्रढयितुं वेदवाक्यमुप-
न्यस्यति * तथा चेति * क्षत्रियस्य मधुसीधुनिषेधाभावेनाऽभ्यनु-
ज्ञानर्थक्यादन्यार्थदर्शनमेवेदम् अथापि केन चित्सामान्यवचनेन
क्षत्रिये ऽपि निषेधः प्रसज्येत तथाप्यनेनानुज्ञातत्वाददोष इति वाश-
ब्देन सूचितम् । सत्यपि तु निषेधे प्रतिषिद्धाऽभ्यनुज्ञायाः विकल्पा-
पादकत्वेन दुष्टत्वान्नायं पक्षविकल्पार्थो वाशब्दः । ननु नैव सुरा
पीता हिनस्तीति सामान्याभिधानात्पैष्टीपानमपि क्षत्रियस्याविरुद्धं
स्यादित्याशङ्क्याह * मद्येति * सुरा वै मलमन्नानामिति मनुना
पैष्ट्या वर्णत्रये निषेधादस्याश्च श्रुतेरन्यार्थदर्शनमात्रत्वादित्याशयः ।
मातुलदुहितृपरिणयने विरोधाभावमनुभाषणपूर्वकं दर्शयति * य-
द्यपीति । अयमाशयः * नार्जुनमातुलस्य वसुदेवस्यात्मजा सुभ-
द्रेति क चिदाख्यायते किं त्वनुजा वासुदेवस्य सुभद्रा वरवर्णिनी
त्यादिव्यवहारदर्शनात्कल्प्यं स त्वन्यथाऽप्युपपत्तेर्नैकान्ततः सुभद्रा-
या वसुदेवात्मजात्वं कल्पयितुं शक्नोतीति । एतदेव विवृणोति
* यद्यपीति * ननु बलदेवस्य रोहिणीसुतत्वाद्वासुदेवस्य च देव

कीसुतत्वादेकानंशायाश्च यशोदाकन्यात्वात्त्रयाणामपि ।
त्तीत्याशङ्कयोत्पत्तावित्युक्तम् ।

सप्तमो देवकीगर्भो योऽशः सोऽन्यो ममाग्रजः ।
स संक्रामयितव्यस्ते प्रथमे मासि रोहिणीम् ॥

इति देवकीगर्भसम्भूतस्यैव बलदेवस्य रोहिणी
गे निद्राया विष्णुना प्रेरितत्वात्तया च तथाकृतत्वादेकानं

अष्टमे मयि गर्भस्थे कंसो यत्नं करिष्यति ।
या तु सा नन्दगोपस्य दयिता कंसगोपतेः ॥
यशोदा नाम भद्रं ते भार्या गोपकुलोद्वहा ।
तस्यास्त्वं नवमोऽस्माकं कुले गर्भो भविष्यसि ॥

इति यशोदागर्भसम्भूताया अप्येकानंशाख्याया नि
संख्यापूरणेन विष्णुनैव निजत्वान्वाख्यानाद्देवक्याऽपि द
जातेति कंसं प्रोवाच देवकीति स्वगर्भसम्भूतत्वान्वाख्या
मित्याशयः । सुभद्रा तु यद्यपि रोहिणीदुहितृत्वेनान्वाख्
पि वसुदेवात्मजातत्वे तद्भागिनेयस्यार्जुनस्य परिणयन
सुदेवस्य सापत्नमातू रोहिण्याः स्वसुः सुभद्रा दुहिता रे
वा पितृष्वस्त्रीयाया लाटादिषु भगिनीशब्दाभिलप्यत्वे
या दुहिता तत्सपत्नीसुतस्य वासुदेवस्य भगिनीति व्यप
यथासम्भवं व्यवधानं कल्पनीयमित्यर्थः । न त्वर्जुनमा
वसुदेवभगिन्याः पित्रा शूरेण कुन्तिभोजाय दुहितृत्वे
त्पिण्डगोत्रे जनयितुर्न भजेद्दत्रिमः क्वचिदितिवचना
न्निवृत्तेर्वसुदेवाङ्गजाताया अपि सुभद्रायाः पृथात्मजस्या
रिणयनविरोधपरिहारसम्भवाद्व्यवधानकल्पनमनर्थका
ह * वसुदेवेति * कुन्तिभोजदुहितृत्वनिमित्तः पृथायां
देशः यद्यप्यर्जुनः कुन्तीभोजदत्तायाः पुत्रस्तथापि ऊर्ध्वं
तृबन्धुभ्यो बीजिनश्चेति निषेधाद्वसुदेवाङ्गजातस्यापरिणे
ननु विरुद्धोऽप्ययमाचारो वासुदेवेनार्जुनप्रीत्या प्रव
परिहारोपपत्तेरनुक्तव्यवधानकल्पना न युक्तेत्याशङ्क्य
१३८।१ हीति * एतमेव विरोधपरिहारन्यायं रुक्मिणीपरिणयने
शति * एतेनेति * अद्यतनाचाराणामपि श्रुतिस्मृति
भ्यां प्रामाण्याप्रामाण्यव्यवस्थासिद्धेरसङ्कर इति प
मनुभाषणं तावत्करोति * यत्त्विति * परमतेन परिहार
स्य दूषयितुमाह * तत्रेति * विरुद्धानामप्याचाराणां
या प्रामाण्यमिति परिहारान्तरमुपन्यस्यति * अन्ये

पस्तम्बवचनं प्रपञ्चयति * येषामिति *(एतदेव परिहारं मनुव-
ान दृढयन्नाह *तथेति*[1]) एतमपि परिहारं देशाचारकुलधर्माश्चा-
ायैरविरुद्धाः प्रमाणमिति गौतमवचनबलेन निराकरोति * ननु
ते * एतत् परिहारवादी स्वाभिप्रायमाशङ्कते * आहेति *
राकरोति * न त्विति * प्रयोगं दर्शयति * स्मार्त्तेति * एतदेव १३
ाचष्टे * ग्रन्थेति * मन्वादयो ये ग्रन्थकारास्तद्गताया: स्मृतेर्मूला-
मन्वादिकृतो ग्रन्थ आम्नायशब्दवाच्यः स स्मृतिग्रन्थाध्यायिनां
या एव मन्वादिगताया एव स्मृतेग्रन्थमूलत्वेनानुमेयाया धारणा-
त्वेनोक्त इत्यर्थः । अनेन च य आम्नायः स स्मृतिधारक इति
ङ्खलिखितवाक्यस्य वचनव्यक्तिर्दर्शिता ततश्चार्थाद्यः स्मृतिधारको
न्थः स आम्नाय इत्युक्तं भवति। यद्वा यः स्मृतिधारकः स आम्ना
इति वचनव्यक्त्या स्मृतिधारणार्थत्वेन य आम्नायः स किं गता-
ाः स्मृतेः किं रूपः केषां चेत्यपेक्षिते * ग्रन्थकारेत्याद्युक्तम् * अ-
ाभक्तिकाम्नायशब्दपाठे त्वाम्नायेन स्मृतिधारको ग्रन्थ इत्युक्ते
क गतायाः स्मृतेः को ग्रन्थः केषां चेत्याकाङ्क्षानिवृत्त्यर्थत्वेनैतद्व्या-
येयं स्मार्त्तधर्माधिकारादल्पाच्तरत्वेन घ्यन्तत्वेन च स्मृतिशब्द-
र पूर्वनिपातोपपत्तेर्न द्वन्द्वसमासाशङ्का । स्वमतमुपसंहरति *
ातश्चेति * नन्वापस्तम्बवचनस्य तर्हि का गतिरित्याशङ्क्याह * आ-
ास्तम्बेति * पञ्चधा विप्रतिपत्तिर्दक्षिणतोऽनुपनीतेन भार्यया च
ाह भोजनं पर्युषितभोजनमुच्छिष्टभोजनं पितृष्वसृमातुलदुहितृप-
रिणयनमिति तथोत्तरतः पञ्चधा ऊर्णाविक्रयः सीधुपानमुभयतो
द्भिर्व्यवहार आयुधीयकं समुद्रयानमितीति बौधायनेन स्मृतिविरु-
द्धदृष्टाचारोदाहरणानि दत्वेतर इतरस्मिन्कुर्वन्दुष्यति नेतरस्मिन्दे-
ाप्रामाण्यव्यवस्थया प्रामाण्यमापस्तम्बेनोपन्यस्यति * मिथ्यैतदि-
ति* गौतम उभयन्त्वेतन्नाद्रियते शिष्टस्मृतिविरोधादिति निराकृत-
त्वादापस्तम्बस्यापि मन्वादिवद्धर्मशास्त्रप्रवक्तृतया याज्ञवल्क्येन स्म-
रणात्तद्वचनस्य मिथ्यात्वायोगेऽपि गर्हानिराकरणमात्रपरतया त-
द्व्याख्येयमित्याशयः। मनुवचनं तु तेन यायात्सतां मार्गमिति विशे-
षणादविरुद्धकुलधर्मविषयत्वेनाविरुद्धं, ननु विरुद्धाचाराणामापस्त-
म्बवचनस्य वा श्रुतिमूलत्वं विना कथं प्रवृत्तिरित्याशङ्क्याह * दृष्टे-
ति * ननूपादेयगतत्वेन सुरापाननिषेधे पुंस्त्वस्य विवक्षितत्वान्न
ब्राह्मणानां सुरापानं निषिद्धमित्याशङ्कते * आहेति * अनुवाद्यगत-
त्वेनाविवक्षामभिप्रेत्य परिहरति * उच्यतइति * आशङ्किता स्वा-

१ अयं पा० २ पु० ना० ।

भिप्रायमाह * नन्विति * पार्श्वस्थो हननप्रतिषेधे ऽपि सू
योगित्वाभावेनासंस्कार्यत्वाद् ब्राह्मणस्यानुपादेयपक्षेऽभ्यति
नानुद्देश्यत्वमभिप्रेत्यातिप्रसङ्गद्वयमापादयति * उच्यतइति
त्वविवक्षाप्रसङ्गे को दोष इत्यपेक्षायामाह * आह स्येति*
द्धेन निषेधानतिक्रमलक्षणाकृतार्थतोक्ता । आशङ्किता द्विते
सङ्गतं दोषं तावत्परिहरति *आहेति* यद्यपि जातेर्वधपा
त्वेन ब्राह्मणशब्दस्य व्यक्तिपरत्वात्तद्गतमेकत्वमत्रोच्यते त
कस्या एव व्यक्तेर्वधपानप्रसक्तेर्बहुवधपाने ऽपि प्रत्येकमेकत्व
न्निषेधातिक्रमापरिहारान्निषेधानतिक्रमलक्षणकृतार्थत्वदोषो
त्वत्पक्षे तूपादेयार्थत्वेन ब्राह्मणशब्दस्य प्रकृतव्यक्तिविशेषा
तिपरत्वात्तस्यां चैकत्वसंख्यासम्भवे लक्षणाकारणाभावाद्
पाने ऽप्येकत्वानपायात्कृतार्थत्वलक्षणो दोषः परिहार्य एवेत्य
वधपाने ऽपि प्रत्येकं व्यक्तेरेकत्वसम्बन्धाज्जातेरेकत्वसम्बन्ध
विवक्षागतं यदनेकवधपाने निषेधानतिक्रमापत्तिलक्षणं दूष
तत्र दूषणमिति योज्यम् ।एतदेव विवृणोति* एकैकस्या ए
व्यक्तिविशेषणत्वेन विवक्षितुमारभ्यमाणमप्येकत्वं नित्यप्रा
प्यमानत्वापत्तेः प्रतिषेध्यायां वधपानक्रियायामव्यभिचा
णत्वासम्भवेन प्रतिषेधे ऽपि विशेषणत्वासम्भवादेकत्वाप
क्ष्यते जातौ तु व्यावर्त्यसंख्यान्तराभावात्तद्विशेषकत्वेन विव
नास्तीत्यर्थः । प्रथममतिप्रसङ्गं वैषम्योपपादनेन परिहरति
हेति * पुंस्त्वविवक्षातिप्रसङ्गे ऽपि स एव शङ्किता परिहा
हशब्दो योज्यः । वधनिषेधे ब्राह्मणस्यानुपादेयपक्षेऽभ्यति
व्यद्वितीयाभ्यां कर्मत्वनिर्देशाच्छब्दवृत्तेनोद्देश्यत्वमुपपादयि
भूतस्येत्युक्तम्*सुरापाननिषेधे च ब्राह्मणस्य प्रत्यवायभ्याद्
ह्यत्वात् स्वर्गकामादिवदुद्देश्यत्वे ऽपि निषेध्ये सुरापाने प्रथ
१४०।१ भ्यां कर्तृत्वनिर्देशेनोपादेयत्वं वक्तुं *सुरापाने चेत्युक्तम्* स
कामस्य यागविधौ उद्देश्यत्वाल्लिङ्गाविवक्षौचित्यस्मान्ने
स्योपादेयत्वाद्विवक्षा तथेहापीत्यर्थः । वधनिषेधे ब्राह्मणस्
नाविवक्षितलिङ्गत्वं प्रकटयति * तथा हीति * यस्माद्
द्दिश्य हननस्य प्रतिषेधस्तस्माद् ब्राह्मणे लिङ्गं न विधीयते इ
र्थान्तरत्वेनावृत्तिप्रसङ्गादित्याशयः । यस्माद् ब्राह्मणहनना
परिशिष्टाद् वधोद्देश्यस्यापि वक्ष्यमाणत्वात्तस्मिन्पक्षे यस्माद्ध
नस्य प्रतिषेधस्तस्माद्धनने कर्मव्युत्पन्नेन प्रतिषेधशब्देनोक्ते
विधीयतइति योज्यम् । हननमितिपाठे हननं प्रतिषेधतां

लिङ्गं विधेयमित्यर्थः यद्वा यो ब्राह्मण इति यच्छब्दं नपुंसकलिङ्गेन विपरिणतमनुषज्य यद्धननमित्युक्ते तत्प्रतिषेधतो वाक्यस्येति ज्यम्। ये तु प्रवर्त्तनावाचित्वेन क्लृप्तशक्तिकस्य लिङो नञभाववाचित्वेन क्लृप्तशक्तिकस्य निवर्त्तनावाचित्वायोगान्निषेधाकारे ऽपि नञर्थस्य प्रागभावरूपस्य सिद्धत्वे ऽपि रागाद्युपजनने नाशोत्पत्तौ तत्परिपालनस्य प्रयत्नापाद्यत्वेन विधेयत्वोपपत्तेः वर्त्तनैव लिङर्थ इत्येतन्मताभिप्रायमेतत् श्लोकं व्याचक्षते तन्मते वं योज्यं यो ब्रह्मण इति ब्राह्मणमुद्दिश्य पूर्ववच्च ब्राह्मणोद्देशाभिनस्योपलक्षणार्थत्वाद् वधं चोद्दिश्य यो ब्राह्मणहननाभावस्तं कुदिति च वचनव्यक्त्यन्तरस्यापि सम्भवाद् ब्राह्मणवधाभावं चोश्य हननस्य प्रतिषेधादभावादन्यल्लिङ्गं ब्राह्मणे प्रतिषेधशब्दवाये वा ऽभावे वा शब्दाद् वधे वा न विधीयतइति हननमिति पाठे प्रषेधत इति प्रथमार्थे तमङ्गीकृत्य यो ब्राह्मणो यद्धननं यः प्रतिषेध त्युक्ते ब्राह्मणतद्वधतदभावानामुद्देश्यत्वात्तद्विशेषणं लिङ्गमन्यत्वापन्नं विधीयतइति योज्यम्। परिपालनीयत्वरूपेण च विधेयस्याप्रभावस्य स्वरूपेणोद्देश्यत्वमविरुद्धम्। ननु वधोद्देश्यपक्षे ब्राह्मस्याप्युद्देश्यविशेषणाविवक्षायामविवक्षा प्रसज्येतेत्याशङ्कां निराकुर्वत् श्लोकं व्याचष्टे * प्रतिषेधेति * नान्तरिक्षे न दिवीत्यादिवक्षेधानुवादाशङ्कानिराकरणार्थो विधिशब्दः निर्विषयवधाप्रसक्तेर्मृयामहे हविषा विशेषणमित्यनेन न्यायेनोद्देश्यान्तर्गत्यङ्गीकारेण ब्राह्मणयविवक्षायुक्तेत्याशयः। सकृच्छ्रुतप्रत्ययस्यानेकार्थविधिपरत्वायोगान्निर्विषयस्य च लिङ्गस्य विधातुमशक्यत्वाद्यो ब्राह्मणस्तं न हयात्तं च ब्राह्मणयुग्मं स मेति ब्राह्मणलिङ्गविधौ ब्राह्मणपदप्रत्यययोरावृत्तिः यद्‌ब्राह्मणहननं तन्न कुर्यात्तं च पुंसो हननमिति वधलिङ्गवेधौ हन्तिप्रत्यययोरावृत्तिरिति विवेकः। प्रतिषेधशब्दो ऽपि कर्मव्युत्पत्त्या वधपर एव प्रतिषेधे वध इत्यर्थः। अविभक्तिकवधशब्दपाठे वधश्चासौ प्रतिषेधश्चेति कर्मधारयावृत्तिग्रहणमुपलक्षणार्थम्। द्वितीयव्याख्याने तु प्रतिषेधविधिपरो हि प्रतिषेधशब्देनाभावो ऽभिप्रेतः। शुद्धवधासम्भवात्तद्विशेषणब्राह्मणयविवक्षाप्रतियोगिनिरूपणाधीनत्वेन शुद्धस्याभावाख्यस्य प्रतिषेधस्यासम्भवात्तद्विशेषणवधविवक्षाप्रतिषेधे वेति यो ब्राह्मणहननाभावस्तं कुर्यात्तं च पुंसोभावमित्यभावलिङ्गविधौ नञ्प्रत्यययोरावृत्तिरुक्ता एवं तावन्नञुपहितस्य लिङो निषेधकत्वे प्रवर्त्तनाप्रतीत्यभावेन तदाक्षिप्तसाध्याभावाद् ब्राह्मणस्यानुपयोगित्वेनासंस्कार्यत्वादनुपादेयपञ्चकव्यतिरेकेण

वास्तवोद्देश्यत्वाभावे ऽपि शब्दवृत्तेनोद्देश्यत्वादवि
क्षा । यदा तु नञ्मात्रेण निषेधसिद्धेर्द्वैधाद्यर्थप्राप्त
र्थत्वं लिङो ऽङ्गीक्रियते तदा प्रवर्त्तनाक्षिप्तवैरनिर्यात
द्धुपयोगिहननसंस्कारार्थत्वोपपत्तेर्वस्तुतो ऽप्युद्देश्यत्व
ङ्गाविवक्षेत्याह * येषां त्विति * प्रवर्त्तनात्मकनिषे
ध्यभावप्रतिपादनार्थं * अत्यन्ताभिन्नावित्युक्तम् * वा
विषयत्वेन विधिवन्निषेधस्यापि सर्वपदार्थान्प्रतिप्राधा
नञो ऽपि प्रत्ययानुग्राह्यत्वोपपादनायोपचारात् * द्वा
क्तम् * नानाख्यातार्थस्यापि प्राधान्ये वाक्यार्थो
दित्याशङ्क्य भावनैव सर्वपदार्थानुरञ्जनसहत्वात्तत्र वा
क्यार्थस्तद्विषयत्वेन तूपचाराद्विधिनिषेधयोर्वाक्यार्थत्वं
स्य भावनाविषयत्वास्तीति सूचयितुं * द्वावेवेत्युक्तं
श्रूयमाणमपि लिङ्गं प्रतिषेधं प्रत्यनुपयुज्यमानत्वात्ते
त्वादविवक्षितमित्यन्वयः तदुपपादनार्थं * नञित्यादु
मतापेक्षयास्मिन्मते विध्यर्थनिषेधाधिकयाल्लिङ्गनिषेधे
द्योतनार्थो विध्यर्थमपीत्यपि शब्दः ब्राह्मणविशिष्टं हन
विध्यर्थं प्रतिषिध्य चरितार्थत्वान्न लिङ्गं ब्राह्मणं वधे वि
व्यतारूपे नञि निषेद्धुं शक्नोति यद्ब्राह्मणं हन्यात्तं च
मांसं नेति नञ्ब्राह्मणपदयोरावृत्त्यापत्तेः ब्राह्मणं न हन
ब्राह्मणहननं न कुर्यादित्येव विगृह्यार्थप्रतीतेस्तच्च पुंसा
वधे लिङ्गनिषेधेन नञ्हन्त्योरावृत्त्यापत्तेः । विधौ च
तच्च पुंसः कर्त्तव्यं नेति नञ्प्रत्यययोरावृत्त्यापत्तेरित
विशिष्टविधिवद्विशिष्टनिषेधेनापि विशेषणानामर्थाक्षेपा
त्त्वावृत्त्यापत्तिरित्याशङ्क्य * नूदितमित्युक्तम् * वि
देरन्यतो सिद्धस्यापि विधितः स्वरूपावधारणसम्भवेन
वादानपेक्षत्वात्पश्वेकत्वाधिकरणन्यायेन विशेषणाविवक्षा
षेध्यस्य त्वन्यतो सिद्धौ निर्विषयनिषेधायोगेनानुवाद
सम्भवाद्ग्रहाधिकरणन्यायेन विशेषणाविवक्षेति भावः । न
ब्राह्मणहननयोरप्यविवक्षा स्यादित्याशङ्क्य * पूर्वोक्तेत्युक्त
वैव्यवहारनिरोधापादकत्वे कर्त्तव्यमात्रस्य निषेध्यत्वाया
च निर्विषयस्याप्रसक्तेः प्रतिषेध्यत्वासम्भवस्य पूर्वमेवोक्त
णविशिष्टस्यैव विध्यर्थस्योद्देश्यत्वेनोभयोरपि ब्राह्मण
स्यान्तर्भावात् (यस्योभयं हविरार्त्तिमार्च्छेदित्यत्र यस्य क
सत्यां निर्विषयकनिमित्तकयागस्याप्राप्तेः हविःशब्दस

द्विरोषणीश्रुतोभयशब्दस्य प्राप्तानुवादकत्वात्प्रधाने वाक्यभेदाप-
त्तेः तस्मादुभयशब्दस्याविवक्षेति हविरार्त्यधिकरणसिद्धान्तः ) हवि-
र्द्विवक्षायुक्तेत्याशयः । विध्यभावाद् यत्कर्तव्यत्वस्याप्राप्तत्वानुवादा-
ऽसम्भवमाशङ्क्य * द्वेधादीत्युक्तम् * नन्वाख्यातनञोर्निषेधाख्य
ओ नार्थान्यादिवद् भावमात्रवाचित्वान्निवर्तनाभेदो न युक्त इत्या-
शङ्क्य * प्रत्ययेत्युक्तम् * य एवं लिङ्गत्योपमान्मी यजेतस्याद्याव-
याद्यर्थेनापि योजना भावनाधिकरणन्यायेन पौर्णमास्यादिशब्दस्य या-
गान्वितवदनुवादार्थेनापि प्रत्ययेन सम्बन्धान्नञो ऽर्थान्तरस्याभि-
धानानुपपन्नमिति सूचयितुं प्रत्ययग्रहणम् । यद्वा नु नञ्युक्तेष्व-
पि वाक्येषु नञो विषयसमर्पकत्वात्प्रवर्तनार्थ एव लिङादिरित्य-
भिमताश्रयणेन पूर्वग्रन्थो व्याख्यायते । तथा येषां निवृत्ति प्रत्ययस्य
निराकरणार्थत्वाद्विधेर्विधायकत्वं निराकृतम् । विधिवच्च
निषेधकस्यापि वाक्यार्थरूपा भावना विषय एव न तु धात्वर्थस्तत्र विष-
यणीति * वाक्यार्थशब्देनोक्तम् * अत्यन्तभिन्नावित्यनेनैकत्वनिरा-
करणार्थं विपरीतस्वभावतोक्ता तथा हि ।

फलवृद्धिप्रमेयाधिकारिबोधकभेदतः ।
यश्चात्यन्तभिन्नत्वाद्भेदो विधिनिषेधयोः ॥
विधिरिष्टफलो ऽनिष्टपरिहारफलः परः ।[1]
प्रेरितो ऽस्मीति धीः पूर्वे वारितो ऽस्मीति चापरे ॥
विधेयस्येष्टहेतुत्वं विधिना च प्रतीयते ।
निषेधेन निषेध्यस्य प्रत्यवायनिमित्तता ॥
विधिश्चाधिकरोत्यन्यकारणेनाप्रवर्तिनम् ।
रागादिना प्रवृत्तं तु निषेधस्तद्विलक्षणम् ॥
नञ्वर्जितो लिङादिश्च विधिबोधस्य कारणम् ।
लिङाद्यनुगृहीतस्तु नञ् निषेधस्य बोधकः ॥
एतदेवाभिप्रेत्य बृहट्टीकायामुक्तम् ।
अन्तरं यादृशं लोके ब्रह्महत्याश्वमेधयोः ।
दृश्यते तादृगेवेदं विधानप्रतिषेधयोः ॥

इति । शेषं समानम् । अस्मिन्नेव पक्षे स्पष्टीकरणार्थं वचन-
व्यक्तिमाह * एवा हीति * तदयुक्तवाक्यान्तराभिप्रायो वचनव्य-
क्त्यन्तरोपन्यासः । पूर्वस्मिन्पक्षे कीदृशी वचनव्यक्तिरित्यपेक्षायामा-
ह * विध्येकत्वे पुनरिति * विधिशब्दस्य लिङादेरनुवादार्थत्वाभा-
वान्नञा सहैकीकृतस्य तत्सहितस्य निषेधपरत्वं युक्तं, द्वितीये व्या-

१ अयं पा० २ पु० ना०

ख्याने तु विधिरेवैकः सर्वत्र न क्वचि
त्क्वचित्पदोपात्तयोर्धातुप्रत्ययार्थयोरुद्देश्योपा
दानाशक्यत्वे ऽप्यर्थमात्रविवक्षया वधस्याप्य
यद्ब्राह्मणहननमित्युक्तम् शब्दव्यापारप
क्षः। विधिशब्दो न पृथिव्यामग्निश्चेतव्य
निराकरणार्थः। द्वितीयव्याख्याने प्रतिषे
न कुर्यादिति चाख्यातयोगिनो नञो ऽ
त्यर्थः न हन्यादित्युक्ते प्रधानभूतेनाख्य
हननव्यतिरिक्तं वा प्रागभावपरिपालनं ि
भावस्तं कुर्यात्पालयेदित्यापि वचनव्यक्त्य
व्यक्तिभेदप्रपञ्चस्य प्रयोजनमुपसंहरति *
व्यमाह* ब्राह्मण इति*व्यतिरेकोपपादना
वैश्यश्च न सुरां पिबेदित्यत्राख्यातप्रत्ययो
दीयमानस्य संख्याया परिच्छेद्यत्वयोग्यस
णत्वेनोपादानाच्च पेया ब्रह्मवादिभिरित्य
मानत्वप्रतीतेरित्यर्थः। श्रुतावपीमं न्यायमा
पार्श्वस्थापादितमतिप्रसङ्गद्वयं परिहृत्य
१४।१४ धाभावशङ्कामुपसंहरति * अतश्चेति *
श्यत्वे ऽप्यनुवाद्यत्वाद्विशेषणाविवक्षेति
नन्वनुवाद्यत्वे ऽप्युपादेयत्वाद्विशेषणविव
* नोपादेयत्वमिति * उद्देश्यविशेषणाविव
त्वपरिहारार्थत्वान्नोपादेयत्वस्य विवक्षाकार
णस्य विधिना स्प्रष्टुमशक्यत्वाद्विधेयत्वमे
शुक्लान्वारम्भणादौ प्रकरणप्राप्तस्यापि यज
नाद्विशेषणविवक्षा युक्तेति भावः। नन्व
क्रियाविशेषणत्वाभ्युपगमात्कुत्र ब्राह्मणावि
शेषणविशिष्टब्राह्मणविशिष्टक्रियानुवादे ऽपि
पिबेदित्येकप्रसरोपपत्तेरावृत्तिलक्षणवाक्य
कारेण चारुणैकहायनीवत्परस्परनियमोप
परिसमाप्तिलक्षणस्यापि वाक्यभेदस्याभाव
वक्षेत्याशङ्क्याह * अनूद्यमान इति न केवल
प्राप्त्यपेक्षत्वं किं त्वनुवाद्यविशेषणत्वेनाप्यनू
सूचितं, तत्रानुवादस्य प्राप्त्यपेक्षत्वे सत्यनू
पुंस्कर्तृत्वेन प्रागेव प्रतीतेर्लिङ्गविशेषण

कर्तृकपानाप्रसक्तेरनुवाद्यपानविशेषणत्वेनाज्ञातज्ञाप्येभ्यो ब्रा-
दिभ्यो ऽन्यल्लिङ्गं न विधीयते नानुवाद्यविशेषणत्वेनाज्ञातं ज्ञा-
इत्यर्थः। नन्वप्राप्तनिषेधायोगान्निषेध्यप्राप्त्यर्थं ब्राह्मणः सुरां
देत्यवान्तरवाक्यार्थपर्यवसानवेलायां विधेयविशेषणत्वेन लि-
विवक्षा प्रसक्ता पश्चान्निषेधान्वये ऽपि न केन चिद् बाध्यत इ-
ङ्कते तावत् * यदि हीति * तत्र किमप्राप्तस्य पानस्य निषे-
गादन्यतश्चाप्राप्तेरर्थाद्विधेयत्वं कल्प्यते किं वा वाक्यस्वरसा-
विधिपरत्वं प्रतीयते इति विकल्प्याद्यं तावत्पक्षं दूषयति * यत-
ति * द्वितीयं दूषयति * प्रतिषेधेति * यदा च पानं न वि-
ते तदा तत्र ब्राह्मणादेः सत्यपि गुणवादे ऽनुवाद्यत्वात्प्रतिषेधे
केयात्मनि गुणत्वायोगात् प्रत्युत प्रत्यवायव्यावृत्त्यानुग्राह्यत्वेन
न्याद्विधानं न सम्भवतीत्याह * तेनेति * सेदवादिमते नाद्य-
नव्यक्तौ पानस्य कर्त्तव्यत्वेनानूदितस्य प्रतिषेधः। विध्येकत्व-
इमतेन द्वितीयवचनव्यक्तौ पानं स्वरूपेणानूद्य प्रतिषेधेन विधी-
नेनेति कर्मव्युत्पन्नस्य विधिशब्दस्य प्रतिषेधशब्देन सह कर्म-
यः द्वितीयव्याख्याने प्रतिषेधस्याभावस्य विधिनेत्यर्थः। एवं
पि यदि स्त्रीकर्तृकं पानं लोके न प्राप्नुयात्ततस्तन्न निषेध्येत न
दस्तीत्याह * लोके चेति * एवमनूद्यमानः सर्वो हीति पूर्वो-
कमर्थं प्रकृते योजयित्वा तत्रानाकाङ्क्षितमित्युत्तरार्धं योजयति
न चेति * नन्वेवं तर्हि यो ब्राह्मणः पिबेत्स पुमानिति वाक्यप- १४८
गतनिषेधपरित्यागेनानुवादपदान्तर्गतसन्निकृष्टब्राह्मणपदोपात्त-
ङ्गसम्बन्ध एव केवलो विधीयतामत आह * न चास्येति * लि-
ङ्गश्रुतिवैय्यर्थ्यापत्तेरिति भावः। उपसंहरति * ततश्चेति * प्रा-
ङ्काशङ्काशेषनिराकरणावतारायो * भयत्रापीत्युक्तम् * ननु
निषेधे लिङ्गाविवक्षायां ब्राह्मणवधे ऽपि ब्रह्महत्यापत्तेर्महापातक-
मित्तकर्महान्यादिप्रसङ्गः स्यादित्याशङ्काशेषमाह * नन्विति *
त्र कुशावस्था असतीत्यात्रेयी गर्भिणी। अभ्युपगमेनैव परिहरति
ब्राह्मणेति * न च महापातकत्वे प्रायश्चित्तालपत्वं विरुध्यते पुं-
ह्मणवधे ऽपि रहस्ये प्रायश्चित्तालपत्वदर्शनादित्याह * न चेति *
पसंहरति * तस्मादिति * सुरापानस्य तु स्त्रीकर्तृकस्यापि प्राय-
श्चित्तान्तराणाम्नानाद्भिः सन्दिग्धं महापातकमित्याहिक्षत्रब्राह्मणी-
रापानस्य स्मृतिविरोधो दुःपरिहर इत्याह * सुरापाने पुनरिति*
न्वापस्तम्बेन देशव्यवस्थया विरुद्धाचारप्रामाण्याभिधानाद्देशान्त-
निवासिब्राह्मणीविषया सुरापाननिषेधस्मृतिः कल्पयिष्यत इत्या-

शङ्कामाह * यापि चेति * स्मृतिविरोधे ऽप्यतनाचारा
स्तरेणोपपाद्योपसंहरति * इतीति * एवमुत्सूत्रं पू
सदाचारप्रामाण्यप्रतिपादनपरतया ऽपि चेति सूत्रं व्य
सूत्रारूढं पूर्वपक्षं कर्तुं न शास्त्रपरिमाणत्वादिति पूर्वो
द्धान्तसूत्रमाचाराधिकरणपूर्वपक्षे ऽप्यावृत्त्या योजा
* अथ चेति * पूर्ववर्णके दुराचारसङ्करेण पूर्वपक्षा
वेदेशनिवासिशिष्टाचारोदाहरणात्सङ्कराद्यावृत्त्यर्थमार्यावर्त्त
ष्टाचाराणामेवोदाहरणत्वमाह * इहेति * अर्थकामाच
धर्माचाराणामेवोदाहरणत्वं दर्शयन्सन्देहमाह * ध
दुराचारसङ्करस्याप्रामाण्यहेतोरार्यावर्त्तनिवासिधर्माचा
न सन्देहहेतुं प्रश्नपूर्वकमाह * कुत इति * नन्विदं
कर्त्तव्यमिति सदाचाराणां विशेषरूपेणानिबन्धने ऽपि
१४३।१ प्रमाणमिति सामान्यतो निबन्धनमस्तीत्याशङ्क्ते * न
स्मृत्यधिकरणसाधितात्स्मृतिप्रामाण्यादेवाचारप्रामाण्य
त्यर्थः । अष्टकादिस्मृतीनां मूलश्रुत्यदर्शने ऽपि तदभाव
नादविरुद्धं श्रुत्यनुमानम् । आचारप्रामाण्यस्मृतौ तु
वसाधनस्य हेतोराचारमूलत्वलक्षणस्य स्मृत्यन्तरेऽप्यो
त्स्मृत्यन्तरन्यायेनाचारप्रामाण्यस्मृतिप्रामाण्यासिद्धेर्न
दाचारप्रामाण्यसिद्धिरिति परिहरति * नेति * एतदे
* शाखान्तरेति * आचारदर्शनमात्रप्रवृत्तमेवोपपादयि
नीते * यथैव चेति * उपपादयति * यदि हीति *
मूलत्वात्स्मृतेर्न्यायसाध्वसाधुतेव विचार्येत्याह * इती
हमुपपाद्य पूर्वपक्षसूत्रगतनञर्थव्याख्यानार्थं सिद्धान्तेनो
क्तेति * विरोधाधिकरणे विरुद्धस्मृतिप्रामाण्यापवादेन
तिप्रामाण्यं निरपवादमुक्तमिति मत्वा द्व्यवलेनेत्युक्तं प्र
क्रमः वसन्तात्करोतेः कारशब्दं व्यापारवचनं व्युत्पाद
स्तीति मत्वर्थीयेनिप्रत्ययान्तस्य कारिशब्दस्य कर्तृवचनत्वा
तैस्तुल्याः कर्तार एषामिति विग्रहः कार्यः । मन्वादिभिः
श्रुतिदर्शने ऽपि तदर्थस्य शिष्टव्यवहारादेव सुज्ञानत्वेन
पपत्तेः स्मृतितो ऽप्याचारप्रामाण्यं सिध्यतीत्याह * स्मृ
उपक्रान्तसिद्धान्तनिराकरणार्थत्वेन पूर्वपक्षसूत्रमवतार्य
मध्याहारेण पूरयति * तदिति * व्याचष्टे * शास्त्रो
ष्ठीसमासाभिप्रायं कर्मव्युत्पत्तिप्रदर्शनं बहुव्रीहौ तु भाव
षष्ठीसमासेन वाक्यव्याख्यानातिरिक्तत्वेन शाक्यादिम्रक्

प्यनेनाप्रामाण्यमुच्यतइत्यन्यथा व्याचष्टे * परिमितानि चेति * १४
; शब्दात्मकानामेव शास्त्राणामियत्तानियमादशब्दात्मकस्यापि स-
वारस्य पुरुषहितबोधकत्वाच्छास्त्रत्वं भविष्यतीत्याशङ्क्य स्वरसे-
त्वेषां धर्मबोधकत्वमाचारश्चैव साधूनामिति स्मृत्यनुसाराद्वेति
कल्प्याद्ये पक्षे स्वरूपेण तावदाचारस्य क्रियारूपस्याबोधकत्वाच्छा-
त्वमनाशङ्क्यमेवेत्याह * न चेति * ननु स्वरूपेणाबोधकत्वे ऽपि
ष्टानुष्ठानदर्शनादस्मदादीनां धर्मबुद्ध्युत्पत्तेस्तद्द्वारेण शास्त्रत्वं
वेष्यतीत्याशङ्क्याह * नापीति * शिष्टानुष्ठानान्यथानुपपत्त्या-
ण्यस्योत्सवादेर्धर्मत्वं कल्प्यं भ्रान्त्यादिनापि त्वनुष्ठानोपपत्तेर्नैका-
तः शिष्टैरनुष्ठीयमानस्याचारस्यास्मदादिभिर्दर्शनं शिष्टाचारानु-
नं वा धर्मत्वं कल्पयितुं शक्यं विशेषतश्च दर्शनस्यानुष्ठानमात्रा-
वधायित्वेनात्यन्तपरायतत्वादनुष्ठानस्य च प्रमेयत्वादबोधकत्वा-
त्यर्थः। द्वितीयपक्षे दूषणमाह * स्मृतेस्त्विति * तृतीयप्रका-
। व्याख्यातुं विकल्पयति * किं चेति * एकश्रुत्यनुमानासम्भवं
वदुपपादयति * न तावदिति * अनेकश्रुत्यनुमानासम्भवमप-
मितानां पाठाशक्तेरपठितानां च मूलत्वासम्भवेनोपपादयति
यावदाचारं हीति * तुशब्दार्थे हिशब्दः। ननु सर्वाचाराणामे-
श्रुतिमूलत्वासम्भवे ऽप्येकदेशादिगतानां भिन्नानामप्येकमूलत्वो-
त्तेरनेकश्रुत्यनुमाने ऽप्यल्पत्वान्न वेदसम्मितिश्रुतिकल्पनापत्ति-
त्याशङ्क्याह * एकस्य त्विति * एकदेशादिगतानामप्यनेकेषामे-
पलक्षणाभावान्नैकमूलत्वोपपत्तिरिति भावः। अभ्युपगम्याप्य-
त्वेन शक्यपाठत्वमनिबन्धनामूलदर्शनाभावो ऽवसीयतइत्याह
न चेति * ननु प्रत्यक्षोपलम्भाभावे ऽप्याचारदर्शनादेव तत्तदा-
रमूलभूताः श्रुतीरनुमायान्येषामपि तथैव श्रुत्यनुमानसिद्ध्यर्थं
मान्यमात्रेणाचारप्रामाण्यमुपनिबद्धमित्याशङ्क्याह * न चेति *
लत्वेनाचारस्य बलवत्त्वोपपत्तेर्मूलित्वेन च स्मृतेर्दौर्बल्यापत्तेर्वे-
माणं स्मृतिबलीयस्त्वं विरुध्येतेत्याशयः। मूलमूलिभावस्य ब-
बलभावस्य च विपर्ययप्रसङ्गादिति वा योज्यम्। अस्मिन्नेवार्थे
स्त्रस्य परिमितस्य स्तोकस्यैवानुमातुं शक्यत्वादितिसूत्रं योजयति
अत इति * ननु बहूनामप्याचाराणामेकैव स्मृतिः सरूपाश्रुतिर्मू-
भूतानुमास्यते ऽत आह * न चेति * न केवलमाचाराणां श्रुतिमू-
त्वाभावप्रसङ्गः किं तु श्रुतेरेवाचारपूर्वकत्वापत्तेर्विपर्ययो ऽपि प्र-
ज्येतेत्यर्थः। एतदेवोपपादयति * शिष्टाचार इति * एतमेवा-
मर्थान्तरन्यासेन दर्शयितुं शास्त्रशब्दे शास्त्रीयमर्थं लक्षयित्वा तस्य

१।३।५।१ परिमितत्वादल्पत्वादिति चतुर्थं व्याख्याप्रकारमाह * शास्त्रे
यद्वा शास्त्रीयस्यार्थस्य परिमितत्वात्कतिपयत्वान्मानान्तरागो
दिति वदतानेन सूत्रेण परिमिते मानान्तरागोचर एवार्थे शा
क्ते सदाचाराणां तु शिष्टव्यवहारादेव सिद्धत्वेन मानान्तर
त्वान्न शास्त्रविषयत्वं सम्भवतीत्युक्तमिति पञ्चमं व्याख्य
माह * परिमितेति * एतमेवार्थमुपपादयितुं गृहस्थादि
मशास्त्रीयत्वप्रतिपादनार्थस्याशास्त्रा रूपसम्प्राप्तिः शास्त्रं
लपकं तस्मादर्थेन गम्येताप्राप्ते शास्त्रमर्थवदित्यस्य पष्ठाध्य
सूत्रस्यैकदेशं पठति * अप्राप्ते इति * मानान्तरगोचर
सुखाङ्गत्वेन द्रढयति * दृश्यमानेति * अर्थसुखाङ्गानां धर्म
दृष्टान्तमाह * वैश्यानामिति * पूर्वपक्षमुपसंहरति *
ति * शीलात्मतुष्टिग्रहणेन तयोरपि तुल्यन्यायत्वाद्विचा
दर्शितं स्वभावरचितं शीलं निषेधस्याश्रौतत्वे नञो सामञ्ज
परितोषात् सिद्धान्तोपक्रममपि सूत्रारूढं कर्तुमुपक्रमते *
अस्मिंश्च पक्षे शिष्टाकोपसूत्रमप्यावृत्त्या वेदाविरुद्धशाक्य
विषये पूर्वपक्षसूत्रत्वेन शिष्टाचारविषये च सिद्धान्तोप
योज्यं द्वितीयवर्णकवदत्राप्यार्यावर्तनिवासिशिष्टाचारण
रणत्वमनिबन्धनत्वकर्तृसामान्यरूपधर्मद्वयदर्शनं च सन्देह
प्रयोजनामात्रमतिरिक्तमिति दर्शयन् सिद्धान्तोपक्रमं सू
रोति * इहेति * तलाकोपाविरुद्धशब्दयोः पौनरुक्त्या
नाविरोधो ऽभिहितो द्वितीयेन प्रामाण्यमिति स्वरूपतस्त
* तथा हीति * नन्वविरोधे ऽप्याचाराणां विद्यास्थाना
च्छाक्यादिग्रन्थवदप्रामाण्यं भविष्यतीत्याशङ्क्य स्मृतिका
तिरेकस्यादोषत्वं दर्शयितुं विरोधे सत्येवाप्रामाण्यं स्या
परतया व्याचष्टे * यद्वीदि *

॥ शास्त्रप्रसिद्धपदार्थप्रामाण्याधिकरणम् ॥ ५

## समा विप्रतिपत्तिः स्यात् ॥ ८ ॥

शिष्टाकोपाधिकरणे पूर्वपक्षोक्तं विरोधमभ्युपेत
बलीयस्त्वमात्रेण सिद्धान्ते विरोधादर्शनस्यावक्तव्यत्व
दिति सूत्रावयवस्य पूर्वशेषत्वानुपपत्तेरुत्तरसूत्रशेषत्वं
ऽङ्गीकार्यमित्याह * तेष्विति * अत्र भाष्यकृता सौत्रसि
द्व्याख्यार्थं यवमयश्चरुरित्यादिवाक्यगतान्येव वराहवे

१ तेषु नदर्शनाविरोधस्येति उपक्रमं सूत्रं वेति वार्त्तिकम् ।

[त्य वाच्यविषयप्रयोगे विप्रतिपत्तिरुक्ता तत्रास्य विप्रतिपत्त्यभि-
ास्य किं प्रयोजनं का च विचारसङ्गतिरित्यपेक्षिते साधितप्रामा-
शिष्टाचारबलाबलविचारात्मकत्वेन सङ्गतिं सूचयन्विचारविष-
दर्शनप्रयोजनमाह * शब्देति * शब्दस्यार्थविषयः प्रयोगः
वासौ शिष्टाचारश्च तस्मिन् विप्रतिपत्ताविति विग्रहः भाष्यकृ-
ा ख्याने ऽपि स्मृत्यधिकरणएवाचारप्रामाण्यस्यापि व्युत्पादि
ांद्विरोधाधिकरणे तस्यापि स्मृतिवद्वेदविरोधविषये प्रामाण्ये
दिते शिष्टाकोपाधिकरणे च क्रत्वङ्गपदार्थविषयाचाराणां क्रमा-
रोधाद्विरोधे ऽपि वा प्रमेयबलीयस्त्वादनपवादे ऽभिहिते सम्प्र-
चारयोरेव परस्परविरोधे किं बलाबलविरोधो ऽस्तु न वेति
न्तासङ्गतैवेत्याचारशब्देन सूचितम् । व्युत्पादितप्रामाण्यस्य शि-
ारस्यैव बलाबलचिन्ता युक्ता नाव्युत्पादितप्रामाण्यस्य म्लेच्छाचा-
ति मत्वोद्भाष्यमपि शिष्टाचारविषयत्वं चिन्तायाः शिष्टशब्देन
चितं कीदृशः सन्देह इत्यपेक्षायामाह * एकशब्दमिति * एकः
ो ऽस्मिन्ननेकार्थो ऽस्मिन्निति द्वावपि बहुव्रीही । आचर्यतइति
ोत्पन्नलकारान्तेनाचरणं क्रियतइत्युक्तम् । आचरणमन्यपदा-
। अक्षादिशब्दवैलक्षण्यप्रतिपादनार्थविप्रतिपत्तिशब्दव्याख्याना-
[ * विगानेनेत्युक्तम् * को ऽर्थ इति किं द्वावप्युतैक एवेत्यर्थः ।
शास्त्रानुसारिशिष्टव्यवहारावगतस्यैव वाच्यत्वनिर्णयात्सन्देहो न
क इत्याशङ्क्याह * यवेति * अविद्यमानप्रयोगारोपसूचनार्थः १४
लशब्दः वाच्यवाचकसम्बन्धे शास्त्रस्याव्यापारसूचनाय * अनिरू-
तेत्याद्युक्तम् * समेति पूर्वपक्षप्रतिपादनार्थसूत्रावयवव्याख्यानार्थं
ति भाष्यं व्याचष्टे * तत्राहेति * भाष्ये च विकल्पशब्देन
तेज्ञानार्थत्वमुभयथेत्यनेनास्यैवावृत्त्या हेत्वर्थत्वं व्याख्यातमिति सू-
यितुम् * तुल्यत्वादित्युक्तम् * सर्वलोकस्थानां प्रयोगिणा-
त्यर्थः । तुल्यत्वमेवोपपादयति * यवेति * नन्वेवमपि देश-
वस्थया वाच्यव्यवस्थोपपत्तेः समविकल्पो न युक्त इत्याश-
ाह * तस्याश्चेति * तस्मिन्सर्वगामित्वे न्यायो युक्तिर्यस्याः
केरस्ति सा सन्न्याया तद्भावस्तन्न्यायत्वम् । कीदृशो न्याय इत्यपे-
ायामाह * नैकेषामिति * एकस्यैव वस्तुनः सदसत्त्वविरोधादि-
ाशयः । एवं तर्हि सर्वान्प्रत्यसत्त्वमेवास्त्वित्याशङ्क्य सत्त्वे कस्य
ग्रहदर्शनानुपपत्तेर्निराकरोति * केषां चिद्वेति * सर्वेषामपि पुंसां
ाचकशक्तिर्न विद्यतइत्येतदपि नास्तीत्यर्थः । ननु सदसत्त्ववदेकस्य
ाताज्ञातत्वविरोधो ऽपि स्यादित्याशङ्क्य ज्ञानव्याप्यत्वाव्याप्यत्वोपा-

धिकत्वादज्ञाताज्ञातत्वयोर्ज्ञानस्य च पुरुषाश्रितत्वेन तद्भेदे
त्वाविरोधान्निराकरोति * ज्ञातेति * शक्तेः सर्वगामित्वमु
मुपसंहरति * तस्मादिति * नन्वदृष्टदोषाविकल्पापादकमने
कल्पनमन्याय्यमेवागृह्यमाणविशेषत्वेनागत्या क्व चिद
इह तु प्रयोक्तुरल्पत्वबहुत्वविशेषग्रहणान्नानेकशक्तिकल्पनं
त्याशङ्क्याह * न चेति * दृष्टान्तं व्याचष्टे * विभीतक
एकदेशप्रयुक्तानामपि शब्दानां सर्वगामित्वं निरुक्तकृद्व्यचष्टेन
* तथा चेति * प्रकृतय एवैकेषु जनपदेषु प्रयुज्यन्ते विकृत
केष्वित्युपक्रम्य निरुक्तकृता शवतिर्गतिकर्मा कम्बोजेष्वेव
विकारमस्यार्या भाषन्ते शवतात्युक्तं तदर्थतः पठितं कम्ब
जनपदविशेषेषु शवतिर्धातुर्गतिवाची दृष्टः गच्छतीत्यस्मिन्न
तीति प्रयोगात् । आर्यास्तु जनपदविशेषाः क्रुद्दोरावित्यप्र
त्वेन विकारापन्नं शवतिधातुं न गतौ युञ्जते । शवशब्देन
भिधानादित्यर्थः । महाभाष्यकृता तु विकारापन्नमार्या
तिं पाठान्तरमुदाहृतम् । तत्र मृतावस्था विकारशब्देनोक्ता
शवतिरेव देशविशेषे व्यवस्थितः किं त्वन्ये ऽपि बहवो
नामशब्दाश्च व्यवस्थिता एव प्रयुज्यन्ते * इत्यादीति *
हि जनपदेषु दातिर्धातुर्लवनार्थो दृश्यते लुनातीत्यस्मिन्नर्थे
प्रयोगात्तमेव दात्रमिति ष्ट्रन्प्रत्ययान्तत्वेन विकारापन्नकृ
प्रयुञ्जते ।

प्राच्येषु गच्छतीत्यर्थे मध्यमेषु वरं हति ।
हन्ततिश्च सुराष्ट्रेषु गमिस्त्वार्येषु भाष्यते ॥
महाभाष्यकृतैते ऽन्ये प्रतिदेशे व्यवस्थिताः ।
उदाहृता धातवो ऽतो आदिशब्दस्तदाशयः ॥

पूर्वपक्षमुपसंहरति * तस्मादिति * तेष्वदर्शनादित
सूत्रं समेत्यस्य प्रतिज्ञामात्रार्थत्वादुभयशब्दार्थावगम इत्य
ष्विति सूत्रावयवो हेत्वर्थेन योजितः तद्व्याचष्टे * एवं च
प्रकृतिवदिति हि चोदकेनार्षे समाम्नायावगतमेव मन्त्ररूपमति
ते कार्यप्राधान्यात् तदसम्भवे व्रीह्यादिशब्दस्थाने नीवारादि
हेनान्यथात्वं कल्प्येत साधारणशब्दे च न तत्कल्पनापत्तिः
किमिति विकृतिविषयत्वेनायं सूत्रावयवो व्याख्यात इत्यपेक्षि
तौ विप्रतिपत्तिदर्शनेनाविरोधायोगादिति कारणमाह * तेषि
एतदुपक्रमत्वस्यानभिमतत्वद्योतनार्थं पूर्वोपक्रमाभिप्रायेण
त्यस्यैवावृत्त्या हेत्वर्थत्वं दर्शयन्नुपसंहरति * तस्मादिति

स्था वा तन्निमित्तत्वादिति सिद्धान्तसूत्रं स्वयं तावदवतारणपूर्वकं
ाचष्टे * इतीति * वाशब्देन साम्यं निराकृत्य पूर्वसूत्रगतस्याच्छ-
ानुषङ्गेण शास्त्रस्था स्यादित्युक्ते तस्या एव बलीयस्त्वमर्थादुक्तं
वतीति मत्वा * बलीयसीत्युक्तम् * शास्त्रानुसारावगतशब्दा- ११
ातगुणयोगनिमित्तत्वेनाप्यर्थान्तरप्रतीत्युपपत्तेर्नोभयत्र शक्तिः
ल्प्येत्येवमर्थत्वेन तन्निमित्तत्वादिति सूत्रावयवं व्याख्यातुम् *
किकीत्युक्तम् * एतदेव विवृणोति * नानेति * भाष्यकृता त्वे-
स्यापि वाच्यत्वे तत्सादृश्येनेतरप्रतीत्युपपत्तेर्नोभयोः साम्यं क-
यमिति वाशब्दं व्याख्याय कः पुनरित्यादिना शास्त्रस्थेति तिष्ठत्या-
ःथा शिष्टपरत्वेन शास्त्रस्थशब्दो व्याख्यातः तन्निमित्तत्वादिति च
र्ां शिष्टानां श्रुतिधारणवच्छब्दार्थस्मृतिधारणवच्छब्दार्थस्मृतिधा-
णनिमित्तत्वादित्येवं तेषामित्यादिना व्याख्याय शास्त्रनिमित्तत्वा-
छ्ष्टगतायाः प्रतिपत्तेरिति तस्यैवावृत्त्या[1] ते चैवमित्यादिना व्याख्या-
नन्तरं तत्र शास्त्रस्थशब्दव्याख्यानार्थं तावद्भाष्यं व्याचष्टे * शास्त्र-
ाद्धति * तेषामित्यादिभाष्यं व्याचष्टे * सप्रत्ययेति * सप्रत्ययत-
त्वं तेषामुपपादयति * शास्त्रार्थेष्विति * शिष्टानां प्रत्ययिततर-
ोपपादनस्य प्रकृतोपयोगमाह * तस्मादिति * ननु शिष्टप्रतिपत्ते-
लीयस्त्वे ऽप्यविरोधादर्थान्तरस्यापि वाच्यत्वे भविष्यतीत्याशङ्का-
राकरणार्थत्वं द्योतयितुं यवशब्द इत्यादि वाशब्दव्याख्या भा-
ाभिप्रायमिदानीं व्याचष्टे * अनवस्थितेति * ते चैवमित्यादिभा-
ं व्याचष्टे * अविप्लुतश्चेति * ननु वाक्यशेषकृतस्य निर्णयस्य
चमयश्चरुरित्यादिषु वाक्यशेषरहितेष्वसम्भवात्प्रस्तुतोदाहरणग-
शब्दार्थनिर्णयो न सम्भवतीत्याशङ्क्याभिधेयनिर्णयस्यैकत्र कृत-
ाविशेषात्सर्वत्र निर्णायकत्वं वक्ष्यमाणमभिप्रेत्य परिहरति * त-
ति * भाष्यकारीयस्य करम्भविधिशेषत्वाभिधानस्य विध्यन्त-
शेषत्वव्यावृत्त्यर्थत्वशङ्कानिराकरणार्थं विध्यन्तरं दर्शयति * यव-
तीभिरिति * दीर्घशूककानिति भाष्यमुपपादयति * फाल्गुन इति *
स्माद्वराहमित्यादिवराहवेतसशब्दार्थनिर्णयार्थं वाक्यशेषान्तरो-
न्यासभाष्यं व्याचष्टे * एवमिति * त्रिवृदादिशब्दाभिप्रायं बहु- १
चनम् । व्युत्पादितप्रामाण्यस्य शिष्टाचारस्यैव परस्परविरो-
र साम्यवैषम्यचिन्ता युक्ता । नाव्युत्पादितप्रामाण्यस्य म्लेच्छा-
ारस्य न कचित् शिष्टदेशे यवादिशब्दः प्रियङ्ग्वादिषु
ायुज्यत इति मत्वोदाहरणानि दूषयति * नन्वेतानीति *

१ तस्यैवावृत्त्येति २ पु० ना०

नन्वेतदुदाहरणासम्भवे ऽप्युदाहरणान्तरेषु न्यायस्य फल
पलेऽस्मदुदाहरणदूषणमयुक्तमित्याशङ्क्याह * अध्यारोप्येति
दाहरणान्तरसम्भवे तदेवोदाहार्यं न त्वसदध्यारोपो युक्त
त: । न चोदाहरणान्तरे ऽप्ययं न्यायो व्युत्पाद्यान्यत्र व्युत्पा
भावान्न्यायादित्याह * सन्दिग्धेषु चेति * न केवलं यवाद्यु
णानि न कार्याणि किं तु विचारणापि न कार्येत्यपि शब्दो
यवाद्युदाहरणाभावात्तावन्न कार्या पौनरुक्त्यादपीति । ननु
नानिर्णयाद्वाक्यशेषबलाच्चैकत्वं घृतोपादानानिर्णये ऽन्यत्र
शेषाभावे ऽपि तदेवोपादेयमिति नियमाभावादिह त्वभिधेय
रूपस्य चाभिधेयत्वेन निर्णीतस्यान्यत्रापि तद्रूपत्यागायोगात्
भिधेयत्वनिर्णयः इत्यपौनरुक्त्यमाशङ्क्य न्यायफलवैषम्ये ऽपि
क्नृप्त्यैकविषयत्वनियमात्स्तुत्यस्यैव विधेयत्वमिति व्युत्पाद्य
रूपैक्यादपरिहार्यं पौनरुक्त्यमित्याह * यद्यपीति * ननु न
नमुककादीनां यवादिशब्दवाच्यत्वसन्देहो निराक्रियते किं तु
कादिवत्प्रियङ्ग्वादीनामपि प्रतीतिप्रयोगान्यथानुपपत्त्या प्रस
क्तना गौणत्वेनापि प्रतीतिप्रयोगोपपादनेन निराक्रियते नास
निराकृतेत्याशङ्क्याह * तत्सिद्धिसूत्रे चेति * गौणत्वसम्भ
प्रतीतिप्रयोगमात्रेण प्रसिद्धार्थत्यागेनाप्रसिद्धार्थकल्पने जह
निवारयितव्यं स्यात्तस्य च तत्सिद्धिसूत्रे निराकरिष्यमाणत्वात्
पौनरुक्त्यं स्यादित्याशयः । एव शिष्टाचारयोरेव परस्परविरो
वाक्यशेषानुसारिणः शब्दार्थविषयप्रयोगरूपस्य शिष्टाचारस्य प्रा
मितरस्य गौणत्वेनाप्युपपत्तेरप्रामाण्यमिति भाष्यार्थं मत्वोदा
भावात्पौनरुक्त्यापत्तेश्च दूषयित्वेदानीमार्यम्लेच्छाचारयोरिह
वैषम्यचिन्ता वाक्यशेषनैरपेक्ष्येण च निर्णय इत्यभिप्रेत्य स
* तस्मादिति * वाक्यशेषनैरपेक्ष्यद्योतनार्थमन्यग्रहणं न तु
विशब्दोदाहरणनिराकरणार्थम् । अनन्तदेशग्रहणेन सर्वदे
णामावस्य केनापि निश्चेतुमशक्यत्वाद्भाष्यकृद्वचनाच्चार्यदेशप्र
भावे ऽपि म्लेच्छदेशे क्वापि प्रयोगो ऽस्तीति निश्चयोपपत्तेः ।
व्युत्पादितप्रामाण्यस्यापि म्लेच्छाचारस्यानन्तराधिकरणे शब्द
पर्य व्युत्पादयिष्यमाणप्रामाण्यस्य वक्ष्यमाणालोचनेन विचारो
भाष्यकृतापि शास्त्रस्थशब्दं शिष्टाभिप्रायं व्याचक्षाणेनार्यम्लेच्छ
योरेवात्र साम्यवैषम्यचिन्तेति सूचितमित्यविरोधः । वाक्
पर्यासस्त्वतिशयार्थः । तत्सिद्धिसूत्रस्य च गौणवृत्तिलक्षणा
त्वान्न तेनापि पौनरुक्त्याशङ्केत्यनवद्यम् । ननु म्लेच्छाचार

ाथाभावाच्च साम्येन पूर्वपक्षः सम्भवतीत्याशङ्क्याह दृष्टार्थव्यवहारे-
ार्यम्लेच्छयोर्विशेषाभावान्निराकुर्वन्पूर्वपक्षयति * समेति * प- १
देव विवृणोति * आर्यास्तावदिति * आर्यम्लेच्छानां प्रयोगिणा-
गति विग्रहः। तुल्यत्वोपपादनायोत्तराधिकरणसिद्धं शब्दार्थवि-
ये म्लेच्छाचारस्यापि प्रामाण्यं दर्शयति * सर्वो हीति * आर्य-
ुक्तवत् म्लेच्छप्रयुक्तस्यापि शब्दस्यार्थप्रत्ययाङ्गत्वप्रदर्शनार्थः सर्व-
दः। ननु गाव्यादिशब्दस्यावाचकस्याप्यर्थप्रत्यायकत्वदर्शनान्न त-
ात्रेण म्लेच्छप्रसिद्धेरर्थान्तरे यवादिशब्दानां वाचकत्वशक्तिः क-
यितुं शक्येत्याशङ्क्याह * तत्रेति * शक्तेः कारणाश्रितत्वाद्-
ात्ययकारणस्य च गाव्यादिशब्दस्यादिमत्त्वेनानादिशक्त्याश्रयत्वा-
गादवाचकत्वं युक्तं यवादिशब्दस्य तु यादृशस्यार्यैः प्रयोगस्तादृश-
ा म्लेच्छैरित्यविशिष्टत्वेनानादित्वावधारणेनानादिशक्त्याश्रयत्वो-
त्तेर्नाविद्यमानशक्त्यारोपकल्पनाक्लेशो युक्त इत्यविशिष्टशब्देन सू-
तम्। नन्वनादित्वेऽपि यवादिशब्दार्थसम्बन्धानवस्थितत्वादिदो-
ात्तेरेकस्थानेऽनेकशक्तिकल्पनायोगाच्च म्लेच्छप्रसिद्धेऽर्थेऽनादि-
नर्थकल्पनमित्याशङ्क्याह * यथैव हीति * अगृह्यमाणविशे-
ादक्षादिशब्दवदगत्याऽप्यनेकशक्तिकल्पनं युक्तमित्याशयः।
ाशिष्टत्वमेवोपपादयति * नेति * ततश्च प्रयोगाव्यवदर्शनादा-
ेच्छप्रसिद्धार्थविषययोः शब्दशक्त्योरनादित्वात्कथं विशेषोऽवग-
ामित्यर्थः। न च म्लेच्छसम्बन्धमात्रं शक्त्यभावे कारणमिति
त्तेनोपपादयति * यथैवेति * म्लेच्छैः स्वार्थे प्रयोगात्तस्मि-
र्थे शब्दो वाचकः परीक्षकाणामिष्ट इति योज्यं मुख्यत्वेनैव प्रयो-
ेणत्वशङ्कानिवृत्त्यर्थः स्वशब्दः पूर्वपक्षमुपसंहरति *तस्मादिति*
ग्रशेषनैरपेक्ष्यप्रदर्शनार्थमुदाहरणान्तरं, ननु यवाद्युदाहरणाव्या-
र्थमित्युपपादितमेव। उत्तरसूत्रेण सिद्धान्तमाह * इतीति *
स्याः पुरुषार्थेवेति भाष्यानुसारिव्याख्याभिप्रायः पूर्ववच्छब्दः॥
ाशेषस्त्वतिशयार्थं भाष्यकृतोक्तो न निर्णायकत्वेनेत्यविरोधः श-
भ्रंशवच्चार्थापभ्रंशस्याप्युपपत्तेर्न प्रतीतिप्रयोगमात्रेणैकान्ततः स-
ार्थानामेकस्माच्छब्दात्प्रतीयमानानां वाच्यत्वनिर्णयः सम्भव-
कल्पनालाघवादेकस्यैव वाच्यत्वे निर्णीते कस्यैकस्येत्यपेक्षायां
ानामभिधेयाभियोगाविशेषात्तत्प्रयोगवशेन वाच्यत्वावधारणा-
व्याख्यान्तरमाह * चेति* यथा गाव्यादिषूत्तमवृद्धेन प्र-
ाशक्त्या वोच्चारितेषु साध्वनुरूपत्वात्तदनुमानेन साधु-
मर्थं मध्यमवृद्धस्य प्रतिपादयत्सु व्युत्पित्सोर्वाचकत्वभ्रा-

न्निर्णीयते तथा म्लेच्छैर्गौण्यावृत्त्या भ्रान्त्या वा
र्थे पील्वादिशब्देन प्रतिपादिते व्युत्पत्सोर्वाच्यत्व
यतइत्यर्थः । एतदेव विवृणोति * शब्देति * उपसंहरति
१५७।१ ति * अस्यां च व्याख्यायामार्यप्रयोगयोरपि परस्परावि
युक्ततरबलीयस्त्वं सिद्ध्यतीत्यादि * एतेनेति * इदानीं
ष्य स्मृत्याचारयोर्विरोधे किं द्वयोस्तुल्यत्वमाचारो व
स्मृतिर्वेति त्रेधा सन्दिह्य साम्यपक्षे समा विप्रतिपत्तिः
तावत्सूत्रं योजयति * स्मृतीति * पक्षद्वयोद्देशार्थो वे
तेष्वदर्शनादित्युपक्रममाचारबलीयस्त्वे योजयति *यद्वे
माशयः । शिष्टपरिग्रहदार्ढ्येनोभयोर्भ्रान्त्यादिमूलत्वास
थ्यात्वलक्षणस्तावद्बाधो न युज्यते किं तु यथा प्रत्यक्ष
थावदेकं श्रुतौ कर्मेत्यादिना स्मृतेरनुष्ठानाख्यफलापहारः
बाधो मूलश्रुतिदर्शनं यावदुक्तस्तथात्रापि वाच्यः । न चा
कस्याचारस्यासौ सम्भवतीति । नन्वाचारस्यापि स्मृतिव
मानेनैव प्रामाण्यं न स्वातन्त्र्येण । न च स्मृत्याचारानुमि
त्योर्बलाबलविशेषो ऽस्तीत्याशङ्क्याह * श्रुतिरिति * स
त्मकत्वेनानेकरूपार्थप्रतिभाने प्रत्यक्षश्रुत्याविरुद्धार्थप्रतिप
तिकल्पनेन यथाश्रुतार्थत्यागलक्षणो बाधो युक्तः आचा
क्यात्मकत्वेनान्यथात्वकल्पनायोगाद्यथाशिष्टैरनुमीयते
यमित्यनुष्ठानाख्यफलानिष्ठैव श्रुतिः कल्प्यतइत्याशयः । ए
वृणोति * यावद्धीति * अस्मिन्पक्षे तेष्वाचारेषु स्मृति
नुमानात्प्राग्विरोधादर्शनात्प्रतिष्ठितेषु बाधासम्भवाद् बल
तावद्युक्तं तदनङ्गीकरणे वरं साम्यमस्तु न त्वाचारस्य द
ति सूत्रं योज्यं, द्विविधमपि पूर्वपक्षमुपसंहरति *तेनेति*
वेति सूत्रेण सिद्धान्तमाह * स्मृतीनां वेति * स्मृत्यभि
त्रशब्द इत्याशयः । तन्निमित्तत्वादिति शास्त्रत्वसामान्येन
छेदाख्यं शास्त्रं तच्छब्देन परामृश्य श्रुतिमूलत्वं हेतुरुच्यते
योः स्मृत्यधिकरणे प्राप्तं विरोधे पुनरुच्यमानमाचाराणां
त्वपरिसंख्यार्थं तत्रोभयोः श्रुत्यनुमापकत्वाविशेषे विः
स्मृतेरेव श्रुतिमूलत्वं नाचारस्येति कथमवसीयतइत्यपे
* उभयोरिति * असाम्यमुपपादयति * सप्रत्ययेति *
ब्देन ज्ञानं विश्वासो वा ऽभिधीयते ऋषित्वाच्च मन्वादेः
तधर्माण ऋषय इति स्मृतेः सकलधर्मतत्त्वज्ञानसम्पन्नत्व
दाचार्यवचः प्रमाणमिति च श्रुतेर्धर्मप्रवक्तृत्वेनावधारिता

न्वादेः सत्यवादित्वावगमादप्रतारकत्वेन विश्वास्यत्वात्तत्प्रणीतायाः स्मृतेर्वेदविरोधे ऽपि श्रुतिमूलत्ववारणाशक्यत्वस्योपपादितत्वादाचारविरोधे का कथेत्याशयः । अर्वाचीनानां तु सकलधर्मतत्त्वज्ञानाभावात्प्रमादादिसम्भवाच्च तदाचारस्य श्रुतिमूलत्वकल्पने श्रुतिस्मृतिविरोधो विघ्नकारीत्यर्थादुक्तं लिङ्गवाक्यवच्च सन्निकर्षविप्रकर्षविशेषादपि स्मृत्याचारयोर्बलाबलविशेषो ऽवसीयतइत्याह * आचारात्त्विति * च शब्दार्थे तुशब्दस्मृतेर्वा साक्षाच्छ्रुतिकल्पनत्वद्योतनार्थः । ननु स्मृतिवदाचारस्यापि साक्षाच्छ्रुतिमूलत्वोपपत्तेः क्रमन्तरा स्मृतिकल्पनेयत्याशङ्क्याह * न हीति * अयमाशयः तदानिन्तनानां मन्वादिवत्सकलवेदार्थतत्त्वज्ञानमस्ति यतस्तदाचारस्य साक्षाच्छ्रुतिमूलत्वं सम्भाव्यतएवं सत्यपि यद्येकैव काचिच्छ्रुतिः सर्वाचाराणां मूलभूता स्यात्ततस्तस्याः कथं चित्तात्पर्यावधारणासम्भवात्साक्षादिदानीन्तनपुरुषाचारमूलत्वं सम्भाव्येत न त्वसौ * सम्भवतीत्युक्तम् * यद्यपि सदाचारः प्रमाणमिते स्मृत्यनुरूपैका श्रुतिः कल्प्येत तथापि तस्याः सिद्धाचारानुवादेन प्रामाण्यप्रतिपादनमात्रपरत्वेनाचारप्रवर्त्तकत्वाभावान्मूलत्वं न सम्भवतीति दर्शयितुम् * प्रवर्त्तिकेत्युक्तम् * यत्तु यद्वाशिष्टात्मतुष्टीनामित्यादिनाशिष्टानुष्ठानमात्रेणाचारादीनां श्रेयःसाधनत्वान्न विधायकश्रुत्यपेक्षेत्युक्तं तच्छ्रुतिस्मृतिविहितो धर्मस्तदलाभे शिष्टाचारः प्रमाणमिति वशिष्ठवचनपर्यालोचनया मानवीयस्यापि वेदो ऽखिलो धर्ममूलमिति स्मृत्याचारादिष्वनुषक्तस्य धर्ममूलशब्दस्य ।

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥

इति लक्षणशब्दस्य च प्रमाणपरत्वावसायात्प्रौढिमात्रमित्यवगम्यते । भिन्नानामप्याचारमूलभूतानां श्रुतीनां मिलितानामेकत्र पाठे तात्पर्यावधारणं सम्भाव्यते तासां तु नानाप्रकरणस्थानां विध्यन्तरशेषत्वेन पठितानां पुरुषधर्माचारविधिपरत्वस्याल्पप्रज्ञैरिदानीन्तनैर्निर्णेतुमशक्यत्वाच्छिष्टाचारपारम्पर्यस्मृत्यैव कस्य चिद् बहुवेदविदः प्रज्ञातिशयसम्पन्नस्याचारमूलश्रुतितात्पर्यावधारणमासीदिति कल्पयित्वेदानीन्तनशिष्टप्रवृत्तिर्भवति स्मृत्या व्यवायः श्रुतिकल्पनस्येति विप्रकीर्णत्वमुपपादयति * नेति * विध्यन्तरशेषत्वेन स्तुतिमात्रत्वेनावभासमानस्यापि सिद्धवत्सङ्कीर्तनान्यथानुपपत्तिप्रापकविध्याक्षेपकत्वकल्पनाक्लेशः कथं चिच्छब्देनोक्तः । आचारमूलश्रुतीनां तात्पर्यावधारणक्लेशप्रदर्शनार्थमुदाहरणानि दर्शयन्नाह

धारणपूर्वकभोजनाचारमूलभूतां तावच्छ्रुतिमुदाहरति *
नि * क्रत्वर्थत्वशङ्कासूचनार्थः प्रकरणोपन्यासः स्तुतिमा
त्रार्थं विध्यन्तरशेषत्वोपन्यासः । एकेन परिगृह्येतरेणाश्नी
यः । कथं तस्याचारपरविधिपरत्वनिर्णय इत्याशङ्क्य *
न्याय्यकम् * नन्वन्नस्कन्दनशङ्कापरिहारार्थत्वेन पात्रधार
णस्यानुवादोपपत्तेर्नात्र विधिः कल्पनीयोऽत आह *
इति नम्यक्पात्रप्रतिष्ठापनेनाप्यन्नस्कन्दनशङ्कापरिहारोप
पत्तौ विधिः सम्भवतीत्याशयः । स्वभावात्प्रयोजनवश
नियता प्राप्तिः स्यान्न त्वेतदुभयमप्यत्रास्तीति दर्शयितुं वैषम
न्यम् । दक्षिणहस्तभोजनाचारमूलभूतां श्रुतिमुदाहरति
मिति * स्त्रीणां पूर्वं सव्याक्ष्यं जनाचारमूलमुदाहरति *
शेषिभूतविध्यन्तरोपन्यासस्य प्रयोजनमुक्तम् । स्त्रीणां पत्यन्त
चारस्य मूलमुदाहरति * तथेति * रजस्वलाचारमुदाहरति
र्थेति * विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीदिति
तस्य वज्रमादाय शीर्षाण्यच्छिनदितीन्द्रस्य त्वाष्ट्रवधनिमि
त्याप्राप्तिमुक्त्वा स पृथिवीमुपासीददस्यै ब्रह्महत्यायै तृतीयं
भागमित्यादिपृथिव्यादीनां ब्रह्महत्याविभागमुपक्रम्य स स्त्री
पासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णातीन्द्रप्रार्थितान
तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्निति ब्रह्महत्यायास्तृतीयस्य
प्रतिग्रहं तन्निमित्तं च मलवद्वासस्त्वमुक्त्वा न मलवद्वास
संवदेतास्या अन्नमद्यादिति तदुपगमनं निषिध्य यां मलवद्
सम्भवति यतस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै तस्यै
पराचीं तस्यै ह्रीतस्य मुख्यप्रगल्भा इत्युपगमननिषेधशेषभूतां
मुक्त्वा तत्प्रस्तावेनागतानां रजस्वलाव्रतानां या स्नाति तस्या
ङ्का याभ्यङ्क्ते तस्यै दुश्चर्मा याप्रलिखते तस्यै खलतिरपमा
तस्यै काणो या दतो धावते तस्यै श्यावदन्ता या नखानि
ते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुं सृजति
उद्बन्धुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं च
स्नानादिनिन्दाद्वारेणोक्तानामग्नीषोमीयपुरोडाशयागविधि
प्रतीयमानानां प्रकरणातिक्रमेण स्त्रीधर्मत्वावधारणमाचा
रस्मृत्या विना न शक्यमित्याशयः । अतो नानाप्रकरण
पुरुषधर्मविधिपरत्वकल्पनविक्षेपलक्षणाद्विप्रकीर्णत्वाच्छ्रुति
र्स्पर्यस्मृत्या विनैकार्थे तात्पर्योपसंहारो न सम्भवतीत्युपसं
एवं चेति * ततश्चाचारप्रामाण्यस्य सिद्धान्तस्मृत्यन्तरितत

ह्र * तेनेति * सिद्धान्तमुपसंहरति * तस्मादिति * लोकवेदगतयोर्वाशब्दार्थप्रसिद्ध्योर्विरोधे साम्यवैषम्यविचारार्थं तेष्वदर्शनादित्यादिसूत्रद्वयमिति वर्णकान्तरमाह * त्रिवृदिति * एकस्यापि वाच्यत्वे सादृश्येनेतरत्र प्रतीतेः प्रयोगोपपत्तिशङ्कानिराकरणार्थम् * विलक्षणइत्युक्तम् * एकेति लौकिक्येव वैदिक्येव वेति पक्षद्वयमुक्तम्। त्रिवृच्छब्दे विप्रतिपत्तिं दर्शयति * लोके तावदिति* स्तोत्रीयागतनवको विवक्षितः। कथं वेदे स्तोत्रीयानवकार्थत्वप्रसिद्धिरित्यपेक्षायामाह *त्रिवृदिति * उपास्मै गायता नरो दिवि द्युतत्या रुचा पवमानस्य ते कव इति तृचत्रयानुक्रमणान्नवभिः स्तुवन्तीति स्तुत्यन्तरदर्शनात्स्तोत्रियां नवकविषयत्वं त्रिवृच्छब्दस्यावसीयतइत्यर्थः। चरुशब्दे विप्रतिपत्तिं दर्शयति * तथेति * याज्ञिकप्रसिद्धिं दर्शयति * अनवस्रावितेति * भक्तव्यावृत्त्यर्थमनवस्रावितविशेषणं वैषद्यानपेक्षपाकमात्रनिमित्तत्वदर्शनार्थमन्तरूष्मपक्वग्रहणं वेदे प्रसिद्धिं दर्शयति *तथेति* आदित्यं चरुं विधायाज्यस्यैनं चरुमभिपूर्य चतुराज्यभागान्यजति पथ्यां स्वस्तिमिष्ट्वाऽग्नीषोमौ यजति अग्नीषोमाविष्ट्वा सवितारं यजत्यादितिमोदनेनेति क्रमपरं वाक्यं सिद्धवदनुवादादोदनवाचिता चरुशब्दस्य ज्ञायते। आश्वलावशब्दे विप्रतिपत्तिं दर्शयति * एवमिति * वेदप्रसिद्धिं दर्शयति * एवं हीति * ऐक्षवीशब्देऽप्यादिशब्दोपात्तां विप्रतिपत्तिं दर्शयति * ऐक्षव्याविति * विषयं दर्शयित्वा साम्यपक्षे तावत्सूत्रं योजयति * एवमादिष्विति * आदिशब्दः स्तोमशब्दाभिप्रायः। भाष्यकृद्व्याख्याने कः पुनरत्र निश्चय इति सिद्धान्तवेलायां प्रश्नदर्शनाद्विप्रतिपत्तिशब्दस्य सन्देहार्थत्वप्रतीतेस्तद्व्यावृत्त्यर्थं विपर्ययार्थत्वे विप्रतिपत्तिशब्दं व्याख्यातुम् * प्रतिपत्तिविपर्ययइत्युक्तम् * हिशब्दः पादपूरणार्थः। तेष्विति सूत्रावयवव्याख्यातुमाशङ्कते *ननु चेति * सूत्रावयवेनाशङ्कां निराकरोति *नैतदिति* अनेन च तेषु पदार्थेषु वाक्यार्थवदतीन्द्रियत्वाभावेन लोकाविषयत्वविरोधस्यादर्शनादिति सूत्रावयवो व्याख्यातः। साम्यपक्षमुपसंहरति * तस्मादिति * लौकिकप्रसिद्धिबलीयस्त्वपूर्वपक्षमप्यनेनैव सूत्रेणाह *यदि चेति * लौकिकप्रसिद्धिबलीयस्त्वहेतुतया तेष्विति सूत्रावयवेनोक्तमनुपसञ्जातविरोधित्वं साधयितु * पूर्वभावित्वादित्युक्तम् * पूर्वभावित्वमुपपादयति *वेदेति * नन्वेवं सति वेदस्य पदार्थावधारणोपायत्वाभावेन क्वचिदपि वैदिकप्रसिद्ध्यभावाद्विचार एवायं नोपपद्यतेत्याशङ्क्याह * तत्रेति

अत्रैव सूत्रं योजयति * तेष्विति * तेष्वदर्शनाद्विरोधस्ये
त्यस्य तेष्वेवादर्शनाद्विरोधस्येत्याभिप्राय इत्यन्वयः । उ
भोयमाक्याप्रात्तिशङ्कानिवृत्त्यर्थमवधारणम् । किमस्मिन्व
क्यशेषेन परामृष्टमित्यपेक्षिते तेष्विति व्याख्यातम् । पू
र्वाविरोधकारणं पूर्वोक्तमभिप्रेतमर्थवादानां चेत्यादिना व
समुक्तम् । अर्थवादानां न पदार्थप्रतीत्यङ्गत्वमवसीयतइ
त्यपेक्षायां संज्ञासंज्ञिसम्बन्धस्य कारणे व्युत्पादने च व्य
वादित्युक्तम् । तद्धेतुत्वेनान्यपरत्वे ऽभिहिते किं परते
प्ररोचनाशेषत्वमुक्तम् । कथं प्ररोचनेत्यपेक्षिते गुणेत्युक्त
गुणोपिद्गादौ श्रुतिप्रवृत्तिसम्भवात्प्रायग्रहणम् । आदित्यो
अमानः प्रस्तरः स्वर्ग आहवनीय इति वचनत्रयं दृष्टान्तः ।
पदार्थे प्रत्यौदासीन्येन वाक्यशेषेष्वपि विरोधादर्शनादवधा
रणमित्याशङ्क्य पदार्थप्रतिपादनपरत्वाश्रयणे विरोधाप
धारणमुपपादयति * तदाश्रयणे चेति * विरोधस्यैवेत्य
वा शास्त्रस्य प्रसिद्ध्यानुगुण्यमेवानेन सूत्रावयवेनोच्यत इत
र्थाते * रक्षारम्भकेषु तन्तुषु नवसंख्यासद्भावे ऽप्युपवीत
यारक्षार्थगुणविधानार्थे त्रिवृच्छब्दः । अस्मिन्पूर्वपक्षे स
नुपपत्तिमाशङ्क्य काका योजयति * तस्मादिति * वैदिक
वर्णीयत्वे सिद्धान्तसूत्रं योजयतीति * इतीति * न केवलं
धर्मात्मकं धर्मस्वरूपमेव शास्त्रं प्रमाणकं किं त्वङ्गमपि फलं
गौणीति वक्तुम् * साधनेत्युक्तम् * यत्त्वर्थवादानामन्यप
दार्थप्रतीत्यनङ्गत्वमुक्तं तत्रान्यपरत्वे ऽपि विधिस्तुत्योरेका
नियमात्स्तुतिनिर्विषयस्यार्थस्यान्यथानुपपत्त्या विधिविषयत्वप्र
योपसंहारगतस्यापि विध्युद्देशेनाग्रहणं निरालम्बनत्वेनार्थव
क्यापत्तेरानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्याया
वस्थामित्याह * अर्थवादेति * अपिशब्देन बहिष्पवमाने
त्र्यानुक्रमणस्य स्तोत्रीयाविधानार्थत्वान्नार्थवादत्वेऽपि सूि
मन्त्रमेवादावगतस्यार्थस्य विध्युद्देशेन ग्रहणे त्रिवृदादिशब्दा
अथानवकादिवाचित्वेन वृद्धव्यवहारादनवगते विधौ गौण
मित्याशङ्क्याह * गौणो वेति * प्रमाणाभावेनान्यत्र विधौ
गार्थीमेव इह तु वेदप्रमाणकत्वाद्गौणत्वमप्यदुष्टमित्याशयः । ए
ननु त्रिवृदादिशब्दानां स्तोत्रीयानवकादिष्वपि गुणयोगात्स
मुख्यत्वमेवाभिमतम् । नन्वेवमपि तृचत्रयानुक्रमणेन नवसि
वन्तीति वचनेन बहिष्पवमाने स्तोत्रीयानवकप्राप्तेस्त्रिवृद्धदृष

कमित्याशङ्क्य तृचत्रयानुक्रमेण नवकवचनयोरभावे ऽपि त्रिवृदग्नि-
ष्टोम इत्यादौ नवकसिद्धिरस्य विचारस्य प्रयोजनमिति दर्शयितुमाह
* त्रिवृच्छब्द इति * एतदेवास्य विचारस्य प्रयोजनं दशमे त्रिवृद-
ग्निष्टोम इत्युदाहृत्य किमग्निष्टोमसाधनमात्रगतसंख्याविकारिकैव
त्रिवृत्संख्या स्तोमगतसंख्याविकारिका वेति सन्दिह्य त्रिवृद्रज्जुरि-
त्यादौ लोके त्रिवृच्छब्दस्य त्रैगुण्यमात्रवाचित्वदर्शनाद् बहिष्पवमा-
नस्य च तृचत्रयानुक्रमणादेः स्तोत्रीयानवकावगतिकारणस्याभा-
वात् त्रिवृत्त्वस्य च संख्यात्वसामान्येन संख्यामात्रकार्ये विनियोगप्रती-
तेः सर्वसंख्याविकारिका त्रिवृत्संख्येति त्रिवृत्संख्यात्सर्वसंख्याविका-
रः स्यादिति सूत्रेण पूर्वपक्षयित्वा त्रिवृद्बहिष्पवमानमित्युक्त्वा स्तो-
त्रीयानवकानामाग्नेयाष्टाकपालाः त्रिवृता स्तोमेन सम्मिता इति च
नवानां कपालानां त्रिवृता स्तोमेन समानवचनात्त्रिवृच्छब्दस्य स्तोत्री-
यानवकवाचित्वप्रतीतेरत्रोभयसम्भवे ऽपि वैदिकत्वसामान्येन स्तो-
त्रीयानवकविषयत्वावधारणात्स्तोमगतैव पञ्चदशत्वादिसंख्या त्रिवृ-
त्संख्यया बाध्यतइति स्तोमस्य वा तल्लिङ्गत्वादितिसूत्रेण सिद्धान्त-
यता उपपादयिष्यते । प्रसङ्गादादिशब्दोपात्तस्य स्तोमशब्दस्य लोकप्र-
सिद्धसमुदायमात्रवचनत्वातिक्रमेण स्तोत्रीयासमुदायवचनत्वं वेद-
याज्ञिकव्याकरणप्रसिद्धिबलेनाहैवमिति । तथाप्यवश्यमेव त्रिवृ-
दादिषु दृष्टव्य इत्यध्याहृत्य योज्यं, लौकिक्याः समुदायमात्रवचन-
त्वप्रसिद्धेः का गतिरित्यपेक्षायां * लोकेत्युक्तम् * ननु त्रिवृच्छब्दस्य
स्तोत्रीयानवकवचनत्वे विप्रस्योर्ध्ववृतं त्रिवृते त्रिवृता ग्रन्थिनैकेनो-
पनुवचनमयुक्तं स्यादित्याशङ्क्य पौरुषेयवाक्येषु लोकवेदप्रसिद्ध्यो-
स्तुल्यबलत्वेन यथासम्भवं प्रसिद्ध्यनुसारोपपत्तेरिह त्रैगुण्यवाचि-
त्वमाश्रित्य परिहरति * यत्त्विति * उपवीतारम्भिकाया वा रज्जो-
र्नवतन्तुकारभ्यत्वात्तस्या एव च ग्रन्थ्यारम्भकत्वाल्लौकिकप्रसिद्ध्यनु-
सारेणैव अनुवचनं युज्यतइत्याह * यद्वेति * ननु वेदे ऽपि त्रि-
वृद्वलीति रशनात्रैगुण्यप्रयोगदर्शनाल्लौकिकीप्रसिद्धिराश्रितेत्याश-
ङ्क्य तत्रापि श्रौत्या याज्ञिकप्रसिद्ध्यनादरेण वैदिकप्रसिद्ध्यनुसारा-
दगुणत्वं भविष्यतीत्याह * तथेति * अयं तु पक्षः स्तोत्रीयाध्या-
येकेणान्यत्र नवकसंख्यायां त्रिवृच्छब्दप्रयोगाभावादयुक्त इति वेद-
प्रसिद्धस्तोत्रीयागतनवकसंख्यारूपार्थासम्भवाद्रशनादौ वेदविरोधा-
भावाल्लोकप्रसिद्धं त्रैगुण्यमेव ग्राह्यमित्याह *यद्वेति* ननु स्तोत्री-
यागतनवकवाचित्वेन गोत्रादिवन्नवकत्वावान्तरजात्यभावादाकृ-
त्यधिकरणविरुद्धं विशिष्टवाचित्वं प्रसज्येतेत्याशङ्क्य यथैवेत्युक्तम्

यत्र विशेषणमात्रे शक्तौ कलितायां[1] तदविनाभावाद्विशे
युज्यते तदेवाकृत्यधिकरणस्य विषयः । अविनाभावाभ
वादिशब्दानां पुत्राभार्याभावे यांचादिविशिष्टवाचित्वा
वृद्धव्यवहारावसेये चार्थे अन्वयव्यतिरेकाभ्यां निकृष्ट
लध्वेतेह तु त्रिवृद्बहिष्पवमानमित्युक्त्वा स्तोत्रीयानवकात्
वसंख्यायास्त्रिवृच्छब्दवाच्यत्वं कल्प्यमानं स्तोत्रीयागताय
ल्पयितुं शक्यं न शुद्धायाः प्रमाणाभावादित्याशयः ।
विशिष्टस्य नवकत्वस्य वाच्यत्वात्तदेकदेशस्य नवकत्वस्य
भिप्रेतम् । आश्रयबलाबलानादरेण स्वरूपबलाबलवशा
शयमभिप्रेत्य * उत्तरसूत्रइत्युक्तम् * चरुशब्दस्य त्वोद
नेव स्थाल्यां प्रयोगोपपत्तेर्लोकप्रसिद्धे ऽर्थे शक्तिर्नैव कल्प्येत
र्थेति * सौर्यं चरुं निर्वपेदित्यादौ वाक्यशेषाभावे ऽप्योद
युक्तत्वादित्यत्र चरुशब्दस्य वेदयाज्ञिकप्रसिद्धिभ्यामोदनम
त्यावसायादोदनस्यैव ग्रहणमिति दशमे वक्ष्यमाणं चरु
र्थापिशब्देन सूचितम् । अन्यत्राप्योदनविषय एवेत्यर्थः ।
वर्णके दाशमिकयोस्त्रिवृच्चर्वधिकरणयोः एतदधिकरणप्रयो
पादनार्थत्वान्न पौनरुक्त्यम् । याज्ञिकशब्दस्य पूर्वनिपातेन वेद
निरपेक्षस्य याज्ञिकवृद्धव्यवहारस्य वाच्यवाचकभावावग
त्कारणत्वेनाभ्यर्हितत्वं सूचितम् । आश्ववालैक्षवीशब्द
मुदायप्रसिद्धेर्बलीयस्त्वेनापि दुर्बललौकिकावयवप्रसि
कारातन्मूलवाचित्वमेवावसीयतइत्याह * आश्ववालेति
दीर्घश्लक्ष्णपत्राणां काशानामश्वकेशैः सादृश्यादश्ववालशब्द
शेषु गौणप्रयोगोपपत्तेर्न समुदायस्य शक्त्यन्तरकल्पनं युक्त
ख्यातिमकायाः समुदायप्रसिद्धेः कथं बलीयस्त्वमित्याशङ्क्य
स्यादि [illegible]त्वाद् बलीयस्त्वमाह * अथापीति
..नेन यजेतेति विहिते याग [illegible]धिकरणयाच्छ्येननाम
सिद्धेनैकशक्तिकल्पनाभयाद्वाच्यवाचकभावाभ्युपगमे ऽपि
श्येनो निपत्यादत्त एवं मयं द्विषन्तं भ्रातृव्यं निपत्यादत्त
वगतनिपत्यादायकत्वसादृश्येन श्येनपक्षिजात्योपमिते गौणत
णावाप्तप्रसिद्धिः । श्येनशब्दः पुनरिषुयागे धर्मातिदेशाय सम
तरच्छ्येनेनेति प्रयुज्यमानो गौणो ऽपि वेदक्लृप्तत्वाद्यागविषय
वाश्रीयते तथाश्ववालशब्दो ऽप्याश्ववालः प्रस्तर इत्यत्र वाक्य
त्काशविषयत्वेन प्रतीयमानो ऽनेकशक्तिकल्पनाभयात्तद्वाचकत्वा

१ कॢप्तायामिति २ पु० पा० ।

पगमे ऽपि दीर्घश्लक्ष्णत्वादिसादृश्याद्गौणत्वद्वारेण काशेष्वेवास्यप्रसिद्धिर्वाक्यशेषाभावे ऽपि वेदक्लृप्तत्वात् काशविषयत्वेनैवाश्रीयतइत्यर्थः। नन्वश्ववालशब्दस्य गौणत्वाभ्युपगमे गौणतायाः पदान्तरसामानाधिकरण्यसापेक्षत्वेनासामर्थ्यापत्तेराश्ववाल इति तद्धितानुत्पत्तिप्रसङ्गान्नाश्ववालशब्दस्य गौणत्वं युक्तमित्याशङ्क्याभ्युपगमवादमात्रत्वमस्य प्रकटयितुमाह * अथापीति * यद्यपि गौणत्वं न च ते वालाः काशतां प्राप्ता इति काशरूपेणाश्वस्य वालानां परिणामाभिधानात्प्रकृतिविकारयोश्च सादृश्यसम्भवाच्छब्दावगतप्रकृतिविकारभावमात्रेणोत्प्रेक्षितं न वास्तवमिति शब्दग्रहणेन सूचितम्। वेदस्य सम्बन्धिदृष्टमवगतं चेन्न केनापि वार्यते स्वतन्त्रत्वेनापौरुषेयत्वेन वेदे दोषाशङ्कानुपपत्तेरित्यर्थः। ननु धर्मातिदेशादिव्यवहारसिद्ध्यर्थं केन चिद् गुणयोगेन श्येनशब्दस्य यागविशेषनामत्वाङ्गीकरणमर्थवत्पुरोडाशानलं कुर्वित्यादौ च लाघवार्थं पुरोडाशशब्देन धानादिहविःपञ्चकलक्षणार्थं वेतीह तु मुख्येन काशशब्देनैव प्रस्तरविधिसिद्धेर्गौणलाक्षणिकाश्ववालशब्दानर्थक्यापत्तिः मुख्यत्वे त्वाश्ववालः प्रस्तरः कार्यः काशाश्चाश्ववालशब्देनोच्यन्ते इत्यनेकार्थपरत्वापत्तेर्वाक्यभेदः प्रसज्येतेत्याशङ्क्याह * गौणमिति * काशाश्ववालशब्दयोर्वाच्यवाचकत्वाभावे निरालम्बनवाक्यशेषापत्तेरगत्या वाक्यभेदो ऽपि वेदाङ्गीकृतत्वान्न दोषमावहति परमार्थतस्तु विधिस्तुत्येकवाक्यत्वान्यथानुपपत्त्यैवात्र वाच्यवाचकत्वप्रतीतेर्न वाक्यभेदो ऽस्तीति वाशब्देन सूचितम्। ननु वाक्यशेषबलेन त्रिवृदादिशब्दार्थनिर्णये पूर्वोक्तमेव पौनरुक्त्यं स्यादित्याशङ्क्याह * न चात्रेति * असन्दिग्धत्वमेव विवृणोति * लौकिकीति * एतद्वर्णकसिद्धान्तमुपसंहरति * बाधतइति * सुखग्रहणार्थं वर्णकत्रयसिद्धान्तं सङ्क्षिपति * तस्मादिति * आद्ये वर्णके शास्त्रशब्देन शास्त्रानुसारित्वादार्या विवक्ष्यन्ते। द्वितीये स्मृतिः। तृतीये वेदः। मुक्तकानां नियमशून्यानां म्लेच्छानामाचारैरित्याद्यवर्णके ऽर्थः। मुक्तकैरनिबद्धैरितीतरयोः सदाचाराणां स्मृतिव्यवधानाद्धर्मविप्रकर्षः * इतरेषां त्वसम्बन्धादेव *

॥ अथ म्लेच्छप्रसिद्धार्थप्रामाण्याधिकरणम् ॥ ६ ॥

## चोदितं तु प्रतीयेताविरोधात्प्रमाणेन ॥ ९ ॥

अत्र भाष्याच्छास्त्रस्थम्लेच्छप्रसिद्ध्योर्बलाबलचिन्तेति प्रतिभाति तच्च म्लेच्छाचारप्रामाण्यस्य प्रागव्युत्पादितत्वादयुक्तमाशङ्क्य

ब्दार्थविषये म्लेच्छाचारप्रामाण्याप्रामाण्यचिन्तापरत्वेन सन्देह-
भाष्यं व्याचष्टे * ये शब्दा इति * म्लेच्छप्रसिद्धार्थाग्रहणे ऽपि का-
र्यशब्दानर्थक्यमाशङ्क्य भाष्यकृता धातुतो ऽर्थः प्रकल्पयितव्य इत्यु-
त्यभिधानादार्यप्रसिद्ध्यभावे ऽपि म्लेच्छप्रसिद्धार्थो न ग्राह्य इति
र्वपक्षवचनव्यक्तिः सूचितेत्याशयः । किमत्र सन्देहकारणमित्यपे-
ायामाश्रयस्वरूपबलाबलविसंवादं सन्देहकारणं दर्शयितुमाह *
र्थेति*प्रकृतचिन्तासिद्ध्यर्थम् । एतदपि चिन्त्यते इति तथाशब्दार्थः ।
िरुक्तव्याकियाद्वारेत्यनेन शास्त्रस्थत्वमवयवप्रसिद्धित्वं सूचितं स-
ुदायप्रसिद्धिर्वा बलीयसीत्यनुषङ्गः । ननु षष्ठे वचनात्तथकार-
प्राधान्यस्य सर्वशेषत्वादित्यत्राधिकरणे समुदायप्रसिद्धेरवयवप्रसि-
द्धतो बलीयस्त्वस्य वक्ष्यमाणत्वात्समुदायावयवप्रसिद्ध्योर्बलाब-
लचिन्ता पुनरुक्तेत्याशङ्क्य * म्लेच्छस्यैवेत्युक्तम् * शास्त्रस्थप्रसिद्धि-
र्बलीयस्त्वे समुदायप्रसिद्धिर्म्लेच्छेष्वेव तिष्ठति नार्यगामिनी भवति
ार्यान्प्रत्यात्मानं लभतइत्यर्थः । अथ वावयवप्रसिद्धित्वेन तस्या
ौर्बल्यात्समुदायप्रसिद्धिराचार्यानपि प्रति भवेदात्मानं लभतइत्या-
ः । समुदायप्रसिद्धेरेवात्र प्रामाण्याप्रामाण्यरूपात्मलाभसन्देह-
ार्थसिद्ध्यर्थं निरुक्तादिद्वारप्रसिद्धिबलाबलविचारः क्रियतइत्याश-
ः । यद्वा किं निरुक्तादिद्वारा प्रसिद्धिः शास्त्रस्थत्वाद् बलीयसी
लेच्छस्यैवं वा समुदायप्रसिद्धित्वादित्येकं विचारप्रकारमुक्त्वा किं
िरुक्तादिद्वारावयवप्रसिद्धिर्वा म्लेच्छस्थत्वादिति प्रकारान्तरसूच-
ार्थत्वेन वाप्यथवा शब्दो योज्यः । यद्वा शास्त्रस्थम्लेच्छप्रसिद्ध्योः
ा बलीयसीत्येवं प्रकारमुक्त्वा म्लेच्छस्यैव वा किं म्लेच्छस्थत्वाद्
र्बला समुदायप्रसिद्धित्वाद् बलीयसीत्येवं विचारो भवेदिति प्र-
ारान्तरप्रतिज्ञानार्थो ऽथवा शब्दः म्लेच्छस्यैव प्रसिद्धिर्विचार्या
वेदित्युक्ते कथं विचार्यैत्यपेक्षायां विचारस्वरूपं सोपपत्तिकं दर्श-
ति * म्लेच्छस्थप्रसिद्धिरिति * पूर्वव्याख्यानयोरप्येतदेव प्रकारा-
तरमप्रतिज्ञातमेवानेन ग्रन्थेन प्रतिपाद्यतइति विशेषः । निरुक्तादि-
ारैव वा प्रसिद्धिः किं शास्त्रस्थत्वाद् बलीयसी अवयवप्रसिद्धित्वा-
 दुर्बलेति प्रकारान्तरमाह * तथेति * भाष्ये ऽपि निगमनिरु-
व्याकरणवशेनेत्यनेनावयवप्रसिद्धेः शास्त्रस्थत्वं बलीयस्त्वहेतु-
गमुक्तम् । कल्पयितव्य इति कल्पनीयत्वं दौर्बल्यकारणम् । म्ले-
ा इति च समुदायप्रसिद्धेर्म्लेच्छस्थत्वं दौर्बल्यकारणमुक्तम् ।
ाचरन्तीति क्लृप्तत्वं बलीयस्त्वकारणमिति विवेकः । शिष्टाचार-
त्यादिपूर्वपक्षभाष्यं सन्देहभाष्यव्याख्यानोपसंहारपूर्वकं व्याचष्टे

एवमिति * म्लेच्छप्रसिद्धौ प्रयोक्तृदौर्बल्यं स्वरूपबलीयस्त्वमि-
त्र प्रयोक्तृबलीयस्त्वं स्वरूपदौर्बल्यमित्युपपत्तिद्वयात्म्लेच्छ-
सिद्धिप्रामाण्याप्रामाण्यसन्देहे सिद्ध इत्यर्थः। पूर्वापवादत्वेनानन्त-
ङ्गतिसूचनार्थं सूत्रोपन्यासः। पिकादिशब्दार्थप्रसिद्धेः शास्त्रस्याना-
सिद्धत्वात्कथं बलीयस्त्वमित्याशङ्क्य *कल्प्यापीत्युक्तम् * नावक्ल-
या: स्वरूपेणैवासत्त्वात्कथं बलीयस्त्वमित्याशङ्क्य साधुमूलबलेना-
ख्याया अपि साधयितुं शक्यत्वादिति परिहरति * तन्मूलस्येति *
समुदायप्रसिद्ध्यावयवप्रसिद्धिबाधात्कथं प्रामाण्यमित्याशङ्का-
राकरणार्थं नाशिष्टस्मृतेरिति भाष्यावयवं व्याचष्टे * न सिद्ध-
ोति * म्लेच्छप्रसिद्धेऽर्थे वैदिकानां शब्दानां समुदायप्रसिद्धेरा-
लाभासम्भवान्नावयवप्रसिद्धेर्बाधकमस्तीत्याशयः। सिद्धमप्य-
मूलं न प्रमाणमिति लुप्तभावप्रत्ययप्रमाणशब्दानुषङ्गेण योज्यम्।
शब्दार्थसम्बन्धस्य वृद्धव्यवहारमात्रप्रमाणकत्वान्म्लेच्छव्यवहा-
ापि तत्र प्रामाण्योपपत्तेः कथमाश्रयदोषेण दुष्टत्वमित्याशङ्क्या-
पगम्यापि तावन्म्लेच्छव्यवहारस्य शब्दार्थसम्बन्धे प्रामाण्यं वै-
कशब्दानां म्लेच्छप्रसिद्धार्थाभिधायित्वं न सम्भवतीत्याह * क-
ेति * गृहीतसम्बन्धस्य श्रुतस्य शब्दस्यार्थाभिधायकत्वान्म्लेच्छा-
च सम्बन्धग्रहणसम्भवेऽपि वैदिकशब्दश्रवणाभावात्त्वच्छ्रैविर्णां
र्णानां म्लेच्छसम्भाषणनिषेधेन तत्प्रसिद्धार्थसम्बन्धग्रहणास-
वान्नार्यान्प्रति समुदायप्रसिद्धेरात्मलाभः सम्भवतीत्याशयः।
च्छप्रसिद्धार्थग्रहणे च निगमादीनामानर्थक्यापत्तेस्तद्ग्रहणं न
ामिति प्रतिपादनार्थं निगमादीनां चेति भाष्यं म्लेच्छप्रसिद्धा-
नाचे निगमादीनामर्थवत्त्वोपपत्तेरयुक्तमाशङ्क्योपपादयति * एवं
े * म्लेच्छप्रसिद्धेः प्रमाणत्वे सतीत्यर्थः। ननु सर्वम्लेच्छदेशा-
णेऽपि यस्यार्थस्याप्रसिद्धिः स निगमादीनां विषयो भविष्य-
ाशङ्क्याह * अनन्तेति * शङ्कामेवोपपादयति * अनन्तेषु
े * कोऽर्थः क देशे सिद्ध इत्यर्थः। सर्वम्लेच्छदेशान्वेषणे तु
शङ्कादुष्परिहरेत्याह * निगमादीति * अस्मत्पक्षे त्वार्यावर्तदे-
ल्पत्वेन सर्वान्वेषणसम्भवात्तदप्रसिद्धोऽर्थो निगमादीनां वि-
भविष्यतीत्याह * म्लेच्छाचारेति * उपसंहरति * तस्मा-
ि * म्लेच्छव्यवहारस्य शब्दार्थसम्बन्धे प्रामाण्यमभ्युपगम्य १
कशब्दार्थावधारणं म्लेच्छव्यवहारान्न * सिद्ध्यतीत्युक्तम् *
ार्थतत्त्वनाभियुक्तत्वान्म्लेच्छानां न तद्व्यवहारः शब्दार्थसम्ब-
प्रमाणमिति प्रतिपादनार्थमनाभियोगश्चेत्यादिभाष्यं व्याचष्टे *

धर्मे चेति * नन्वपभ्रष्टस्य शब्दस्यार्थतत्त्वानवधारणे ऽपि संस्कृ
शब्दस्य म्लेच्छव्यवहारादप्यर्थतत्त्वावधारणं भविष्यतीत्याशङ्क्य।
न चेति * न म्लेच्छभाषां शिक्षेतेति तद्भाषानिषेधसूचना।
भाषणमित्युक्तम् ननु पिकादिशब्दानां वेदतदभियुक्तप्रयुक्त
संस्कृतानां म्लेच्छभाषायां दृष्टत्वादसत्त्ववचनमयुक्तमित्याशङ्क्
संस्कृतेति * अविभक्तिकत्वात्संस्कृतसदृशास्तैः प्रयुज्यन्ते ।
सादृश्यमात्रेण शालाशब्दस्येव मालाशब्दार्थवाचकत्वं युक्तमित्य
यवादिशब्दानां ऽन्यार्थान्तरे प्रयोगाच्च म्लेच्छव्यवहारेणार्थतत्त्व
वसाय इति द्योतनायार्थान्तर * इत्युक्तम् * संस्कृतप्रतिरूपे
म्लेच्छप्रयुक्तेभ्यः । संस्कृतशब्दकल्पने अनेकविधोत्प्रेक्षासम
च्च व्यवस्थितशब्दार्थावधारणं सम्भवतीत्याह * आर्याश्चेति *
पदान्तराक्षरोपेतं कल्पयन्तीत्यपेक्षिते कदा चनेति * प्रका
मुक्तम् * यन्म्लेच्छैरधिकाक्षरं प्रयुक्तं तदूनाक्षरं कल्पयन्ति ।
तैश्चोरित्यादिन्यूनाक्षरं प्रयुक्तं तत्र स्वराद्यधिकमक्षरं प्रक्षिपन
र्थः । एतदेव विवृणोति * तद्यथेति * आदिशब्दो ऽनुस्वारत
त्वर्थीयप्रत्ययाभिप्रायः । स्वरान्तत्वकल्पनामुदाहरति * तद्य
स्वरान्तत्वविभक्त्यन्तत्वकल्पनयोरुदाहरणमाह * पन्थानमि
स्वरान्तानुस्वारलोपकल्पनयोरुदाहरणमाह * तत्त्वेति * स्त्री
कल्पनामुदाहरति * एवमिति * मत्वर्थीयप्रत्ययकल्पनामुद
* वैरशब्दं चेति * विशेषतः प्रत्यन्तवासिम्लेच्छभाषायां
स्थितशब्दार्थावधारणं न सम्भवतीत्याह * तद्यदेति * किं
स्वरूपं स्वभाषानुरूपमुत्प्रेक्ष्य किमर्थरूपं प्रतिपत्स्यन्तइत्यर्थः ।
हरति * तस्मादिति * विविधं कल्प्यतइत्यर्थः । तस्मा
संहारभाष्यं व्याचष्टे * निरुक्तेति * निरुक्तादिभ्यो ऽनेकार्थप्र
ऽप्यक्षादिशब्दवत्प्रकरणादिना विशेषावधारणं तदभावे ऽप्यर
द्व्युत्पत्तिपदार्थव्यावृत्त्या सम्भवद्व्युत्पत्तिपदार्थविशेषरूपेण
णं भविष्यतीत्याशयः । सूत्रव्याख्यानार्थमेवं प्राप्तइत्यादिसिद्धान
शब्दाविप्लुत्यभावेनार्थविप्लुतिशङ्कानिराकरणाशक्तेरयुक्तमा
ब्दान्तरेषु विप्लुतिशङ्कानिराकरणाशक्तावपि पिकादिशब्दान
दिशास्त्रप्रयुक्तत्वेनाविभक्तिकम्लेच्छप्रयोगे ऽपि प्रातिपदिक
तिनिश्चयान्मुख्यार्थान्तराप्रसिद्धेश्च गौणत्वायोगादनादिम्ले
वहारान्यथानुपपत्त्या वाचकत्वकल्पनं युक्तमित्यभिप्रायेण
१५८।१ * एवमिति * पिकादिशब्दस्वरूपस्य शिष्टैरप्यवगतत्वाद्गौ
म्भवप्रतिपादनार्थं शिष्टानवगतिविशेषणानुपपत्तिमाशङ्क्यार्थं

तीयेतेत्यस्य न्यूनत्वाशङ्कानिराकरणार्थम् * तथैवेत्युक्तम् * वि-
र्यनुवादविवेकार्थौ यत्तच्छब्दौ । अविरोधत इति तसिला यत्प्रमा-
ानात यच्छब्दो यस्मादित्यर्थे व्याख्यातः । तदवगम्यमानमिति
ाष्यावयवं विप्लुतिशङ्कानिराकरणार्थत्वेन व्याख्यातुम् * पिके-
युक्तम् * यथाभाष्यं सूत्रपदानामन्वयं कृत्वा पदार्थान्व्याचष्टे
* चोदितं हीति * हिशब्दो ऽलङ्कारार्थो न तद्धर्मप्रमाणेनेत्यत्र
ाकृष्य व्याख्येयः । म्लेच्छप्रयुक्तस्यार्थस्यार्यान्प्रत्यप्रसिद्धिमाशङ्क्य
* अवधृतमित्युक्तम्*विरोधाभावाभिप्रायेणाविरोधपदं व्याख्याया-
ामिपदवद्विरोधविपरीतानुसाराभिप्रायेण व्याचष्टे * अपि चेति *
ास्मिन्व्याख्याने ऽवगम्यमानमित्यवशब्दो ऽनेकार्थत्वान्निपातोपस-
ाणामनुशब्दार्थे व्याख्येयः । स्वयमन्यथा द्वेधा सूत्रं योजयति
* पिकादाविति * म्लेच्छप्रसिद्धस्यार्थस्यार्यैरपेक्षणे दृष्टान्तमाह *य-
त्रेति * तेषामप्युदाहरणत्वाददृष्टान्तत्वमाशङ्क्य विशस्तपश्ववय-
विभागाविकारेण सामान्यतः पश्ववयवत्वज्ञानाद्विशेषमात्रापेक्षायां
ेरुक्तादिना निर्धारितविशेषावधारणासम्भवात् पश्ववयवत्वसा-
ान्यांशे ऽथ म्लेच्छप्रसिद्धेः सम्वादाभावादगत्या म्लेच्छप्रसिद्धार्थ-
्रहणे सिद्धेर्दृष्टान्तत्वमुपपादयितुम् * पश्ववयवा इत्युक्तम् *
व्यान्तरमिश्रं हिरण्यं कूटमिति कूटशब्दवाच्यज्ञाने ऽपीदं शुद्ध-
मिदं मिश्रमिति विवेकाय तदभियुक्तापेक्षा प्रसिद्धैवेति दृष्टान्तान्त-
माह * यथा चेति * दार्ष्टान्तिके योजयन्स्वयमेव तृतीये व्या-
याप्रकारमाह * तथेहेति * सूत्रेण म्लेच्छाचारप्रमाणक-
मुदायप्रसिद्धिसद्भावमुपपाद्य शास्त्रस्थप्रसिद्धेर्बलीयस्त्वेन त-
बाधस्य पूर्वपक्षितस्य निराकरणार्थं यत्तु शिष्टाचार इति
ाष्यं व्याचष्टे * यत्त्विति * एवमनुभाष्य स्वयं तावच्छब्दा-
व्यवहारे ऽपि पूर्वाधिकरणन्यायेन शास्त्रस्थप्रसिद्धिबलीयस्त्वम-
ेकृत्य विरोधाभावेनाबाधमाह * नेती * नन्वविरोधे ऽपि शा-
यादिग्रन्थवच्छिष्टापरिगृहीतत्वान्म्लेच्छव्यवहारस्याप्रामाण्यं भ-
ष्यतीत्याशङ्क्याह * यद्वेति * या वेदबाह्याः स्मृतय इत्या-
ना वेदबाह्यस्मृतीनां निष्फलत्वस्मरणाच्छाक्यादिग्रन्थावगत-
र श्रुत्यादिसम्वादिना ऽपि श्रेयःसाधनत्वाभावप्रतीतेरदृ-
ार्थेषु वेदबाह्यानां विरोधाभावे * ऽप्यप्रामाण्यं युक्तम् * दृष्टार्थे
शब्दार्थव्यवहारे म्लेच्छानामपि प्रतीतिप्रयोगान्यथानुपपत्तिप्रभव-
ाच्यवाचकभावविषयार्थापत्तिज्ञानस्य निराकर्तुमशक्यत्वादप्रतिह-
प्रामाण्यमित्याशयः । एतदेव पूर्वाधिकरणव्युत्पादिताभियुक्त-

तरार्थप्रसिद्धिबलीयस्त्वेन दूढयति * अत एवेति * यत एवावि
रोधे दुर्बलस्यापि ग्राह्यत्वमत एव वैदिकवाक्यार्थे ये ऽभियुक्तत
आर्या याज्ञिका ये च स्वविषयप्रयुक्तपदार्थमात्रे ऽभियुक्ततया
धास्तेषामितरार्येभ्यो बलीयस्त्वमन्यथा शास्त्रापेक्षया तत्प्रसिद्धेर
दौर्बल्यादग्राह्यत्वं स्यादित्यर्थः । नन्वार्यान्तरेभ्यो ऽप्यभियुक्ततर
योर्या बलीयस्त्वे म्लेच्छेभ्यः सुतरां स्यादित्याशङ्क्याह * प्रसिद्ध
विति * श्लोकं विवृणोति * अष्टकादिषु हीति * अष्टकाद्यर्थे
मन्वादीनां शाक्यादिभ्यो बलीयस्त्वं पदस्वरूपज्ञानेषु वैयाकरण
नामितरेभ्यः पदार्थज्ञानेषु याज्ञिकानां वैद्यानां च पिकादिषु तु म्लेच्छ
प्रयोगेभ्यो ऽर्थनिर्णये सति न किं चिद्विरुद्धं प्रत्युताकाङ्क्षितं पदा
ज्ञानं सेत्स्यतीत्यन्वयः । ननु विप्लुतिभूयिष्ठत्वेन म्लेच्छप्रयोगेभ्
शब्दस्य स्वरूपस्यैवानवगतेः कथं चिद् बाह्यस्वरूपावगमे ऽपि स्तोर
क्षरवदवाचकत्वस्यापि सम्भवात् कथं पदार्थज्ञानाकाङ्क्षेत्याशङ्क्
र्थेत्युक्तम् । वेदादौ प्रयोगात्स्वरूपावगमः वाक्यान्वयान्यथानुप
त्त्या च वाचकत्वावगमः वाच्यविशेषज्ञानमपि तर्हि आर्येभ्य ।
भविष्यतीत्याशङ्क्य * वाच्येत्युक्तम् । ननु म्लेच्छप्रयोगान्निर्मूलान्ना
निर्णयो युक्त इत्याशङ्क्य * पदवदित्युक्तम् * म्लेच्छानामपि
प्रमाणासम्भवो दृष्टग्रहणेनोक्तः अनादित्वेन दोषनिरासः पदे यः
प्रत्यक्षत्वान्म्लेच्छैरपि लब्धप्रसिद्धिः एवं दृष्टो यः कोकिलादिर
तत्प्रतिपत्त्यर्थो यो ऽनादिः पिकादिशब्दप्रयोगः । तेन लब्धशब्द
सम्बन्धविषया प्रसिद्धिर्यैर्म्लेच्छैस्ते तथोक्ताः । नन्वार्यप्रसिद्ध्य
वे ऽपि निगमादिभ्यो ऽर्थनिर्णये सिद्धेर्म्लेच्छप्रसिद्धिबाधः स्या
त्याशङ्क्याह * निगमेति * ननु निगमादिभिर्निर्धारितरूपार्थवि
नुदाहरणे ऽप्यवयवव्युत्पत्त्या कश्चिदर्थविशेषो ज्ञाप्यते ऽत
* काल्पनिक इति * अनेन च सत्यपि विरोधे समुदायप्रसिद्धे
रथकाराधिकरणन्यायेनावयवप्रसिद्धितो बलीयस्त्वाद्बाध इत
भाष्यकृता त्वदृष्टार्थेष्वेव शिष्टाचारस्य म्लेच्छाचाराद् बलीयस्त्
लौकिकेष्विति तत्प्रत्यक्षानवगतेष्विति परिहारः कृतः तद्व्या
* आश्रयाणां चेति * म्लेच्छानामनभियुक्तत्वात्तदाचारस्य श
र्थसम्बन्धाप्रामाण्यं पूर्वपक्षोक्तं यत्त्वभियुक्ता इत्यनुभाष्याभिर्
तरा इति भाष्येण परिहृतं तद्व्याचष्टे * तस्मादिति * वा
निर्णये म्लेच्छानां प्रामाण्याभावे कौशलमात्रस्याप्रयोजकत्वात् दा
षु शिष्टम्लेच्छयोः प्रामाण्येन तुल्यत्वमनन्तरोक्तं तस्माच्छब्देन
मृष्टम् । यत्तु शब्दस्वरूपवन्म्लेच्छप्रसिद्धे ऽर्थे ऽप्यविश्वास

रिहरति * शब्देति * शिष्टाचारे निबन्धनेनाश्वासो न स्य- १६०।२
क इत्याशयः । किं च पिकादिशब्दवाच्यानां कोकिलादीना-
ासद्भावात्पिकादिशब्दवाच्यत्वरूपेणार्याणामप्रसिद्धावपि स्व-
ासिद्धिसम्भवान्न तत्स्वरूपज्ञाने म्लेच्छापेक्षा पत्रोर्णादिश-
ानां तु स्वरूपज्ञाने ऽपि म्लेच्छापेक्षणादवश्यं तत्प्रसिद्धिरा-
त्याह * पत्रोर्णेति * पत्रोर्णं धौतकौशेयं वारमोषधिरसपा-
ानविशेषः । वाणो वाद्यविशेषः । कञ्चुकं वा । तथा चैकमेवे-
ाणपदम् । कथं चिच्छब्दार्थे नेमशब्दः । यदपि म्लेच्छप्रसिद्धा-
रणे निगमाद्यानर्थक्यमुक्तं तत्स्वयं तावद्भिन्नविषयत्वेन प-
। * निरुक्तादेश्चेति * अर्थप्रतिपादनपरत्वाभावे निर्विषय-
ाद्धिमात्रप्रतिपादनानुपपत्तिमाशङ्क्यान्यतः सिद्धे ऽर्थइत्यु-
ननूतत्वः पश्यन्न ददर्श वाचमित्यादौ त्वादिशब्दानामेका-
ाप्रतिपादनस्य निरुक्ते दर्शनात्कथं निमित्तमात्रे व्यापार उ-
याकरणे च सधिर्हिंसायामित्यादौ साध्यादेर्हिंसाद्यपूर्वार्थप्र-
ादर्शनात्कथं शब्दस्वरूपान्वाख्यानमात्रे व्यापार उच्यते इ-
ा स्वरूपत इत्युक्तम् । स्वेनात्मीयेनार्थप्रतिपत्तिशेषत्वेन रूपे-
ाुत्पत्त्या तात्पर्येणेत्यस्यार्थः । श्लोकं व्याचष्टे * निरुक्तेन ता-
* भाष्यकृता तु म्लेच्छानामप्यप्रसिद्धे ऽर्थे निगमादीनाम-
ते । यत्तु निगमेत्यादिनानुभाष्येश पूर्वमानर्थक्यं परिहृतं
ष्टे * यस्य चेति * सर्वं नामधातुजमित्यर्थकल्पनाद्वारं नि-
दर्शितम् । यत्र पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च त-
ति व्याकरणे म्लेच्छदेशानन्ये ऽपि देशान्तरगतपुरुषवार्त्तोप-
ा सर्वदेशप्रसिद्ध्यभावनिश्चयः सम्भवतीत्याशयः । काम-
ानावश्यकत्वं दर्शितमुपपादयति * विक्षिप्तेति * प्रकृतिप्र-
योरेकत्रानन्वाख्यानाद्विक्षिप्तत्वं क्लेशहेतुत्वेनोक्तम् । अने-
कृतिप्रत्ययार्थान्वाख्यानाद्बहुरूपत्वं सन्देहहेतुत्वेनोक्तम् । न-
र्थप्रतिपादनपरत्वाभावे निमित्तमात्रप्रतिपादनेन प्रयोजना-
ानर्थक्यं स्यादित्याशङ्क्याह * न चेति * षडङ्गाद्वेदाद्यद्वेदा-
नं ज्ञानं च तत्पूर्वायाः कर्मणः क्रियाकरणमनुष्ठानं ततो हि
ावतीत्यर्थः । निरुक्तजन्यस्य शब्दप्रवृत्तिनिमित्तत्वज्ञानस्य त-
ानुष्ठानद्वारेणादृष्टोपयोगित्वे व्यासवचनं सिद्धं दृष्टान्तं ताव-
* यथेति * निर्वचनज्ञानमात्रात्सर्वपापक्षयसिद्धौ भारता-
नतदर्थानुष्ठानानर्थक्यापत्तेः प्रधानफलमेवेदमङ्गस्तुत्यर्थं की-

ाार्णादिश्चेति २ पु० पा० ।

१२ र्त्तितमित्याशयः दार्ष्टान्तिके योजयन् श्लोकं व्याचष्टे * एवमिति
वेदमात्रात्कर्मावबोधसिद्धेर्निरुक्ताद्यानर्थक्यमाशङ्क्याव्युत्पन्नरूपे
त्युक्तम् । निरुक्तादावगतो यो धात्वर्थपूर्वको नामार्थस्तज्ज्ञानद्वा
या वाक्यार्थप्रतिपत्तिस्तत्पूर्वकादनुष्ठानादित्यर्थः ॥

॥ अथ कल्पसूत्राऽस्वतः प्रामाण्याधिकरणम् ॥ ७ ॥

## प्रयोगशास्त्रमिति चेत् ॥ १० ॥

अत्र भाष्यकृता कल्पसूत्रेषु प्रामाण्याप्रामाण्यसन्देहमुपन्
स्य प्रामाण्यं पूर्वपक्षयित्वा सिद्धान्ते निराकृतं, तत्स्मृत्यधिकरणा
त्पादितसकलविद्यास्थानप्रामाण्यविरुद्धत्वादयुक्तमाशङ्क्य पूर्वप
वचनव्यक्तिगतं प्रामाण्यशब्दं स्वतःप्रामाण्याभिप्रायत्वेन द्वेधा व
चष्टे * कल्पेति * म्लेच्छाचाराणामपि केषां चिदनादित्वेन
ष्टाचारतुल्यतया स्वतःप्रामाण्ये ऽभिहिते वेदातिरिक्तविद्यास्था
नामप्यध्येतृस्मरणेनानादितया वेदत्वेन वेदतुल्यतया वा स्वत
माण्योपपत्तेर्न वेदमूलत्वं तद्विरोधिनां वा प्रामाण्यं युक्तमित्यन
राधिकरणाव्युत्पादितस्वतःप्रामाण्योपजीवनेन स्मृतिविरोधाधि
रणद्वयाक्षेपादनन्तरसङ्गतिं प्रकृतसङ्गतिं च सूचयितुं सम्प्रतीत्युर
विचार्यतइति विचारार्थं पूर्वपक्षवचनव्यक्तिर्द्वेधोपन्यस्यतइत्यर्थः
मन्वादिस्मृतिवदेषामपि पौरुषेयत्वेन पारतन्त्र्यावगमात्स्वतः प्र
ण्यशङ्का न युक्तेत्याशङ्क्याह * वैदिकेति * मन्वादिस्मृतीनां
रोहितप्रायवेदार्थनिबन्धनादर्थवत्त्वं कल्पसूत्राणां तु स्पष्टवेदार्थ
यत्वात्प्रणयनानर्थक्यापत्तेरपौरुषेयत्वावगमात्स्वतःप्रामाण्यशङ्क
केत्याशयः । कल्पसूत्रशब्दयोरेकार्थत्वाद् द्वयोरुपादानमनर्थक
मन्यमानः पृच्छति *आहेति* कार्यतस्तावद्भेदमाह *सिद्धरूप इ
अवयवव्युत्पत्त्या भेदमाह * कल्पनाद्वीति * स्वरूपतो भेद
कल्पा इति * प्रतिक्रतुप्रयोगाणां प्रतिपादकतया पाठत एव
न तु स्वसंज्ञाभिर्व्याख्यानापेक्षा इत्यर्थः । एतत्तीर्थमित्याचक्षत
त्यादिभिः स्वसंज्ञाभिर्ऋचं पादग्रहणमित्यादिभिः स्वपरिभाष
र्यतिसिद्धमित्यतीतसिद्धशब्दानिःकृष्टविपरिणतानुषङ्गेण योज्य
ये यजामहे। यथ्यागूर्याज्यादिरित्याद्युत्सर्गवदनुयाजवर्जमित्याद्य
दवद्धक्षयेयुरिति गाणगारितत्संस्कारत्वादित्यादिहेतुमत्सम्प्रैष
देशान्पशुवच्छि ( पातानिति यथाध्वर्युः सम्प्रैषं दद्यात्तद्धोता
शान् द्रव्यादेशान् कुर्यात् । छागपदेन प्रैषे छागपदे ऽनादे
आज्येन चाज्यपदेन भेद उद्धृतं पार्श्वतः श्रोणित इत्यादयः

[व]वयववाचिनः निपाता इत्युच्यन्ते। तान् पशुवत्क्रियायां पशु-
[द्र]व्याद्यान्यथेत्यर्थः। यस्मिन् क्रतावग्नीषोमीयस्थाने सवनीयस्थाने
पश्वेकादशिनी कृता तत्र शालामुखीये त्वाष्ट्रेण पशुना यजेत।
[त]स्य पर्यग्निकरणान्तं कृत्वोत्सर्गः पूर्वमुक्तः। पर्यग्निकृतोत्सृजत्य-
[पां]नरायनायेति तस्य तावत्येव समाप्तिः आज्येन शेषं संस्थापयेदिति
। आज्येन समापने मन्त्रेषु छागशब्देन निगमाः कार्या इत्येकः
[प]क्षः। आज्यस्य प्रतिनिधित्वेन स्थानिवद्भावात् द्रव्यान्तरत्वे त्वा-
[ज्]यशब्देन निगमाः कार्याः इत्यन्यः पक्षः। तत्र प्रयोगमाह। यदि
[अ]ध्वर्यव आज्येन समाप्नुयुस्तथैव होता कुर्यात्सम्प्रेष वदादेशा पशु-
[ख]ण्डि)पात्यादिदृष्टान्तवत् पुरस्ताल्लक्षणा पुरोऽनुवाक्ये इत्यादिलक्ष्य
[स्]यापि लक्षणं तत्सूत्रमित्यर्थः। लक्ष्यस्यापि लक्षणं यस्मिन्निति सप्त-
[म्]ीबहुव्रीहिः। ननु स्वसंज्ञापरिभाषादियोगे पौरुषेयत्वापत्तेः कथं
[स्]मृतिवैलक्षण्यमित्याशङ्क्याह * तत्रेति * सकलपुरुषप्रत्यक्षवेदप्रति- [1]
[प]ाद्यार्थविषयग्रन्थप्रणयनवैयर्थ्यापत्तेरपौरुषेयत्वावसायात्सर्वाण्ये-
[व]ैतानि प्रज्ञानस्य नामधेयानि भवन्तीत्यादिवदन्यपरसंज्ञादीनीति
पूर्वपक्षी मन्यते इत्याशयः। एवं कल्पसूत्राणामपि स्मृत्यधिकरणे
वेदमूलत्वं प्रतिपादितमित्यभ्युपेत्य तदाक्षेपेण प्रत्यवस्थानमुपपादि-
तमिदानीमशब्दत्वेन तत्र पूर्वपक्षकरणात्कल्पसूत्रेषु च तदसम्भवा-
देषां स्मृत्यधिकरणविषयत्वाभावादिह विचारो न विरुद्ध इति
परिहारान्तरमाह * अप्रामाण्यमिति *अशक्यत्वमुपपादयति *
प्रत्यक्षेति * तत्र स्मृत्यधिकरणपूर्वपक्षे ऽपगतशब्दता शब्दशून्य-
तोक्ता सा कल्पसूत्रेष्वशक्या वक्तुमित्यर्थः। न केवलं पूर्वपक्षास-
म्भवादेषां स्मृत्यधिकरणाविषयत्वं किं तु मूलभूतवेदानुमानेन तत्र
सिद्धान्तकरणात् प्रत्यक्षवेदमूलेषु कल्पसूत्रेष्वनुमानायोगात् सिद्धा-
तासम्भवेनाप्येषां स्मृत्यधिकरणविषयत्वं नास्तीत्याह * स्मृत्यधि-
करणे चेति * यत्र न वैदिकं शब्दमुपलभ्यन्ते इति च सम्भवदशब्द-
त्वलक्षणपूर्वपक्षहेतुकानामेव तत्रोदाहृतत्वादुदाहरणभाष्यपर्यालोच-
नयाप्येषां स्मृत्यधिकरणाविषयत्वं प्रतीयत इत्याह * एतानि चेति *
इदं तु परिहारान्तरमनुपलभ्यमाने मूलस्मृतिप्रामाण्यसाधने प्रत्यक्षमू-
लानां कल्पसूत्राणामविचारितस्यापि प्रामाण्यस्य तुल्यन्यायसिद्धत्वा-
दन्यथा च विरोधाधिकरणे सर्ववेष्टनस्मृत्युदाहरणानुपपत्तेः शिष्टा-
कोपाधिकरणे च क्रत्वर्थस्मृत्युदाहरणानुपपत्तेरयुक्तमित्यपरितोषात्पू-
र्वमेव परिहारमनुसन्दधाति * न चेति * यद्यप्येषामिहाधिकरणे

१ अयं २ पा० २ पु० ना०।

पूर्वपक्षे प्रामाण्यप्रतिपादनमाभाति तथापि सिद्धान्ते स्व
कर्यशेषाभावाभिधानेन वेदवैलक्षण्यप्रतिपादनात्स्वतः
राकणप्रतीतेर्न प्रामाण्यं पूर्वपक्षे प्रतिपाद्यं येनेह तनि
त्स्मृत्यधिकरणविरोधः स्यादित्यर्थः । परमार्थतस्तु कल
मपि विप्रकीर्णानेकशाखागतश्रुत्यर्थनिबन्धनेन स्मृतितुल
त्यधिकरणविषयत्वमस्त्येवेत्यपरितोषात्स्वमतेन सर्वेषां
क्तविद्यास्थानानां स्मृत्यधिकरणप्रतिपादितवेदमूलत्वमा
माध्यीयतइति परिहारमाह * यद्वेति * स्वातन्त्र्यलक्षणं
प्रामाण्यमतिप्रामाण्यं, ननु स्मृतीनां प्रत्यक्षवेदार्थोपनिब
वेदवैलक्षण्यात्कथं स्वतःप्रामाण्याशङ्केत्यपेक्षायां पौरु
करणेन प्रामाण्याभ्युपगमे कल्पनागौरवापत्तेस्तत्परिहा
यत्वमेवोचितमिति सन्देहोपपादनाय पूर्वपक्षं सम्भावय
दीति * विषयव्याप्त्यर्थं षडङ्गस्यैतद्विचारविषयत्वमा
ति * न्यायवशात्स्वातन्त्र्यलक्षणप्रयोगशास्त्रत्वसम्भवे
वाच्यत्वस्याभियुक्तप्रयोगाधीनत्वात्तदभावे वेदत्वशङ्का
शङ्क्य * षडङ्गे ऽपीत्युक्तम् * एतदेव विवृणोति
ति * विरोधाधिकरणस्य शाक्यादिग्रन्थविषयत्वे तदाक्षे
नार्थं तेषामप्येतदधिकरणविषयत्वं सम्भवतीत्याह * यद्
विरोधाधिकरणं विषयान्तरासम्भवादनङ्गीकृतमपि केन
क्यादिग्रन्थस्य वेदमूलत्वसम्भावनामात्रेणाशङ्क्य तन्निर
त्वेन व्याख्यातमिदं तु विषयान्तरसम्भवात्किमित्यनङ्गी
१६३।२ निराकरणार्थत्वेन व्याख्यायते ऽत आह * शाक्यादयो ऽ
कथं वदन्तीत्यपेक्षायामुत्पादाद्वेति शाक्यग्रन्थमुदाहरति
उत्पादादिति प्रवाहनित्यत्वमभिप्रेतम् अनुत्पादादिति कू
त्वम् । तथागता बौद्धाः । धर्मनित्यत्वस्य तत्प्रतिपादक
त्वमन्तरेणायोगात्तन्नित्यताप्यनेनोक्तेत्याशयः । एतदेवं
* ततश्चेति * वाशब्दो ऽत्राध्याहार्यः । एवमपि किमर्थं
त्यपेक्षायामाह * चोदनेति * ननु शाक्याद्यागमस्य
निराकृतं वेदत्वं वेदतुल्यत्वं वा दूरादेवापास्तम् । कथम
इत्याशङ्क्य रूपकद्वारेणाशङ्कामुपपादयति * काममिति *
दिचोरः स्वागमप्रामाण्यग्रामं प्रत्यक्षादिमूलत्वेन वेदमू
द्वारेण प्रवेष्टुमुद्यतो ऽतीन्द्रियार्थदर्शनासामर्थ्यवेदमार्ग
क्षणन्यायदण्डपाणिभिर्मीमांसकैर्वारितो वरं न प्रविशेत्सम्प्र
मांसकानुमतेनापौरुषेयत्वेन महापथेन प्रकटं प्रवेष्टुमिच्छ

षामपि विचारविषयत्वं स्वाभिमतं द्योतयितुं भाष्यकारीयोदाह-
स्योपलक्षणार्थतामाह * एवमिति * पूर्वपक्षसूत्रव्याख्यानार्थं प्रयो-
ति भाष्यं व्याचष्टे * का गतिरिति * पूर्वार्द्धेनेति चेदिति सूत्राव
व्याख्यातः प्रयोगशास्त्रशब्दव्याख्यानार्थं सत्यवाचामिति भाष्यं
व्याचष्टे * वेदत्वमिति * पौरुषेयस्य विधायकोपस्थापनमात्र-
तार्थत्वेन साक्षादनुष्ठानविधायकत्वाभावात्प्रयोगशास्त्रशब्देना-
षेयत्वलक्षणं स्वातन्त्र्यमुक्तमित्याशयः। भाष्यकृता कथमवगम्य
ते पृष्ठा वैदिकैरेषां संवादो भवतीत्युक्तं तदपौरुषेयत्वे संवादा
त्वादयुक्तमाशङ्क्य वेदसंवादेन प्रामाण्यनिश्चयात्पौरुषेयत्वे
रुषतन्मूलप्रमाणवेदतन्नित्यत्वकल्पनेन गौरवापत्तेरपौरुषेयत्वे-
माण्योपपादनार्थतया व्याचष्टे * वेदेनैवेति * ननु माशकादि
ख्यया पौरुषेयावगमात्तेषां वेदत्वं वेदतुल्यत्वं वा न युक्तमित्या-
ते * ननु चेति * प्रवचनयोगेनापि समाख्योपपत्तेर्न तद्बलेन
ेयत्वसिद्धिरिति परिहरति * नैतेषामिति * वेददृष्टान्तसूचि-
प्रकटयति * माशकादीति * ननु कल्पादिशब्दानां (चरण-
ऽध्येतृपुरुषवाची) चरणविशेषवाचित्वाच्चरणानां चानादि-
न्निमित्ततादिसमाख्या युक्ता माशकादिशब्दानां त्वेकपुरुषाभिधा-
त्तत्समाख्यातग्रन्थनित्यत्वेन युक्तमित्याशङ्क्याह * यथैवेति *
कादिव्यक्तीनां वेदसमाम्नानान्यथानुपपत्त्या नित्यत्वं भविष्य-
ाशयः। वेदसमाम्नातेन मशकादिना समाख्यातस्य ग्रन्थस्य
तेत्यर्थः। ननु न समाख्यामात्रेणैषां पौरुषेयत्वं ब्रूमः किं तु
केनेदं कृतमित्यादिदृढविच्छिन्नाध्येतृस्मरणेनेत्याशङ्क्याह * यथा
* मशकादीनामृषित्वप्रसिद्धेर्ऋषिगतावित्यस्य धातोरिन्नित्य-
त्येगुपधात्किदित्यौणादिके इन्प्रत्यये कृते ऋषिशब्दव्युत्पत्तेर्गमेश्च
र्थत्वाद् दृषिदर्शनादिति च स्मरणाद् ऋषिशब्दस्य दर्शननिमि-
प्रतीतेः । करोतेश्चानेकार्थत्वाद् गन्धनावक्षेपणसेवनसाहसि-
तियत्नप्रकथनोपयोगेषु कृञ इति स्मृतिपर्यालोचनया वा प्रक-
र्थत्वाद्दर्शनाभिप्रायं कथनाभिप्रायं वा मशकादिकर्तृस्मरणमि-
यः। एतदेव विवृणोति * तथा हीति * प्रयोक्तृग्रहणं दर्शनम-
लक्षयति । नित्यविधिविषयत्वान्यथानुपपत्त्यापि कल्पसूत्राणां
त्वमित्याह * ब्रह्मयज्ञेति * पुराणेतिहासानामप्येतेनैव सामान्ये-
रुषेयत्वाभ्युपगमान्न तैरनैकान्तिकत्वाशङ्केत्याशयः। पुरुषकृ-
मित्यनेनार्थशब्दो नित्याभिप्रायो व्यतिरेकमुखेन व्याख्यातः। १६१

अयं पा० २ पु० ना०।

ऋषिणा दृष्टं प्रोक्तं वेत्यस्मिन्नर्थे तद्धितोपपत्तेरसतश्च दर्श
नायोगात्कालानवच्छेदेन सर्वदा सत्त्वप्रतीतेरार्षशब्दस्य नि
यत्वसिद्धिः । नन्वर्थवादाद्यभावाद्वेदमुद्रारहितत्वेनैषामवेदत
यतइत्याशङ्क्याह * अरुणेति * प्रत्युत वेदतुल्यतैवावसी
दर्शयितुम् * सर्वयाज्ञिकैश्चेत्याद्युक्तम् * आर्षत्वप्रसिद्ध्यापि
कल्पत्वं प्रतीयतइत्याह * आर्षमिति * न केवलं न्यायमात्रेण
कल्पत्वं प्रतीयेत किं तु सूत्रकारवचनादपीत्याह * लाटेति
काराभ्यामपि ब्राह्मणविहितादप्यार्षकल्पविहितगरीयस्त्वम
तत्प्रत्यक्षविहितां त्वितीदमुक्तमित्यन्वयः।को ऽत्रार्षः कल्पो
त इत्याकाङ्क्षायाम् * माशकमपेक्ष्येत्युक्तम् * ननु ब्राह्म
स्वतःप्रामाण्यात्कथं तस्मात्कल्पगरीयस्त्वमित्याशङ्क्य ह
प्रामाण्यापेक्षयेत्युक्तम् । कल्पप्रामाण्यं निश्चितमभिप्रेत्याति
त्रं गरीयस्त्वाभिधानमित्याशयः । कात्यायनेनापि कल्पगरीय
ङ्गीकृतमित्याह * कात्यायनेन चेति * यज्ञविषयाणां ब्राह्मण
स्तोत्रसाधनसामविशेषापेक्षिणां सामविशेषलक्षणार्थं वाक्यशे
ष्ये यथा माशकं मया लक्षणं करिष्यतइति कात्यायनवचनस्यार्थ
वलं प्रतिज्ञामात्रं किं तु कृतमपि तथैवेत्याह * तथा चेति *
मयानिकस्य प्रथमस्याह्नः प्रायणीयसंज्ञकस्याग्निष्टोमस्तोत्रसाध
विशेषापेक्षायां यद्ब्राह्मणेनाग्निष्टोमसाधनत्वेन जरा बोधी
हितम् । तत्कात्यायनेनार्भवपवमानाख्यस्तोत्रान्तरसाधनेषु
सामसु लक्ष्यमाणेषु तदीयात्प्रथमाद्गायत्राख्यात्साम्नस्तृत
लक्षितं जरासादिति सूत्रेणेत्यर्थः । कथमनेन सूत्रेण जराब
मार्भवीयगायत्रतृतीयत्वेन लक्षितमित्यपेक्षायामाह * आर्भव
माध्यन्दिनपवमाने ऽपि गायत्रसद्भावात्तद्व्यावृत्त्यर्थमार्भवीयां
प्रकृतार्भवपवमाने संहितस्य गायत्रानन्तरत्वात्तस्यैव सर्वत्र
संज्ञा माभूदिति गायत्रेणोपलक्षणं यद्यत्रार्भवपवमाने गायत्र
साम तत्र तस्य समिति संज्ञेत्यर्थः। परशब्देन सादिति पञ्चमी
गेन व्याख्याता कथं जराशब्दस्य जराबोधीयवाचितेत्यपेक्षाय
कदेशइत्युक्तम् । न केवलमन्यत्र विनियोगाद् ब्राह्मणानादरः
१६५।२ ग्निष्टोमसामत्वेनाविनियोगादपीत्याह * ढशब्देन चेति *
ष्टोमसाम्नो ढेयज्ञायज्ञीयमितिसूत्रेण प्रायणीयाग्निष्टोमसामत्वे
ज्ञायज्ञीयमेव नियतमित्यर्थः । नन्वार्भवीयगायत्रतृतीयत्वेन
विंशद्ब्राह्मणे सामन्तराविधानान्न जराबोधीयस्य तत्र वि
ब्राह्मणविरोधः नाप्यग्निष्टोमसामत्वेन यज्ञायज्ञीयनियमे ब्राह्म

ात्वाद्धुर्यज्ञायज्ञीयमेवाग्निष्टोमसामकार्यमिति तस्य नियत-
ाशङ्क्याह * यदि चेति * यज्ञायज्ञीयनियमे जराबोधी-
ार्थक्यापत्तेरेवकारस्य च यदेव प्रकृतौ तदेवात्रापीत्येवं प-
ात्तेर्विकल्पपरमेव ब्राह्मणमित्याशयः । एवं तर्हि कात्याय-
ात्यक्षविरोधादग्राह्यं स्यादित्याशङ्क्याह * बहिति * यद्यपि
ासूत्रं पौरुषेयं तथापि तस्य वेदोत्थापिनां न्यायानामध्येयं
ायो ऽयं न्यायाभास इति विवेककुशलत्वाज्ञाकुशलैर्मिथ्या-
ाध्यवसातुं शक्यमित्यर्थः। परमार्थतस्त्वस्मिन्पूर्वपक्षे सर्वेषा-
त्वान्न कस्य चिद् बाध इत्येतावानाशयः । करोतिप्रत्याय-
ोगास्तु प्रवचनाभिप्रायेण दर्शनाभिप्रायेण वा व्याख्येया
व । श्रुतिबलादप्येवं वेदतुल्यत्वमवसीयत इति प्रतिपाद-
ार्यवचनइतिभाष्यं व्याचष्टे * आचार्यवचनानां चेति *
ाण्यस्य स्वतस्त्वात्तत्प्रतिपादनपरा श्रुतिरनर्थिका स्यादित्या-
ातःसिद्धस्यापि प्रामाण्यस्यापवादशङ्कानिरासाय प्रमाणा-
ायां तादर्थ्येन प्रामाण्यश्रुतिसाफल्यप्रतिपादनार्थं प्रत्यक्षत
भाष्यं व्याचष्टे * यथा चेति * श्लोकाभिप्रायं विवृणोति
ीति * अनाप्तवाक्येष्वपि सम्वादेनापवादाशङ्का निवर्त्तते
ौरुषेयेष्वित्याशयः । एतदेवोपसंहरति * सत्यवाचां चे-
ल्यकल्पत्वएवोपपत्त्यन्तरप्रतिपादनार्थं वेदवाक्यैश्चेति भा-
चष्टे * अपि चेति * तुल्यत्वोपपादनार्थैवातिशयोक्तिः ।
र्तृकादरार्थतया व्याख्याय ब्रह्मयज्ञविधिकृतादरार्थतयैतदेव
*तुल्यं चेति* सम्प्रदायो ऽध्ययनं तद्विधायकं य एवं विद्वा-
यमधीतइति ब्रह्मयज्ञविधिवाक्यं तद्वेदवाक्यैः सह कल्पसू-
ल्यमित्यर्थः । अध्येतृकर्तृको वादरो ऽनेन भाष्येणोक्त इति
व्याख्यानमाह * अथ वेति * यत्नतुल्यत्वमेव दर्शयति
ोगेष्विति * वेदकौशलजिज्ञासार्थं तत्तद्वेदभागचिह्नलेख्या- १६६।१
कायां कुम्भाख्यायां निक्षिप्य तत्तद्वेदभागपरीक्षाकाले ता-
ाकृष्टलेख्यचिह्नितं वेदं पठत्यध्येतारो न युञ्जतइति घटिका-
तेनो ऽनुयोगाः। तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मा-
एतमेव न्यायं विद्यास्थानान्तरेष्वतिदिशति * एतेनेति *
ं च धर्मशास्त्रव्यपदेशादपि स्वातन्त्र्यलक्षणा प्रयोगशास्त्रताव-
त्याह * धर्मेति * तुल्यवच्च विद्यास्थानत्वव्यपदेशात्स-
ल्यतेत्याह * अपि चेति * वैदिकमन्त्रप्रकाश्यप्रकाशक-
षां वेदत्वमवसीयतइत्याह * किं चेति * नन्ववेदत्वे ऽपि

स्मृतीनां वेदमूलत्वेन तत्प्रतिपाद्यानामष्टकादीनां वैदिकत्वाद्वैदि
मत्र प्रकाश्यं च युक्तमित्याशङ्क्याह * एवं चेति * कल्पनागौर
पत्तेर्वेदमूलकत्वकल्पनातो वेदत्वकल्पनैव ज्यायसीत्यर्थः ।
नित्यत्वपक्षे तस्य चाप्रामाण्यस्य च कल्प्यत्वाद्वेदत्वपक्षे च तस्य
तृतीयस्य कल्प्यत्वाद्गौरवं स्यादित्याशङ्क्याह * सिद्धानामिति *
त्यत्वे सति निर्दोषत्वेनैव प्रामाण्यसिद्धेर्नित्यतैवैका साध्या सा
वध्यस्मरणेनैव सुसाध्या वेदता च वेदार्थविषयत्वात्प्रकल्प्यतइत्य
एतदेवोपसंहरति * तस्मादिति * किं तु यान्येवेत्युत्तरश्लो
योज्यः । वेदमूलत्वे च तत्समर्पणक्लेशाधिक्यापत्तेरेषामेव वे
६७।४ युक्तमित्याह * मन्वादिभिरिति * मूलसमर्पणक्लेशाङ्गीक
ऽप्येषां प्रति कञ्चुकत्वादग्राह्यत्वं स्यादित्याह * के हीति *
कञ्चुकानामग्राह्यत्वं दृष्टान्तेनोपपादयति * यथा चेति * ननु
दमूलत्वे ऽपि सम्प्रदायविनाशभयेनासमर्पणीयत्वान्न क्लेशापत्ति
ण्यग्राह्यत्वापत्तिरित्याशङ्क्याह * सम्प्रदायेति * एतदेव विवृ
* वेदेति * अवेदत्वे च तद्विज्ञातस्यार्थस्य श्रेयःसाधनत्वाभा
त्तेः शास्त्रप्रणयनवैयर्थ्यं स्यादित्याशङ्क्याह * वेदादेव चे
नन्वस्तु तर्हि वेदवाक्यानामेव विप्रकीर्णानामेकत्र स
वेशस्य मन्वादिभिः कृतत्वात्पौरुषेयतेत्याशङ्क्याह * न
ति * एतदेव विवृणोति * ईदृगिति * ननु मूलान्तरा
कत्र कल्पना रचना युज्यते सम्प्रदायविनाशापत्तेरिति योज
उपसंहरति ननु पौरुषेयत्वे ऽपि वेदमूलत्वेन धर्मप्रामाण्यो
कथं तदभ्युपगमे नित्यत्वापत्तिरित्याशङ्क्याह * चोदनेति *
साधनत्वमात्रेण धर्मत्वे कृष्यादेरपि धर्मत्वापत्तेर्विध्यनुष्ठापि
धर्मत्वाद्विधेश्च पौरुषेयेषु पुरुषाभिप्रायप्रतिपादकत्वेनासम्भव
प्रामाण्यासम्भव इत्याशयः । स एव ब्राह्मणस्याप्यवेदत्वे चो
त्वाभावे ऽर्थवादरूपस्य विध्येकवाक्यत्वाभावे धर्मप्रामाण्यं ना
वदता विवृतः । एतदेवोपसंहरति * तेनेति * ननु मूलभूत
नाकल्पनेनैषां धर्मप्रामाण्यं भविष्यत्यत आह * वदन्ती
चोदनाकल्पने तन्मात्रेणोपक्षीणानां धर्मप्रतिपत्तावव्यापाराद
ण्यापत्तिरित्याशयः । यावदुक्तं शब्देन विषयीकृतं तावत्येव शब्द
माणं येषां तैरित्यस्मिन्नर्थे ऽव्ययीभावगर्भो बहुव्रीहिः । ननू
न्यथानुपपत्त्यानुक्तकल्पनमपि युक्तमेवेत्याशङ्क्याह * उक्तमि
उक्तं धर्मरूपमर्थमादौ परित्यज्यानुक्तं वेदवाक्यं तावत्प्रतीर
ल्प्यते अनुक्तेन च वेदवाक्येन सपूर्वपरित्यक्तो ऽर्थो ऽपि प

तीयतइति यत्कल्पनं तत्कथानुपपत्त्येत्यर्थः। विद्यास्थानान्तरेषु पूर्व पक्षमुक्तमर्थमुपसंहरति * तस्मादिति * शाक्यादिग्रन्थानां च नित्यत्वमनेन सूत्रेणोच्यतइत्याह * शाक्यादीति * शाक्यादि ग्रन्थनित्यत्वे को न्याय इत्यपेक्षायामाह * येनैवेति* नन्वेवं सत्य। सत्वलक्षणगुणाभावात्कथं प्रामाण्यसिद्धिरित्याशङ्क्य स्वतस्त्वा ङ्गीकरणेन परिहरति * बोधकत्वादिति * कथमकृतकमित्यपेक्षाय ङ्कर्तृ * स्मरणवर्जनादित्युक्तम् * ननु सामाख्यानिकं कर्तृस्मरण स्तीत्याशङ्क्याह * बुद्धेति * यथाक्रमं दृष्टान्तद्वयम्मनुपलब्धिविरोध दिदूषणमपि वेदवत्परिहर्त्तव्यमित्याह * यावदेवेति * उप संहरति * तेनेति * नासन्नियमादिति सिद्धान्तसूत्रं स्वयं तावद्व्या चष्टे * एवमिति * यदेतत्सर्वेषामविशेषेण नित्यत्वं वेदत्वं स्वतःप्र माणत्वं तत्कारणं च कर्तृस्मरणवर्जनाद्युक्तं न तस्य किं चिन्नित्यं नि बन्धनं नियतं कारणमागमो न्यायो वास्तीत्यर्थः। अनेन चासन्नियम दिति हेतुर्निबन्धनाभावादित्येवं व्याख्यातः। सर्वसाम्योक्तेरसन्निब- न्धनत्वमेवोपपादयितुं चतुर्धा वैलक्षण्यमाह * इहेति * वेदतदङ्ग- धर्मशास्त्रशाक्यादिग्रन्थरूपेषु तुल्यत्वेनोपन्यस्तेषु अर्थेषु मध्ये वेदे- षु या वेदत्वनित्यता बुद्धिः सा वेदस्वरूपदर्शनादेव जायते बाधका- भावाच्च पारमार्थिकी तदङ्गेषु तु कल्पसूत्रेषु शिक्षादिषु च वैदिक- गृहीतकाद्यर्थप्रबन्धान् षडङ्गमेक इतिस्मृतेश्च वेदत्वनित्यत्वबुद्धिर्जा- यमाना दृढकर्तृस्मरणान्मन्त्रब्राह्मणयोर्वेद इति नामधेयमिति बहु- मतिविरोधाच्च भ्रान्तिर्धर्मशास्त्रेषु वैदिकग्रहाद्यर्थनिबन्धलिङ्गाभा- वाद्वेदत्वास्मरणाच्च वेदत्वनित्यत्वबुद्धिरजायतैव शाक्यादिग्रन्थेषु त्वतीन्द्रियार्थनिबन्धनेन स्थितेयं धर्मनित्यतेत्यादिपर्यालोचनया च वेदत्वनित्यत्वबुद्धिर्जातापि स्वसिद्धान्तविरोधाद्दुष्यतीत्यर्थः। ननु शाक्यादिग्रन्थेषु स्वसिद्धान्तविरोधात्कथं वेदत्वनित्यत्वबुद्धिर्जायते इत्याशङ्क्याह * परेणेति*उक्तिप्रत्युक्तिरूपं वाकोवाक्यम्। प्रतिभा- । किं कारणमित्यपेक्षायां परवाक्येभ्यो ऽवगतानां नित्यत्वोपपत्तीनां स्वागमेष्वारोपः। प्रतिभानकारणत्वेनोक्तः। ननु स्वसिद्धान्तज्ञाने विरोधोपपत्त्या ऽरोपो न सम्भवतीत्याशङ्क्याह * छायामिति * स्वागमप्रामाण्यप्रतिज्ञाहान्या पराजयान् मुखच्छायां नश्यन्तीं रक्षि- तुमित्यर्थः। यद्यप्यात्मीयं सिद्धान्तं जानन्तीत्यध्याहृत्य तथापिश- ब्दो योज्यः। एतदेवोदाहरणनिष्ठमाह * यथेति * ननु वेदमूलत्वे- नापि स्वागमप्रामाण्यासिद्धेर्नित्यत्वाभिधानमनर्थकमित्याशङ्क्याह * द्वेषादिति * ननु स्वानङ्गीकृतनित्यत्वाभिधानादसत्यवादित्वं स्या-

दित्याशङ्क्याह * तन्मात्रे ऽपि चेति * नित्यत्वाभि
दित्वाभावे ऽपि स्वागमप्रामाण्याभिधानविषये सत्यव
तीत्यर्थः । नन्विहिंसादेर्वेदमूलस्याभिधानात्कथं तेषां
द्वेष इत्याशङ्क्याह * भूयसामिति * शाक्यैरप्यहिंसा
तन्त्रेणैव विधीयते न वेदादुपलभ्येत्यर्थः । नित्यत्व
तेषां प्रयोजनमित्यपेक्षायामाह * ततश्चेति * वेदनि
भासैर्विमोह्यते विश्वास्यते विप्रतीयीक्रियते निवार्यत
तैर्नित्यत्वस्यासत्वलक्षणवाक्यप्रामाण्यकारणगुणाभाव
दप्रामाण्यबाधकत्वादभ्युपगन्तव्यं वेदत्वाभिधानेन
नेन वा स्वागमाप्रामाण्यं विमोह्यतइत्याशङ्क्याह *
यादृशं परेणोक्तं तादृशमविचार्यैव ये मन्यन्ते यादृश
णाः । तैरप्यतीन्द्रियविषये पुरुषवचनप्रामाण्यस्य निर
त्वान्निरुत्तरीकृताः परवाक्यान्यनुकुर्वन्तः स्वागमनित्
न्वयः । ननु चक्षुरादीनामतीन्द्रियार्थग्रहणासामर्थ्ये
देरतीन्द्रियार्थग्रहणासामर्थ्यस्य तैरुपपादितत्वात्कथं
त्याशङ्क्य * बालेत्याद्युक्तम् * अनेन चोपपत्तिव
गमप्रामाण्यं साधयामो ऽनेन वेति यद्यपि हृदयं व्याकुल
प्रक्षीणकुहेतुवचनजालत्वेन तद्वाक्यानां बालानुकरण
त्वान्न स्वपक्षसाधनक्षमतास्तीत्यर्थः । ननु नित्यत
क्यप्रामाण्यकारणाप्तलक्षणगुणाभावात्प्रामाण्यानुपपत्ते
क्यानुकरणमनर्थकमित्याशङ्क्य * अपौरुषेयत्वेत्यु
मांसकोपपादितस्वतःप्रामाण्यनिराकरणाशक्तेरित्याशङ्
नुकरणे मूर्खवरस्य गोत्रप्रश्नविषयमुत्तरं दृष्टान्त
१७०।१ दृशमुत्तरमित्यपेक्षायाम् * यद्वेत्युदाहरणम् *
क्यादीनामागमनित्यत्वोक्तावपसिद्धान्तापत्तिः स्या।
*अस्मदीयमिति* आगमनित्यत्वप्रतिपादकं यद्भवतां व
दीयमिति मीमांसकैरुदिताः शाक्यादयो ऽस्माकमेवे
मांसकैः श्रुत्वा हतमिति जल्पन्तीत्यर्थः । कथमेवं ते
त्याशङ्क्याह * त्यक्तलज्जमिति * क्रियाविशेषणत्वान्न
एवं शाक्यादिग्रन्थेषु वेदत्वनित्यत्वबुद्धेर्जन्मोपपाद्य दूष
श्चेति * कथं क्षणिकत्वादित्वप्रसिद्धिस्तेषामित्याशङ्क्याह
केन ग्रन्थेनायं धर्मः शाक्येनोपदिष्ट इत्यपेक्षायां तदीयं
* क्षणिका इति * सर्वेषां संस्काराणां संस्कृतानां

१ अभिधानांशय० २ पु० पा०

णिकत्वेनास्थिरत्वात्क्रियाकालं यावत् स्थायित्वाभावान्न क्रियाव्यापारः कुतः सम्भवतीति क्रियापदार्थं निषेधता शाक्येन सर्वस्य संस्कृतस्य कृतकस्यानित्यत्वलक्षणो धर्मो ऽभिहित इत्यर्थः। नन्वकृतकानां प्रतिसंख्यानिरोधव्योम्नां शाक्यैर्नित्यत्वाभ्युपगमात्तन्न्यायेनागमस्यापि नित्यत्वं तेषामभिमतं भविष्यतीत्याशङ्क्याह * बुद्धीति * मुद्गरप्रहाराद्युत्तरकालीनस्य घटाद्यभावस्य प्रतिसंख्यानिरोधाख्यस्य व्योम्नश्चावरणाभावरूपस्यावस्तुत्वात्कृतकत्वादिधर्मयोगासम्भवे ऽप्यागमस्य वस्तुत्वात्कृतकत्वं क्षणिकत्वं च शाक्यानामभिमतमेवेत्याशयः। वस्तुत्वं चार्थक्रियाकारित्वलक्षणं बुद्धेर्ग्राहकशक्तियोगाद् बोध्यस्य च ग्राह्यशक्तियोगान्नेतरस्येति दर्शयितुम् * बुद्धिबोध्यत्वमित्युक्तम् * विशेषतश्च पदाद्यनित्यत्वाभिधानादागमानित्यत्वं शाक्यानामनभिमतमिति ज्ञायतइति तदीयग्रन्थोपन्यासेनैव दर्शयति * तथेति * शब्देनाभिव्यक्तिर्युज्यते सा हीन्द्रियसंस्काराद्वा स्याद्विषयसंस्काराद्वा द्वेधापि दोषो ऽस्ति। कथमित्यपेक्षायां बुद्धेर्नियमादित्युक्तं कश्चिदेव शब्दः केन चिदेव युज्यते इति द्विविधो बुद्धिनियमो दृश्यते स चेन्द्रियसंस्कारपक्षे गोशब्दाभिव्यक्त्यर्थं संस्कृतेन श्रोत्रेण सर्वगतत्वेन तत्समानदेशस्याप्युपलम्भापत्तेर्विषयसंस्कारपक्षे स्रुघ्नसंस्कृतस्य शब्दस्य पाटलिपुत्रे ऽप्युपलम्भापत्तेर्न युज्यते इति शाक्यग्रन्थार्थः। ननु पदाद्यनित्यत्वे ऽप्यागमानित्यत्वमध्ययस्मरणादिना सेत्स्यतीत्याशङ्क्याह * यस्तन्त्विति * पदसङ्घातात्मकस्यागमस्य पदाश्रितत्वात्तदनित्यत्वे नित्यत्वं न युज्यतइत्याशयः। आगमनित्यत्वसिद्ध्यर्थं चोपकल्पिते पदादिनित्यत्वे शाक्यैर्निराकृतमागमनित्यत्वमिति रूपकद्वारेणाह * यावदिति * आगमनित्यत्ववेश्मार्थं यावत्पदनित्यत्वादिदारूपकल्पितं तस्मिञ्छाक्योक्तैर्हेत्वाभासाग्निर्निर्दग्धे तदागमनित्यत्वरूपं वेश्म दुष्करमित्यर्थः। ननु कूटस्थनित्यत्वासम्भवे ऽपि व्यवहारनित्यत्वं प्रवाहनित्यत्वापरपर्यायं भविष्यतीत्याशङ्क्याह * व्यवहारेति * अर्थप्रतिपादनलक्षणक्रियानित्यत्वमिह व्यवहारनित्यत्वं वाच्यम्। न चाश्रयनित्यत्वं विना तदाश्रितक्रियानित्यत्वं युक्तमित्यर्थः। नन्वाश्रयस्य पदादेः कूटस्थनित्यत्वाभावे ऽपि प्रवाहनित्यत्वात्तदाश्रितक्रियानित्यत्वं भविष्यतीत्याशङ्क्याह * न चेति * पदावयवभूतानां वर्णानामपि क्षणिकत्वाभ्युपगमाच्च पदार्थनित्यत्वस्यापि जातितो व्यक्तितो वा ऽनुपपत्तेर्न पदादेः प्रवाहनित्यतापि शाक्यपक्षे सम्भवतीत्याशयः अतः स्थितैवैषां धर्मानित्यतेति वचनाच्छाक्यागमे वेदत्वानि-

त्यत्वबुद्धिर्जातापि सर्वक्षणिकसिद्धान्तविरोधाद् दुष्यतीत्युप
१७१।२ ति * स्थितैवेति * किं च क्षणिकत्वे पूर्वोपलब्धाया धर्मता
देशकाले विनष्टत्वादेषेति सर्वनामनिर्देश एव तावन्न युक्तः ।
नष्टत्वादेषेत्यस्य तदेकवाक्यतात्यन्तमयुक्तेत्याह * एषेति *
सूत्रं योजयति * तेनेति * असत्त्वस्य क्षणिकत्वस्य सर्व
विशेषतश्च पदादिषु नियमान्निबद्धत्वादभ्युपगतत्वादागमानि
नुपपत्तिं प्रतिपाद्यमालोच्य प्रागसतश्च कृत्रिमस्यातीन्द्रियेऽर्थे
ऽन्यलक्षणं प्रयोगशास्त्रत्वाभावं प्रतिपाद्यमालोच्यैतत्सूत्रमिर
असाधुशब्दाभिप्रायो वायमसच्छब्दो व्याख्येय इत्याह * अ
ति * पूर्वार्द्धं व्याचष्टे * मागधेति * मागधभाषागता अ
शब्दा मागधाः दाक्षिणात्यभाषागता दाक्षिणात्याः । तदुभ
शप्रायाश्चासाधवो ये शब्दास्तन्निबन्धनं येषामागमानामिति
मागधदाक्षिणात्या एव तावदसाधवः शब्दाः तदपभ्रंशास्त्वस
इत्याशयः।ममापि भिक्षवः कर्म वर्त्ततएवाशरीरपातादित्याद्या
उत्क्षिप्ते लोष्ठे उत्क्षेपेऽस्ति कारणं पतने नास्ति कारणम
च्च कारणम् इमे च संस्कृता धर्माः सम्भवन्ति सकारण
कारणा विनश्यन्ति । उत्पत्तिमनुकारणमपेक्षन्तइत्याद्याग
रार्थः उत्तरार्द्धं व्याचष्टे * ततश्चेति * नन्ववध्यस्मरणेऽप्यस
ब्दभूयिष्ठत्वादिना शाक्याद्यागमानां कृतकत्वापादने वेदस्यापि
सङ्घातात्मकत्वादिहेतुना कृतकत्वमापद्येतेत्याशङ्कां निराकुर्वा
परमार्थेनेतिश्लोकस्य पूर्वार्द्धं व्याचष्टे*वेदेषु हीति * आदिम
नाद्वेदे पौरुषेयत्वभ्रान्तिर्निवर्त्तते किमुत समस्तवेददर्शनादित्या
दिमात्रमिति*कथमित्यपेक्षिते पौरुषेयत्वेऽप्यवैलक्षण्यं दर्शयि
षेयग्रन्थानां तावत्प्रमाणान्तरानुसारिपदवाक्यनिषिद्धत्वमाह*
१७२।२ त्विति * वेदानां तद्वैलक्षण्यात्पौरुषेयत्वासम्भवं दर्शयन्नृग्वेदस
दलौकिकप्रायानियतस्वरकपदनिबद्धत्वात्पौरुषेयत्वासम्भवमा
पाठकेति * आदिमात्रदर्शनेनाप्यृग्वेदस्यापौरुषेयत्वन्निश्चीयत
* अग्निमिति * कथमस्य पौरुषेयत्वं न सम्भवतीत्याशङ्क्य
किमालोच्येति * यजुर्वेदस्याप्यादिमात्रदर्शनेनापौरुषेयत्वं नि
तइत्याह * इषे त्वेति * प्रसङ्गादेतमन्त्रविनियोजकस्य ब्राह्म
पि विनियोगरूपदर्शनाद्वापौरुषेयत्वं निश्चीयतइत्याह *
ति * द्वितीयमन्त्रविनियोजकस्याप्यपौरुषेयत्वनिश्चयमाह *
मिति * ऊर्जेत्यित्ययमितिवक्तव्ये श्लोकाक्षरातिरेकापत्तिभीत्य
तारः सन्ति मेत्युक्त्वेति मानवीयश्लोकवादिकारो न युक्तः ।

मन्त्रविनियोजकस्याप्याह * वायवस्थेति * एकशो विनियोगे ऽनुपपत्तिरित्याशङ्क्याह * वायुशब्देनेति । सामवेदस्याप्यादिमाश्रवणेनापौरुषेयत्वनिश्चय इत्याह * सामवेद इति * कथं पौरुषे १
त्वे निरभिप्रायत्वापत्तिरित्याशङ्क्याह * को नामेति * अर्थाभिधानपराणामृगक्षराणामित्यनादरे षष्ठ्यौ । अनवगतपूर्वं विकुर्यादिति क्रियाविशेषणम् । अक्षरान्तरेष्वपि विकारः पौरुषेयत्वेन ज्यत इत्याह * तथेति * वेदे पुरुषप्रदर्शनमात्रेणापौरुषेयत्वनिश्चयमुपसंहरति * तेनेति * ननु लौकिकवाक्ये विलक्षणरूपदर्शनाद्वेदस्यापौरुषेयत्वे सूर्य एकाकी चरतीत्यादीनां तत्सादृश्यात्पौरुषेयत्वापत्तिरित्याशङ्क्य तत्रापि स्वरादिनियमाद्वैलक्षण्यमाह * किं चेति * अतो निरपवादसिद्धं वेदस्य रूपदर्शनेनापौरुषेयत्वमित्युपसंहरति * एवं चेति * ननु रूपदर्शनमात्रेणापौरुषेयत्वनिश्चये मीमांसकानां न्यायप्रतिपादनक्लेशो ऽनर्थकः स्यादित्याशङ्क्याह *तावता त्विति* स्वानुभवरूपा दृढा प्रतीतिरनवच्छिन्नप्रतीतिप्रवाहवाचकत्वाद्भावनेत्युच्यते । इतिकरणो हेतौ । बाह्यतार्किकपरामर्शी तच्छब्दः । शाक्यादिग्रन्थेषु रूपदर्शनमात्रेण पौरुषेयत्वनिश्चयो भवतीति व्यतिरेकमाह * शाक्यादीति * प्रज्ञप्तिविज्ञप्तिशब्दयोर्ज्ञानातेर्णिजन्तत्वाभावे युगागमस्यासाधुत्वं णिजन्तत्वे तु ण्यासश्रन्थो युजिति विशेषविहितेन युच्प्रत्ययेन. स्त्रियां क्तिन्निति सामान्यविहितस्य क्तिन्प्रत्ययस्य बाधादसाधुत्वम् शिति प्रत्यये परभूते दृशेः पश्यादेशविधानात्पश्यनाशब्दस्यासाधुत्वम् । ननु भिक्षुशब्दगतस्य क्षकारस्य प्राकृतव्याकरणे स्तुरवकार इति खकारादेशविधानात्तस्य च शेषादेशयोर्द्वित्वमनादाविति द्वित्वविधानात्कथमत्र दृष्टतरत्वमित्याशङ्क्याह * द्वितीयेति * इदुदुभ्यां शसोणो इति स्मरणाद्भिक्षूनित्यस्य स्थाने भिक्खुणो इति प्राप्ते रेकान्तत्वायोगाद्भिक्षणं भिक्षुशब्दाद् द्वितीयाबहुवचनस्य शसोण इति णकारादेशविधानाद्भक्ष इति भिक्ष इति घञन्तं भिक्षशब्दं व्युत्पाद्य भिक्षुं वाति गच्छति प्राप्नोतीत्यस्मिन्नर्थे वा गतिगन्धनयोरित्यस्माद्धातोरातोनुपसर्गे क इति कप्रत्ययोत्पादनेनाकारान्तभिक्षुशब्दमभ्युपेत्यैकारान्तम् * दृष्टमित्युक्तम् * आदिशब्दोक्तं शब्दान्तरापभ्रष्टतरत्वं दर्शयति * संस्कृतेति * स्वयमेव च शाक्येनात्र डकारापत्तिर्निषिद्धेत्याह *सो ऽयमिति * नासन्नियमादिति सूत्रस्यासाधुशब्दनिबन्धनाभिप्रायं व्याख्यानमुपसंहरति * इतीति * व्याकरणानुगतशब्दनियमाभावा

१ खका५० २ पु० पा० ।

ाधुभिरभिदध्यादसाधुर्भिर्नेत्यभिधानकरणत्वेन तु भविष्यतीत्या-
ङ्कते * अभिधेति * गोशब्देनाभिदध्यादश्वशब्देनाभिदध्यान्न
ावीशब्देनाभिदध्यान्न गोणीशब्देनाभिदध्यादित्यादि स्वरूपा प्रत्येकं
ा विधिनिषेधा कल्प्यन्ते साधुभिरभिदध्यादसाधुभिर्नेति द्वावेव
ा तत्रानन्त्यापत्तेराद्यं पक्षं तावद् दूषयति *नेति * कथं कल्पना-
पपत्तिरित्यपेक्षायां व्याकरणस्मृतिमूलत्वेन कल्प्यत्वादनन्तानां चा-
ेतुमशक्यत्वादनुपपत्तिरित्याह * यो हीति * यो हि व्याकरण-
णेता तद्गुणतया य एव पदानां प्रतिपत्तौ प्रतिपदं पाठ इति महा-
ाष्यकारोक्तन्यायेन साधूनां प्रतिपदं पाठन्नाध्यवस्यतीत्यर्थः। स एकै-
स्य शब्दस्य गावीगोण्याद्यनेकापशब्ददर्शनात्तेषां विशेषमाह*अपश-
ाश्चेति*कलञ्जादिवदिति वैधर्म्यदृष्टान्तं विवृणोति *व्रीह्यादीनि ही-
ि*कलञ्जादिग्रहणेन तुल्यन्यायतया व्रीह्यादीनां विधेयत्वसम्भव-
ूचनार्थं व्रीह्यादिग्रहणम् । अनन्तरोक्तव्यतिरेकमुखेन द्वितीयपक्षं
िराकरोति * न त्विति * सर्वानुगतैकधर्म्ममात्रोपलक्षणार्थो जा-
िशब्दः तत्र एकोपलक्षणत्वाभावेनैकविधिनिषेधविषयत्वासम्भव-
ुपपादयति * न तावदिति * अयमाशयः न तावच्छब्दत्वाति- १९
िक्ता सर्वसाधुशब्दानुयायिन्यासाधुभ्यो व्यावृत्ता विलक्षणैकाका-
प्रत्ययवेद्या साधुत्वजातिरसाधुत्वजातिर्वा साधुशब्दानुगता सा-
ुभ्यो व्यावृत्तोपलभ्यते न चान्यो ऽपि कश्चिद्धर्म्मः साध्वसाधुश-
दाभिधेयः सम्भवति तथा हि न तावच्छब्दव्यतिरिक्तस्येन्द्रियलि-
ादेः शब्दस्यापि वा वक्तृज्ञानविवक्षाविषयप्रत्यायकत्वं साधुत्वं
स्य चिदिष्टम् । न च शब्दस्यार्थप्रत्यायकत्वं साधुत्वं गाव्यादिश-
देष्वव्याप्तेः । न च शब्दस्य शक्त्यर्थप्रतिपादकत्वं साधुत्वं गङ्गायां
ोषो ऽग्निर्माणवक इत्यादौ गङ्गाग्निशब्दयोस्तीरमाणवकादिषु श-
क्त्यभावे ऽपि तत्र साधुत्वप्रसिद्धार्थान्तरविषयशक्त्या अर्थान्तर-
वषयसाधुत्वाभ्युपगमे गोणीशब्दस्याप्यावपनविषयशक्तिसद्भावात्
ास्नादिमति साधुत्वापत्तिः देवदत्तादिशब्दानां च संस्कृतेनार्थप्र-
तपादनं, न च शब्दस्यार्थप्रत्यायकत्वं साधुत्वं गाव्यादिशब्देष्व-
याप्तेः। न च शब्दस्य शक्त्या अर्थप्रतिपादकानां शक्त्यभावादसा-
ुत्वापत्तिः । स्नुषादिशब्दानां पुत्रभार्यादिवाचिता पुत्राद्यनभिधाय
ाद्विशिष्टभार्याद्यभिधानशक्तेः पुत्रादौ शक्तिसद्भावात्साधुत्वापत्तिः।
अर्थविषयानादिप्रयोगत्वे तु साधुत्वलक्षणे गाव्यादिशब्दानाम-
पि सास्नादिमदर्थविषयप्रयोगावध्यस्मरणेनानादित्वावगमात्साधु-
त्वमशक्यं निराकर्त्तुं स्वाभाविकार्थपरत्वमपि प्रतीतिप्रयोगाविशेषा-

ढ्वादिशब्दवद्गाव्यादिशब्देष्वपि तुल्यं लक्षणानुगमो ऽपि च सिद्धेरुभयानर्थक्यमाशङ्क्य चम्पतीत्यादिशब्देषु वृद्धाप्रयुक्तत्वेना साधुतया ऽभिमतेषु भावान्न साधुत्वलक्षणमिति न कथंचित् साधुत्वं निरूपयितुं शक्यमनेनैव मार्गेणासाधुत्वमपि निराकार्यमिति एतदेव विवृणोति *अविभक्ता हीति* अतश्चैकोपलक्षणाभावात्सामान्यरूपेण साध्वसाधूनां विधिनिषेधविषयत्वानुपपत्तेः। व्यक्तिरूपेण विधिनिषेधविषयत्वानुपपत्तेः। पूर्वोक्तमेव विधिनिषेधानन्यप्राप्तमित्युपसंहरति * तेनेति * नन्नूपलक्षणान्तरासम्भवे ऽपि स्वाभाविकार्थपरत्वलक्षणसाधुत्वतद्विपर्ययलक्षणासाधुत्वोपलक्षणायोगेन विधिनिषेधविषयत्वं भविष्यतीत्याशङ्क्याह * न चेति* अर्थप्रत्यायनोद्देशेन सर्वेषां प्रयोगदर्शनेनार्थप्रत्यायनार्थत्वावसायादर्थप्रत्ययनार्थत्वलक्षणस्य वाचकत्वस्याव्यावर्त्तकत्वात्तद्विपर्ययलक्षणस्य वा वाचकत्वस्यासत्वाच्चोपलक्षणत्वं सम्भवतीत्याशयः। ननु गाव्यादिशब्दाव्यावर्त्तकत्वे ऽपि प्रसिद्धावाचकत्वमेर्यादिशब्दव्यावर्तकत्वाद्वाचकत्वस्य विधेयशब्दोपलक्षणत्वोपपत्तेरवाचकत्वस्य निषेध्यमेर्यादिशब्दोपलक्षणतोपपत्तेस्तन्निबन्धनौ विधिनिषेधौ भविष्यत इत्याशङ्क्याह * वाचकैरिति * प्राप्ताप्राप्ततया विधिनिषेधविषयत्वाभावे दृष्टान्तमाह *न हीति * द्रवद्रव्यमात्रोपलक्षणार्थमुदकग्रहणम्। ननु विधिनिषेधरूपश्रुतिमूलानपेक्षव्याकरणपरम्परामात्रेण साध्वसाधुविवेकसिद्धेर्विधिनिषेधनिराकरणमनर्थकं मूलश्रुत्यपेक्षायामपि वा साध्वनुशासनात्मकत्वेन व्याकरणस्य साधुविधिमात्रापेक्षत्वादसाधुनिषेधनिराकरणमनर्थकमित्याशङ्क्याह * अवश्यं चेति * निर्मूलत्वे अन्धपरम्परान्यायापत्तेर्न साध्वसाधुविवेकसिद्धिरित्याशयः। साधुविधानेनासाधुवर्जनसिद्धेरसाधुनिषेधेन वा साधुप्रयोगसिद्धेरुभयानर्थक्यमाशङ्क्य * संयोगेत्युक्तम् * विधेयेष्टसंयोगो विधेः फलं निषेध्यानिष्टसंयोगो निषेधस्येत्यर्थः। ननु उपलक्षणमूलत्वे निषेधमूलसाध्वनुशासनं न युक्तमित्याशङ्क्याह * त्रिष्वपि चेति*साधूनामसाधुभ्यो ऽल्पत्वाद्व्यवस्थितत्वाच्च सौकर्यम्। एतदेव विवृणोति * यदीति * यथा पञ्चनखानाम्मध्ये पञ्चैव शशादयो भक्ष्या इति नियमे कृते ततो ऽन्येषां श्वादीनामभक्ष्यत्वं गम्यते तथा गवादय एव साधव इति नियमे कृते ऽन्येषामसाधुत्वावगतिरित्यर्थः। एतदेवोपसंहरति * स एष इति * प्रासङ्गिकं व्याकरणस्य त्रिविधश्रुतिमूलत्वे ऽपि साध्वनुशासनमात्रात्मकत्वसम्भवमुपसंहृत्य प्रकृतं मूलश्रुत्यनुमानासम्भवमुपसंहरति * तन्वि-

* मूलासम्भवमेव द्रढयितुं व्यवस्थापकोपपदासम्भवं पूर्वाधिकरणोक्तमत्रापि योजयन्नाह * इदमिति * एवमेकोपलक्षणासत्त्वेन विधिनिषेधासम्भवमुक्त्वा विधिविषयासम्भवादपि विध्यसम्भवमाह * अथ प्राप्तश्चेति * अनेन च शब्दप्रयोगस्य लोकव्यवहारार्थत्वेनैवोत्पत्तेः। सिद्धेरशास्त्रविषयत्वादित्येतत्सूत्रावयवो व्याख्यातः। नन्वत्र महावार्त्तिककारेण सिद्धे शब्दार्थसम्बन्धे लोकतो ऽर्थे प्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्म्मनियमो यथा लौकिकवैदिकेष्विति व्यवहारलक्षणेनैवार्थेन साध्वसाधुशब्दप्रयोगे आक्षिप्ते धर्म्मार्थं शास्त्रेण साधुनियमः क्रियते यथा लोके क्षुत्प्रतीघातार्थे प्राप्ते भक्षणे भक्ष्याभक्ष्यनियमो वेदे वा पयोव्रतं ब्राह्मणस्येत्यादिवदिते नियम इति वदता समाधानमुक्तमित्याशङ्कते * अथेति * धर्म्मजिज्ञासापह्नवेन धर्म्मस्य नियम इति षष्ठीविग्रहे ऽपि सम्बन्धमात्रोत्पन्नायाः षष्ठ्यास्तादर्थ्यलक्षणविशेषनिष्ठत्वसन्दर्शनार्थं धर्मायेति चतुर्थीनिर्द्देशः। साधूनां नियमाविषयत्वासम्भवेनैतन्निराकरोति * तदिति * नित्यप्राप्तस्य नियमाविषयत्वासम्भवे हेतुमाह * यस्य हीति * ननु गाव्यादिभ्यो ऽप्यर्थप्रत्ययसिद्धेस्तत्प्रसक्तौ गवादिशब्दस्य पाक्षिकत्वापत्तेर्गाव्यादिनिवृत्त्यर्थो नियमो भविष्यतीत्याशङ्क्याह * यस्यापीति * गाव्यादिशब्दानां साध्वसाधुत्वपक्षद्वये ऽपि व्यावर्त्यत्वायोगादित्याशयः। एतदेवोपपादयितुं विकल्पयति * कीदृशश्चेति * उभयत्र दोषमाह * यदीति * न च साधूनामप्यर्थप्रत्ययहेतुत्वादस्तिप्रसक्तिरित्याशङ्क्याह *यदि हीति* शब्दव्यापारसाध्यमर्थप्रतिपादनं, भाषणं नार्थप्रतिपादनमात्रं शब्दस्य च मुख्यार्थे साक्षाद्व्यापारो गौणलाक्षणिकयोस्त्वभिधेयसादृश्याविनाभावद्वारा गाव्यादीनां तु कथं चिद्व्यापारालाघवशब्दव्यापारसाध्यार्थप्रतिपादनात्मके भाषणे हेतुतास्तीत्याशयः। ननु साधूच्चारणायैव प्रवृत्तस्य प्रमादेनाशक्त्या वा प्रसज्यमानस्यासाधोर्निवृत्त्यर्थो नियमो भविष्यतीत्याशङ्कते * अथेति *प्रमादाशक्तिजानां दोषाणां परिहर्त्तुमशक्यत्वात्तन्निवारणमनर्थकमिति परिहरति * तदसदिति * नन्वव्यग्राणां शक्तानामपि च गाव्यादिशब्दप्रयोगदर्शनादप्रयुक्ताभिधानमयुक्तमित्याशङ्कते * दृष्ट इति * मत्पक्षे गाव्यादिशब्दानामप्यर्थप्रतिपादने व्यापारसद्भावादुक्ता प्रसक्तिः। त्वत्पक्षे तु तेषां कथं चिद्व्यापाराभावान्न तावच्छब्दव्यापारसाध्यार्थप्रतिपादनात्मके भाषणे प्रसक्तिः। यथा कथं चिदर्थप्रतिपादने तु प्रसक्तस्य गाव्यादेर्निवृत्त्यर्थं नियमाभ्यु-

पगमे अक्षिनिकोचादेरपि प्रसक्तेस्तन्निवृत्त्यर्थो
शब्दव्यतिरिक्तसर्वप्रमाणोच्छेदः स्यादित्यभि
उच्यत इति * निवृत्त्यर्थत्वे च नियमत्वं व्याहन्
साध्यसाध्योश्च द्वयोर्नित्यप्राप्त्यभावात्परिसंख्य
मेति * किं चादृष्टार्थस्य यागादीष्टसिद्ध्यर्थं पु
स्तत्प्रकृतित्वादिनियमस्तदपेक्षितावघाताद्युपाय
प्रयोगस्य तु परप्रतिपत्त्यर्थत्वेन दृष्टार्थत्वान्न
युक्त इत्याह * न चेति * नन्वेकः शब्दः सम्
शास्त्रान्वितः स्वर्गे लोके कामधुग्भवतीति शब्द
नत्वावगमात्तदन्यथानुपपत्तिरस्त्येवापूर्वकल्पन
ङ्क्याह * परार्थत्वाच्चेति * ननु यथा दृष्टार्थस्या
ष्यं प्राङ्मुखो भुङ्क्त इत्यदृष्टार्थः । प्राङ्मुखत्वा
पि शब्दप्रयोगस्यादृष्टार्थः साधुनियमो भविष्य
चेदमिति * शब्दादीनां विषयाणां गोचरे स
शब्दस्य तावन्नियमजन्यादृष्टाश्रयत्वस्य सम्भव
स्येति * कर्तृत्वेन परार्थस्यापि स्वर्गकामादेः
प्राधान्यस्यापि भावनापूर्वाश्रयत्वदर्शनात्तद्वैषम्
त्यन्तग्रहणम् * यत्पुनः परार्थस्याप्याहवनीया
पूर्वाश्रयत्वप्रदर्शनात् * दृष्टार्थग्रहणम् * न
प्राधान्याद‌पूर्वाश्रयत्वं भविष्यतीत्याशङ्क्याह *
क्रत्वङ्गभूतानामप्यर्थानामर्थाक्षिप्तस्याभिधानस्या
दृष्टार्थत्वान्नापूर्वेणोपयोग इत्याशयः । ननु श्र
याफलभोक्तृत्वयोग्यताधानायापूर्वापेक्षणात्तद
स्याशङ्क्याह * श्रोतुः पुनरिति * शब्दार्थविष
क्षणिकत्वान्नापूर्वाश्रयत्वशङ्केत्याह * बुद्ध्योश्चेति
वद्गुणभूतत्वान्नापूर्वाश्रयतेत्याह * वक्तेति * ननु
प्रयोगस्य फलसाधनत्वावगमात्प्रयोक्तुः फलभा
ष्यतीत्याशङ्क्याह * नेति * स्वर्गकामादिशब
वगतेस्तदनुरोधेन क्रियाफलभाक्त्वावगतिः । इह
स्य फलसाधनत्वमात्रं प्रतीयते तच्चार्थवादमात्रत
फलभाक्त्वमाक्षिपतीत्याशयः । यदि वात्र वक्
स्यात्ततः सप्तदश वैश्यस्येत्यादिवत् षष्ठ्युक्तस
क्षावशात्स्वस्वामिलक्षणविशेषरूपत्वप्रतीतेः प्रा
१९५।१ वस्तीत्याह * न चेति * ननु यथा कामिपदाद्य

ानि भुञ्जीतेत्याख्यातात्क्षिप्तस्य भोक्तुर्गुणभूतस्य दिङ्नियमापूर्वाश्र-
त्वं तथात्रापि साधुशब्दप्रयोगाक्षिप्तस्य प्रयोक्तुः । साधुनियमा-
ाश्रयत्वं भविष्यतीत्याशङ्क्याह * यत्त्विति * कर्मपदाद्यभावे
ं भोजनं प्रति भोक्तुर्लोकादेव प्राधान्यावगतेरपूर्वाश्रयत्वं युक्त-
ति भावः । अपूर्वाश्रयत्वमुच्चारणस्यानाशङ्क्यमेवेत्याह * स्व-
ंण पुनरिति * अतो विषयाभावाद्व्यवस्थाभावाद्दृष्टार्थत्वाभा-
च्च नियमानुपपत्तेस्साधुनियमार्थस्य व्याकरणस्य वेदमूलत्वाच्छा-
च्छास्त्रेण धर्मनियम इति यन्महावार्त्तिककारेणोक्तं तदयुक्तमि-
ुपसंहरति * एवं चेति * अनेन च साधुशब्दप्रयोगाणामुत्पत्ति-
ःमादिति व्युत्पत्त्या व्याकरणं प्रयोगोत्पत्तिशब्देनाभिप्रेत्य तस्याः
ास्त्रमूलत्वाच्छब्दव्यवस्थानियमो न प्रयोजनमिति सूत्रं योजितम् ।
नु स्वयमेवैतस्य वेदवच्छास्त्रत्वं भविष्यतीत्याशङ्क्याह * न चेति *
त्रापि प्रयोगोत्पत्तेर्व्याकरणस्य शास्त्रत्वाभावादिति योज्यं, साधितं
ास्य स्वातन्त्र्यं कल्पसूत्राधिकरणइत्याह * तदुक्तमिति * एत-
व विवृणोति * न हीति * यद्वा पौरुषेयत्वात् व्याकरणस्य व-
ाभिप्रायमात्रपर्यवसानेनार्थपरत्वाभावात्साधुप्रयोगनियमं प्रत्यशा-
त्रत्वादिति षष्ठेन प्रकारेण योज्यमित्याह * सर्वत्र हीति * स्मृ-
तेशास्त्रान्तरसंवादाभावादिति सप्तमीं योजनामाह * न चेति *
एतदेव विवृणोति * प्रायेणेति * अस्तु तावत्स्मृत्यन्तरेणासंवादः
ारस्परमपि व्याख्येयव्याख्यानग्रन्थानां न संवादोऽस्तीत्याह * प-
ःस्परेण चेति * सूत्रवार्तिकभाष्येषु ये पाणिनिकात्यायनपतञ्जल्य
ाचार्यास्ते विगीतवचना इत्यर्थः । कीदृशं विगानमित्यपेक्षायां निः
प्रयोजनं व्याकरणं सूत्रकृतोऽभिप्रेतं, साधुशब्दप्रयोगद्वारेण धर्मप्र-
योजनत्वं वार्त्तिककृतः, साधुशब्दज्ञानद्वारेण भाष्यकारस्येति वि-
गानं दर्शयितुमाह * न तावदिति * तेन तस्य प्रयोजनाभावाभिप्रायो
लक्ष्यतइति भावः । ननु विस्मृत्याप्यनुक्त्युपपत्तेः । कथं प्रयोज-
नाभावाभिप्रायो लक्ष्यतइत्याशङ्क्याह * कथं चेति * एतावत्त्वेन
वहायास्त्वमभिप्रेतम् । एतदेव विवृणोति * येष्विति *
मोक्षाणामिति निर्द्धारणे षष्ठी न चानादरेणानुक्त्युपपत्तिरित्याह
* न चेति * सुज्ञानत्वेनापि नोपपत्तिरित्याह * सुज्ञानत्वे पुन-
रिति * यद्यपि वार्त्तिककृता शास्त्रेण धर्मनियम इति धर्मप्रयो-
जनत्वं व्याकरणस्योक्तं तद्व्याकरणे धर्मस्याप्रतिपाद्यमानत्वादयुक्त-
मित्याह * धर्मश्चेति * ननु न साक्षाद् धर्मप्रयोजनत्वं व्याकर-
णस्याभिप्रेतं किं तु तदनुगतशब्दप्रयोगद्वारेण ज्ञानद्वारेण वेत्याशङ्क्या-

पगमे अक्षिनिकोचादेरपि प्रसक्तेस्तन्निवृत्त्यर्थो नियम
शब्दव्यतिरिक्तसर्वप्रमाणोच्छेदः स्यादित्यभिप्रायेण
उच्यतइति * निवृत्त्यर्थत्वे च नियमत्वं व्याहन्येतेत्या
साध्वसाध्वोश्च द्वयोर्नित्यप्राप्त्यभावात्परिसंख्या युक्ते
मेति * किं चाद्दष्टार्थस्य यागादीष्टसिद्ध्यर्थं पुरोडाशा
स्तत्प्रकृतित्वादिनियमस्तदपेक्षितावघाताद्युपायनियमश्च
प्रयोगस्य तु परप्रतिपत्त्यर्थत्वेन दृष्टार्थत्वान्न तत्साध
युक्त इत्याह * न चेति * नन्वेकः शब्दः सम्यग् ज्ञा
शास्त्रान्वितः स्वर्गे लोके कामधुग्भवतीति शब्दप्रयोगस
नत्वावगमात्तदन्यथानुपपत्तिरस्त्येवापूर्वकल्पनायां प्रम
ङ्क्याह * परार्थत्वाच्चेति * ननु यथा दृष्टार्थस्यापि भोज
र्थं प्राङ्मुखो भुङ्क्तइत्यदृष्टार्थः । प्राङ्मुखत्वनियमस्तथ
पि शब्दप्रयोगस्यादृष्टार्थः साधुनियमो भविष्यतीत्याश
चेदमिति * शब्दादीनां विषयाणां गोचरे समुदाये तन्
शब्दस्य तावन्नियमजन्यादृष्टाश्रयत्वस्य सम्भवमुपपाद्य
स्येति * कर्तृत्वेन परार्थस्यापि स्वर्गकामादेः कर्मफल
प्राधान्यस्यापि भावेनापूर्वाश्रयत्वदर्शनात्तद्वैषम्यप्रदर्शना
त्यन्तग्रहणम् * यत्पुनः परार्थस्याप्याहवनीयादेस्सम्मा
पूर्वाश्रयत्वप्रदर्शनात् * दृष्टार्थग्रहणम् * नन्वर्थस्य
प्राधान्यादपूर्वाश्रयत्वं भविष्यतीत्याशङ्क्याह * सत्यपि
क्रत्वङ्गभूतानामप्यर्थानामर्थाक्षिप्तस्याभिधानस्यापि वैधत्वे
दृष्टार्थत्वान्नापूर्वेणोपयोग इत्याशयः । ननु श्रोतुरनुष्ठेय
याफलभोक्तृत्वयोग्यताधानायापूर्वापेक्षणात्तदाश्रयत्वं
त्याशङ्क्याह * श्रोतुः पुनरिति * शब्दार्थविषयोस्तु
क्षणिकत्वान्नापूर्वाश्रयत्वशङ्केत्याह * बुद्ध्योश्चेति *वक्तुर
वद्गुणभूतत्वान्नापूर्वाश्रयतेत्याह*वक्तेति*ननु कामधुक्शब्द
प्रयोगस्य फलसाधनत्वावगमात्प्रयोक्तुः फलभाक्त्वात्प्राधा
ष्यतीत्याशङ्क्याह * नेति * स्वर्गकामादिशब्दात्काम्यौप
वगतेस्तदनुरोधेन क्रियाफलभाक्त्वावगतिः। इह तु साधुशब्द
स्य फलसाधनत्वमात्रं प्रतीयते तच्चार्थवादमात्रत्वेनोपपत्तेर्न
फलभाक्त्वमाक्षिपतीत्याशयः । यदि वात्र वक्तुः कामधुग्
स्यात्ततः सप्तदश वैश्यस्येत्यादिवत् षष्ठ्युक्तसम्बन्धसामा
क्षावशात्स्वस्वामिलक्षणविशेषरूपत्वप्रतीतेः प्राधान्यं स्यान्न
१९५।१ वस्तीत्याह * न चेति * ननु यथा कामिपदाद्यभावे ऽपि प्रा

ष्टानि भुञ्जीतेत्याख्याताक्षिप्तस्य भोक्तुर्गुणभूतस्य दिङ्नियमापूर्वाश्र-
त्वं तथात्रापि साधुशब्दप्रयोगाक्षिप्तस्य प्रयोक्तुः। साधुनियमा-
र्वाश्रयत्वं भविष्यतीत्याशङ्क्याह * यत्त्विति * कमिपदाद्यभावे
पि भोजनं प्रति भोक्तुर्लोकादेव प्राधान्यावगतेरपूर्वाश्रयत्वं युक्त-
मिति भावः। अपूर्वाश्रयत्वमुच्चारणस्यानाशङ्क्यमेवेत्याह * स्व-
रूपेण पुनरिति * अतो विषयाभावाद्व्यवस्थाभावाद्दृष्टार्थत्वाभा-
ाच्च नियमानुपपत्तेस्साधुनियमार्थस्य व्याकरणस्य वेदमूलत्वायो-
ाच्छास्त्रेण धर्म्मनियम इति यन्महावार्त्तिककारेणोक्तं तदयुक्तमि-
युपसंहरति * एवं चेति * अनेन च साधुशब्दप्रयोगाणामुत्पत्ति-
स्मादिति व्युत्पत्त्या व्याकरणं प्रयोगोत्पत्तिशब्देनाभिप्रेत्य तस्याः
ास्त्रमूलत्वाच्छब्दव्यवस्थानियमो न प्रयोजनमिति सूत्रं योजितम्।
नु स्वयमेवैतस्य वेदवच्छास्त्रत्वं भविष्यतीत्याशङ्क्याह * न चेति*
त्रापि प्रयोगोत्पत्तेर्व्याकरणस्य शास्त्रत्वाभावादिति योज्यं, साधितं
ास्य स्वातन्त्र्यं कल्पसूत्राधिकरणइत्याह * तदुक्तमिति * एत-
व विवृणोति * न हीति * यद्वा पौरुषेयत्वात् व्याकरणस्य व-
तृभिप्रायमात्रपर्यवसानेनार्थपरत्वाभावात्साधुप्रयोगनियमं प्रत्यशा-
त्रत्वादिति षष्ठेन प्रकारेण योज्यमित्याह * सर्वत्र हीति * स्मृ-
तेशास्त्रान्तरसम्वादाभावादिति सप्तमीं योजनामाह * न चेति *
तदेव विवृणोति * प्रायेणेति * अस्तु तावत्स्मृत्यन्तरेणासम्वादः
ारस्परमपि व्याख्येयव्याख्यानग्रन्थानां न सम्वादोऽस्तीत्याह * प-
स्परेण चेति * सूत्रवार्तिकभाष्येषु ये पाणिनिकात्यायनपतञ्जलय
ाचार्यास्ते विगीतवचना इत्यर्थः। कीदृशं विगानमित्यपेक्षायां निः
प्रयोजनं व्याकरणं सूत्रकृतोऽभिप्रेतं, साधुशब्दप्रयोगद्वारेण धर्म्मप्र-
योजनत्वं वार्त्तिककृतः, साधुशब्दज्ञानद्वारेण भाष्यकारस्येति वि-
ानं दर्शयितुमाह *न तावदिति * तेन तस्य प्रयोजनाभावाभिप्रायो
लक्ष्यतइति भावः। ननु विस्मृत्याप्यनुक्त्युपपत्तेः। कथं प्रयोज-
नाभावाभिप्रायो लक्ष्यतइत्याशङ्क्याह * कथं चेति * एतावत्त्वेन
व्रह्मायास्तत्वमभिप्रेतम्। एतदेव विवृणोति * येष्विति *
मोक्षाणामिति निर्द्धारणे षष्ठी न चानादरेणानुक्त्युपपत्तिरित्याह
* न चेति * सुज्ञानत्वेनापि नोपपत्तिरित्याह * सुज्ञानत्वं पुन- १
रिति * यद्यपि वार्त्तिककृता शास्त्रेण धर्म्मनियम इति धर्म्मप्रयो-
जनत्वं व्याकरणस्योक्तं तद्व्याकरणे धर्म्मस्याप्रतिपाद्यमानत्वादयुक्त-
मित्याह * धर्म्मश्चेति * ननु न साक्षाद् धर्म्मप्रयोजनत्वं व्याकर-
णस्याभिप्रेतं किं तु तदनुगतशब्दप्रयोगद्वारेण ज्ञानद्वारेण वेत्याशङ्क्या-

ह * धर्म्मत्वमिति * एतदेव विवृणोति * शास्त्रार्थो हि
किं पुनः शब्दस्य ज्ञाने धर्म्म आहो स्वित्प्रयोगइति सन्दिग्धो
कृकता ज्ञाने धर्म्म इति चेत्तथाधर्म्म इत्यनेन साध्वसाधुवि
रिणो व्याकरणवत्साधुत्वज्ञाने ऽर्थान्तरो लक्षणरहितानामस
ज्ञानापत्तेस्तस्य च न म्लेच्छभाषां शिक्षेतेत्यादिनिषेधपर्यालोच
र्म्मसाधनत्वावसायादधर्म्मः प्रसज्येतेत्युक्त्वा प्रयोगे तर्हि
भविष्यतीत्याशङ्क्य तस्मिन्पक्षे व्याकरणानभिज्ञानामपि स
प्रयोगात् धर्म्मोत्पत्तेर्व्याकरणानर्थक्यमिति । प्रयोगे सर्व
त्यनेनोक्त्वा दोषद्वयभयाच्छास्त्रपूर्वके प्रयोगे ऽभ्युदयस्तस्य
शब्देनेत्यनेन व्याकरणजनितज्ञानपूर्वकसाधुशब्दप्रयोगो धर्म
नं यथा वेदशब्दपूर्वको ऽग्निष्टोमादिर्वेदजनितज्ञानपूर्वक
धर्म्मसाधनं यथा वा वेदरूपः शब्दो नियमपूर्वमधीतो धर्म्म
मित्युक्तं भाष्यकृता तत्सर्वं व्याख्यायाथ वा पुनरस्तु ज्ञाने
त्युक्तम् । न चैवमव्यवस्थितशास्त्रार्थावधारणं युक्तमित्यर्थः ।
म्यग् ज्ञातः सुप्रयुक्त इत्युभयोर्ज्ञानप्रयोगयोरेकवाक्योपादा
च्चितयोर्धर्म्मित्वं भविष्यतीत्याशङ्क्याह * सम्बद्धयो
एकवाक्योपात्तयोरव्याख्यातनामार्थयोः समुच्चयः प्रतिपद
एकपदे एवापूर्वमित्यधिकरणं यदेकस्मादपूर्वं तदेतरत्तदर्थमि
त्यर्थः प्रतिपदाधिकरणे निराकरिष्यतइत्याशयः । सामान्य
क्त्वा प्रकृते योजयति * तदिहेति * एकस्मिन्वाक्ये सा
विध्ययोगात्सति ज्ञाने साधुशब्दप्रयोगो ऽप्यनुषङ्गाद्विष्पर
ज्ञानस्तुत्यर्थत्वेन सुप्रयुक्तस्तु शब्दो ज्ञानस्य धर्म्मसाधनत्व
ख्येयः। प्रयोगपक्षे तु ज्ञातमात्रो ऽपि साधुशब्दः स्वर्गं साध
मुत प्रयुक्त इति प्रयोगस्तुत्यर्थत्वेन सम्यग्ज्ञानशब्दो व्याख्येय
ज्ञानधर्म्मत्वे प्रयोगस्य धर्म्मत्वायोगात् लोकसिद्धस्यैव ज्ञाना
दित्वेन सत्यामपि व्याकरणादुपकारनिर्वृत्तौ व्याकरणं प्र
जकत्वाभावाच्च भावाभिप्रेतद्वारेण व्याकरणस्य धर्म्मप्रयोज
प्रयोगस्य तु धर्म्मत्वे यदेकस्मादपूर्वं तदेतरत्तदर्थमितिन्या
नस्य प्रयोगाङ्गत्वेन पारार्थ्यज्ञानात्फलश्रुतेः सुप्रयुक्त इति
ग्ज्ञात इत्यनेनाप्यन्वये कल्प्यमाने ऽर्थवादत्वावसायेन ज्ञा
मत्वायोगात्तद्द्वारेणापि व्याकरणस्य धर्म्मप्रयोजनत्वं
मित्यर्थः । आदिमध्याद्व्याकरणानुगतशब्दप्रयोगस्यानादिशा
यत्वाभावादित्यष्टमीं योजनामाह * किं चेति * व्याकरण
१९.७।२ नप्रयोगयोरित्यर्थः । एतदेव विवृणोति * यज्ञमेति * म

गतस्यानित्यसंयोगस्य परिहारो ऽयो न्यायो नित्यानित्यसंयोगविरोधरूपस्तेनेत्यर्थः। न च व्याकरणस्यापि नित्यत्वं शङ्कनीयमित्याह * चेति * ननु व्याकरणस्य कूटस्थनित्यत्वाभावे ऽपि प्रवाहनित्यत्वाद्वैदिकविधिविषयत्वं भविष्यतीत्याशङ्क्याह * अथापीति * उत्पत्तिकसूत्रे ऽध्येतॄणामस्मरणादिभिश्शब्दपूर्वत्वमिति वेदाधिकरणसिद्धान्तसूत्रोक्तेन न्यायेन सर्वपुरुषेभ्यो वेदस्य प्राथम्यात्पौरुषेयग्रन्थाविषयत्वं युक्तमित्यर्थः। ननु व्याकरणत्वजातेः कूटस्थनित्यत्वाद्वेदविषयत्वं भविष्यतीत्यत आह * न चेति * ननु व्याकरणस्य सूत्रमिति षष्ठ्यर्थस्य भेदं विनानुपपत्तेः सूत्रमात्राच्छब्दाप्रतिपत्तेः। व्याकरणाच्छब्दान्प्रतिपद्यामहइति प्रयोगानुपपत्तेः। न सूत्रस्य व्याकरणत्वं युक्तं नापि शब्दस्य व्याक्रियन्ते शब्दा अनेनेति व्याकरणमिति ल्युडर्थानुपपत्तेर्योगस्य च शब्दवत्त्वाभावाद् व्याकरणे भवो योगो वैयाकरण इति भवतद्धितानुपपत्तेः। शब्दस्य च पाणिन्यादिभिरप्रोक्तत्वेन पाणिनिना प्रोक्तं पाणिनीयमिति प्रोक्ततद्धितानुपपत्तेरिति वार्तिककारेण व्याकरणशब्दस्य सूत्रपरत्वशब्दपरत्वरूपे पक्षद्वये इत्यर्थः। पक्षद्वये ऽपि दूषिते भाष्यकारेण शब्दपक्षे तावद् दोषपरिहारार्थं प्रस्कन्दनं प्रपतनमित्यपादानादिष्वपि दर्शनेन करणाधिकरणयोरेव ल्युट्प्रत्ययनियमाभावाद् व्याक्रियत इति व्याकरणमिति कर्मव्युत्पत्त्या लुडर्थोपपत्तिमुक्त्वा भवप्रोक्तादितद्धितोपपत्त्यर्थं लक्ष्यलक्षणे व्याकरणमिति लक्ष्यलक्षणयोः शब्दसूत्रयोः समुदितयोर्व्याकरणत्वाभिधानात्सूत्रात्मकस्य व्याकरणस्य कृत्रिमत्वे ऽपि शब्दात्मकस्य नित्यत्वाद्वेदविषयत्वं युक्तमित्याशङ्कते * अथेति * लक्षणानिरपेक्षाणां शब्दानामानन्त्याद्विधिविषयत्वानुपपत्तिर्न तु गवादिगाव्यादीनां जातिरूपेण व्यक्तिरूपेण वा विधिप्रतिषेधौ उपपद्यते इत्यादिनोक्तेन परिहरति * तदिति * ननु यथा यदितिहासपुराणानि कल्पानीति ब्रह्मयज्ञविधिविषयत्वान्यथानुपपत्त्या कल्पसूत्राणां कर्तृस्मृतिदार्ढ्यात्कूटस्थनित्यत्वाभावे ऽपि प्रवाहनित्यत्वमुक्तं तथात्रापि, तस्मादेषा व्याकृता वागुद्यतइति व्याककरणानुगताया अर्थवाचो वादितव्यत्वश्रुतेर्व्याकरणस्य नित्यत्वं भविष्यतीत्याशङ्कते *ननु वेदेति *तद्ग्रन्थस्याध्येतव्यत्वायोगाद्ग्रन्थनित्यत्वं कल्पितम्। इह तु श्रुतिसामान्यमात्रेणापि व्याकृतशब्दव्याख्यानोपपत्तेर्न ग्रन्थनित्यत्वकल्पने प्रमाणमस्तीति परिहरति * नैतदिति * ननु वैदिक्या वाचः स्वराद्यविप्लुतरूपेणानिरूपिताकारत्वरूपस्य व्याकृतत्वस्य प्राप्तत्वाद्विध्यानर्थक्यमित्याशङ्क्य कर्म-

काले स्वाध्यायकाले वोच्यमाने *इयमनूदितेत्युक्तम् * ए
चष्टे * अव्याकुलाया हीति * अस्य च व्याख्यामेकः शब्द
श्रुतिर्वैदिकस्यैव शब्दस्य स्वराद्यविप्लुतिरूपेण ज्ञानप्रयोगय
११९८।२ तिपादनार्थतया व्याख्यातुं शक्येति सूचयितुमाह * तत्र
नन्वेकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वित इ
स्त्रशब्दस्य ग्रन्थविषयत्वाद्व्याकरणग्रन्थस्य वेदविषयत्व
स्यत्वकल्पना भविष्यतीत्याशङ्क्याह * यदपि चेति *
त्वमेवोपपादयति * अहरहरिति * शास्त्रशब्दस्तर्हि
आह * शास्त्रेति * लोकव्युत्पत्त्या शिक्षणात्मकशा
ना शास्त्रशब्देन ग्रहणाध्ययनकालीनः स्वस्यात्मीयस्य
ध्यायः शिक्षणार्थः पाठो विवक्षितो ग्रन्थ इत्याशयः । न
कशब्दस्तर्हि पुनरुक्तः स्यादित्याशङ्क्याह * सम्यगिति *
नमाचार्यकर्तृको माणवकसंस्कारः उपसदने सुश्रूषे माण
नयं वै तद्ग्रहणाध्ययनकालीनमपि विशिष्टेतिकर्तव्यताकः
स्कृतस्य तस्यैव वेदस्य ब्रह्मयज्ञोपयोगित्वादुपन्यस्तम्। ननु तस्
णेन न म्लेच्छितवै म्लेच्छो हवा एष यदपशब्द इत्येषा श्रु
द्यपशब्दनिषेधार्थत्वाच्छब्दापशब्दविवेकस्य च व्याकरण
द्व्याकरणापेक्षा भविष्यतीत्याशङ्क्याह * यदपि चेति *
तवैकेन्केन्यत्वन इति कृत्यार्थे छन्दसि तवैप्रत्ययस्मरणात
च प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति प्रैषार्थत्वस्मरणादप्रा
च विधित्वान्नञ्योगेन निषेधार्थतोक्ता। कथं वैदिकाविषयत्व
पशब्दनिषेधस्येत्यपेक्षायां वैदिकशब्दापेतत्वरूपव्युत्पत्तिसम
ज्ञानत्वं च कारणद्वयमाह * वैदिकाच्चेति * सर्वेभ्यः
ऽपेत इति च व्युत्पत्तिः शब्दस्य अशब्दत्वयोगाच्च सम्भव
* न चेति* ननु नायमभाववचनो ऽपेत्युपसर्गः किं तु वर्ज
अतो गाव्यादीनां सत्यपि शब्दत्वे शास्त्रकारैर्वर्जितत्वादपश
विष्यतीत्याशङ्क्याह * अथापीति * वर्जने ऽर्थे बर्बरादिभ
क्षणस्य स्मृत्या निषिद्धत्वाच्छ्रुतौ चापशब्दत्वस्य म्लेच्छितश
नाधिकरण्येन निर्देशाद् बर्बरादिभाषागतस्य शब्दस्यापशब्दत्व
दित्यर्थः । म्लेच्छितत्वशब्देन म्लेच्छ अव्यक्तायां वाचीत्यव्य
रणार्थस्य म्लेच्छशब्दस्य म्लेच्छो व्यक्तोच्चारित इत्यर्थो द
किं चान्येषामपि बर्बरादिसम्बन्धिनामाचाराणां निषिद्धत्व
प्रयोगरूपस्याप्याचारस्य तत्सम्बन्धिन एव निषेधो ऽवसीय
* युक्तं चेति * गाव्यादीनां तु प्रसिद्धम्लेच्छबर्बरादिसम्ब

ाव्यक्तोच्चारणत्वेन वा म्लेच्छतिधात्वर्थानुगमाभावादार्यप्रयुक्तश-
दायत्तत्वाभावाद्वा नापशब्दतेत्याह * नत्विति * यथावृत्तादार्या-
ारादपेतत्वात्तदपवृत्तमित्युच्यते नैवं गाव्यादिष्वार्यप्रयुक्तशब्दापे-
त्वमस्ति तेषामप्यार्यैः प्रयुक्तत्वादिति वैधर्म्यदृष्टान्तार्थं, नन्वाहिता-
ग्निरपशब्दं प्रयुज्येति श्रुतेर्म्लेच्छशब्दसामानाधिकरण्याभावाद् व्या-
करणानुगतशब्दापेतत्वनिमित्तलब्धापशब्दव्यपदेश्यत्वगाव्यादिप्र-
योगनिमित्तप्रायश्चित्तविधानार्थत्वाद् व्याकरणापेक्षा भविष्यती-
याशङ्क्याह * यदपि चेति * निषिद्धाचरणनिमित्तत्वात्प्राय- १
श्चित्तस्य गाव्यादीनां च शिष्टावर्जितत्वेनानिषिद्धत्वावसायाद्यथास-
म्भवमन्यविषयतैवेयं श्रुतिर्भवेदित्याशयः । व्याकरणानुगतव्यति-
रेक्तशब्दविषयत्वासम्भवमुपपादयति * तथा हीति * गाव्यादि
ाब्दप्रयोगलक्षणस्य कार्यस्य सर्वशिष्टपरिगृहीतत्वेनापरिहरणीयत्व-
ीदृशशब्देनोक्तं श्लोकं विवृणोति * प्रायेण हीति * ननु सर्व-
त्रापि व्याकरणानुगतशब्दप्रयोगनियमो न दृश्यतइत्याह * न
वेति * एतदेव प्रपञ्चयितुमाह * कल्पेति * कल्पकारस्यापश-
ब्दमुदाहरति * समानमिति * छान्दोग्यसूत्रकारस्योदाहरति *सू-
त्रेति * बह्वृचसूत्रकारस्यापशब्दद्वयमुदाहरति * तथेति *
कल्पादिग्रहणस्योपलक्षणार्थत्वात् शिक्षाकारस्यापशब्दमुदाहरति
* तथेति * स्मृतिकारस्योदाहरति * मनुनापीति * स्मृतिग्रन्थ-
कारेणापि साक्षिणः सन्ति मेत्युक्त्वा वदेत्युक्त्वा वदेत्तु य इत्यत्र
पशब्दस्येतीकारे परभूते संहितायामेचो ऽयवायाव इत्ययादेशे कृते
लोपः शाकल्यस्येति च यकारलोपे कृते म इतीतिव्याकरणानुगतां
संहितामनपेक्ष्यान्यथा कृतेत्यर्थः । मीमांसाकारस्यापशब्दद्वयमुदा-
हरति * तथेति * सम्वत्सरसत्रेषु गवामयनिकविध्यन्तातिदेश- २
प्रतिपादनायाष्टमे गवामयनोत्तरकालविहितेष्वादित्यानामयनप्रभृ-
तिषु गवामयनस्य विध्यन्तः प्रवर्ततइति वक्तव्ये तस्य विकारावयवे
च प्राण्योषधिवृक्षेभ्य इत्यधिकृत्य गोपयसोर्यदिति विकारावयवयो-
र्विहितो यत्प्रत्ययो ऽर्थवादावगतगोकर्तृकत्वमात्रनिमित्तप्रयुक्तः । न
चैवाग्नीषोमीयप्रकरणाधीतः स्यादिति मासामुमोक्ते तानिति बहुव-
चनान्तस्यापि मन्त्रस्य प्रातिपदिकार्थसमवायाद् बहुवचनस्य प्रातिप-
दिकार्थलक्षितावयवबहुत्वाभिधानार्थत्वेनोपपत्तेरनुत्कर्ष इति सि-
द्धान्तिते द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋद्ध्यासमित्या-
दीनां दर्शपूर्णमासप्रकरणाधीतानां द्यावापृथिव्याद्यनुमन्त्रणानामपि
केन चिद्गुणयोगेन दर्शपूर्णमासदेवताप्रकाशकत्वोपपत्तेरनुत्कर्ष इ-

त्याशङ्कार्थं सूत्रे सरूपाणामेकशेषः इत्याद्येकशेषलक्षणही त्युक्तमित्यर्थः । सूत्रकारेणापि जिघ्राणामिति ल्युडन्त पाघ्रादिसूत्रेण शित्येव प्रत्यये परभूते घ्रातेर्जिघ्रादेशमन्वा पेक्ष्यैव कृत इत्याह * तथेति * व्याकरणसर्वस्वे वि व्याकरणाननुगताः शब्दाः सन्तीत्याह * कात्स्न्र्येऽति * तुके परभूते ब्रुवो वच्यादेशस्याभिधानात्तदकरणं हीनल र्थः । एतदेव विवृणोति *सम्वत्सरमिति* पुराणेतिहासा दिकारिणस्तु नात्यन्तं व्याकरणमाद्रियन्तइत्याह * अन स्तिशिक्षादिग्रन्थकारिणो ये उभाभ्यादिरूपा अपशब्द नास्तीत्यर्थः । एतदेव विवृणोति * युगपदिति * वे च शब्दानामपशब्दत्वाशङ्कानुपपत्तेर्निश्चितसाधुत्वाना नादव्यापकं लक्षणं स्यादित्याह * वेदेष्वपीति* साम भाषायां च साधारणं चातुर्वर्ण्यादिवत्स्वार्थे तद्धितः त्ययो बहुलमिति बहुलग्रहणेन विकरणवत्सुबादीनामपि चनाद् बहुलं छन्दसीति च लोपाद्यनियमविधानादस्ति छान्दसं लक्षणमित्याशङ्क्याह * न हीति *

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृय व्यत्ययमिच्छति शास्त्रकृदेषां सो ऽपि च सिध्यति

इति वचनान्नियतविषय एव व्यत्ययविधिः ति हि प्राप्ते धुरि दक्षिणाया इति सुपो व्यत्ययः । तः थे अश्वयूपाय तक्षतीति तिङः स्रुवन्तीति प्राप्ते स्रा इत्युपग्रहस्य इन्द्रः सोमस्य कामुक इति प्राप्ते काम स्य । मधुवां आवाहाइत्यत्रावाहादिति प्रथमपुरुषप्राप्तौ पुरुषस्य । अग्निमद्यहोतारमवृणीतेत्यत्राद्यतनकालवा रे प्राप्ते अनद्यतनकालवाचिलङ्प्रयोगात्कालव्यत्ययः । कामुकेइति प्राप्ते णकारप्रयोगाद्धल्व्यत्ययः । अभ्यक्रम त्याकारे प्राप्ते अभ्यगिति संहितादर्शनेनाकारप्रयोगा अश्वावतीर्गोमतीरित्यत्रान्तोदात्तत्वे प्राप्ते ऽश्वावतीरिति स्वरव्यत्ययः । कर्तृशब्दस्य कारकोपलक्षणत्वाद्भिर्दे सम्प्रदानस्य दातृत्वेन प्रत्युपकारार्थदानकरणत्वाभिधान प्राप्ते ददद्भिरितिकर्तृव्यत्ययः यङ्शब्दस्य प्रत्याहारत्वेन विकरणप्रत्ययग्राहित्वाद्वृत्रं हनतीत्यत्र हन्तीतिप्राप्ते व्यत्ययः । बहुलं छन्दसीति च अदिप्रभृतिभ्यः शप रविशेषेण शबादिविषयमेवावसीयते न सर्वविषयमित

रणद्वयमाह * तद्यथेति * आपस्येत्यत्र तावल्लिङ्गवचनव्यत्ययो न
यत्ययसूत्रस्य विषयः तस्य बहुलग्रहणेन नियतलिङ्गवचनविधेय-
राभावात् नाप्युपधादीर्घादेशो व्यञ्जनान्तस्य च स्वरागमो बहुलं
न्दसीत्यत्राधिकृतो येन लक्षणानुगमः स्यादित्याह * न हीति *
।बित्यस्य नित्यं स्त्रीलिङ्गस्य बहुवचनविषयमस्य व्यञ्जनान्तस्य प्राति-
दिकस्य षष्ठ्यन्तस्यापामित्यविकृतस्यान्वाख्यानादापस्येत्यस्त्रीलिङ्ग-
।कविषयमकारान्तं दीर्घोपधं रूपं न केनापि लक्षणेनानुगतमित्य-
ः । द्वारशब्दे ऽपि दकारलोपो पाकारस्य च वकारादेशो न केन
चल्लक्षणेनानुगत इत्याह * नापीति * बहुलग्रहणस्य दृष्टानुवि-
ानार्थत्वाद् द्वारशब्दस्य भाषायामपि व्यत्ययस्यादर्शनान्न दृष्टानुवि-
ानमस्तीति दर्शयितुम् * लाटेत्युक्तम् * अतो वैदिकशब्दानाम-
ाधुत्वाशङ्कानुपपत्तेर्लक्षणमेवाव्यापकत्वादुपेक्षणीयमित्युपसंहरति
* तेनेति * व्याकरणान्तरयुक्तानामपि तदनुगतशब्दप्रयोगदर्शनान्न-
व्याकरणप्रामाण्याध्यवसानमित्याह * ये ऽपीति * प्रमादादिनि-
मित्तशङ्कानिवृत्त्यर्थं प्रायेणेत्यस्यार्थे * सुतरामित्युक्तम् * सन्तु व्या-
करणाभियुक्ताः व्याकरणकाराणामेव तदननुगतशब्ददर्शनात्प्रामा-
ण्याध्यवसानं दुर्लभमित्याह * सूत्रेति * न च तेषां विस्मृत्या
प्रयोगोपपत्तिरिति दृष्टान्तद्वारेणाह * अश्वेति * एकैकस्य द्वे द्वे अ-
(पशब्दोदाहरणे दर्शयति * सूत्रइति * जनिशब्दः षष्ठीसमासश्च
द्वावपशब्दौ जनिशब्दस्य तावद) पशब्दत्वमुपपादयति * जनीति *
लक्षणेनाननुगतत्वाज्जनिशब्देन धातुरेव निर्दिश्यतइत्यर्थः । धातु-
कर्तृप्रकृतेश्चापादानसञ्ज्ञानभ्युपगमान्न धातुरत्र विवक्षित इत्याह
* न चेति * यस्य तु जन्माख्यस्य व्यापारस्य जनिशब्दार्थत्वेन वि-
वक्षितस्य कर्तुर्घटादेः प्रकृतेर्मृत्पिण्डादेरपादानसञ्ज्ञेष्यते तस्य जाय-
मानसम्बन्धिनो जन्माख्यस्यार्थस्य जनिशब्दो न वाचक इत्याह
* जायमानस्येति * व्यधिकरणे षष्ठ्यौ नन्वेवमपि धातौ साधु-
त्वान्नापशब्दत्वमाशङ्क्याह * तेनेति * क्व चित्साधोरप्यर्थान्तरं
प्रत्यसाधुत्वादपशब्दत्वं भवतीत्याशयः । षष्ठीसमासस्यापशब्दत्वमु-
पपादयति * तथेति * (अकस्य निन्दकहिंसकइत्यादौ तच्छीला-
द्यर्थवुञ्प्रत्ययादेशत्वेनानेकार्थत्वात्तद्योगे कर्त्रर्थषष्ठ्याः प्राप्तेस्तद्योगे
एव समासनिषेधार्थम् । आद्यं तृजकाभ्यां कर्त्तरीति सूत्रं न तु
तृज्योगे कर्त्रर्थषष्ठीसमासनिषेधार्थमिदं सूत्रम् । तृचः कर्तर्येव
विधानात्तद्योगे कर्तुरनभिहितत्वाभावेन कर्त्रर्थषष्ठ्याः प्राप्त्यभावा

१ अयं पा० २ पु० ना० ।

त् । प्राप्तिपूर्वकत्वाच्च निषेधस्य अतः तृज्ग्रहणम् उक्त
त्यर्थमेव कृतं नात्र तस्य प्रयोजनम् । अकस्य तृमयन्त्रोप
मुत्तरसूत्रे तृजकयोरनुवृत्तिं वक्तुमाद्यसूत्रं वार्तिकपठित
कर्तर्येव तृज्विधेस्तत्प्रयोगे कर्तृषष्ठ्यभावादकस्य निन्दहिं
दादिधातुविहितताच्छीलादिवाचिवुञ्प्रत्ययादेशत्वेनानेका
गे कर्तृवाचिन्याः षष्ठ्याः समासनिषेधार्थमाद्यसूत्रमुक्तः
काऽऽयामित्यस्यानुवृत्तिप्रतिपादनार्थं पठितम् । कर्तृवाचि
काऽऽयां योगे कर्त्तरि चेति सूत्रे षष्ठीसमासनिषेधादपशब
तृच्प्रत्यययोगनिमित्तनिषिद्धं षष्ठीसमासमुदाहृत्याकप्रत
मित्तनिषिद्धमुदाहरति * एवमिति * वार्त्तिककृतो ऽ
योगनिमित्तनिषिद्धषष्ठीसमासापशब्दोदाहरणं तावदाह ः
हलन्ताच्चेति सूत्रेणेक्समीपाद्धलः परो झलादिः सन् कित्
दम्भेः सनि कृते दम्भ इट् चेति किति सत्यपि नकारेण व
दम्भिधातुसम्बन्धिनो हलो झकारस्य इक्सामीप्याभाव
रस्य झलादेरपि सनः कित्त्वासिद्धौ[2] गुणापत्तेर्धिप्सती
सिद्ध्येदित्याशङ्क्य हल्ग्रहणस्य जातिवाचकत्वाद्दम्भेर्द्धी
स्य झलादेः सनः * कित्त्वं सिद्धमित्युक्तम् * (
तिवाचकपदे कप्रत्ययान्तस्य षष्ठीसमासो ऽपशब्दः[3]) तस्यैव
न्तरमुदाहरति * तथेति * अइउणिति प्रत्याहारसूत्रगते
रानुबन्धकेनाकारेण धात्वादिगतस्याकारस्य णाकारानुबन्
त्वाद्ग्रहणं न प्राप्नोतीति शङ्कित्वा भेदाभावाद्धात्वादिष्वस्या
सिद्धमिति परमतेन परिहारमुक्त्वा तन्निराकरणार्थम् * र
कृतेदमुक्तम् * दण्ड अग्रमिति व्यस्तोच्चारणे दण्डपदान्त्यः
द्याद्यस्य णाकारस्यान्तरालकालानुपलम्भलक्षणात्कालव्यव
वधानात् * अन्यत्वमित्युक्तम् * नन्वेकत्वे ऽपि व्यञ्जकाभाव
ऽनुपलब्धिर्युज्यत इत्याशङ्क्य * शब्दव्यवायादित्युक्तम् * द
त्यत्र दकारडकारपरयोरकारयोर्मध्ये व्यञ्जकाभावे णकारडक
रण्यनुपलम्भः स्यान्न च व्यञ्जकानां प्रतिनियतविषयत्वं
हर्षं येन णाकारडकारयोर्व्यञ्जकसद्भावादुपलब्धिरकारस्य तु व्य
भावादनुपलब्धिरिति व्यवस्था युज्येतेत्याशयः। अत्र चान्यभा
त्यन्यशब्दः तथा हि निष्कर्षलक्षणा गुणाभिधायी भाव्यशब्दो

१ अयं पा० २ पु० ना० ।

१ अनिदितां हलउपधायाः क्ङिति।त्युक्ते नलोपो न सिद्ध्यतीत्यर्थः। नलो

३ अयं पा० २ पु० ना० ।

नैष्कर्षणीयान्यशब्दवाच्यगुण्युपसर्जनत्वेन निष्कर्षलक्षणं गुणं ब्रूते ातो गुणमुक्त्वा गुणिनि वर्तमानत्वेन गुणवचनसंज्ञापत्तेः। पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेनेति षष्ठीसमासनिषेधादपशब्दत्वं स्वप्रधानगुणाभिधायित्वाभ्युपगमेन तु षष्ठीसमासकल्पने गुणवचनसंज्ञाबाधाद् गुणवचनसूत्राननुगतष्यञ्प्रयोगायोगादपशब्दतेत्यर्थः। कर्म्मधारयस्तु (कर्मण्युपपदे धातोरण्प्रत्ययोक्तेर्नित्यसमासाच्च कुम्भकार इति वत् हिमवत् भावः इत्यादिप्रयोगमाशङ्क्य अनभिधानात्तादृशप्रयोगाभावादित्युत्तरे अविरविकेति दृष्टान्तः। भावशब्दस्यान्यत्वगुणविशिष्टगुणिपरत्वेनान्यशब्दसमानार्थत्वात्पर्यायाणां सहप्रयोगाभावाद्वैयर्थ्यमित्यर्थः[1]) भावशब्दस्यानर्थक्यापत्तेरयुक्त इत्याशयः। भाष्यकृतापि कर्म्मण्यणिति सूत्रे हिमवन्तं शृणोत्यादित्यं पश्यतीति दृशिशृणोतिभ्यामण्प्रत्ययः कस्मान्न भवतीत्याशङ्क्यानभिधानादिति परिहारमुक्तम्। यथाविकशब्दस्य स्वार्थिककप्रत्ययान्तस्याविशब्दसमानार्थत्वे ऽपि तस्य विकार इति विकारतद्धिते लक्षणानुगते ऽप्याविकं मांसमितिप्रयोगदर्शनादविकशब्दादेवोत्पद्यते नाविशब्दात्तथात्रापि प्रयोगाभावेनाभिधानसामर्थ्याभावान्न ष्यञ्प्रत्ययोत्पत्तिरित्युपपादनायाविरविकन्यायेनेति दृष्टान्ते ऽभिहिते ऽपशब्दः प्रयुक्त इत्याह * भाष्ये ऽपीति * अविश्चाविकश्चा ऽव्यविकौ तयोर्न्याय इति द्वन्द्वगर्भस्तत्पुरुषः तस्यैवापशब्दान्तरमुदाहरति * तथेति * ऋलृगित्यत्र सूत्रे वार्त्तिककारेण लृकारस्य स्वातन्त्र्येण क्वचिदप्यप्रयोगात् क्लृपिस्थस्य च यणादिकार्यं प्रत्यसिद्धत्वादुपदेशानर्थक्यमित्याशङ्क्य यदृच्छाशब्दादिषु (कुमारी ऋतकमिति वाक्ये लृतकमित्यनुकरणशब्दो यदृच्छाशब्दः। तत्र लृकारे परे ईकारस्यानुकार्ये यणादेशः कुमारी लृतकमित्येवं लृकारस्य प्रयोजनमित्यर्थः[2]) यणादिकार्यसिद्धिर्लृकारोपदेशप्रयोजनमुक्त्वा यदृच्छाभावात्तद्विषयाच्च कार्यसिद्धिप्रयोजनत्वासम्भवे ऽभिहिते भाष्यकारेणान्यथाकृत्वा प्रयोजनमुक्तमन्यथा कृत्वा परिहारः सन्ति यदृच्छाशब्दा इति कृत्वा प्रयोजनमुक्तं न सन्तीति परिहारदूषणमाशङ्कितं तत्र अन्यथैवं कथमित्थं सुसिद्धाप्रयोगश्चेदिति सूत्रेणान्यथादिषु चतुर्षूपपदेषु करोतेर्णमुल्विधानादन्यथाकारमिति प्रयोक्तव्ये ऽन्यथाकृत्वेति क्त्वाप्रत्ययप्रयोगादपशब्द इत्यर्थः। अन्येन प्रयोजनमुक्तमन्येन प्रकारेण परिहार इत्यस्यार्थस्यान्यथाशब्दमात्रेण

---

१ अयं पा० २ पु० ना० ।

२ अयं पा० २ पु० ना० ।

सिद्धेर्नियमेन प्रयोज्यत्वाभावाज्ञार्थं करोति अन्यथाकृत्वा शि
ङ्क्ते इति वदसिद्धप्रयोग इत्याशयः । एतच्च प्रयोजनं परि
च्छेन निराकार्यतयोपन्यस्तमिति सूचितत्वादाशङ्कामात्रं ना
मिति द्योतनार्थं महाभाष्यगतं प्रयोजनमुक्तमिति पाठं ता
व्याख्यातुं चोदितपदं तत्स्थानेऽप्रयुक्तम् । नन्वृत्विगादिः
त्सिद्धवत्प्रयोगरूपनिपातानां साधुत्वं भेत्स्यतीत्याशङ्क्याह
२०२।१ चेति * ननु प्रयोगमूलत्वाद्व्याकरणस्मृतेस्तद्बाधकत्वं न
मित्याशङ्क्य प्रयोगमूलताद्याप्यसिद्धेति मत्वा पूर्वोक्तं स्मृ
यस्त्वमाह * स्मृतीति * अतो नैषां निपातनात्साधुत्वसिद्धि
संहरति * प्रत्यक्षेति * नन्वेवं सत्येकप्रयोगमात्रेणेतरासाधुत्व
यात्प्रकृतिप्रत्ययान्वाख्यानं विना प्रयोगमात्रेण साध्वसाधुत
कासिद्धेर्निपातनानर्थक्यं स्यादित्याशङ्क्याह * प्रत्यक्षे
निपातनानर्थक्यपरिहारायान्वाख्यानमनुमीयतइत्याशयः । र
क्षणवाक्यगतानां शब्दानां स्वात्मनि क्रियाविरोधेन तद्वाक्य
क्षयितुमशक्यत्वाल्लौकिकवैदिकशब्दलक्षणार्थत्वेन च व्या
स्यात्मार्थत्वाभावात्प्रदेशान्तरस्थानामप्यलक्षणीयत्वेनानुगमा
च्च व्याकरणकाराणां व्याकरणाननुगतशब्दप्रयोगो दोष इत्या
ह * न चेति * व्याकरणगतानामपि शब्दानां लोकवेद
रणन्यायेन लौकिकेभ्यो भेदाभावाल्लक्षणीयत्वोपपत्ति
* लक्ष्यभूतइत्युक्तम् * अत एव व्याख्यातृभिर्वृद्धिरादैजि
वृद्धिरादैजदेङ् गुण इति जस्त्वदर्शनेन पदसञ्ज्ञत्वावगमाच्चो
ति कुत्वेन भवितव्यमित्याशङ्क्य अयस्मयादीनि छन्दसीति
त्वापि छन्दोवद्भावेन भसञ्ज्ञत्वात्सत्सुष्टुभा (सन्ऋकतेत्यत्र ऋग
त्यर्थके पदे ऋच्शब्दस्य वतिपरे पदसञ्ज्ञत्वाच्चोः कुरिति
ऋकतेति सिध्यति । अत्र पदसञ्ज्ञत्वात् झलाञ्जशोऽन्ते इ
त्वेन नस्रस्य जकारः कस्य ढकारो वा न भवति । अयस्मय
छन्दसीत्युक्त्या भसञ्ज्ञया पदसञ्ज्ञाबाधात् । न च पद
वात्कुत्वमपि न स्यादिति वाच्यम् । प्रयोगानुसारित्वाच्च
स्य तेन यथा तत्र मत्वा जश्त्वाभावः । पदत्वाच्च कुत्वमिति
ञ्ज्ञयसमावेशः । तथा प्रकृतेऽपीति भावः । अत्र वृद्धिरादैजि
सहोच्चारणं सिद्धं कृत्वोक्तम्) अन्यदेव तु उपदेशेऽजनुनासिक
स्याद्युदाहार्यम्[1]) । सञ्ज्ञकता गणेनेतिवत्सञ्ज्ञाद्वयाविरोधात्कु
त्वोपपत्तिरित्यादिपरिहाराभिधानवत् समर्थः पदविधिरि

१ अष्टं पा० १ पु० ना० ।

ाधिशब्दः कर्मसाधनो भावसाधनः करणादिसाधनो वेति पृष्ट्वा
ापूर्वाद्धातोः कर्म्मसाधन इकारो विधीयतइति कर्म्मसाधनतया
ाख्यानाल्लक्षणसूत्रेष्वपि लक्षणानुगमादरः कृत इत्याह * तथा
ाति * अन्यथा न कचिदपि साधुशब्दादरः स्यादित्याह * यदि
ाति * न त्वाचारे नियम इत्यत्र वार्त्तिके भाष्यकृता याज्ञे कर्म्म-
ग स नियमो ऽन्यत्रानियम इत्युक्तत्वान्न व्याकरणे कल्पसूत्रादिषु
ा ऽपशब्दप्रयोगो दुष्यतीत्याशङ्कते *अथेति* फलवत्त्वेन क्रत्वर्थ-
ायोगाक्रतुविषयत्वानुपपत्तिरिति परिहरति *तदसादिति* आ-
इताग्निग्रहणानर्थक्यापत्तेश्च न यज्ञविषयतेत्याह * सारस्वतीति *
ानु तस्माद् ब्राह्मणे न म्लेच्छितवै इत्यपशब्दनिषेधस्य प्रकर-
ाज्ज्योतिष्टोमाङ्गत्वावगतेरन्यत्रानियमो ऽवसीयतइत्याशङ्क्याह *
ा ऽपि चेति * आदित एव च व्याकरणे निरुपपत्तिकपूर्वापर-
वेरुद्धाभिधानादनाप्तप्रणीतता ऽवसीयतइत्याह * यदपि चेति *
ाष्यकृता हि शास्त्रादावथ शब्दानुशासनमिति शास्त्रस्य विषयमु-
क्त्वा केषां शब्दानामिति पृष्ट्वा लौकिकानां वैदिकानां चेत्युत्तरं
क्तं तत्तावद् बहूनां शब्दानां लोकवेदसाधारण्यादयुक्तमित्यर्थः। उभ-
त्रापि च साधारणशब्दोदाहरणमत्यन्तमयुक्तमित्याह * न चेति*
ानु वेदादिवाक्योदाहरणत्वेनैषां लौकिकेभ्यो भेदो ऽस्तीत्याशङ्क्या-
ह * न चेति * कानि तर्हि वैदिकत्वेनोदाहार्याणीत्यपेक्षायामाह*
अत इति * ननु गाव्यादिपदानामपि नियतस्वरत्वादिना छान्दसत्वा-
युक्तोदाहरणतेत्याशङ्क्याह * छान्दसेति * एवमपि सिद्धे शब्दा-
र्थसम्बन्धइति शास्त्रारम्भवार्त्तिकव्याख्यानावसरे कथं पुनर्ज्ञायते
सिद्धः शब्दो ऽर्थः सम्बन्धश्चेत्याशङ्कानिराकरणार्थत्वेन लोकत
इति वार्तिकावयवस्य यद्व्याख्यानं करिष्यते तद्व्याहन्येत स्वर-
नियमाल्लौकितः सिद्ध्यभावादित्याशयः। गाव्यादिशब्दानन्वाख्या-
नात् लौकिकान्वाख्याने प्रतिज्ञा न युक्तेत्याह * यदि चेति * गवा-
दिशब्दानां तु केवलवैदिकत्वस्यापि वक्तुं शक्यत्वात्तद्व्याख्यान-
मात्रेण लौकिकान्वाख्यानासिद्धिरित्याह * गवादयः पुनरिति *
एतदेव च सर्वेषां च स नामानि कर्म्माणि च पृथक्पृथगित्यादिना म-
नुवचनेनोपादयति * तथा चेति * ननु लौकिकार्थविवक्षायां
वैदिकशब्दप्रयोगो न युक्त इत्याशङ्क्याह * दृश्यन्ते चेति *
वैदिकानां च पाठसिद्धत्वादनर्थकं लक्षणमित्याह * न चेति *
दीधीवेवीटामित्येतत्सूत्रदूषणार्थं च दीधीवेव्योश्छन्दोविषय-
त्वाद् दृष्टानुविधित्वाच्च छन्दस्यदीधेददीधयुरिति च गुणदर्शना-

दप्रतिषेध इति वार्तिके दीधीवेव्यौ छन्दोविषयौ दृष्टानु
छन्दसि भवति। तत्र च होत्राय वृत्तः कृपयन्नदीधेत् अदीधयुर्दा
शे वृतास इति गुणस्य दर्शनादनर्थकः प्रतिषेध इत्येवं व्याचक्ष
भाष्यकृता स्वयमेव वैदिकशब्दलक्षणानर्थक्याभिधानाच्छान्दस
हरणं व्याहतमित्याह * दृष्टेति * मन्दशब्दो मृदूक्त्यर्थः । अ
क्यमेव दृष्टान्तेनोपपादयति * यथैवेति * न च भाष्यकृतैव
पुनरस्य शब्दानुशासनस्य प्रयोजनानीति पृष्ट्वा रक्षोहागमल
न्देहाः प्रयोजनमिति मुख्यानि च पञ्चप्रयोजनान्यभिधायेमानि
शब्दानुशासनस्य प्रयोजनानीत्यानुषङ्गिकाणां त्रयोदशानामुक्त
कथमानर्थक्यमित्याशङ्क्याह * रक्षाद्यपीति * वेदरक्षणस्य
२०४।१ सिद्धिमुपपादयति * शिष्येति * महच्छब्देन व्यापकतोक्ता
क्रमरक्षानादरणीयेत्याह * तद्विनाशे ऽपि चेति * ननु लोपा
र्णविकारद्वारा पदरक्षा व्याकरणाधीनेत्याशङ्कानिराकरणार्थं
रूपसिद्धेः स्वतो ऽपि चेति व्याख्यातुं वृद्धवाक्यमुदाहरति
उक्तं चेति * नन्वाम्नायप्रसिद्धानामपि प्रस्तावोद्गीथप्रतीहारो
निधनानां सामपर्वणां लक्षणार्थस्यौञ्छिक्याख्यग्रन्थस्येव व्या
स्याप्यर्थवत्त्वं भविष्यतीत्याशङ्कते * समाम्नायेति * वैषम्य
तद्युक्तेति * प्रतिकृत्स्नस्य साम्नः सिद्धिर्यस्मात्तत्कृत्स्नं
तस्य भावः कृत्स्नसिद्धित्वम् । ननु कृत्स्नसिद्धित्वं ऽप्या
सिद्धत्वाल्लक्षणानर्थक्यमित्याशङ्क्य कर्त्तव्येन ऋगन्तरस
येन प्रस्तावादिनार्थेनार्थवदित्युक्तम् । कृत्स्नसिद्धित्वादिति
* औञ्छिक्ये हीति * कर्त्तव्यार्थेन वेति व्याचष्टे * ब्राह्मणे
यथा योन्यां गायति तदुत्तरयोर्गायतीत्यादिब्राह्मणगतवि
योन्यामप्याम्नातस्य साम्न उत्तर ऋगन्तरे सञ्चारणायामि
व्याकरणे त्वेतद्द्वयमपि नास्तीत्याह * पदेति * विशिष्टपद
त्मकानां वाक्यानां संघातो रूपं येषां वेदानामिति व्याकरण
संज्ञाभिधानं न सम्भवति कर्त्तव्यानि पदानि वाक्यानि वा
देष्विति कर्त्तव्यार्थत्वाभावाभिधानम् । ननु प्रकृतिप्रत्ययान्त
नरूपस्य पदानुगमस्यान्यतः सिद्धेः कर्त्तव्यत्वाद्वा कर्त्तव्य
भाव इत्याशङ्क्याह * लक्ष्यवेदिति * वेदरक्षार्थत्वे च व्याव
वैदिकवर्णमात्रादिनिर्णयो वैयाकरणाधीनः प्रसज्येतेत्याह
चेति * एतदेव दृष्टान्तेनोपपादयति * कक्षेति * ननु क
वैयाकरणानां सन्निधानाभावादनादरो भविष्यतीत्याशङ्क्य
लोक इति * यस्य यदर्थत्वमित्यत्रोदाहरणमापादयन्नाह *

मेति * आम्नावेत्यत्रोदाहरणमाह * व्याधितेति * ननु वेदाध्या-
ना व्याकरणं वैय्याकरणैर्वाद्रियन्तइत्याह * न त्विति * कस्तर्हि २८
रक्षाहेतुरित्यपेक्षायामाह * सहाध्यायिभिरेवेति * एतदेव वि-
णोति * तस्मादिति * उपाध्यायग्रहणं सहाध्याय्युपलक्षणार्थं
नभोजनादिषु वेदपरीक्षाधिकारः करणशब्देनाभिप्रेतः तत्संयुक्ताः
रणिकाः तेषां दयालूनां दोषान्वेषणतात्पर्याभावात् * द्विष्टैरि-
क्तम्। अध्येतॄणामेव वेदरक्षाहेतुतेति तात्पर्यार्थः। वेदरक्षाप्रयो-
नत्वाभावमुपसंहरति * तस्मादिति * एवं वेदरक्षार्थत्वे निराकृते
दि कश्चिल्लौकिकवाक्यरक्षार्थत्वं ब्रूयात्तं प्रत्याह * लोके त्विति *
सुव्यवहारवाक्यरक्षार्थत्वाभावे ऽपि काव्यादिरक्षार्थं व्या-
रणं भविष्यतीत्याशङ्क्याह * काव्यादिष्वपीति * एतदेव वि-
णोति * यदि त्विति * यथा काव्यस्य नाटकस्य वा लक्षणं
कृतभाषायाश्च व्याकरणं शुद्धाखण्डा च मात्रादिः सम्पूर्णेति च-
विधा द्विपदीकरणाख्येन तालेन परिगीयतइत्यादि च द्विपदीनां
क्षणमष्टादशमात्रा विरतिरपि यस्य रासकनामास चतुरंघ्रि-
कशीत्यादि च व्यसकाणां लक्षणमादिशब्दाच्च ध्रुवकादीनां
क्षणं संव्यवहारवाक्येष्वनुपयुज्यमानमपि काव्यनामकप्रबन्धार्थ-
नोपयुक्तं तथेदमपि संस्कृतमात्रं काव्यप्रबन्धार्थत्वेनोपयोक्ष्यतइ-
ाशङ्कार्थः। संस्कृतभाषानियमप्रयोजनाभावाभिप्रायेण परिहारः
त्रारूढः कृतः काव्यशोभापि न नियमप्रयोजनं वैपरित्यापत्तेरि-
ाह * काव्येति * किं च लोकप्रसिद्धैर्वा शब्दैः काव्यप्रबन्धार्थं
क्षणं स्यादप्रसिद्धैर्वा नोभयथा ऽपि युक्तम्। अप्रसिद्धौ सम्बन्धस्या-
ात्रहेतुत्वादित्यनेन न्यायेन सत्यपि लक्षणानुगमे वचन्तीत्यादिव-
ौकिकशब्दप्रयोगे ऽर्थप्रत्ययाभावापत्तेः। प्रसिद्धौ वानर्थक्याप-
रित्याह * न चेति * ऊहार्थत्वं निराकरोति * ऊहार्थमपी-
ते * यथोह्यानूह्यविभागो मीमांसासिद्धत्वान्न व्याकरणापेक्षस्त-
ोहस्वरूपमपि लोकवेदप्रयोगसिद्धत्वादित्यर्थः। दृष्टान्तं विवृणोति
* तथा चेति * इयं गौस्तया क्रीणामि तस्यै शृतमित्यादौ सोम-
यार्थैकहायनीप्रकाशनार्थे मन्त्रे क्षीरादिवाचिनां शृतादिशब्दानां
वेकेलानमनार्थत्वाद् दृष्टार्थत्वे ऽपि क्रमसाधनार्थत्वाच्च स्वार्थत्वे
ऽपि कालान्तरे चैकहायन्या अपि क्षीरादिसम्भवात्समवेतार्थत्वे
ऽप्येकहायन्यवस्थायामुच्यमानस्य क्षीरादिसम्भवस्य मुख्यत्वाभावा-
दौपचारिकस्य क्षीरादिसम्भवस्य साण्डोत्पादयिष्यमाणधेनुद्वारेण
साण्डेषूपपत्तेरूहाभावान्मुख्येत्युक्तम्। पत्नीं सन्नह्योति यजमानप-

त्नीसन्नहवत्प्रेषार्थे मन्त्रे पत्नीमित्येकवचनस्य विद्यमानार्थत्वेन
ख्यत्वे ऽपि सन्नहनीयपत्नीसंख्याप्रकाशनाच्च स्वार्थत्वे ऽप्येकत
च्चानेकपत्नीकप्रयोगे ऽपि पत्नीत्वसामान्यसमवायात्समवेता
ऽपि प्रकृतावपूर्वसाधनीभूतपत्नीव्यक्तिपरत्वात्सामान्यसंख्या
शनस्यादृष्टार्थत्वेनोहाभावाद् * दृष्टार्थतेत्युक्तं * इडोपह्वान
यज्ञपतिं वर्द्धानिति यज्ञपतिशब्दस्य यजमाने मुख्यत्वे ऽपि तत्प्रो
हनार्थत्वेन दृष्टार्थत्वसम्भवे ऽपि यजमानस्य च कर्म्मसमवाय
मवेतार्थत्वे पीडास्तुत्यर्थवृद्धिविशेषणत्वाभावेनोहाभावात्स्व
त्युक्तम् । इन्द्रागच्छ हरिव आगच्छेति सुब्रह्मण्यामन्त्रे हरिव
स्य हरिवत्त्वलक्षणे गुणे मुख्यतेति तस्य चेन्द्राय हरिवते
निर्वपेदिति सवनीयहविरादिषु देवतात्वान्तर्गतेर्दृष्टार्थत्वे ऽपि
माणेन्द्रप्रकाशनाच्च स्वार्थत्वे ऽपि वस्तुवृत्त्येन्द्रे हरिवत्त्वासमव
समवेतार्थत्वाभावेनोहाभावात् * समवेतार्थतेत्युक्तम् * सत्यां
ख्यत्वादिष्वर्थप्रकाशनवच्छब्दस्वरूपस्याप्यादरे सत्यर्थान्तरयु
विकृतावैन्द्रीवद्रौणत्वोपपत्तेरूहासम्भवात्प्रकृतौ यथोत्पत्तिव
मर्थानां तथोत्तरस्यान्ततो तत्प्रकृतित्वादर्थे चाकार्यत्वादित्येत
करणसिद्धशब्दस्वरूपनादरसूचनायादिशब्दः । नवमएव हि तृ
पादाद्यधिकरणे ऽग्नये जुष्टन्निर्वपामि व्रीहीणामेधः सुमनस्यमान
व्रीह्यग्निशब्दौ द्रव्यदेवतान्तरयुक्तायां विकृतावूह्यावनुह्यौ वेति
णयार्थे किमर्थप्रकाशनवच्छब्दस्वरूपमपि विवक्षितं न वेति स
शब्दस्वरूपानादरे समाम्नानार्थक्यापत्तावौत्पत्तिकसमाम्नाय
तशब्दस्वरूपमनतिक्रम्यार्थानां वचनमाभिधानं प्रकृतान्वयीति
त्तरस्यामपि ततो विकृतिविस्तारे तथाभूतमविकृतमेव शब्द
प्रयोक्तव्यं प्रकृतिदृष्टस्यैव शब्दस्वरूपस्य प्रकृतिवच्छब्देन विनि
त्वादिति प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततो त
तित्वादिति सूत्रावयवेन पूर्वपक्षयित्वा कर्म्मसमवेतार्थप्रकाश
शेन विहितानां मन्त्राणां प्रधानवशवर्त्तित्वेन प्रकृताविति
च्चास्यार्थप्रकाशननिरपेक्षस्वरूपादरायोगाद्वैकृते च सूर्यनीवा
ऽग्निव्रीह्यादिशब्दानां प्रकाशनाख्यकार्याभावात्तत्समर्थशब्दोपा
विकृतौ मन्त्रोच्चारणं युक्तमित्यर्थे चाकार्यत्वादित्युत्तरावयवे
द्धान्तयिष्यते । ननु प्रकृतिमन्त्राणां मुख्यत्वादिरूपेण प्रयोगे
विकृतावर्थान्तरयुक्तायामतिदेशेन प्राप्तानां तदीयद्रव्यदेवत
काशनसामर्थ्येन प्राकृतकार्यार्थत्वायोगादातिदेशिकवचनवश
र्यान्तरकल्पनैवोचिता नोहेन प्राकृतकार्यसामर्थ्यकल्पनेत

ाकारेषु कार्यातिदेशतो गता * इत्युक्तम् * प्राकृतकार्यनिरपे- २९
ेण पदार्थातिदेशे शास्त्रातिदेशे वा कार्यान्तरकल्पना युज्येत वै-
तभावनाकाङ्क्षावशात्तु करणोपकारलक्षणकार्यद्वारस्यैवातिदेशस्य
शमाद्ये वक्ष्यमाणत्वान्न कार्यान्तरकल्पनेत्याशयः। कार्यद्वारातिदेशे
पि कार्यान्तरार्थे व्रीह्यादौ व्रीहीणां मेधेत्यादिमन्त्रप्रयोगस्यैवाभा-
ात्प्राकृतकार्यार्थत्वे ऽप्यर्थान्तरत्वाभावेनाविकृतस्यैव प्रयोगोपपत्ते-
हाभावात्प्राकृतकार्यतापत्तेश्च * अर्थान्तरेष्वित्युक्तम् * कथं
ार्यापत्त्यवगतिरित्यपेक्षायाम् * पञ्चधेत्युक्तम् * नैवारश्चरुरिति
्रकारतद्धितेन नीवाराणां चरुप्रकृतित्वाभिधानात्प्रत्यक्षविधिना
देयप्रकृतित्वलक्षणव्रीहिकार्यापत्तिरवसीयते संस्थिते षडहे म-
वाशयेद् घृतं वेति मधुघृताशनयोः षडहाभावे विधानात्प्रत्यक्षवि-
धेना षडहकार्यापत्तिः सत्रायावगूर्य विश्वजिता यजेतेति वा स-
ाभावे विश्वजितो विधानात्सत्रकार्यापत्तिः। नैवारश्चरुर्नखावपू-
ानामिति वैतुष्यलक्षणविकारफलकानिर्लुञ्चनापरपर्यायावपनाङ्ग-
वेन नखानां विधानाद्विकारेण वैतुष्योत्पादनलक्षणोलूखलमुसल-
कार्यापत्तिः। परिधौ पशुं नियुञ्जन्तीति परिधेर्नियोजनेविधानात्स्व-
ाब्देन विनियोजनलक्षणरूपकार्यापत्तिः। न गिरागिरेति ब्रूयादैरं
कृत्वोद्गेयमितीरापदविध्येकवाक्यतया गिरापदस्य निषेधानुवादाव-
ातेरैकार्थत्वाभावे चेरापदेन गिरापदबाधायोगान्निषेधानुवादानुप-
पत्तेर्निषेधानुवादेन गिरापदकार्यापत्तिरिति पञ्चप्रकारत्वम्। प्र-
त्यक्षविधिना भावे विधानेन विकारतः स्वशब्दाच्च निषेधानुवा-
दात्तत्कार्यकारितेति संग्रहश्लोकः। ननु व्रीह्यादिकार्याय तेष्वपि
नीवारादिषु व्रीह्यादिप्रकाशनार्थानां मन्त्राणां व्रीह्यादिस्वरूपस्या-
भावेनाप्राप्तेर्नोहः स्यादित्याशङ्क्य * अपूर्वार्थद्वारेणेत्युक्तम् * स्व-
रूपप्रयुक्तत्वनिराकरणेनापूर्वप्रयुक्तत्वस्य नवमाद्ये वक्ष्यमाणत्वान्नी-
वारादिषु व्रीह्यादिस्वरूपाभावे ऽपि व्रीह्यादिलक्षितापूर्वार्थत्वसद्भा-
वात्तद्द्वारेणास्ति प्राप्तिरित्याशयः। नन्वर्थान्तरेष्वप्यूहेन मन्त्राणां
प्रयोगोपपत्तौ याज्यानुवाक्ययोरनुपदेशे गायत्र्यादिना लक्षणेनानु-
वाक्यकल्पनवचनं त्रिष्टुबादिना च लक्षणेन याज्याकल्पनवचनं ता-
दृशलक्षणायोश्चासम्भवेन असञ्ज्ञकयोर्निमामश्रृणुधीहवं स्तीर्णं बर्हि-
रानुषासवेतदित्यनयोरिरागमवचनमनर्थकं स्यादित्याशङ्क्य * अनि-
षिद्धोहा इत्युक्तम् * पूयति वा एतदृचो ऽक्षरं यदेतदूह इति त-
स्मादृचं नोहेदित्यादावूहनिषेधान्न देवतान्तरवत्यां विकृतौ प्राकृत-
योर्याज्यानुवाक्ययोः प्राप्तिः सम्भवतीत्याशयः। न माता वर्धते न

पितेति तु यज्ञपतिन्यायप्राप्तनिषेधानुवादत्वाच्चोदाहरणमेवम्भूत
बोहोपपत्तिकलापस्य मीमांसागम्यत्वादस्माकमेवोहः सिद्ध्यति
वैयाकरणानामिति * न इत्यनेनोक्तम् * न त्ववघातादिसंस्क
विषयस्य दृढादृढप्रहारादिरूपस्योहस्य सामविषयस्य चोत्तराकृता
द्धताळव्याश्रितापि भावरूपस्य व्याकरणानपेक्षत्वे ऽपि मन्त्रोः
वैयाकरणाधीनत्वेन महाभाष्यकृतोक्तस्य शब्दरूपत्वाद्वैयाकरणा
क्षा भविष्यतीत्याशङ्क्य व्रीह्यादिसम्बन्धित्वेनावगतानां धर्माणां
धारादिसम्बन्धित्वापादकरूपवितर्कणात्मकस्योहरूपस्य मन्त्रवि
ऽप्यूहे साम्याद्वितर्कणायाश्च मीमांसाधीनत्वाच्च वैयाकरणापे
* मन्त्रशब्देनोक्तम् * ननूह्यानूह्यविभागस्य मीमांसकाधी
ऽप्यूह्यपदस्वरूपज्ञानं वैयाकरणापेक्षं भविष्यतीत्याशङ्क्याह *
तावतीति * ननु कथं साध्वसाधुशब्दाविवेकानभिज्ञस्य योग
दलाभ इत्याशङ्क्याह * वेद एव हीति * यत्किञ्चिच्छब्दोहे
वा मन्त्रवाक्यनैराकाङ्क्ष्यसिद्धेर्न योग्यपदादरो युक्त इत्याह *
वेति * एतच्च देवतापदव्यतिरिक्तविषयमुक्तं तेषां विधिगत
तिरेकेण साधूनामप्यप्रयोज्यत्वादिति दर्शयंश्लोकं व्याचष्टे *
तेति * आग्नेयादियागाङ्गभूतेष्वावाहनादिषु निगमनस्थानेषु किं
केन चित्पर्यायेण देवताभिधेयार्थविधिगतेनैव शब्देनेति सन्दिह्य
केन चिदर्थसिद्धेरनियमे प्राप्ते देवतायाः प्रतिग्रहादिव्यापाराभ
त्स्वरूपेण कर्मसमवायानुपपत्तेः शब्देनाग्निमुद्दिश्य हविस्त्यजे
विध्यर्थावगमात्केन शब्देनेत्यपेक्षायां बुद्धिस्थाग्निशब्दातिक्रमे
णाभावादग्निशब्देनैवाग्निमुद्दिशेदिति विधिगतेनैव शब्देन दे
त्वविधानान्मन्त्रकार्ये तस्यैवोच्चारणं कार्यमिति विधिशब्दस्
न्त्रत्वे भावः स्यात्तेन चोदनेति सूत्रोक्तदाशमिकन्यायेन वि
तप्रयोगानुसारेणैव विकृतौ देवतापदान्यूह्यमानानि प्रयोक्ष्यन्त
र्थः । ननु सौर्यं चरुमिति विधौ प्रातिपदिकमात्रश्रवणादग्नये
ष्टमिति चतुर्थ्यन्ताग्निपदस्थाने सूर्यपदं कीदृशं प्रयोज्यमिति
करणं विना न ज्ञायतइत्याशङ्क्य * तद्वाक्यशेषेत्युक्तम् *
विधिवाक्यस्य शेषे वाक्यान्तरे वा महोदेवाय सूर्याय शंसतेः
यद्विधिगतमर्थाभिधानमित्यन्तेनेत्यर्थः । नन्वेवं सति शब्दव्यवस्
मपि प्रयोगोत्पत्तिशास्त्रत्वदर्शनात्कथं तेनाव्यवस्थासिद्धिरित्या
*तेषु हीत्युक्तम्* किं विपर्यं तद्ध्यव्यवस्थितोह्यपदप्रयोज्यत्वाभि
मित्यपेक्षिते * यानीत्युक्तम् * पौण्डरीके बर्हिषि दर्भस्तृणील
तैः सुपर्णैरित्यतिदेशप्राप्ते मन्त्रे दर्भपदस्थाने पुण्डरीकैरिति द्रु

ादिशब्दात्सुपर्णपदस्थाने पुण्डरीकावयववाचिपदम् । एवं व्रीही-
ां मेधः सुमनस्यमान इत्यादौ यथासम्भवं नीराणामित्यादीनि
थासम्भवं द्रव्यादिपदान्युदाहार्य्याणि । ननु नीवारादिपदव्यतिरि
ानां तत्पर्यायाणां साध्वसाधूनां मानाप्राप्तत्वेनाप्रतीतरूपाणां प्रयो-
विधिविषयत्वाभावात्प्रयोगानुपपत्तेर्नाव्यवस्था युक्तेत्याशङ्क्य *स-
न्निहितेत्युक्तम् । सन्निहितेन नीवारादिविधित प्रतीतेन नीवारादि-
ार्थेन पर्युपस्थापितानि समस्तानि पर्यायभूतानि साध्वसाधूनि रू-
ाणि येषामिति विग्रहः । पूर्वमेव तर्हि नीवाराद्यर्थस्य स्मृतत्वान्नी-
ारादिपदोहो ऽनर्थकः स्यादित्याशङ्क्य *असन्निहितेत्युक्तम् * अ-
न्निहितार्थस्य व्रीह्यादिपदस्य निवृत्त्या हेतुभूतया न्यूनत्वात्साका-
ं यद्व्रीहाणां मेधेत्यादिमन्त्रवाक्यं तस्य निराकाङ्क्षीकरणायेति
ग्रहः। द्रव्यादेर्हि श्रुतिसमवायित्वाभावेन विधिगतशब्दप्रयोगनिय-
ाभावात्कर्म्मविधानार्थस्यैव शास्त्रस्य शब्दप्रयोगोत्पत्तिशास्त्रत्वा-
ुपपत्तेर्मन्त्राम्नानरूपेण वा शास्त्रेण प्रयोगोत्पत्तेः शास्त्रवत्त्वं वाच्यं
्याकरणाख्येन वा तत्र मन्त्राम्नानं तावद्विकृतौ नास्तीत्याह * प्र-
कृतौ हीति * व्याकरणस्य च सम्भाव्यमानमूलशास्त्रत्वात्कृतकत्वा-
द्दोषग्रस्तत्वात्पौरुषेयत्वेन चानादियज्ञगतशब्दविषयत्वायोगान्न
प्रयोगोत्पत्तिशास्त्रत्वं युक्तमित्याह * व्याकरणस्यापीति * कृतकत्व-
स्यानाप्तप्रणीतत्वाशङ्कापादकत्वेन दोषत्वं व्याकरणानुगतशब्दप्रयो-
गनियामकत्वाभावेन * अविधायकत्वस्योक्तम् * इत्युपसंख्याना-
नामादिशब्दोपात्तानां च वक्तव्यानामाचार्य्यसूत्राणां च दीर्घाचेवी-
ग्रामित्यादीनां प्रत्याख्यानं सूत्रवार्तिकभाष्याणां परस्परविरोधे विशे-
षाग्रहेण इदमेव प्रमाणमित्यनिश्चयादनवस्थितं प्रमाणत्वं विकरण-
स्य केचित्प्रकृत्यन्तर्भावमिच्छन्ति, अन्ये प्रत्ययान्तर्भावमिति, यथारु-
चि कल्पितं प्रकृतेः प्रत्ययस्य वा परिमाणं धातुप्रातिपदिकादिलक्षण-
दूषणान्यादिशब्देनोपात्तानि सत्यप्याप्तप्रणीतत्वे नित्यानित्यसंयोग-
विरोधेनानादियज्ञगतशब्दविषयत्वं निराकृतम् । ऊहस्यान्यतः सि-
द्धेर्व्याकरणप्रयोजनत्वासम्भवमुपसंहरति * तेनेति * प्रकृति-
विकृतिविभागज्ञानं कर्म्मज्ञानं प्रकृतौ द्रव्यदेवतामन्त्राणां विकृ-
तौ द्रव्यदेवतान्तरस्य प्राकृतानां च मन्त्राणां ज्ञानं कर्म्मा-
ङ्गज्ञानं प्रकृतावपूर्वप्रयुक्तत्वं कार्यातिदेशेन च विकृतिग-
मनं वैकृतानां चाङ्गानां प्राकृतकार्यापत्तिज्ञानं वाक्यार्थज्ञानं तेषु
कौशलैः कर्तव्यतया लोकवेदप्रयोगाच्च स्वरूपेणोहसिद्धेर्व्याकरणा-
नर्थक्यमित्यर्थः । व्याकरणतः सिद्धेरप्यूहस्य तत्प्रयोजनत्वं न यु-

क्तमित्युपपादयितुं व्याकरणपर्यालोचनया कर्त्तव्यत्वेनावगत
मीमांसानुसारेणापवादः कल्पसूत्रव्याख्यातृभिः कृत इत्याह
चेति * देव्याः शमितार आरभध्वम् इत्यादिः पशुविशसनप्रै
अध्रिगुशब्दवत्त्वेनाध्रिगुरुच्यते तत्र पुराणन्यायादीन्यङ्गानि अ
मातेत्यादीनि ज्ञातिनामानि श्येनमस्येत्याद्या उपमाः सूर्यं चक्षु
दीनीन्द्रियाणि यज्ञपतिशब्दवत्पारार्थ्यैनैषामन्यैरूहविषयैर्वैष
ध्रिगावूह्यते इत्यर्थः । यथागमः खल्वपीत्युपक्रम्य ब्राह्मणेन निष
धर्मः षडङ्गो वेदो ऽध्येयो ज्ञेयश्चेति स्मरणामावश्यकधर्म्म
षडङ्गवेदाध्ययनविधानार्थं व्याकरणाध्ययनप्रयोजनत्वेनोपन्य
त्प्रयोजनं प्रयोजनिभाववैपरीत्येन दूषयति * आगम इति *
वेदाध्ययनं प्रति प्रयोजनभूतानां कर्म्मणां नाध्ययनं प्रयोजन
षडङ्गवेदाध्ययनविधायकमागमं प्रति प्रयोजनभूतस्य व्या
ध्ययनस्य नागमप्रयोजनमित्युपालम्भार्थः । न त्वागमप्रयो
प्रतिपादकं भाष्यमनुष्ठापकत्वाभिप्रायं व्याख्यातृभिर्व्याख्यात
र्थं फलपरत्वं प्रयोजनशब्दस्यारोप्य दूषणमुक्तमित्याशङ्कानि
णार्थः फलपदप्रयोगः । रक्षोहागमलघ्वसन्देहाः प्रयोज
सकृच्छ्रुतस्य प्रयोजनशब्दस्य रक्षादौ फलपरत्वमागमे ऽनु
परत्वं न युक्तमित्याशयः । एतदेव विवृणोति *
हीति * न चागमप्रयोजनत्वाभिधानेन लक्षणया
नाख्यमागमोक्तं प्रयोजनमभिमतमित्याशङ्कते * अथेति *
वेदाध्ययनवद्धर्म्मज्ञानस्याप्यनुष्ठेयत्वमनेनागमेनोक्तं न प्रयोज
ति मत्वा परिहरति * तदपीति * नन्वेकस्मिन्वाक्ये वि
योगाद्धर्म्मस्य ज्ञेयत्वाभिधानं प्रयोजनत्वेनैव व्याख्येयमत उ
निष्कारणतयेति * श्रेयःसाधनत्वेन धर्म्मस्य निष्प्रयोजनत्व
न्निष्कारणशब्दस्य षडङ्गशब्देनैवान्वयात्पौरुषेयेषु च वाक्ये
दोषत्वादित्याशयः । एतदेव विवृणोति * निष्कारणेति *
ऽनुष्ठाप्यते ऽनेनेति व्युत्पत्त्या प्रयोजनवचनो ऽयं कारणश
वक्तुं निष्प्रयोजनत्वशब्दः । अवेदत्वाच्चास्यागमत्वं नास्ती
आगम इति * नन्ववेदत्वे ऽपि वेदमूलत्वेनागमत्वं भविष्यत
ङ्क्याह * कथं चेति * नन्वेवं तर्हि तस्याः स्मृतेर्वेदमूलत्वाभ
दाध्ययनस्यावैधत्वं स्यादित्याशङ्क्याह * तस्मादिति * न
लवेदविषयस्य विधेर्नित्यानित्यसंयोगविरोधो ऽस्तीत्याह *
ञ्च चेति * ननु व्याकरणादेरपि प्रवाहनित्यत्वान्नित्यविधि
त्वं न विरोत्स्यतइत्यत आह * व्याकरणादीति * प्रत्यक्षश्रुति

। सति तदन्यथानुपपत्त्या प्रवाहनित्यत्वं कल्प्येत तदभावे ऽप्यप-
नृतित्वेनाप्युपपत्तेर्न कल्पनागौरवाश्रयणं युक्तमित्याशयः । न
ास्य वेदत्वेन तत्तुल्यत्वेन वा स्वयमागमत्वं सम्भवति कल्पसू-
ाधिकरणे निरस्तत्वादित्याह * न चेति * किं च प्रधानं च
डङ्गेषु व्याकरणमिति भाष्येण वेदाङ्गत्वाद्व्याकरणस्यैतदागमप्र-
ाजनत्वमुक्तम् । अङ्गशब्दश्च तादर्थ्यवाची वा स्यादवयववाची
। नोभयथापि व्याकरणस्याङ्गतास्तीत्याह * न चेति * उभय-
पाभावमुपपादयति * श्रुतीति * कस्तर्ह्यस्याः स्मृतेरर्थ इत्य-
क्षायामाह * तस्मादिति * लिङ्गादेरशब्दरूपत्वे ऽपि तत्कल्प्या- २
ां श्रुतीनां वेदावयवत्वं भविष्यतीति भावः । अभिधानसमर्थानां
ा मन्त्राणां लिङ्गत्वमङ्गानां सापेक्षवाक्यार्थप्रतिपादकवाक्यसमु-
ायस्य प्रकरणत्वम् । सन्निधिपठितानां वाक्यानां क्रमत्वम् । यौ-
गिकस्य शब्दस्य समाख्यात्वमभिप्रेत्य * अवयवत्वमुक्तम् * एवं
वधषडङ्गवेदाध्ययनस्य चान्वयव्यतिरेकाभ्यां धर्म्मज्ञानहेतुत्वाव-
गायाद्धर्मो ज्ञेय इत्यस्य तत्प्रयोजनत्वाभिधायकत्वोपपत्तेर्नानेकवि-
धानं निमित्तवाक्यभेदापत्तिरिति सूचयन्नाह * तैः षड्भिरिति *
नन्वेवं सति वेदाध्ययनेनैव तदवयवाध्ययनसिद्धेः विशेषणानर्थ-
क्यापत्तिं शङ्कते * नन्विति * प्रविभक्तरूपश्रुत्यादिज्ञानार्थत्वेन
विशेषणसाधुत्वमाह * उच्यतइति * श्रुतेर्विनियोजकत्वे हे-
तुर्मुख्यं गौणं वा सामर्थ्यं तेन विना विनियोजकत्वस्यासम्भवा-
द्विनियोजकाक्षरश्रवणरूपं व्यर्थं लक्षिते पूर्वं साधनांशे वि-
नियोगः फलं सामान्यसम्बन्धाख्यः क्रतुसम्बन्धो लिङ्गस्य
विनियोजकत्वे हेतुः सामर्थ्यं रूपं मुख्ये ऽर्थे विनियोगः फलं सम-
भिव्याहारान्यथानुपपत्तिर्वाक्यस्य विनियोजकत्वे हेतुः । सन्निहि-
ताकाङ्क्षितयोग्यपदार्थप्रतिपादकपदसमुदायो रूपं पूर्वापरपदाविरो-
धेन विनियोगः फलं प्रकरणस्य विनियोजकत्वे फलसंयोगाभावो
हेतुः साकाङ्क्षफलवत्सन्निधानं रूपं फलवति विनियोजकत्वे सा-
दृश्यं हेतुः । निराकाङ्क्षफलवत्सन्निधानं रूपं फलवत्याकाङ्क्षो-
त्थापनेन विनियोगः फलं सामान्यतः प्राप्तिः समाख्याया विनियो-
जकत्वे हेतुः यौगिकशब्दत्वं रूपं प्रतियोगिनि विनियोगः फलमिति ।
पृथग्भूतैर्हेतुरूपफलैः प्रविभक्तरूपेण श्रुत्यादिज्ञानं मीमांसानिरपेक्षा-
द्वेदाध्ययनमात्रान्न सिध्यतीत्याशयः । ज्ञात्वेति च ज्ञास्यामीत्यध्यव-
सायेत्येवमग्निष्टोमसाम कृत्वेतिवद्व्याख्येयं विधेरर्थमित्यनेन षडङ्गो
वेदो ऽध्येयो ज्ञेयश्चेत्यागमस्य वेदः पठितव्यः स च परस्परवि-

विक्तश्रुत्यादिषडङ्गरूपेण ज्ञेय इत्यर्थः । सूचितं मीमांसाधी
च्चास्यार्थस्य न इत्यस्मदा सूचितम् । ननु ज्ञेयशब्दस्य षडङ्गशा
न्वये धर्मशब्दस्यानन्वयापत्तेर्नानेन श्रुत्यादीनां चोक्तरूपेण ज्ञानं
धियतइत्याशङ्क्य अध्येयशब्दस्यैवेण गतावित्येतद्धातुरूपत्वाङ्गी
णेन ज्ञानविधायकतेति व्याख्यानान्तरमाह * अधीति * अ
रप्रश्लेषरहितेन वानेन ध्यानं विधीयतइति तृतीयं व्याख्यान
* ध्यायतेरिति * अध्ययनविधित एव नान्तरीयकतयाध्ययनसि
विधानानर्थक्यमित्याशङ्क्य श्रुत्याद्युपायकार्थप्रतिपादकत्वरूपेण
ङ्गस्य वेदस्य ध्यानं विवक्षितं न स्वरूपेण तस्यापि च वेदार्थाव
रणकालसिद्धत्वात्पश्चादप्यनुष्ठेयत्वसिद्ध्यर्थं विधानमिति दर्शि
माह * श्रुत्यादीति * एवं च मीमांसाध्ययनानुष्ठापकतैवास
गमस्यावसीयते न व्याकरणाध्ययनानुष्ठापकतेत्यनुष्ठापकत्वेनाग
स्य व्याकरणप्रयोजनत्वाभिधानं न युक्तमित्याह * ततश्चेति
अनुष्ठानार्थत्वाद्वा विधिवाक्याध्ययनमात्रेण स्वाध्यायविध्यर्थसि
रर्थवादान्तर्गतव्याकरणाद्यङ्गसहितवेदाध्ययनाविधानार्थत्वेनास्य
गमस्य न पाणिन्यादिप्रणीतग्रन्थाध्ययनानुष्ठापकतास्तीति चतु
व्याख्या तामाह * वेद इति * श्लोकं व्याचष्टे * तद्दध्न इति
तदेनमधिनोत्तद्ध्नो दधित्वमिति धिनोतेः प्रीणातिकर्मणो दधित्व
ब्दनिर्वचनादेतन्निरुक्तोदाहरणं तदाहुर्यदन्यो जुहोत्यथ यो ऽनुवा
याति तं च कस्मान्न होतेत्याचक्षतइति पृष्टे यद्वाव स तत्र यथा
जनं देवता अमुमावहामुमावहेत्यावाहयति तं देवहोतुर्होतृत्वमि
ह्वयतेः कृतसम्प्रसारणस्यैतद्रूपं न तृजन्तं जुहोतेरिति प्रकृतिविशे
न्व्याख्यानान्न व्याकरणोदाहरणम् आदिशब्दोपात्तस्य छन्दोवि
त्यादेरष्टाक्षरा गायत्रीत्याद्युदाहरणं यथासम्भवं मृग्यम् । अस्तु
निरुक्तादिग्रन्थानां षडङ्गाध्ययनस्मृतिविषयत्वम् । ननु व्याकरण
प्रातिशाख्यैः संख्याः पूरयिष्यतइति पञ्चमीव्याख्यामाह * प्रातिश
ख्यानि वेति * यानि प्रातिशाख्यान्यध्येतारो ऽधीयते तेष्वेव ष
संख्यापूरणार्थं सङ्केतं न व्याकरणेष्वित्येवकारार्थे द्वितीयो वाशब
गृह्यमाणं लिङ्गेन स्वाध्यायार्थत्वं ह्येषामिति हेत्वर्थः वेदसंहिताध्य
यनानुगतस्वरसन्ध्याद्यनुसाराभिधानार्थः । स्वाध्यायत्ववदिति
तिः स्वाध्यायानुगतस्वराद्युच्चारणनियामकत्वरूपं प्रयोगशास्त्रत्वं त
दर्थग्रहणहेतुतया स्वाध्यायवदित्यनेनोक्तमुपपादयति * या
हीति * तदुपपादितं गृह्यमाणतदर्थत्वं व्याचष्टे * तेष्विति *
अतस्तेष्वित्यध्याहारेण योज्यम् । एवकारार्थस्य वाशब्दस्य व्या

येमाह * नन्विति * ननु कतिपयानामपि तावद्वैदिकशब्दानामुच्चा- २
णनियामकत्वात् व्याकरणानामपि प्रयोगशास्त्रतास्तीत्याशङ्क्याह
* प्रातिशाख्यानीवेति * अन्वाख्यायमानेष्वपि वैदिकशब्देष्वव-
ययनानुगतस्वरसन्ध्यादियुक्ते रूपे व्यापाराभावान्नैषां प्रयोगशा-
त्रतास्तीति नियामकत्वाद्व्याकरणानामपि प्रयोगशास्त्रतास्तीति प-
हरति * नेति * प्रातिशाख्यानां वेदस्वरूपे व्यापारं विवृणोति
* प्रातिशाख्यैः पुनरिति * उदात्तपौर्वापर्यत्वे तयोर्मध्ये कालः
रसन्धिः सर्वानुदात्तपदसंहतिः प्रयतिः असंहिता विवृतिः
रितस्योदात्तो ऽशः पूर्वाङ्गः, अनुदात्तः पराङ्गः आदिशब्दे-
ङ्गाद्युक्तम्। एवं तावद्व्याकरणाध्ययनाविधायकत्वान्नास्यागमस्य
याकरणं प्रत्यनुष्ठापकत्वरूपप्रयोजकत्वान्नास्य किमपि प्रयोजनत्वम्
सम्भवतीत्युक्तम् * इदानीमस्यागमस्य व्याकरणाध्ययनविधायक-
े ऽपि निष्कारणशब्देनाध्ययनमात्रपर्यवसानावसायादर्थज्ञाननिर-
क्षेणाध्ययनमात्रेण शब्दानामनुशासितुमशक्यत्वाच्छब्दानुशासन-
रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति पूर्वोक्तेन प्रतिज्ञानेन तव
योजनत्वेनाभिमतस्यागमस्यानुसन्धानसंवादो नास्तीत्याह * पूर्वो-
नेति * यो ह्ययमागमस्त्वया प्रयोजनत्वेनोपन्यस्तः सो ऽध्यय-
प्रति तन्मात्रे पर्यवस्यति न शब्दानुशासनपर्यन्तं गच्छति प्राक्-
दानुशासनमागमप्रयोजनत्वेन प्रतिज्ञातमित्यध्याहारेण योज्यम्।
स्माच्चागमादध्ययनमात्रे धर्म इति प्रतीतेर्महाभाष्यकृता ज्ञाने-
र्म इति वक्ष्यते शास्त्रपूर्वे प्रयोगेऽभ्युदय इति च वार्तिककृता तदु-
पमप्यागमविरुद्धं स्यादित्याह * ब्राह्मणेनेति * यच्च लाघवा-
चाध्येयं व्याकरणमित्यादिभाष्येण लघुनोपायेन शब्दज्ञानं व्याक-
ास्य प्रयोजनमित्युक्तं तदत्यन्तक्लिष्टत्वेन व्याकरणस्य लघूपायत्वा-
गप्रयोजनातिक्लिष्टव्याकरणाध्ययनमध्येतुर्लाघवं मन्दबुद्धित्वमा-
द्यतीत्यध्येतृलाघवमेवास्य प्रयोजनमित्येवं व्याख्येयमित्युपहसति
यदपि चेति * उपहासान्तरमाह * यदि वेति * श्लोकं व्याचष्टे
लोकप्रसिद्धानामेवेति * धातुशब्देन धातुपाठो विवक्षितः गण-
देन गणपाठ उणादिशब्देन दशपादी पञ्चपादी वा सूत्रशब्देनाष्टा-
ायी आदिशब्देन वार्त्तिकादीनां तेषां पाठतो ऽर्थतश्च क्लिष्टत्वाद-
न्तवैषम्यं विशेषणं क्लिष्टार्थत्वोपपादनायोत्तरवद्यापि विग्रहद्व-
य। अलौकिकीभिर्वृद्धिरादैजित्यादिभिः संज्ञाभिरिकोगुणवृद्धी-
त्याभिश्च परिभाषाभिर्निबद्धा प्रक्रिया येषां धात्वादीनामिति
मविग्रहः द्वितीयस्त्वनवस्थितौ स्थापनाक्षेपौ यस्य सिद्धान्तस्य स

सिद्धान्तो यस्य विचारस्य स विचारो येषु धात्वादिष्विति
र्भबहुव्रीहिगर्भो बहुव्रीहिः। तद्यथा सिद्धे शब्दार्थसम्बन्धे
त्यारम्भवार्त्तिके भाष्यकृता सिद्धे शब्दे ऽर्थे सम्बन्धे चो
कृत्वा नित्यपर्यायवाचित्वेन सिद्धशब्दं व्याख्याय कं पुन
मत्वैष विग्रहः क्रियत इति विचारमुपक्रम्याकृतिमित्या
भिप्रायत्वं प्रतिज्ञायाकृतिर्हि नित्या द्रव्यमनित्यमिति है
ऽथ वा द्रव्यपदार्थ एष विग्रहो द्रव्यं हि नित्यमाकृति
द्रव्यातीन्द्रियत्वमुक्त्वा पुनराकृतावपि पदार्थएष विग्रहं
इत्युक्त्वा नित्याकृतिरेकद्रव्यविनाशे ऽपि द्रव्यान्तरे प्रत्य
दिति चाक्षेपं परिहृत्य कूटस्थनित्यत्वाभावे ऽपि वा पट्टकु
ष्टा वा अथाकृतेर्द्रव्यान्तरभावे ऽयमिति तत्त्वप्रतिज्ञानान्नित
रिहारान्तरमुक्त्वा ऽथ वा किं न एतेन इदं नित्यमिदमा
यन्नित्यं तं पदार्थं मत्वैष विग्रहः क्रियतइति पदार्थविच
न्तस्थापनाक्षेपानवस्थितहेतूपन्यासेनानवस्थितौ कृते एवमल
मैर्धात्वादिभिर्लोकप्रसिद्धानामेव शब्दानां क्लेशेनान्तं गत्वा
स्थितानुवादमात्रकरणान्निष्फलश्रमापत्तिरित्यर्थः। तत्रापि
यथावस्थितशब्दज्ञानमपि सर्वप्रतिपत्तॄणां न भवतीत्युक्तम
त्यर्थमित्यन्तासम्भाविता स्तुतिरपि न सम्भवतीति सूचित
भाष्यकृता न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शः
ज्ञातुमिति लघूपायान्तराभावाभिधानाद् गुरोरप्यस्य प्रति
त्मकगुरुतरोपायापेक्षया लघुत्वं भविष्यति एतदेव चान्येरु
मित्याशङ्कानुभाषणपूर्वकमुपसंहरति * यदपीति * तत्त्व
रूपादेर्नास्ति व्याकरणादृतइत्याद्यपि वक्तव्यमित्यर्थः। न
देः प्रत्यक्षगम्यत्वान्न व्याकरणापेक्षा तत्साध्वसाधुशब्दवि
व्याकरणमन्तरेणाज्ञानान्नोपहासो युक्त इत्याशङ्कार्थप्रतीति
त्वात्सर्वेषां गोगाव्यादिशब्दानां साधुत्वे तेषां च श्रोत्रे
म्यत्वान्न व्याकरणापेक्षेत्यभिप्रायेण परिहरति * को हीति
णान्तरागोचरार्थविषयत्वं शास्त्रस्य स्वभावः प्रमाणान्तरगृह
नुवादित्वं लोकस्य इतिकरणार्थवाची इहशब्दप्रयोगात्तत
रणमिति प्रथमा कीदृशं तर्ह्यर्थप्रवृत्तितत्त्वानां शब्दा एव नि
२१०।२ मिति श्लोकस्योत्तरार्द्धं वक्तव्यमित्यपेक्षायामाह * अत इति
द्यप्यसन्देहार्थं चाध्येयं व्याकरणमित्यादिभाष्येण वेदार्थगत
निवृत्तिप्रयोजनत्वं व्याकरणस्योक्तं तदपि दूषयति * अस
ति * पदार्थगतस्य चासन्देहस्य निवृत्तिर्व्याकरणस्याप्रयोजनं

न्तरा वा उभयथाप्यन्यतः सिद्धत्वात् व्याकरणाच्चासिद्धेर्न व्या-
रणप्रयोजनमित्यर्थः । पदार्थसन्देहनिवृत्तेरन्यतः सिद्धिमुपपादयति
पदार्थेति * व्याकरणेन चासिद्धिमुपपादयति * व्याकरणेन
ारिति * नन्वीदृशं पदमस्मिन्नर्थे साध्वित्यर्थविशेषावच्छिन्नस्यैव
स्वरूपस्यान्वाख्यानादर्थज्ञानमपि व्याकरणात्सम्भवतीत्याश-
शब्दान्वाख्यानोपायमात्रकेन व्याकरणे ऽर्थकथनं न तात्पर्येणेति
दर्शयितुमाह * तथा हीति * व्याकरणाद्धि सर्वनाम्नां धातु-
त्वेन क्रियायोगनिमित्तता प्रतीयते न च वृद्धव्यवहारे तथा प्रती-
रित्यर्थः । अत्रैवोदाहरणमाह * गमेरिति * अनेन सूत्रेण गत्य-
त् गमेर्धातोरौणादिके डोप्रत्यये विहिते डित्करणाच्च टिलोपे कृ-
कर्त्तरि कृदिति गन्तरि गोशब्दव्युत्पादनार्थान्वाख्यानादरे लोके
द्धा जातिवाचिता हीयेत लोकमूलत्वाच्च व्याकरणस्य नैतद्यु-
मित्यर्थः (उदाहरणान्तरमाह * तथा चेति * कुशला दातरि कु-
ठशब्दस्य दातरि च दारशब्दस्य व्याकरणे ऽनुगमः । लोके च
ोरा ये कुशलशब्दस्य दातृमहत्त्वयो वाच्च दारशब्दस्येत्यर्थः ।[1])
कृदन्तेष्वपि कृदन्तत्वान्वाख्यानात् व्याकरणस्य लोकविरोधमु-
वा समासाभावे ऽपि समासान्वाख्यानात्सर्वविरोधमाह * अ-
ति * अतद्धितान्तेष्वपि तद्धितान्तवद्व्याख्यानाद्विरोधमाह
एवमिति * वेदविरुद्धार्थान्वाख्यानाद्यङ्गव्याघाताशङ्कापत्तेर्न
ाकरणस्यार्थे तात्पर्यमित्याह * तथेति * अत्रैवोदाहरणद्वयमाह
कलेरिति * आपो वा ऋत्विग्भ्यश्छिन्तासां वायुः पृष्ठेत्यवर्त्तते
ा वसुवामं समभवत्तस्मिन्मित्रावरुणौ पर्यपश्यतां तावब्रूतां
मं मयाद्दं देवेष्वाजनीति तस्माद्वामदेव्यामिति वामदेवेष्विति
ाभिव्याहृतशब्दद्वयोच्चारणनिमित्तवामदेव्यशब्दव्युत्पत्तिः कल-
क्रियानिमित्तकालेयशब्दव्युत्पत्तिश्च वैदिकीं वैयाकरणीं दर्शननि-
त्तां बाधतइत्यर्थः । कल्पसूत्रकारैश्च कृष्णाशस्वास इति कृष्ण-
ाब्दस्य व्याकरणाननुगतदकारापगमेन कृष्णदशब्दवाचितया
ाख्यानात्कृष्णवलक्षे अजिने इति च वलक्षशब्दस्य लोकव्याकर-
नवगतशुक्लत्ववाचितया व्याख्यानाद्यूपादिशब्दानां च व्याकर-
मनाद्दत्यैव व्याख्यानान्न व्याकरणस्य पदार्थनिश्चायकत्वमस्तीत्याह
तथेति * नन्वस्तु नाम पदान्तरेषु व्याकरणानपेक्षो ऽर्थनिर्णयः । २१
तु भाष्यकृता स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेत्यत्र किं
ूला चासौ पृषती चेति कर्मधारयः । स्थूलानि पृषन्ति यस्याः सेयं

१ अयं पा॰ २ पु॰ ना॰ ।

स्थूलपृषतीति बहुव्रीहिर्वेति सन्देहनिवृत्तिर्नवैयाकरणस्य भ
त्युक्तं तत्र कः परिहार इत्याशङ्क्याह * यथा चेति * पदार्थ
हनिवृत्तेर्व्याकरणप्रयोजनत्वं निराकृत्य वाक्यार्थसन्देहनिवृत्ति
निराकरोति * किं चेति * ननु वाक्यार्थसन्देहनिवृत्तिप्रयोज
भाष्यकृतानुक्तत्वान्न निराकार्यमित्याशङ्क्य प्रसङ्गापादनार्थं तां
करणमित्याह * यदीति * किं चिदित्यक्रियार्थत्वमभिमतम् ।
दुम्बराधिकरणस्य साध्यांशविचारार्थत्वाभावे किमौदुम्बर
फलसमभिव्याहारः साधारणत्वप्रतिपत्त्यर्थः । प्रशंसार्थो
व्याख्येयं प्रमाणान्तरेणान्नकरणत्वस्य होमसम्बन्धहेतुत्वमज्ञात
प्यत इत्यज्ञातज्ञापनाभिप्रायो विधिशब्दः हेतुद्वारो ऽर्थवाद इति
पार्थिववन्मध्यमपदलोपी समासः इष्टार्थत्वशब्देनार्थतात्पर्य
सर्वमन्त्रसाधारणं मन्त्राधिकरणे व्युत्पादितं न स्मारकत्वं स्तो
त्रादिमन्त्रव्यापकत्वादिति दर्शितं व्याकरणानपेक्षोदाहरणा
कत्वाविवक्षायामेकवचनस्मृतेर्व्याकरणेनैकत्वविवक्षाप्रतीतेर्विर
ऽप्यस्तीति दर्शयितुम् * ग्रहेत्युक्तम् * न त्वनन्यलभ्यस्य प्र
नवदर्थवादत्वादिनिर्णयस्य च मीमांसासिद्धत्वान्न व्याकरणप्र
नत्वोपपत्तिरिति स्वयमेवाशङ्क्याह *अथेति * स्थूलपृषत्यादि
र्थस्यापि कल्पकारादिव्याख्यानान्निर्णयः सेत्स्यतीत्याशयः । ननु
प्रमाणानिरपेक्षस्य व्याख्यानमात्रस्य निर्णायकत्वं न युक्तमित्या
त्वया ऽपि व्याख्यानिर्णायकत्वाभ्युपगमान्नेदं दूषणमित्याह *
चेति * लक्षणोत्थसन्देहे व्याख्यानस्य निर्णायकत्वप्रतिपादकं
ष्यं वेदोत्थसन्देहेन योजयितुमाह * व्याख्यानत इति * भा
ता हि शास्त्रारम्भवार्त्तिकगतस्य सिद्धशब्दस्य (एकपरिहारयु
सार्थत्वमुपपाद्य चतुर्थः परिहारो ऽभिहित इत्यन्वयः सिद्धशब
कः पदार्थ इति पृष्ट्वा सिद्धा द्यौः सिद्धा पृथिवी सिद्धमाकाश
नित्येषु प्रयोगान्नित्यपर्यायवाची सिद्धशब्द इत्युक्त्वा सिद्ध अं
सिद्धः सूपः सिद्धा यवागूरिति कार्येष्वपि प्रयोगात्कथं नि
इत्याशङ्क्य संग्रहे तावत्कार्यप्रतिद्वन्द्विभावप्रसिद्धामिति भाष्येण
ग्रहाख्ये वार्त्तिककारकृते ग्रन्थान्तरे किं कार्यः शब्दः सिद्धो
कार्यप्रतियोगित्वेन नित्यार्थत्वावसायादिहापि तादर्थ्यनिर्णय
परिहारमुक्त्वा ऽथ वा सन्त्येकपदान्यप्यवधारणानीति भाष्येण
क्षो वायुभक्ष इतिवत्सिद्ध एव न साध्य इत्यवधारणेन नित्या
मुपपाद्याथ वा पूर्वपदलोपो ऽत्र द्रष्टव्यः । अत्यन्तसिद्धः सिद्ध

१ अयं पा० २ पु० ना० ।

यथा देवदत्तो दत्त इति सत्यभामा भामेति भाष्यगताल्यन्तत्वावि-
षणेन नित्यार्थत्वमुपपाद्याथ वा व्याख्यानतो विशेषप्रतिपत्तिर्न हि
न्देहादलक्षणमिति नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्याम
ति भाष्येण चतुर्थः परिहारोऽभिहितः । ननु लक्षणोत्थसन्देह-
वृत्तिलक्षणकारिपुरुषकृतव्याख्यानपरम्परयोपपद्यते वेदे तु क-
भावेन तत्कृतस्य व्याख्यानस्य मूलत्वायोगात् व्याकरणं वेदव्या-
यापरम्पराया मूलं भवतीत्याशङ्क्याह * न चाति * कल्पादि- २
यो वेदार्थग्रहणे व्याकरणमात्रेण व्याख्यानाशक्तेः कल्पादीनामेव
लत्वं युक्तमित्याशयः । वेदवद्यानादित्वात् व्याख्यानपरम्परा न
लान्तरमपेक्षतइत्याह * यथैवेति * ननु भाष्यकृता यदि पूर्व-
दप्रकृतिस्वरत्वं ततो बहुव्रीहिः अथ समासान्तोदात्तत्वं ततस्तत्पु-
ष इति भाष्येण बहुव्रीहौ प्रकृत्या पूर्वपदमिति बहुव्रीह्याद्यस्य पदस्य
कृतित्वाभिमताद्युदात्तस्वरत्वस्मृतेरुदात्ताधिकारे चान्तोवत्या इत्यतो
न्त इत्यनुवर्त्तमाने समासस्येति सूत्रेण समासविशेषनिर्णायान्तरेषू-
र्गः अन्तोदात्तत्वस्मृतेरनुदात्तं पदमेकवर्जमिति च विहितस्वरवर्ज-
मुदात्तत्वस्मृतेर्बहुव्रीहिं विना आद्यपदोदात्तत्वायोगाद्व्याकरणस्य
मासविशेषनिर्णयद्वारार्थविशेषनिर्णायकत्वाभिधानाद्व्याकरणस्य
र्णायकत्वाभिधानाद्व्याकरणाधीनादध्येतृप्रसिद्धाद्युदात्तत्वाद् ब-
व्रीहित्वेन स्थूलपृषत्यादिशब्दव्याख्येत्याशङ्क्याह *न चाति * श्लोकं
ाचष्टे *वृद्धेति * वेदे तु स्वराविवेके सत्यप्यर्थविशेषेण सह स्वर-
शेषस्य सम्बन्धग्रहणाभावान्न स्वरविशेषं कृत्वार्थविशेषव्यवस्था
ज्यतइत्याह *यद्य त्विति*ननु वेदे सम्बन्धग्रहणाभावेऽपि लोकतो
नेकार्थतया ऽवगतस्य पदस्य वेदे श्रवणात्सन्देहे सत्यर्थप्रकरणा-
भिर्निर्णयो ऽभ्युपगम्यते तत्र चार्थद्वयसाधारणस्य पदस्यैकत्रैवार्थे
थं वृत्तिरित्यपेक्षायां स्वरविशेषश्रवणात्तत्स्वरयुक्तस्यैव पदस्यासा-
र्थविशेषनिर्णयोपायत्वं स्वरस्याप्यस्तीत्याशङ्क्याह * तत्रापीति *
ाधारणस्यापि शब्दरूपस्य लोकावधारितार्थप्रकरणादिनिर्णयोपाय-
शेनैव एकार्थपरत्वावधारणोपपत्तेर्न लोकानवगतस्य स्वरस्याप्य-
निर्णायसामग्रीमध्ये निवेशकल्पना युक्तेत्याशयः । ननु स्वरस्या-
ाधानङ्गत्वे ऽनर्थकः पाठः स्यादित्याशङ्क्याह * तेनेति * न कदा
ाददृष्टार्थतास्तीति दर्शयितुम् * सर्वदेत्युक्तम् * ब्रह्मयज्ञेषु ज्यो-
ष्टोमादिषु ये जपमन्त्रास्ते ऽप्यङ्गमिति निष्कृष्य योज्यम् । जप-
ङ्गसामव्यतिरेकेण यज्ञकर्मण्येकश्रुत्यस्मृतेश्चकारेण न्यूङ्खसा-
ामुपादानम् । एवं च व्याकरणेन स्वरानुगमो ब्रह्मयज्ञाद्युपयो-

गित्वेनार्थवानस्तु न त्वर्थनिर्णयार्थतेत्याशङ्क्याह * व्याकर
अलौकिके ऽर्थे सम्बन्धग्रहणासम्भवेनावश्यकत्वाज्ज्ञानात्
किकेत्युक्तम् * न वर्णवद्वाचकत्वेन लोके स्वरः प्रयु
स्यानुपूर्व्यादिवद्वाचकसहकारिता * इत्यत्यन्तशब्देनोक्तम्
लोकाप्रयुक्तेष्वप्सुणादिशब्देषु वाचकत्वोपलक्षणाल्लोकप्र
च वाचकत्वज्ञानमिति नियमायोगाद्व्याकरणादपि
शेषस्यार्थविशेषं प्रतिवाचकत्वज्ञानं भविष्यतीत्याशङ्क्याह
चेति * शास्त्रारम्भभाष्ये ऽथ शब्दानुशासनमिति श
ख्यानार्थत्वाख्याने तात्पर्याभावान्न व्याकरणस्य प्रामाण्य
यः । अत्रैव सूत्रावयवं योजयन्नसन्देहप्रयोजनत्वासम्भव
यति * तस्मादिति * रक्षादीनामपि पूर्वोक्तप्रयोजनत्वासम्भ
हारार्थो ऽपिशब्दः । एवं मुख्यानि पञ्चप्रयोजनान्युपन्यासनपू
यित्वा ते ऽसुराः दुष्टः शब्दः यदधीतं यस्तु प्रयुङ्क्ते अविद्व
भक्तिं कुर्वन्ति यो वा इमां चत्वारि उत त्वः सक्तुमिव स्वार
शस्यां पुत्रस्य सुदेवो असि वरुणेत्यानुषङ्गिकाण्यपि त्रयोद
पतस्तावत् दूषयति * यान्यपि चेति *

अम्लेच्छत्वमदुष्टोक्तिर्विज्ञानं फलभागिता ।
अग्नीसाम्यं विभक्त्युक्तिः सप्तमं चार्त्विजीनता ॥
मनीषिवत् सम्मतत्वं देवेन महताप्यम् ।
वाक्स्वरूपप्रकटनं लक्ष्म्या वाचि निधापनम् ॥
अप्रायश्चित्तभाक्त्वं च द्वादशं पुत्रनाम च ।
त्रयोदशं सुदेवत्वमुक्तं भाष्ये प्रयोजनम् ॥
प्रथमं च द्वितीयं च सप्तमं चाप्रयोजनम् ।
दशमैकादशौ चेति व्याक्रिया न ह्यपेक्ष्यते ॥
तृतीयादीनि चत्वारि नवमद्वादशे अपि ।
प्रयोजनवदाभान्ति किं तु मान्येन सिद्धितः ॥
सुदेव इति मन्त्रस्य चत्वारीति द्वयोरपि ।
असामर्थ्यं न चरमसप्तमं वा प्रमाणकम् ॥

मुख्यप्रयोजनैश्च प्रयोजनवत्त्वासम्भवेनानुषङ्गिकेष
केत्याह * अपि चेति * नद्या वेगेन नीयमानो यस्तीर
क्षमप्यवष्टभ्य स्थातुं न शक्नोति तस्य यथा कुशावष्टम्भनं व
म्भनं चानर्थकं तथैतदपीत्यर्थः । पूर्वोक्तमेव प्रपञ्चयितुं प्र
२१३।३ न्यस्योपन्यस्य दूषयति * तत्रेति * भाष्यकृता ते ऽसुरा
हे ऽलय इति ब्रुवन्तः पराबभूवुस्तस्माद् ब्राह्मणेन न म्ले

म्लेच्छो ह वा एष यदपशब्द इत्यपशब्दनिषेधवाक्यमुपन्यस्य म्लेच्छा माभूमेत्यध्येयं व्याकरणमिति भाष्येण म्लेच्छरूपापशब्दप्रयोगात्प्रयोक्तुर्म्लेच्छत्वापत्तेरज्ञातस्यापशब्दस्य वर्जनायोगाच्छब्दापशब्दविवेकज्ञानार्थम् * व्याकरणमित्युक्तम् * यस्माद्सुरा अरय इति रेफस्थाने लकारप्रयोगेण हैहेप्रयोगे हैहेयोरित्येतत्सूत्रविहितप्लुतप्रयोगेण प्लुतप्रगृह्या अचीति च प्रकृतिभावविधानाद्धे अरय इति प्रयोक्तव्ये हे ऽलय इति त्रिविधापशब्दभाषणरूपम्लेच्छनात्पराभवं प्राप्तास्तस्माद् ब्राह्मणेन न म्लेच्छितव्यं नापभाषितव्यमिति समभिव्याहारेणापशब्दनिषेधस्यापराभवार्थत्वप्रतीतेर्म्लेच्छा माभूमेति म्लेच्छत्वपरिहारस्य प्रयोजनत्वं भाष्यकारोक्तमयुक्तमाशङ्क्य पराभवाख्यानस्यापभाषणफलप्रदर्शनार्थत्वे प्रतीते म्लेच्छो ह वा एष यदपशब्द इत्यस्यानर्थक्यापत्तेरपशब्दस्य म्लेच्छशब्दप्रयोक्तुर्म्लेच्छत्वं भवतीत्यपशब्दम्लेच्छत्वाभिधानार्थवादस्य फलपरत्वसूचनायोपन्यस्यार्थवादत्तोक्ता निषेधस्य तु प्रयोजनत्वमागमवत्प्रयोजकत्वेनाक्षेपकत्वेनोक्तं स निषेधो यथा गुरुसम्प्रदायागतवैदिकशब्दविषयो म्लेच्छभाषाविषयो वा न तु गाव्यादिशब्दविषयग्रन्था यदपि च तस्माद् ब्राह्मणेनेत्यादिग्रन्थेन प्रागुक्तमित्यर्थः। ततश्च व्याकरणानपेक्षत्वात्तत्प्रयोजनत्वयोग्यतेत्याशयः। यच्च भाष्यकृता।

दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतो ऽपराधात्॥

इति श्लोकमुपन्यस्य दुष्टाञ्छब्दान्माप्रयुक्ष्महीत्यध्येयं व्याकरणमिति भाष्येण दुष्टशब्दवर्जनं व्याकरणप्रयोजनमुक्तं तदपि मन्त्रविनाशविषयत्वस्य च व्याकरणानपेक्षत्वाच्च व्याकरणप्रयोजनत्वयोग्यमित्यर्थान्तरन्यासेनाह * दुष्ट इति * अत्रापि पूर्ववद्व्याकरणानपेक्षत्वात्तत्प्रयोजनत्वयोग्यतेत्यपिशब्देन सूचितम्। ननु दुष्टादुष्टशब्दज्ञानस्य व्याकरणाधीनत्वात्कथं तदनपेक्षत्वमाशङ्क्य दुष्टः शब्द इति पाठे भवेद् व्याकरणापेक्षा न त्वीदृशः पाठो ऽस्तीति दर्शयितुमाह * वाग्धीति * मन्त्रो हीनः स्वरतो वर्णतो वेति बहुजनप्रसिद्धस्य शिक्षाकारपठितस्य मन्त्रपदस्योद्धारेण पदान्तरप्रक्षेपः स्वपक्षानुरागमात्रेण कृतो न वस्तुत इत्यर्थः। मन्त्रविनाशविषयत्वे चास्य वाक्यस्य श्रुतिमूलत्वं भविष्यतीत्याह * दुष्टेति * दुष्टपदप्रक्षेपे ऽपि मन्त्रदोषविषयत्वेनोपपत्तेर्व्याकरणापेक्षानापादकत्वात्पाठान्तरोत्प्रेक्षानर्थक्यसूचनार्थो दुष्टशब्दः शब्दमात्रदोषविषयत्वे ऽस्य वाक्यस्य निर्मूलत्वसूचनार्थस्तुशब्दः उदाहरणपर्यालोचनयापि मन्त्रविनाश-

विषयतैवास्य श्लोकस्यावसीयतइत्याह * तथा चेति * स यज्ञवैश कृत्वा प्रासहाया ममापि च तस्य यदशिष्यत तत्त्वष्टाहवनीयमुपप्रा र्त्तयत्स्वाहेन्द्रशत्रुर्वर्द्धस्वेति यदवर्तयत्तद् वृत्रस्य वृत्रत्वं यदब्रवीत्स्वा न्द्रशत्रुर्वर्द्धस्वेति तस्मादस्येन्द्रःशत्रुरभवदित्याद्युदात्तेन्द्रशत्रुपद योगेणेन्द्रो यस्य शत्रुरिति बहुव्रीह्यर्थसम्पत्तेस्त्वष्टुः पुत्रस्य वृत्रस न्द्रः शातयिता हिंसिता जात इत्याद्युदात्तत्वलक्षणस्वरदोषेण वृत्र त्रोरिन्द्रस्योद्यत्वादिन्द्रवधसमर्थपुत्रोत्पादनार्थं यागं कुर्वाणस्य त्व यजमानस्याभिप्रेतार्थासिद्धिलक्षणा हिंसा जातेति स्वरापराधलक्षण मन्त्रविनाशनिमित्तयजमानगामिदोषोदाहरणं कृतमित्यर्थः । इन्द्र शत्रुरिति मन्त्रपदं स्वरापराधात् यथा यजमानं हिनस्तीत्युदाह णार्थः । तस्मादिन्द्रस्य शत्रुर्भूत्वा वर्द्धस्वेति तत्पुरुषार्थविवक्षाय मन्त्रोदाहृतमिदं प्रयोज्यमित्याशयः । यच्च नाम भाष्यकृता ।

यदधीतमविज्ञातं निगदेनैव शब्द्यते ।

अनग्राविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

इति श्लोकमुपन्यस्य तस्मादविज्ञातमनर्थकमाधिगीष्महीत्य ध्येयं व्याकरणमिति वेदाध्ययनसाध्यं वेदार्थज्ञानं व्याकरणप्रयो जनत्वेनोक्तं तद्व्याकरणप्रयोजनत्वेनाभासमानमप्यन्यतः सिद्धे व्याकरणप्रयोजनमित्याह * यत्त्विति * अध्ययनविधेर्दृष्टार्थत्वाभि धानान्मीमांसाप्रयोजनत्वेनैतद्युक्तं भवतीत्याशयः । ननु मीमांसाव द्व्याकरणमपि वेदार्थज्ञानसाधनं भविष्यतीत्याशङ्क्याह * नन्वि ति * शब्दानुशासनार्थत्वेनार्थपरत्वाभावः सूत्रावयवयोजनया सू चितः । नन्वर्थविशेषविषयशब्दानुशासननान्तरीयकत्वेनार्थानुशास नमपि सेत्स्यतीति स्वयमेवाशङ्क्योत्तरं सूत्रावयवं परिहारे योजय ति * शब्देति * नन्वर्थगतसन्देहविपर्ययनिरासमात्रस्य मीमांसासा ध्यत्वाद्वेदार्थस्वरूपज्ञानं व्याकरणाद्भविष्यतीत्याशङ्कां निरस्यन्नुपसं हरति * तस्मादिति * यच्च

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले ।

सोऽनन्तमाप्नोति फलं परत्र वाग्योगविद् दुष्यति चापशब्दैः

इति श्लोकेन शब्दव्यवहारकालेऽर्थविशेषे सम्यक्शब्दप्रयोगस पारलौकिकफलप्राप्तिहेतुत्वाभिधानात्तत्सिद्धिर्व्याकरणस्य प्रयोजन मिति भाष्यकृतोक्तं तदप्यन्यथा व्याख्यातुं शक्यत्वात्प्रयोजनाभास मित्याह * यस्त्विति * गुरुसम्प्रदायागते स्वरादिविशेषे कुशल सन्वेदाध्ययनादिव्यवहारकाले वैदिकांश्छब्दान्प्रयुङ्क्तइति व्या ख्येयमित्याशयः । ननु मन्त्रब्राह्मणेष्वपशब्दाभावात्तद्विषयत्वे दुष्य

चापशब्दैरित्ययुक्तं स्यादित्याशङ्क्याह * यथेति * कथं वैदिकश
विनाशविषयता ऽस्या ऽवसीयतइत्यपेक्षायामाह * स्वाध्याये
* पौरुषेयत्वेनास्य प्रमाणान्तरावगतदोषानुवादत्वावसायादुदा-
ेन वचनेन यजनयाजनगतवेदशब्दविनाशहेतुकदोषावगतेरादिश-
ाश्चेतिकरणसूचितेन च।

हस्तहीनं तु यो ऽधीते स्वरवर्णविवर्जितम्।
ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति॥

इति स्मृत्यनुमितेन वचनेनाध्ययनाध्यापनगतवेदशब्दविनाशहे-
कदोषावगतेस्तद्विषयत्वनियम इत्याशयः। यद्यप्येषामृगादिशब्दा-
मुपक्रमानुरोधेन वेदपरत्वं तृतीये वक्ष्यते तथापि ऋग्वेदादिवि-
ातमन्त्रविषयाया अप्यार्तेर्विनाशाख्यायाः पदार्थान्तरार्तिवत्सामा-
ाशब्देनोपपादानादविरोधः। ननु प्रकृतिप्रत्ययरूपयोर्वाचोर्योगं
म्बन्धं वेत्तीति व्युत्पत्त्या वाग्योगविच्छब्देन वैयाकरणाभिधानात्त-
ामभिव्याहारेणास्य वाक्यस्य व्याकरणानुगताननुगतशब्दप्रयोग-
ाषयतावगम्यतइत्याशङ्क्य त्रेधा परिहरति * वागिति * वाचः
तियोगितयाक्षिप्तेनार्थेन यो वाचं वेत्तीति प्रथमे परिहारे निगमनि-
कादिकुशलो वाग्योगवित् द्वितीये तु वाचो वचनस्य योगं पदा-
ावयवविशेषरूपां व्यक्तिं ब्राह्मणवाक्येषु मन्त्रेषु च वाचो भासन-
ा प्रकाशनस्य योग्यं योगमर्हं वेत्तीति मीमांसको ऽभिधीयते चो-
ातत्वेनावगतस्य स्वार्थत्वात्प्रकाशनार्हत्वम् अनूदितत्वेनावगतस्य
रार्थत्वात्प्रकाशनानर्हत्वं वेत्तीति समासार्थः। निर्वापमन्त्रे त्व-
ाश्चोदितत्वेनानुष्ठानाय स्मर्त्तव्यत्वात्प्रकाशनार्हत्वं सवित्रादीनां
ा चोदितत्वेन निर्वापकस्तुत्यर्थत्वात्प्रकाशनानर्हत्वं प्रसिद्धं विदे-
च्चारणार्थत्वसूचनार्थं प्रकाशनानर्हत्वं प्रतियोगितयोक्तं वैयाकर-
ास्य वाग्योगवित्त्वासम्भवोपपादनायास्य पदस्यान्येनार्थेन प्रकृष्टो
ोगः स्वाभाविकसम्बन्धो ऽस्य वचनस्यैवम्भूतपदान्वयरूपाव्यक्ति-
स्य वा मन्त्रस्यायमर्थः प्रकाशनयोग्य इत्येवं विविधप्रयोगोत्पत्ति
ति व्याकरणस्याशास्त्रत्वादिति त्रेधा सूत्रावयवं तन्त्रेण योजयति
ः वैयाकरणस्येति * यच्च २

अविद्वांसः प्रत्यभिवादे नाम्नो येन प्लुतिं विदुः।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेद्॥

इति श्लोकमुपन्यस्य स्त्रीवन्माभूमेत्यध्येयं व्याकरणमिति भा-
ष्येण स्त्रीसाम्यपरिहारो व्याकरणप्रयोजनमित्युक्तं तदपि प्रयोजना-
ासमित्याह * यदपीति * तत्प्लुतस्येति तच्छब्दो ऽव्ययं तत्रेत्य-

र्थे तस्मिन् विषये तद्व्याकरणं प्लुतप्रयोगोत्पत्तिं पूज्यशास्त्रप्ल
रूपस्य लोकसिद्धत्वान्नामान्ते च प्लुतप्रयोगस्य मन्वाद्युपदि
द्धित्यर्थः । ऊकालो ऽज्झ्रस्वदीर्घप्लुत इत्येतत्सूत्राधीनत्वं प्लुत
ज्ञानस्य ह्युपगस्य प्रकृतिप्रत्ययान्वाख्यानाद्वाशब्दापशब्दविवे
नैकसूत्रमात्रसाध्यं प्रयोजनं युक्तमितिशब्देषु न व्यवस्था स्या
त्तरसूत्रावयवयोजनया दर्शयति * न चेति * शब्दविषया
स्था या व्याकरणेन न क्रियते सा न कर्त्तव्या स्यादित्येवं सूत्रा
ऽनेन योजितः । यच्च विभक्तिं कुर्वन्तीत्युपक्रम्य याज्ञिकाः
प्रयाजाः सविभक्तिकाः कर्तव्या इति न चान्तरेण व्याकरणं
जाः सविभक्तिकाः शक्याः कर्त्तुमिति भाष्येण विभक्तिज्ञानं
रणप्रयोजनमुक्तं तदपि प्रयोजनाभासमित्याह * एवमिति *
दित्यव्ययं तन्नेत्यर्थे तत्रापि व्याकरणमशास्त्रमित्यपिशब्दाध्या
योऽयं कस्मादित्यपेक्षिते सौत्रं प्रयोगोत्पत्तिपदं समासान्नि
हेत्वर्थत्वेन त्रिविधोपपत्तिपूर्वकं याज्ञिकेत्यादिना योजितं स
समिधो ऽग्नआज्यस्य व्यन्तु तनूनपादग्निमग्न आज्यस्य वेतु इड
मग्नआज्यस्य व्यन्तु बर्हिरग्निरग्नआज्यस्य वेत्विति याज्ञिक
द्देशेन सम्बुद्धिद्वितीयातृतीयाप्रथमानां विभक्तीनां प्रयाजेषु
द्धत्वाच्छान्दोग्यब्राह्मणे च षडहविभक्तिर्नानारूपेत्युपक्रम्याग
प्रथमस्याह्नोरूपमग्निमिति द्वितीयस्याग्निनेति तृतीयस्याग्नि
चतुर्थस्याग्नेरिति पञ्चमस्याग्नइति षष्ठस्येति परस्परविभक्त
द्धिद्वितीयातृतीयाप्रथमाषष्ठीसम्बुद्ध्याख्यविभक्तिप्रयोगदर्शनान्
त्याग्निर्वृत्राणीत्यादिषु विभक्तविभक्तिप्रयोगदर्शनात्प्रयोगदर्शन
ऽपि वा सिद्धशब्दानुक्रमाख्यवैभक्तिकग्रन्थमात्रालोचनेनापि
क्तिप्रयोगसिद्धेरित्यर्थः । यच्च यो वा इमां पदशः स्वरशो ऽक्ष
वाचं विदधाति स आर्त्विजीनो भवतीति श्रुतिमुपन्यस्यार्त्विज
स्यामेत्यध्येयं व्याकरणमिति भाष्येणार्त्विज्यार्हत्वं व्याकरणप्र
नमुक्तं तद्गुरुसम्प्रदायसिद्धत्वाद्व्याकरणप्रयोजनत्वं योग्यमे
भवतीत्याह * यो इमामिति * चत्वारि शृङ्गेत्यृचं महाभाष्य
पूर्वोपन्यस्तामपि मन्त्राधिकरणे ऽन्यविषयत्वेन व्याख्यातत्वा
क्ष्यापर आहेत्युपक्रम्य चत्वारि वाक्परिमिता पदानि तानि वि
ह्मणा ये मनीषिणः गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं
मनुष्या वदन्तीत्यृचमुपक्रम्य चत्वारि पदजातानि नामाख्यातोप
निपाताश्चेति भाष्येण ये ब्राह्मणास्तानि विदुस्ते मनीषिण
र्थाश्रयणेन पदचतुष्टयज्ञानसाध्यं मनीषित्वं व्याकरण

नमुक्तं तदस्या ऋचो ऽन्यपरत्वादप्रमाणकमित्याह * तथेति *
रुक्ते यान्योङ्कारो भूर्भुवः स्वरिति महाव्याहृतित्रयं वेति चतुष्टय-
दिशब्दाद्वेदचतुष्टयं मृगपक्षिसरीसृपमनुष्याः वाक्चतुष्टयमनपा
नी पश्यन्ती मध्यमा वैखरीति सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलरूपा-
शभेदभिन्नवाक्चतुष्टयमिति चतुष्टयबाहुल्यरूपप्रयोजनानुसारेण
वारि दजातानि प्रपञ्चितानि तत्र व्याकरणस्य व्यापार इत्यर्थः ।
स्य पदनिर्वचनसामर्थ्ये ऽपि तद्विषये सचार्यसंख्यामात्रसामा-
दुक्तं न प्रामाणिकमित्यर्थः । अप्यक्षरेति निरुक्ताकारवचनोपन्या-
सूचितं, ननु वैयाकरणाभिमतं नामादिचतुष्टयमपि निरुक्ते रुक्तं
चाकरणापेक्षं भविष्यतीत्याशङ्क्याह * यत्त्विति * परमार्थतस्तू-
ार्द्धर्चविरोधान्नैतद्विषयताप्यस्या ऋचः सम्भवतीत्याह * एत-
ायत्वे चेति कस्तर्ह्यस्या ऋचः पारमार्थिको ऽर्थः पूर्वापरार्द्धर्चा-
ोधीत्यपेक्षायामाह * तस्मादिति * अस्मिन् व्याख्याने वागिति २१
षष्ठ्यन्तत्वेन विपरिणमयितव्यं प्रवो देवायाग्नयइति शंसतीति
कविधिप्रभवमवयवान्तरानुमानं विश्वजिता यजेतेत्यत्राव्यक्त-
नात्वरूपप्राकृतवाक्यसारूप्यसम्भवं ज्योतिष्टोमवदिति पदोप-
। विधिप्रत्ययावगतफलव्यतिरेकेणानुपपद्यमानयागकर्त्तव्यत्वप्र-
। स्वर्गकामपदकल्पिकार्थापत्तिः दध्नेन्द्रियकामस्येत्यत्र सारू-
भावे ऽपि सन्निधानमात्रेणाग्निहोत्रवदिति पदोपमानसूचनाया-
ाब्दः ननु प्रमाणषट्कस्य प्रथमपादे व्युत्पादितत्वाच्चतुष्टुयं प्र-
ाानां न युक्तमित्याशङ्क्याह * षडिति * अपोद्धारे कारणमाह
ाभावस्तावदिति * न चैरं कृत्वोदूगेयमित्यागमाघ्नायश्चयिस्ये-
द्वत्त्वागतेरागमस्याप्यागमप्रामाण्यमस्तीत्याशङ्क्याह * प्रत्यक्षे-
* स्वरूपोपादानेनात्र प्रत्यक्षत्वसम्भवान्नागमगम्यतेत्याशयः ।
नामादिपदचतुष्टयविषयत्वे भाष्यकृता पूर्वं चत्वारि शृङ्गा
अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य त्रिधा बद्धो वृषभो
ीति महो देवो मर्त्यां आविवेशेतीयमृगुपन्यस्ता सा किमित्यपे-
त्याशङ्क्याह चत्वारीति * ननु भाष्यकृता चत्वारि शृङ्गेति च-
रे पदजातानि नामाख्यातोपसर्गनिपाताश्च त्रयो अस्य पादा भूत-
ष्यत्वर्त्तमाना द्वे शीर्षे शब्दात्मनौ नित्यः कार्यश्चेति सप्त हस्ता
ास्य सप्त विभक्तयः त्रिधा बद्धो वृषभो रोरवीति त्रिषु स्थानेषु
उरसि कण्ठे शिरसीति वृषभो वर्षणात् रोरवीति शब्दं करोति
देवो मर्त्या आविवेश महान्देवः शब्दः मर्त्यान्मरणधर्माणो मनु-
ाविवेशेति व्याख्याय महता देवेन नः साम्यं स्यादित्यध्येयं

व्याकरणमिति भाष्येण शब्दब्रह्मसाम्यं व्याकरणप्रयोजनमुक्तं । तत्रानुपपत्तिरित्याशङ्क्याह * यत्त्विति * विनियोगनिरपेक्षं मन्त्रार्थतात्पर्यावधारणमशक्यमित्याशयः । संख्यासामान्यमात्रेण विनियोगानिरपेक्षमन्त्रयोजनार्थं वैशेषिकादिष्वपि तन्त्रेषु योजयितुं शक्यत्वादव्यवस्था स्यादित्याह * तादृशं चेति * पार्थिवाप्यतैजसवायवीयान्यवयविद्रव्याणि चत्वारि शृङ्गाणि त्रयो अस्य लोकाः पादा महत् कार्यारम्भकाणि द्व्यणुकानि द्वे शीर्षे प्रधानाप्रधानपुरुषौ सप्त हस्ता द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यषड्भावरूपाः सप्तमश्चाभावः त्रिधा बद्धः । समवाय्यसमवायिनिमित्तकारणैर्बद्धः । वृषभो भोगहेतुः रोरवीति शब्दयत्यसहो देवो द्योतनात् मर्त्यानाविवेश मर्त्यैर्भोग्य इत्येवमादियोजनोपपत्तेरतिप्रसक्तिः स्यादित्याशयः । यच्च भाष्यकृतोत उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् । उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासा इत्यृचमुपन्यस्याप्येकः पश्यन्नपि न पश्यति शृण्वन्नपि न शृणोत्येनामिति पूर्वार्द्धेनमविद्वांसमाहार्धमिति भाष्येणाविद्वांसमर्धं पूर्वार्द्धं वा वदतीत्यभिधानाद्वेदार्थविद्विषयत्वेन व्याख्यायोतो त्वस्मै तन्वं विसस्रे तनुं विवृणुते जायेव पत्य उशती सुवासाः तद्यथजाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते एवं वाग्वाग्विदे स्वमात्मानं विवृणुतइत्युत्तरार्द्धं व्याख्याय वाङ् नो विवृणुयादित्यध्येयं व्याकरणमिति भाष्येण वाक्प्रकाशनं व्याकरणप्रयोजनमुक्तं तदन्यतः सिद्धेः प्रयोजनाभासमित्याह * उतत्व इति * यत्तु भाष्यकृता सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचीत्यृचमुपन्यस्य सक्तुः सचतेर्दुर्धावो भवति कसतेर्वा विपरीताद्विकसितो भवतीति तितउ परिपवनं ततवद्वा तुन्नवद्वा धीरा ध्यानवन्तः मनसा प्रज्ञानेन वाचमकृषत अत्र सखायः सन्तः सख्यानि जानते क्व एष दुर्गो मार्गः एकगम्यो वाग्विषयः के पुनस्ते वैयाकरणाः कुत एतत् भद्रैषां लक्ष्मीर्निहिताधिवाचि भद्रा ह्येषां लक्ष्मीर्निहिता भवति क्व अधिवाचि लक्ष्मीर्लक्षणाल्लाञ्छनाद्वा परिवृढा भवतीति व्याख्यानेन लक्ष्मीनिधानं व्याकरणप्रयोजनमुक्तं तद्गुरुसम्प्रदायसिद्धत्वात् व्याकरणप्रयोजनत्वयोग्यं न भवतीत्याह * एवमिति * यच्च सारस्वतीमित्युपक्रम्य याज्ञिकाः पठन्त्याहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदिति श्रुतिमुपन्यस्य प्रायश्चित्तीया मा

मित्यध्येयं व्याकरणमिति भाष्येण प्रायश्चित्ताभाजनत्वं व्याकरण-
योजनमुक्तं तदपि वैदिकशब्दविनाशविषयत्वात् व्याकरणप्रयो-
नत्वयोग्यं न भवतीत्याह * आहिताग्निरिति * यच्च दशम्यां
त्रस्येत्युपक्रम्य याज्ञिकाः पठन्ति दशम्युत्तरकालं पुत्रस्य जातस्य
ता नाम विदध्यात् घोषवदाद्यन्तरस्थमवृद्धं त्रिपुरुषानूकमनरि
तिष्ठितं तद्धि सुप्रतिष्ठिततमं भवति द्व्यक्षरं चतुरक्षरं वा कृतं कु-
न्न तद्धितमिति न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या
ज्ञातुमिति भाष्येण पुत्रनामज्ञानं व्याकरणप्रयोजनमुक्तं तदन्यतः
द्धेः प्रयोजनाभासमित्याह * यदपीति * घोषवन्तो वर्गतृ-
याद्या वर्णा आदौ यस्य नाम्नस्तद्घोषवदादि अन्तस्था यरलवा अ-
न्मध्ये यस्य तदन्तरं तस्य घोषवदादेरन्तरस्थस्य द्विचतुरादिवर्णस्य
न्तस्य नाम्नः परिग्रहस्तद्धितस्य वर्जनं वा तयोर्यन्नामकरणे व-
नं तत्र न व्याकरणं नामप्रयोगोत्पत्तिशास्त्रत्वेनापेक्षणीयमिति
कृत्तद्धितसञ्ज्ञयोरिति तदित्यव्ययं लुप्तसप्तमीकमङ्गीकृत्य योज्यं
पपादनार्थं कृत्तद्धितसञ्ज्ञयोरित्याद्युक्तम् । यच्च भाष्यकृता
वो असि वरुण यस्य ते सप्तसिन्धवः । अनुक्षरन्ति काकुदं सू-
सुषिरामिवेत्यृचमुपन्यस्य सुदेवो असि वरुणसत्यदेवो यस्य ते
सिन्धवः सप्तविभक्तयः अनुक्षरन्ति काकुदं तालु, काकुर्जिह्वा-
स्मिन्नुद्यतइति काकुदं सूर्म्यं सुषिरामिव तद्यथा सूर्म्यं सुषिरा-
नरनुप्रविश्य तदन्तर्गतं मलमपहन्ति एवं सप्तसिन्धवः तालवनु-
न्ति तेनासि सत्यदेव इति व्याख्याय सत्यदेवाः स्यामेत्यध्येयं
करणमिति भाष्येण सत्यदेवत्वप्राप्तिर्व्याकरणप्रयोजनमुक्तं त-
था ऋचः सङ्ख्यासामान्यमात्रेण विभक्तिविषयत्वमभ्युपगम्या-
यतः सिद्धत्वान्नातीव व्याकरणापेक्षेति तावदाह * सुदेव इति* २१६
ार्थतस्तु सिन्धुशब्दस्य नदीवाचित्वेन प्रसिद्धत्वान्नद्य एवात्र
विवक्षिताः । अथापि वरुणशब्देन यज्ञमृत्विजं यजमानं वा
प्रेत्य तत्प्रशंसापरेयमृगिष्यते तथापि होत्रीयाप्रशास्त्रीयाब्राह्म-
णंसीयापोत्रीयानेष्ट्रीयाच्छावाकीयाग्नीध्रीयाख्यहोत्रागताः स-
वः षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादाख्यसामस्वरगता
प्रस्तावप्रणवोद्गीथहिङ्कारप्रतिहारोपद्रवनिधनाख्यसामभक्तिगता
चः सप्तेत्यन्यपरत्वात् व्याकरणप्रयोजनत्वं निष्प्रमाणकमित्याह
यदा पुनरिति * नदीनामैतिहासिकगोचरापन्नत्वादितरासां
कगोचरापन्नत्वादित्यर्थः । एवं महाभाष्योक्तमुख्यानुष-
प्रयोजननिराकरणेन न चाश्रितप्रतिपदपाठानां वैदिकानां

लक्षणेन कार्यमित्यादिग्रन्थोक्ते व्याकरणस्य निष्प्रयोजनत्वे समर्थिते यदि कश्चित्तस्माद्व्याकृता वागुद्यतइति श्रुतिपर्यालोचनेन व्याकरणासंस्कृतानां शब्दानामदृष्टसाधनत्वलक्षणसाधुत्वावगमात्साधुत्वसिद्धिर्व्याकरणप्रयोजनं वदेत्तं प्रत्याह * संस्कृतानां चेति * श्लोकं व्याचष्टे * व्याकरणेनेति * शब्दत्ववर्णत्वतद्व्यक्तितत्समुदायावयविस्फोटगोशब्दत्वक्रमग्रहणोच्चारणतत्साधनपुरुषाणां मध्ये किं वास्त्विति कस्येत्यस्य व्याख्या । उत्पत्त्यादीनां चतुर्णां मध्ये कः संस्कार इति को वेत्यस्य शब्दत्ववर्णत्वजातिव्यक्तिपक्षेषु तावद्दोषमाह * न तावदिति*जातिपक्षे तावदुभयत्र प्रसङ्गं विवृणोति * शब्दत्वइति * वर्णव्यक्तीनां तु संस्कारः प्रत्येकं वा स्यात्समुदितानां वा तत्र प्रत्येकपक्षे ऽतिप्रसङ्गं विवृणोति * एतेनेति * समुदायाभावात् समुदितानामपि संस्कारो न भवतीत्याह * समुदायस्त्विति* किं च नित्यानां वर्णव्यक्तीनां संस्कारः स्यादनित्यानां वा । तत्रानित्यपक्षे तावद्विनष्टानुत्पन्नानामसंस्कार्यत्वादुत्पन्नानामपि संस्कारक्षणं यावदनवस्थानान्न संस्कारः सम्भवतीत्याह *येषां तावदिति * संस्कारक्षणं यावदवस्थानाभ्युपगमे ऽपि व्यवहारकाले विनष्टत्वेन कार्यानुपयोगित्वात्संस्कारो न तु युक्त इत्याह * न चेति * एतदेव विवृणोति * यथैवेति * ननु भाष्यकृता किं नार्नित्यः शब्दः आहो स्वित्कार्य इति पृष्ट्वा सङ्ग्रहएतत्प्राधान्येन परीक्ष्यते नित्यो वा स्यात्कार्यो वेति भाष्येण सङ्ग्रहाख्ये वार्त्तिककारकृते ग्रन्थान्तरे तात्पर्येणैतद्विचार्यते नात्र तेन विचारेण प्रयोजनमित्युत्तरे दत्ते कथं तर्ह्यत्र लक्षणप्रवृत्तिरित्याशङ्क्य यद्यपि नित्यो ऽथापि कार्य उभयथापि लक्षणं प्रवर्त्यमित्युक्त्वा कथमनित्यपक्षे संस्कारोपपत्तिरित्याशङ्क्याह * ततश्चेति * अत्यन्तविरुद्धत्वाच्च नित्यानित्यत्वयोरानियमाभिधानं न युक्तमित्याह * अदूरेति * कार्यत्वे शब्दस्योत्पत्तिलक्षणः संस्कारः स्यात्तत्र च नित्यस्य वेदस्यानित्यद्व्युत्पत्तिविषयत्वायोगेन व्याकरणस्य वेदमूलत्वासम्भवादनिशब्दोपयुक्तत्वेन च नित्यवेदाङ्गत्वाभावादुभयविधमपि शास्त्रत्वं येतेत्याह * उत्पादश्चैवेति * श्लोकं व्याचष्टे * व्याकरणेति * ोत्पादकत्वेन तु व्याकरणस्य वेदाङ्गत्वे वेदो ऽप्यप्रमाणं स्यादिह * अथेति * कार्यत्वे च शब्दस्य संस्कारो ऽशक्यो ऽनर्थकश्चेदोषद्वयं पूर्वोक्तमप्यनियमनिरासायाह * शब्दश्चेति * नित्यत्वे शब्दस्य विक्रियाख्यो ऽपि शब्दादुत्पत्त्याख्यश्च तावत्संस्कारो न भवतीत्याह * तस्मादिति * न च ज्ञानरूपप्राप्तिलक्षणः सं-

कारः शब्दस्य व्याकरणेन क्रियते श्रोत्रजन्मत्वात्तस्येत्याह * वि-
ति * अविहितत्वाच्च व्याकरणस्य नापूर्वसाधनसामर्थ्याधानल-
णसंस्कारार्थता युक्तेत्याह * अदृष्टार्थस्त्विति * शब्दानां च
ष्टार्थत्वेनापूर्वसाधनत्वाभावाच्च तत्सामर्थ्याधानलक्षणेन संस्का-
ण प्रयोजनमस्तीत्याह * दृष्टार्थेषु चेति * ननु लोकव्यवहारा-
नां शब्दानां दृष्टार्थत्वात्संस्कार्यत्वायोगे ऽपि क्रत्वर्थानां व्रीहि-
वन्नियमापूर्वार्थत्वात् संस्कार्यत्वं भविष्यतीत्याशङ्क्याह * धर्मे-
ण * किं च व्याकरणक्रियायाः पौरुषेयग्रन्थाधीनत्वे ऽनादिविधिवि-
यतैव न युज्यते प्रकरणाम्नानं दूरनिरस्तमित्याह * हन्त्यादीति *
नु तस्मादेषा व्याकृता वागुद्यतइत्यनारभ्याधीतः प्रत्यक्षो विधिः
थमपह्नूयतइत्याशङ्क्याह * तेनेति * नित्यानित्यसंयोगविरोध-
सङ्गान्नास्यैतत्परतास्तीति प्रागेवोक्तमित्याशयः । व्याकरणक्रियाया-
ध्येयत्वाभ्युपगमे ऽपि प्रकरणाभावेन क्रत्वर्थत्वाभावाच्च क्रत्वर्थश-
संस्कारत्वं युक्तमित्याह * अनारभ्येति * नन्वनारभ्याधीत-
ापि खादिरादेर्दर्शपूर्णमासार्थतादृष्टेत्याशङ्क्याह * ऐकान्तिकं
ति * ननु यथाफलकल्पनालाघवायाश्वप्रतिग्रहेष्टौ वैदिकाश्वदा-
विषयत्वं तृतीये वक्ष्यते तथेहापि वैदिकशब्दविषयत्वं व्याकरण-
क्रियाया भविष्यतीत्याशङ्क्याह * लोकेति * लौकिकवैदिकशब्दानां
दस्य निराकरिष्यमाणत्वाच्च संस्कार्यासंस्कार्यव्यवस्था युक्तेत्याश-
: । उपसंहरति * अत इति * किं च श्रोत्रोपलब्धिबुद्धिनिर्ग्राह्यः
योगेणाभिज्वलितः आकाशदेशः शब्द इति वदद्भिर्वैयाकरणैः शब्द-
ाकाशाश्रितत्वाभ्युपगमान्नित्याश्च शब्दा इति च नित्यत्वा-
युपगमादमूर्तत्वाच्चाकाशाश्रितविभुत्वदृष्टान्तेन संस्कार्यत्वं वा-
णीयमित्याह * आकाश इति * विभुत्वस्य ज्ञान-
षयत्वलक्षणप्राप्तिसम्भवे ऽपि गां दोग्धीत्यादौ स्वरूपप्राप्तेः सं-
कारत्वेन प्रसिद्धायाः वारणीयत्वेनानिष्टत्वाच्च साध्यविकलत्वम्।अ-
इउणित्यादिचतुर्दशसूत्रात्मकताणादिसंघातात्मकप्रत्याहारमात्रेण वर्णा-
र्थिकसंस्कारासिद्धेः शेषग्रन्थानर्थक्यं स्यादित्याह * वर्णेति *
ातिव्यक्तिसंस्कारपक्षौ दूषयित्वा समुदायसंस्कारपक्षं दूषय-
। * समुदायस्त्विति * नन्वनेकेषां गकारौकारविसर्जनीयानामे- २
गोशब्दबुद्धिविषयत्वलक्षणः समुदायो लोकसिद्धत्वान्नापह्नवम-
तीत्याशङ्क्याह * प्रत्येकं चेति * यथा नवमे हिरण्यशकलसहस्रे
ाग्निं प्रोक्षतीत्यग्निबुद्धिविषयभूतानामिष्टकानां धर्मः प्रोक्षणादिः
ेष्टकमात्रवर्तनीय इति पूर्वपक्षे वक्ष्यते तथात्रापि गकारादिवर्णा-

समुदायसंस्कारपक्षे प्रतिवर्णं संस्कारावृत्तिः प्रसज्येतेत्यर्थः । पूर्वपक्षस्थायित्वाच्च दृष्टान्तता युक्तेत्याशङ्क्याह * न च * अयमाशयः इष्टकाव्यतिरिक्तावयव्यभावेनाग्निशब्दस्येष्टकासमुदायमात्रवाचित्वात्समुदायसंस्कारत्वाभ्युपगमेन पूर्वपक्षिते । व्यस्यावयविनो ऽग्निशब्दवाच्यस्येष्टकाभिरारम्भोपपादनेन संयद्र्व्यैक्यात्संस्कारानावृत्तिरिति पूर्वपक्षन्यायानुपमर्दनसिद्धारणाद् युक्तं दृष्टान्तत्वं,न चात्र गकारादिभिःएको गोशब्दो ऽवयरभ्यते येनाग्निधर्मसिद्धान्तन्यायो न स्यात् ।

विच्छिन्नयत्नव्यङ्ग्यैश्च नित्यैः सर्वगतैरपि ।
व्यतिरिक्तपदारम्भो वर्णैर्नाञ्रोपपद्यते ॥

इति श्लोकेन स्फोटवादे निराकृतत्वादिति स्फोटगोशब्दादीनामप्यवयविवन्निराकृतत्वाच्च संस्कार्यत्वं सम्भवतीत्याह * इति * समुदायसंस्कारपक्षे च सर्ववर्णसमुदायो वा संस्क्रियेत कतिवर्णसमुदायो वा तत्राद्ये पक्षे सर्ववर्णसमुदायस्यार्थाभावादर्थके शब्दप्रयोगे शास्त्रेण धर्मनियम इति वार्त्तिकमयुक्तं स्यादित्य सर्वेति * कतिपयवर्णसंस्कारपक्षे ऽपि केचिदेव वर्णाः । संस्क्रियन्त इति व्यवस्थाहेत्वभावेन स्वरूपतः कतिपयत्वायोगात्कतिपयं संस्क्रियन्त इति संख्यातः कतिपयत्वं वाच्यं, तत्र संख्या विवर्णानामसंस्कार्यत्वेनान्वयव्यतिरेकाभ्यां वर्णसंख्यायाः संस्कारे साधुत्वं स्यात्सा च गाव्यादिपदेषु अपि समानमित्याह * अर्थो गवादिपदगतैव वर्णसंख्या संस्कार्या न गाव्यादिपदगतेति व्यः शङ्कानिरासार्थम् * पदेपद इत्युक्तम् * क्रमसंस्कारपक्षं दूषयति संस्क्रियेतेति * शब्दधर्मत्वाभावेन तत्संस्कारे ऽपि शब्दस्य त्वं न सिध्यतीत्युक्तं ग्रहणोच्चारणद्वारोपचारिकशब्दधर्मत्वाभ्युपगमे ऽपि गाव्यादिष्वप्यानुपूर्व्याः सम्भवात्साधुत्वं प्रसज्येतेत्यर्थः ग्रहणोच्चारणसंस्कारपक्षौ दूषयति * ग्रहणेति * कोपरिष्टादिक्षायामाह * वक्ष्यति हीति * यथाभिक्रामं जुहोतीत्यभिक्रमहोमसाधनत्वासम्भवो ऽभिक्रमाधिकरणपूर्वपक्षे वक्ष्यते । तथा णमुच्चारणं वा प्रतिव्याकरणक्रियायाः साधनत्वं न भवतीत्यर्थ ननु साक्षात्साधनत्वाभावे ऽपि यथाभिक्रमणस्य कर्तृप्रत्यासत्तिनद्वारा होमसाधनत्वं सिद्धान्ते वक्ष्यते तथोच्चारणसाधनतादिसंस्कारद्वारोच्चारणसाधनत्वं ग्रहणसाधनश्रोत्रसंस्कारद्वार ग्रहणसाधनत्वं व्याक्रियाया भविष्यतीत्याशङ्क्याह * साक्षति * अस्तु तर्ह्युच्चारयितुः पुरुषस्य संस्कारद्वारा त

संस्कारद्वारा वोच्चारणसाधनत्वं ग्रहीतृपुरुषसंस्कारद्वारा तन्मनः संस्कारद्वारा वा ग्रहणसाधनत्वमिति स्वयमेवाशङ्क्याह *मनोवेति* यच्छास्त्रारम्भे भाष्यकृता ऽथ शब्दानुशासनमित्युक्त्वा अथेत्ययं शब्दो ऽधिकारार्थः प्रयुज्यते शब्दानुशासनं शास्त्रमधिकृतं वेदितव्यमिति स्वयमेव व्याख्यातं तद्व्यर्थं स्यादित्यर्थः । इतश्च शब्दानुशासनं व्यर्थमित्याह * शिष्येति * किं च वैयाकरणैः स्फोटात्मकः शब्दो ऽभ्युपगतः तस्य च निरवयवत्वात्प्रकृतिप्रत्ययान्वाख्यानरूपः संस्कारो न युक्त इत्याह * स्फोटेति * स्फोटपक्षे न केवलं वर्णा एवासन्तः किं तु प्रकृतिप्रत्ययावपीत्यर्थः वाक्यस्फोटापेक्षायां च स्वरूपेणापि पदस्फोटस्यासत्त्वात्संस्कार्यत्वं न युक्तमित्याह * वाक्येति * नन्वसतामेव नामादीनां निष्कृष्य कल्पनया संस्कारो भविष्यतीत्याशङ्क्याह * अपोद्धारेणेति * कल्पनाप्यसतो न सम्भवतीत्याशयः । ननु निरवयवो ऽपि पदस्फोटस्तत्तद्ध्वनिसहकृतश्रोत्रवशात्पूर्वं गकारादिरूपेण प्रतीयते ततस्तदाकारमिथ्याज्ञानसहकृतेन श्रोत्रेण गौरित्येकं पदमिति स्फुटं पदतत्त्वज्ञानं जन्यते रत्नतत्त्वपरीक्षायामिवानेकमिथ्याज्ञानसहकृतेन चक्षुषा स्फुटारत्नतत्त्वप्रतीति एवं वाक्यस्फोटो ऽपि पूर्वं गोपदाकारेण शुक्लपदाकारेण च प्रतीयते ततः पदाकारमिथ्याज्ञानसहकृतेन श्रोत्रेण गौः शुक्ल इत्येकं वाक्यमिति स्वरूपेण वाक्यस्फोटः प्रतीयते । ततश्च ध्वनयो यत्स्थानकरणवशादेकस्मिन्पदस्फोटे वाक्यस्फोटे वा यद्वर्णाकारं यत्पदाकारं वा ज्ञानं जनयन्ति पदवाक्यस्फोटान्तरे ऽपि तत्स्थानकरणवशात्तद्वर्णाकारं तत्पदाकारं वा ज्ञानं जनयन्तः सादृश्यनिमित्तभ्रान्तिवशात्स एवायं वर्णस्तदेवेदं पदमिति प्रत्यभिज्ञानं जनयन्तीत्यन्योन्यविलक्षणेषु गौः शुक्लो गौः कृष्ण इत्यादिषु सादृश्याध्यवसितैकत्वानां नामादीनामपोद्धारो भविष्यतीत्याशङ्क्याह * अन्येति * अन्यस्य वाक्यस्फोटस्यावयवानामन्यस्य वाक्यस्फोटस्यावयवैः सारूप्यादित्यर्थः । सादृश्यमप्यसतो न सम्भवतीत्याशयः । ननु ।

गवये नरसिंहे वाप्येकज्ञानादृते यथा ।
भागं जात्यन्तरस्यैव सदृशं प्रतिपद्यते ॥

इत्यादिस्फोटवादिभिरसतामप्यवयवानां सादृश्यसम्भवे निदर्शनमुक्तं तत्कथमसत्त्वे सादृश्यानुपपत्तिरित्याशङ्क्याह * गवयादिष्विति* लेख्यादिकृतेषु गवयादिषु ये ऽवयवास्तेषां मुख्यगवयादिगतैः कर्णखुरादिभिरवयवैः सारूप्यं यन्निदर्शितं तत्तेषां सत्त्व

रस्वावयवसामान्ययोगाच्चोपपन्नं तथा इहापि वाक्यस्फोटे तथात्
ऽवयवानां सत्यत्वे स्वावयवसामान्ययोगे च सति सारूप्यं स्यात्
ततश्च निरवयवस्फोटसिद्धान्तहानिरित्याशयः । विस्तरेण चैत
त्पूर्वं निरस्तमित्याह * वाक्येति * उपसंहरति * तेनेति * ना
मादीनामपोद्धारेण प्रकृतिप्रत्ययान्वाख्यानरूपस्य संस्कारस्य कल्प
नेत्यर्थः । अप्रामाण्यापत्तेश्चासतामपोद्धारो न युक्त इत्याह * अ
न्वाचक्षीतेति * यच्च शब्दानुशासकत्वेन शास्त्रत्वं व्याकरणस्यो-
क्तं तत्पदविषयं वा स्याद्वाक्यविषयं वा तत्रासत्यत्वेन पदानामनु-
शास्यत्वाद्वाक्यानुशासनस्य च व्याकरणेनाकृतत्वान्नोभयथापि यु-
क्तमित्याह * अशिष्यत्वादिति * युक्तं तु वाक्यस्यैवानुशासनं लो-
कतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्म्मनियम इति वार्त्तिककृता-
र्थप्रयुक्तानां शब्दानामनुशास्यत्वाभिधानाद्वाक्यस्यैव चार्थप्रयुक्तत्वे-
नेष्टत्वादित्याह * अर्थेनेति * ननु सूत्रकारादिभिः पदपदार्थाना-
मनिराकरणात्कथमुच्यते वाक्यमेवंविधं चेष्टमित्याशङ्क्य टीकाकृतै-
वमुक्तमिति दर्शयितुमाह * ब्राह्मणार्थ इति * यथा ब्राह्मणशब्दे
ब्रह्मशब्दार्थो नञर्थश्च णकारार्थ एव वा ज्ञानाख्योऽनिरुपाख्यश्च नास्ति
कम्बलशब्दे च कंशब्दार्थो बलशब्दार्थो वा नास्ति तथा देवदत्तादयः
शब्दा वाक्ये ऽनर्थकाः स्युरिति टीकाकारश्लोकार्थः । एवमादिना
ग्रन्थेन बहुप्रपञ्चमुक्त्वा पदानामर्थव्यभिचाराभिधानादव्यभिचारि-
णामपि केवलाप्रयोगित्वेनार्थपरत्वनिराकरणाद्वाक्यान्वाख्यानार्थत्वे-
न व्याकरणव्याचिख्यासा टीकाकाराणामवसीयते पश्चात्तु तदनाश्रय-
णात्पूर्वापरविरुद्धार्थाभिधानेनाप्रामाण्यं व्याकरणस्य सूचितं भव-
तीत्यर्थः । सूत्रकृतो जनिकर्त्तुरित्यादिनिषिद्धमासकरणात्पूर्वापरवि-
रुद्धाभिधानं दृष्टान्तितं सन्ति यदृच्छाशब्दा न सन्तीत्यादिवार्त्तिक-
कृतः । आकृतिर्नित्या द्रव्यमनित्यं द्रव्यं नित्यमाकृतिरनित्येत्यादि-
भाष्यकृतः । सूत्रकारादिवदेव वाक्यान्वाख्यानानाश्रयणादिति वा
योज्यम् । पूर्वपक्षमुपसंहरति * अत इति * आचार्याणां पर-
स्परं विप्रतिपत्तेर्विगानभूयिष्ठत्वं स्वयमेव पूर्वापरविरुद्धाभिधानात्
विरुद्धत्वम् । एकानेकमूलश्रुतिकल्पनायोगान्निर्मूलत्वम् । मुख्यामु-
ख्यप्रयोजनासम्भवान्निष्फलत्वं सर्वभाषितव्यमिति भाष्यात्कर्मस्वा-
ध्यायकालवैदिकशब्दप्रयोगेष्वव्यवस्थाशङ्का कस्य चित्स्यात्तन्निवृत्त्यर्थ-
माह * ततश्चेति * यस्तूपपादितमर्थं तार्किकत्वाभिमानी साध-
नप्रयोगमन्तरेण न बुध्यसे तं प्रति साधनप्रयोगा वक्ष्यन्त इत्याह
* अत्रेति * सर्वेषामर्थप्रत्यायनशक्तत्वलक्षणे वाचकत्वे तावत्प्र-

ोगमाह * गावीति * गौणलाक्षणिकानामादिशब्दोपादानाशङ्का-
नवृत्त्यर्थं प्रकृतग्राहीसर्वशब्दः गोणिशब्दस्यावपनवाचित्वात्सिद्ध-
ाध्यतामाशङ्क्य * गोत्वस्येत्युक्तम् * उस्रादिशब्दैरनैकान्तिकत्वं
त्र शब्देन निरस्तं गाव्यादिशब्दैर्वृद्धशब्देन अर्थप्रत्यायनाङ्गत्वलक्षणे
ाधुत्वे प्रयोगमाह * एवमिति * अत्रापि गोणीशब्दे सिद्धसा-
तापरिहारार्थं गोत्वे साधुत्वमिति विशेषणीयं साधनशब्दोक्तस्य
्यायकत्वस्य गाव्यादिशब्दैरनैकान्तिकत्वमाशङ्क्यार्थस्यैव साधना-
ति मध्यमपदलोपिसमासाभ्युपगमेन मूलशब्दोपस्थापननिरपेक्षा-
प्रत्यायकत्वरूपहेतुसूचनार्थो ऽर्थशब्दः । अपभ्रंशरूपापशब्दत्वा-
गाच्छब्दत्वाभावरूपमपशब्दत्वं गाव्यादीनां वाच्यमित्यापाद्य त-
राकरणे प्रयोगमाह * अनित्वादिति * अत्रापि प्रयोगद्वये दृ-
न्तः स एवेत्याह * पूर्वेति * अनादित्वे प्रयोगमाह * अना-
त्वं चेति * अवध्यनवधारणस्य चिरन्तनकूपादिभिरनैकान्तिक-
ादवध्यभावावधारणादिति हेत्वर्थः । तत्सिद्ध्यर्थम् * वक्तुरि-
ुक्तम् * गवादिशब्दसम्बन्धे सर्वो ऽन्यस्मात्प्रपद्यते । महत्तद्व्यव-
रित्वादिति सम्बन्धानादित्वन्यायेन सर्वेभ्यो वक्तृभ्यः पूर्वं वि-
मानत्वादित्यर्थः । साधुभाषणस्यादृष्टार्थत्वात्प्रयोगमाह * सा-
भिरिति * अत्रैव साध्ये हेतुदृष्टान्तान्तरमाह * अशास्त्रेति *
द्रोक्तैश्च शब्दैरर्थाभिधानवदित्यर्थः । हेतुसिद्ध्यर्थं संस्कृतव्याक-
ास्याशास्त्रत्वे प्रयोगमाह * शास्त्रं नेति * संस्कृतव्याकरणत्व-
त्यध्याहारः । साक्षाच्छास्त्रत्वाभावे ऽपि वेदमूलतया प्रामाण्या-
द्विहितस्य साधुभाषणस्याष्टकादिवददृष्टार्थत्वं भविष्यतीत्याशङ्क्य
दभावे प्रयोगमाह * वेदेति * वेदाङ्गत्वाभावे प्रयोगमाह
शास्त्राङ्गमपीति * हेतुसिद्ध्यर्थमतादर्थ्ये प्रयोगमाह * अता-
र्थ्यमिति * कथादिरेव दृष्टान्तः वेदानङ्गत्वे ऽपि शब्दप्रयोगाङ्ग-
त्प्रयोगोत्पत्तिशास्त्रत्वं भविष्यतीत्याशङ्क्य तदभावे प्रयोगमाह
न चेति * एतदेव व्याचष्टे * यथा हीति * अशास्त्रत्वादि-
ाधनस्य पूर्वपक्षोपयोगमाह * तस्मादिति * यदाचारेणैषां प्र- २८
ज्यत्वमवगतं न तच्छास्त्रस्थैर्वारितमित्यर्थः ।

शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २२ ॥

अत्र भाष्यं कृता महता प्रयत्नेनेत्यादिना सूत्रं व्याख्यायते
अपराधादित्यादिना * गाव्यादिशब्देष्वपराधसम्भावनामात्रे सू-
त्र तात्पर्यमुक्तं तत्सम्भावनामात्रेण सिद्धान्तासिद्धेरयुक्तमाश-

ङ्क्य नेदं सिद्धान्तसूत्रं किं तु पूर्वपक्षदूषणार्थमित्याह * अ
न्तिकता तावदिति * निर्णयवचनादेकान्तशब्दात्तस्मै प्रभवति
न्तापादिभ्य इति ठक्प्रत्यये कृते ऽनैकान्तिकशब्दव्युत्पत्तेरनिर्णा
त्वमनैकान्तिकता एवं न कस्य चिच्छब्दस्य वाचकत्वं स्यादित्य
ङ्क्याह * वाचकत्वादिति * परपक्षसन्देहापादनस्य स्वपक्षनिर्ण
नुपयोगित्वादानर्थक्यमाशङ्क्याह * संशयेति * एतदेव व्या
* इहेति * पूर्ववाचकत्वानिश्चयार्थत्वेनैतत्सूत्रं व्याख्यातमिद
मनादित्वानिश्चयार्थत्वेन व्याचष्टे * अथ वेति * श्लोकं व्याच
यदि हीति * ननु विविधाँश्शब्दानभिव्यनक्तीति भाष्येण कस
सौत्रो निष्पत्तिशब्दो ऽभिव्यक्त्यर्थत्वेन व्याख्यात इत्याशङ्क्य
ब्दाधिकरणे शब्दोत्पत्तेर्निषिद्धत्वादित्याह * प्रयत्नेति * यथाभ
द्धेधा सूत्रं व्याख्याय स्वयमकारप्रश्लेषेणाप्रयत्नेनापि निष्पत्तेरिति
ध्यमपदलोपिसमासाङ्गीकरणेन तावदन्यथा व्याचष्टे * अ
२२३।१ इति * विधानशब्दः प्रकारवचनः निष्पत्तिशब्दस्य चोत्पत्त्यर्थ
षष्ठ्यन्तत्वेन च प्रयत्नस्य निष्पत्तेरिति च षष्ठीसमासाश्रयणेनैत
त्रं व्याख्येयमित्याह * अथ वेति * अपराधव्यतिरेकजनितेयं ष
ति प्रकटयितुं तस्यामिति सप्तमी । ननु प्रयत्ननिष्पत्तेरपराधभा
शब्दस्य किमायातमित्याशङ्क्य तद्गतस्यापराधस्य शब्दे सञ्चारप्रति
दनार्थत्वेन शब्द इति सूत्रावयवं व्याचष्टे * यश्चेति * यद्वै
पलक्षणाभावात्साध्वसाधूनां विधिनिषेधविषयत्वासम्भवाभिप्रा
साधुभिर्भाषितासाधुभिर्नेति प्रयोगोत्पत्तेरुच्चारणानियमस्याशास्त्री
त्वादिति यो हेतुरुक्तः तस्यासिद्धत्वप्रतिपादनार्थमेतत्सूत्रमित्यन्य
व्याख्यातं साध्वसाधुत्वव्यवस्थां तावदाह * अतश्चेति *

ग्रस्तं निरस्तं निहतावलम्बिते अम्बूकृतं ध्मातमथो विकम्पितम्
संदष्टमेणीकृतमर्द्धकं द्रुतं विकीर्णमेताः स्वरदोषभावनाः

इत्यादिस्मृत्यवगतग्रस्तत्वादिदोषवर्जितनियतह्रस्वादिकाला
व्यङ्ग्ययथालाक्षितक्रमग्राह्येषु वर्णेष्वभियुक्तो साधुशब्दप्रयोगात्
द्विपरीतेषु चासाधुशब्दप्रयोगादवश्यं तदालम्बनं किं चित् व्यवस्थि
वक्तव्यं तत्र चानित्यस्तु स्याद्दर्शनस्य परार्थत्वादिति सूत्रे साधुत्वे
नाभिमतानां नित्यानां शब्दानामर्थप्रत्यायनाङ्गत्वस्योक्तत्वात्तस्य
फलवद्व्यवहाराङ्गभूतार्थप्रत्ययाङ्गता निष्फलत्वेन शब्दस्य योग्यत्व
दवसीयतइति वार्त्तिकेनोपपादितत्वादर्थप्रत्यायनाङ्गत्वं साधुत्वमव
गम्यते । तच्च वाचकवृत्त्या लक्षणावृत्त्या गौणीवृत्त्या चेति त्रिविधम् । ग
व्यादिशब्दानां मुख्यार्थान्तराभावाद्गौणलाक्षणिकत्वे तावदनाशङ्क्ये

। वाचकशक्तिकल्पनं त्वन्यथाप्युपपत्तेर्निषिद्धं न च प्रा न्त-
ण शब्दस्यार्थप्रत्ययाङ्गत्वं सम्भवतीत्यव्याप्त्यतिव्याप्त्यभावादेतदे-
साधुत्वलक्षणं युक्तं तथानपभ्रष्टेष्वेव शब्देषु नापभ्रष्टेष्वित्यनपभ्रं-
।पभ्रंशकृता साध्वसाधुव्यवस्था सेत्स्यतीत्यर्थः । इयं चानपभ्रष्टेष्वेव
(वर्णादिषु व्यवहाराङ्गत्वलक्षणं साधुत्वं नापभ्रष्टेषु कूटेष्वित्या-
* लोकेऽपि चेति * इदमेव वानपभ्रष्टत्वं साधुत्वमपभ्रष्टत्वं
।साधुत्वं तयोश्च सम्यक्त्वासम्यक्त्ववाचिभ्यां सत्यासत्यशब्दाभ्यां
कर्तुं शक्यत्वात्सत्यं वदेदनृतं न वदेदिति विधिनिषेधविषयत्वोप-
त्तेधर्माधर्मोपयोगोऽस्तीत्यन्यथा साध्वसाधुव्यवस्थामाह * यद्वे-
। * एतदेव विवृणोति * धर्मेति * नन्वर्थतथात्वातथात्व-
।षयत्वादनयोर्विधिनिषेधयोर्न शब्दतथात्वातथात्वविषयता युक्ते-
।शङ्क्याह * अर्थसत्यमिति * एतच्चार्थे सत्यासत्यत्वयोः स-
।सत्स्वरूपत्वाच्छब्दे चानपभ्रष्टापभ्रष्टरूपत्वात्सकृच्छ्रुतयोश्च स-
।नृतशब्दयोरुभयपरत्वायोगादेष ह्वै सत्यं वदन् सत्ये जुहोति
।ऽस्तमिते सायं जुहोत्युदिते प्रातः प्रातः प्रातरनृतं ते वदन्ति
रोदयात् जुह्वति ये ऽग्निहोत्रमित्यादिश्रुतिपर्यालोचनया धार्थपर-
।वसायाच्छब्दपरत्वानुपपत्तेर्गाव्यादिशब्दस्य च शिष्टैरगर्हितत्वा-
।ढिमात्रेणोक्तम् । उक्तेन च प्रकारेण साध्वसाधुत्वयोर्व्यवस्था-
। सत्यां विधिनिषेधविषयत्वोपपत्तेः प्रयोगोत्पत्त्यशास्त्रत्वादि-
।सिद्धो हेतुरित्याह * एवमिति * अपराधभागित्वेन चासाधुत्वे-
।नियमेनाप्राप्तेरसाधूनां च प्रसक्तेर्नियमनिषेधविषयत्वसम्भवात्
योगोत्पत्त्यशास्त्रत्वादित्यस्य हेतोरसिद्धत्वमनेन सूत्रेणोच्यतइत्य-
।था व्याचष्टे * अथ वेति * धर्माय नियमो धर्मप्रसक्तये वा नियमो
।स्तीत्यर्थः । एतदेव विवृणोति * यदि हीति * नियमशास्त्रशब्दे-
निषेधशास्त्रमप्युपलक्षितं साधुनियमकारिशब्देनासाधुनिषेध-
।रिणोऽप्युपलक्षणम् ।ननु गाव्यादिशब्दस्य सास्नादिमदर्थाप्रतिपा-
कत्वे प्रसक्त्ययोगात्प्रसक्तिसिद्ध्यर्थमवश्यं सास्नादिपर्यायतुल्यं वा-
कशब्दान्तरत्वमेष्टव्यमित्याशङ्क्याह * एक एवेति * पूर्व प्रत्यया-
।ति पूर्वपक्षभाष्येणार्थापत्तिः सर्वेषां वाचकत्वे प्रमाणमुक्तेत्यभिप्रे-
।न्यथाप्युपपत्तिलक्षणदूषणाभिधानार्थत्वेनैतत्सूत्रं याख्यातम् । इ-
।नीमनुमानोपन्यासार्थं तद्भाष्यमित्यभिप्रेत्यानैकान्तिकत्वलक्षणहेतु-
षणप्रतिपादनार्थत्वेनैतत्सूत्रं व्याचष्टे * किं चेति * अनेन च दे-
दत्तादिशब्दे बालैः प्रयुक्ते ऽप्यपटुकारणत्वेनाप्रयत्ननिष्पन्नेसत्त्वादि-
।पेण नाशात् कठोरबुद्धिभिरपि बालप्रयुक्तशब्दानुकरणाप्रयत्ननि-

पपत्तेस्तत्त्वादिरूपेण नाशादपराधभागित्वं दृष्टं ततश्च प्रत्ययादिति
थोक्तस्य शब्दश्रवणानन्तरभाव्यर्थप्रत्ययलक्षणस्य वाचकत्वहे
स्तदुपलक्षितस्य चार्थविषयशब्दप्रयोगलक्षणस्यानैकान्तिकतेति
योजितम् । श्लोकं व्याचष्टे * तत्रेति * गाव्यादिशब्देष्वप्यनैका
काविमौ हेतू इत्याह * अपभ्रंशाश्चेति * ननु तेषामपि पक्षत्व
विपक्षतेत्याशङ्क्याह * कतिषु चिदेवेति * एवमपराधभागित्व
चके ऽपि शब्दे हेतोर्दर्शनादनैकान्तिकत्वभूतमपशब्दापराधप्रति
दनार्थमेव तत् *सूत्रमित्युक्तम्* हेतोरेव चानैकान्तिकत्वलक्षणा
२५।२ राधभागित्वम् अनेन सूत्रेणोच्यतइत्याह * ततश्चेति * एवमपि
प्रयोजना सम्भवतीत्यपिशब्दार्थः । यद्वा यथा शब्दे अन्यथोच्चा
णादपभ्रंशलक्षणापराधभागित्वं तथा हेतोरनैकान्तिकत्वाद्धत्वाभ
सत्वलक्षणापराधभागित्वमित्येवमनैकान्तिकत्वप्रतिपादनार्थतयैत
त्सूत्रं योज्यमित्याह * अन्यथेति * एवमपि सूत्रयोजना सम्भवती
ति चशब्दार्थः सन्देहापादनार्थत्वं सूत्रस्योक्तमुपसंहरति *
स्मादिति * नन्वत्र सर्वेषां वा शब्दानां वाचकत्वमेकस्यैव वेति
द्वावेव पक्षौ तत्र सर्ववाचकत्वपक्षे सन्देहापादनेन निरस्ते पारि
शेष्यादेकस्यैव वाचकतेति निर्णयसिद्धेरन्येन निर्णयाभिधानमयु
क्तमित्याशङ्क्याह * संशयेति * किन्तदुत्तरसूत्रमित्यपेक्षायाम् ।

अन्यायश्चानेकशब्दत्वमिति ॥ २३ ॥

अत्र भाष्यकृता न चैष इत्यादिनैकस्यार्थस्यानेकशब्दत्वमयुक्त
मित्येवं सूत्रं व्याख्याय हेत्वपेक्षायां प्रत्ययमात्रेत्याद्युक्तं तदन्य
थाप्युपपत्तिमात्रप्रतिपादकत्वेन पूर्ववत्सन्देहमात्रापादनान्निर्णय
तत्प्रकारनिरूपणं च तदशक्तिश्चेत्यत्र वक्ष्यमाणत्वात्पुनरुक्तमित्युपेक्ष्य
स्वयं प्रश्नपूर्वं पञ्चहेतूनाह * कथं पुनरिति * कारकयोः साक्षाद
सम्बन्धात् क्रियासम्बन्धे सत्येकक्रियावशीकारात्परस्परनियमस
म्बन्धो ऽभिधीयते । यथोक्तम् ।

प्रतिपत्तावुपादानात्साहित्ये च विवक्षिते ।
नियम्येत यदेकस्यां सम्बन्धः सो ऽर्थशब्दयोः ॥

इति स च वाच्यवाचकानेकत्वे स्वरूपान्नियमलक्षणाद्धीयत
इत्यर्थः । वाच्यवाचकत्वयोः कर्मकरणरूपकात्मकत्वाच्छक्तेरेव का
रकत्वमभिप्रेत्य सामर्थ्यशब्दः । क्रियाव्यापृतत्वरूपस्य तु कारकत्व
मभिप्रेत्य तद्व्यवस्थासिद्ध्यर्थाद्दृष्टातिशयरूपशक्त्यभ्युपगमे वा वा
च्यावच्छिन्नवाचकाश्रितैकशक्तिमात्रेणोभयव्यवस्थोपपत्तेरनवच्छि

वे वा शक्तिद्वयकल्पने ऽपि व्यवस्थानुपपत्तेर्वाऽन्यावच्छिन्नस्य वा-
ाश्रितस्य सामर्थ्यस्याभिधायां नियमो यः सम्बन्धशब्दाभिधेय इ-
योज्यम्। श्लोकं व्याचष्टे *एकेति * योग्यार्थापत्त्यनुदयाद-
नेकवाचकशक्तिकल्पनमन्याय्यमित्याह *किं चेति * श्लोकं
ाचष्टे * अत्यन्तेति * आनर्थक्यादप्यनेकशब्दत्वमन्याय्यमि-
ह *नाम चेति*विकल्पापत्तेरप्यन्याय्यमित्याह*किं चेति* अर्थ- २२
ापत्तेरप्यन्याय्यमित्याह * नामान्तरइति * ननु हस्तकरादिष्व-
शब्दत्वदर्शनात्कथमन्याय्यतेत्याशङ्क्य हस्त इत्यादिभाष्येणाभि-
कोपदेशाभावे सत्यन्याय्यतेति परिहृतं तद् गाव्यादिष्वपशब्देष्व-
भियुक्तोपदेशस्य पूर्वपक्षि इत्वादयुक्तमाशङ्क्य गत्यन्तराभावसू-
नार्थत्वेन व्याचष्टे * यस्त्विति * दृढस्मरणेनेत्यभियुक्तोपदेशो
ान्यागतिकत्वोपपादनार्थत्वेन व्याख्यातः । तदुपलक्षितमसादृश्यं
कारेण सूचितं सम्प्रत्युपेक्षितं भाष्यं गाव्यादिशब्देषु गत्यन्तरस-
ावसूचनार्थत्वेन व्याचष्टे * एकेति * गोशब्दोच्चिचारयिषाया-
क्त्या केन चिद्गावीत्युच्चारिते श्रुतगावीशब्दसादृश्यं गोशब्दस्यो-
ानेनावगम्य गावीशब्दोच्चारणस्य गोशब्दोच्चिचारयिषामूलत्वा-
ानाद् गोशब्दशक्त्यनुसारेण गावीशब्दादप्यर्थप्रत्ययोपपत्तेर्न गावी-
ब्दस्य शक्त्यन्तरकल्पनमित्यर्थः । अनेकशब्दत्वस्यान्याय्यत्वं पञ्च-
पपादितमुपसंहरति * तस्मादिति * स्वरूपं नियमरूपतासम्ब-
ः सामर्थ्यलक्षणः शब्दो नामार्थो नामान्तरे ऽप्यभिन्न इत्येषां च-
ष्टयोपसंहारः । निरूपणशब्दव्यवस्थार्थत्वेनावश्यं विकल्पप्रसङ्गल-
णोपपत्त्युपसंहारः । सर्वशब्दमध्ये एकैकस्यैव गवाश्वादिशब्दस्य
ाचकत्वनियमादिति वीप्सार्थः । यद्वैकस्यैव शब्दस्य वाचकत्वनिय-
देकस्यैव चार्थस्य वाच्यत्वनियमादिति यववराहाधिकरणोक्तो
च्यैकत्वनियमो दृष्टान्तत्वेन वीप्सयोक्तः कथं पुनरुपमानानुमाना-
ामेकशक्त्यनुसारेण गतिसम्भव इत्याशङ्क्याह * यथा चेति *
ष्टान्तमुपसंहरति * तेनेति *

तत्र तत्त्वमभियोगविशेषात्स्यादिति ॥ २४ ॥

भाष्यकृता परोत्तरत्वेन सूत्रं व्याख्यातुं कथं पुनरित्याशङ्कितं
द्व्याचष्टे * तुल्येति * ततश्च पुनरपि अगृह्यमाणविशेषत्वात्
षां वाचकत्वमापद्येतेत्याशयः । शक्यमित्याहेति भाष्येणैतदा-
ङ्कानिरासार्थत्वेनैतत्सूत्रमवतारितं तद्व्याचष्टे * अत आहेति *
ार्थिनो ऽभियुक्ता भवन्तीत्यादिभाष्यादृष्टार्थिनामार्याणां शब्दार्थ-

विषयादरविशेषात्तदुपदेशे वाचकत्वावधारणाकारणमित्या तच्च गाव्यादिशब्देष्वप्यार्योपदेशतुल्यत्वादयुक्तमितिमत्वार्थवि प्रतिपिपादयिषया पृच्छति*कः पुनरिति* अभियोगतद्विशेषशब्द प्रकृतोपयोगिनमर्थमाह * तदुच्यतइति * शब्दपरो ऽभियोग निर्देशः लक्षणस्य व्याकरणस्य यच्छ्रवणं तदभ्यासनिमित्तस्य विषयीकृत्याभियोगशब्दः प्रवर्त्तते लक्षणश्रवणाभ्यासो ऽत्राभियो ब्देनोक्त इत्यर्थः । यल्लक्ष्यमुदाहरणीकृत्य लक्षणश्रवणमभ्यस्तं द्व्यतिरिक्तानान्तुल्यन्यायानां लक्ष्याणां तेन लक्षणश्रवणाभ्या ज्ञानमभियोगविशेषः फलेन तद्धेतोरभ्यासतिशयस्य लक्षणाह णश्रवणाभ्यासातिशयो ऽभियोगविशेष इत्युक्तं भवति। ननु प्रति पाठेनैव वाचकत्वनिरूपणसिद्धेर्न लक्षणश्रवणाभ्यासातिशयापेक्षे

१२७।३ शङ्कां निरस्यंस्तृतीयस्य प्रश्नस्योत्तरमाह * प्रतिपदेति * ननु तिपदपाठस्याशक्यत्वे ऽपि वेदाद्वो वैदिकाः सिद्धाः लोकाच्चैव लौकिकाः । अनर्थकं व्याकरणमिति न्यायेन लौकिकवैदिकप्रयं सिद्धत्वाद्वाचकतत्त्वनिरूपणस्य न व्याकरणापेक्षेत्याशङ्क्याह * स्मादिति * वाचकसामस्त्याज्ञानत्वावाचकत्वनिश्चयो ऽपि न स्या वतीत्याह * तत्सामस्त्येति * ननु वाचकसामस्त्यज्ञाने ऽपि थमवाचकनिश्चयः स्यादित्याशङ्क्याह * लक्षणेति * सूत्रार्थमुप हरति * तेनेति * सूत्रं व्याख्याय पूर्वपक्षोक्तानि दूषणानि परि रिष्यन्पदपूर्वकत्वाच्च वाक्यात्मकशास्त्रव्यापारसिद्धेरित्यादिनो मितरेतराश्रयमनुभाषणापूर्वकं परिहरति * यत्त्विति * प्रयोगोत्त त्यशास्त्रत्वादित्यनेन लक्षणशास्त्रस्य तन्मूलशास्त्रस्य वा लोक सिद्धपदप्रयोगादुत्पत्तेः प्रयोगानियामकत्वासम्भवादितरेतराश्रयः यदुक्तं तद्यदि तावन्निर्णीतवाचकत्वैः पदैरन्वाख्यानम् अन्वा ख्यानाच्चः वाचकत्वनिर्णय इत्येवं रूपमभिप्रेतं ततो वाचकत्व निर्णये ऽपि प्रतिपादकत्वमात्रेणान्वाख्यायकत्वोपपत्तेः सुपरिहरमि त्यर्थः । ननु च कुत्वं कस्मान्न भवतीत्यादिलक्षणानुगमदर्शनाद्व्या करणावयवभूतेष्वपि पदेषु साधुत्वनिर्णयेन भाव्यमित्याशङ्क्य पुनस्तैरपीत्युक्तम्* अथ लक्ष्याणां शब्दानां साधुत्वे सत्यन्वाख्यान मन्वाख्यानाच्च साधुतेतीतरेतराश्रयमभिप्रेतं तत्राह * यदीति न त्वेतदस्तीति शेषः । ननु व्याकरणात्प्रागेव साधुत्वज्ञाने व्याक रणानर्थक्यं स्यादित्याशङ्क्याह * निर्णीतेति * श्लोकं व्याचष्टे तेनेति * ननु लौकिकशब्दानां सङ्कीर्णत्वाद्भवत्वन्वाख्यानमर्थवद्वै दिकानां त्वसङ्कीर्णत्वादनर्थकमित्याशङ्कते * वेद इति * अनेन

ाश्रितप्रतिपदपाठानां लक्षणं न कार्यमित्यादिनोक्तमानर्थक्यं प्रस-
त्परिहारायानुभाषितं सर्वसाधुशब्दानां वेदे प्रयोगे सति व्याकर-
ानर्थक्यं स्यात्कृत्स्नसाधुशब्दविषयत्वाभावात्तु वेदस्य तदनुगत-
ब्दान्वाख्यानार्थं व्याकरणं भविष्यतीति परिहरति।

## नाकृत्स्नविषयत्वात् ॥ २५ ॥

भाषायामित्यधिकृत्यानुगतानां लोकविषयत्वाच्छन्दसीत्य-
कृत्यानुगतानां च वेदाविषयत्वान्न वेदस्य कृत्स्नविषयतेत्युपपाद-
ति *केचिदिति* तेन लोकव्यवस्थितानां तावल्लक्षणमर्थवदित्या-
यः। कृत्स्नसाधारणसाधुशब्दविषयत्वस्याप्येकस्यां शाखायाम-
ावात्सर्वशाखागतानां चाध्ययनाशक्तेः शाखान्तरगतसाधारण-
ब्दानामप्यपभ्रंशेभ्यो विवेकाय लक्षणमर्थवदित्याह *सर्वेति*
तदेव विवृणोति *यथैवेति* अशक्तावानन्त्यं कारणमाह
*प्रकृतीति* इत्थं निर्णीतवाचकत्वैः पदैरन्वाख्यानमन्वाख्यानाच्च
ाचकत्वनिर्णय इत्येवं रूपे लक्ष्याणां शब्दानां साधुत्वे सत्यन्वाख्या-
ामन्वाख्यानाच्च साधुतेत्येवं रूपं वा लक्षणगते ऽन्योन्याश्रये परि-
ते यदि कश्चिद्व्याकरणमूलभूतो वैदिको विधिर्व्याकरणाश्रयो
ादविद्याश्रयं च व्याकरणमित्येवं रूपं तस्मान्न ब्राह्मणेन म्लेच्छित-
ाइत्यादिलक्षणमूलगतमितरेतराश्रयं ब्रूयात्तत्राह *एतेनेति*
ुरुषार्थं यत्स्वर्गे लोके कामधुग्भवतीति प्रतिपादितमदृष्टं साध्यं क्र-
्वर्थं च ब्राह्मणेन न म्लेच्छितवाइतिज्योतिष्टोमप्रकरणाधीतवाक्य-
कल्पव्याकृता वागुद्यतइत्यनारभ्याधीतवाक्यकल्पं वा यत्साध्यं यच्च
साधुशब्दप्रयोगाख्यं साधुशब्दज्ञानाख्यं वा साधनं तयोर्यत्साध्यसा-
धनभावविधायकं वाक्यं तद्गतानां शास्त्रान्वितादिपदानां वा या
व्याक्रिया तस्याश्च या पूर्वप्रसिद्धविधिवाक्यमूलत्वकल्पना त्वयेष्टा
तस्याश्च तद्वाक्यमूलत्वे वेदाविधितः प्राक्सिद्धत्वकल्पनापत्तेस्तदा-
श्रयो वेदविधिः तस्याश्च तन्मूलत्वकल्पना तदाश्रया सेतीतरेतराश्र-
यत्वस्य यः प्रसङ्गः शक्यते एतेन प्रासङ्गिकानर्थक्यपरिहारसमाधा-
नस्याबुद्धिस्थेन लक्षणगतेनेतरेतराश्रयत्वपरिहारन्यायेन प्रत्युक्त इत्य-
र्थः। एतदेव व्यतिरेकदर्शनपूर्वकं विवृणोति *यदिहीति* अन्वाख्यानं
प्रकृत्यादिविभागेनाख्यानम् अन्वाख्येयाः साधुशब्दाः अन्वाख्याता-
नां ऽविधिर्व्याकृता वागुद्यतइत्यादिप्रयोगो व्यवहारकालइति चतु
ष्टयं साधुशब्दविषयं ब्राह्मणेन न म्लेच्छितवाइत्यनन्वाख्यातानां प्र-
तिषेधः व्यवहारकाले वर्जनं चेत्यसाधुविषयं द्वयमिति षट्कस्याप्य-

नादित्वे सति सर्वेषामन्वाख्यानादीनां सर्वेषामनवगतपूर्वापरा
सम्बन्धे सति यदात्यन्ताहृष्टार्थत्वमात्रमेषां शास्त्रीयप्रत्यया
स्वरूपं तदा सर्वकालव्याक्रियमाणत्वेन विद्यमानस्य शब्दस्य
यमविधित्वस्येत्यर्थः । निषेधो ऽपि विधिशब्देनोपलक्षितः तथ
दित्वे ऽवगम्यमानश्चासौ वेदविधिश्चेति वेदविधित्वेनावगम्य
त्वं हेतुः । इतरेषामवगम्यमानो वैदिको विधिर्मूलं येषामित
म्यमानवेदविधिमूलत्वं वैदिकस्य विधेरनादित्वाक्षेपकत्वे वेद
स्वरूपविषयः कार्यविषयः साधनविषयश्च दृष्टान्तिताः ।
मात्राण्यसाधूनीत्यादिना गाव्यादीनामवाचकत्वस्य लोकविरु
यदुक्तं तत्परिहारायानुभाषते * यस्त्विति * मेर्यादिशब्दश्च
काक्षपाठश्च प्रसिद्धानि च न्यूनवर्णान्यतिरिक्तवर्णानि विपर्य
र्णानि च यानि पदानि तद्व्यतिरिक्ता ये प्रसिद्धा गाव्यादयः श
१२९।४ स्तेषां मध्य इत्यर्थः परिहरति * तत्रेति * एकार्थविषयेषु सदृश
ब्देष्वेकस्य शक्तौ क्लृप्तायामितरेष्वप्यस्तदशक्तिजत्वेनापि प्रतीत्यु
तरेकस्यैव शक्तिरिति निर्णीते ऽपि कस्यैकस्येत्यनिर्णयात्संमुग्ध
चके लोके सत्यविरुद्धो लक्षणाद्वाचकनिर्णयः । यदि तु लक्षण
नादृत्यागृह्यमाणविशेषत्वात्सर्वेषां वाचकत्वं कश्चिद्वदेत् प्रति
स्याचारबाधो वाच्य इत्यर्थः । श्लोकं व्याचष्टे * लोकेति *
न्वेवं सत्यवाचकत्वप्रतिज्ञाया लोकाविरोधः प्रथमपादे कथमुक्त
त्याशङ्क्याह * तर्केणेति * सम्बन्धग्रहणात्पूर्वं यस्माद्ध गमयत्य
गवादेर्नाभिधाशक्तिर्देवदत्तपदे यथेत्यनुमानस्य लोके ऽपेक्षितवाच
कावाचकविवेकहेतुत्वाभावाल्लोकविरोधः । स्मृतेस्तु तदपेक्षित
विवेकहेतुत्वादविरोध इत्याशयः । दृष्टान्तं विवृणोति * यथेवे
ति * वर्णविवेकावधारणस्य प्रत्यक्षत्वेनोक्तत्वात्स्मरणादेवेत्यवधा
रणं सहकार्यान्तरमात्रनिवृत्त्यर्थं लोकविरोधाभाव इत्यनेन स्मर्य
माणस्य तु वाचकावाचकविवेकस्य ब्राह्मणादिविवेकस्येव न लोक
विरोध इति नञध्याहारेणोत्तरार्द्धं योजितं, विपरीतबाधप्रतिपादक-
त्वं नाध्याहारं विना स्मर्यमाणेन विरोधो बाध इत्येवमन्यथा व्या-
चष्टे * यथा चेति * स्मृत्या बाध इति विग्रहः । ननु निर्मूल-
त्वात् स्मृतेर्न बाधकत्वं युक्तमित्याशङ्क्याह * आदितश्चेति * प्र-
माणमूलत्वेन स्मृतेर्बाधकत्वोपपादनायादितः * स्मृतेरित्युक्तम् *
कुतः सिद्ध इत्यपेक्षिते * प्रत्यक्षेणेत्युक्तम् * नन्ववैयाकरणैरन-
वगमाच्चास्य प्रत्यक्षता युक्तेत्याशङ्क्य * कुशलैरित्युक्तम् * यथा
मातापितृसम्बन्धस्मृतिकुशलैर्ब्राह्मणादिभिर्ब्रह्मसदो ऽवगम्यते तथा

तिप्रत्ययाख्यानकुशलैः साध्वसाधुविभाग इत्यर्थः। यद्यप्यर्थ-
ायनाङ्गत्वलक्षणं साधुत्वं लिङ्गावगम्यं तथापि तदाश्रयस्यानप-
शब्दरूपस्य प्रत्यक्षताभिप्रेता एवमसाधुत्वमुपन्यस्यापभ्रष्टरूपस्ये-
ोषः।

अर्थबोधानपेक्षा तु नानपभ्रष्टरूपता।
साधुत्वमेकवर्णे ऽपि प्रसङ्गादिति वर्णितम्॥

ननु स्मृतीनां शास्त्रमूलत्वस्योक्तत्वात्तद्विरुद्धं व्याकरणस्मृतेः
क्षमूलत्वाभिधानमित्याशङ्क्याह * यो नामेति * फलो-
तेरनियतकालत्वात्सम्बन्धस्यानियतकालत्वं साध्वसाधुविवेकस्य
प्रत्यक्षग्राह्यत्वोपपत्तेस्तदपह्नवे न केवलं स्मृत्या बाधः किं तु
क्षेणापीत्याह * यस्य त्विति * सङ्गीतशास्त्रे स्वरगतरागावि- २३
प्रकीर्णकप्रबन्धतालवाद्यनृत्ताख्याः सप्ताध्यायाः तत्र।

आत्मा विवक्षमाणो ऽयं मनः प्रेरयते मनः।
देहस्थं वह्निमाहन्ति स प्रेरयति मारुतम्॥
ब्रह्मग्रन्थिस्थितः सो ऽथ क्रमादूर्ध्वपथे चरन्।
नाभिहृत्कण्ठमूर्द्धास्येष्वाविर्भावयति ध्वनिम्॥
नादो ऽतिसूक्ष्मः सूक्ष्मश्च पुष्टापुष्टश्च कृत्रिमः।
इति पञ्चाभिधावन्तः पञ्चस्थानस्थितीः क्रमात्॥
व्यवहारे त्वसौ त्रेधा हृदि मन्द्रो ऽभिधीयते।
कण्ठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः॥
तस्य द्वाविंशतिर्भेदाः श्रवणाच्छ्रुतयो मताः।
स्यातां निषादगान्धारौ द्विश्रुती धैवतर्षभौ॥
त्रिश्रुती वेदश्रुतयः षड्जमध्यमपञ्चमाः।
मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः॥
गर्दभः सप्तषड्जादिक्रमादुच्चारयन्त्यमी।

इत्यादिलक्षणैः षड्जादीनां विवेके द्वितीयेन राग-
विकसञ्ज्ञकेनाध्यायेन कृते तदभ्यासससंस्कृतेन श्रोत्रेण यथा
ड्जो ऽयमृषभो ऽयं गान्धारो ऽयं मध्यमो ऽयं पञ्चमो
यं धैवतो ऽयं निषादो ऽयमिति स्वरविवेकज्ञानं जायते तथा
स्य व्याकरणस्मृतिजनिते साध्वसाधुविवेके पूर्वं जाते पश्चाद्व्याक-
णश्रवणाभ्याससंस्कृतश्रोत्रस्य साध्वसाधुविवेकविषयं प्रत्यक्षं जा-
ते तं प्रति साध्वसाधुसङ्करं साधयतः प्रत्यक्षबाधो ब्राह्मणादिवर्ण-
ङ्करसाधनवद्भवतीत्यर्थः। अतस्त्वत्पक्षस्यैव प्रमाणविरोधो ना-
स्मत्पक्षस्येत्युपसंहरति * तेनेति * प्रत्यक्षग्राह्यत्वे सति तत्पूर्वक-

स्यानुमानादेरपि सम्भवात्समस्तशब्दः । यश्चादृष्टविषयश्च
साध्वसाधुतेत्यादिना साध्वसाधुविवेकस्याप्रामाणिकत्वेन वि
षेधाविषयत्वायोगाच्च धर्माधर्मसाधनत्वरूपापि साध्वसाधुते
म् । तदपि साध्वसाधुविवेकस्य सप्रमाणकत्वाभिधानं प
भवतीत्याह * तेनेति * ननु

साधुत्वं नेन्द्रियग्राह्यं लिङ्गं वास्य न विद्यते ।
शास्त्रस्यं विषयो नैष प्रयोगे ऽप्यस्य सङ्करः ॥

इत्यन्यैरुक्तं तस्य कः परिहार इत्याशङ्क्याह * यस्त्विति
न्द्रियग्राह्यत्वं विवृणोति * ग्रस्तेति * ग्रस्तमविभक्तिकोच्च
निरस्तं विश्लेषितसंयोगम् अम्बूकृतं सनिष्ठीवितं संवृतकलप्रगी
गीतक्ष्विणरोमशादीनामादिशब्देनोपादानं दोषवर्जितानां निय
स्वादिमात्रकालाभिव्यङ्ग्यानां यथावृद्धव्यवहारं लक्षितेन ग्र
ग्राह्याणां वर्णानामिन्द्रियग्राह्यत्वमित्यर्थः । नन्वेवमप्यर्थप्रत्या
ङ्गत्वलक्षणस्य साधुत्वस्येन्द्रियग्राह्यत्वं नास्तीत्याशङ्क्य वाचक
साधुत्वस्याविनष्टत्वेन निरूप्यत्वात्तद्विषयस्य ज्ञानस्य श्रोत्रजन्यत
न्द्रियग्राह्यत्वं नास्तीति वक्तुम् *अविनष्टेत्युक्तम् *प्रकृतिप्रत्ययान्वा
नस्मृतिसहकृतस्य च श्रोत्रस्याविनष्टरूपविषयज्ञानहेतुत्वाद्वैय्या
णस्याज्ञानं युक्तमिति *स्मार्थमाणशब्देनोक्तम् * यथोदात्तादिरूप
नश्रोत्रं स्मृतिमपेक्षते तद्वदविनष्टरूपज्ञाने ऽपीति दृष्टान्तार्थः । लि
ग्राह्यत्वं विवृणोति * तद्रूपेति * प्रत्यक्षेण साध्वसाधुविवेकग्र
णोत्तरकालं यत्प्रवृत्तं लक्षणं तद्गतं प्रकृतिप्रत्ययलोपादिसाधुत्वाव्य
भिचारितया लक्षणेनावगतत्वादुदाहृतशब्दे दृष्टान्तेन शब्दान्तरे सा
धुत्वानुमानाय लिङ्गं भवतीत्यर्थः । वृद्धप्रयोगगम्यो हि शब्दार्थस्स
एव न इत्यनेन न्यायेन शब्दार्थस्य वृद्धप्रयोगमात्रावसेयत्वावधारण।
भवन्तीत्यादिषु शब्देषु वृद्धाप्रयुक्तत्वेनार्थप्रत्यायकत्वाभावात्साधुत्व
रहितेष्वपि प्रकृतिप्रत्ययान्वाख्यानदर्शनात् व्यभिचारमाशङ्क्य व्य
वहारगतार्थप्रतिपत्तिसहितत्वं विशेषणं कृतम् । अस्मादेव विशेष
णादर्थप्रत्यायनार्थत्वं साधुत्वलक्षणं वार्त्तिककृतो ऽभिप्रेतमिति ज्ञा
यते । शास्त्रविषयत्वं विवृणोति * शास्त्रस्य चेति * श्रुतिस्मृतिरूप
त्वेन क्रत्वर्थपुरुषार्थसाधनत्वप्रतिपादकत्वरूपेण विधिनिषेधनिब
न्धनार्थानर्थज्ञापकत्वरूपेण कार्यस्वरूपज्ञापकत्वरूपेण चेति चतुर्द्ध
द्वैविध्यं विवृतं साधुत्वमिन्द्रियग्राह्यमिति साधुत्वशब्देनासाधुत्व-
स्याप्युपलक्षितत्वादनर्थज्ञानार्थनिषेधशास्त्रविषयत्व (मसाधुत्वस्य द-
र्शितम् । अयं साध्वसाधुत्वरूपो विषय इत्यर्थः । ननु साध्वसाधु-

त्प्रयोगयोरिष्टानिष्टसाधनत्वज्ञापने साध्यसाधनभावविषयत्वा-
शास्त्रस्य साध्वसाधुविषयत्वं न स्यादित्याशङ्क्यैवंविध एवान्यो
त्युक्तम् । अन्यो ऽपि यागादिरेव विधिरेव विषय इत्यर्थः । द्वि-
धशास्त्रविषयत्वमेवोपपादयति * अविनष्टैरिति * साधुश-
प्रयोगस्य स्वर्गसाधनत्वम् । एकः शब्द इत्यस्य कामधु
ाब्दयुक्तस्य शास्त्रस्य विषयः । यज्ञोपकारसाधनत्वव्या-
ता वागुद्यतइत्यनारभ्याधीतस्याप्यश्वप्रतिग्रहेष्टिन्यायेन व्याकृ-
वस्य लौकिकवैदिकवाग्वदनविषयकत्वे क्रत्वर्थपुरुषार्थत्व-
क्षणावैरूप्यापत्तेर्लौकिकमात्रविषयत्वे ऽपि फलकल्पनागौरवाप-
वैदिके कर्मणि या वागुद्यते सा व्याकृतेत्यर्थावधारणात् विषयः ।
पशब्दभाषणस्य प्रतिषिद्धाचरणनिमित्तक्रतुवैगुण्यरूपानर्थसाधन-
: ब्राह्मणेन न म्लेच्छितवाइति निषेधशास्त्रस्य ज्योतिष्टोमप्र-
रणाधीतस्य विषयः । अस्य निषेधस्यानृतवदननिषेधवत्प्राकर-
ार्कं क्रत्वर्थत्वं याज्ञे कर्म्मणि स नियमो ऽन्यत्रानि-
म इत्यादिना महाभाष्यकृता ऽप्युक्तमिति सूचयितुम्
* याज्ञे कर्मणीत्युक्तम् * वाग्योगविद् दुष्यति चापश
ैरिति स्मृत्यापि वाचैव हि मनसा च यज्ञो वर्त्ततइत्यादिलिङ्गद-
नाद्वाग्योगशब्दस्य यज्ञपरत्वावगतेर्वाग्योगविच्छब्दस्यर्त्विग्यज-
ानविषयतया व्याख्यातुं शक्यत्वाद्यज्ञविषयत्वमपशब्दनिषेधस्या-
सीयतइति सूचयितुम् * यथोक्तमित्युक्तम् * यच्च प्रतिशब्दं वि- २
ानिषेधवाक्यानुमानकल्पनानुपपत्तेर्न साध्वसाधुतयोर्विधिनिषेध-
ाषयत्वं सम्भवतीत्युक्तं तत्परिहरति * द्वाभ्यामेवेति * क्रत्व-
पुरुषार्थविध्योर्भेदे ऽपि विधित्वेनैक्यं मत्वा * द्वाभ्यामित्युक्त-
( * ननु वेदवचनं पुनर्वस्तुस्वरूपतद्गतगुणदोषान्वाख्यानपरं वि-
ाप्रतिषेधानपेक्षं नैव किं त्विप्रमाणत्वेन सम्भवतीत्यनेन वेदस्य
ारूपपरत्वान्निषेधात्कथं स्वरूपज्ञानार्थशास्त्रविषयता साध्वसाधु
ायोरुक्तेत्याशङ्क्याह * न चेति * यावदेकाहेनाश्वो याति ताव-
ार्श्वानं ननु तत्राप्यविनाशी वा अरे ऽयमात्मा ज्ञातव्य इत्येवंविधि-
ारस्यैव शास्त्रस्य स्वरूपज्ञानार्थत्वान्न तन्निरपेक्षत्वमित्याशङ्क्याह * अ-
ापीति * अत्रापि तदर्थप्रत्यायनाङ्गत्वविशिष्टलक्षणानुगतत्वरूपै-
कोपलक्षणोपपत्तेर्ये ऽर्थप्रत्यायनाङ्गभूताः शब्दा लक्षणानुगतास्ते सा-
ावो ऽन्ये चासाधवः प्रत्येतव्या इत्येवं ज्ञात्वा शास्त्रावधारितप्रयो-
ानान् साधुशब्दान्प्रयोक्तुमिच्छेन्नानर्थप्रत्यायनाङ्गभूताः शब्दा लक्ष-

१ अयं पा० २ पु० ना०

णेनानुगतास्ते साधवो न वा लक्षणेनाननुगतानित्येवं विधिनि
योः शास्त्रयोः साध्वसाधुस्वरूपज्ञानार्थत्वं भविष्यतीत्याशयः
वद्रूपमित्यनेन द्वयोरेव विधिनिषेधयोरेकेनोपलक्षणेन * सर्व
पशब्दव्यापित्वमुक्तम् * शास्त्रस्य विषयो ऽप्येष इत्यपिशब्द
तमुपमानादिप्रमाणविषयत्वं दर्शयन्नुपमानं तावद् द्विवि
* निःसन्दिग्धेति * यो ह्यविनष्टत्वेन निःसन्दिग्धो वृद्ध
देवदत्तशब्दो यश्च विनष्टत्वेन निःसन्दिग्धो बालप्रयुक्तस्तत् र
त्सादृश्यं यच्च पटुकरणाभिव्यङ्ग्यत्वादिधर्मसामान्यभूत
गोशब्दादेरुपमानेनावगम्य पटुकरणाभिव्यङ्ग्यत्वस्य विनष्टा
रूपत्वेन देवदत्तादिशब्दे व्याप्तिदर्शनाद्गोशब्दादौ विनष्टाविन
त्वानुमानं सम्भवतीत्युपमानपूर्वकानुमानविषयत्वं साध्वस
योरुपचारादुपमानविषयत्वेन विवक्षितमिति * शक्यशब्दे
चितम् * सङ्कीर्णसाधुविषयं चेदमुपमानं लक्षणानुगतवैदिक
सादृश्यं लक्षणानुगतत्वस्याविनष्टत्वेन वैदिकेषु व्याप्तिदर्शनात
किकेष्वविनष्टत्वानुमानमित्येतदप्युपमानपूर्वकमेवानुमानमसङ्
साधुत्वविषयमिति * दर्शयितव्यमित्यनेन सूचितम् * सङ्
साधुत्वविषयांस्तावदर्थापत्तिमाह * तथेति * लक्षणैरप
भिप्रायो लौकिकशब्दः वृद्धव्यवहारनिबन्धनेनार्थप्रत्ययेन यो
पिता वाचकत्वविषयार्थापत्तिः तया विनष्टस्य स्वाभाविकार्थाभि
नशक्तत्वरूपवाचकत्वानुपपत्तेरविनष्टरूपं साधुत्वं गाव्यादिशब
ङ्कीर्णं निश्चीयतइत्यर्थः । असङ्कीर्णसाधुत्वविषयामर्थापत्तिमाह *
इति * अन्यासक्तिनिमित्तं तदनासक्तिनिमित्तं स्पृष्टादिकर
गुणनिमित्तं वा यत्सम्भवत्यपभ्रष्टं रूपं तद्वर्जितस्य केवलस्य सा
र्थलक्षणेनान्वाख्यानं तदन्यथानुपपत्त्या गोशब्दादेरेव साधु
सिद्धं, गवादिशब्दनियतमसङ्कीर्णसाधुत्वज्ञानमित्यर्थः । गाव्य
शब्दानां लक्षणाभावस्यासाधुत्वं विनानुपपत्तेरभावपूर्विकयार्थाप
साधुत्वाभावनिश्चयात्तद्द्वारेणाभावस्यापि साध्वसाधुत्वनिर्णयो
१३२।१ षय इत्याह * अपभ्रंशेष्विति * ननु प्रत्यक्षादित्रयविषयत्वा
धानमात्रेण परोक्तश्लोकप्रतिकञ्चुकसिद्धेरुपमानादित्रयविषयत
भिधानं किमर्थमित्याशङ्क्याह * इतीति * व्यापारशब्देनाभावोप
नयोः साक्षात्साध्वसाधुत्वनिर्णायकत्वाभावे ऽपि व्यापारसङ्क्रा
त्तद्विषयतेति सूचितम् । प्रयोगे ऽप्यसत्यसङ्कर इत्येतद्विवृणोति
यद्यपीति * मातापितृसम्बन्धकुशलानां ब्राह्मणादिविवेकवत्प्रकृ
प्रत्ययान्वाख्यानकुशलानां साध्वसाधुशब्दविवेको ऽस्तीत्यर्थः ।

साधुत्वं नाम दोषवर्जितत्वं तच्चान्यत्रापि परीक्षकगम्यं दृष्टमि-
ाह * यथा चेति * रत्नतत्त्वपरीक्षका यथा पद्मरागादीनि वि-
केन जानन्ति तथा परे शब्दनामदोषवर्जितत्वं तच्चान्यत्रापि परी-
कतत्त्वपरीक्षकाः साधुत्वं विवेकेन जानन्तीत्यर्थः । लक्षणस्य च
ाध्वसाधुविवेकोपायता रत्नपरीक्षायामेव दृष्टेत्याह * यथेति *
वं च साध्वसाधुविवेकस्य प्रत्यक्षादिनावगतिसम्भवे तन्निराकर-
ाच्च तत्पूर्वकपुरुषवचननिराक्रियापि सिद्धेति यदुक्तं तदपि प्रति
तं भवतीत्याह * पौरुषेयेति * ननु व्याकरणानुगतसाधुत्वा-
न्तरं प्रत्यक्षेणासङ्कीर्णसाधुत्वदर्शने माभूदन्धपरम्परान्यायापत्तिः ।
ङ्कीर्णस्य तु साधुत्वस्य पूर्वदृष्टस्य व्याकरणमात्रात् विवेकज्ञाने त-
ापत्तिरपरिहार्येत्याशङ्क्याह * यावानिति * अयमाशयः न
ावददृष्टसाधनत्वलक्षणसाधुत्वविवेके ऽन्धपरम्परान्यायापत्तिः वि-
त्रनिषेधमूलत्वादविनष्टरूपसाधुविवेके ऽपि न तदापत्तिर्वेदा-
द्विद्यास्थानप्रयोगमूलत्वादिति । यच्चार्थप्राप्तश्च यो ऽर्थः
ादित्यनेनार्थप्राप्तत्वात्साधुविधानानुपपत्तिरित्युक्तं तदनुभाषणपू-
कं परिहरति * यत्त्विति *यथा चतुर्थे समे दर्शपूर्णमासाभ्यां
जेत पौर्णमास्यां पौर्णमास्या यजेत दर्शपौर्णमासयोश्चत्वार ऋत्विज
त्युपात्तानामपि देशादीनामर्थप्राप्तत्वादविधानमिति पूर्वपक्षयित्वा
क्षप्राप्तानामपि नियमार्थो विधिरिति नियमार्था श्रुतिरुच्येत्तदिति-
सूत्रेण सिद्धान्तयिष्यते तथात्रापि नियमार्थो विधिर्भविष्यतीत्या-
ायः । यच्चात्यन्तावाचकत्वादित्यनेन व्यावर्त्यासाध्वप्रसक्तेरसाधु-
नेवृत्त्यर्थस्य नियमस्यानुपपत्तिरित्युक्तं तदप्यनुभाषणपूर्वकं परि-
हरति * यत्त्विति * यस्त्वया ऽन्यनिवृत्तिफलो विधिर्नियम इत्युक्तः
न नियमः परिसंख्या वेत्यनेन किं नादौ परस्तान्नियमः किन्तु परि-
संख्येत्याशयः । सा चात्यन्तव्यावृत्त्याद्विना नेष्यते यस्तु परमार्थ-
तो नियमः स नित्यतामात्रकारीति किमिति व्यावृत्त्याद्विना न ल-
भ्यतइत्यर्थः । ननु भाषणे साधूनां नित्यप्राप्तत्वान्नियमो ऽनर्थकः
स्यात् भाषणनियमे तु मौने दोषः प्रसज्येतेत्युक्तं तत्राह * सतीति*
द्विधा परस्यार्थः पुरुषेण ज्ञाप्यते स्वाभिप्रायप्रकाशनद्वारेण वा त-
न्निरपेक्षमुख्यगौणलाक्षणिकैव द्वैरूप्यादिस्मरणमात्रे वा । तत्र स्वा-
भिप्रायप्रकाशनद्वारार्थज्ञापनमिह त्रैरूप्यस्मारणादिद्वारार्थप्रकाशन-
व्यावृत्त्यर्थभाषितव्यशब्देन लक्षणयोक्तम् । अनेन च पूर्वपक्षोक्तं दू-
षणद्वयमपि परिहृतम् । शब्दव्यापारद्वारार्थज्ञानरूपे हि भाषणे सा-
धुव्यतिरिक्तोपायाप्रसक्तेः साधुनियमानर्थक्यमपरिहार्यम् । अर्थ-

ज्ञापनमात्रे तु साधुनियमे वैरूप्याद्युपन्यासः शास्त्रकाराण
द्ध्येत । स्वातन्त्र्येण तु सर्वदा साधुभाषणनियमे मौने दोषो
हार्यः स्वाभिप्रायप्रकाशनद्वारार्थज्ञापनं मौनिनाक्षिनिको
क्रियमाणं न श्रेयःसाधनमित्याक्षिनिकोचादिव्यावृत्त्यभिधाने
चितम् । अतश्च भोजनादौ मौनविधाने शाकादेर्भाषणनिव
हस्तसंज्ञादिना न कार्यं शिष्टाचारविरोधापरिहारार्थं वा मौ
भावविषयत्वं साधुभाषणनियमस्य कल्पनीयं भाषणानुवादे
धुनियामकत्वं कल्प्यं साधुभाषाशब्दस्त्वस्मिन्पक्षे विशेषण
नन्वन्यनिवृत्त्या शिष्टाचारविरोधपरिहारार्थं वा मौनविध्यभा
नित्यत्वायोगान्नियमे ऽप्यन्यनिवृत्तिरवश्यं कल्प्येत्याशङ्क्याह
२३३।४ पि चेति * साधुस्मृत्या व्यवहितानामसाधूनां तदर्थप्रति
त्वोपपत्तेरपभ्रंशकाले प्रयोगः सम्भवतीति विप्रकर्षाभिधायि
ब्दोक्तानां स्मर्यमाणावधिदीर्घकालप्रयोगरूपरूढशब्दोक्तम्लेच्छ
णविलक्षणसाधुसादृश्यरूपात्मककारणद्वयजन्यया भ्रान्त्या
त्वेनार्वाचीनैर्गृहीतानामिदानीन्तनकाले प्रयोगः सम्भवती
गाव्यादिशब्दानामविवेकिलोकप्रसिद्धशब्दान्तरत्वमङ्गीकृत्य प्र
दर्शिता । परमार्थतस्तु तेषां गवादिशब्दापभ्रंशमात्रत्वेन शब्द
त्वाभावाद्विनाशनिवृत्तिमात्रं नियमफलमित्याह*अथ वेति*
श्चिद्विनीनशदित्येकवचनान्वयायाध्याहार्यं विनाशनिवृत्त्यर्थत्वं
मस्य दृष्टान्तपूर्वकमुपपादयति * तद्यथेति * तस्माद् ब्राह्म
प्रतिषेधस्तस्माद्येषेति च त्रिविधिरविनष्टप्रयोगनियमार्थ इत्य
म्लेच्छतिधात्वर्थव्याख्यार्थत्वापभाषितत्वादिति महाभाष्यकृत
धात्वन्तरं दर्शितं विनाशनिवृत्त्यर्थत्वोपपादनाय दुष्टः शब्द इति
त्युपन्यासः । किं चिद्विनष्टस्यापि भग्नशृङ्गगोन्यायेन शब्दत्वा
यात्कथमपशब्दतेत्याशङ्क्य * प्रमादादिनिमित्तेन विनाशेनेत्याह
म् * अयमित्यनेनापशब्दत्वं परामृष्टम् । विनष्टस्यापि गव
शब्दस्य म्लेच्छैरप्रयोगात् किंनिमित्तो म्लेच्छशब्द इत्याशङ्क्य
तिप्रत्ययान्वाख्यानरूपव्यक्तस्वभावेनाव्यक्तोच्चारणत्वनिमित्तता
रणेन सूचिता प्रत्यक्षविधिनिषेधोपन्यासेन नात्र साधुभिर्भाषि
साधुभिर्नेति विधिनिषेधौ कल्प्यौ येनोक्तदोषद्वयापत्तिः स्या
सूचितम् । ननु प्रमादादेरभावे विनाशस्याप्रसक्तेर्भावे वा प
तुमशक्तेर्निषेधो न युक्त इत्याशङ्क्य * ननु चेति * विनाश
रणनिषेधद्वारेण विनाशनिषेधो भविष्यतीति परिहरति * उच्य
इति * अशक्तेः प्रागभावरूपायाः स्वभावसिद्धत्वात् निषेधो न

प इत्याशङ्क्य * सामर्थ्यायेत्युक्तम् * प्रमादाशक्तभावे ऽपि च
धा प्रसक्तिः सम्भवतीत्यन्यथा परिहरति * अन्यदिति * उपसं-
रति * तत्कथं नामेति * यत्किंचित्प्रमादाशक्तिरूपक्लेशो वा २:
क्षिण्याद्यनुवर्त्तनं वा ऽभियुक्तसंव्यवहारो वापभ्रंशकारणं तत्प-
हारार्थमविनष्टशब्दप्रयोगविषयापन्नो नियम्यतइत्यर्थः।यच्च न चा-
ष्टार्थतापि तस्येत्यनेन दृष्टार्थत्वाच्छब्दप्रयोगस्यादृष्टार्थो * नियमो
युक्त इत्युक्तम् * तत्क्रियास्वरूपस्य नैराकाङ्क्ष्ये ऽपि तद्गतस्य
यमस्यादृष्टार्थत्वं विनानर्थक्यापत्तेरयुक्तमित्यभिप्रायेणानुभाषण-
र्वकं परिहरति * यत्त्विति * ननु फलासिद्ध्यर्थत्वादपूर्वकल्पन-
त्र तदभावान्नापूर्वकल्पना युक्तेत्याशङ्क्य क्रतूपकाररूपं पुरुषार्थ-
पं च फलं दर्शयितुमाह * क्रत्वर्थमिति * एतदेवोपपादयितुमे-
स्य उभयत्वं संयोगपृथक्त्वामिति चातुर्थिकं सूत्रं साध्याहारमुप-
रस्यति *एकस्य त्विति* ननु,तत्र दध्ना जुहोति दध्नेन्द्रियकामस्य जु-
यादिति वाक्यद्वयश्रवणात् तस्मात्स्वगुणानां च परार्थत्वादसंबन्धः
मत्वात्स्यादित्यनेन न्यायेन परस्परासङ्गतेरेकेन विहितस्य दध्नो परेण
लबोधायोगात्परस्परनिरपेक्षवाक्यद्वयेन युक्तोभयरूपता। नन्विह
थाविधं वाक्यद्वयं श्रूयतइत्याशङ्क्याह * तच्चेहेति * ब्राह्मणेन न
लेच्छितवाइति प्राकरणिकेन निषेधेनासाधुभाषणस्य क्रतुवैगुण्या-
दकत्वावगतेरर्थात्साधुभाषणनियमस्य क्रत्वर्थतावसीयते। एकः
ब्दः सम्यक्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग् भ-
तीति चानारभ्यवादेन शास्त्रशब्दस्य रूढ्या विद्यास्थानवाचित्वा-
त्सम्प्रदायपरतया व्याख्यानानुपपत्तेर्व्याकरणशास्त्रानुगतसाधुश-
द्भाषणनियमस्य स्वर्गसाधनत्वावगतेः पुरुषार्थतावसीयतइत्यर्थः।
नु भाषणस्यार्थप्रतिपत्त्यर्थत्वेन जुह्वादिवत्पारार्थ्यादपापश्लोकश्रव-
वत्स्वर्गे लोके कामधुगिति फलश्रुतेरर्थवादत्वात्पर्णमयीत्वानियमा-
ष्टवत्साधुनियमादृष्टस्यापि पुरुषार्थता न युक्तेत्याशङ्क्याह * तत्रे-
ते * यदि क्रत्वर्थस्य भाषणस्योपायनियमरूपफलश्रुतिरेषा स्यात्ततो
वेदर्थवादस्यानारभ्यविहितस्य तु भाषणस्य क्रत्वर्थत्वे प्रमाणाभा-
द् दृष्टार्थव्यवहारहेतुत्वेन शुद्धपुरुषार्थत्वावगतेस्तस्य च नियमं
वेनापि सिद्धेरदृष्टफलाकाङ्क्षिणि नियमे फलानिर्देशात्फलमेवाव-
सीयतइत्यर्थः एतदुपपादनार्थं फलमात्रेयो निर्देशादिति सूत्रोक्तं
चतुर्थन्यायं दर्शयितुम् * आत्रेयेत्युक्तम् * श्लोकं व्याचष्टे क्रत्व-
र्थे हीति * पुरुषार्थांशइत्यनवधारितक्रत्वर्थत्वमात्राभिप्रायेण नि-
यमस्य पुरुषार्थतोक्ता। अनेन च क्रत्वर्थस्यांश इति क्रत्वर्थशब्दे वि-

ग्रहः सूचितः । यच्च न चेदं नियमापूर्वमित्याश्रयासम्भवं
* अपूर्वकल्पना न युक्तेत्युक्तम् * तदनुभाष्य परिहरति * य
ति * पूर्वार्धेन क्रत्वर्थशब्देन साधुभाषणानियमस्यानृतवदनव
वच्छुद्धक्रतुधर्मत्वाभिधानात्तस्य च क्रतुसंयुक्तपुरुषधर्मविषय
णासंयुक्तवाक्यविषयत्वायोगात्तस्मादेषा व्याकृता वागुद्यतद्द
वाक्येन या वागुद्यते साव्याकृतेति वाग्वदनानुवादेन व्याकर
गतत्वविधिप्रतीतिरनारभ्याधीतस्यापि चैषेति सर्वनाम्ना सन्नि
वैदिकवाग्वदनविषयत्वप्रतीतेर्लौकिकविषयत्वे च फलकल्पना
वापत्तेर्वैदिककर्माङ्गभूतव्रीह्यादिपदार्थव्यवहारार्थे लौकिकशब्दे
योक्तव्ये व्याकरणानुगतशब्दनियमात्तज्जन्यं यदवघातादिनिय
न्यापूर्ववत् शुद्धक्रत्वर्थमपूर्वं तदङ्गभूतेष्वेव व्रीह्यादिष्वाश्रितं,
न ब्राह्मणेन म्लेच्छितवाइति ज्योतिष्टोमप्रकरणाधीतापशब्दा
सामर्थ्यलभ्याद्यज्ञमध्यगतमुक्तभाषणाविषयात्साधुशब्दनियमा
तज्जघ्न्यमानन्यायेनापशब्दवर्जनस्य क्रतुयुक्तपुरुषधर्मत्वावधा
क्रतुसाधनीभूतपुरुषाश्रितमित्यर्थः । क्रत्वङ्गभूतानामपि पदार्थ
मङ्गत्वरूपेण यदभिधानं तदर्थं तद्विषयं यन्न भवतीत्यनङ्गत्वा
नार्थमित्युक्तम् । अपूर्वहेतोर्नियमस्याभिधानाविषयत्वमुपचा
पूर्वेऽभिहितम् । यद्वाङ्गभूतस्यापि यस्यानङ्गत्वेन प्राप्तत्वेनाभि
यस्य स अनङ्गत्वाभिधानो यजमानः तदर्थमित्यर्थः । उत्तरार्द्धं
२३५।१ चष्टे *प्रकरणेति* ननु जघ्न्यमानाधिकरणन्यायेन क्रतुयुक्त
संस्कारत्वसिद्धावपि ऋत्विजामपि संस्कारोपपत्तेः कथं
मानसंस्कारत्वावधारणेत्याशङ्क्य न्यायान्तरमुक्तं शुद्धक्र
ङ्गधर्मत्वेन क्रतुयुक्तपुरुषधर्मत्वेन च क्रत्वर्थस्य साधुभाषणनि
पूर्वस्याश्रयमुक्त्वा पुरुषार्थस्याह * पुरुषार्थेति * पुरुषार्थवाक्ये
प्रयोक्त्राश्रितं साधुभाषणनियमापूर्वमित्यन्वयः । कथमित्यपेक्ष
सम्यगित्यनेन सन्निधिः प्रमाणत्वेनोक्तः ज्ञानपूर्वकस्य प्रयोगस्या
हेतुत्वसूचनाय ज्ञातृग्रहणम् । अपूर्वजनिकायाः साधुभाषणक्रि
या जन्यस्य च स्वर्गस्य फलस्य च तदाश्रितत्वात्तदधीननिरूपण
पूर्वस्यापि तदाश्रितत्वं युक्तमिति योग्यतोक्ता यथा प्रधानयाग
ध्यमादिशब्दोपात्तत्वमारादुपकारकाङ्गसाध्यमपूर्वं प्रयोगकर्त्रा
मनुष्ठात्राश्रितमिति दृष्टान्तार्थः । ननु वक्ता तु भाषणे सर्व
नेन ब्राह्मणेनेति तृतीयया सुप्रयुक्त इति चोक्तिक्रियाया वक्तु
त्वावगमात्संस्कार्यत्वं निषिद्धमत आह * तृतीयेति * दृष्टान्तं
वृणोति * यथैवेति * यथा तृतीयानिर्दिष्टस्यापि शेषस्य भूतो

ोत्वाद्धविषु क्षारणेन प्रतिपाद्यिरूपः संस्कारः शेषधारणार्थपात्रा-
तराप्रयोजकत्वाय चतुर्थे वक्ष्यते । तथेहापि ब्राह्मणस्य ज्योतिष्टोम-
ाध्यफलोपभोगलक्षणकार्योपयोगित्वाद्वपनादिनेव फलग्रहणायो-
ग्यतारूपः संस्कारो भविष्यतीत्यर्थः । यद्वा वर्जनीयाया म्लेच्छन-
क्रियाया वपनादिवदेव यजमानकर्तृकत्वे सिद्धे तृतीयायाः कर्तृवि-
ानार्थत्वायोगेनानुवादमात्रार्थत्वात्तस्य चान्यतः सिद्ध्यपेक्षत्वात्
ागकर्तृत्वस्यैव च प्रकरणसिद्धत्वात्तद्विषयत्वेनेयं तृतीयाङ्ग-
ाव प्रतिवक्तुर्गुणत्वं ब्रूते न म्लेच्छत्वं प्रतीत्याह * यदि वेति
* पुरुषार्थवाच्ये तु कामिपदादेव स्वर्गकामादिवत्प्राधान्यलाभ इ-
याह * कामधुगिति * गोदोहनादिवदधिकृताधिकारशङ्कानिवृत्त्य-
र्थो वहिःशब्दः पूर्वार्द्धं व्याचष्टे * नैवेति * कथं तर्हि म्लेच्छति-
ान्वय इत्याशङ्क्याह * कुर्वतेति * यागगुणत्वं च व्रीह्यादिवत्सं-
स्कार्यत्वस्यानुकूलमेवेत्याह * याग इति * यागोपयोगिना ब्राह्म-
ेन संयुक्तस्य म्लेच्छनस्यारादुपकारित्वायोगात्संस्कारत्वमेव युक्त-
मित्यर्थः । ननूपयोगित्वे ऽपि ब्राह्मणस्य व्रीह्यादिवत्प्राधान्यावेदक-
द्वितीयाद्यभावात्कथं प्राधान्यावगतिरित्याशङ्क्याह * तच्चेति * उ-
पयोगितैव शेषस्वीकारसामर्थ्यात्प्राधान्याक्षेपिकेत्याशयः । उत्तरार्द्धं
व्याचष्टे * बाह्येति * साधुशब्दप्रयोगस्य फलसाधनतैवावगम्य-
माना प्रयोक्तुः फलभाक्त्वमाक्षिपतीत्याशयः । अनेन चानप्रस्थपदं
चात्र विद्यतइति परिहृतम् । यच्च न वेदोच्चारणमुच्चारयित्रर्थ-
मित्यनेनोच्चारणस्य पुरुषार्थापूर्वद्वारता न युक्तेत्युक्तं तत्परिहरति
* यद्यपि चेति * अन्यार्थाश्रितस्य निषेधस्यान्यार्थत्वे तदहर्मांसमै-
थुने वर्जयेदिति दर्शपूर्णमासप्रकरणाधीतं निषेधमुदाहरति * तथा
हीति * नियमस्यान्याश्रितस्यान्यार्थत्वे खादिरं वीर्यकामस्य यूपं
कुर्यादित्युदाहरणमाह * क्रत्वर्थादिति * ननु संयोगपृथक्त्वान्न
क्रत्वर्थत्वेनानुष्ठितस्य खादिरत्वस्य पुरुषार्थनियमाश्रयतास्तीत्याश-
ङ्क्योदाहरणान्तरमाह * भोजनाच्चेति * खादिरत्वरूपेणैक्यमभि-
प्रेत्य पूर्वोदाहरणं समर्थनीयमुपसंहरति * अतश्चेति * एवं चावे-
दमूलत्वादित्युपसंहारं दूषयति * अतश्चेति * यत्तु न चास्याः
शास्त्रता स्वयमित्युक्तं तदपि दूषयति * यच्चेति * नासन्नियमा-
दिति सूत्रोपन्यासेन कृतकत्वमशास्त्रत्वे हेतुरुक्त इत्यभिप्रेत्य * कृ-
त्रिमत्वेनेत्युक्तम् * प्रसिद्धिं दर्शयति * शास्त्रेति * यौगिकत्वे
ऽपि प्रसिद्धिमुपपादयति * अथापीति * किं च शब्दार्थस्य वृ-
द्धप्रयोगैकसमधिगम्यत्वेन तर्कविषयत्वाभावान्न तर्कैण शास्त्रत्ववा-

र्णं युक्तमिति प्रसङ्गापत्तेरित्याह *प्रसिद्धमपीति * श्लोकं व्या
* यथैव हीति * वेदातिरिक्तविद्यास्थानानां चाशास्त्रत्वमप्राम
र्थोच्यमानमङ्गीकृतप्रामाण्यवेदमूलत्वेन वार्येत वेदस्यैव त्वशा
स्त्वमप्रामाण्यं चोच्यमानं कथं वार्येतेति सोपहासं दृष्टान्तेन द
तुमाह * यो हीति * शुष्कं निष्ठुरं ननु पूर्वं व्युत्पादितेनेष्टा
प्राप्तिपरिहारसाधनोपदेशकत्वेन परतः प्रामाण्याद्यप्रामाण्यका
निरासेन च वेदस्याप्रामाण्यं वारयिष्यत इत्याशङ्कानिराकरणं स
यितुं मातापित्रोर्निष्ठुराभिधायिनोर्वारकान्तराभावे ऽपि तावेव
२३७।१ रकौ भविष्यत इत्याशङ्कां निरस्यति * परत्रेति * वेदवदितर
द्यास्थानानामपि प्रामाण्यस्य व्युत्पादितत्वान्न तदनादरेणेदं प्र
स्थानम् । तदवस्थितन्यायानादरे कश्चित्प्रतीकार इत्याशयः । दृष्टा
सूचितमर्थं प्रकटयति * तथेति* व्याकरणस्य वेदाङ्गत्वाद्धर्मशा
दिभ्यो ऽतिशयं सूचयितुं * साङ्गेनेत्युक्तम् * ननु व्याकरण
स्याप्रामाण्यं मयोच्यते न वेदस्य तेनायं वृथोपहास इत्याश
* क्रुद्ध इति * न चाङ्गीकृतेतरविद्यास्थानप्रामाण्यो व्याकरण
णस्याप्रामाण्यं वक्तुमर्हत्यविशेषादित्याह * श्रुतीति * यच्च न
स्मृत्यन्तरं किंचिदित्यनेन स्मृत्यन्तरसंवादाभावाद्व्याकरणाप्र
ण्यमुक्तं तदनुभाषणपूर्वकं परिहरति *यत्त्विति* ननु वर्णाश्रमध
देशित्वाभावे व्याकरणस्य स्मृतित्वाभावान्न तन्न्यायेन प्रा
स्यादित्याशङ्क्याह * स्मृतित्वं त्विति * पूर्वानुभवप
न्यनिमित्तस्मृतिशब्दो न वर्णाश्रमधर्मोपदेशित्वनिमित्त
शयः । स्मृतित्वाभावे ऽपि वा तत्तुल्यत्वस्मरणशास्त्रत्वा
ण्ययोः सिद्धिरित्याह * अथापीति * न्यायतुल्यत्व
तत्सिद्धिरित्याह * अपि चेति * न च मूलासम्भवात्स्मृति
याभावः मूलस्योपपादितत्वादित्याह * प्रमाणेति * दृष्टार्थ
यनफलत्वरूपेण सर्वप्रमाणमूलत्वम् । अदृष्टफलत्वरूपेण तु शा
लतेति विवेकः । मूलप्रमाणसम्भवे च व्याकरणान्तरमूलतापि
२३८।१ ष्यतीत्याह *एकस्य चेति* ननु पुंवाक्यमूलत्वे ऽन्धपरम्परा
स्यादित्याशङ्क्याह * असम्भावितेति * यच्च परस्परेण चाचा
स्यादिना ऽन्योन्यविगानादप्रामाण्यमुक्तं तदप्यनुभाष्य परिह
* यत्त्विति * श्रुतीनां च विगीतत्वे तन्मूलश्रुतीनामविगान
प्रामाण्यमापादयेदित्याह * विगीतेति * न चान्योन्यस
प्रामाण्यकारणं येन तदभावादप्रामाण्यं स्यादित्याह *
ति * उपसंहरति * परस्परेति * सिद्धं वस्तुनि वि

गाद्यथासम्भवाविषयं विकल्पाभिधानं न सर्वविगीतव्याकरणस्मृ-
त्विषयं विगानं च धर्माधर्मसाधनत्वविषयं वा स्यादन्वाख्यान-
षयं वा सूत्रप्रत्याख्यानसमाधानरूपं वा इष्ट्युपसंख्यानावापरूपं
त्र सूत्रकृतोऽपि प्रयोजनाभावाभिप्रायाभावमभिप्रेत्य धर्माधर्मसा-
नत्वे तावद्विगानं नास्तीत्याह * धर्मेति * यत्तु

सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्।
माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः॥

इत्याद्यन्वाख्यानविगानं तत्र ब्रूमः यदात्मानः सर्वेष्वेतेषु भिद्य-
इति तद्भूताधिकरणोक्तेन न्यायेन लक्ष्याणां सान्तनान्तादिशा-
ानां भेदादविरुद्धमित्याह * अन्वाख्यानेति * सूत्रप्रत्याख्या-
समाधानयोश्च तर्कमूलत्वात्तस्य चोच्चावचपुरुषबुद्धिप्रभवत्वेनाने-
त्वरूपत्वोपपत्तेर्न व्याकरणाप्रामाण्यापादकतेत्याह * पुनरुक्त-
गादिना हीति * हिशब्दोऽप्यर्थे वैदिकत्वाच्च मूलत्वे तस्यैकरूप-
ानानेकरूपप्रत्याख्यानाद्यानुपपत्तिः स्याच्च त्वेतदस्तीत्यर्थः। इष्ट्यु-
संख्यानयोरपि व्याकरणान्तरमूलत्वादधिकोपसंख्यानस्य च मू-
ोपसंख्यानाप्रामाण्यप्रसञ्जकत्वाच्च व्याकरणाप्रामाण्यापादकते-
ाह * ये चापीति * अल्पविषयत्वमात्रस्याप्रामाण्यकारणत्वाभावं
ष्टान्तेनोपपादयति * तद्यथेति * ननु सूत्रकारस्य प्रयोजनानभि-
ानात्तदभावाभिप्रायावगतेर्वार्त्तिककारादिभिश्च प्रयोजनाभिधाना-
द्गानमुक्तं तस्य कः परिहार इत्याशङ्क्यान्यानुभाषणपूर्वकं परिहा-
माह * यास्त्वति * वार्त्तिककृता शास्त्रेण धर्म्मनियम इति वदता
ाधुशब्दप्रयोगद्वारा धर्मसिद्धिः परं प्रयोजनमुक्तं भाष्यकृता चा-
ा शब्दानुशासनमिति वदता साधुशब्दज्ञानं साक्षात्प्रयोजनमुक्तं तत्र
स्तावद्वार्त्तिककारोक्तप्रयोजनानभिधाननिमित्तः सूत्रकारस्योपा-
म्भः कृतः स चोपालम्भनत्वस्यानर्हो समर्थः श्रुतिस्मृतिसिद्ध-
वनिबन्धनत्वात्प्रयोजनानभिधानस्य भाष्यकारोक्तस्य च लक्षण-
्रवणानन्तरमेव स्वसंवेद्यत्वेन सुज्ञानत्वादित्यर्थः। एकैकसूत्रेण
ाब्दाज्ञानात् * ग्रन्थान्तरइत्युक्तम् * धर्म्मसिद्धेः श्रुतिस्मृतिसिद्धत्वं
विवृणोति * सत्येति * कामधुगादिश्रुतेर्वर्त्तमानापदेशत्वेन फलप-
त्वस्य दुर्ज्ञानत्वात्साधुशब्दप्रयोगविधिपरत्वेनानभिमतापि सत्यव- २
वनविषया श्रुतिः स्मृतिश्चोपरिक्षिप्ता। ननु सत्यशब्दस्य लोक-
वेदयोरर्थविषयत्वप्रसिद्धेः शब्दविषयता न युक्तेत्याशङ्क्य प्रौढिवा-
देन पूर्वोक्तमेवोभयविषयत्वं स्मारयति * सत्यं चेति * नानृतं
वदेदित्यभिधानार्थत्वाद्वदतेरर्थाभिधानकालएवासाधुभाषणं प्रत्य-

वायहेतुर्नान्यदेति विनियोगकालविशेषणेनोक्तम् । साधुशब्दज्ञान
स्यानुभवसिद्धत्वं विवृणोति * शब्दसाधुत्वेति * उपसंहरति
तस्मादिति * शास्त्रेण सर्वशब्दान्वाख्यानस्य प्रयोजनं यत्स्व
सूत्रकृता नोक्तं तद्विज्ञायमानत्वाज्ञाभावाभिप्रायादित्यर्थः । नित्
सापेक्षत्वेनान्वाख्यानशब्दस्य समासाविघातः । यच्च सुज्ञानत
निरासाय सुज्ञानत्वं पुनरीदृशं येनाद्यापि विवदन्तइत्युक्तं तदर्
द्धमित्याह * न चेति * ननु मुख्यामुख्यप्रयोजनासम्भवेन निष्
योजनत्वस्य पूर्वपक्षे ऽभिधानाद् विवादो ऽस्त्येवेत्याशङ्क्याह * स
व त्विति * प्रयोजनप्रस्तावे तीर्थिकान्तरविप्रतिपत्तावपि सूत्रक
राभिप्रेतत्वे विप्रतिपत्त्यभावान्न सूत्रकारस्य स्वतीर्थिकैः सह विर
तवचनत्वं भवतीत्याशयः । यच्च धर्म्मश्च फलसम्बन्धमित्यनेन धर्
स्य वार्त्तिककृता प्रयोजनत्वेनोक्तस्य व्याकरणे ऽनुपदेशान्निष्प्रयो
नत्वं व्याकरणस्योक्तं तत्परिहरति * धर्म्मायेति * नियमः प्रय
जनत्वेनोक्तो न धर्म्मस्वरूपमित्यर्थः । ननु नियमो ऽपि धर्मार्थं स
धुशब्दा एव प्रयोक्तव्यास्त एव वा श्रेयःसाधनमित्येवं रूपो न व्या
रणेन क्रियतइत्याशङ्क्याह * वेदेति * एत एव साधव इत्येवं रू
नियमो व्याकरणाधीन इत्यर्थः । नन्वाचारे नियम इत्यादिवार्त्ति
पर्यालोचनया प्रयोगनियमो ऽत्र विवक्षितो गम्यते न स्वरूपनिः
इत्याशङ्क्याह * नियमेति * प्रयोगनियमनिरपेक्षस्य स्वरूपनि
मस्यानर्थक्यात्तन्निरपेक्षस्य चेतरस्य सिद्धेर्नियमद्वयमपि व्याक
णस्य प्रयोजनमित्यर्थः । तत्राद्यो वेदासिद्धत्वान्न व्याकरणेन क्रिय
इत्याह * साध्विति * तदा च शास्त्रेण धर्म्मनियम इति वार्
ककृतः शास्त्रशब्दो वेदविषयतया व्याख्येय इत्याह * अतश्चेति
इतरस्तु व्याकरणाख्येन शास्त्रेण क्रियतइत्याह * तथेति * धर्
शब्दश्चास्मिन्पक्षे श्रेयःसाधनत्वात्साधुशब्दप्रयोगविषय इत
* तेनेति * येन कारणेन व्याकरणाद्विना साधुस्वरूपनियमं
सिध्यति तेन वेदावगतः सम्यग्ज्ञातस्य साधोः शब्दस्य प्रयोगा
को यो धर्म्मस्तदर्थत्वेनायमेव नित्यो वाचकः शब्द इति नियत
रूपज्ञानं क्रियतइत्यर्थः । नियमे कारणीभूतस्य शास्त्रस्येतिकर्त्त
पेक्षायां व्याकरणगता प्रकृतिप्रत्ययान्वाख्यानप्रक्रियेतिकर्त्तव्यता
यद्वा व्याकरणेन स्वरूपनियमः किमर्थं क्रियते का वेतिकर्त्तव्य
त्यपेक्षायामियं फक्किकावतारणीया तदा च तेन व्याकरणेनेत्यर्
यदपि धर्म्मत्वं यच्च विज्ञानशास्त्रपूर्वप्रयोगयोरित्यादिना ऽनवस्थि
शास्त्रार्थाभिधानं व्यवस्थिताभिप्रायत्वे च भाष्यवार्त्तिकयोर्वि

मुक्तं तदप्यनुभाषणपूर्वकं परिहरति * यच्चेति * यच्च ज्ञाने धर्म्म इति चेदिति वार्त्तिकेन शब्दसाधुज्ञानस्य धर्म्मत्वपक्षमुपन्यस्य तथाधर्म्म इत्यनेन दोषमभिधाय शास्त्रेत्यनेन शास्त्रपूर्वस्य प्रयोगस्य श्रेयःसिद्ध्युपायत्वे कात्यायनेनावधारिते भाष्यकारेण तदेव व्याख्याय पुनः परावृत्य अथ वा पुनरस्तु ज्ञाने धर्म्म इति यदुक्तं तदभ्युपेत्य वादमात्रमुक्तमित्यन्वयः। विगानावस्थिताभिधानयोरप्यनुवादद्योतनार्थं यच्च यत्पुनरिति यच्छब्दद्वयं को दोष इत्यपेक्षायामपशब्दानामपि ज्ञानादधर्मापत्तेर्दोष इति द्वेषेण वार्त्तिकव्याख्योक्ता यथा व्याकरणाच्छब्दज्ञानं भवत्येवमपशब्दज्ञानमपीत्यपिशब्दो योज्यः अधर्म्मत्वापत्तिरिति च शब्दार्थं न विद्मः। शब्दानुशासनार्थाद्व्याकरणात्कथमपशब्दज्ञानमित्याशङ्क्य साध्वसाधुविवेकार्थत्वे व्याकरणस्य तन्त्रेण साध्वनुशासनमात्रार्थत्वे * प्रसङ्गेनेत्युक्तम् * किमर्थो ऽभ्युपेत्यवाद इत्यपेक्षायाम् * पूर्वोक्तेत्युक्तम् * अत्र भाष्यकृता नैष दोषः शास्त्रप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणं शब्दश्च शब्दज्ञाने धर्म्ममाह नापशब्दज्ञाने अधर्म्मं यच्च पुनरशिष्टाप्रतिषिद्धत्वान्नैव दोषाय भवति नाभ्युदयाय तद्यथा हिक्कितहसितकण्डूयितानि नैव दोषाय भवन्ति नाभ्युदयायेति भाष्येणापशब्दज्ञानस्यानिषिद्धत्वान्न म्लेच्छाभाषां शिक्षेतेति निषेधस्य बर्बरादिभाषाविषयत्वान्नाधर्म्मापत्तिरित्येकं परिहारमुक्त्वा ऽथ वा ऽभ्युपाय एवापशब्दज्ञानस्येत्यादिभाष्येणासङ्कीर्णशब्दज्ञानस्य प्रतियोग्यपशब्दज्ञानस्येत्यादिभाष्येणासङ्कीर्णशब्दज्ञानस्य प्रतियोग्यपशब्दज्ञानाधीनत्वात् धर्मसाधनतैवेति परिहारान्तरमुक्त्वा ऽथ वा कूपखानकवदेतद्भविष्यतीति तद्यथा कूपखानकः कूपं खनन्यद्यपि मृदा पांसुभिश्चावकीर्णो भवति सो ऽप्सु सञ्जातासु तत एव तद्गुणमासादयति येन स च दोषो निर्हण्यते भूयसा चाभ्युदयेन युज्यते एवमिहापि यद्यप्यपशब्दज्ञाने ऽधर्म्मस्तथापि यस्त्वसौ शब्दज्ञाने धर्म्मस्तेन स च दोषो निर्घानिष्यते भूयसा चाभ्युदयेन योगो भविष्यतीति भाष्येणोत्पन्नस्याप्यधर्म्मस्य साधुशब्दज्ञानजनितधर्म्मेण निर्घातादद्दोष इति तृतीयपरिहाराभिधानात् पूर्वोक्तस्य दोषस्य परिहारत्रयसामर्थ्यप्रदर्शनार्थं च ज्ञायत इत्यर्थः। ननु परमार्थत. शब्दज्ञानस्य धर्म्मेहेतुत्वाभावात्परिहारत्रयमप्येतदनर्थकमित्याशङ्क्य * कृत्वा चिन्तान्यायेनेत्युक्तम् * नन्वयमपि पक्षो ऽभिमतः कस्मान्न भवतीत्याशङ्क्याह * परमार्थतस्त्विति * ज्ञानमात्रस्य श्रेयोहेतुत्वे तत्पूर्वकस्य प्रयोगस्यानर्थक्यप्रसङ्गेन ज्ञानस्य च स्वभावतो विज्ञानेन पारार्थ्येना-

पादितमर्थवादत्वं यस्याः फलश्रुतेः सा तथोक्ता अर्थवादत्वादिति पाठे त्वापादितार्थवादत्वादिति कर्मधारयः । सदृष्टान्तमन्यानर्थक्यप्रसङ्गमुपपादयति * यथेति * किं तर्ह्यालम्बनं फलश्रुतेरित्याशङ्कां निराकुर्वन् प्रकृतमुपसंहरति * तस्मादिति * देवो ऽत्र वर्षति तण्डुलानित्यत्र यथावर्षणसाध्यस्य निष्पत्त्यादिकार्यपरम्परागततण्डुलफलत्वं वृष्टावुपचर्यते तथात्रापि प्रयोगफलं तत्कारणे ज्ञानइत्यर्थः । ननु सम्यग्ज्ञात इति प्रथमश्रुतत्वेन ज्ञानस्यैव फलवत् प्रतिपत्तेः सुप्रयुक्तपदस्य च सुष्ठु प्रयोगार्हो यथा सम्यग्ज्ञात इत्येवं सम्यक्त्वाव्याख्यानार्थत्वेनाप्युपपत्तेः फलपरत्वाभावादानर्थक्यप्रसङ्गं नास्तीत्याशङ्क्य कारणान्तरमुपन्यस्तं विवृणोति * द्रव्येति * द्रव्यादिनयाविषयाया एव फलश्रुतेः पारार्थ्यहेतुकार्थवादत्वाभिधानाच्छब्दज्ञानस्य क्वान्तर्गतिः संस्कारान्तर्गतावपि कस्य संस्कार इत्याशङ्काद्वयं निराकर्तुं ज्ञातुः पुरुषस्य ज्ञेयस्य वा * शब्दस्य संस्कार इत्युक्तम् * शब्दज्ञानस्य संस्कारत्वं पारार्थ्यं चोपपादयितुमाह * सर्वत्रैव हीति * संस्कारस्यापि चूडाकरणाधानादेः संस्कार्यसाध्यकर्मार्थत्वाभावात्तेन च विना फलश्रुतेरर्थवादत्वाभावात् * पराङ्गं चेत्युक्तम् * पुरुषार्थस्यात्मज्ञानस्य पराङ्गत्वाभावात् * ततो ऽन्यत्रेत्युक्तम् * इतिकरणः संस्कारत्वपारार्थ्यत्वभावत्वपरामर्शार्थः संस्कारत्वपारार्थ्यत्वभाव्यावधारणाद्यस्मात्सर्वत्र ज्ञानं संस्कारत्वेन पराङ्गत्वेनावगम्यते तस्माच्छब्दज्ञानमपि तथेति हिशब्दो योज्यः । ननु सम्बन्धग्रन्थे कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यत इत्यत्रादर्थवादाधिकरणे च क्रत्वर्थकर्तृप्रतिपादनेनोपनिषदां नैराकाङ्क्ष्यमित्यत्रात्मज्ञानस्य क्रत्वर्थाभिधानात् किमित्यत्र वर्जनमित्याशङ्क्याह * आत्मज्ञानं हीति * अविनाशी वा अरे अयमात्मा ऽनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवतीति मात्राशब्देन भूतेन्द्रियधर्माभिधानात् शरीरादिव्यतिरिक्तसंसारीकर्तृभोक्तृनित्यात्मप्रतिपादनपूर्वकस्यात्मा वा अरे द्रष्टव्य इत्यात्मज्ञानविधेः कैमर्थ्याकाङ्क्षायां फलश्रुतेर्दृष्टसम्भवे चादृष्टकल्पनानुपपत्तेर्योग्यतया कर्मप्रवृत्तिसिद्ध्यर्थत्वावसायादनारभ्याधीतस्यापि च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति श्रुत्योपनिषच्छब्दवाच्यस्यात्मविज्ञानस्य क्रत्वर्थत्वं युक्तम् । अत एवात्मा ज्ञातव्य इत्येतन्मोक्षार्थं, न च चोदितमित्येतच्छब्दप्रयोगेण संसारिरूपात्मज्ञानस्यैव मोक्षार्थत्वनिरासेन कर्मप्रवृत्तिहेतुतोक्ता असंसारिरूपात्मज्ञानस्य तु कर्म्मप्रवृत्त्यर्थत्वायोगात्पुरुषार्थतैव युक्तेत्याशयः । नन्वात्मनो लो-

कवेद्साधारण्येन क्रत्वव्यभिचाराभावात्कथं तज्ज्ञानस्य क्रत्वर्थे-
वावसाय इत्याशङ्क्याह * तेन विनेति * अयमाशयः लौकिक-
र्माङ्गत्वव्यावृत्त्यर्थं क्रत्वव्यभिचारोद्धारस्याकाङ्क्षत्वेनाहष्टार्थे लौ-
ककर्मप्रवृत्तेश्च शरीरादिव्यतिरिक्तानित्यात्मज्ञानं विनापि सिद्धेः
ाकाङ्क्षान्वयसम्भवे च निराकाङ्क्षान्वयायोगाल्लौकिककर्माङ्ग-
त्व्यावृत्तिरैकान्तिकद्वाराभावे ऽपि सिध्यति अत एव परलोकफ-
कर्मविध्यन्यथानुपपत्त्या सामान्यसम्बन्धस्य क्लृप्तत्वाल्लौकिक-
ानियोगाविरोधः यद्वोपकारकत्वमात्राभिप्रायको ऽर्थवादः । अत
व निषिद्धकर्मनिवृत्त्यर्थत्वसूचनार्थो निवृत्तिशब्दो घटते निषिद्धक-
ङ्गत्वे त्वात्मज्ञानस्यानात्मज्ञेन कृतं ब्रह्महत्यादिकं वैगुण्यान्न प्रत्य-
ायं जनयेत् इति इह तु पुरुषार्थत्वं कर्तृत्वभोक्तृत्वादिसंसारिरू-
ात्मज्ञानस्योच्यते तस्य च क्रत्वर्थत्वायोगादाकाङ्क्षावशेनार्थवादि-
फलकल्पना युक्तैवेति दर्शयितुमाह * तथेति * पापजरामृत्यु-
ोकक्षुत्पिपासाराहित्यकाम्यमानफलप्राप्तिप्रयत्नानपेक्षसङ्कल्पमा-
ाधीनसिद्धिरूपगुणविशिष्टात्मप्रतिपादनपूर्विकया ऽन्वेष्टव्यः स
ाजिज्ञासितव्य इति श्रुत्या वेदान्तवाक्यार्थविचारणात्मकजिज्ञा-
ासहितस्य तदवधारितात्मरूपार्थानुचिन्तनाख्यान्वेषणात्मकस्या-
हतपाप्मत्वादिगुणविशिष्टात्मज्ञानस्य विधानं, यच्च मन्तव्यो बोद्धव्य
ते श्रुत्या न्यायविमर्शनात्मकमननसहितस्य तन्निर्द्धारितात्मरूपसा-
त्काराख्यबोधात्मकस्य सगुणात्मज्ञानस्यैव विधानं यद्यात्मानमु-
सीतेति श्रुत्या केवलनिर्गुणात्मविषयावबोधपर्यन्तस्य स्पष्टस्याप-
क्षरूपस्यात्मतत्त्वज्ञानस्य विधानं तदपेक्षितस्य वाक्यान्तरोपात्तस्य
विधस्याभ्युदयरूपस्य निश्रेयसरूपस्य च फलस्य सम्बन्धः काम-
दलोकवादवचनविशेषैर्ज्ञायतइत्येवं क्रत्वर्थे पुरुषार्थत्वेन ज्ञायत-
ातत्फक्किकागतपदानुषङ्गेण योज्यं श्रुतिभेदज्ञापनार्थः पुनस्तथाश-
: । सगुणात्मज्ञानविध्यपेक्षिताभ्युदयरूपफलं सम्बन्धज्ञापकं का-
ादं तावदुदाहरति * स सर्वांश्चेति * लोकावाप्तेः कामोपभो-
र्थत्वेनैकवाक्यत्वायाभिधानात्कामवादो ऽयमभिप्रेतः तद्विषयमेव
कवादमुदाहरति * तथेति * पितृलोकेन मातृलोकेन भ्रातृ- २४
केन स्वसृलोकेन सखिलोकेन गन्धमाल्यलोकेन यानलोकेन
ीतवादित्रलोकेन स्त्रीलोकेन सम्पन्नो महीयतइति जनका-
भिः सुखसाधनयोग्यत्वेन लोकशब्दवाच्यैः सम्पत्त्यभिधाना-
लोकवादो ऽयमभिप्रेतः एतच्च जनकादिसम्पत्तिव-
। यं कामं कामयते सो ऽस्य सङ्कल्पादेव समुत्तिष्ठतीत्युप-

संहारादष्टगुणैश्वर्यसिद्ध्यभिप्रायं न स्वर्गकामादिश्रुतिवन्नि
लपरमिति दर्शयितुम् * योगजन्येत्युक्तम् * योगबलात्परमा
तिसूक्ष्मता पर्वतवन्महत्त्वं सूर्यरश्म्यवलम्बनादिरूपं लाघवं
चन्द्रस्पर्शादिरूपप्राप्तिः । अप्स्विव भूमावुन्मज्जनमित्यादी
नभिघातः । प्राकाम्यं भूतभौतिकाज्ञापयितृत्वरूपमीशित्वम् ।
भौतिकानां तदाज्ञसाचरणं वशित्वं अनाज्ञप्तानामेव तदिच्छानु
वृत्तित्वं कामावसायितेत्यर्थो गुणाः अणिमा महिमा लघिमा
प्राकाम्यमित्यपि ईशित्वं च वशित्वं च यत्र कामावसा
स्मृताः सगुणात्मज्ञानफलप्रतिपादकं कामवादं लोकवादं चोव
निर्गुणात्मज्ञानविध्यपेक्षितनिश्रेयसरूपफलप्रतिपादकं वचनवि
मुदाहरति * तथेति * लोकात्मकब्रह्मप्राप्तिरूपस्य फलस्याक्ष
भिधानाद्वचनविशेषो ऽयमभिप्रेत इत्यपुनरावृत्त्यात्मकपरमात्मप्र
वसायस्य फलस्य वचनमित्यनेन सूचितं स्थानविशेषात्मकलो
र्मजन्यत्वेनाक्षयत्वानुपपत्तिमाशङ्क्य परमात्मैव ब्रह्मशब्दवाच्य
रमानन्दोपभोगे हेतुत्वात्कर्म्मधारयसमासाश्रयणेन लोके विव
तत्प्राप्तेश्च शरीरसम्बन्धोपाधिककर्तृभोक्तृत्वात्मकसंसारिरूपा
परित्यागेनाकर्तृभोक्तृत्वात्मकासंसारिरूपनिजावस्थात्मकत्वेना
त्वाद्युक्तमक्षयत्वमिति सूचयितुम् * परमात्मेत्युक्तम् * अ
धिकरूपाभिप्रायः परमशब्दः पूर्वकृताशेषबन्धहेतुकर्म्मक्षयाद्वा
सारिरूपप्राप्तौ कर्तृत्वाभावेन कर्म्मान्तरानुपपत्तेः पुनर्भवास
नापुनरावृत्तेः प्राप्ताया अनुवादात्तत् फलं तदक्षयत्वरूपार्थद्व
धाननिमित्तवाक्यभेदापत्तिरिति सूचयितुमपुनरावृत्तेर्ब्रह्मप्राप्ति
निरासायापुनरावृत्त्यात्मकतोक्ता कामवादलोकवच्चनविशेषजिज्ञ
मनःसहितेति पाठेत्वेवं व्याचक्षते कामः सत्यकामत्वं वादः सत्य
लोकः सूर्यमण्डलाद्युपासनस्थानं वचनविशेष उपदेष्टृत्वं कामादि
मनःपर्यन्तैः सहितस्यात्मनो ज्ञानमित्यवान्तरसमासार्थः।केन वा
न्तरेणाऽभ्युदयरूपं फलमुपात्तमित्यपेक्षायां वाक्यद्वयमुदाहृतं
यसरूपं केनोपात्तमित्यपेक्षायां स ब्रह्मोपासको यावदायुषमेवं
वृत्तिमाचरन् कुर्वंल्लोकात्मकं ब्रह्माभिसम्पद्यतइतिवाक्यमुदाहृत
न्वासां फलश्रुतीनां पर्णमयीन्यायेनार्थवादत्वस्य सम्बन्धग्रन्थे
हितत्वान्न फलसमर्पकत्वं युक्तमित्याशङ्क्याह * अप्रकरणगतो
अयमाशयः पारार्थ्ये निर्ज्ञाते फलश्रुतेरर्थवादत्वं भवति
रणाच्च यदङ्क्ते वज्र एव भ्रातृव्यस्य अङ्क्तइत्यञ्जनस्य पारार्थ्यं नि
तं यस्य खादिरः स्रुवो भवति छन्दसामेव रसेनावद्यतीति च

स्वर्थेऽव्यभिचारिस्रुवादिद्वारा खादिरत्वादेः। न चात्मज्ञानं प्रकरणा-गतं, न चात्मनो द्वारभूतस्यैकान्तिकः स्वाभाविकः क्रतुसम्बन्धोऽस्ति शरीरसम्बन्धोपाधिकत्वात्कर्तृत्वस्याशरीररूपात्मज्ञाने तदभावादि-ति। न च संसारिरूपात्मज्ञानस्य मोक्षसाधनत्वे तस्मिन्सति कर्म्मसु प्रवृत्त्ययोगाद्यदू बृहट्टीकायां ननु निःश्रेयसज्ञानात् बन्धहेतोर्न कर्म्मण इत्याशङ्क्य नैकस्मादपि तत् किं तु * ज्ञानकर्म्मसमुच्चयादित्यु-क्तम् * तद्विरुध्यतेत्याशङ्क्याह * न चेति * सत्यपि ज्ञाने नित्य-नैमित्तिककर्म्मानुष्ठानं विना पूर्वकृतदुरितक्षयायोगादकरणनिमि-त्तानागतप्रत्यवायपरिहारायोगाच्च तत्फलोपभोगार्थं बन्धप्रसक्तेर्मो-क्षायोगात्कर्म्मनाशार्थत्वेन च(ज्ञानविध्यनुपलब्धेर्ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुनेत्यादिस्मृतेश्चौपचारिकत्वेनोपपत्तेः सम्बन्धग्रन्थे ज्ञानस्य कर्मनाशकत्वनिषेधाच्च) ज्ञानस्य मोक्षसाधनतया विधानेन कर्मणो मोक्षसम्बन्धो वार्यते। न चासंसारिरूपात्मज्ञानपरिपाकात् प्राक्कर्तृभोक्तृत्वाभिमानानिवृत्तौ कर्मसु प्रवृत्त्यनुपपत्तिरिति विधा-नशब्देन सूचितम्। परिपक्वेन ज्ञानेनात्मनः कर्म्मसम्बन्धः कर्तृत्वं वार्यते विधानावस्थायाङ्कर्तृत्वाभिमानानिवृत्तौ नियोज्यत्वासम्भवा-द्विधानानुपपत्तिरित्याशयः। एतदेव विवृणोति * प्रत्याश्रमेति * त्वेवमपि।

मोक्षार्थी न प्रवर्त्तेत तत्र काम्यनिषिद्धयोः।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया॥

इत्यनेन न्यायेन काम्यनिषिद्धवर्जनात्तत्फलोपभोगार्थं शरी-रानुत्पत्तेर्नित्यनैमित्तिकानुष्ठानाच्च तदकरणनिमित्तप्रत्यवायफलो-पभोगार्थं शरीरानुत्पत्तेर्ज्ञानवाक्यानां चौपचारिकव्याख्यानोपपत्तेः कर्म्मणा ज्ञानं बाध्यतां तुल्यबलत्वाद्वा विकल्पोऽस्तु, विरोधपरिहा-राय चाङ्गाङ्गिभावः कल्प्यतां न तु निरपेक्षविहितयोः समुच्चयो युक्त इत्याशङ्क्याह * न चेति * अयमाशयः अवान्तरकार्यैक्ये सति बाधो विकल्पो वा स्यादिह तु कर्म्मणां पूर्वकृतपापनाशावश्यवि-हिताकरणनिमित्तपापपरिहारप्रयोजनत्वान्निर्गुणात्मज्ञानस्य च तत्त्व-प्रकाशनप्रयोजनत्वान्नावान्तरकार्यैक्यमस्ति। न च बन्धहेतुकर्म्मक्ष-यान्मोक्षसिद्धेस्तत्त्वप्रकाशनानर्थक्यं शङ्क्यं सत्यपि पूर्वकृतकर्मक्षये कर्तृत्वभोक्तृत्वाभिमानानिवृत्तौ निर्व्यापारत्वानुपपत्तेरवश्यं कस्य चिद्बन्धहेतोः कर्म्मणः प्रसङ्गात्तं निवृत्त्यर्थं कर्तृत्वभोक्तृत्वाभिमा-नानिवृत्तेरपेक्षितायास्तत्त्वप्रकाशनं विनानुपपत्तेः। एतदेवाभिप्रेत्य सू-

१ अयं पा० २ पु० ना०।

हट्टीकायामुक्तम् ।

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयन् ॥
वैराग्यात्पक्वविज्ञानः कैवल्यं भजते नरः ।

इति अतो ऽवान्तरकार्यभेदान्न तावद् बाधविकल्पौ जीवानादि त्ववतश्च कर्मस्वधिकारान्मुमुक्षोश्च ज्ञानाधिकारादधिकारिभेद णाद्भिन्नमार्गत्वान्नाङ्गाङ्गीभावः सम्भवतीति पारिशेष्यात्समुच्च युक्त इति। नन्वात्मज्ञानवच्छब्दज्ञानस्यापि फलसम्बन्धः कस्मा अत आह ※ शब्देति ※ यच्चादिमत्वाच्च धर्मत्वं नैतज्ज्ञान गयोरित्यनेनादिमद्व्याकरणाधीनस्य ज्ञानस्य तत्पूर्वकस्य वा प्र स्यानादिना वेदेन फलसाधनत्वं वक्तुं न शक्यमित्युक्तं तदप्य षणपूर्वकं परिहरति ※यत्त्विति※व्याकरणपरम्परानादित्वं वा द्विवेदविषयत्वान्यथानुपपत्त्या कर्तृस्मृत्या च पौरुषेयत्वावगा सीयतइत्याह ※ तस्मादिति ※ यत्तु व्याकृता सम्प्रदायेन नित्यैव वैदिकीत्युक्तं तन्निराकरोति ※ न चेति ※ वैदिक्या शुद्धारणार्थत्वाव्यवच्छेदायोद्यतइत्येतावदुक्तव्यम् । अव्याकृत प्रसक्तेस्तु व्याकृतोक्तिर्निष्फला स्यादित्यर्थः ।

अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
श्रोत्रियाश्च यजानाश्च विज्ञेयाः पङ्क्तिपावनाः ॥

इति च मनुप्रोक्तवेदत्वस्य पूर्वोक्तत्वाद्यश्च मीमांसते ऽध्व ति च यज्ञमीमांसनस्य पश्चादुक्तत्वाद्यश्च व्याकुरुते वाचमिति करणस्य पङ्क्तिपावनत्वापादकत्वाभिधानं प्रकृतिप्रत्ययान्वाख्य रूपव्याकरणविषयं न तु स्वरवर्णमात्रा कर्माविप्लुतिरूपवैदिक व्याकरणविषयम् । नाप्युद्दिश्यमानोपादीयमानगुणप्रधानादि वचनव्यक्तिव्याकरणविषयमित्यवधारणात्तस्य च वेदपूर्वत्व त्वानित्यसंयोगपरिहाराय नित्यत्वं व्याकरणस्याध्यवसीयतइ ※ यदपि चेति ※ तदशक्तिश्चानुरूपत्वादिति सूत्रं भाष्यकृता यदुक्तमित्यादिभाष्येण गाव्यादिशब्दस्य शक्त्या विना कथम तिपादकतेति शङ्कानिराकरणार्थत्वेन व्याख्यातं तच्च यथाप्रकृति रूप्यद्वारेणापभ्रंशाः प्राकृतामेव शक्तिमाविर्भावयन्तो ऽर्थप्रतिप वुपयोगं गच्छन्ति तथा तदशक्तिश्चानुरूपत्वादित्यत्र वर्ण्यते इ नैव प्रतिपादनप्रकारविशेषाभिधानार्थतया व्याख्यातत्वान्नेह व ख्यातम् । एकदेशत्वाच्च विभक्तिव्यत्यये स्यादिति सूत्रान्तरमा पवेत्यादिभाष्येणैवं गाव्यादिशब्ददर्शनादिति दार्ष्टान्तिके योज

ाब्दस्य साधुशब्दानुस्मारणेनार्थप्रतिपादकत्वे दृष्टान्ताभि-
ा व्याख्यातमिति प्रतीतेः स्पष्टत्वान्न व्याख्यातम्।

॥ लोकवेदयोः शब्दार्थैक्याधिकरणम् ॥ १० ॥

॥ आकृतिशक्त्यधिकरण वर्णकान्तरारम्भश्च ॥

## योगचोदनाभावादर्थैकत्वमविभागात् ॥ २६

त्र भाष्यकारेणाथ गौरित्येवमादयः शब्दाः किमाकृतेर्वा-
तो वाच्यार्थे प्रमाणमुत व्यक्तेरिति गवादिविशेषणोपा-
र्वशब्दानामेतद्विचारविधेयतेति सूचितं तत्र केषां शब्दानां
ावक्षितेत्यपेक्षायां जातिशब्दानामेवोदाहरणत्वमङ्गीकृत्य
क्तानां व्यावृत्तिरिति दर्शयितुमाह * इहेति * आख्या- २४२।२
य द्वितीयाद्ये विचारयिष्यमाणत्वान्निपातोपसर्गाणां च
ाभिधायकत्वाभावान्नामान्येवेहोदाहरणत्वेन गृह्यन्ते ते-
ड्विधानां मध्ये शुक्लादिगुणानामेतयैव दिशा वाच्या शु-
नित्यतेत्यादिवार्त्तिकोक्तन्यायेनावान्तरभेदाभावेन गुणा-
जातिवाचित्वायोगात् क्रियाणामप्यर्थप्रत्यक्षे नित्य एवेति
ान्तरभेदस्य संख्याभावसूत्रे निराकृतत्वेन यागादिशब्दा-
ातिवाचित्वायोगात्पाकाद्येकोपाधियोगेन वा ऽनेकत्र पा-
काकारे प्रत्ययोपपत्तेः। पाचकत्वादिजात्यभावेन तच्छ-
जातिवाचित्वायोगाद्देवदत्तादिशब्दानां च सङ्केतितार्थ-
चित्वात्सर्वनामशब्दानां च सन्निहितार्थविशेषवाचित्वा-
ानामेवात्रैवमादय इति सादृश्यवचनेनैव शब्देनैवोदाहर-
ातमित्यर्थः। परमतेन चैतदुक्तं स्वमते तु ततः शुक्लादित-
णेषु प्रतितिष्ठतीत्यादिना गुणकर्म्मणाप्यवान्तरभेदाभ्युप-
ार्थं विना पौनरुक्तस्य चोत्तरप्रस्थाने परिहरिष्यमाणत्वात्
शब्दानामप्याख्यातानामपि चोदाहरणत्वमस्त्येव तथाचो-
ाप्यव्याख्याने गवादिशब्दग्रहणं सर्वनामाख्यातशब्दानाम-
मिति वक्ष्यति। नन्वेवं सति जातिशब्दा इत्येव स्पष्टत्वा-
निर्देशः कार्यो गोशब्दोदाहरणं तु किमर्थमित्याशङ्क्य पू-
ा गोशब्दस्य गाव्यादिशब्दव्युदासेन साधुत्वाभिधानात्क-
तस्य साधुतेति प्रासङ्गिकी, सङ्गतिसूचनार्थं तदुदाहरण-
ायितुमाह * तेषामपीति * गोशब्दमुदाहृत्य यद्विचार्यते
करणोदाहरणेन सहैतदधिकरणोदाहरणस्यैकत्वं सङ्गति-
दर्शयितुमित्यर्थः। ननु पदार्थानुपदप्रामाण्यस्य शब्दे निरा

कृतत्वात्किमाकृतेः प्रमाणमित्ययुक्तमित्याशङ्कावाचकव्यतिरे
निते षष्ठ्या विनैव प्रामाण्यव्यतिरेकजनिते इति व्याख्यातुमा
किं पुनरिति * किमाकृतेर्वाचकाः सन्तो वाक्यार्थे प्रमाणमथ
क्तेरिति व्याख्या अनेनोक्ता व्यक्त्याकृतिवाचित्वसन्देहमुप
न्यत इत्यादिभाष्येण मध्ये चिन्तान्तरं कृतं तत्किमर्थमित्या
प्रकृतिचिन्तोपोद्घातार्थत्वमाह * तत इति * न निर्णयार्थं
कापि चिन्ता कर्तुं शक्या न च निष्फला प्रतितिष्ठति लौकिक
कशब्दार्थभेदे च वैदिकशब्दार्थचिन्ता निरुपाया लौकिकश
चिन्ता च निष्फला स्यादित्याशयः । नन्वेवं सति प्रतिपदाधिक
दिवत्प्रकृतचिन्तामनुपक्रम्यैवोपोद्घातचिन्ता कस्मान्न कृते
ङ्गानन्तराधिकरणासङ्गतिप्रसङ्गादिति दर्शयितुम् * तत इत्यु
प्रतिपदाधिकरणादौ तु नानन्तरसङ्गत्यपेक्षाध्यायादित्वादित्य
ततो व्यक्त्याकृतिवाचित्वसन्देहोपन्यासानन्तरं वक्ष्यमाणं पूर्व
दिसांन्यासिकं त्यागार्हं कृत्वा सम्प्रतीदं तावद्विचार्यतइत्यन्व
त्यागार्थात्सन्न्यासप्रातिपदिकात्तदर्हतीत्यस्मिन्नर्थे ठगुत्पत्तेः
न्न्यासिकपदव्युत्पत्तिः अहिताशङ्कानिराकरणार्थस्तुशब्दः । कि
एवेति शब्दविषयं किं तएवेति चार्थविषयं सन्देहभाष्यद्वयं
व्याख्यातुम् * किं यएवेत्युक्तम् * उपायफलसिद्ध्यर्थत्वं प्र
विवृणोति * आहेति * शब्दग्रहणमर्थानामप्युपलक्षणार्थम्
व्यक्त्याकृतिविचारफलोपाययोर्भिन्नविषयत्वे ऽपि लौकिकवैदि
ब्दार्थैकत्वे यत्नः किमर्थ इत्यपेक्षायामाह * यदीति * एतस्य
क्त्याकृतिसन्निधानचिन्ताया इति हेतौ पञ्चमी एतच्छब्दो वेद
त्वद्योतनार्थः । निर्णयोपायव्याख्यानार्थम् * वृद्धेत्युक्तम् * ज
भिधेयत्वं व्यक्तेरनभिधेयत्वमिति निर्णयः नान्यथेति शेषः ।
न्यत्वे ऽपि लोकविषयैषा चिन्ता भविष्यतीत्याशङ्काह * अ
त्विति * शङ्कानिराकरणार्थस्तुशब्दः प्रयोजनाभावमुपपा
२४३।२ * सम्मूर्छतीति * आशङ्काभिप्रायमनूद्य निराकरोति * यदी
नन्वेवं तर्हि वेदविषयैव चिन्तान्यत्वे ऽपि यूपादिशब्दनिर्णयोपा
सम्भवात्सेत्स्यतीत्याशङ्काह * स्यादिति * वृद्धव्यवहारस्थाने
प्रयोगानुसरणमेवाकृतिवाचित्वनिर्णयोपायो न यूपादिवद्वचनव
विपर्ययाश्रयणादित्याशयः । अतः शब्दार्थान्यत्वे एकाङ्गवि
त्वाच्चिन्तेयमनारभ्या स्यादित्याह * तेनेति * ननु शब्दार्थान
फलोपाययोर्भिन्नविषयत्वेनैकाङ्गवैकल्याविषयः स्यादित्याश
* अभेदे इति * शब्दार्थान्यानन्यत्वचिन्तायाः प्रकृतचिन्तोपो

वोपसंहारपूर्वकं पूर्वपक्षमाह * तेनेति * अनेन च तत्रान्थपूर्वप-
प्रतिज्ञाभाष्यं व्याख्यातं अत्र व्यपदेशभेदाद्रूपभेदाच्चेति हेतुद्वयं
भाष्यकृतोक्तं तत्र व्यपदेशभेदस्य भाष्यकृतैव व्याख्यातत्वाद्रूपभेदं
व्याचष्टे * नियतेति * वैदिकेषु पदेषु नियतः स्वरो लौकिकेष्व-
नियतः वैदिकेषु च छन्दोविषयतया विहितस्य प्रकृतिप्रत्यययोर्लो-
पस्यागमस्य वा वर्णविकारस्य वा सद्भावो लौकिकेष्वसद्भावः तत्कृ-
ताद्रूपभेदादित्यर्थः। नन्वेवं सति छान्दोग्यब्राह्मणेषु स्वरनियमा-
भावाद्गवादिशब्देषु च प्रकृतिलोपाद्यभावान्न भेदः सिद्ध्येदित्याश-
ङ्क्य धर्मभेदाभिप्रायेण रूपभेदं व्याख्यातुमाह * अध्यायेति *
अधीयते ऽस्यामिति व्युत्पत्त्याध्ययनतिथिरध्यायो द्वितीयादिरष्ट-
म्याद्यनध्ययनतिथिरनध्यायः वेदवाक्यान्यध्याययज्ञोपवीतेनैव त्रैव-
र्णिकेनैव च प्रयोज्यानि लौकिकान्यनध्याये ऽप्यनुपनीतेनापि चातु-
र्वर्ण्येनापि च प्रयोज्यानि अप्रयोज्यत्वेनाप्रेष्यत्वेन च हेतुना परिच-
र्यया प्रसादितो यो गुरुस्तदुच्चारणपूर्वकं वेदवाक्यानि प्रयुक्तानि
स्वेच्छया प्रयुक्तानि लौकिकानीति धर्मभेदाद्यथा लौकिकवैदिक-
वाक्यानामन्यत्वं तदन्यत्वाच्च वाक्यार्थान्यत्वं तथा पदानां धर्मभे-
दात्पदार्थानां च पदभेदाद्भेद इति पूर्वपक्षं प्रतिज्ञायान्वयः। धर्मभे-
दमात्रेण कथं पदभेदः कथं च पदभेदमात्रेण पदार्थभेद इत्याश-
ङ्काद्वयनिराकरणार्थं हेतुगर्भविशेषणसहितदृष्टान्तोपादानम्। शा-
ब्दाभेदे धर्मव्यवस्थावैयर्थ्यापत्तेस्तत्साफल्याय शब्दभेदः कल्प्य-
ते। तद्भेदे चौत्सर्गिको ऽर्थभेदः संज्ञा चोत्पत्तिसंयोगादित्यनेन सत्
प्रति पदादृष्टार्थप्रतिपत्त्यर्थस्य शब्दस्यादृष्टार्थेन धर्मेण प्रयोजनाभावा-
दर्थप्रतिपत्त्यर्थमेव धर्मापेक्षित्यर्थप्रतिपादनसामग्र्यतिरेकाद्वाचकभे-
दो जराराजेति क्रमभेदादिवेत्याशयः। ननु वैदिकपदानां लौकिके-
भ्यो ऽन्यत्वे सम्बन्धग्रहणाभावेनार्थानवधारणादर्थान्यत्वेन पूर्वप-
क्षो न युक्त इत्याशङ्क्याह * यदीति * लौकिकार्थासम्भवएवानर्थ-
क्येन वेदाप्रामाण्यापादनायान्यत्वमिष्टेण पूर्वपक्षिणो वक्तुमभिप्रेतः
निर्विषयत्वाच्च प्रकृतचिन्तानारम्भायैव वेदाप्रामाण्योपपादनायोच्यत
इत्यविरोध इत्याशयः। अग्निर्वृत्राणि जङ्घनदित्यन्यदिदं रूपमिति भा-
ष्यं न्यूनाधिकक्रमान्यत्वाद्यभावेन रूपभेदानुपलब्धेरयुक्तमाशङ्क्य
व्याचष्टे * स्वरेणेति * लौकिकस्यानियतस्वरत्वात्स्वरानपेक्षस्या-
र्थप्रतिपादकत्वं वेदे तु स्वरनियमात्सो ऽपि सहकारीति सामग्रीभे-
दाद् गौगौरिति वर्णातिरेकवत्स्वरातिरेकात्पदान्यतेत्याशयः। धर्मा-
भिप्रायो वा रूपशब्द इति व्याख्यान्तरमाह * अध्यायेति * कर्म-

व्युत्पन्नाव्ध्यायानध्यायशब्दौ यदा कदा चिद्येन केन चिद्यथा चिदध्येयो न वैदिक इत्यर्थः । यद्वा अग्निर्वृत्राणि जङ्घनदिति दिकस्याग्निशब्दस्य वृत्रहननसमर्थवस्तुवाचित्वावगमो लौ व्युत्पन्नाग्निशब्दवाच्यस्य च ज्वलनस्य तदसामर्थ्यादर्थान्तरे च त्पन्नस्यैव शक्त्यन्तरकल्पने गौरवापत्तेर्गत्यर्थस्य णिधातोः शोर्णि पश्चेति सूत्रेणौणादिके निप्रत्यये कृते ऽग्निशब्दव्युत्पत्त्यवधार प्रकृतिप्रत्ययान्वाख्यानभेदेनाव्युत्पन्नाल्लौकिकादग्निशब्दाद् ह न्नस्य वैदिकस्याग्निशब्दस्य रूपान्यताभिप्रेतेति व्याख्यान्तः * वृत्रेति * शब्दान्यत्वाच्चेति पदान्यत्वेन पदार्थान्यत्वप्रतिप भाष्यं स्पष्टत्वान्न व्याख्यातं अपि चेत्यादिभाष्यं लोकसिद्धा गवां देवसम्बन्धनिमित्तोत्तानवहनात्मकधर्मविशेषप्रतिपादक स्य वाक्यस्य अन्यार्थत्वलिङ्गत्वाभावादयुक्तमाशङ्क्योपपादयि * विदग्धेति * यथा यो विदग्धः स नैर्ऋत इति स्वरसतो ग्धोद्देशेन नैर्ऋतत्वविधिः प्रतीयमानो व्युत्पत्तिशिष्टदेवता देवतान्तरविध्ययोगाद्यो नैर्ऋतः स विदग्ध इतिवचनव्यक्त्य ङ्गीकरणेन प्रकरणे सम्भवन्नपकर्षो न कल्प्यतेत्यत्र भाष्यकृ श्चः तथात्र वषट्कर्त्तुः प्रथमभक्ष इतिवत् समाख्याविप्रकृष्य गो स्योद्देशायोगात् देवगवानां चोत्तानवहनवदसिद्धत्वाविशेषात् चित् सिद्धेश्चोत्तानवहनस्यापि सम्भवाद्यच्छब्दयोगः प्राथम्य युद्देश्यलक्षणमित्यनेन न्यायेन प्राथम्योपात्तोत्तानवहनोद्देशेन युद्देशेन गोशब्दवाच्यत्वविध्याश्रयणात्स्वरसतः प्रतीयमानस्य वोद्देशेनोत्तानवहनविधौ भङ्गः कृत इत्यर्थः । नन्वेवं सति य उ वहन्ति ते देवानां गोशब्दवाच्या इति वेदवाक्यगतपदपौर्वाप र्येनालौकिकस्याप्यर्थस्य यूपादिवत्प्रतीतिसिद्धेर्लौकिकवैदिक र्थान्यत्वे ऽपि व्यक्त्याकृतिचिन्तोपपत्तेरुपोद्घातो ऽनर्थकः स्या शङ्क्याह *सर्वेषां चेति* नन्वर्थावगत्यभावे कथमस्यार्थान्यथा तेत्याशङ्कापातप्रतिभानेन लिङ्गमेतत्पूर्वपक्षिणोक्तं परमार्थतः ब्दान्यत्वमेवार्थान्यहेतुरिति दर्शयितुमाह*आहृत्वादीति*स्वा वोपनीतेनैव त्रैवर्णिकेनैव शुश्रूषासाधितगुरुसम्प्रदायेनैव च वैदिकानां धर्मः यदा कदा चिद्येन केन चिद्यथा कथं चि आहृत्वं लौकिकानामिति धर्मभेदः।आदिशब्दो नियतानियत द्यभिप्रायः नियतैः पदैर्वाक्यरचना वेदे लोके त्वनियतैः त वैदिकानीमानि पदानि लौकिकानीति व्यपदेशभेदः । वा निबन्धनत्वात् व्यपदेशभेदस्य न पदभेदापादकत्वेत्याशङ्क्या

णार्थम् * नियतेत्युक्तम् * पदरचनात्मकत्वात् वाक्यानां पदभेदं विना तद्भेदायोगाद्वाक्यभेदनिबन्धनत्वे पदभेदस्येतरेतराश्रयत्वापत्तेः स्वरादिनियमानियमकृतपदस्वरूपदभेदनिबन्धनएव व्यपदेशभेद इत्याशयः। धर्मभेदव्यपदेशभेदाभ्यां शब्दानां भेदस्तद्भेदाच्चार्थानामित्यर्थः। भिन्नानां वर्णानामेकार्थप्रतिपादननिबन्धनत्वेनैकपदत्वस्यार्थभेदनिबन्धनत्वात्पदभेदस्य पदभेदनिबन्धनत्वे ऽर्थभेदस्येतरेतराश्रयं स्यादित्याशङ्कानिराकरणार्थं पदभेदे कारणान्तरस्य पूर्वोक्तस्योपन्यासः। वनस्पते हिरण्यपर्णेति सामानाधिकरण्यनिर्देशे लोकसिद्धस्य वनस्पतेर्हिरण्यपर्णत्वस्यानुपलब्धिविरोधेन वक्तुमशक्यत्वादलौकिकस्य वस्त्वन्तरस्य हिरण्यपर्णस्य वनस्पतिशब्दवाच्यत्वप्रतीतेर्घृतस्य च मधुशब्दवाच्यत्वप्रतीतेर्वाक्यस्वारस्यादेव स्पष्टत्वाच्च तत्प्रतिपादकं भाष्यद्वयं व्याख्यातम्। सिद्धान्ते यथाभाष्यं सुयोजमपि सूत्रमाकृत्यधिकरणपूर्वपक्षे ऽन्यथा योजयिष्यमाणत्वाद्विवेकार्थं योजयति * प्रयोगेति * तेष्विति लौकिकवैदिकशब्दार्थेष्वित्यर्थः। अविभागादिति सूत्रावयवावतारणार्थम् * तस्मादित्युक्तम्। यएवेतिभाष्येण प्रयोगचोदनाभावादित्यकारप्रश्लेषं विना व्याख्यायेतरथेत्यनेनाकारप्रश्लेषेण व्याख्यानान्तरं कृतं तत्रैकत्वे ऽनेकत्वे चोभयत्र भावप्राप्तावेकत्वे सति पुनर्वचनस्य परिसंख्यार्थत्वापत्तेर्द्वितीयमेव व्याख्यानं सम्मतमिति सूचयितुमादौ व्याचष्टे * भेदे सतीति * आद्यव्याख्यानं व्याचष्टे * एकत्वे सतीति * तस्मादेकशब्दत्वमिति भाष्यं सौत्रमर्थपदं शब्दस्याप्युपलक्षणार्थमिति दर्शयितुं द्वेधार्थैकत्वपदं व्याचष्टे * अर्थैकत्वमिति * एतदेव प्रपञ्चयति * शब्देति * ननु प्रयोगचोदनाभावादित्यनेनैव शब्दार्थैकत्वसिद्धेरविभागादित्यनर्थकं हेत्वन्तराभिधानार्थत्वे वा शब्दैक्यमात्रविषयत्वेनाव्यापकतया दौर्बल्याद् बलवति हेतौ प्रयुक्ते दुर्बलोपन्यासः क्लिष्टो भवतीत्यनेन न्यायेन पूर्वमुपन्यस्येतेत्याशङ्क्योच्यतइति भाष्येण पूर्वस्य प्रयोजनाभिधानार्थत्वादेतदेव हेत्वभिधानमित्युक्तमाभाति * तस्मादिष्टापत्तिरूपहेत्वभिधानप्रतीतेरयुक्तमाशङ्क्याह * प्रयोगेति * लिङ्गदर्शनबलेनात्रैको वेदवादी पूर्वपक्षी रूपभेदादिनान्यः शुष्कतार्किकः तत्र पूर्वं प्रतिहेतुरेव पूर्वः शुष्कतार्किकस्य त्विदं प्रत्यवस्थानमित्याशयः। अत इति ल्यब्लोपे पञ्चमी इदमभिप्रेत्याहेत्यर्थः अविभागं पञ्चधा व्याचष्टे * तदुच्यतइति * स एवायं गोशब्दइति प्रत्यभिज्ञानरूपप्रत्ययस्य लौकिकवैदिकशब्देष्वविभागादित्यर्थः। रूपाविभागादित्यनेन विलक्षणरूपाप्रतीतेरित्युक्ते घटपटयोरज्ञायमा-

न्त्वावस्थायां वैलक्षण्याप्रतीतावैक्याभावात्तन्मात्रेणैक्यासिद्धिर
ङ्क्य *ज्ञायमानयोर्लौकिकवैदिकशब्दयोरित्युक्तम्* सादृश्यनिमि
भ्रान्त्यध्यवसितैकत्ववशेनापि वैलक्षण्याप्रतीत्युपपत्तिमाशङ्क्य ज्ञा
मानयोरर्थयोरवश्यं कथं चिद्वैलक्षण्येन भाव्यं तदभावात्त्विह
नास्तीत्याशयः। वाक्यतत्समूहमात्रनिबन्धनस्य पदवर्णानां त
र्गतत्वादयं न पदवर्णविषयत्वस्यैते लौकिका इमे वैदिका इति
पदेशस्य वस्तुतः पदवर्णेषु विभागाभावादित्यर्थः। वस्तुतो
क्यनिबन्धनस्तत्समूहनिबन्धनो वा ऽयं व्यपदेशः तदन्तर्गतनिमि
तु भ्रान्त्या पदवर्णविषयत्वमनेनोपात्तमित्यौपाधिकत्वान्नासौ प
र्णानां भेदमापादयतीत्याशयः। शब्दानां प्रतिनियतविलक्षणाभिव्य
काभिव्यङ्ग्यत्वनियमात्तदाभावो वात्राभेदहेतुरुक्त इति * तथेल
नोक्तम् * लक्षणेत्यनेन लक्षणाभेदो लक्ष्याभेदे* हेतुरुक्त इ
क्तम् * छन्दसि भाषायां वेति विशेषणेन भिन्नलक्षणलक्षित
सिद्धान्तिनापि भेदाभ्युपगमात्तद्व्यावृत्तिसूचनार्थम् * बहु
त्युक्तम् * अत इत्युपसंहारभाष्यं व्याचष्टे * प्रत्यक्षेति
तांश्चेति भाष्यं चकारेण शब्दैक्यमर्थैक्ये हेतुं सूचयतीति व्याचष्टे
एकेति * यच्चोक्तमिति भाष्येण लिङ्गदर्शनान्यनुभाष्य नास्तिवच
मित्यादिनोत्तानवहनानुवादेन गोशब्दवाच्यत्वविधित्वमस्य लिख
त्य गवानुवादेनोत्तानवहनविधित्वमुक्तं तद्व्याचष्टे * यथाश्रुतेति
गोमधुवनस्पतिशब्दानां यार्थान्तरद्योतिका श्रुतिरुपन्यस्ता सा न
यसिद्धार्थैकत्वाविरोधेन प्रयोजनेनोत्तानवहनादिगुणमात्रा न
परा व्याख्येयेत्यर्थः। अनन्तरोक्तार्थैकत्वसाधकशब्दैकत्वलक्ष
न्यायपरामर्शार्थं यथाश्रुतत्वं लोकसिद्धत्वं विशेषणमुक्तम्। न
गुणमात्रान्यत्वेनार्थान्यत्वं भविष्यतीति दृष्टान्तपूर्वकमाह * य
३५।१ हीति * अस्तु वा गुणान्यत्वेन देवसम्बन्धिनां गोमधुवनस्पत
भेदः तथाप्यगृहीतसम्बन्धत्वेन तेषां वाच्यत्वायोगाद्वैदिकाना
गवादिशब्दानां लौकिका एवार्था इति मत्वाह * न चेति *
क्षिणादिसाधनत्वेन च विहितानां गवां देवसम्बन्धिनामस्वत
दातुमशक्यत्वान्मनुष्यसम्बन्धितैव निश्चीयतइत्याह * मनुष्येति
देवसम्बन्धिनश्च वनस्पतेर्मेरुगतस्य गुणान्यत्वेन लौकिकवनस्पति
भेदे ऽपि कर्मभूमिगतयज्ञसाधनत्वायोगाद्वैदिकस्यापि वनस्पति
ब्दस्य लौकिक एवार्थ इत्याह * एवमिति * लौकिकस्य च
तस्य देवसम्बन्धान्मधुत्वेन लौकिकान्मधुतो भेदे ऽपि देवसम्बन्
पादितरसवीर्यविपाकात्पूर्वं घृतस्य मधुत्वाभावेन मधुपर्कादिसा

गयोगाद्वैदिकस्यापि मधुशब्दस्य लौकिकपदार्थ इत्याह * यत्त्वि-
* सर्वेषां च वैदिकशब्दार्थानामन्यत्वे सत्युत्तानादिशब्दार्थाना-
यज्ञानान्न तदनुवादेन गवादिशब्दवाच्यत्वं विधातुं शक्यमिति
तेपादनार्थं यदि चान्य इति भाष्यं व्याचष्टे * न चेति * मधुगुण-
न्यान्यतापरत्वे कार्योपयोगाभावाद्वाक्यानर्थक्यं स्यादित्याशङ्का-
राकरणार्थं न चेति भाष्येण स्तुत्यर्थत्वमुक्तं तत्र निरालम्बनस्तु-
नुपपत्तिमाशङ्क्यालम्बनमाह * अत इति * लौकिकानामेव
गादीनां यज्ञादौ विनियुक्तानामिह स्वर्गे वै त्वालोकं गमयिष्याम
गादिदर्शनेन स्वर्गलोकप्राप्तेर्देवसम्बन्धप्रभावादुत्तानवहनाद्यलौ-
किकगुणान्तरप्राप्तिर्भविष्यतीत्याशयः। स्वर्गगमनाभावे ऽपि वा भू-
गतानामेव गवां देवांश्च याभिर्यजते ददाति च वा ज्योगित्ताभिः
च ते गोपतिः सहेत्यादिदर्शनाद्देवोद्देशेन त्यक्तानां दुःखसागर-
रणार्थत्वावगतेर्ध्यानवहनत्वादिगततारणगुणयोगेनोत्तानवहनप्र-
पादनमित्यालम्बनान्तरमाह * अथ वेति * यद्वोत्तानवहनाभावे
पि देवानां तथा प्रतीतेस्तदालम्बनमुत्तानवहनप्रतिपादनमित्यालम्ब-
न्तरमाह * पृथिवीति * दृष्टिवशाद्वोत्तानवहनप्रतिपादन-
त्यत्राप्यतीतेनान्वयः कथं देवानामुत्तानवहनदृष्टिरित्यपेक्षा-
ां * पृथिवीगोलकत्रैलोक्यभ्रमणादिनेत्युक्तम् * पृथिवीगोलक-
य भ्रमणे किं प्रमाणमित्यपेक्षायां * पुराणोक्तेनेत्युक्तम् * ननु
त्यपि भ्रमणे कथमुत्तानवहनदर्शनमित्यपेक्षायामाह * यथैवेति *
धोदेशस्योपरिदर्शनं परिवर्त्तनं विप्रतीपीभावं विना न युक्तमिति
भूमेर्विप्रतीपीभावात्तद्गतानां गवामुत्तानवहनदर्शनमुपपन्नमित्यर्थः।
तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मादिति * यदेति प्रकृत-
विचारानुसन्धानभाष्यं व्याचष्टे * इतीति * श्रोतृबुद्धिप्रथनाय
पक्षान्तराण्यपि दर्शयितुमौचित्यप्रतिज्ञां तावत्करोति * द्वौ चेति *
यद्यपीत्यनेन भाष्यकारो ऽपि पदोच्चारणानर्थक्यं तत्र व्यक्तिरर्थो-
ऽन्यत्राकृतिरिति भाष्येणोभयपक्षमस्तु विशेषणत्वेनाकृतिं वक्ष्यति
विशेष्यत्वेन व्यक्तिमित्यनेन चाकृतिविशिष्टायामाकृतौ वर्त्ततेत्य-
नेन च व्यक्तिविशिष्टाकृतिपक्षं दर्शयिष्यतीति सूचितं तानि दर्शयितुं
जातिव्यक्त्योस्तावदष्टपक्षीमुद्दिश्यते * नियोगेनेति * नियोगश-
ब्देन च नियमं विना पक्षद्वयं विशिष्टावेत्यनेन च पक्षद्वयमुक्तम्
एतेषामेवाष्टानां पक्षाणां परस्परव्यतिकरेणापरान् षण्णवतिपक्षान्
सूचयितुमाह * एत इति * जातिव्यक्त्योरेवोद्दिष्टानां नियमादि-
पक्षाणां लिङ्गादिसिद्धिनियोगेन संहतात्मभिरसंहतात्मभिश्च सह

सम्प्रधारणो विविक्तोद्देशेन परस्परव्यतिकरेण चापरांश्चतुर्दश
शतानि च पश्चात् वक्तुं योजना कार्येत्याह * लिङ्गेति * ि
गेनेति श्लोकं व्याचष्टे * प्रथमं तावदिति * एते पक्षा इति
कार्धं व्याख्यातुं षण्णवतिपक्षानाह * तथेति * द्वाभ्य
त्यनेन विशेषणविशेष्यभावनिरपेक्षाभ्यां व्यक्त्याकृतिभ्यां
मुच्चिताभ्यां विशिष्टः सम्बन्धो गोशब्दस्यार्थ इति चतुर्थः
लाघवायान्ते दर्शित इत्येकाष्टपक्षी । किमाकृत्यैव विशिष्टसमु
किं व्यक्त्यैवाथाकृत्या व्यक्त्या वाथ सम्बन्धेनार्थाकृतिविशि
व्यक्त्याथ व्यक्तिविशिष्टयाकृत्या अथ व्यक्त्याकृतिभ्यां परस्प
शिष्टाभ्यामथ विशेषणविशेष्यत्वनिरपेक्षाभ्यां समुच्चिताभ्यां
क्त्याकृतिभ्यां परस्परविशिष्टाभ्यामथ विशेषणविशेष्यत्वनिर
भ्यां समुच्चिताभ्यां व्यक्त्याकृतिभ्यामिति द्वितीया किमाकृत्यैव
शिष्टः सम्बन्ध एव गोशब्दस्यार्थः अथ समुदाय एवाथ सम
वा समुदायो वाप्यसम्बन्धश्च समुदायश्च उत व्यक्त्यैव विशिष्ट
म्बन्ध एवाप्यसमुदाय एव अथ विकल्पो ऽथ समुच्चयविशि
कृत्या किं व्यक्तिः अथाकृत्या ऽथ वा विशिष्टः सम्बन्ध एव ।
समुदाय एव अथ विकल्पो ऽथ समुच्चयः । अथ एवं समु
विशिष्टः सम्बन्ध एवाथ सम्बन्धेन विशिष्टः समुदायएवाथ
ल्पो ऽथ समुच्चयः किमाकृतिविशिष्टया व्यक्त्या विशिष्टः सम्बन
वाथ समुदाय एवाथ विकल्पो ऽथ समुच्चयः । अथोभाभ्यां प
रविशिष्टाभ्यां विशिष्टः सम्बन्ध एवाथ समुदाय एवाथ विकल्प
समुच्चयः । अथोभाभ्यां स्वतन्त्राभ्यां विशिष्टः सम्बन्ध एवा
मुदाय एवाथ विकल्पो ऽथ समुच्चय इति चतस्रो ऽष्टपक्ष्य
म्बन्ध एवेत्येवकारेण प्रतियोगिभूतेन समुदायेन सह नियोग
ल्पसमुच्चयरूपपक्षचतुष्टयसूचनात् पूर्वोक्ताभ्यां सह षड् भ
सम्बन्धवत्समुदायमपि प्रत्याकृत्यादेर्विशेषणत्वपक्षः पूर्ववत्स
विशिष्टसमुदायपक्षमात्रातिरिक्तत्वेन योज्या इत्यर्थः । किं
न्धविशिष्टसमुदायपक्षमात्रातिरिक्तत्वेन योज्य इत्यर्थः । किं
न्धेनैव विशिष्टाकृतिरित्याकृतिग्रहणस्य व्यक्त्युपलक्षणार्थत
सम्बन्धेनैव विशिष्टा व्यक्तिर्गोशब्दार्थो ऽथ समुदायेनैव वि
थ विकल्पमानाभ्यामुत समुच्चिताभ्यामित्यपरपक्षचतुष्टयीस
सप्तम्यष्टम्युक्त्वा तथैतद्विशिष्टापीत्येतच्छब्देन सम्बन्धसमुद
परामर्शादष्टम्युक्ता किमाकृतिविशिष्टसमुदायविशिष्टा व्यक्ति
व्यक्तिविशिष्टसमुदायविशिष्टाकृतिरेवाथ विकल्प उत समुच्च

सम्बन्धवत्समुदायमपि व्यक्त्याकृत्योर्विशेषणविशेष्यभावयोजनात् नवस्युक्ता सम्बन्धवत्समुदायस्यादिविशेषणत्वयोजनाद्दशमी सम्बन्धवत्समुदायमपि प्रत्यादिविशेषणयोर्व्यक्त्याकृत्योर्नियोगादिपक्षचतुष्टययोजनादेकादशी विशेष्यविशेषणयोर्व्यक्त्याकृत्योर्नियोगादिपक्षचतुष्टयकल्पनायाम् आदिविशेषणत्वेन सम्बन्धवत्समुदायस्यादिविशेषणत्वयोजनाद् द्वादशी इति परस्परव्यतिकरेण षण्णवत्यष्टपक्ष्या सह चतुः शतं पक्षा भवन्ति लिङ्गकारकसंख्याभिरित्यनेन सूचितानपरांश्चतुर्दश चतुःशतानि पक्षी संक्षेपेण दर्शयति*एवं जातिलिङ्गयोरिति * किं लिङ्गमेव गोशब्दार्थो ऽथ लिङ्गं वाथ जातिर्वाथ लिङ्गं च जातिश्च अथ जातिलिङ्गयोः सम्बन्धो ऽथ समुदायो ऽथ लिङ्गविशिष्टा जातिः । अथ जातिविशिष्टं लिङ्गमित्याद्यामष्टपक्षीं दर्शयित्वा किमाकृत्यैव विशिष्टः सम्बन्धो लिङ्गेनैव वेत्यादिव्यक्तिस्थाने लिङ्गं प्रक्षिप्य परस्परव्यतिकरेणषण्णवतिपक्षयोजनया चतु शतं रचयितव्यम् । कारकस्य जात्या सम्प्रधारणे द्वितीयं चतुः शतम् । संख्यायास्तृतीयम् । लिङ्गस्य व्यक्त्या सह सम्प्रधारणे चतुर्थं कारकस्य पञ्चमं संख्यायाः षष्ठं लिङ्गसंख्यायुगलस्य जात्या सह सम्प्रधारणात् सप्तमं लिङ्गकारकयुगलस्य अष्टमं संख्याकारकयुगलस्य व्यक्त्या सह सम्प्रधारणे दशमं लिङ्गकारकयुगलस्यैकादशम् संख्याकारकयुगलस्य द्वादशम् । लिङ्गादित्रयस्य जात्या सह सम्प्रधारणे त्रयोदशं व्यक्त्या सह चतुर्दशमितिन्यायेन चतुःशतेन स पञ्चदश चतुःशतानि । षष्ठाधिकं सार्द्धपक्षसहस्रं भवति ग्रन्थस्त्वेवं योज्यः । जातिव्यक्तिविषयैर्नियोगादिभिरष्टभिः पक्षैर्विकल्पिताः परस्परव्यतिकरेण कल्पिता ये ऽन्ये षण्णवतिः पक्षास्तेषामाद्यैरष्टभिः सह समुच्चितानां प्रत्येकं लिङ्गादीनां जात्या सह सम्प्रधारणायामुत्थानं दर्शयित्वा व्यक्त्या सह दर्शयितव्यं तथा लिङ्गसंख्यादियुगलानि व्यतिकरेण कल्पयित्वा लिङ्गादिसहितैकैकज व्यक्तिविषयापेक्षया विकल्पा दर्शयितव्याः । लिङ्गादीनां किय जात्या व्यक्त्या वा सम्प्रधारणेत्यपेक्षायां प्रत्येकमेकैकेन द्वाभ्युगलीभूताभ्यां त्रिभिश्च लिङ्गादिभिः सहिताया एकैकस्या जा व्यक्तेश्च * विकल्प्य इत्युक्तम् * ननु लिङ्गादीनां प्रत्ययार्थत्व त्प्रातिपदिकवाच्यत्वेन चिन्ता न युक्तेत्याशङ्क्य * त्रियोगेत्युक्तम् स्त्रियां यत्प्रातिपदिकं वर्त्ततइति व्याख्यादर्शनाद्वैयाकरणैस्तावज्ज तिव्यक्तिवल्लिङ्गस्यापि प्रातिपदिकार्थतेष्टेति त्रिकप्रातिपदिकार्थः चित्वात्ते त्रियोगाः निपातोपसर्गवत्प्रत्ययस्यापि द्योतकमात्रत्

ते * गोशब्दालम्बनत्वासम्भवे कारणमाह * तस्य हीति * न-
ं सति संस्थानस्याकृतित्वशङ्काकारणाभावात् किं तन्निराकर-
र्थेन सर्वसामान्यानामाकृतित्वाभिधानेनेत्याशङ्क्याह * तेनेति *
संस्थानस्याकृतित्वं न युक्तं तेन निराकृतमिति तेनेत्यस्य योज-
शङ्कोपोद्बलनाय दृष्टान्ताभिधानम्। ननु सामान्यशब्देनैव सं-
नशङ्कानिवृत्तिसिद्धेः सर्वसामान्यव्याप्त्यर्थो मात्रशब्दो ऽनर्थ-
इत्याशङ्क्याह * अतश्चेति * सर्वं सामान्यमाकृतिरित्याभिप्रे-
यो मात्रशब्दः प्रयुक्तः सो ऽतः शङ्काव्यावर्तनात् कारणा-
ङ्काव्यावृत्त्यर्थमिति यावदिति योज्यम्। ऊहितशङ्कानिवृत्त्यर्थश्च-
रः व्यक्तौ च सर्वशब्दानां वाच्येहाकृतित्वेन विवक्षिता न सा-
न्यान्तराणीति शङ्कान्तरनिरासस्सूचनार्थो वा व्यक्तिस्वरूपनिरू-
ार्थस्यासाधारणेति भाष्यस्यान्येषां व्याख्यानं दूषयितुमुपन्य- २५
ते * असाधारणेति * गौर्गौरित्येकाकारप्रत्ययस्य सामान्या-
ानुवृत्ताकारविषयत्वाच्छाबलेयो बाहुलेय इति अनेकाकारप्रत्य-
य च्च विशेषाख्यव्यावृत्ताकारविषयत्वान्न तद्व्यतिरिक्ताकारिभू-
ास्तुसद्भावे प्रमाणमस्तीति व्यक्तिशब्दस्य विशेषसमूहवाचित्वेन
ा वनमितिवद्वचनभेदे दोषाभावाद्वृक्षाणामाश्रयो वनमितिव-
श्रय (विशेषाणामाश्रयो व्यक्तिरिति अग्नेरुत्तानाभाष्यस्तु व्यव-
रस्य वृक्षाणामाश्रयो वनमितिवदुपपत्तेरित्यर्थः[1]) व्यपदेशोपपत्तेः
र्मधारय एव युक्त इत्याशयः।

आविर्भावतिरोभावधर्म्मकेष्वनुयायि यत्।
तद्धर्मि यत्र वा ज्ञानं प्राग्धर्मग्रहणाद् भवेद्॥

इत्यनेन न्यायेन प्रत्यक्षसूत्रावयवानुवृत्तव्यावृत्तव्यतिरिक्तस्य
र्मिणः साधितत्वात्तदपह्नवो न युक्त इत्यभिप्रायेण दूषयति
तत्त्विति * साधारण्यत्वविशेषाणां नासाधारणव्यक्त्यात्मकत्वं
कमित्याह * खण्डेति * एतदेव व्याचष्टे * खण्डेति * अन्यो
ित्यनेनान्तरशब्दो शाबलेयवर्णे ऽपि शबलापत्य इत्येवं व्याख्यातः
बलाशब्देन च तच्छब्दः वार्त्तिकश्लोकस्य इत्यर्थः। शाबलेयशब्दप्र-
तिभूतशबलाप्रातिपदिकपरामर्शार्थत्वेन व्याख्यातः। एतच्चेत्यनेना-
शब्दोक्तं शबलाख्यविशेषस्य साधारण्यं व्याख्यातम्। एतदेव
बलेति नामान्यत्रापि व्यक्तौ वर्त्तत इत्यर्थः। कथमित्यपेक्षिते प्र-
ारद्वयमुक्तं यादृच्छिकत्वासिद्धौ * सङ्केतवशादित्युक्तम् * ना-
शब्देनावास्तवो ऽपि वर्णद्वयशून्यो ऽयं विशेषः प्रोक्तव्य इति सू-

१ अयं पा० २ पु० ना०।

दित्यर्थः । नन्वेवं सति व्याख्यातृभिरूपपत्तयो ऽपि सर्वेषु पक्षे
२।१ प्रत्येकमुपन्यस्योपन्यस्य निराकार्या इत्याशङ्क्याह * दर्शितेष्वपि
ति * शब्दशक्त्यपर्यालोचनस्य पूर्वपक्षबीजस्य सर्वेषु तुल्यत्वादि
त्याशयः । का पुनरिति भाष्येणाकृतिव्यक्त्योः प्रश्नपूर्वकं स्वरू
निरूपणं कृतं तस्य प्रयोजनमाह * ततश्चेति * विषयावधारण
विचारमुखं, ननु सम्बन्धादीनामपि विचारविषयत्वात्किमिति स्व
रूपं न निरूपितमित्याशङ्क्य प्राधान्येनाकृतिव्यक्त्योरेव विचारवि
षयत्वमनन्तरोक्तं ततश्चेत्यनेन कारणतया परामृष्टम् । आकृतिस्व
रूपनिरूपणस्य पौनरुक्त्यमाशङ्कते * नन्विति * परिहरति * सत्य
मिति * मात्रशब्दं सर्वसामान्यव्याप्त्यर्थत्वेन व्याख्यातुं भाष्यपाठ
पूर्वकं सामान्यानि विभजति * द्रव्येति * प्रथमशब्देन परशब्द
कुतश्चिदव्याकृतत्वात्सर्वसामान्योक्तत्वाभिप्रायेण व्याख्यातः । गु
णत्वकर्मत्वयोरादिशब्देनोपादानं द्रव्यत्वावान्तरसामान्यानि वि
भजति * पुनरिति * वायुत्वादीनां भिन्नतेत्यर्थः । पृथिवीत्वस्य
तद्भेदघटत्वादिसामान्योक्त्या ज्ञातुं शक्यत्वादनुपन्यासः । मनोभेद-
स्य चात्मभेदाधीनत्वादात्मत्वसामान्योक्त्यैव मनस्त्वसामान्यसिद्धे-
रनुपन्यासः । पृथिवीत्वावान्तरसामान्यान्यवधिभेदेन विभजति
* पृथिवीत्वादिति * पृथिवीत्वात्परं पाश्चात्यं घटत्वं घटव्यक्तिषु
समाप्य एतेषु घटत्वं तद्व्यक्तिष्वन्यं सामान्यमित्यर्थः । घटत्वादी-
न्यन्यानि पृथिवीत्वावान्तरसामान्यानि घटत्वेनैव व्याख्यातानि
वृक्षत्वात्तु पृथिवीत्वावान्तरसामान्यात्परं शिंशपात्वाद्येवान्त्यं सामा-
न्यमित्याह * वृक्षत्वादिति * शरीरत्वात्परं गोत्वादीत्याह * शरी-
रत्वाच्चेति * मनुष्यत्ववाची पुंस्त्वशब्दः गोत्वात्परस्य सामान्य-
स्याभावात्तत्त्यागेनाश्वत्वात्परं वाजिकत्वाद्यन्त्यं सामान्यमित्याह *
वाजिकत्वादि चेति * ननु कर्कत्वशोणत्वादेरप्यवान्तरसामा-
न्यस्य भावान्न वाजिकत्वादेरन्त्यतेत्याशङ्क्य * कर्कादिस्त्विति *
अश्वत्वैकार्थसमवायिशुक्लावान्तरसामान्यं कर्कत्वं रक्तावान्तरसा-
मान्यं शोणत्वमित्यर्थः । हस्तित्वात्परा भद्रादिजातयो ऽन्त्या इत्याह *
हस्तित्वादिति * आदिशब्देन मृगजात्युपादानं ताश्च दिङ्नागकुलजा-
तास्वेव हस्तिव्यक्तिषु वर्तन्त इति दिङ्नागकुलशब्देनोक्तम् । मनु-
ष्यत्वात्परो ऽवान्तरसामान्यभेदो ब्राह्मणत्वं ब्राह्मणत्वसामान्यावा-
न्तरभेदात्कौण्डिन्यत्वादौ सामान्ये समाप्यत इत्याह * पुंस्त्वादि-
ते * द्रव्यावान्तरसामान्यानि विभज्य गुणकर्मावान्तरसामान्या-
नि विभक्तुमाह * तथेति * गुणत्वस्य रूपत्वादि यदवान्तरसामान्यं

ते * गोशब्दालम्बनत्वासम्भवे कारणमाह * तस्य हीति * न-
ं सति संस्थानस्याकृतित्वशङ्काकारणाभावात् किं तन्निराकर-
र्थेन सर्वसामान्यानामाकृतित्वाभिधानेनेत्याशङ्क्याह * तेनेति *
संस्थानस्याकृतित्वं न युक्तं तेन निराकृतमिति तेनेत्यस्य योज-
शङ्कोपोद्बलनाय दृष्टान्ताभिधानम्। ननु सामान्यशब्देनैव सं-
नशङ्कानिवृत्तिसिद्धेः सर्वसामान्यव्याप्त्यर्थो मात्रशब्दो ऽनर्थ-
इत्याशङ्क्याह * अतश्चेति * सर्वं सामान्यमाकृतिरित्याभिप्रे-
यो मात्रशब्दः प्रयुक्तः सो ऽतः शङ्काव्यावर्तनात् कारणा-
ङ्काव्यावृत्त्यर्थमिति यावदिति योज्यम्। ऊहितशङ्कानिवृत्त्यर्थश्च-
रः व्यक्तौ च सर्वशब्दानां वाच्यैहाकृतित्वेन विवक्षिता न सा-
न्यान्तराणीति शङ्कान्तरनिरासंसूचनार्थो वा व्यक्तिस्वरूपनिरू-
ार्थस्यासाधारणेति भाष्यस्यान्येषां व्याख्यानं दूषयितुमुपन्य- २५
ते * असाधारणेति * गौर्गौरित्येकाकारप्रत्ययस्य सामान्या-
ानुवृत्ताकारविषयत्वाच्छाबलेयो बाहुलेय इति अनेकाकारप्रत्य-
य च विशेषाख्यव्यावृत्ताकारविषयत्वान्न तद्व्यतिरिक्ताकारिभू-
ास्तुसद्भावे प्रमाणमस्तीति व्यक्तिशब्दस्य विशेषसमूहवाचित्वेन
ा वनमितिवद्वचनभेदे दोषाभावाद्वृक्षाणामाश्रयो वनमितिव-
श्रय ( विशेषाणामाश्रयो व्यक्तिरिति अग्नेरुक्तानाभाष्यस्तु व्यव-
रस्य वृक्षाणामाश्रयो वनमितिवदुपपत्तेरित्यर्थः[1] ) व्यपदेशोपपत्तेः
र्मधारय एव युक्त इत्याशयः।

आविर्भावतिरोभावधर्म्मकेष्वनुयायि यत्।
तद्धर्मि यत्र वा ज्ञानं प्राग्धर्मग्रहणाद् भवेद्॥

इत्यनेन न्यायेन प्रत्यक्षसूत्रावयवानुवृत्तव्यावृत्तव्यतिरिक्तस्य
र्मिणः साधितत्वात्तदपह्नवो न युक्त इत्यभिप्रायेण दूषयति
तत्त्विति * साधारण्यत्वविशेषाणां नासाधारणव्यक्त्यात्मकत्वं
कमित्याह * खण्डेति * एतदेव व्याचष्टे * खण्डेति * अन्यो
ात्यनेनान्तरशब्दो शाबलेयवर्णे ऽपि शबलापत्य इत्येवं व्याख्यातः
बलाशब्देन च तच्छब्दः वार्त्तिकश्लोकस्य इत्यर्थः। शाबलेयशब्दप्र-
तिभूतशबलाप्रातिपदिकपरामर्शार्थत्वेन व्याख्यातः। एतच्चेत्यनेना-
शब्दोक्तं शबलाख्यविशेषस्य साधारण्यं व्याख्यातम्। एतदेव
बलेति नामान्यत्रापि व्यक्तौ वर्त्तत इत्यर्थः। कथमित्यपेक्षिते प्र-
ारद्वयमुक्तं यादृच्छिकत्वासिद्धौ * सङ्केतवशादित्युक्तम् * ना-
शब्देनावास्तवो ऽपि वर्णद्वयशून्यो ऽयं विशेषः प्रोक्तव्य इति सू-

१ अयं पा० २ पु० ना०।

भाग: स्यादिति पूर्वपक्षसूत्रेणोक्तमाश्रयभेदेन भेदं निराकर्तुं वदिति दृष्टान्तितं यथा सत्त्वस्य गोत्वादेः पदार्थस्य गौरित्यादि नामधेयभेदापादकं तथा प्रतिनिधिनिष्पादिते ऽपि कर्मणि पूर्णमासादिनामधेयं याज्ञिकैः प्रयुक्तमभेदापादकमिति युक्तम् प्रत्यभिज्ञानेनैवैक्ये सिद्धे ऽभ्युच्चयमात्रत्वान्नेहोपन्यस्तम् । प्रति निष्पादितकर्मविषयस्याप्यस्य न्यायस्य विध्यन्तरविहितेष्वपि त्वं मन्वानानामभिप्रायेणैतदुदाहृतम् । एवं सामान्या भज्य सर्वव्याप्त्यर्थत्वेन भाष्यं व्याचष्टे * एवमिति * कृतिशब्दस्य संस्थानवाचित्वमक्षपादाद्युक्तं परित्यज्य जातिव त्वं [illegible] द्रव्येषु गुणकर्मसु चाश दित्याह * नेति * क पुनः संस्थानमस्ति क वा नेत्यपेक्षायामा सर्वेषु हीति * पार्थिवेषु स्वाभाविकं संस्थानम् अग्नेर्ज्वलनादि संस्थानानुसारिसंस्थानभेददर्शनात्तोयस्य चाधारभूतपात्रसंस्थाना रिसंस्थानभेददर्शनाद् घटाद्यवच्छिन्नाकाशस्य चावच्छेदकघट स्थानानुसारिसंस्थानभेदर्शनात् वायोश्च घटाद्यवच्छिन्नाकाशसं णो घटादिसंस्थानानुसारिसंस्थानभेददर्शनादौपाधिकं यद्यपि क द् बुद्बुदकोद्र्ध्वगतज्वालादौ पार्थिवद्रव्यपरिग्रहाभावे ऽप्या संस्थानापरपर्यायः प्रतीयते तथापि विलक्षणाकारस्याप्यग्नितोर क्तिष्वग्नितोयशब्दप्रयोगान्नैकशब्दवाच्यत्वयोग्यः सर्वाग्नितोर क्त्यनुवृत्तैक आकारश्च पद्मरचनात्मकसंस्थानशब्दवाच्यो यो ऽ याकृतिलक्षणं स्यादित्यनुवृत्तिशब्देन सूचितम् । कल्प्यतेत्यनेन धिकत्वं दर्शितम् । दिगादीनां तु न स्वाभाविकं संस्थानं भाव्यं धिकमित्यर्थः । नन्वनुगतैकाकारप्रत्ययवेद्यत्वाज्जातिरप्याकारा न सम्भवतीत्याशङ्क्याह * सामान्येति * संस्थानाख्याकारा ऽप्येकाकारप्रत्ययवेद्यः सर्वस्वव्यक्त्यनुगतो विजातीयेभ्यो वृत्तो निरालम्बनबुद्ध्ययोगाद् ब्राह्मण्यादिवन्नापन्होतुं शक्य श्रयः । सर्वेषु स्वविशेषेष्वनुवृत्तिरेव रूपं यस्येति विग्रहः उ हरति * तस्मादिति * नन्वाकृत्यादिषु संस्थानासम्भवे ऽपि षु सद्भावाद् गवादिशब्दानां संस्थानात्मकाकृतिवाचित्वं भविष्य त्याशङ्क्याह * संस्थानस्य चेति * नानाव्यक्त्यनुगतनित्य मान्याभ्युपगमात्संस्थानस्याकृतित्वे सामान्यं वाच्यमिति व्यव न युज्यतइत्यर्थः । संस्थानसामान्यस्य त्वाकृतिलक्षणत्वेन गोत्व कृतीनां वैलक्षण्यं सिद्ध्येदित्याह * अथेति * नन्ववान्तरसंस्थ सामान्यस्याकृतित्वाभ्युपगमाच्च सङ्करापत्तिरित्याशङ्क्याह *

च्चितम् । वाहच्छिकशबलापत्ये साधारण्यार्थे तद्वपत्ये वेति
र्वचनं शाबलेय इति नाम वर्ततइत्याद्यनुषङ्गेण योज्यम् । ननु
धारण्ये ऽपि व्यक्तिमात्रलक्षणार्थत्वेनादोषो भविष्यतीत्याश
* असाधारणेति * दोषान्तराभिधानार्थं चेदमुक्तम् । दोष
रमाह * विशेषेति * व्यक्तिशब्दस्य समुदायवाचित्वाभावा
क्षा वनमित्येतत्तुल्यतेत्याशयः । स्वमतेन व्याचष्टे * तस्मादि
दोषसाम्यमाशङ्कते * नन्विति * या व्यक्तिः सौते लक्ष
लक्षणत्वेनोपादीयमानानां विशेषाणां समुदायेनासाधारण्येन च
शेषणाद्युक्तमसाधारण्यं परमते तु विशेषव्यतिरिक्ताया व्यक्ते
वेनोद्देश्यत्वायोगाद्ये विशेषास्ते व्यक्तिशब्दवाच्या इत्युद्देश्यानां
शेषाणामविशेषेण व्यक्तिविशेषशब्दयोः पर्यायत्वापत्तेस्तान्निवृ
मृष्यामहे हविषा विशेषणमितिवदेकस्मिन् विशेषणे कृते ऽर्थ
द्धेर्विशेषणान्तरस्य विवक्षितुमशक्यत्वाच्छुरुतेनासाधारण्येन
शेषितानां व्यक्तिशब्देनेत्यर्थः । समुदायेन विशेषणानुपपत्तेः प्रत्येक
विशेषाणां व्यक्तिशब्दवाच्यत्वप्रसङ्गाद्वैषम्यमभिप्रेत्य परिह
* उच्यतइति * ननु विशेषसमुदायाश्रयत्वमात्रेण व्यक्त्युपल
णसिद्धेः । किमसाधारणविशेषणेनेत्याशङ्क्याह * प्रविभक्ता हीं
पिण्डात्मना समुदायात्मना साधारणत्वेनेत्यर्थः । विशिष्टा व्या
गवादिशब्दवाच्यत्वेनाभिमता नासाधारण्यं विनोपलक्षयितुं शव
त्याशयः । नन्वेवं सत्यत्यन्तसदृशव्यक्तिगतस्य खण्डादिविशेष
मूहस्यासाधारण्याभावान्नोपलक्षणत्वं स्यादित्याशङ्क्याह *न चेति
ननु प्रतिव्यक्त्यपूर्वविशेषाभ्युपगमे विशेषानन्त्यापत्तेरदृष्टकल्प
६।२।२ गौरवं स्यादित्याशङ्क्याह * अनन्तेति * ननु खण्डत्वादीनाम
कव्यक्तिसाधारण्ये कथं विशेषव्यपदेश्यतेत्याशङ्क्याह * परेति
व्यक्तेर्विशेषेभ्यो ऽन्यत्वं पूर्वोक्तं भाष्यकृद्वचनेन द्रढयति * प
श्चेति * सामान्यस्य व्यक्तिपारतन्त्र्याद् व्यक्तेः सामान्याश्रय
मुख्यं समुदाय्याश्रयत्वं तु वृक्षाश्रयो वनमितिवत् समुदायस्य तन
ध्ये समुदायिप्रतीतेरौपचारिकं, न च सकृच्छ्रुतस्याश्रयशब्दस्योभ
रूपता युक्तेत्याशयः । व्यक्तिभाष्यस्य परव्याख्यादूषणेनाकृति
ष्यस्य द्रव्याद्यनुगतसत्तासामान्यमेवाकृतिर्न गोत्वाद्यवान्तरसा
न्यमिति सत्तावाच्यत्ववादिनां व्याख्यां बुद्धिस्थां दूषयितुं तन
तावदुपन्यस्यति * तत्रेति * उपन्यासार्थस्तत्र शब्दः सर्वशब्दा
पर्यायत्वशङ्कानिवृत्तये शब्दस्वरूपेण गोत्वादिना वा व्यवच्छेदा
धानम् । अत्रार्थे तदीयं श्लोकं पठति *यथाहुरिति* अस्तीत्येवं रू

सामान्यरूपः सर्वशब्दानामर्थ इतीदृशं प्रत्याय्यस्य वाक्यस्य लक्ष्य-
हुः । तस्य गवादिपदेष्वपूर्वादिपदैः सह तुल्यत्वादित्यर्थः ।
ादीनां हि शब्दैकगोचरत्वात्तेन च विशेषाप्रतीतेरस्ति किं
त्येतावन्मात्ररूपेण प्रतीतेरपूर्वादिशब्दानां सत्तावाचित्वावधा-
तद्दृष्टान्तेन गवादिशब्दानामपि सत्तावाचिता ऽनुमीयतइत्य-
। एतच्च सत्त्वप्रधानानि नामानि प्रातिपदिकार्थः सत्तेत्या-
ोनाम्नामविषयमेवेति सर्वशब्दस्तद्विषयतया सङ्कोचनीयः
ाति * तत्त्विति * कक्ष्याशब्दः कोष्ठवाची द्रव्यत्वगुणत्वकर्म-
येकस्यां सत्तावान्तरसामान्यकक्ष्यायां वर्त्तन्ते । पृथिवीत्वादीनि
त्वावान्तरसामान्यकक्ष्यायां रूपत्वादीनि गुणत्वावान्तरसामा-
क्ष्यायामित्येवमादिः कक्ष्याणां विभागः । तत्र द्रव्यशब्देन द्रव्य-
त्तयोर्निश्चयं प्रतीतिर्भवति । पृथिवीत्वादिषु सन्दिग्धा प्रतीति-
त्वादिषु त्वप्रतीतिरेव गुणशब्दाद् गुणत्वसत्तयोर्निश्चयप्रतीतिः ।
त्वादिषु सन्दिग्धप्रतीतिः । द्रव्यत्वादिष्वप्रतीतिरेवेत्यादिकक्ष्या-
ागेन सामान्यानां प्रतिपादनात्सर्वशब्दानां च सत्तावाचित्वे
शब्दाद् गुणत्ववद् द्रव्यत्वस्याप्यप्रत्ययापत्तेः । सत्ताद्वारेण वा
ये पृथिवीत्वादिवत् सन्दिग्धप्रतीतिप्रसङ्गाद् गुणत्वादावपि च
कप्रतीतिप्रसङ्गात् सत्तावान्तरसामान्यविषयाणां द्रव्यादिशब्दा-
मेव तावत् सत्तावाचित्वमयुक्तं तत्रैवं सति दूरान्तरितार्थानां
ादिशब्दानां सुतरां सत्तावाचकत्वे शक्तिर्नास्तीत्यर्थः । श्लोकं
चष्टे * प्रतिनियतेति * ननु द्रव्यादिशब्दानां द्रव्यत्वाद्यवच्छि-
शब्दवाचित्वाद्व्यवस्था भविष्यतीत्याशङ्कानिराकरणार्थं विशिष्टा-
धानपक्षं निराकरिष्यन्परानभिमतमपि शुद्धाभिधानं विशिष्टा-
धाने निराकृते यदि कश्चिदङ्गीकुर्यात्ततस्तदपि निराकार्यमिति
वा विकल्पयति तावत्सत्तामिति आद्यं तावत्पक्षं निराकरोति *
द्धेति * ननु देशाद्यपेक्षया घटादिवत्सत्तायां नास्तित्वाभिधानं न
ोत्स्यते ऽत आह * देशेति * आदिशब्दो वस्त्वभिप्रायो यथा- २(
ाशस्य कूपपूरणेनोपलम्भप्रतिबन्धात्प्रतीयमानावस्थापेक्षया ना-
याकाशमित्युच्यते तथात्रापीत्याशङ्कानिराकरणार्थः । मूर्त्तद्रव्याव-
म्भो ह्याकाशोपलम्भप्रतिबन्धको ऽन्वयव्यतिरेकाभ्यामवगम्यते न
; सत्तायाः किञ्चिदुपलम्भप्रतिबन्धकमस्तीत्याशयः । व्यक्तिमात्रग-
त्वे ऽपि जातेराकाशादिव्यक्तीनां विभुत्वात् सत्ताया विभुत्वसि-
द्धेः सत्ताशब्दस्य लौकिकव्यवहारे च जातिवाचित्वाभावात् सर्व-
ब्दानां महासामान्यवाचित्वे ऽपि सत्तावाचित्वाभिधानं न युक्त-

मित्याह * रूढीति * लोकदृष्टेत्यनेन गवादिशब्दवत् सत्ताशब्द
लौकिकव्यवहारे प्रयोगाभावाज्जातिवाचित्वनिषेधस्य लोकविरो
परिहृतः । किं तर्हि सत्ताशब्दवाच्यं युज्यतइत्यपेक्षायामाह
य एव हीति * यो ऽस्तिशब्देन द्वितीयो भावविकार उच्यते स ए
सत्तेत्येतद्युज्यतइत्यर्थः । अनेन चास्तिशब्दो ऽपि न वस्तुत्वापरपर्य
यमहासामान्यवाचीति सूचितम् । द्वितीयभावविकारवाचिनो ऽस
धातोः शत्रन्तात्तलि कृते सत्ताशब्दव्युत्पत्तेरित्याशयः । ननु वस
शब्दस्यापि द्वितीयभावविकारवाचित्वात्सत्तास्तिशब्दयोर्वस्तुशब
पर्यायत्वमविरुद्धमित्याशङ्क्याह * जायमानेति * प्रथमो भावा
कारो जायमानत्वं विपरिणामस्तृतीयः । आदिशब्देन वृद्ध्यपक्ष
चतुर्थपञ्चमावुपात्तौ विनश्यता षष्ठः । सर्वशब्देन भावविकाररा
तेष्वपि नित्येष्वाकाशादिषु वस्तुत्वप्रतीतेर्न वस्तुशब्दो भावविक
रवाचीति सूचितम् । ततश्चास्तिशब्दो ऽपि न वस्तुत्ववाचीति
वसूचितमर्थं प्रकटयन्नस्त्यर्थे इति पाठं दूषयति * तेनेति *
किकप्रयोगाभावाच्चासमुदायप्रसिद्ध्यात्मलाभाभावे क्लृप्तावयव
र्थत्यागेन समुदायस्य शक्त्यन्तरकल्पनं प्रोक्षिण्यादिशब्दवन्न युक्त
त्याह * न चेति * सत्ताशब्दप्रकृतित्वात् सन्शब्दस्योपन्यास
तस्माद्यौगिक एव सत्ताशब्दो न रूढिरित्युपसंहरति * इतीति
यथा भवतीत्याख्यातस्यार्थे भवन्निति भवच्छब्दो धात्वर्थविशि
कर्तृवाचित्वाद्यौगिकः तथास्तीत्याख्यातस्यार्थे सन्निति शब्दो ऽपि
ततश्च सतो भाव इत्यस्मिन्नर्थे सच्छब्दात्तल्प्रत्ययोत्पत्त्या सत्त
प्रवर्त्तमानो यौगिक एव । ननु सत्ताशब्देन जातिः प्रतिपत्तव्या
शेषिकपरिभाषैव हि तत्प्रतिकारणं नान्यत्किं चिदित्यर्थः । कीदृ
परिभाषेत्यपेक्षिते काश्यपीयं सूत्रं पठितम् । इतिकरणो बुद्ध्युप
क्षणार्थः । यतो वस्तुत्वान्महासामान्याद् द्रव्यादिषु सदिति बुद्धिर
ति सा सत्तेति सूत्रार्थः । परिभाषाशब्ददर्शनात् परिभाषासूत्र
शङ्कां निवर्त्तयितुं लक्षणसूत्रमेवेदं स्वोत्प्रेक्षितत्वद्योतनार्थन्तु परि
षात्वाभिधानमिति लक्षणशब्देन सूचितम् । किं पुनर्वैशेषिक
सत्ताशब्दस्य जातिवाचित्वप्रसिद्धौ कारणमित्यपेक्षामाह * सेय
ति * वस्तुपर्यायेण क्रमेण वक्तीति वस्तुपर्यायवाची वस्तुत्व
चीत्यर्थः । भवच्छब्देन सह साधारणो द्वितीयभावविकाररूपो
ऽस्येति भवसाधारणार्थः । घटो भवति इत्यादिषूत्पत्त्याख्यप्रथमभ
विकारवाचित्वेनापि प्रसिद्धस्य भवतेर्भूसत्तायामिति सत्ताख्य
तीयभावविकारवाचित्वस्मृतिबलाद्भवत्साधारणार्थत्वमव्ययसं

ास्तिशब्दस्योक्तेः। भवतिधात्वर्थमात्रवाचित्वे ऽपि अव्ययास्तिश-
ब्दस्य प्रकृत्यनुग्रहार्थं शतृप्रत्ययोपादानाद्वस्तुत्वद्वितीयं भावविका-
रूपार्थद्वयवाचिना अव्ययसंज्ञकेनास्तिशब्देनेयं प्रसिद्धिरुपपादिते-
त्यर्थः। क्व पुनरव्ययास्तिशब्दो वस्तुत्ववाची दृष्ट इत्यपेक्षायामाह * अ-
स्तित्वमिति * दिग्योगनिमित्ता पञ्चमी यस्मादस्तिशब्दात्परौ
तल्त्वौ दृश्येते स वस्तुत्ववाचीत्यर्थः। आख्यातप्रतिरूपक इत्या-
ख्यातत्वभ्रान्तौ कारणमुक्तम्। नन्वाख्यात(शब्द एवायं कस्मान्न भ-
वतीत्याशङ्क्याह * अप्रातिपदिकत्वाद्धीति * भवत्साधारणार्थत्व-
मुपपादयन्नाख्यातत्वे कारणान्तरमाह * अस्तीति * तेनास्ति) श-
ब्देन सह समासाभ्युपगमादनाख्यातत्वं तस्य च सन्शब्दवाच्यद्वि-
तीयभावविकारवाचित्वावगमात् भवत्साधारणार्थतेत्यर्थः। एतदेव
व्याचष्टे * अस्तीति * अस्तिपदेन सह यो बहुव्रीहिः सो ऽव्यय-
संज्ञकेन नाख्यातसंज्ञकेन तस्यासुबन्तत्वेन समासायोगादित्युक्तेः
नन्वव्ययस्यापि सुब्लोपान्वाख्यानेनासुबन्तत्वादव्ययीभाववच्चाहत्य
बहुव्रीह्यविधानात्कथं समासः स्यादित्याशङ्क्य प्रत्ययलोपे प्रत्ययलक्षण-
मिति स्मृतेः प्रत्ययलक्षणद्वारेण सुबन्तत्वमुक्तम्। ननु सुबुत्पत्तेः
प्रागसुबन्ततास्तीत्याशङ्क्यावश्यम्भावित्वेन सुबुत्पत्तेः प्राथम्यमु-
क्तम्। आवश्यकत्वोपपादनार्थं प्रातिपदिकत्वेन योग्यतोक्ता। ननु
यथा पठतितमामित्यप्रातिपदिकादपि तद्धितो जातस्तथात्र तिङ-
न्तस्यापि समासो भविष्यतीत्याशङ्क्य तिङन्तेत्युक्तम्। तिङश्चेति
सूत्रेणाहत्य विधानात्तत्र तद्धितो जातः तिङन्तस्य तु समासत्वेनोप-
संख्यानमपि नास्तीत्यर्थः। सदर्थवचन इत्यनेन सद्वाचिनः
सच्छब्दस्यार्थपरत्वं व्याख्यातम्। कथमव्ययशब्देनेयं प्रसिद्धि-
रुपपादितेत्यपेक्षायामाह * ततश्चेति * वस्तुनि महासामान्ये
सति च द्वितीये भावविकारे सत्संज्ञकमस्तिशब्दं प्रयुज्यमा-
नमुपलभ्य तदीयद्वितीयं भावविकाराख्यार्थानुसरणेन च कृ-
त्वाव्ययास्तिशब्देन सह प्रत्यासन्नमदूरान्तरार्थं कर्तृप्रतीत्या
विनेति द्वितीयभावविकारवाचितयास्त्यर्थं सच्छब्दमुपलभ्य
महासामान्यमप्यव्ययास्ति(शब्दवाच्यः सच्छब्दवाच्या सत्तेत्येवं
कल्पितमित्यर्थः। नन्वव्ययास्तिशब्दवाच्यस्य द्वितीयभावविकारस्य
सच्छब्दवाच्यत्वे ऽपि कथं महासामान्यस्य सच्छब्दवाच्यत्वकल्पन-
माशङ्क्याव्ययास्तिशब्दवाच्यत्वहेतुना द्वितीयभावविकारदृष्टान्तेन
तस्यापि सच्छब्दवाच्यत्वानुमानसूचनार्थं तार्किकैरित्युक्तम्। न-

२ अयं पा० २ पु० ना०।

न्वेवमपि तल्प्रत्ययाधिक्या सत्ता)शब्दस्य कथं महासामान्यवा
त्याशङ्क्य देवात्तलिति स्मृतेर्यथा देवतेति तल्प्रत्ययः स्वार्थिक
थायमपीत्युक्तम् । ननु द्वितीयभावविकारे कृत्सञ्ज्ञकशतृप्रत्
पात्तकर्तृविशेषणतया सच्छब्दवाच्यत्वेन सहाव्ययास्तिशब्दवा
त्वेन सहाव्ययास्तिशब्दवाच्यत्वस्य व्याप्तेर्महासामान्यस्यापि कर्तृ
षणतयैव सच्छब्दवाच्यतानुमितसामान्यस्य बाधकर्तृकत्वान्न
थानुमानं सम्भवतीति धर्मविशेषविपरीतसाधनात् विरुद्धो
५३।२ स्यादित्याशङ्क्य * इहापीत्युक्तम् * यथा ऽव्ययास्तिशब्दवाच्ये द्वि
भावविकारे कर्तृविशेषणत्वप्रतीतिर्नास्ति तथेह सच्छब्दवाच्ये
तीयभावविकारे भवतीमपि कर्तृप्रतीतिं सक्षीरेति समासोपप
सुबन्तत्वयोग्यप्रातिपदिकत्वयोग्यप्रातिपदिकत्वसिद्ध्यर्थं कृत्स
कशतृप्रत्ययोच्चारणोपपत्तेरतन्त्रीकृत्य कर्तृनिरपेक्षधात्वर्थमात्र
ची सच्छब्दस्तत्समानार्थत्वाच्च सत्ताशब्दो ऽपीत्यर्थः । ननु स्मृ
भावाच्छब्दपरस्य तल्प्रत्ययार्थस्य स्वार्थिकं तत्त्वमविवक्षाहेत्वभाव
कर्तृप्रतीतेरतन्त्रीकरणमयुक्तमित्याशङ्क्यापारमार्थिकाभ्युपगममा
द्योतनार्थम् * गृहीत्वेत्युक्तम् * स्वार्थिकं तलं गृहीत्वा धा
र्थमात्रवचनौ च सच्छब्दसत्ताशब्दौ गृहीत्वेत्यन्वयः । नन्वनेन न्
येनाख्यातसञ्ज्ञकस्याप्यस्तिशब्दस्य द्वितीयभावविकारवाचित्वान्
हासामान्यवाचितापि प्रसज्येतेत्यनिष्टापत्तिशङ्कानिराकरणायाख्
तप्रत्ययोच्चारणास्यानन्यार्थत्वेन कर्तृसंख्याकालादिप्रतीतेरतन्
कर्तुमशक्यत्वात्कर्तृसंख्याकालादिनिरपेक्षशुद्धधात्वर्थमात्रवाचित
माख्यातास्तिशब्दस्य नास्तीति सूचयितुमेवकारः । ततश्चाख्यातास्ति
ब्दवाच्यद्वितीयभावविकारदृष्टान्तेनाव्ययत्वे ऽस्तिशब्दवाच्यत्वहेतु
वस्तुत्वस्याख्यातास्तिशब्दवाक्यमिहानुमीयमानं कर्तृसंख्यादिवि
ष्टत्वेनैवानुमीयेत यदव्ययास्तिशब्दवाच्यं तत्कर्तृसंख्यादिविशिष्ट
नाख्यातास्तिशब्दवाच्यमित्याख्यातास्तिशब्दवाच्ये द्वितीयभावव
कारे व्याप्तिदर्शनादित्याशयः । ननु वस्तुत्वजातेः सच्छब्दवाच्य
तार्किककल्पिता पदवाक्यार्थतत्त्वज्ञैर्निराक्रियमाणा कथं प्रसि
यायादित्याशङ्क्याह * तदुक्तेति *

यावद्यावद्विवादाय मुक्तकं दीयते मनः ।
अनवस्थादिदोषेण तावत्तावद्विहन्यते ॥

इत्यनेन न्यायेन चिरनिखाततडागादिगतशैवालवच्छुष्कतव
स्याप्रतिष्ठितत्वेन निराकृतस्यापि पुनः पुनरुद्भवेन समापयितुमशक्

१भय पा० २ पु० ना० ।

वात्तार्किकोक्तस्यान्तगमने समापने अनादराद्भियुक्तैरुपेक्षित-
त्वात्प्रसिद्धं, सदिमां युक्तायुक्तत्वविचारावस्थां प्राप्तमित्यर्थः।प्रसि-
द्ध्याभासं चेदं न परमार्थतो नियुक्तानामेवं प्रसिद्धिरस्तीति चशब्दे-
नोक्तम्। किं तदित्यपेक्षायामाह * येनेति * येन सत्ताया वस्तु-
त्वापरपर्यायमहासामान्यात्मकत्वेन गवादिशब्दवाक्यत्वेनापि संज्ञा
सम्भाव्यते। तत्सत्ताया महासामान्यरूपत्वमिमामवस्थां प्राप्तमित्यर्थः।
यद्वा युक्तायुक्तत्वविचारस्य कः प्रस्तुतोपयोग इत्यपेक्षायामिदमु-
क्तं, येन कारणेन सत्तायाः सामान्यरूपत्वे सति गवादिशब्दवाक्य-
त्वेनापि न सत्ता सम्भाव्यते तेन तन्निराकरणार्थं रूढिशब्दश्च नैवा-
मित्यादिना सत्ताशब्दस्य जातिवाचिता निराकृतेत्यर्थः। परमार्थत-
स्तु वस्तुत्वस्य जातिरूपस्यापि गवादिशब्दवाच्यत्वं नास्ति किमुत
सत्तायाः। जात्याख्याद्धर्माद्धर्मान्तरत्वेन द्वितीयभावविकारत्वेन व-
र्तमानत्वादित्याह * नन्विति * ननु वस्तुशब्दस्यापि निवासार्थाद्व-
सधातोर्वसेस्तुन्निति सूत्रेणौणादिके तुन्प्रत्यये कृते व्युत्पत्तिसम्भ-
वादनेकत्र नितरां प्रत्येकमेकमेव वसतिवर्ततइत्यवयवार्थयोगेन स-
त्तादिषु सामान्यं सामान्यमित्येकाकारप्रत्ययालम्बनस्यानेकेष्वेकस्य
प्रत्येकवृत्तित्वलक्षणस्याभिधानाद्यौगिकत्वेन जातिवाचित्वं न यु-
क्तमित्याशङ्कां निराकुर्वन्नर्थगम्यत्वं विवृणोति * वस्तुशब्दो हीति *
व्यक्तेः प्रत्येकवृत्तित्वाभावादेवंविधयोगनिमित्तत्वे वस्तुशब्दस्य
व्यक्तौ प्रयोगानुपपत्तिप्रसङ्गाद्यौगिकत्वासम्भवाभिधानार्थं व्यक्त्या-
श्रितत्वं वस्तुत्वसामान्यस्योक्तम्। जातेर्जात्याश्रितत्वाभावाद्वस्तुश-
ब्दस्य जातिवाचित्वे जातौ प्रयोगानुपपत्तिमाशङ्क्य निःसामान्यानि
सामान्यादीनीति वैशेषिकपरिभाषायाः प्रतीतिविरोधेनायुक्तत्वा-
ज्जातेरपि जात्याश्रयत्वं सम्भवतीति दर्शयितुं जात्यन्तराश्रितत्वमु-
क्तम्। नन्वेवं सति वस्तुत्वे ऽपि वस्तुत्वप्रतीतेर्जात्यन्तराश्रयणा-
दन्तरशब्दः। यथैव गोत्वरूपेण शाबलेयादौ गवाकारप्रत्ययसि-
द्ध्यर्थं गोत्वमङ्गीकृतं न गोत्वे तत्र गवाकारप्रत्ययस्य स्वरूपनिब-
न्धनोपपत्तेः। तथा जात्यन्तरे व्यक्तौ च वस्त्वाकारप्रत्ययसिद्ध्यर्थं
वस्तुत्वं जातिरिष्यते तत्र स्वरूपनिबन्धनत्वेनैव वस्त्वाकारप्रत्ययोप-
पत्तेर्नापरा वस्तुत्वं जातिरङ्गीकार्येत्याशयः। शुद्धाभिधानपक्षस्य द्व-
त्वोपसंहारपूर्वकं विशिष्टाभिधानपक्षस्य दुष्टत्वं प्रतिजानाति ता-
त् * शुद्धेति * दूषयति * यद्वेति * एतदेव प्रपञ्चयितुं विक-
ल्पयति * गोसत्तां चापीति* आद्ये कल्पे दोषमाह * तत्रेति *
तदेवोपपादयति * विशेषणमिति * गोव्यक्तिविशिष्टसत्ताभि-

२५४।२ धाने ऽप्येतमेव दोषमतिदिशति * तथेति * कल्पनागौरवा
केवलव्यक्त्यभिधानपक्षवद्विशेषणभूतव्यक्त्यभिधानपक्षो ऽ
इत्याह * अनित्येति * अनित्यः सम्बन्धस्तस्य चान्वयव्यतिरे
विना ऽपि ज्ञानमनन्ताश्च शब्दशक्तयो यस्मिन्व्यक्त्यभिधाने प्र
न्ते तत्तथोक्तम्।दृष्टान्तं साध्यविकलत्वेन दूषयितुमनुभाषते*
ति*दूषयतिश्लोकं* तत्रेति*श्लोकं व्याचष्टे * केचिदिति *
र्थापत्त्या पर्युपस्थापितस्यार्थविशेषस्य वचना वाचका इति पूर्व
मासान्निष्कृष्य योज्यं पर्युपस्थापनस्य नित्यपर्युपस्थापकसापेक्षत्व
पस्थापितशब्दस्य श्रुतार्थापत्तिसापेक्षत्वे ऽप्युत्तरपदसमासार्
श्रुतार्थापत्त्या अपूर्वं पर्युपस्थाप्यते । स्वर्गो देवताश्च वाच्यशे
वादैर्वाक्यान्तरैश्च मन्त्रोपनिषदादिभिरुपस्थाप्यन्ते । ननु
श्रुतस्वर्गयागसाध्यसाधनसम्बन्धान्यथानुपपत्त्या यागजन्यः
त्पादनसामर्थ्यातिशयविशेषः कल्प्यते । तथापि समस्तवैदि
ष्टार्थकर्म्मजन्यातिशयानुगतमपूर्वशब्दवाच्यं सामान्यं न स
ऽन्यतप्रमाणान्तरेण लभ्यते । एवं सवनीयसूक्तादिमहेन्द्र
वताविशेषावगमे ऽपि सर्वदेवतानुगतं सामान्यं देवताशब्दवा
सत्तातो ऽन्येन लभ्यते ये हि जनाः पुण्यकृत इत्यादिवाक्य
नक्षत्रलोकादिस्वर्गविशेषावगमे ऽपि न च वै स्वर्गलोका इत्य
क्यशेषेभ्यो ऽनेकस्वर्गावगतेः सर्वानुयायिस्वर्गशब्दवाच्यं स
ऽन्येन लभ्यते इति बलात्सत्तैवापूर्वादिशब्दवाच्या स्यादित्याश
* कार्येति * सामान्येनेतीत्थम्भूतलक्षणे तृतीया । सामा
मप्यपूर्वादिसत्तातो ऽन्यदेव लभ्यतइत्येवकारार्थे तुशब्दः ।
दित्यपेक्षिते सर्वातिशयानुवर्त्तिस्वर्गादिकार्योत्पादनसामर्थ्य
न्यमपूर्वशब्दवाच्यं सर्वेन्द्रादिदेवतानुवर्त्तिदीव्यतिधात्वर्थयं
सामान्यं देवताशब्दवाच्यम् । सर्वस्वर्गानुवर्त्तित्वदुःखभि
निष्टसुखसङ्गतिसामान्यं स्वर्गशब्दवाच्यमित्युक्तम् । श्लोकं
ख्यातुमपूर्वशब्दस्य तावत्सत्तातिरिक्तसामान्यवाचित्वमुपप
* सर्वेति * ननु लौकिकसाधनगतानां सामर्थ्यानां क
पत्तिगम्यत्वे ऽप्यपूर्वशब्दवाच्यत्वाभावात्तद्वाच्यानां च वै
गादिजन्यानां सामर्थ्यानां विशेषतः श्रुतार्थापत्तिगम्यत्वे ऽ
कर्मसामान्यविध्यभावेन सामान्यतः प्रमाणान्तरेणानवगम
न्धग्रहणासम्भवेन कथमपूर्वशब्दाभिधेयतेत्याशङ्क्य * याग
क्तम् * कलृसावयवसमाख्यानुसारेणैवापूर्वशब्दस्य सत्ता
कर्मजन्यातिशयविशेषवर्त्त्यवान्तरसामान्याभिधायकत्वोपपत्ते

क्सम्बन्धग्रहणापेक्षेति भावः। देवताशब्दस्य सत्तातिरिक्तसर्वे-
वतावर्त्यवान्तरसामान्यवाचित्वमुपपादयति * तथेति * दिवु-
ोडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिष्विति समस्त्वर्थेषु
नृताद्दीव्यतेर्धातोर्घञि कृते देवशब्दव्युत्पत्तेः। सर्वेन्द्रादिदेवानु-
तस्य क्रीडादिदीव्यत्यर्थयोगस्य सामान्यस्य सत्तातिरिक्तस्य सङ्ग्रा-
त्सुज्ञानो देवशब्देन सह देवानां सबन्ध इत्यर्थः। सत्ताव्यावृ-
र्थो विशेषशब्दौपाधिकत्वाद्वा देवशब्दस्यापूर्वशब्दवदेव जातिवा-
त्वनिराकरणार्थः। ननु क्रीडादिदीव्यत्यर्थयोगस्य प्रमाणान्तरेण
वेष्वनवगमात्कथं तद्योगनिमित्तेन देवशब्देन सह सम्बन्धज्ञान-
त्याशङ्क्यार्थान्तरानवगमेऽपि द्युत्यादेर्दीव्यत्यर्थस्य चन्द्रादौ प्रत्य-
णोपलम्भाद्देवशब्दप्रवृत्तिनिमित्तत्वं भविष्यतीति दर्शयितुम् *द्यो-
न्ते वेत्युक्तम् * ग्रहशब्देनैव चन्द्रादित्योपादाने सिद्धेऽपि द्युत्य-
ाशयात्तयोः पृथगुपादानं चन्द्रतारकेभ्यो नक्षत्राणां द्युत्यतिश-
त्पृथगुपादानं रूपेणेतीत्थम्भूतलक्षणे तृतीया योजना तु दीव्य-
ीति व्युत्पत्त्या क्रीडादिदीव्यत्यर्थयोगात्सर्वे देवाश्चन्द्रादिरूपेण ग-
ने स्थिता द्योतन्तइति दिव्यत्यर्थः। द्युतियोगाद्देवाः वायवः सतत-
त्या दीव्यत्यर्थगतियोगाद्देवाश्च शब्दोपात्ताश्चेतरे सर्वेऽपि वा स्तू-
न्तइति दीव्यत्यर्थस्तुतियोगाद्देवा इति प्रकारवचनमितिकरणं
रावर्त्यं कार्यां गत्येत्यत्र तु तृतीययैवेतिकरणार्थस्य लब्धत्वान्नेति
रणापेक्षा आर्थवादिकीनां स्तुतीनां विधिशेषत्वेन देवता(स्वरूपप-
त्वाभावान्मन्त्रैरित्युक्तम्। अस्य च ग्रन्थस्य क्रमेण श्लोकगतेन्द्रा-
पदोपात्तार्थविवरणत्वावगमात्सर्वेन्द्रादिदेवतागतदेवता) त्वसा-
न्यपरमिन्द्रादिपदमवसीयतइति कृत्वा तथास्माभिर्व्याख्यातम्।
र्गशब्दस्य सत्तातिरिक्तार्थवाचित्वमुपपादयितुं नक्षत्रदेशो वा मे-
पृष्ठं वा विशेष एवं स्वर्गशब्दवाच्यो न सामान्यमिति प्रकारद्वयं
वदाह * तथेति * वैदिकेन प्रकृष्टेन स्पष्टेन वादेन तन्मूलेन
पौराणिकानां मातलयर्ज्जुनसम्वादादिगतेन दर्शनेन याज्ञिकानां
इ गन्मस्तुवः संज्योतिषा भूमेत्यादिप्रोत्साहनमन्त्रार्थानुसन्धान-
पेण दर्शनेनेत्यर्थः। वैदिकप्रवादद्वयं यथा वेद इत्युपक्रम्योदाहृ-
म्। ननु न च वै स्वर्गलोका इत्यादिदर्शनेनानेकस्वर्गानुगतसा-
न्यं स्वर्गशब्दवाच्यमङ्गीकार्यं न वा तत्सत्तातोऽन्यत्सम्भ-
तीत्याशङ्कानिराकरणार्थत्वेन निर्मिश्रसुखसङ्गतिरित्येतद्व्याचष्टे
अथ वेति * केवलमेव सुखं स्वर्गशब्देनोच्यतइत्यनुष- २१

१ अयं पा० २ पु० मा०।

ङ्गः । सुखस्य केवलं दुःखामिश्रत्वमुपपादयितुं दुःखाभावे ऽप्य
ल्पातदुःखसद्भावे ऽपि च व्यतिरेकाद् * दुःखाद्भिन्नमित्यु
म् * नन्वेवं सति कियत्कालं केवलसुखस्येहापि दर्शनात् स्वर्ग
सुष्मिकत्वं न स्यात् इत्याशङ्क्य * यदित्युक्तम् * सर्वसुखसा
सम्पन्नस्यापि पिपासादिदुःखाभावे स्वादूदकपानाद्यप्रवृत्तेः कं
त्कालं दुःखस्यापरिहार्यत्वादिष्टवियोगादिदुःखस्य चापरिहार्य
च्चिरकालं केवलसुखोपभोगस्यास्मिन् देशे ऽनुपपत्तेः । परलं
भोग्यत्वादल्पकालस्य च केवलसुखस्य स्वर्गशब्दानभिधेयत्वात्
लौकिकता सिद्धेत्यर्थः । ननु चिरकालोपभोग्यस्य केवलसु
प्रमाणान्तरेणानवगमात्कथं सम्बन्धग्रहणमित्याशङ्कां निराकुर्व
र्गादिशब्दार्थनिरूपणस्य प्रकृतसत्तावाचित्वनिराकरणोपयोगित
पसंहरति * तच्चेति * यागादिजन्यस्य चिरकालकेवलसुखस्
माणान्तरेणाग्रहणे ऽपि लौकिके एव सुखे ऽन्वयव्यतिरेका
दुःखामिश्रात्सुखान्निष्कृष्टे गृहीतसम्बन्धः स्वर्गशब्दो ऽल्पकाले
तद्विना प्रत्यासत्तिजन्यदुःखापरिहारेणामिश्रत्वायोगात्कैवल्ये
च्चिरकालताक्षेपाद्विशिष्टमेवालौकिकं प्रतिपादयतीत्याशयः । स
शब्दस्य सत्तावाचित्वनिराकरणोपसंहारेणेतरयोरपि तुल्यन्याय
क्तत्वात्पृथगनुक्तिः अलब्धापूर्वादिशब्दभोग्यं गवादिशब्दानां स्वा
भिधानेन मन्त्रागमकतया ऽस्मत्पक्षे ऽप्युपपन्नमित्याह * तेनेति
परपक्षनिराकरणमुपसंहरति * अतश्चेति * नन्वेवं तर्हि गोत्वा
श्वादिभ्यो व्यावृत्तत्वेन विशेषरूपत्वादाकृतिवाच्यत्वपक्षो ऽनु
न्नः स्यादित्याशङ्क्याह * गोत्वेति * अश्वादिभ्यो व्यावृत्तत्वे
शाबलेयादिष्वनुवृत्तेः सामान्यरूपताप्यस्तीत्याशयः । कुत इति
देहे तु प्रश्नभाष्यं द्वयोः प्रतीतिरेकाभिधानेनैवाविनाभावादित
तीतिसिद्धेः सन्देहहेतोः स्पष्टत्वादयुक्तमाशङ्क्य व्यक्तिपक्षनिश्च
भिप्रायत्वेन व्याचष्टे * कुत इति * सन्देहहेतुप्रतिपादनार्थं गौ
भाष्यं प्रत्ययस्य व्यक्त्याकृत्योस्तुल्यत्वादयुक्तमाशङ्क्य प्रत्ययहे
ब्दशक्तिलक्षणार्थप्रत्ययशब्दाङ्गीकरणेन व्याचष्टे * उच्यतइति
प्रत्ययशब्दस्यानार्जवं द्योतयितुं व्युत्क्रमेण व्याख्यातम् । नन्वेवं
विरुद्धाव्यभिचारित्वापत्तौ केनान्येन निर्णय इत्याशङ्क्याह * शा
ति * नात्रान्येन निर्णयः किं त्वनयोरेव बलाबलावधारणे
भावः । प्रयोगचोदनाभावादितिसूत्रं लोकवेदाधिकरणसिद्ध
ऽन्यथा योजितत्वाद्विवेकायाकृत्यधिकरणपूर्वपक्षे ऽप्यावृत्त्या यो
ति * किं ावदिति * लौकिक एवार्थो वेदे ऽपीत्युक्तम् *

रावित्यपेक्षायां प्रयोगचोदनाभावं पर्यालोच्य यो युक्तः स इत्ये-
व्यक्तिवाच्यत्वप्रतिज्ञावगतेः * व्यक्तिर्वाच्येत्युक्तम् * अर्थैकत्व-
ाति सूत्रावयवं द्वयोः प्रतीयमानत्वाद्व्यक्तिमात्रवाच्यत्वं न युक्त-
त्याशङ्कानिराकरणार्थत्वेन व्याख्यातुम् * नन्वित्युक्तम् * एकस्य
ाच्यत्वे द्वयप्रतीतिः कथमित्याशङ्क्य द्वयप्रतीत्युपपादनार्थत्वेना-
ाभागादिति सूत्रावयवो व्याख्यातः। ननु शक्त्यनुसारेण शब्दानां
ाचकत्वाच्छक्तेश्चान्वयव्यतिरेकाभ्यां जातावेव ज्ञातुं शक्यत्वात्का-
योगाभावे ऽपि तस्या एव वाच्यत्वं युक्तं न व्यक्तेरित्याशङ्क्याह *
त्यमिति * वाक्यार्थप्रतिपादनात्मकप्रयोजनकाले शब्दानामुच्चारि-
नां वाक्यार्थप्रत्यायनार्थत्वानुसारेणैतद्वाक्यार्थप्रतिपादनोपयोगिप-
ार्थप्रतिपत्तिरेवंविधेन शब्दविभागेन भवतीति ज्ञात्वा तथाविधश-
्दविभागावधारणम्। शब्दविभागसन्देहाभावे ऽपि वाक्यार्थविशेषो-
योगिशब्दार्थविशेषावधारणं तद्यथा श्वेतो धावतीत्यत्रार्थप्रकरणा-
्ना गौरो निर्णेनेक्ति इत्येवं वाक्यार्थपरत्वावधारणे श्वेत इत्येक-
द्त्वं धावतेश्च निर्णेजनार्थतावधार्यते। अस्माद्देशाच्छीघ्रं गच्छती-
ातद्वाक्यार्थपरत्वे ऽश्वा इति पदद्वित्वं गत्यर्थत्वं च धावतेर्निश्ची-
ते। एवं यथा येन प्रकारेण जातिवाच्यत्वनिरूपणरूपेण व्यक्ति-
ाच्यत्वनिरूपणरूपेण वा पदार्थानां वाक्यार्थप्रत्ययार्थता भवति
ाथा पदार्थानां जात्याख्यस्य व्यक्त्याख्यस्य वा रूपस्य निरूपणं कार्यं
। शक्त्यनुरोधेन कार्यावसेयत्वेन तस्यास्तदानुगुण्येन कल्प्यत्वादिति-
ाावः। प्रयोगचोदनाभावव्याख्यानार्थमालम्भनेति भाष्यं व्याचष्टे
* आकृतिरिति * ननु देवतोद्देशपूर्वकत्यागसङ्कल्पमात्रत्वाद्याग-
याकृतावप्युपपत्तिरित्याशङ्क्य * नेत्युक्तम् * निष्क्रियत्वेनाकृतेर्य- २
ाग्रविनियोज्यत्वलक्षणासत्तायोगात्स्वत्वनिवृत्तिरूपत्यागो न सम्भ-
ातीत्याशयः। आदिशब्दोपात्तमवघाताद्ययोग्यत्वमुपपादयितुमा-
् * अमूर्त्ता हीति * अवघाताद्युत्तरकालं वा व्रीह्यादेस्त्याज्यत्वा-
ाकृतेश्चावघाताद्ययोग्यत्वात् त्यागानुपपत्त्युपपादनार्थो ऽयं ग्रन्थः
श्लोकद्वयं व्याचष्टे * व्रीहीनिति * यावन्तो ऽवघातादयः संस्का-
ा विनाशिमूर्त्तिमद्द्रव्यविषयत्वादाकृतौ न युज्यन्ते ये चावेक्षणा-
्यो विनाशिमूर्त्तिमद्द्रव्यविषयत्वाभावे ऽपि यागापूर्वाख्यप्रयोज-
ासिद्ध्यर्थत्वादाकृतेश्च यागसाधनत्वाभावान्न तत्र युज्यन्ते। तेषां
सर्वेषां या प्रयोगचोदना तस्या आकृतावभावाद् व्यक्तौ च भावा-
द्विधिविषयत्वयोग्यो यो व्यक्त्याख्यः पदार्थस्तत्कल्पनमवश्याङ्गीक-
र्तव्यमित्यन्वयः। कथं व्यक्तेर्विधिविषयत्वयोग्यतेत्यपेक्षिते * वा-

न्यार्थेत्युक्तम् * ननु विधिविषयत्वायोग्यत्वे ऽप्याकृतेः सम्ब ग्रहणवशाद्वाच्यत्वं भविष्यतीत्याशङ्क्य * कार्येत्युक्तम् * र्योपयोगिन्येवार्थे सम्बन्धग्रहणसम्भवो नेतरत्रेत्याशयः कथमित्यपेक्षायाम् * विध्यधीनत्वाच्चेत्युक्तम् * श्रवणानन्तरभाविन्या हि प्रयोज्यवृद्धप्रवृत्त्या तद्विषयज्ञानमनुमा त्कारणत्वं शब्दस्य कल्प्यमानं प्रवृत्तेर्विध्यधीनत्वात्तद्विषयज्ञान रणत्वमेव कल्पयितुं युक्तमिति भावः । एतच्च पूर्वोक्तमेव विव भाष्यव्याख्यावसरे ऽभिहितमिति न पौनरुक्त्यम् । आकृतेर्विधे षयत्वासम्भवमुपपादयति * तथेति * उपसंहरति * तस्मादि यद्यप्यन्वयव्यतिरेकनिष्कृष्टशक्तिवशेनाकृतेस्तत्त्वतो वाच्यता रयितुं शक्या । तथापि कार्यानौपयिकत्वेनास्याः पदार्थकल्पन स्वज्ञानमात्रादृष्टसिद्ध्यर्थं स्यात्प्रयोगचोदनाविरोधित्वात्त्वसाव त्यर्थः । अर्थैकत्वमिति सूत्रावयवावतारणार्थं यत्रेत्याशङ्काभाष्यं चष्टे *स्यादिति * एतदाशङ्कानिराकरणार्थत्वेन सूत्रावयवव्या नार्थमुक्तमिति भाष्यं व्याचष्टे * तदिति * केन न्यायेनेत्य यामन्यायश्चानेकशब्दत्वमितिसूत्रं भाष्यकृता ऽन्यायश्चानेका मित्यूहित्वा पठितमिति व्याचक्षाणः सूत्रोक्तं न्यायत्रयमाह *अ स्थितेति * यववराहाधिकरणोक्तन्यायपरामर्शार्थं वेदं भाष्य व्याख्यानान्तरार्थं तत्र न्यायमाह * सम्बन्धानां चेति * स सदृशानां प्रियङ्गुदीर्घशूकादीनामेकाभिधानेनैवेतरप्रतीतिसि वादिशब्दानामर्थैक्यं स्थितम् । तथैव सम्बन्धानामप्येकाभिधाने तरत्र प्रतीतिसिद्धेरन्याय्यानेकार्थतेत्यर्थः । कथमित्याशङ्का व्याचष्टे * कथं तर्हीति * सादृश्यवत्सम्बन्धादप्येकाभि नेतरप्रतीतिसिद्धावुक्तायामपि किमिह सादृश्यादेकाभिधा तरप्रतीतिसम्बन्धाद्वेति विशेषजिज्ञासयोरन्वयः प्रश्नपूर्व ख्याने तु समञ्जस एव । व्यक्तिपदार्थकस्येत्यादिभाष्यमेतत्प्र सम्बन्धत्वादुपेक्ष्य स्वयमविभागादिति सूत्रावयवमेतत्प्रश्नाया णार्थत्वेनावतारयति * अत आहेति * इह च प्रश्नोत्तरएव स न्धाद्भाष्यकृतः शून्यहृदयाभिधानापत्तेरेतदाशङ्कापरिहारासाम च शुद्धव्यक्त्यभिधानपक्षत्यागादाकृतिविशिष्टव्यक्त्यभिधानपक्ष ग्रहार्थत्वेनोत्तरभाष्यव्याख्याने प्रतिज्ञासंन्यासाख्यनिग्रहस्थाना विभागादिति च सूत्रावयवेनैव सुपरिहरत्वेनासामर्थ्यायोगात्स वयवव्याख्योपेक्षाकारणाभावाच्चैतत्सूत्रावयवव्याख्यानार्थं व सम्बन्धादित्युत्तरभाष्यं, कथं व्यक्त्यन्तरेण प्रयोग इति चाशङ्का

ाष्यं भाष्यकृतोक्तमपि लेखकैः प्रमादान्न लिखितं लिखितमपि प्र-
ानमिति प्रतिभाति । अवतारितं सूत्रावयवं व्याचष्टे * यतस्त्वि-
। * शङ्कानिराकरणार्थस्तुशब्द. । एतच्च यत्र हि शुक्ल इति वा
ष्ण इति वा गुणः प्रतीतो भवति भवति खल्वसावलङ्गुणवाति प्र-
ायमाधातुमिति तद्भूताधिकरणभाष्येण तुल्यन्यायत्वादुक्तं भव-
त्याह * तदुक्तमिति * नन्वालम्भादिचोदनासु व्यक्त्योर्वा-
र्थत्वं श्येनचितादिचोदनासु त्वाकृतेरेव क्रियार्थत्वाल्लक्षितायाश्चा-
ाब्दत्वेन धूमगस्याग्निवच्छाब्दक्रियान्वयायोगात्तस्या एव वाच्यता-
ोकार्येत्याशङ्क्याह * यस्य त्विति * शङ्कानिराकरणार्थस्तुशब्दः
ाणलाक्षणिकत्वयोः शब्दस्य शक्त्यभावे ऽपि तात्पर्यसद्भावाच्छ्वशु-
ाल्लज्जते स्नुषेत्यादौ च पुत्रविशिष्टभार्यादिवाचिनः स्नुषादिश-
ास्य विशेषणभूतपुत्राद्यनभिधाने विशेष्यभूतभार्याभिधानाशक्तेः
नुषादिशब्दाभिहितस्यापि पुत्रादेर्लज्जादिक्रियान्वयादर्शनेन ता-
र्यवृत्तेरेव पदार्थान्वयकारणत्वावसायाल्लाक्षणिका ऽप्याकृतिः
क्रियात्वं प्रतिपत्तुं शक्तेत्याशयः । तस्य पदस्य तत्रस्थस्य तत्रैवार्थे व-
ामानस्येत्यर्थः । नन्वेवं सति व्यक्तेरपि लाक्षणिक्याः क्रियान्वयो-
पत्तेर्जातिवाचित्वैव कस्मान्नेष्टेत्याशङ्क्याह * इत्यपि चेति * इति २१
रणो ऽयमेवशब्दार्थे एवमपीत्युक्तं भवति यद्यप्युभयथापि क्रिया-
न्वयो युज्यते तथाप्याकृतेर्व्यक्तिविशेषनिश्चायकत्वाभावाद्व्यक्तेश्चा-
ृतिविशेषनिश्चायकत्वसद्भावादाकृतेरेव लाक्षणिकत्वं युक्तं न व्य-
क्तेरित्यर्थः । उपसंहरति * तस्मादिति * ननु विकल्पादिपक्षा-
न्तरसम्भवान्नायमुपसंहारो युक्त इत्याशङ्क्याह * न चेति * अद्र-
व्यशब्दत्वादितिसूत्रं स्वयं तावद्व्याचष्टे * अपि चेति * पूर्वस्मि-
न्नेव पक्षे ऽयमपि हेतुरित्यपि च शब्दस्यार्थः । जातिपक्षे द्रव्यशब्दत्वा-
भावापत्तेर्व्यक्तेरेव वाच्यतेत्युक्ते तदापत्तौ को दोष इत्यपेक्षायाम्
* सामानाधिकरण्यं हीत्युक्तम् * ततश्चेत्यर्थे हिशब्दः श्लोकं व्या-
चष्टे * गोशब्दादीनामिति * एतदेवोपपादयति * गोत्वस्येति *
ननु गोत्वस्य शुक्लादिगुणैः सहैकार्थसमवायलक्षणः सम्बन्धो ऽस्ती-
त्याशङ्क्याह * न हीति * व्यक्तिद्वारस्यैकार्थसमवायस्य व्यक्त्यन-
भिधाने रूपरसादिशब्दवत्सामानाधिकरण्यानापादकत्वात्साक्षा-
त्सम्बन्धेन भाव्यं न चासावस्तीति भावः । ननु व्यक्तिपक्षे गोश-
ब्देन जातिविशिष्टायास्तदुपलक्षिताया वा व्यक्तेरभिधानाच्छुक्लश-
ब्देन च गुणविशिष्टायास्तदुपलक्षिताया वा ऽभिधानात्तयोश्चैकत्वे
प्रमाणाभावात्कथं सामानाधिकरण्यमित्याशङ्क्याह * मम हीति *

व्यक्तिपक्षे सर्वव्यक्त्यभिधानाद्गोशब्दस्य शुक्लायामपि गोव्यक्तौ वृ
शुक्लशब्दस्य च गोजातीयायामपि शुक्लव्यक्तौ वृत्तेरैकार्थ्यो
द्धिः । जातिपक्षे तु व्यक्तेः शब्देनानुक्तत्वाल्लक्ष्यमाणायाश्चै
त्वे प्रमाणाभावाद्गवाश्वशब्दयोरिव भिन्नार्थतेति भावः
(मम हि व्यक्तीति व्यक्तिशब्दः । न बलत्वद्द्रव्येति द्रव्यशब्दः । उ
रार्धे पूर्वार्धस्य विपर्ययेणाव्यक्तिशब्दत्वादिति वक्तव्ये द्रव्यशब्दव्या
करेण मिश्रणेन गुणशब्दस्य गुणवचनशब्दस्य शुक्लादिशब्दस्य
णवचनशब्दस्य शुक्लादिशब्दस्य गुणोपलक्षितद्रव्यवाचित्वमेव न
गुणवाचित्वमिति व्यक्त्यभिधानपक्षे पूर्वपक्षमते सूचितमित्यन्वय
व्यक्तिद्रव्यशब्दव्यतिकरेण इति सूचितमित्यन्वयः । मम हि व्यक्त
ति व्यक्तिशब्दः न बलत्वद्द्रव्यशब्देति च द्रव्यशब्दः तयोः झटि
न्वयव्यतिरेकयोरेकविषयत्वोपस्थित्यै व्यक्तिशब्दस्य द्रव्यशब्दस्यैव
उभयत्र प्रयोज्यत्वौचित्ये ऽपि तयोः व्यतिकरः भिन्नरूपयोः प्रयो
तेन गुणशब्दस्य गुणवचनसंज्ञकशब्दस्य गुणव्यक्तिवाचित्वशङ्का
व्यक्तिवाचित्वपक्षे प्रसक्ता सा[1]) गुणशब्दस्य गुणोपलक्षितद्रव्यव
चित्वं न तु गुणव्यक्तिवाचित्वं जातिपक्षोक्तदोषसाम्यादिति सूचि
तम् । श्लोकं व्याचष्टे * जातीति * ननु गोशब्देन कृष्णादिव्यक्तीन
मप्यभिधानाच्छुक्लशब्देन चाश्वादिव्यक्तीनामप्यभिधानात्कथं स
मानाधिकरण्यमित्याशङ्क्य * तच्चेत्युक्तम् * द्रव्यान्तराभिधाने ऽ
तस्यापि तावदभिधानात्सा(मानाधिकरण्यसिद्धिरित्यपिशब्दार्थे न
शब्दः नन्वाकृतिपक्षे ऽपि तर्हि जातिगुणाभ्यां लक्षितस्य द्रव्यस्यै
त्वमपि सम्भवतीति पाक्षिकं सा[2])माधिकरण्यं स्यादित्याशङ्क्य * ए
विधमपीत्युक्तम् * व्यक्तिपक्षे भिन्नव्यक्तिवाचित्वे ऽप्येकव्यक्तिव
चित्वं नित्यमस्ति। जातिपक्षे तु भिन्नार्थत्वसङ्कीर्णमप्येकार्थत्वं नास्ति
त्यर्थः । अद्रव्यशब्दत्वादित्यस्याकृतिपक्षे लक्षणयाप्येकद्रव्यशब्दत्व
भावप्रसङ्गादित्येवं साक्षात्सामानाधिकरण्याभावप्रसङ्गाभिधानप
त्वेन व्याख्यानान्तरमाह * इतीति * ननु द्रव्याश्रयस्येति भा
ण द्रव्यशब्दस्य लक्षणया गुणपरत्वमुक्त्वा न भवेदिति न
भवतिनान्वयः कृतः तत्किमित्यन्यथा भवता व्याख्यातमित्य
शङ्क्याह * यत्त्विति * कथं द्रव्यशब्देन गुणलक्षणेत्यपेक्षा
* तत् द्रव्यमाश्रयो ऽस्येत्युक्तम् * भेदाधिष्ठानत्वाच्चाश्रयाश्रयिभ
वस्य यत्र पदस्य युक्त इति व्यधिकरणत्वेन निर्दिष्टस्य गुणस्य प्रयो

१ अयं पा० २ पु० ना० ।
२ अयं पा० २ पु० ना० ।

स्तदर्हत्वमप्यनेनैवोपपादितम् * अतिक्लिष्टत्वोपपादनार्थमप्रधान-
तगुणविपरीतार्थेन प्रधानभूतार्थेन द्रव्यशब्देन लक्षणा । नञश्च
वत्यर्थसापेक्षस्य द्रव्योपसर्जनत्वेनासमर्थस्य द्रव्यशब्देन * स-
ासाङ्गीकरणमुक्तम् * यद्यपि क्रिया न स्यादिति चेदर्थान्तरे वि-
ानं द्रव्यमिति चेदित्यनुभाषणसूत्रगतौ द्रव्यशब्दः षडादिशब्द-
द्रव्यवाचित्वाभावादगत्या गुणलक्षणार्थौ व्याख्यायेते तथापी-
द्रव्यशब्देनैव गुणस्य वक्तुं शक्यत्वात्तल्लक्षणाश्रयणं युक्तमि-
ाशयः । किमेवं सत्ययुक्तमिदं भाष्यमित्याशङ्क्याह * तत्रापि
ति * नात्र द्रव्यशब्देन समस्तस्य नञो भवत्यन्वयो विवक्षितः ।
त्वकारप्रश्लेषेण गुणशब्देनाद्रव्यशब्द एव सौत्रे व्याख्यानायो-
ः । जातिशब्दस्याप्यद्रव्यशब्दत्वोपपत्तेः कथं गुणशब्दस्यैवाद्रव्य-
ब्दतेत्याशङ्कानिराकरणार्थं द्रव्यत्वेन नापर्युदस्ते तदन्यापेक्षायां द्र-
ाकाश्रयत्वाद् गुण एव शीघ्रमुपतिष्ठते जातिस्त्वनेकद्रव्यगुणकर्मा-
यत्वान्न शीघ्रमुपतिष्ठत इत्यद्रव्यशब्देन गुणाभिधानाद् गुणशब्द
ाद्रव्यशब्द इति * द्रव्याश्रयस्येत्युक्तम् * नन्वेवं सति नकारा- २८
ाभावान्न द्रव्याश्रयवचन इति भाष्यं कथमित्याशङ्क्याध्याहारेण
जयितुम् * स आकृतेरित्युक्तम् * स्वरूपेण शब्दस्य निषेद्धुम-
क्यत्वाद्यस्याकृतिः शब्दार्थ इति चानन्तरमभिधानादाकृतिवाचि-
ब्दसम्बन्धिनश्चेदित्यर्थलाभं मत्वा * एकवाक्यसम्बन्धमित्युक्तम् ।
वेवं सत्यन्याय्यलक्षणासमर्थसमासदोषपरिहारादक्षरार्थमात्र-
सम्भवेनैषा योजनेति किमित्युक्तमित्याशङ्क्याह * सामानाधि-
रण्येति * षड्गावो देया इति समानाधिकरणनिर्दिष्टगुणशब्दोदा-
णाद्गोशब्दस्याकृतिवाचित्वे तत्सामानाधिकरण्यं षडादिशब्दानां
युज्येतेति पूर्वपक्षिणः सिद्धान्तबोधं प्रतीयते । तच्च भेदाधिष्ठाना-
याश्रयिभावोक्तेर्निष्कृष्टगुणवचनस्याद्रव्यशब्दत्वावसायात्तस्य च
ाक्तिपक्षेऽपि गुणव्यक्तिपर्यवसायित्वेन द्रव्यव्यक्तिपरत्वाभावा-
शेषात्तदानीमपि क्लेशेनाक्षरार्थयोजनायामप्यनुपपन्नमेवेत्यर्थः । का
र्हि सूत्रस्य गतिरित्याशङ्क्याह * इतीति * यास्माभिर्व्यक्तिद्रव्यशब्दव्य-
करेण व्यक्तिपक्षे गुणोपलक्षितद्रव्यव्यक्तिवाचित्वं गुणशब्दानां सूच-
त्वा जातिपक्षे द्रव्यशब्दत्वाभावात्सामानाधिकरण्यं न सम्भवतीति
ाख्या कृता सैव युक्ता न तु या भाष्यकृता गुणशब्दस्य व्यक्तिपक्षे
णव्यक्तिवाचित्वमभिप्रेत्य कृता तस्मिन्व्याख्याने सामानाधिकर-
ाभावप्रसङ्गस्योभयवादिसाम्येनाचोद्यत्वापत्तिरित्यर्थः । अन्यदर्श-
च्चेति पूर्वपक्षसूत्रान्तरगतभाष्यं स्पष्टत्वादुपेक्ष्याकृतिस्तु क्रियार्थ-

त्वादिति सिद्धान्तसूत्रव्याख्यानार्थं वचनमाकृतौ सम्भवतीति
दुष्टत्वसामान्येन बुद्धिस्थमपाकृत्यैव दूषयति । * किं चेति * न
लमेतदेव भाष्यमुपेक्षितव्यं किं त्वन्यदपीति किं चशब्दार्थं
द्रा कस्मै देवाय हविषा विधेमेत्येकशब्दार्थे किमो व्याख्यान
शब्दस्य चापो भूयिष्ठा इत्येको अब्रवीदित्यन्यार्थदर्शनादन्यच्च भ
मुपेक्षितव्यमित्यर्थलाभः । किमित्युपेक्षितव्यमित्यपेक्षायाम् * नै
क्तम् * नैवाकृतिस्तु क्रियार्थत्वादिति वदता सूत्रकृतेष्टका
कृतिसम्पादनमभ्युपगतं येन च यत्र साकृतौ सम्भवतीत्येवं
व्याख्या युज्येतेत्यर्थः किमिति नाभ्युपगतमित्याशङ्क्याह * य
ति * स्वरूपेण जातेर्नित्यत्वात्स्वव्यक्तिभूतद्रव्यसमवायित्वे
म्पादनं वाच्यं। तदपि नित्येष्वात्मादिषु नित्यसिद्धत्वान्न सम्प
मपेक्षते । कृतकेष्वप्यारम्भकहेतुस्वभावादेव तदारब्धे द्रव्ये
समवायाच्छ्येनत्वजातीयव्यक्त्यनारम्भिकाभिरिष्टकाभिः श्ये
जातिसम्पादनमयुक्तमित्येवं रूपस्योपालम्भस्य दोषस्येष्टकाभिः
नत्वाकृतिसम्पादनाभ्युपगमे प्रसङ्गान्नेदमभ्युपगतमित्यर्थः । क
श्येनवचनचोदनार्थं इत्याशङ्क्याह * पिष्टेति * अमी पि
ण्डाः सिंहाः कार्या इत्युक्ते पिष्टपिण्डेन सिंहाकृतिव्यक्त्योः स
दनाशक्तेर्यथा पिष्टपिण्डानामेव सिंहाकृतिसादृश्यसम्पादनं
नार्थस्तथात्रापीत्यर्थः । प्रयोज्यव्यापारवाचिना सम्पत्तिशब्देन
योजकव्यापारः सम्पादनं लक्ष्यते । नन्वाकृतेर्नित्यत्वे सम्पाद
स्तद्वाचित्वे श्येनशब्दस्य सादृश्यपरत्वेन गौणत्वापत्तेस्तत्परिह
व्यक्तिपक्ष एवात्राश्रीयतां श्येनव्यक्तेश्च यत्नेनानुत्पाद्यत्वे ऽपि
स्त्रीपुंसयोगेनोत्पादयितुं शक्यत्वात्प्रथमश्रुतश्येनशब्दानुरोधेन
श्चाच्छुरुतस्य चिनोतेस्तल्लक्षणार्थतया व्याख्यातुं शक्यत्वादित
द्भूच * पक्षद्वये ऽपीत्युक्तम् * श्येनस्त्रीपुंसयोगेनोत्पादितायां
श्येनव्यक्तेरग्न्याधारत्वायोगेनाग्न्याधारानुपपत्तेः । कर्मण्यग
ख्यायामिति स्मृतिबाधप्रसङ्गाददृष्टार्थत्वापत्तेश्च तत्परिहाराय
णत्वाश्रयणमप्युचितमित्याशयः । नन्वेवं सति व्यक्तिसादृश्य
पि सम्पादयितुं शक्यत्वात्कथमस्य श्येनशब्दस्याकृतिवाचित्वेन
श्रय इत्याशङ्क्याह * सा त्विति * सा सादृश्यसम्पत्तिः श्येन
त्यास्या आकृत्यन्तरमात्रविलक्षणत्वात्तस्य च कतिपयविशेषोपाद
सम्पादयितुं शक्यत्वात् सकलव्यक्त्यन्तरविलक्षणेन श्येनविशे
व्यक्तिशब्दाभिलप्येन सादृश्यसम्पादनं सकलविशेषोपादानेन
न चेष्टकाभिरत्यन्तकुशलेनापि सम्पादयितुं शक्यमिति भा

थ सामान्यविशेषाश्रयभूतमसाधारणं व्यक्तिशब्देनाभिप्रेतं तत-
वस्यैवंविधमिति निरूपणरूपविकल्पगोचरत्वाभावाञ्ज्ञानेन सह
कल्पगोचरस्य सादृश्यसम्पादनं कथं चिच्छक्यमित्यर्थः । ननु
द्यपि सामान्यविशेषाश्रयस्य व्यक्त्याख्यस्यासाधारणस्य रूपेणैवं-
धामिति विकल्पागोचरत्वात्सादृश्यप्रतियोगित्वं न सम्भवतीति
शेषावच्छिन्नेन च तेन सादृश्यमिष्टकाभिरशक्यसम्पादं सामा-
यावच्छिन्नेन च सादृश्यमुच्यमानं विशेषणे पूर्वनिपातात्सामान्ये-
वोक्तं स्यात्तथापि सामान्यविशेषाभ्यामन्यदित्येवंरूपविकल्पगोच-
त्वोपपत्तेरसाधारणशब्दाभिलप्यया व्यक्त्या सह सादृश्यं सम्पा-
यिष्यतइत्याशङ्क्यानिर्धारितविशेषया यया कया चिद्व्यक्त्या सा-
श्यं ( विधीयेत निर्धारितविशेषया वा यया कया चिदिति विक-
पाद्यपक्षे तावद् दूषणमाह * सामान्येति * सामान्य विशेषावच्छे-
कत्वेन यन्नापेक्षते सादृश्यं[1] ) तत्तथोक्तम् । तच्च व्यक्तिमात्रे ऽपि
नत्यप्राप्तं सर्वस्य येन केन चित्सादृश्यावश्यं भावादित्यर्थः । श्येन-
यक्त्या यया कया चिदिति तु विशेषणे श्येनत्वाकृतिव्यतिरिक्तस्य श्ये-
व्यक्तिमात्रस्याभावाच्छ्येनत्वाकृतिसादृश्यमे द्यते इति भावः ।
द्वितीयपक्षे तु यद्व्यक्तिसादृश्यं विहितं तद्शि तत्सादृश्यस्याश-
क्यसम्पाद्यत्वाद्व्यक्त्यन्तरसादृश्यस्य चाविहितत्वात्सर्वपुरुषविषय
वं शास्त्रस्य व्याहन्येतेत्याह * एकेति * सूत्रार्थमुपसंहरति * त-
स्मादिति * ननु चेति भाष्येण श्येनव्यक्तेश्चयनोत्पाद्यत्वायोगे ऽपि
चयनोत्पादकत्वेन विधिः सम्भवति एकव्यक्त्यनुत्पाद्यत्वे ऽपि चय-
नस्य बह्वीभिरुत्पादयितुं शक्यत्वादित्याशङ्क्य न साधकतम इत्यनेन
श्येनशब्दार्थस्येप्सिततमत्वावगतेः साधनत्वेन विधिर्न सम्भवतीत्युक्तं
तदुपपादयति *न हीति* यद्यप्ययं कर्मशब्दः क्विप्प्रत्ययवाच्यवि-
शेषणत्वान्नोपपदविशेषणं तथापि कर्मणि हन इत्यतः सूत्रादनुव-
र्तमानस्य कर्मशब्दस्योपपदविशेषणत्वान्न शब्दार्थस्य कर्मतावसीयत-
इत्याशयः । अतश्चयनेनेति विध्यर्थप्रतिपादकं भाष्यं व्याचष्ट * श्ये-
नमिति * ननु श्येनाकृतिव्यक्त्योश्चयनेनोत्पादयितुमशक्यत्वात्क-
थमेष विध्यर्थः स्यादित्याशङ्क्योक्तमेव सादृश्यलक्षणार्थत्वं भाष्य-
काराभिप्रेतत्वप्रदर्शनार्थं पुनराह * तत्रापीति * श्येनसदृशं चीय-
मानमिष्टकासमूहं चयनेन भावयेदिति विध्यर्थो ऽनेन दर्शितः
चयनमाकृतौ सम्भवतीत्याद्यस्यापि भाष्यस्य सादृश्यविषयत्वेन स-
मर्थनोपपत्तेर्यथाश्रुतस्यैव पूर्वोक्तं दूषणं दर्शितम् । उभयत्रेत्यादिना

१ अयं पा० २ पु० मा० ।

क्रियार्थत्वस्योभयत्र साम्येनानिश्चायकत्वमाशङ्क्य किं पुनरत्रेत्यं
पूर्वपक्षहेतोरनिश्चायकत्वापादनायैवाकृतेः क्रियार्थत्वमुक्तं नाकृ
वाच्यत्वनिश्चयायेति सूचितम् । तत्स्पष्टत्वाद्व्याख्याय कथं
ह्याकृतिवाच्यत्वनिश्चय इत्यपेक्षायामाकृतिस्त्विति तुशब्दसूचि
पपात्तिप्रदर्शनार्थमाकृतिरित्यादिभाष्यमाकृतिवाच्यत्वं प्रतिज्ञाय
क्तिवाच्यत्वपारिशेष्याद्निराकरणाद्युक्तमाशङ्क्य संक्षेपेण व्या
* असाधारण इति * व्यक्त्याकृत्योर्मध्ये का वाच्येति विचारण।
व्यक्तिवाच्यत्वे निराकृते पारिशेष्यादाकृतिवाच्यत्वं निश्चीयतइ
भावः । ग्रन्थस्त्वेवं योज्यः असाधारणे व्यक्त्याख्ये यदा शब्दप्र
त्तिर्न सम्भवति तदा पारिशेष्यादाकृतिः शब्दार्थ इति परिग्रह इ
पूर्वग्रन्थगतं परिग्रहपदमनुवक्तव्यं शब्दार्थपदं चाध्याहार्यं क
व्यक्तौ शब्दस्य प्रवृत्त्यसम्भव इत्याशङ्कानिराकरणार्थत्वेन यदिरि
भाष्यं व्याख्यातुमसाधारणे वाच्ये ऽङ्गीक्रियमाणे शब्दस्य प्रभूतेष्व
नेकेष्वर्थेषु वृत्त्यसम्भवादित्येतदेवावृत्त्या योज्यम् । असाधारणत्वा
व्यक्तेरेकस्यामपि शब्दप्रवृत्तिर्न सम्भवतीति भाष्यसूचितार्थप्रदर्श
नायासाधारणशब्दः । सर्वसामान्यविशेषवियुक्ता हीत्यनेनैका
व्यक्तिर्न शब्दार्थ इत्युक्तमिति व्याख्यानार्थत्वेन चैतद्योज्यं कि
चिद्धि सामान्यरूपं किंचिद्धि विशेषरूपं वावलम्ब्य शब्देन प्र
वर्त्तितव्यं तद्वियुक्ते रूपं कथं प्रवर्त्तेतेत्याशयः । ननु सामान्यविशे
षरूपशब्दप्रवृत्तिनिमित्ताभावे ऽपि तदुभयरूपरहितत्वमेव निमित्त
भविष्यति । न च तदेवसामान्यम् वस्तुरूपत्वादिति नैष दोष इत्या
दिना न हि तत्सामान्यमित्यन्तेन भाष्येणाशङ्क्य सामान्यविशेषरूप
रहितत्वस्य तदाश्रयाव्यपदेश्यत्वापरपर्यायस्याश्वादिव्यक्तिष्वपि
भावाद्गोशब्दप्रवृत्तिः प्रसज्येतेति प्रतिपादनार्थं यदीति भाष्यं व्याख्या-
तुम् * अव्यपदेश्यत्वेन चेत्युक्तम् * ननु सामान्यविशेषवियुक्तत्वाविशेषे
ऽप्यृगादिशब्दवत्प्रयोगतो व्यवस्था भविष्यतीत्याहेतिभाष्येणाशङ्क्य तथा
सत्यद्यजाताया**ङ्**व्यदृष्टप्रयोगत्वात्प्रथमः प्रयोगो न स्यादिति यदीत्यने-
न दूषणमुक्त्वा कथंचित्प्रयोगसम्भवे ऽपि व्यवहारकालीनस्य प्रयोग-
य निर्द्धारितैकव्यक्तिविषयत्वेनानेकव्यक्तिसाधारण्याभावाद्गौर्न पदा
स्पृष्टव्येत्यादौ शाबलेया बाहुलेया वेति विकल्पबुद्धिः स्यान्न गोमा-
मिति सामान्यबुद्धिरित्येतदर्थप्रतिपादकं सामान्यप्रत्ययश्चेति भाष्यं
याख्यातुम् * सामान्याकारेण चेत्युक्तम् * गौर्न पदा स्पृष्टव्येत्या-
ौ यत्र सामान्याकारेण व्यक्तिविशेषमनाश्रित्य शब्दः प्रयुज्यते तत्र
वेकल्पः प्रसज्येतेत्यर्थः । ननु व्यक्तिवाचिनो ऽपि शब्दादभिधेया-

नाभावेन सामान्यप्रत्ययोपपत्तिरित्याशङ्क्य * व्यापकेत्युक्तम् *
त्वैकार्थसमवायिनां शाबलेयत्वाद्यवान्तरसामान्यरूपाणां विशे-
णां गोत्वव्याप्यत्वाश्वव्यापकगोत्वापेक्षामात्रेणेतरत्र तदाश्रयभू-
नसाधारणं व्यक्तिशब्दाभिलप्यं नैव गोत्वापेक्षं भवति । इतरेति
ठे त्वसाधारणशब्देनोक्तत्वात् व्यक्तिः परामृश्यते । ननु विशेषा-
ां गोत्वापेक्षत्वे तदाश्रयस्यासाधारणस्याप्यव्यभिचाराद्गोत्वापेक्षा-
ादापद्येतेत्याशङ्क्य व्याप्यस्य धूमत्वसामान्यस्य व्यापकाग्न्यपेक्ष-
ऽपि तदाश्रयस्यासाधारणस्याग्न्यपेक्षा नास्ति वाक्यादिभावेन
न्दिग्धे धूमे असाधारणानिश्चये ऽप्यनिश्चयादिति प्रतिपादयितुम्
व्याप्यसामान्यस्य नैवं विशेषव्याप्यापेक्षयेत्युक्तम् * नन्वसाधा-
ारूपेण व्यक्तेः शब्दार्थत्वासम्भवे ऽपि शाबलेयत्वाद्यवान्तरसामा-
ात्मकविशेषावच्छिन्नत्वरूपेण शब्दार्थत्वोपपत्तेः । कथं पारिशे-
ादाकृतेः शब्दार्थत्वावधारणेत्याशङ्क्याह * तत्रेति * तत्रैवं सा-
रणरूपेण शब्दप्रवृत्त्यसम्भवे सति विशेषावच्छिन्नत्वरूपेण व्यक्ते-
भिधेयं वाच्यं तस्मिंश्च पक्षे सम्बन्धकथनासम्भवादयो दोषाः
ुरित्यर्थः । वाच्यवाचकनियमहानिः सम्बन्धानित्यत्वापत्तिर्वि-
ल्पप्रसङ्गो शेषव्यक्त्यानयनापत्तिः । नित्यबहुवचनप्रसङ्गशुक्ला-
शब्दसामानाधिकरण्यासम्भवश्चादिशब्देनोपात्ताः । एतेनैव व्य-
त्यभिधानपक्षे सर्वव्यक्त्यभिधानपक्षे च यथासम्भवं योज्याः । अनि-
ीयमानत्वादपि न विशेषाणां वाच्यतेत्याह * न चेति * नन्वेव-
पे विकल्पसमुच्चयाद्यनेकपक्षसम्भवान्नाकृतेः परिशेषसिद्धिरि-
ाशङ्क्य स्वतन्त्रयोर्विशेषणविशेष्यभावरहितयोस्तावद्व्यक्त्याकृ-
ोर्विकल्पेन समुच्चयेन वाभिधाननिरासेनैव निरस्तमित्याह * ए-
ेति * व्यक्तिविशिष्टाकृतिपक्षो ऽपि व्यक्तेर्विशेषणत्वेन पूर्वाभि-
नापत्तेस्तन्निरासेनैव निरस्त इत्याह * व्यक्तीति * एतेन प्रयुक्त
ानुषङ्गः । आकृतिरिति पाठे प्रयुक्तेति विपरिणतानुषङ्गः सम्ब-
समुदायाभिधानपक्षौ निराकर्तुमाह * सम्बन्धेति * सम्बन्धस-
ायययोरपि वाच्यत्वाभ्युपगमे ऽवश्यवाच्यभूतसम्बन्धिसमुदायि-
शेषणता ऽभ्युपगन्तव्या भवतीत्यन्वयः । कस्मादित्यपेक्षिते
स्वरूपेत्युक्तम् * सम्बन्धो ऽयं समुदायो ऽयमिति स्वतन्त्ररू-
ाप्रतीतेः सम्बन्धिसमुदायिनिरपेक्षस्य सम्बन्धसमुदायनिरूपणा-
ादावविभागेन सर्वशब्दानां पर्यायत्वापत्तेरित्यर्थः । तथा सति
दोष इत्यपेक्षायामाह * तत्रापीति * व्यक्त्यंशे च व्यक्त्यभि-
नपक्षोक्ताः सर्वे दोषाः स्युरित्याह * व्यक्त्यंशे चेति * समुदा-

अस्य स्पर्द्धमानैककार्यपरार्थविषयत्वात्साक्षात् क्रियानिष्पत्ति
साधनविशेषणात्मकभिन्नकार्ययोर्विशेषणत्वेन विशेष्यत्वेन व
र्द्धमानयोर्व्यक्त्याकृत्योर्नास्त्येवेत्याह * न चेति * जा
क्त्योश्चात्यन्तभेदाभावादुभावपि न स्त इत्याह *
२५९।२ नन्त्यन्तेति * आकृतिविशिष्टव्यक्तिपक्षे ऽपि व्यक्ति
ष्टो वाकृतिविशिष्टो वाच्यो व्यक्तिमात्रं च विकल्प्याद्यपक्षं
वद् दूषयति * आकृतीति * द्वितीयपक्षे त्वाकृतिव्यतिरि
द्विशिष्टव्यक्तिमात्राव्यक्त्यभावात्सिद्धान्तापत्तिरिति स्वयमेवाश
ह * व्यक्तीति * एवमाकृतिव्यतिरिक्तायास्सप्तपक्ष्या नि
त्वात्तन्निरासेनैव च व्यतिकीर्णपक्षनिरासंसिद्धेर्लिङ्गकारकस
नां च प्रत्ययार्थत्वेन प्रातिपदिकवाच्यत्वासिद्धेः शब्दस्वरूपस्य
त्यक्षसिद्धत्वेनावाच्यत्वस्य नात्मानमभिधत्ते हि शब्दः कश्चित्कद
नेति शून्यवादवार्त्तिकपाठानिरस्तत्वात्पारिशेष्यादाकृतिवाच्यत
सिद्धिरित्युक्तम् * इदानीम् *

तत्र प्रयोगबाहुल्यात्तद्विशेषेषु सत्स्वपि ।
प्रयोगात्परसामान्ये सति वाप्यप्रयोगतः ॥
सास्नाद्येकार्थसम्बन्धिगोत्वमात्रस्य वाचकः ।
गोशब्द इति विज्ञानमन्वयव्यतिरेकजम् ॥

इत्यनेन न्यायेनान्वयव्यतिरेकाभ्यामपि गोत्वस्यैव गोशब्दव
तावसीयतइत्याह *नानेति* गोत्वाकारविषयैव गोशब्दस्य वा
सह सम्बन्धे वाचकत्वरूपे शक्तिरन्वयव्यतिरेकाभ्यां गम्यतइ
कृत्तद्धितसमासैः सम्बन्धाभिधानं भावप्रत्ययेनेति स्मृतेः । स
न्धवाची वाच्यत्वशब्दः शब्दशक्तिजन्यज्ञानकर्मत्वमेव वा श
शब्देनाभिप्रेत्य गोत्वाकाराश्रितैव गोशब्दं प्रति वाच्यत्वरूपा शक्ति
ति योज्यम् । ननु वृद्धव्यवहारावसेयत्वाच्छक्तेः तस्य च सन् हि
स्तुविषयत्वात् कथं निष्कृष्टैकाकारविषया शक्तिरवसीयतइत्या
* तद्भेदेत्युक्तम् * सर्वात्मकवस्तुविषयत्वे शब्दशक्तेरेकेनैव
ब्दादिना सर्वात्मकवस्तुप्रतीतिसिद्धेः शुक्लादिशब्दानर्थक्य
ङ्गात्तद्भेदाद्वस्तुगतान् भिन्नाकारांश्छब्दशक्त्या ऽनुसरन्
र्थः । भिद्यन्तइति भेदाइति व्युत्पत्त्या वस्तुगता भेदा इति
ग्रहीतव्यं वस्तुगतभिन्नाकारानुसाराभावेनैकशब्दव्यक्त्यानर्थ
सङ्गाद् बहुवचनेन सूचितः । निरंशवस्तुवादिनं निराकर्तुं *नान
रेष्वित्युक्तम् * नानेकाकारेष्विति पाठे व्यावृत्तानुवृत्ताकारेषि
र्थः । ननु गोत्वमात्रविषयत्वे गोशब्दशक्तेः कथं गोशब्दात्पशुत

णत्वपार्थिवत्वद्रव्यत्वसत्त्वावगतिः । एकार्थसमवायमात्रेण तन्नि-
श्चयाभ्युपगमे शाबलेयत्वादीनामपि निश्चयः स्यादित्याशङ्क्याह
*तदेकेति* सामान्यान्तरावगतिर्निश्चयस्तैः सामान्यान्तरैर्गोशब्दा-
र्थस्य गोत्वस्य व्याप्तैर्विशेषैश्च साहचर्ये सत्यप्यव्याप्तैस्तेषां सन्देहनि-
वृत्त्येऽन्यतो ऽवधारणाकाङ्क्षेत्यर्थः । एवं सिद्धान्तमुपपाद्य पूर्वोक्तान्
दोषान्परिहर्तुमाह*अनत्यन्तेति* आदिशब्दान्नित्यत्वम् । ननु वस्तुतो
ऽत्यन्तव्यतिरेकाभावे ऽपि शब्दान्निकृष्टावगतेः कथं दोषप्रसङ्गाभा-
वो ऽत आह * सा हीति * केवलयाभिप्रायो निकृष्टशब्दो न स्वनि-
कृष्टत्वाभिप्रायः । यद्यप्याकृतिः शब्दाच्छुद्धा प्रतीयते तथापि क्रिया-
न्वयस्यापि प्रतीतेस्तदन्यथानुपपत्त्या व्यक्तितादात्म्यावगमात्सम्भव-
त्येव क्रियान्वय इत्यर्थः । प्रोक्षणादि तु व्यतिरेके ऽपि सम्भवतीत्याह
* प्रोक्षणेति * क्षरणार्थसिञ्चतिधात्वर्थवाचित्वादुक्षतेः क्षार्यस्य
चोदकादेरूर्ध्वाधोदेशविभागसंयोगमात्रेण सिद्धेराभिमुख्यमात्रेण
क्षरणासिद्धिराभिमुख्यमात्रेण च जातेरपि द्रव्यवत्कर्मत्वोपपत्तेः ।
सिच्यमानस्योदकादेः कर्मीभूतव्रीह्यादिसंयोगानपेक्षणात्पुञ्जीकृतेषु
च व्रीह्युपरिस्थितव्रीहितिरोहितानामधःस्थितानां व्रीहीणां सिच्यमा-
नोदकसंयोगाभावे ऽपि शास्त्रार्थनिष्पत्तिप्रसिद्धेः व्रीह्यादिसंयोगापेक्षा-
यामनुपपत्तेः प्रोक्षणमाकृतेः स्वतो ऽपि सम्भवति अवेक्षणं चाकृतेश्च-
क्षुःसंयुक्तद्रव्यसमवायात्प्रसिद्धमेव आदिशब्देन ध्यानोपादानं कि-
मर्थं तर्ह्यव्यतिरेकोपन्यास इत्याशङ्क्याह * विशसनादीति * प्र-
तीतिसिद्धत्वाकृतेर्विशसनादियोगो न स्वमनीषिकामात्रकल्पित
इत्याह * तथा हीति * पश्वादिष्वपनीताङ्गेषु विच्छिन्नावयवेषु
या विशसनादिविशिष्टा बुद्धिः सामान्यविषयैव विभक्तैरवयवैः सा-
मान्यमात्रानुमानोपपत्तेः । न तु व्यक्तिविषया व्यक्तिविशेषानु-
मानासम्भवे तत्तद्बुद्ध्यभावादित्यर्थः । नन्वाकृतेर्विशसनादियोगे
नित्यत्वप्रसङ्गादनिष्टापत्तिः स्यादित्याशङ्कते * नन्विति * विनष्ट-
व्यक्त्यात्मकरूपेणाकृतेरपि विनाशाभ्युपगमान्नानिष्टापत्तिरिति परि-
हरति * तेनेति * नन्वेवं सत्याकृतिपक्षे ऽपि सम्बन्धानित्यत्वं न
सिद्ध्येदित्याशङ्क्याह * आश्रयान्तरेति * अत्यन्तव्यतिरेकवादि-
नाप्यन्तराले ऽनुपलम्भात् स्वपिण्डमात्राश्रिताकृतिरेष्टव्या तस्या-
श्चाश्रयविनाशे स्थातुमशक्तेरन्यत्र च गमनायोगाद्वश्याङ्गीकरणा-
त्तेराश्रयान्तराविनाशादेव नित्यत्वमेष्टव्यमिति * सर्वैरित्यनेनो-
क्तम् * एतदेव विवृणोति * तेनेति * नन्वत्यन्तव्यतिरेके ऽप्या-
कृतिलक्षितव्यक्तिद्वारेण प्रयोगचोदनोपपत्तेरित्यत्यन्ताक्लिष्टभेदाभे-

द्पक्षाश्रयणमित्याशङ्क्याह * अत्यन्तेति * अव्यवस्थामुपप
त्तुमाह * न चेति * ननु पशुनोपलक्षितं द्रव्यं पशुं विशास्तीति
धर्म्मविधीनां विषयो भविष्यत्यत आह * तदुपलक्षितं त्विति
द्रव्यरूपताया द्रव्यत्वप्रतिपादनं विना प्रतिपादयितुं शक्तेस्तदं
तिपाद्यं स्यात्तत्र च स एव दोष इत्यर्थः । ननु द्रव्य
तिपादनद्वाराप्याश्रयोपलक्षणोपपत्तेर्नामूर्त्तत्वदोषापत्तिरित्याश
* आश्रयेति * ननु पशुत्वेन स्वाश्रयोपलक्षणाद्वाक्छल
ण द्रव्यत्ववदाश्रयपक्षदोषास्तत्वानिर्णायफलवादेन युक्ता
शङ्क्य पशुत्वाश्रयमात्रोपलक्षणे तस्य पश्वाकृतितोऽन्यत्वेनानिरू
दाकृतेरेव बलाद्धर्मविषयत्वापत्तेराश्रयविशेषस्योपलक्षणं वाच
त्वव्याप्ते न सम्भवतीत्याह * विशेषस्त्विति * परानभ्यु
त्वादनाशङ्क्यत्वाच्च द्रव्यत्वस्येति दृष्टान्ततया व्याख्येयम् । अगम्यं
तुमशक्य इत्यर्थः । आगमगम्य इति पाठस्त्वव्यापकत्वेन लक्ष
शक्यत्वाद्यदि परमागमगम्यः स्यान्न चासवस्तीत्युपहासार्थत्वेन
ख्येयः । ननु निर्विशेषसामान्यानुपपत्तेः कस्य चिद्विशेषस्या
याद्धर्म्मविधिविषयत्वं भविष्यत्यत आह * न चेति * प्रत्येक
निर्द्धारितरूपेणानवगतं विधिना न सम्बन्ध्यतइत्यर्थः । ननु
स्वाश्रयो यो विशेष इत्येवं निर्द्धारणाद्विधिविषयतोपपत्स्यतइत
ङ्क्याह * न चेति * पशुत्वाश्रयाणामनेकत्वात्सर्वेषां चोपाद
शक्तेरयं वोपादेयो ऽयं वेति सन्देहानिवृत्तेर्न निर्धारणोपपत्तिरि
शयः । ननु सामान्यमात्रे पर्यवसिते ऽपि शास्त्रे ऽनुष्ठानवेल
विशसनादेस्तत्रासम्भवात्तदाश्रयविशेषे प्रत्यक्षोपनयनेन निर्द्धा
ऽनुष्ठानं भविष्यतीत्याशङ्क्याह * न चेति * यस्मादन्यत्रोक्तो
र्म्मस्तत्रासम्भवमात्रेणान्यत्र न कार्यतया शास्त्रेणानुज्ञातस्तस्
सामान्ये कृतो विहितो विशेषेषु कर्त्तुं युक्त इत्यर्थः । किं च
क्षैकसमधिगम्यस्यासाधारणस्य शब्दव्यवहाराविषयत्वाच्छुक्ल
रूपो विशेषो वाक्यस्तस्य चामूर्त्तत्वात्पशुत्ववदेव विधिविषयत्व
६०।२ म्भव इत्याह * विशेषा इति * उपसंहरति * तस्मादिति *
त्यन्तव्यतिरेकपक्षे च गौः शुक्ल इति सामानाधिकरण्यं पशुनेति
ङ्कारकसंख्यान्वयश्च लक्षणया स्यात्सा च लोके मुख्यत्वप्रसिद्ध
युक्तेत्याह * सामानाधिकरण्यादि चेति * ननु यदि पशुं वि
स्तीत्यादावन्यत्सव्यतिरेकपक्षे धर्म्मविधिविषयत्वयोग्या व्यक्तिर्न
तीयते कथं तर्हि भाष्यकृताकृतिर्व्यक्त्या नित्यसम्बन्धा सम्बन्धि
च तस्यामवगतायां सम्बन्ध्यन्तरमवगम्यतइति व्यतिरेकमभ्युपग

तदात्मप्रत्यक्षं शब्द उच्चरिते व्यक्तिः प्रतीयतइति वदताकृति-
चिशब्दोच्चारणे व्यक्तिप्रतीतिरुक्तेत्याशङ्कयाह * भाष्येति *
तिरेकाभ्युपगमे ऽनया व्यक्तेर्गतिः प्रतीतिरुक्ता स्वाश्रयत्वमात्रेण
विशेषरूपेण न हि विशेषरूपा व्यक्तिः शब्दात्प्रतीयतइत्यर्थः। अ-
पगमशब्देन परमताभ्युपगममात्रेण व्यतिरेको ऽभिहितो न स्व-
ाभिप्रायेणेति सूचितम्। ननु व्यतिरेकस्यानभिमतत्वे यो ऽर्थः सा-
न्यस्य विशेषाणां स्वाश्रयः सा व्यक्तिरित्याश्रयाश्रयिभावोक्तिर्न-
येतेत्याशङ्क्याह * यो ऽपीति * नन्वाकृतिः प्रतीता सती प्रो-
ाश्रयं विशेक्ष्यतीति भाष्याद्विशेषलक्षणप्रतीतेः कथमाश्रयमात्रग-
क्तेत्युक्तमित्याशङ्क्याह * सामान्याच्चेति * सामान्याद्विशेषस्य
र्णं यद्भाष्यकृतोक्तं तत्राश्रयितव्यम् आश्रयणमादरणं न कर्त्त-
मेति भावे कृत्यं व्युत्पाद्य व्याख्येयम्। लक्षणानाश्रयितव्येति
: सा ऽनादर्त्तव्या आक्षेपमात्रस्य भावाद्विशेषस्य त्वाक्षेप्यस्य ग-
य्याव्यभिचारिलिङ्गाभावेनाभावादित्यर्थः। यद्वा यच्छब्द उच्च-
व्यक्तिः प्रतीयतइत्ययं प्रपञ्चो न व्यक्तिप्रतीतिसद्भावविषयः किं
शब्दादाकृतेर्वेत्येतद्विचारविषयत्वेन यथा सिद्धव्यक्तिः प्रतीत्य-
दो ऽयमित्याह *अथवेति* प्रसङ्गादादितः सो ऽन्वयव्यतिरेका-
मिति भाष्यं व्याचष्टे*अन्वयेति* शब्दव्यतिरेके ऽप्याकृत्यन्वये व्य-
त्ययान्वयप्रतिपादनार्थमन्तरेणापीति भाव्यमुदाहरणानिष्ठतया[1]
चष्टे * यो हीति* आकाङ्क्षाशब्देन निर्विशेषसामान्यायोगात् क-
त्र तीक्ष्णमन्दादिरग्निविशेषः स्यादिति प्रमाणतो विशेषनिर्धा-
ाकाङ्क्षा भवतीत्येवम्परत्वेनाबुद्ध्येतैवासौ व्यक्तिमिति भाष्यं
व्यातं शब्दान्वये ऽप्याकृतिव्यतिरेके व्यक्तिप्रत्ययव्यतिरेकप्रति-
नार्थं यस्त्विति भाष्यं मनो वै यग्न्यांच्छब्दार्थसम्बन्धात्स्मृतौ स-
र्यभावाच्छब्दस्यापि व्यतिरेकापत्तेः स्मृतौ वा मनो वै यग्न्या-
ादाकृतेरप्यन्वयापत्तेरयुक्तमाशङ्क्य द्वेधा व्याचष्टे * मानसादि-
* निष्कृष्टाकृतिवाचित्वनिश्चयात्सामर्थ्यात्मकजाड्यरूपेणापच्चा-
सम्बन्धस्मृतावव्याकृत्यप्रतीतिः शीघ्राप्रतीतिर्वा विवक्षितेति
:। ननु यदि गोशब्दात्स्वतन्त्राकृतिः प्रतीयते ततः केन हेतुना
ब्दस्य शाबलेयादिशब्दसामानाधिकरण्यं प्रतीयते न गोत्वशब्द-
ाशङ्कते * केनेति * गोत्वमित्यत्र प्रातिपदिकवाच्याया जाते-
प्रत्ययेन व्यतिरेकांशस्य विवक्षितत्वात्सामानाधिकरण्याप्रती-
। गौरित्यत्रान्वयव्यतिरेकांशस्य विवक्षितत्वात्सामानाधिकरण्य-

[1] भत्राशुद्धं प्रतिभाति।

प्रतीतिरिति विशेषहेतुमाह * व्यतिरेकांशस्येति * ननु भावप्र
व्यतिरेकांशस्य विवक्षायां गोत्ववाँश्शाबलेय इत्यपि सामानाधि
ण्यं न स्यादित्यशङ्क्याह*गोत्ववानिति * यद्यप्यत्र स्फुटो व्यति
विवक्षितस्तथापि प्रकृतिप्रत्ययविभागोपपत्तेर्मतुप्प्रत्ययेन जाति
भिधानात्तद्वाचिना शाबलेयादिशब्दस्य सामाधिकरण्यं युक्त
भावः। गोत्ववाचिनि स्फुटमितिपाठे स्फुटमिति क्रियावि
स्फुटं निष्कृष्टत्वेन गोत्ववाचिनि गोत्वशब्दे यत्र परतो मतुप्प्र
भवति तत्र तेन जातिमदभिधानमित्यर्थः। ननु मतुप्प्रत्ययेनापि
त्त्यभिधाने व्यक्त्यभिधानपक्षोक्ताः सम्बन्धानाख्यातादयो
प्रसज्येरन्नित्याशङ्क्याह * सामान्यस्य वेति * जातिमदभिधा
भेयान्तर्गतत्वेन व्यावर्त्तकत्वाज्जातेर्विशेषणत्वेऽपि विशिष्टवा
प्रत्ययेनानुपादानादुपलक्षणत्वोक्तिः । ननु गौरित्यत्राव्यतिरे
विवक्षायां जातिव्यक्त्योरभेदात् व्यक्तेर्वा गोशब्दो वाचको ज
ति चिन्ता न युज्येतेत्याशङ्क्याह * भेदानामिति * अयं वि
त्वेन प्रकृतो गोशब्दः पक्षद्वये भेदानां व्यक्तीनामेव वाचकः। स
नाधिकरण्याद्यन्यथानुपपत्तेरिष्यते । स्वरूपेण व्यक्तिर्वाच्या
त्यात्मना वेत्येतावांस्तु विचारार्थः। व्यक्तिवाचित्वेऽपि व्यक्त
प्रयोगोपपादनार्थम् * सर्वेषामित्युक्तम् * नन्वेवं सत्यानन्त्य
म्बन्धग्रहणानुपपत्तिरित्याशङ्क्य * प्रत्येकमित्युक्तम् * समुदि
वाच्यत्वे सम्बन्धग्रहणासम्भवः स्यान्नान्योन्यनिरपेक्षाणां वा
जात्यात्मना चैकेन नित्येन रूपेण वाच्यत्वान्न तदानन्त्याद्या
रिति भावः। ननु गोशब्दोच्चारणे व्यक्तिविशेषानिर्धारणान्न
र्वाच्यत्वं युक्तमित्याशङ्क्याह * यस्त्विति * व्रीहीन्प्रोक्षतीत्या
द्दिश्यमानेषु व्रीह्यादिषु प्रकृतापूर्वसाधनव्यक्तिविशेषनिर्णयान्न
न्देहाशङ्का व्रीहिभिर्यजेतेत्यादावुपादीयमानत्वेऽप्यन्यजाती
क्तिभ्यो व्रीहिजातीयानां व्यावृत्तिप्रतीतेर्व्रीहिजातीयैव व्यक्ति
स्त्येव निर्णयः । सर्वासां तूपादानायोगात्कियतीनामुपादेय
संख्याश्रयमात्ररूपसन्देहो न व्यक्तिरूप इत्यर्थः । अधिकरणोप
जातिशब्दा एवात्र विद्यन्तइति यदुक्तम्। तत्परमतेनेति द्योत
तस्माद् गौरश्व इत्येवमादय इत्युपसंहारभाष्यं स्वमतेन नामख्या
पद्विविधपदविषयत्वेन व्याचष्टे * गवादीति * गुणक्रियाशब्दो
ग्रहार्थः सर्वशब्दः विचारप्रयोजनमाह*प्रयोजनमिति * पूर्वपक्ष
शेषणसामर्थ्यात् सिद्धान्ते बाध इत्युक्तं भवति वर्णकान्तरत्वा
ऽपि पूर्वव्याख्याप्रकारे केन चिद्व्याक्षेपदोषेणाप्रसक्ताभिधाना

ञापत्तेः। सुखप्रतिपत्त्यर्थं प्रकारान्तरमारभते * एवं वेति *
ङ्गिकत्वेन तावत्सङ्गतिमाह * गौरिति * विचारविषयं बोध-
* चतुर्विध इति * संशयोत्पत्तेरित्यनेन याचकादिद्रव्यशब्दानां
त्तादियदृच्छाशब्दानां सर्वादीनां च सर्वनामशब्दानां व्यक्तिवा-
त्रेन निश्चयात्संशयानुत्पत्तेर्निपातोपसर्गवद्विचारविषयत्वमस्ती-
सूचितं निपातोपसर्गयोर्जातिव्यक्तिवाचित्वसंशयानुत्पत्तौ हेतु-
* तयोरिति* अभ्युपगमस्यापि वाचकत्वमन्वित्यादिषूपसर्गेषु २६१।
ादित्यादिषु च निपातेषु पदान्तरान्वयात् पूर्वं कस्य चिद्वार्थ-
ातीतेः पदान्तरान्वये च विशेषस्यैव प्रतीतेः। सन्देहानुत्प-
ाह * वाचकत्वे ऽपीति * पाश्चात्यशब्दान्तर्गतः पश्चाच्छब्दो
दाहरणं संशयेन ज्ञाप्यते न विषयीक्रियतइत्यर्थः। एतदेव
णोति * यदीति * ननु पौनरुक्त्यापत्तेर्नेहाख्यातं विचार्यमि-
ाङ्कते * आख्यातस्यापीति * ननु द्वितीयाध्यायाद्ये ऽधिकरणे
ादिशब्देभ्यो ऽपूर्वं भावशब्देभ्यो वेति विचारान्नाख्यातार्थविचा-
याशङ्क्याह * कः पुनरिति * अन्यार्थे ऽप्यधिकरणप्रसङ्गाद्वा-
ताख्यातार्थनिरूपणात्पौनरुक्त्यं भवतीत्याशयः। तत्र प्रत्यया-
ान्तेवं प्रकृत्यर्थचिन्तेति परिहरति*प्रत्ययार्थस्येति * आश्रयं तु
यार्थविचारे पौनरुक्त्यं परिहर्त्तुमशक्नुवतां परिहारे इत्यपरितो-
न्यथा स्वमतेन परिहरति * प्रकृत्यर्थेति * प्रत्ययार्थस्य प्रकृत्य-
द्रेवेकायेह सिद्ध एव प्रकृत्यर्थस्तत्र वक्ष्यतइत्यर्थः। ते च याग-
होमसम्बद्धा इत्यादिना प्रकृत्यर्थस्य यागस्य भाष्यकृता स्पष्टीकृ-
ात् * भाष्यकारेणेत्युक्तम् * ननु सूत्रकारानुक्तिसूचनार्थं ते-
रे कर्म्मशब्दपदेन प्रकृत्यर्थस्योक्तत्वात् अयमपि विषयभेदं वक्तु-
क्नुवतां परिहार इत्यपरितोषात्स्वमतेनान्यथा परिहरति * यु-
द्यर्थे ऽपि वेति * सामान्यविशेषयोर्मध्ये इति निर्धारणे षष्ठी
ातीहावसरप्राप्त्युक्त्या तत्रासङ्गतत्वात्सामान्यविशेषविचाराभा-
सूचितः। प्रासङ्गिककथया चैतत्पौनरुक्त्यं परिहृतं प्रधानचिन्त-
तु पौनरुक्त्यशङ्कैव नास्तीत्याह * अपूर्वमिति * अतो ऽत्र
ा द्विविधस्य पदस्यार्थचिन्तेत्युपसंहरति * नामेति * गौस-
। गवयः इति जातौ गोशब्दप्रयोगाद्गौरानय इति च व्यक्तौ प्र-
ााच्च गोशब्दोच्चारणाच्चोभयप्रतीतेर्वृद्धव्यवहारस्योभयत्र तुल्यत्वं
दलक्षणे महाभाष्यकारेण किं पुनराकृतिः पदार्थ आहो स्विद् द्र-
भिति पृष्ट्वोभयमित्याहेत्याकृतिपक्षवद्व्यक्तिपक्षस्याप्यभिधानाच्च
ास्त्रस्याप्युभयत्र तुल्यतेति द्वेधा सन्देहहेतुमाह * प्रयोगस्येति *

भाष्योक्तसन्देहहेतुनिरासार्थमस्माद्धेतुद्वयादेव * संशयो नः
६।३।१ तिभातीत्युक्तम् * ननु यदि सामान्यप्रत्ययाद्व्यक्तौ च क्रियास
वात्सन्देहः स्यात्ततः प्रतीयमानाया आकृतेरक्रियार्थत्वात् क्रि
र्थायाश्च व्यक्तेरप्रतीतेर्वाक्यार्थौपयिकपदार्थासम्भवाद्व्यक्तिवा
त्वपूर्वपक्षस्याकृतिवाच्यत्वासम्भवप्रतिपादनमात्रपरत्वात्पूर्वपक्षे
द्वाप्रामाण्यं सिद्धान्ते चाकृतेरपि क्रियार्थत्वाद्वाक्यार्थौपयि
त्वोपपत्तेर्वेदप्रामाण्यमिति प्रामाण्याप्रामाण्यफलत्वात्प्रामाण्य
णासङ्गतेयं चिन्ता स्यात् व्यक्त्याकृत्योस्तु प्रतीतिप्रयोगतुल्यत्वे
क्षद्वये ऽपि प्रामाण्याविशेषात्कथं तल्लक्षणसङ्गतिः । प्रतीतिप्र
गतुल्यत्वेनैव च व्यक्तिवाच्यत्वस्मृतेरपि समूलत्वोपपत्तेरेतत्प
गतेन स्मृतिमूलविचारेणापि कथं सङ्गतिः स्यादित्याशङ्क्य *
यमिति * पादानामैकार्थ्यनियमाभावान्नावश्यं सर्वत्र पादसङ्ग
रपेक्षणीया एकप्रकरणगतानां त्वधिकरणानां प्रकरणप्रतिपाद्य
र्थान्वयाय प्रकरणसङ्गतिरवश्यापेक्षणीयेति मत्वा * प्र
न वेत्युक्तम् *स्मृतिमूलविचारो ह्यस्मिन्पादे प्रकरणार्थः तथा

स्मृतीनां श्रुतिमूलत्वं विरोधे भ्रान्तिमूलता ।
उक्तोपवीतस्मृत्यादावविरोधं निरूप्य च ॥
आर्यैर्विरोधे म्लेच्छानां शब्दार्थविषयस्मृतेः ।
भ्रान्तिमूलमसत्त्वे ऽस्य पिकादौ लोकमूलता ॥
मूलापेक्षां च कल्पादेरव्यवस्थितगोचरम् ।

होलाकादिस्मृतेर्मूलमुक्तं शब्दस्मृतेरपि तत्प्रामाण्य
त्वप्रासङ्गिकत्वेनास्याश्चिन्तायाः पूर्वचिन्ताया लक्षणप्रकरण
त्वैवास्या अपि तद्द्वारेण सङ्गतिलाभान्न पृथक्सङ्गत्यं
परिहरति * द्वयमिति * ननु यदि कस्मिन्नर्थे गोशब्दस्य स
त्यनेन प्रसङ्गेनास्य विचारस्यावान्तरस्तुतेरर्थनिरपेक्षस्य साधु
निरूपयितुमशक्यत्वाद्व्यक्त्याकृतिचिन्तैव पूर्वं प्रसज्येतेत्या
* वक्तव्य इति * सास्नादिना शब्दस्य साधुवाच्ये इत्येतावति
व्यक्त्याकृतिविवेकाज्ञाने ऽपि साधुत्वं निरूपयितुं शक्यमिति
रति * अनिश्चिते ऽपीति * एतदेव विवृणोति * वाच्ये
पूर्वापवादत्वेन चास्य सङ्गतिरिति परिहारान्तरसापेक्षत्वे ऽ
विचार्यतइत्यपेक्षायामाह * व्यक्तिरिति * अस्मिंश्च पक्षे
थापि सङ्गतिः साक्षादेवेत्याह * स्मृतेरिति * प्रयोजनाभ
धिकरणानारम्भमाशङ्कते * ननु चेति * शब्दार्थशब्देनाकृ
क्षिता प्रोक्षणादेः क्रिया ब्रह्महत्यादेश्चाक्रिया पक्षद्वये ऽप्याकृ

शाद्यचक्रावेवेत्यर्थः । वेदे प्रयोजनाभावे ऽपि लोके प्रयोजनं भ-
यतीति तावत्परिहरति * यद्यपीति * किं फलमित्यपेक्षायामा-
* व्यक्तीति * लोकव्यवहारस्य प्रमाणान्तरानुसारित्वात्तदर्थं
ार्थतत्वचिन्तानर्थक्यापत्तेर्वेदार्थनिर्णयानौपयिकत्वाच्च शास्त्र-
ञ्त्यभावापत्तेरपरितोषात्स्वमतेन प्रयोजनमाह * वेदे ऽपि चेति*
वपेक्षायामुदाहरणद्वयमाह * व्रीहीति * भेदो विशेषः आद्योदा-
ःणे विशेषं विवृणोति * प्रोक्षणमिति * सन्निधिरूपं क्रमं बाधि- २६ः
त्यर्थः । द्वितीयोदाहरणं विवृणोति * एवमिति * यदाहवनीये
होति पदे जुहोतीत्यादिसामान्यविशेषशास्त्रयोः पूर्वपक्षे विकल्पः
ाद्धान्ते सामान्यशास्त्रस्य विशेषशास्त्रेण बाध इत्याद्यपि प्रयोजन-
ात्याह * सोपपत्तिकमिति * उपसंहरति * कर्त्तव्येति * पौ-
रुक्त्यमाशङ्कते * नन्विति * गौरिति शब्द आदिर्यस्य तस्य गौ-
ःत्यस्य शब्दस्य को ऽर्थ इत्यस्य भाष्यस्य तस्मिन्नित्यर्थः आद्यपाद-
। भाष्ये विचारितमित्यर्थः । तत्र प्रतिज्ञायामिहानुपपत्तिरिति ता-
त्परिहरति * आकृतेरिति * यथा चाकृतिशब्दार्थस्तथाकृति-
तु क्रियार्थत्वादित्यत्र निपुणतरमुपपादयिष्याम इत्याकृतिवादा-
ते भाष्यकृताप्येवमेवोदितमित्याह * यथा चेति * विषयप्रदर्श-
ार्थत्वात्प्रतिज्ञाया हेतुं विनानर्थक्यापत्तेरिहापि चाकृतिः शब्दार्थ
ःति प्रतिज्ञायाः पौनरुक्त्यापत्तेरेतत्परिहारेष्वपरितोषात्स्वमतेनान्य-
था परिहरति * यद्वेति * नन्वेवं सत्याकृतेः शब्दार्थत्वोक्तिस्तत्र-
या कथमित्याशङ्क्य सङ्गतिप्रतिपादनायैव ; प्रकृतानुपयोगप्रसङ्गाच्च
साक्षाद्वाच्यत्वोपक्रमस्तत्रेत्याह * या त्विति * चिन्ताविषयत्वेन
नोक्तेत्यर्थः । प्रतिज्ञामात्रेणाकृतिवाच्यत्वासिद्धेरनभिमतमपि परिहा-
रान्तरं विभवार्थमाह * उक्ते वापीति * व्यक्त्याकृतिचिन्तामुपक्र-
म्य भाष्यकृता लौकिकवैदिकशब्दार्थभेदाभेदचिन्ता कृता तस्याः
प्रकृतोपोद्घातार्थत्वेन सङ्गतिमाह * एतदिति * ननु संख्याभा-
वादित्यनेन न्यायेनाभेदस्य सिद्धत्वात्पुनः को ऽयं विचारः स्यादि-
त्याशङ्क्य लौकिकशब्दाभेदे ऽपि वैदिकानां रूपभेदाद्व्यपदेशभेदाच्च
भेदशङ्कोपपत्तेस्तन्निराकरणार्थो ऽयमारम्भ इति संशय्यते अस्मिन्नित्य-
धिकरणव्युत्पत्त्या संशयविपर्ययप्रतिपादकेन * संशयशब्देनोक्तम् ।
उपोद्घातत्वमेव विवृणोति * एकत्वे सतीति * लौकिकवैदिक-
योः शब्दयोर्वाच्ययोश्चैकत्वे सति लोकव्युत्पन्नाद्वैदिकाद् गोशब्दाद्व्य-
क्त्याकृतिरूपत्वादिपदार्थप्रत्ययोत्पत्तौ को ऽर्थो वाच्यः को वा
नस्य इति सन्देहाद्विचारः कार्यः भेदे व्युत्पत्त्यभावेन वैदिकात्स-

ब्दादर्थप्रतीतेः सन्देहाभावान्न चिन्तावसर इत्यर्थः । ननु
सन्देहसम्भवाच्चिन्ता भविष्यतीत्याशङ्क्याह * शब्दार्थेनेति *
तु शब्दविषये ऽर्थविषये च य एव लौकिकः शब्दो ऽर्थश्च स ए
मिति प्रत्यभिज्ञाने सति लोकव्युत्पन्नाद्वैदिकाच्छब्दादर्थप्रतीतेः
ऽर्थो वाच्यः को वा गम्य इति विवेक्तुं शक्यम् । अलौकिके
दिके शब्दे ऽर्थे वाचकरूपाज्ञानाद्वाच्यविषयः सन्देह एव न स्या
२६४।१ पूर्वोक्तमेव विवृणोति * वेदे त्विति * उपसंहरति * तेने
संशयशब्दसूचितं पौनरुक्त्यपरिहारं वक्तुमाशङ्कते * तावत्
ति * न हेत्वन्तराभिधित्सया पुनरारम्भस्तस्यानुक्तत्वादित्या
अभेदेति * ननु न प्रयोगचोदनाभावादिति हेत्वन्तरमप्युक्तमि
ङ्क्याह * अन्यत्त्विति * शङ्कामुपसंहरति *तेनेति* परिहरति
किकेष्वेवेति*ननु वैदिकेषु काधिका शङ्कत्यपेक्षायामाह*व्यप
दीति* रूपभेदो लिङ्गं चादिशब्देनोपात्तम् । अर्थभेदाभेदचिन्
स्तु पौनरुक्त्याशङ्कैव नास्तीत्याह*एकत्वे ऽपि चेति*न च शब्दैक
त्रेण प्रकृतचिन्तासिद्धिर्येनार्थैक्यमचिन्त्यं स्यादित्याह *
ति * शब्दाभेदे सत्यपि यद्यर्थभेदः स्यात्ततो व्यक्त्याकृत्यो
ध्ये कस्य वाच्यतेतीयं चिन्ता घटते न शब्दैक्यमात्रेणेत्यर्थः ।
हहेतुमाह * व्यपदेशादीति * उभयविषयप्रतिज्ञापूर्वकं श
दाभावहेतूनाह * किं प्राप्तमिति * आख्यायाः शब्दस्य
णं तस्य भाषायां छन्दसीति चोपबन्धेन भिन्नत्वादित्यर्थः ।
२६५।२ दे हेतुमाह * अश्वबालादीति * नन्वग्निर्वृत्राणीति भाष्ये
ननादिक्रियाभेदो हेतुः प्रतीयते स किमित्युपेक्षित इत्यपेक्ष
र्थभेदे हेतुत्वं तावन्न सम्भवतीत्याह * अग्न्यादीनां चेति
न्वग्निस्वरूपाभेदे ऽपि वृत्रहन्तृत्वविशिष्टस्य वैदिकाग्निपदवा
दर्थभेदो भविष्यतीत्याशङ्क्याह * हन्तीति * वृत्रहन्तृत्
ष्टस्य वाक्यार्थत्वेनाशब्दवाच्यत्वान्न वैदिकाग्निशब्दवाच्यता
त्यर्थः । हन्तृत्वे च प्रमाणाभावान्न तेनापि रूपेणान्यत्वं युक्त
ह * हननमिति * न च यो वृत्रहन्ता सो ऽग्निरिति व
क्यार्थान्यत्वसिद्धिर्वृत्रशब्दार्थस्य जङ्घनदिति च क्रियाश
लौकिकत्वेनैवंविधवचनव्यक्त्यसम्भवादित्याह * अपूर्व इ
वतायाश्च विग्रहाभावस्य नवमे वक्ष्यमाणत्वेन क्रियया वृ
योगान्मन्त्रस्य स्तुतिमात्रार्थत्वावगतेर्न वृत्रहन्तृत्वानुवादेनाग्नि
च्यत्वविधिर्युक्त इत्याह * स्तुतीति * कथमक्रियतेत्यपेक्षाया
भाष्योक्तैरित्युक्तम् * कानि तानि वाक्यानीत्यपेक्षायां नाव

ाधिकरणोक्त*युक्तिपरामर्शार्थमितीत्युक्तम्* अतोऽश्ववालादि-
ब्दानां स्पष्टार्थान्तरदर्शनादित्येवार्थान्यत्वे युक्तिरित्युपसंहरति *
नेति*शब्दभेदहेतुत्वं तु क्रियाभेदहेतुत्वेऽप्यनाशङ्क्यमेवेत्याह*यच्चे-
।*अथ भेदकारितोऽपि शब्दभेदो न भवति किमुत तद्गुणभेदका-
त इत्यर्थः । भाष्यस्य तर्हि का गतिरित्यपेक्षायां भाष्योक्तं रूपा-
त्वं स्वरादिभेदाभिप्रायं व्याख्येयमित्याह * तेनेति * पूर्वपक्षो-
संहारपूर्वकं सिद्धान्तप्रतिज्ञां करोति * तस्मादिति * प्रतिज्ञा-
तमेव तावद्धेतुमाह * वेदस्यैवेति * प्रसज्यतामित्येवं वादिनम्
प्रति प्रसज्येतेत्युक्तम् * प्रयोगचोदनाभावादिति सौत्रं हेतुं प्र-
ोगस्य चोदनायाश्चाभावादित्येवं व्याचष्टे * प्रयोगस्येति * चो-
नायाः कथमभाव इत्यपेक्षायाम् * प्रत्ययार्थस्येत्युक्तम् * अर्था- २१
तरे शब्दप्रयोगविषयायाश्चोदनाया विधेरभावादित्येवमन्यथा व्या-
ष्टे * अर्थान्तरे चेति * कस्माद्वेदेनार्थान्तरे शब्दप्रयोगो न वि-
ीयते इत्यपेक्षायां गुणाद्वाप्यभिधानं स्यात् सम्बन्धस्य शास्त्रहेतु-
वादित्यैन्द्र्यधिकरणासूत्रावयवोऽर्थतः पठितः वचनान्वयार्थमैन्द्री
यादिति सूत्रेणैन्द्र्या गार्हपत्यमुपतिष्ठतइति श्रुतिबलेनैन्द्र्या गार्हप-
योपस्थानाङ्गत्वे विहिते श्रुत्याप्यशक्ताविनियोगासम्भवात्कथमिन्द्र-
ाब्देन गार्हपत्याभिधानमित्यपेक्षायां गुणयोगेनेति पूर्वावयवेनोक्त-
् । नन्विन्द्रशब्दस्य गार्हपत्याभिधानशक्तिप्रदर्शनार्थमेवैतद्वचनं क-
स्मान्न भवतीत्याशङ्क्य शब्दार्थसम्बन्धस्य वृद्धव्यवहारावसेयत्वेन
शास्त्रहेतुकत्वाभावादित्यनेनोक्तम् । अविभागादिति सूत्रावयवो
न तेषामेषां विभागमुपलभामहइति भाष्येण शब्दप्रत्यभिज्ञाभिधाना-
र्थत्वेन तांश्चार्थानवगच्छाम इत्यनेन चार्थप्रत्यभिधानार्थत्वेन व्या-
ख्यातः । तदुभयमपि यथाक्रममनुसन्धत्ते * किं चेति * शब्द-
लक्षणाविभागादित्येवं स्वयमन्यथा व्याचष्टे * लक्षणस्येति * ननु
कतिपयलक्षणाविभागेऽपि भाषायां छन्दसीत्युपबन्धेनोक्तानां ल-
क्षणानां भेदात्कथं सर्वशब्दैक्यसिद्धिरित्याशङ्क्याह * सर्वथेति *
भिन्नलक्षणकानां शब्दानामश्वबालाद्यर्थानां च भेदस्य सिद्धान्तिना
ऽपीष्टत्वादितरशब्दार्थानामैक्यं साध्यं तेषां चोक्तैर्हेतुभिर्न भेदः श-
क्यो वक्तुमित्यर्थः । याज्ञिकानां च गवादिविधौ लौकिकैरेव सा-
स्नादिमदाद्यर्थैर्व्यवहारान्मीमांसायां च लोकव्युत्पत्त्यनुसारेण वेदा-
र्थनिर्णयादुभयानुग्रहार्थं लौकिकवैदिकशब्दार्थानामैक्यमाश्रयणीय-
मित्याह * एकत्वेति * मीमांसा चानुगृह्यतइत्यनुषङ्गः । अवि-
भागशब्देनोक्तं प्रत्यभिज्ञानमेव पूर्वपक्षोक्तानां हेतूनां कालात्ययाप-

दिष्टत्वलक्षणदोषाभिधानार्थत्वेन व्याचष्टे * व्यपदेशादीति * अ
दिशब्देनाख्यालक्षणास्वरोपादानम् । ननु व्यपदेशादिभेदेन तद
च्छिन्नात्मनां भेदस्यावश्यम्भावात्कथं न भेदानुमानमित्याशङ्क्य
न्यरूपतेत्युक्तम् रूपिणः स्वरूपतो ऽन्यता रूपान्यता अत्र भेदानुमे
विचारे यो व्यपदेशादिभेदैरैक्यरूपतालक्षणो भेदो ऽनुमीयते स तु
युक्तः वैदिकशब्दे प्रत्यक्षप्रत्यभिज्ञानादित्यर्थः । भेदादेरिति प
द्वितीयेनादिशब्देन लोपागमव्यत्ययोपादानम् । अन्यनिबन्धनत्वाद
व्यपदेशभेदो रूपभेदो वा न भेदानुमानायालमित्याह * व्यपदे
दीति * नन्वेवमपि पदावधारणोपायत्वदूकृतिनिछन्दतिसूरयः[1] क
न्यूनातिरिक्तत्वस्वरवाक्यस्मृतिश्रुतीत्यनेन न्यायेनाचारादिभेदेन
भेदो भविष्यतीत्याशङ्क्य आह * स्वरादयश्चेति * अभिधाना
भूतस्वरादिभेदो ऽभिधायकपदभेदहेतुत्वेन तत्रोक्तः अग्निर्वृत्रा
जङ्घनदित्यादिषु तु स्वरनियमस्य व्योमन्नित्यादिषु च वर्णलोप
देवास इत्यादिषु आगमस्यागृभ्णान्नित्यादिषु विकारस्य स्वाध्य
विध्यपेक्षितवेदत्वसिद्ध्यर्थं त्वदृष्टार्थोपयोगितयाभिधानाङ्गत्वाभा
वाभिधायकभेदावधारणोपायतास्तीत्यर्थः । यत्तु स्वरव्यूपादिस
भेदशब्दसाहचर्यं गवादिशब्दे भेदहेतुत्वेनोपन्यस्तं तन्निराकरण
विभागशब्दोक्तशब्दप्रत्यभिज्ञानं योजयति * स्वार्चेति * अन
यादिधर्मभेदस्य शूद्रोच्चारणवर्जनस्य च वाचनिकत्वेनाप्युपप
भेदहेतुतेत्याह * वचनादिति * उच्चारणधर्मत्वादप्येषां न भे
तुतेत्याह * धर्मा चेति * यत्त्वाश्वबालादिशब्दानां स्पष्टार्थो
दर्शनाद्गवादिशब्दानामपि भिन्नार्थतेत्युक्तं तन्निराकरणे ऽप्यवि
गशब्दोक्तमर्थप्रत्यभिज्ञानं योजयति * अश्वबालादीति * व
शेषात्मकवचनवशात्तत्रार्थभेदे जाते ऽपि प्रत्यभिज्ञायमानार्थे
वादिशब्देष्वर्थान्यत्वद्योतकत्वाभावान्नार्थान्यता युक्तेत्यर्थः । न
हाप्युत्तानवहनादिवचनकारितो ऽर्थभेदो भविष्यतीत्याशङ्क्याह
त्तानानां चेति * उत्तानवहनासिद्धेस्तदनुवादेन गोशब्दवाच
विध्ययोगात्सर्वेषां च वैदिकानामन्यत्वे सम्बन्धज्ञानाभावेनैकस
पदार्थस्याग्रहणाद्वाक्यार्थानवगतेर्नातो वाक्यादर्थान्यत्वावसाय
र्थः । किमर्थं तर्ह्युत्तानवाक्यम् इत्यपेक्षायामाह * विधेरिति
२६७।२ सिद्धान्तमुपसंहरति * तस्मादिति * प्रकृतविचारमनुस
* यद्वा चेति * अतो ऽधुना क्रियत इत्यध्याहारेण योज्यं प
राणामप्यभिधानं प्रतिजानाति * बहव इति * अभिनवे पद

१ घनाघृह मत० ।

दुपन्यस्ते निराकरणोपपत्त्या ज्ञानाद्विषयाणां व्यामोहापत्तेस्तन्नि-
र्थं सर्वे ऽभिधेया इत्यर्थः । बहुपक्षप्रतिभाने कारणमाह * गौ-
ते * शब्दस्वरूपस्य प्रत्यक्षग्राह्यत्वेन तद्विषयाभिधानशक्तिकल्प-
पपत्तेर्नव्यानभिधानो हि शब्दः कश्चित्कदा चनेति शून्यवादे वृ-
कायां स्वरूपाभिधानस्य निरस्तत्वाच्छब्दवाच्यत्वशङ्कानुपपत्ति
सूचनार्थं तदित्युक्तम् * सत्सवस्तुप्रतिभाने ऽपि कथं बहुपक्षप्रति-
नामित्याह * तेषामिति * पक्षानुद्दिशति * किं जातिरेवेति *
तिव्यक्त्योः सामानाधिकरण्यबुद्धिहेतुभूतस्य ।

आश्रयी येन भिन्नो ऽपि सम्बन्धेनाश्रये धियम् ।
स्वानुरूपां सदा कुर्यात्समवायः स कीर्त्यते ॥

इत्येवं लक्षणसमवायाख्यस्य सम्बन्धस्य जात्या सा-
धाराधेयसम्बन्धसद्भावाज्जातिसम्बन्धयोः सच्छब्दवद्यः सम्ब-
: शब्दार्थ इत्यस्यापि पक्षस्योपपत्तेर्वस्तुगतस्य जात्या-
त्या अनुवृत्ताकारस्य व्यावृत्ताकारस्य च व्यक्तित्वेनाभिप्रेतस्यै-
वस्तुगतत्वादेकदेशस्थवृक्षवद्यः समुदायस्तस्याकारद्वयाकारद्व-
ग्रहे धर्मिभूते वस्तुनि प्रतीतेस्तदाश्रितया जात्या सहैकवस्तु-
त्वादेव समुदायोपपत्तेः । सर्वत्राष्टपक्षीसम्भवः । यथा जातेर्व्य-
ादिभिः षड्भिः सह प्रत्येकमष्टौ पक्षाः कृतास्तथा व्यक्त्यादेर-
केकस्येतरैः सह कार्या इत्याह * एवमेकैकस्येति * ननु व्य-
ादिभिः सह सम्प्रधारितया जात्या सह व्यक्त्यादेः सम्प्रधारणे
भेदो नास्तीत्याशङ्क्य * उक्तवदित्युक्तम् * एकाद्वित्रिचतुःपञ्चष-
ः सह विकल्पनेत्युक्तद्विकादिप्रकारभेदात्पक्षविवेक इत्याशयः ।
अत्र व्यक्तिसम्बन्धयोर्व्यक्तिसमुदाययोर्व्यक्तिलिङ्गयोः व्यक्तिका-
रयोः व्यक्तिसंख्ययोः सम्बन्धसमुदाययोः सम्बन्धलिङ्गयोः
म्बन्धकारकयोः सम्बन्धसंख्ययोः समुदायलिङ्गयोः समुदाय-
रकयोः समुदायसंख्ययोर्लिङ्गकारकयोः लिङ्गसंख्ययोः कारक-
ख्ययोः पञ्चदशाष्टपक्षीः पूर्वाभिः षड्भिः सहैकविंशतिं कृत्वा
तेर्व्यक्तिसम्बन्धव्यक्तिसमुदायव्यक्तिलिङ्गव्यक्तिकारकव्यक्तिस-
ख्यासम्बन्धसमुदायसम्बन्धलिङ्गसम्बन्धकारकसम्बन्धसंख्यास-
दायलिङ्गसमुदायकारकसमुदायसंख्यालिङ्गकारकलिङ्गसंख्याका-
कसंख्याद्विकैः पञ्चदश । व्यक्तेर्जातिसम्बन्धजातिसमुदाय-
ातिलिङ्गजातिकारकजातिसंख्यासम्बन्धसमुदायसम्बन्धलिङ्गसंब-
कारकसम्बन्धसंख्यासमुदायलिङ्गसमुदायकारकसमुदायसंख्या-
ङ्गसंख्याकारकसंख्याद्विकैः पञ्चदशसम्बन्धस्य जातिव्यक्ति-

जातिसमुदायजातिलिङ्गजातिकारकजातिसंख्याव्यक्तिसमुदाय
क्तिलिङ्गव्यक्तिकारकव्यक्तिसंख्यासमुदायलिङ्गसमुदायकारक
दायसंख्यालिङ्गकारकालिङ्गसंख्याकारकसंख्याद्विकैः पञ्चदश
दायस्य जातिव्यक्तिजातिसम्बन्धजातिलिङ्गजातिकारकजातिसं
व्यक्तिसम्बन्धव्यक्तिलिङ्गव्यक्तिकारकव्यक्तिसंख्यासम्बन्धा
सम्बन्धकारकसम्बन्धसंख्यालिङ्गकारकसंख्याद्विकैः पञ्चदश ।
स्य जातिव्यक्तिजातिसम्बन्धजातिसमुदायजातिकारकजातिसं
व्यक्तिसम्बन्धव्यक्तिसमुदायव्यक्तिकारकव्यक्तिसंख्यासम्ब
मुदायसम्बन्धकारकसम्बन्धसंख्यासमुदायकारकसमुदायसंख
रकसंख्यायुगलैः पञ्चदशकारकस्य जातिव्यक्तिजातिसम्ब
तिसमुदायजातिलिङ्गजातिसंख्याव्यक्तिसम्बन्धव्यक्तिसमुदा
क्तिलिङ्गव्यक्तिसंख्यासम्बन्धसमुदायलिङ्गसम्बन्धसंख्यासमु
लिङ्गसमुदायसंख्यालिङ्गसंख्याद्विकैः पञ्चदश संख्याया जाति
जातिसम्बन्धजातिसमुदायजातिलिङ्गजातिकारकव्यक्तिसम्ब
क्तिसमुदायव्यक्तिलिङ्गव्यक्तिकारकसम्बन्धसमुदायसम्बन्धा
म्बन्धकारकसमुदायलिङ्गकारकाद्विकैः पञ्चदश जातेर्व्यक्तिस
समुदायव्यक्तिसमुदायलिङ्गकारकव्यक्तिकारकसंख्यासम्बन्ध
दायलिङ्गसम्बन्धलिङ्गकारकसंख्यासमुदायलिङ्गकारकसमुद
रकसङ्ख्यालिङ्गकारकसङ्ख्यात्रिकैर्दश व्यक्तेर्जातिसम्बन्धस
सङ्ख्याजातिसमुदायलिङ्गजातिलिङ्गकारकजातिकारकसङ्
म्बन्धसमुदायलिङ्गसम्बन्धलिङ्गकारकसम्बन्धकारकसंख्या
यलिङ्गकारकसमुदायकारकसंख्यात्रिकैर्दश सम्बन्धस्य ज
क्तिसमुदायजातिसमुदायलिङ्गजातिलिङ्गकारकजातिकारकस
व्यक्तिसमुदायलिङ्गव्यक्तिलिङ्गकारकव्यक्तिकारकसंख्यास
लिङ्गकारकसमुदायकारकसंख्यालिङ्गकारकसंख्यात्रिकैर्दश
मुदायस्य जातिव्यक्तिसम्बन्धजातिसम्बन्धलिङ्गजातिलिङ्ग
जातिकारकसंख्याव्यक्तिसम्बन्धलिङ्गव्यक्तिलिङ्गकारकव्य
कसंख्यासम्बन्धलिङ्गकारकसम्बन्धकारकसंख्यात्रिकैर्दश,लि
तिव्यक्तिसम्बन्धजातिसम्बन्धसमुदायजातिसमुदायकारक
रकसंख्याव्यक्तिसम्बन्धसमुदायकारकव्यक्तिकारकसंख्या
समुदायकारकसम्बन्धकारकसंख्यासमुदायकारकसंख्यात्रि
कारकस्य जातिव्यक्तिसम्बन्धजातिसम्बन्धसमुदायजाति
यलिङ्गजातिलिङ्गसंख्याव्यक्तिसम्बन्धसमुदायव्यक्तिसमुदा
व्यक्तिलिङ्गसंख्यासम्बन्धसमुदायलिङ्गकारकव्यक्तिसम्बन्

व्यक्तिसमुदायलिङ्गव्यक्तिलिङ्गकारकसम्बन्धसमुदायलिङ्गसम्ब-
लिङ्गकारकसम्बन्धलिङ्गकारकसंख्यासमुदायलिङ्गकारकसंख्या-
तुष्कैः षट् । व्यक्तेः जातिसम्बन्धसमुदायलिङ्गजातिसमुदाय-
ङ्गकारकजातिलिङ्गकारकसंख्यासम्बन्धसमुदायलिङ्गकारकसम्ब-
लिङ्गकारकसंख्यासमुदायलिङ्गकारकसंख्याचतुष्कैः षट् । स-
न्धस्य जातिव्यक्तिसमुदायलिङ्गजातिसमुदायलिङ्गकारकजाति-
ङ्गकारकसंख्याव्यक्तिसमुदायलिङ्गकारकव्यक्तिलिङ्गकारकसंख्या-
मुदायलिङ्गकारकसंख्याचतुष्कैः षट् । समुदायस्य जातिव्य-
क्तिसम्बन्धलिङ्गजातिसम्बन्धलिङ्गकारकजातिव्यक्तिसम्बन्धसमुदा-
जातिसम्बन्धसमुदायकारकजातिसमुदायकारकसंख्याव्यक्तिस-
न्धसमुदायकारकव्यक्तिसमुदायकारकसंख्यासम्बन्धसमुदायका-
कसंख्याचतुष्कैः षट् ।कारकस्य जातिव्यक्तिसम्बन्धसमुदायजाति-
म्बन्धसमुदायलिङ्गजातिसमुदायलिङ्गसंख्याव्यक्तिसम्बन्धसमुदा-
लिङ्गव्यक्तिसमुदायलिङ्गसंख्यासम्बन्धसमुदायलिङ्गसंख्याचतुष्कैः
ट् । संख्याया जातिव्यक्तिसम्बन्धसमुदायलिङ्गजातिसमुदायजाति-
मुदायलिङ्गकारकव्यक्तिसम्बन्धसमुदायलिङ्गव्यक्तिसमुदायलिङ्ग-
रकसंख्यासमुदायलिङ्गकारकचतुष्कैः षट् । जातेः व्यक्तिसम्ब-
समुदायलिङ्गकारकव्यक्तिसमुदायलिङ्गकारकसंख्यासम्बन्धसमु-
ायलिङ्गकारकसंख्यापञ्चकैस्तिस्रः । व्यक्तेर्जातिसम्बन्धसमुदाय-
ङ्गकारकजातिसमुदायलिङ्गकारकसंख्यासम्बन्धसमुदायलिङ्गका-
कसंख्यापञ्चकैस्तिस्रः । सम्बन्धस्य जातिव्यक्तिसमुदायलिङ्गकारक-
ख्याव्यक्तिसमुदायलिङ्गकारकसंख्यापञ्चकैस्तिस्रः । समुदायस्य
ातिव्यक्तिसम्बन्धलिङ्गकारकजातिसम्बन्धलिङ्गकारकसङ्ख्याव्य-
क्तिसम्बन्धलिङ्गकारकसंख्यापञ्चकैस्तिस्रः । लिङ्गस्य जातिव्यक्ति-
म्बन्धसमुदायकारकसंख्याव्यक्तिसम्बन्धसमुदायकारकजातिस-
बन्धसमुदायकारकसंख्याव्यक्तिसम्बन्धसमुदायकारकसंख्यापञ्च-
कैस्तिस्रः । कारकस्य जातिव्यक्तिसम्बन्धसमुदायलिङ्गजातिसम्ब-
धसमुदायलिङ्गसंख्याव्यक्तिसम्बन्धसमुदायलिङ्गसंख्यापञ्चकैस्ति-
स्रः । संख्यायाः जातिव्यक्तिसम्बन्धसमुदायलिङ्गजातिसम्बन्ध-
समुदायलिङ्गकारकव्यक्तिसम्बन्धसमुदायलिङ्गकारकपञ्चकैस्तिस्रः।
जातेर्व्यक्तिसम्बन्धसमुदायलिङ्गकारकसंख्याषट्केणैका व्यक्तेर्जा-
तिसम्बन्धसमुदायलिङ्गकारकसंख्याषट्केणैका सम्बन्धस्य जातिव्य-
क्तिसमुदायलिङ्गकारकसंख्याषट्केणैका समुदायस्य जातिव्यक्तिस-
म्बन्धलिङ्गकारकसंख्याषट्केणैका लिङ्गस्य जातिव्यक्तिसम्बन्धस-

सुद्दायकारकपट्कोणैकेति पञ्चचत्वारिंशदधिकं शतद्वयमष्टप
र्यैकविंशत्या षष्ठ्यधिकं शतद्वयं कार्या इत्यर्थः । विपूर्वस्य
धातिसमानार्थत्वाद्विपूर्वस्य दधातेः करोत्यर्थे प्रयोगदर्शनाद्वि
ध्यशब्देन कार्यतोक्ता एवं चैतेषां षट्षष्ठ्यधिकाष्टपक्षीशतद्व
नामष्टाविंशतिसहितशताधिकसहस्रद्वयसंख्याकानां पक्षाणां
स्थानोक्तप्रकार एव परस्परव्यतिकरेणैकैकस्या अष्टपक्ष्याश्च
पक्षोत्पत्तेश्चतुःषष्टिसहितषट्शताधिकसप्तविंशतिसहस्रपक्षस
तावतां झटिति सङ्कलनाशक्तेरानन्त्यं भवतीत्याह * एवमिति

इह पक्षसहस्राणां मिलिताः सप्तविंशतिः ।
शतानि षट् चतुःषष्टिश्चापरा वस्तुसप्तके ॥
शीघ्रसङ्कलनाशक्तेरुपचारात्तथापि तु ।
आनन्त्यवचनं यद्वा लिङ्गाद्याधिक्यकारितात् ॥
विशेषणविशेष्यत्वप्रकाराधिक्यतो ऽधिकाः ।
पक्षाश्चतुःशतात्पूर्वं गणितादित्यनन्तता ॥

ननु भाष्ये किमाकृतिः शब्दार्थो व्यक्तिरिति पक्षद्वर
पन्यासाद्व्याख्यातॄणामेतावत्पक्षोपन्यासो न युक्त इत्याशङ्क्या
वंपक्षे ऽपीति * यत्रोच्चारणानर्थक्यं तत्र व्यक्तिरर्थो ऽन्यत्रा
चन इति भाष्ये पूर्वपक्षवेलायां द्वयवाच्यत्वपक्षस्यापि व्यि
वदुपन्यासादपिशब्दाच्च सिद्धान्तवेलायामथ किं विशेषण
कृतिं वक्ष्यति विशेष्यत्वेन व्यक्तिमित्याकृतिविशिष्टव्यक्तिपक्षो
साम्र तु व्यक्तिविशिष्टायामाकृतौ वर्तत इति च व्यक्तिविशि
तिपक्षोपन्यासादुपलक्षणार्थः सन्देहवेलायां पक्षद्वयोपन्यास
शयः । नन्वेवं सति सर्वेषामेवोपन्यासनिराकरणे कस्मान्न कृ
इत्याशङ्क्याह * उपन्यासेन चेति * सन्देहवेलायामपि पक्षद्व
न्यासो ऽत एवेत्याह * तेनेति * भाष्योक्तसन्देहहेतुमुपन्या
२६८।१ कं दूषयति * भाष्यकारेण चेति * अतः प्रयोगस्य प्रतीतेश्च
त्वाच्छब्दलक्षणो व्यक्तिपक्षाविधानाच्चेत्यसमुक्त एव द्वेधा
हहेतुरित्याह * तेनेति * का पुनराकृतिरिति प्रश्नभाष्यं प्रश
देन त्वाकृतिः साध्यास्ति वा न वेत्याशङ्क्य न प्रत्यक्षा सती
भवितुमर्हतीत्यादिना रुचकादिद्व्यात्मकवस्तूदाहरणेनाकृतिस्व
स्य निरूपितत्वादयुक्तमित्याशङ्कते * का पुनरिति * तदश्रा
ज्ञानाभिप्रायेण तावत्प्रश्नमुपपादयति * नेष दोष इति * प्रश
दाश्राविणस्तृतीयपादश्रवणे ऽनधिकारज्ञानाभिप्रायायोगादुक्तं
द्व्याकारे वस्तुनि को व्यक्त्याकारः को वा ऽऽकृत्याकार इत्य

क्षात्सन्देहाभिप्रायेणोपपादयति * सन्देहाद्वेति * श्येनादिमत्त्व
शङ्कानिराकरणेनानुगताकारस्याकृतित्वनिश्चयात् सन्देहानुपपत्ते
क्षाप्याकृतिर्व्यक्तिव्यतिरेकेणानुपलम्भान्न सम्भवतीति विपर्यया
प्रायेणोपपादयति * वैपरीत्येन वेति * युक्तिविशेषस्योत्तरे ऽनि
धानेनोक्ताक्षेपाभिप्रायेण प्रश्नायोगात्स्वमतानुगताकारस्य व्यक्ति
ऽत्यन्तभेदाभावेनाविचार्यत्वान्नातो ऽत्यन्ताभिन्नाकृतिर्वाच्या न च
स्यावस्तीत्येवं विपर्ययाभिप्रायेणोपपादयति * अथ वेति * द्व
त्युत्तरभाष्यमज्ञानसन्देहनिरासार्थत्वेन तावदवतारणपूर्वकं व्या
ष्टे * तत्राहेति * अत्यन्तभेदे सति व्यतिरेकानुपलम्भादभा
स्याद्भिन्नाभिन्नयोस्तु न भेदानुपलम्भमात्रेणाभावो भवतीत्युक्ताक्षे
निरासार्थत्वेन व्याचष्टे * यस्त्विति * ननु प्रथमपादोक्तन्याये
चाकृतिसिद्धावयं ग्रन्थो ऽनर्थकः स्यादित्याशङ्क्याह * न चेति
एतदेवोपपादयति * तेनैवेति * विवेककथनार्थत्वाभावे स्वरूप
थनस्य सामान्यमित्येतावतैव सिद्धेर्मात्रशब्दो ऽनर्थकः स्यादित्यर्थः
अत्यन्तभेदाभावे ऽपि कथं चिद् भेदाद्विचार्यत्वं भवतीति द्विती
विपर्ययाभिप्रायनिरासार्थत्वेन व्याचष्टे * यद्यपीति * यथा च
मात्रशब्दो ऽत्यन्तभेदनिरासार्थस्तथा सर्वसामान्यव्याप्त्यर्थो ऽपि
दर्शयितुं तदभावे सत्तामात्रमेव द्रव्यत्वादित्रयमात्रमेव वा निर्दि
स्यादिति पक्षद्वयं तावदाह *द्रव्यादीनां चेति* एतत्पक्षद्वयनिरा
मात्रशब्दं योजयितुमाह * अथ वेति * असाधारणविशेषेतिस
मासं पराभिमतकर्मधारयत्वनिरासेन बहुव्रीहितया व्याचष्टे * अ
साधारणेति * कस्मादित्यपेक्षायां यो ऽर्थः सामान्यस्य विशेषा
णाश्रयः सा व्यक्तिरित्युपरिष्टादभिधानाद् द्रव्यगुणकर्मणां साम
न्यविशेषवत्त्वं साधर्म्यमिति च वैशेषिकतन्त्रे द्रव्यगुणकर्मव्यक्ती
नां सामान्यविशेषाधारत्वस्मृतेश्चेत्याह * उपरिष्टादिति * अन्त्य
विशेषाणां वा नित्यद्रव्यवृत्तित्वस्मृत्या सामान्यतो विशेषा
द्रव्यवृत्तित्वं स्मृतं न भवतीति मत्वा * स्मृतेश्चेत्युक्तम् * कु
प्रश्नपूर्वकस्य व्यक्त्याकृतिविवेकाभिधानस्य प्रस्तुतोपयोग इत्या
ङ्क्य व्यक्त्याकृतिवाच्यत्वविचारानुपपत्तिशङ्कानिरासार्थत्वं सू
यितुमाह * तेनेति * प्रयोगचोदनाभावादितिसूत्रमावृत्त्यैता
चारपूर्वपक्षे ऽपि योजयति * किं प्राप्तमिति * अनेनैव सूत्रावय
नाक्षिप्तानि हेत्वन्तराण्याह * संख्येति*एतदेव विवृणोति * य
हीति * प्रयोगचोदनादिसिद्ध्यर्थं व्यक्तिलक्षणायां लक्षणैव दो
स्यादित्याह * लाक्षणिकेति * ननु लक्षणापि शब्दवृत्तिप्रकारत्

२७०।१ न्न दोषमित्याशङ्क्याह * तथा चेति * ततश्च श्रुतिलक्षण
न स्यादिति भावः । मुख्यसामानाधिकरण्यसिद्ध्यर्थमपि व
शब्दार्थतेत्याह * व्यक्तीति * पशुच्चोदनाक्षिप्तद्दयादिव्यव
द्ध्यर्थमपि व्यक्तेरेव शब्दार्थतेत्याह * पशुमिति * अपेक्षि
सिद्ध्यर्थमपि सैव शब्दार्थ इत्याह * कर्मभिश्चेति * स
सिद्धत्वाच्च सैव वाच्येत्याह * सिद्धेति * अर्थैकत्वमिति स
वमवतारयितुं शङ्कते * किमितीति * प्रयोगप्रतीत्युपपत्तेउ
च्या क्रियोपपत्तेश्च व्यक्तिरित्यर्थः । सूत्रावयवेनेमां शङ्कां नि
ति * नेति * अविभागादिति सूत्रावयवावतारणाय शङ्कते
मान्येति * एतदाशङ्कानिराकरणार्थत्वेन सूत्रावयवं व्याचा
क्तीति * अर्थैकत्वमिति सूत्रावयवावतारणार्थं यत्रेति श
निरुपपत्तिकमाशङ्कोपपादयति * यत्रैवेति * सूत्राव
ख्यानार्थत्वमुक्तमिति भाष्यमुपपादयति * नेति* आदिशब
कल्पोपादान गौरिति एकपदोच्चारणे क्रियाविशेषानवधारग
सम्भवासम्भवसन्देहादुच्चारणानर्थक्यसन्देहे संशयोत्पत्ति
मिति प्रश्नभाष्यं व्यक्तिपदार्थकस्येत्युत्तरानुरूपत्वादुपेक्ष्योत्त
स्वयं प्रश्नान्तरं करोति * व्यक्तीति * एतत्प्रश्नापाकरणार्थ
रभाष्यं व्याचष्टे * आकृतीति * ननु कथं सामान्यावगति
त्प्रश्नोत्तरभाष्यस्य प्रश्नानन्तरापाकरणार्थत्वेन व्याख्या न यु
शङ्क्य यथाश्रुतस्य दूषणमाह * भाष्यकारस्त्विति * का त
ष्यस्य गतिरित्यपेक्षायामाह * तेनेति * अविभागादिति स
वावतरणार्थो ऽयं प्रश्न इति भावः । एवं भाष्यकृतः श
यतापत्तेरन्यथा व्याचष्टे * यद्वेति * ननु विशिष्टाभिध
पक्षिणो ऽभिमते कथं सामान्यावगतिरितिप्रश्नानुपपत्तिः
भिधाने तु पक्षान्तरपरिग्रहे प्रतिज्ञान्तराणां निग्रहस्थानं
त्याशङ्क्य व्यक्तिः शब्दार्थः इति पूर्वपक्षप्रतिज्ञाया द्वैवि
२७१।२ यितुमाह * तेनेति * अद्रव्यशब्दत्वादिति सूत्रं सङ्क्षेपेण
ष्टे * तथा चेति * तस्माच्चाकृतिवचन इति उपसंह
व्यक्तिः शब्दार्थ इति इति प्रतिज्ञानुरोधात् व्यतिरेकमुखेन
भिधानोपसंहारार्थमेवेति सूत्रयितुं तथा चेत्युक्तम् । अन्यदर्श
सूत्रमन्वयमुखेन तावत्स्वयं व्याचष्टे * अन्यमिति * य
वचन इति व्यतिरेकमुखेन भाष्यकारीयव्याख्यानमनुसन्धत्ते
न्यथेति * पूर्वपक्षमुपसंहरति * तस्मादिति * आ
क्रियार्थत्वादिति सिद्धान्तसूत्रमुभयत्र क्रियासम्भवादुभया

ातिपादनार्थम् कस्य चिद् भ्रान्तिः स्यात्तन्निवृत्त्यर्थं जातिमात्राभिधा-
प्रतिपादनार्थत्वेन व्याचष्टे*इतीति*नन्वाकृतेरपि व्यक्तिवच्चयने-
ानुत्पाद्यत्वात्कथमाख्याश्रवणादाकृतेः पदार्थत्वविज्ञानमित्याशङ्क्या-
ह *अत्र हीति*अत्र हि श्येनमिव चितं चयनेन निवर्त्तयेदिति वा-
क्यार्थ इत्यन्वयः । श्येन इव चीयतइति श्येनचिच्छब्दस्य कर्मव्यु-
त्पत्तिप्रदर्शनार्थः स्थलशब्दः क्विप्प्रत्ययस्याग्न्याख्यात्वौपाधिकत्वप्रदर्श-
नार्थो ऽग्निशब्दसादृश्यवाचिशब्दाश्रवणात् कथं सादृश्यलाभ इत्या-
शङ्क्य * परिशेषादित्युक्तम् * ननु श्येनव्यक्तिभिः स्थलस्य चेतुं
शक्यत्वात् कथं सादृश्यलाभ इत्याशङ्क्य श्येनशब्दार्थकरणात्वस्य
निषिध्यमानत्वात्कर्म्मतैव वाच्येति दर्शयितुम् * वाक्यार्थद्वयमुक्त-
म् * नन्वेवमपि न सादृश्यलाभ इत्याशङ्क्यैतद्वाक्यार्थद्वयदूषणार्थं
* यावदित्याद्युक्तम् * चयनेन श्येनव्यक्तिं कुर्यादित्येतद्यावन्नोप-
पद्यते तथाकृतिं कुर्यादित्येतदपि यावन्नोपपद्यते तावत्परिशेषात्साद-
ृश्यलाभ इति यस्मादर्थं यावच्छब्दावृत्तिः तस्मादर्थं तावच्छब्दोत्क-
र्षणा योज्यं चयनेन श्येनव्यक्तिं कुर्यादित्येतत्कस्मान्नोपपद्यतइत्यपे-
क्षायाम् * इष्टकाभिरित्युक्तम् * स्नाय्वादिभिस्तर्हि श्येनव्यक्त्यन्त-
रोद्भूतैः क्रियतामित्याशङ्क्य स्नाय्वादिभिः *अपीति हेतुद्वयमुक्त-
म् * ननु स्त्रीपुंसमैथुनेन तर्हि क्रियतामित्याशङ्क्य तेन निष्पन्नाया
अपि श्येनव्यक्तेरग्निधारणाशक्तत्वात्तादर्थ्यासम्भवेन प्रयोजना-
न्तरकल्पनापत्तेर्मैथुने च चिनोतेरप्रसिद्धत्वादमुख्यार्थत्वापत्तेर-
ग्न्याधारत्वासम्भवेनैव चाग्न्याख्यानुपपत्तेरग्न्याख्यानिमित्तक्विप्प्र-
त्यय * स्मृतिपरित्यागापत्तेश्चेत्युक्तम् * इष्टकाबाधश्चात्रापि तु-
ल्यः । चयनेनाकृतिं कुर्यादिति वाक्यार्थानुपपादनार्थम् * आ-
कृतेरपीत्युक्तम् * ननु सादृश्यमपि श्येनव्यक्त्या सह करिष्यते
इत आह * ततश्चेति * एकया वा श्येनव्यक्त्यन्तरविलक्षणाया
श्येनव्यक्त्या सहाग्न्याख्यस्थलस्य सादृश्यं सम्पद्येत सर्वाभिर्वा त-
त्रानिर्द्धारितरूपैकव्यक्तिसादृश्यस्य व्यक्तिनिरपेक्षजातिसादृश्या-
सम्भवेन जातिसादृश्यव्यतिरेकापत्तेर्निर्द्धारितरूपव्यक्त्यन्तरविलक्ष-
णकव्यक्तिसादृश्यं वाच्यं न चेष्टकाभिस्तत्सुसम्पादम् । सर्वव्य-
क्तिसादृश्यं तु तासां परस्परवैलक्षण्यादतीतानागतानां चाग्रहणेन
तत्सादृश्याग्रहणादनाशङ्क्यमेवेत्याशयः।ननु चेत्याशङ्काभाष्यं व्याच-
ष्टे * अथेति * न साधकतम इत्युत्तरभाष्यमनुवादपूर्वकमाक्षि-
पति * तत्रेति * यद्यपि सिंहं देवदत्तमानयेति सिंहशब्दवच्छ्ये-
नं चितमिति द्वितीयान्तः श्येनशब्दः स्यात्तथापि तावत्सादृश्याविशे-

षणार्थत्वेन मुख्यार्थत्वाभावान्मुख्यार्थत्वे ऽपि वा श्येनमानयेति शब्दवत्परविशेषणार्थत्वेन स्वप्रधानभूतार्थप्रतिपादकत्वाभावान्न ख्यश्येनशब्दार्थस्य करणत्वेनाशङ्कितस्येऽसिततमत्वाभिधानायाल अयं च द्वितीयान्तवत् भवति तस्याः श्येनशब्दानन्तर्याभावादि र्थः । क्विप्प्रत्ययान्तः शब्दो ऽत्रेऽसिततमत्वनिर्देशको ऽभिमतो न तीयेतिभाष्यं समाधत्ते * तेनेति * स्मृतिपर्यालोच्येति ल्यब्ल पञ्चमी कथमेतत्स्मृतिपर्यालोचनया श्येनशब्दार्थस्य करणत्वानि
।१ ऽत आह * कर्म्मणि हीति * नन्वेवमपि प्रत्ययार्थमात्रस्य क त्वावगतेर्नोपपदार्थस्य कर्मत्वं सिद्ध्येदित्याशङ्क्याह * यदीति नन्वेवमप्युपपदस्य किमायातमित्याशङ्क्याह * न चेति * निरुप दस्य चिनोतेरग्नौ प्रयोगादर्शनेनाग्न्याख्यात्वाभावात्प्रसिद्धग्न्याख निमित्तत्वाच्च क्विप्प्रत्ययस्मृतेः सोपपदस्यैव चिनोतेरग्न्याख्यात्वं म्यत इत्यर्थः । ननु कर्म्मणीति वाच्यसप्तम्या चिच्छब्दमात्रस्य मेवाचित्वावगतेरुपपदस्य कर्मवाचित्वनियमाभावात् कथं सक स्यैकार्थत्वमित्याशङ्क्याह * तेनेति * केवलस्य चिनोतेरग्न्याख नुपपदापेक्षया कर्मणि हन इत्येतत्सूत्रगतस्योपपदविशेषणस्य कर्म ब्दस्यावश्यानुवर्त्तनीयत्वादुपपदस्यापि कर्मवाचित्वावगतेर्न श्येन ब्दस्य कर्मवाचिना चिच्छब्देन सह वैयधिकरण्यमित्यर्थः । उप हराति * ततश्चेति * तृतीया तत्कृतार्थेन गुणवचनेनेत्यादितृ यासमासलक्षणाभावादपि न श्येनशब्दार्थः करणमित्याह * य चेति * यद्यसौ करणं स्यात्ततस्तृतीयासमासो वाच्यः स च नुपपन्नो लक्षणाभावादित्यर्थः । नन्वश्रुततृतीयाकल्पनं चारि न्पक्षे स्यादित्याह * तृतीया चेति * काम्यत्वेन च श्रुता श्येनव्यक्तिभिर्नित्यानामिष्टकानां बाधो ऽस्मिन्पक्षे स्यान्न च बाधपक्षसम्भवो बाधपक्षव्याप्य इत्याह * श्रुतेति * वि जिति तत्परत्वान्निषिद्धानुष्ठानं प्रसज्येतेत्याह * सत्यां चेति अत इत्याशङ्कानिराकरणोपसंहारभाष्यं व्याचष्टे * तेनेति * थाकृतिवचनत्वे विकल्पतइति पुनरुक्तं भाष्यं चयनमाकृतौ सम वतीत्यनेन पुनरुक्तं भासमानं सूत्रार्थोपसंहारार्थत्वेन व्याख्यातुम * अतश्चेति * उभयत्रेत्याक्षेपभाष्यस्य तात्पर्यमाह * नैतदिति व्यतिरेकमुखेन तात्पर्यं तु योगसाध्यं भाष्यकारोक्तं दृढयितुमन्वय खेन स्वयमुक्तं पर्यनुयोगं सामान्ये ऽपि व्यक्तिपक्षस्य ज्यायस सिद्ध्यर्थम् * बहुत्वाच्चेत्युक्तम् * परिहारसाम्यप्रतिपादनार्थं य प्युच्यतइति भाष्यं व्याचष्टे * अथेति * परिहारसाम्ये ऽपि व्यक्ति

क्षस्य ज्यायस्त्वसिद्ध्यर्थं विशेषमाह * युक्ता चेति * व्यक्तेरेव
ाचकरूपत्वेन क्रियायोगसिद्ध्यर्थमनन्वाख्यातो ऽपि तृतीयासमा-
सो ऽङ्गीकरिष्यत इत्याह * अगत्या वेति * व्यक्तिपक्षे ऽन्यो ऽपि
विशेषो ऽस्तीत्याह * संख्येति * किं पुनरत्र ज्याय इति काका सू-
चितमाक्षेपतात्पर्यं व्याचष्टे * तेनेति * आकृतिः शब्दार्थ इति स-
माधानभाष्यसूचिताः पर्यनुयोगपरिहारसाम्ये ऽप्याकृतिपक्षस्य
ज्यायस्त्वसाधिका युक्तीर्वक्तुं स्वरूपतस्तावत् व्याचष्टे * इतीति *
प्रश्नपूर्वकं युक्तीराह * कुत इति * आद्यां युक्तिं व्याचष्टे * गो-
शब्दोच्चारणे हीति * गौरित्युक्ते सजातीयव्यक्त्यन्तराव्यवच्छेदेन
विजातीयव्यक्तिमात्रव्यवच्छेदप्रतीत्या सामान्यप्रतीतेः पूर्वभावमु-
पादयितुम् * तदाकारेत्युक्तम् * एवमपि कथं जातिवाचित्वनि-
श्चयो ऽत आह * अतश्चेति * द्वितीयां व्याचष्टे * यदीति * तृतीयां २
व्याचष्टे * गामिति * ननु व्यक्तिपक्षज्यायस्त्वे युक्तीनामुपन्यस्त-
त्वात्कथमन्यतरपक्षावधारणेत्याशङ्क्य व्यक्तिपक्षं दूषयितुं त्रेधा विक-
ल्पयति * व्यक्तीति * सर्वव्यक्त्यभिधानपक्षे तावत्कल्पना गौ-
रवसम्बन्धानित्यत्वापत्तिव्यवहारद्विवचनबहुवचनशुक्लादिसामानाधिकर-
ण्यानुष्ठानासम्भवरूपदोषषट्कमाह * तत्रेति * व्यक्तिसमु-
दायाभिधानपक्षे ऽप्येतानेव दोषानतिदिशति * एवमिति * अ-
तिदेशमुपपादयति * तत्रापि हीति * विशेष्यांशे ऽपि व्यक्ति-
व्यतिरिक्तसमुदायकल्पनाभिधानानर्थक्यसम्बन्धानित्यत्वप्रसङ्गाद्द्वि-
वचनबहुवचनसामानाधिकरण्यानुष्ठानासम्भवरूपदोषषट्कमाह *
एकेति * एकव्यक्त्यभिधानपक्षे ऽपि सम्बन्धानित्यत्वव्यवहा-
रसामान्यधीद्विवचनबहुवचनप्रत्युत्तरकालप्रयोगासम्भवविशेषहेत्व-
भावरूपं दोषषट्कमाह * अथेति * भाष्योक्ता युक्तीर्व्याख्या-
तुं प्रतिजानाति * अत इति * वक्ष्यत इति शेषः । यदीति
भाष्यं व्याचष्टे * यदि चेति * एकव्यक्त्यभिधानविषयत्वं भा- २१
ष्योक्तं दोषाणां द्योतयितुम् * एकेत्युक्तम् * सर्वसामान्यविशेष-
निर्मुक्ता हीति कस्मिन्नर्थे हेतुरित्यपेक्षायां केन चित्साम्येन
व्यक्त्यन्तरे प्रयोगो भविष्यतीत्याशङ्कानिराकरणहेतोरत्यन्तवैलक्ष-
ण्यस्योपपादनार्थो ऽयं हेतुरिति दर्शयितुमाह * अत्यन्तेति *
गोत्वादिना हि सामान्येन खण्डमुण्डादिना च विशेषेण व्यक्तेर्व्य-
क्त्यन्तरेण सादृश्यं स्याच्च व्यक्तेः सामान्यरूपता विशेषरूपता वा-
स्त्यर्थः । ननु एषां तर्हि सादृश्यं न भविष्यतीत्याशङ्क्याह * न
ते * नैष दोष इत्याद्याशङ्काभाष्यं व्याचष्टे * ननु चेति *

यदीति परिहारभाष्यं व्याचष्टे * यद्येवमिति
इत्याशङ्काभाष्यं व्याचष्टे * पूर्वपक्षेति *
करणव्याख्यानार्थैवं शब्दः व्यक्त्यन्तरे सर्वसा
मुक्त एव वर्त्तिष्यतइत्यनेन सामान्यविशेषवि
त्तीकृत्य व्यक्त्यन्तरे वर्त्ततइति नोच्यतइत्येवं भ
* सामान्यविशेषविनिर्मुक्तत्वादित्युक्तम् * य
सामान्यविशेषविनिर्मुक्तत्वं निमित्तीकृत्य वर्त्तते
रे इत्येवकारसूचितार्थकथनार्थं * व्यक्तावित्यु
र्हि उच्यतइत्यपेक्षायां यो ऽर्थ इति भाष्यवाच्यव
न सामान्यविशेषविनिर्मुक्ततोच्यतइत्येतदर्थप्रति
ख्यातुमाह * किं त्विति * नन्वन्यापोहवती सामा
लक्षिता चेद्व्यक्तिर्वाच्यत्वेन कथ्यते ततस्तदाश्रय
तेत्याशङ्क्य सामान्यविशेषव्यतिरिक्तत्वं साम
भाववाचिना विनिर्मुक्तशब्देनोच्यते नाश्रयत्वाभा
तिरेकशब्देनोक्तम् तृतीयेत्थम्भूतलक्षणा * र
मुक्तइत्युक्तम् * इति नेयं निमित्तसप्तमी किं तु
वदियमपि विषयसप्तमीत्याशयः। निमित्तत्वोक्ति
द्धान्त्युक्तानिष्टापत्तिपरिहारोपयोगितां दर्शयितुम
व्याख्याते ऽर्थे भाष्यं योजयितुमाह * यो ह्यर्थ इ
ङ्कोपसंहारभाष्यं व्याचष्टे * ततश्चेति * अनेन
लक्षितेन व्यतिरिक्तत्वेनोपलक्षणेन व्यक्त्यन्तरे वृ
तावता सामान्याभिधानापत्तिर्दोषो व्यक्त्यन्तरस्य स
वादित्येवं भाष्यं व्याख्यातम्। यदीति परिहारभा
यत्वादिसामान्यविशेषाश्रयत्वैकार्थसमवायिनः स
निर्मुक्तत्वस्योपलक्षणत्वाभ्युपगमाच्छुद्धस्यापि च
पिङ्गाक्षत्वाद्युपलक्षितस्य देवदत्तशब्दवाच्यत्वोक्ताव
पलक्षिते प्रयोगादर्शनेनोपलक्षणसद्भावे सर्वत्र
भावादयुक्तमाशङ्क्य यदि व्यक्त्यन्तरेष्वपि सर्वस
निर्मुक्तत्वं निमित्तीकृत्य गोशब्दो भवति ततः शब्
त्वात्सामान्यमेव वाच्यमापद्येतेति। यदि सा
मुक्तत्वाद्व्यक्त्यन्तरं शब्दप्रवृत्तिविषयस्तर्हि सामान्
त्त्यन्तरं वाच्यं स्यादित्यनेनैवोक्तम्। यदि तु सर्वस
निर्मुक्तत्वरूपं सामान्यं निमित्तं न भवति तदोपल
कत्र शब्दप्रवृत्तिहेतुत्वाभावाद्व्यक्त्यन्तरे वृत्तिरदोषो

दोष एव। यदि तु निमित्ताभावे ऽपि व्यक्त्यन्तरेषु शब्दो भवति
तो ऽश्वव्यक्तावपि वर्त्ततइत्यनुषङ्गेणावृत्त्या वा योजयितुमाह॥सि-
द्धान्तेति॥ आहेत्याशङ्काभाष्यं व्याचष्टे॥नैवमिति॥ यदीति प-
रिहारभाष्यं व्याचष्टे॥ यद्येवमिति॥ सामान्यप्रत्ययश्चेति भाष्यं
कृतासङ्गतत्वादपकृष्य यदि व्यक्तिः शब्दार्थो व्यक्त्यन्तरे न प्रयु-
ज्येतेत्येतस्मादनन्तरं व्याख्येयमित्याह॥यस्त्विति॥ भाष्यकृता
एकनिमित्तशून्ये ऽक्षशब्दस्यानेकत्र प्रयोगे ऽक्षत्रयानुगतैकसामान्यप्र-
त्ययादर्शनादिहाप्येकनिमित्ताभावे प्रयोगमात्रेणानुगतैकाकारप्रत्ययो
स्यादितिसङ्गतिं मत्वा प्रोक्तम्।एवं तर्हीत्याशङ्काभाष्यं व्याचष्टे॥श-
ङ्का तर्हीति॥ नैवमिति परिहारभाष्यं व्याचष्टे॥ नैवमपीति॥
त्वमित्याशङ्काभाष्यं व्याचष्टे॥ जात्येति॥ एवं तर्हीति परिहा-
भाष्यं गोत्वविशिष्टा व्यक्तिर्गोशब्दवाच्यतया प्रतीयेतेत्यस्य सिद्धा-
न्तो ऽप्यनिष्टत्वादयुक्तमाशङ्क्याकृत्यभिधानापादनार्थत्वेन व्याचष्टे
सत्यमिति॥ अस्तीत्याशङ्काभाष्यं प्रतिज्ञान्तराख्यनिग्रहस्थानाप-
रयुक्तमाशङ्क्य पूर्वपक्षान्तरपरिग्रहार्थत्वेन व्याचष्टे॥ पूर्वपक्षे-
॥ नैतदेवमिति परिहारभाष्यं व्याचष्टे॥ इतर इति॥ नन्वक्षा-
शब्देष्वनेकार्थप्रत्ययस्यानेकशक्तिकल्पनाहेतुतया क्लृप्तस्येहापि
वादस्त्यनेकशक्तिकल्पनायां प्रमाणमित्याशङ्क्याह॥ नचेति॥
ःस्परासम्बन्धार्थत्वेनागत्या तत्रानेकशक्तिकल्पनासामान्यविशेष-
स्तु परस्परान्वयादेकाभिधानेनेतरप्रतीतिसिद्धेरस्ति गतिरित्याश-
। तदेतदिति भाष्येण शब्दाकृतिप्रत्ययसन्निधाने व्यक्तिप्रत्यय-
कृतिप्रत्यय एव हेतुर्न शब्द इति कथं निश्चय इत्याशङ्क्यान्वय-
तिरेकाभ्यां निश्चय उक्तः तद्व्याचष्टे॥ अन्वयेति॥ अनन्तरक-
क्ष्यमाणपक्षान्तरशङ्कोत्थापनार्थं सिद्धान्तमुपसंहरति॥ तेनेति॥
भवत्वाकृतिः शब्दार्थः तथापि व्यक्तिधर्मत्वेन तस्यास्तन्निरपे-
याः प्रतीत्ययोगाद्व्यक्तिविशिष्टैवाकृतिः शब्दार्थो भविष्यतीति प-
न्तरशङ्कार्थं नन्वितिभाष्यं तस्माच्छब्द आकृतिप्रत्ययस्य निमित्त-
यन्वयव्यतिरेकसाधितविभागोपसंहारस्य ननु गुणभूतेति चाकृ-
विशिष्टव्यक्त्यभिधानशङ्काशेषनिराकरणस्य च वक्ष्यमाणत्वात्पू-
न्यस्तपक्षापर्यवसानावगतेर्मध्ये पक्षान्तरोपन्यासस्यासङ्गतत्वाद्-
कमाशङ्क्य समर्थयते॥ साम्प्रतमिति॥ तस्माच्छब्द इत्यस्य व्य-
विशिष्टाकृतिपक्षनिराकरणोपसंहारार्थत्वेनापि व्याख्यातुं शक्य-
ननु गुणभूतेत्याशङ्कायाश्चोभयसाधारण्योपपत्तेः पक्षान्तरोप-
सान्यथानुपपत्त्यैव पूर्वोपन्यस्तपक्षपर्यवसाननिश्चयात्पक्षान्तरो-

पन्यासावसरोपपत्तिसूचनार्थम् * सम्प्रत्युक्तम् * इति साम्
मितीतिकरणोपक्रमो वायं ग्रन्थः । यस्मात्पूर्वोपक्रान्तः पक्ष
माप्तस्तस्मात्साम्प्रतं पक्षान्तरोपन्यासो युक्त इतीति करणो
र्थः । पूर्वं ग्रन्थशेषत्वे ऽनुसमाप्तयर्थः । पक्षान्तरकरणबीज
ह * तदेतदिति * आदावेव वाशब्दप्रयोगेणास्य व्याख्यानस्य
रमतत्वं सूचितम् । व्यक्तिविशिष्टाकृतिपक्षनिरासस्य विस्तरे
भावेनोपसंहारानर्थक्यात्तस्माच्छब्द इत्यस्य वाञ्जस्येन तदर्थप्रती
ननु गुणभूतेत्यस्य चाकृतिर्गुणभावेन विवक्षितेत्येतदनुभाषणा
वगतेः साधारण्यायोगात्सिद्धान्तोपसंहारं च विनास्य पक्षस्या
तारादश्रुतोपसंहारापत्तेरिति स्वमतेन व्याचष्टे * यद्वेति *
क्तिधर्मत्वेनाकृतेस्ततः प्राक् प्रतीत्ययोगादन्वयव्यतिरेकाक्षेपार्थ
सङ्गतिरित्याशयः । ननु व्यक्तिविशिष्टाकृतिपक्षोपन्यासात् कथ
द्धाया व्यक्तेः शब्दार्थत्वं सिद्ध्येदित्याशङ्क्याह * अनेनेति * अ
शब्दार्थत्वं मदभिमतमनेन पूर्वपक्षिणाभ्युपगतमेव क्रियासम्भवश्च
क्तिविशेषणाद्भविष्यतीत्यभिप्रायेण सिद्धान्ते व्यक्तेरपि गुणते
भिधानमिच्छति ततो ऽहं पूर्वं शुद्धव्यक्त्यभिधानं साधयिष्याम
नेनाभिप्रायेणोद्भुच्यतइत्यन्वयः । व्यक्तिविशिष्टायां तदिति पा
रभाष्यं व्याचष्टे * इतरस्त्विति * व्यक्त्यभिधानपक्षोक्तसर्वव
पलक्षणार्थत्वमस्य दर्शयितुमाह * यदीति* तस्मादिति ग्रन्थं
क्तान्वयव्यतिरेकसाधितव्यक्तिप्रत्ययनिमित्तविभागोपसंहारार्थ
स्पष्टत्वाद्व्याख्यायात्र ग्रन्थपातनिकार्थं शुद्धाकृतिपक्षं सिद्धा
न्तमुपसंहरति * तेनेति * पूर्वव्याख्यानेन शब्दः शुद्धाकृतिप्रत्य
निमित्तं व्यक्तिप्रत्ययस्य त्वाकृतिप्रत्यय एवेत्युपसंहारभाष्यव्या
नार्थो ऽयं ग्रन्थः । नन्वाकृतेर्व्यक्तिधर्मत्वाच्छुद्धाया वाच्यत
युक्तमित्याशङ्कार्थं नन्विति भाष्यं व्याचष्टे * नन्विति *
७२।१ गुणीभाव इति परिहारभाष्यं व्याचष्टे * नैवमिति * वस्तुतो
क्तिधर्मत्वे ऽप्याकृतेः शब्दतः स्वरूपमात्रेण प्रतीतेः शुद्धाभिधान
रोध इत्याशयः । व्यक्त्यभिधाने ऽप्याकृतेरुपलक्षणत्वाद्व्यक्त्यन्त
योगो व्यवस्था वोपपन्नेति पूर्वपक्षिणोक्ते यत्सिद्धान्तिते एवं तर्हि
दिनोपलक्षणत्वे सत्याकृतेरपि विशेषणत्वेनाभिधानम् * प्रस
तेत्युक्तम् । तदाक्षेपार्थं ननु चेत्याशङ्काभाष्यं व्याचष्टे * नन्वा
भाष्यकारीयदण्डशब्दोदाहरणमाक्षेप्तुमुपन्यस्यति * भाष्यमि
द्वेधा ऽक्षिपति * नन्विति * आद्यमाक्षेपं परिहरति*यत्त्विति
शेषणोपलक्षणशब्दयोर्व्यावर्तकत्वापरपर्यायविशेषणत्वात्स्वतन्त

व्यावर्त्तकस्योपलक्षणत्वादस्त्येव भेद इत्याशङ्क्य परिहारान्तरमाह
पक्षेति * किं तत्समान्यमित्यपेक्षिते यथा दण्डो विशिष्टवाचिना
ब्देनानभिधेयस्तथाकृतिरपि तदुपलक्षितव्यक्तिवाचिना गोशब्दे-
नानभिधेयैवे ! यथा दण्डो व्यावर्त्तकस्तथाकृतिरपीति विशेषव-
न चेति सामान्यद्वयमुक्तम् आकृतिविशिष्टेति वास्मिन्परिहारे त-
लक्षिताभिप्रायमुपचाराद्व्याख्येयम् । समाधानमुपसंहरति *
श्चेति* ननूपलक्षणत्वे ऽप्याकृतेः सामान्यप्रत्ययश्च न प्राप्नोतीति
णं परिहर्त्तुमशक्यम् । उपलक्षणस्योपलक्ष्ये स्वानुरक्तप्रत्ययजन-
वादर्शनात् न ह्येकापवरकस्याक्षत्रयस्य यदिदानीमस्मिन्नपवरके
न तदक्षशब्दवाच्यमित्येकापवरकत्वमुपलक्षणीकृत्य केन चित्स-
न्धकथने कृते ऽपि व्यवहारकाले ऽक्षशब्दोच्चारणादेकापवरक-
त्वाकारेण नाक्षः प्रतीयते किं त्वक्षमात्रं तेनोपलक्षणत्वे ऽपि ग-
कारप्रतीत्ययोगात्सामान्यप्रत्ययो न स्यादेवेत्यनर्थकमुपलक्षणत्वा-
करणमित्याशङ्क्याह * एवं चेति * एतद्दोषापरिहारोत्तरदोषप-
हारार्थोपलक्षणत्वोक्तिरित्याशयः । नैतदितिपरिहारभाष्यं व्या-
ष्टे * तदेतदिति * यथोपलक्षणाभावे ऽश्वव्यक्तावपि गोशब्दो-
र्तेतइत्यतिप्रसक्तिरुक्ता तथा चातो ऽप्युपलक्षणस्याप्रतीतस्यावि-
कत्वात्प्राप्नोतीत्यर्थः । नन्वेवं सति मत्वर्थीयेभ्यो ऽपि विशेषणा-
भिधानद्वारेण तदविनाभावाद्विशिष्टप्रत्ययोपपत्तिस्तेषामपि न
शिष्टवाचिता स्यादित्याशङ्कानिराकरणार्थं न च यथेति भाष्यं व्या-
ष्टे * न चेति * प्रकृत्यर्थस्य दण्डस्य प्रत्ययेन विशेषणत्वोक्तौ २९
शेषणत्वान्यथानुपपत्त्या विशिष्टप्रतीतिसम्भवे ऽपि मत्वर्थीयप्र-
यस्य विशेषणे प्रयोगाभावाद्विशिष्टवाचितेष्टा तद्वज्जातिशब्दानाम-
कृतौ प्रयोगाभावे सति विशिष्टवाचिता स्यान्न चासावस्ति श्ये-
चच्छब्दे जातिशब्दस्याकृतौ प्रयोगदर्शनादित्यर्थः । यदा च केव-
कृत्यभिधायिश्येनशब्दो दृष्टस्तदान्वयव्यतिरेकाभ्यामप्याकृतिवा-
ता निश्चीयते व्यक्तिसम्बन्धाभावे ऽप्याकृतौ प्रयोगादाकृतिस-
न्धं विना क चिदपि व्यक्तावप्रयोगादिति प्रतिपादनार्थं तदेव-
ति भाष्यं व्याचष्टे * अन्वयेति * व्यक्तेरशाब्दत्वे ऽन्वयव्यतिरे-
ो पूर्वमुक्तौ शब्दस्याकृतिवाचितायामधुनेति विवेकः तस्मादि-
पसंहारभाष्यं व्यक्त्यभिधाने निरस्ते ऽपि सम्बन्धाभिधानादि-
पक्षाणामनिरस्तकत्वात्परिशेषासिद्धेरयुक्तमाशङ्क्य समर्थयते
एवमिति * न क्रिया स्यादिति चेदर्थान्तरे विधा-
न द्रव्यमितिचेदिति सूत्रं प्रथमं वेति चेदिति सूत्रावय-

वेनाकृत्यभिधानपक्षपरामर्शादाकृतिवाचितायामालम्भनादिक्रिय
स्यादन्यं तद्वर्णं तद्वयसमालभेतेति चार्थान्तरे आलम्भवि
न स्यात् षड् देया इति च द्रव्याश्रयस्य संख्यालक्ष
वाचकः षडिति शब्दो न स्यादिति पूर्वपक्षसूत्रार्थानुभा
र्थत्वेनाथ यदुक्तमित्यादिभाष्येण व्याख्याय तत्परिहारार्थत्वेन
र्थत्वात्प्रयोगस्याविभाग इति सूत्रं व्याख्यातुं सङ्क्षेपेणानुस
* ये त्विति * भाष्यकृतेदं सूत्रं न्यायेन शब्दस्याकृत्यर्थत्वाव
णादालम्भादिक्रियाया द्रव्ये प्रयोगस्यानुष्ठानस्य षडादिसंख्या
द्रव्ये प्रकर्षकत्वेन विशेषकत्वेन योगस्यान्वयस्योपाकृतपशुना सं
तिनिहिते द्रव्यान्तरे प्रयोगस्यानुष्ठानस्याविभागो द्रव्यस्याकृत्य
म्बन्धः कारणं जातिवाचिनोऽपि शब्दस्य लक्षणया व्यक्तिपः
दविरोध इत्याशय इत्येवं व्याख्यातं तत्स्पष्टत्वादव्याख्याय स्व
न्यथा व्याचष्टे * तदर्थत्वादिति * प्रयुज्यमानक्रियाप्रयं
त्वेनानिर्दिष्टमप्यपूर्वं बुद्धिस्थत्वात्तच्छब्देन परामृश्यापूर्वार्थत्वा
म्भनादेराकृतिपक्षेऽपि प्रयोगस्यानुष्ठानस्याविशेष इति व्या
मित्यर्थः । नन्वाकृतिपक्षे तस्या एवापूर्वसाधनत्वावगतिः क
क्षद्वये प्रयोगस्य विशेष इत्याशङ्क्याह * द्रव्यं चेति *
द्वारा पश्वादेरपूर्वसाधनत्वं न चाकृतिर्निष्क्रियत्वात्यक्तुं योक
क्यत्यर्थः । किमर्थं तर्ह्याकृत्यभिधानमत आह * तदभिधान
ति * नन्वदृष्टार्थत्वेनैव तर्ह्याकृतेः प्रोक्षणादियदपूर्वसाधनत
विष्यतीत्याशङ्क्य क्रियारूपाया जातेस्तद्द्वारमन्तरेणादृष्टसाध
*अप्रतीतेरित्युक्तम् * नन्वाकृतेः साधनत्वाभावे पशुना यजे
दिकरणनिर्देशा न युज्यन्तइत्याशङ्क्याह *यदपीति* अनुपा
द्रव्यस्य क्रियासाधनाशक्तेरनवधारितविशेषस्य चोपादाना
दाकृत्या च विना द्रव्यविशेषानवधारणाद् द्रव्यविशेषावच्छ
त्वेनैवाकृतेः करणत्वं न साक्षादित्यर्थः । अत्रादिसूत्रं यो
* तेनेति * न द्रव्यमित्यनुभाषणसूत्रगतेन द्रव्यशब्देन बु
द्रव्यं तच्छब्देन परामृश्यतइति भावः । प्रयोगस्याविभाग इ
त्रावयवव्याख्यानार्थं द्रव्ये वेत्युक्तं तमेवावतारणपूर्वकं व्याख्य
योजयति * तदा हेति * आकृतिपक्षेऽपि प्रयोगस्याविशेष
मेव वात्राप्यपूर्वार्थत्वादिति पूर्वव्याख्याभवबुत्तरावयवो योजय
७९।१ ह * अथ वेति * व्यक्त्याकृत्योस्त्वभेदविवक्षायां भेदानामेव
प्रत्येकं सर्वेषां वाचक इति पूर्वप्रस्तानोक्तन्यायेन पक्षद्वये ऽ
त्यभिधानाविशेषात्स्वरूपेणैवासौ वाच्या ज्यात्यात्मना वेत

[illegible]त्रस्य विचारार्थत्वात्सिद्धान्ते ऽपि क्रियाद्युत्पत्तेस्तुल्यत्वाद्यादि
[illegible] जात्यात्मना व्यक्त्यभिधानपक्षे निर्द्धारितविशेषव्यक्त्युपादाना-
[illegible]भवात् क्रियाद्यनुपपत्तिर्वाच्या तद्व स्वरूपेणाप्येकव्यक्त्याभिधाने
[illegible]त्पत्तेः प्रागुत्तरकालं च क्रियानुपपत्तेः सर्वव्यक्त्यभिधाने च स-
पादानाशक्तेः कदा चिदपि क्रियानुष्ठानासम्भवेनानिर्धारितविशे-
यक्त्यभिधानस्यावश्याङ्गीकार्यत्वात्तुल्यमित्येतदर्थप्रतिपादनाया-
थासूत्रं व्याचष्टे * यद्वेति * द्रव्यशब्दवाच्याया व्यक्तेरुभयरू-
वे ऽपि व्यावृत्ताकारतात्र व्यक्तिरूपशब्देनाभिमता पक्षविकल्पार्थौ
[illegible]चिच्छब्दौ अस्मिन्नपि व्याख्याने पूर्वप्रकृतद्रव्यपरामर्शिनं तच्छब्द-
भेप्रत्यानुवृत्तव्यावृत्तोभयरूपवदनिर्धारितविशेषद्रव्यार्थत्वाच्छब्दस्य
[illegible]पक्षे ऽपि प्रयोगस्यानुष्ठानस्य निर्द्धारितविशेषव्यक्तिविषयत्वायो-
[illegible] विभागो व्यादृशतेति योजयितुम् * शब्दस्येत्युक्तम् * यद्वा
[illegible]तिश्च व्यक्तिश्च तामस एवार्थ इत्येवं तदर्थत्वादिति सूत्रार्व-
[illegible]नैव जातिव्यक्त्योरत्यन्तभेदाभावो ऽभिधीयते ततश्चाकृतौ वि-
[illegible]त्या लम्भादिप्रयोगस्य विभागो निष्कृष्टाकृतिविषयता नास्ती-
न क्रियानुपपत्त्यादिदोषापत्तिरिति चतुर्थी व्याख्यामाह * जा-
[illegible]ति * भेदे ऽपि व्याकृतिर्व्यक्त्या न क्रिया स्यादित्यनुभाषणसू-
[illegible]र्दिष्टां क्रियां तच्छब्देन परामृश्याप्याकृतावनवच्छिन्नव्यक्त्युपा-
[illegible]नाभावेन आकृतिनिरपेक्षया व्यक्त्या साधनत्वायोगेन उभयोर-
[illegible]न्यापेक्षयो र्यागापूर्वसाधनत्वावसायात्साधनत्वापेक्षायाः शक्तेर-
साधनशक्तत्वाच्च। धर्माणां कर्मसम्बन्धे च शेषिसाहित्यस्या-
वक्षितत्वेनैकत्रापि कृतानामुपकारकत्वोपपत्तेरपूर्वसाधनव्रीहि-
[illegible]व विहितानां धर्माणां यवेष्वाकृतावपि विहितानां व्यक्ताव-
[illegible]ानोपपत्ते र्व्यक्त्याकृत्योर्द्वयोर्यागापूर्वार्थत्वाच्चाकृतौ विहितस्याल-
[illegible]ादिप्रयोगस्य व्यक्तिविषयत्वाद्विभागो भेदो नास्तीति नाकृत्य-
[illegible]धानपक्षे क्रियानुपपत्तिरितिसूत्रं व्याख्येयमित्याह * यद्वेति *
[illegible]मादित्युपसंहारभाष्यं व्याचष्टे * तस्मादिति * सास्नाद्येका-
सम्बन्धिगोत्वमात्रस्य वाचकः गोशब्द इति विज्ञातमन्वयव्य-
[illegible]रेकिणामित्यनेन न्यायेनान्वयव्यतिरेकबलेनैवाकृत्यभिधानस्यावि-
[illegible]ारितसिद्धत्वात्प्रयोगचोदनाद्यनुपपत्तेस्तदसम्भवाच्छङ्कामात्रं नि-
कर्त्तुमेतदधिकरणमिति सूचयितुम् * आकृतिपक्षे ऽपीत्युक्तम् *

इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रातिवसन्तसोमयाजिभट्टमा-
वात्मजभट्टसोमेश्वरविरचितायां तन्त्रवार्त्तिकटीकायां सर्वानवद्य-
[illegible]ारिण्यां न्यायसुधाख्यायां प्रथमस्याध्यायस्य तृतीयः पादः समाप्तः।

# ॥ न्यायसुधायाम् ॥

## प्रथमाध्यायस्य चतुर्थः पादः

॥ अथ उद्भिदादिशब्दानां यागनामताधिकरणम् ॥ १ ॥

उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात्॥१॥

अत्र भाष्यकृतोद्भिदादिशब्दा गुणविधयो नामधेयानि वेति न्ता कृता । सा किमुद्भिदादिशब्दानांधर्मप्रमोपयोगसिद्ध्यर्थं वा क्यार्थव्याख्यानाय वा तत्राध्ययनविधिसामर्थ्यात् सकलवेदप्रा-ण्यस्य विधिना त्वेकवाक्यत्वादिति तुशब्देन तुल्यं च साम्प्रदा-कमित्यनेन वा सूत्रेण प्रागेवोक्तत्वात् न तावदाद्यः पक्षः नाप्यु-ः सन्दिग्धार्थनिर्णये वाक्यशेषसामर्थ्ययोः प्रामाण्यस्य वक्ष्यमा-वात् । द्वितीयाध्यायोपक्रमे च प्रथमे ऽध्याये प्रमाणलक्षणं वृ-मेति भाष्येण सकलस्यैवाध्यायस्य प्रमाणलक्षणत्वाभिधानात् अ-णत्ते प्रमाणलक्षणे मध्ये वाक्यार्थव्याख्यानस्यासम्बद्धत्वापत्तेरि-क्षिपति * एवं स्मृतिसहितस्येति * सकलवेदप्रामाण्यासिद्धौ २८ ृतिविचारायोगात्स च न सम्भवति ततश्च तत्सिद्ध्युपोद्बलना-स्मृतिसाहित्योक्तिः । तेजो वै घृतं स्रुवेणावद्यतीत्यादेः सन्दि-र्थनिर्णये व्यापाराभावे ऽपि स्तुतिविध्यर्थत्वेन प्रामाण्यसिद्धेस्त-चारात्प्रागपि सकलवेदप्रामाण्यसिद्धिरविरुद्धेति सूचनार्थम् वाक्यार्थइत्युक्तम् * वाक्यार्थव्याख्यानावसरत्वादेव च गुणवि-ध्यं प्रतीयते स च न सम्भवति ततश्चाप्रमाणमित्यप्रामाण्याशङ्का ात्र गुणविधित्वशङ्केत्यप्ययुक्तं सिद्धे ऽपि प्रामाण्ये कस्यार्थस्य ाणमिति विषयविशेषविचारात् प्रमाणलक्षणसङ्गतिरित्यन्येषां ाधानमुपन्यासपूर्वकं दूषयति *केचिदिति* पूर्वपक्षाभिधानार्थ-न चाद्यसूत्रव्याख्या न युक्तेत्याह*ये ऽपि चेति* विधिना त्वेकवा-त्वादिति हि तुशब्दोक्तेन तुल्यं च साम्प्रदायिकमित्यनेन वा कि-र्थत्वेन हेतुना यदुद्भिच्चित्रादिशब्दानां विध्यादित्रयान्तर्भावव-

सिद्धान्तिनो नानिष्टमित्यर्थः । स्व
चनमनेन सूत्रेण क्रियते तत्
नेन समाधत्ते * तस्मादिति * आद्ये अधिकरणे विचारस्वरूप
* नर्थेति * यद्यध्ययनविधिसामर्थ्यादेवोद्भिच्चित्रादिशब्दान
थ्यानर्थक्यं निराकृतं द्व्यापि च प्रामाण्योपपत्तेर्न द्वाराभावेन प्र
मवानं युक्तं, मन्त्रार्थलक्षणादेश्चानर्थक्याज्ज्यायस्त्वान्न तद्द्वयेना
क्यार्ङ्गीकरणं युक्तम् । आनर्थक्यासम्भवाच्चाप्रसिद्धस्याप्युद्भिच्चि
दिशब्दस्य तृतीयागतकरणत्वबलात् करणत्वयोग्यद्रव्याविशेष
चित्वस्य नामधेयत्वाभावे ऽवश्यङ्कल्प्यत्वाच्च । न पौष्णं
वणं विकृतौ प्रतीयेतास्याचोदनात् प्रकृतौ इत्यादिवद्
नेनिवक्षायाः प्राप्त्यर्थं सामान्यन्यायसिद्धस्यैव क्रियार्थत्व
नेकविचारान्तरितस्य स्मरणं क्रियतइति वाच्यं, तत्र ह्यग्निष्टो
करणादुत्कृष्टं मन्तर्दनं प्रथमप्रयोगाच्चोत्कृष्टः प्रवर्ग्यः सर्वत्रा
नयनीत्युक्ते तद्रूपवतामपि दर्शपूर्णमासप्रकरणादुत्कृष्टं किमा
णाज्ञगं पशौ पुरोडाशे च भवत्युत चरावेवेत्युपस्थितस्य विचार
स्य सङ्गत्यभावादिहैव वाक्यप्रकरणविरोधाविरोधचिन्ताप्रस्त
अवश्यकर्त्तव्यत्वात् तत्प्राप्त्यर्थं पेषणस्योत्कर्षाभिधानं युक्तम् ।
स्यसंस्कारस्यापि च बर्हिर्लवनादेरङ्गप्रधानेषु समानविध्ये विच
स्य कर्तृकानाप्यङ्गप्रधानेषु समाना न वेति विचारेण प्राप्तानाम्
नां विनियोजिकायाः समाख्यायाः लिङ्गप्रकरणाभ्यां विरोधो
न वेति विचारिते ऽन्यत्रापि समाख्यायाः पूर्वैः सह विरोधाविर
विचारे समाप्यत्प्रसक्त्या यो विचारस्तत्समाप्तौ स एव बुद्धिस्थो
भवतीति बर्हिर्लवनादिविचारप्रसक्तानुप्रसक्तिसमाप्त्या बुद्धि
बर्हिर्लवनादिविचारस्य यूपावटस्तरणबर्हिषि लवनमस्त्युत नेति
पलक्षणसङ्गतोत्तरविवक्षया स्मरणं युक्तं, गुणविधिनामधेयावि
याकनु लक्षणा ऽसङ्गतत्वेनेह कर्त्तव्यत्वाभावात् भावार्थाधिकरणे
द्भिच्चित्रादिशब्दानां फलपदान्वयनिरासेन यज्यन्वये ऽभिहिते
गुणविधित्वेनैतदन्वयो नामधेयत्वेन वेति प्रसङ्गादुभय
यज्यन्वयासम्भवे बलात्फलपदान्वयापत्तेस्तन्निरासार्थं भावाथ
करणशेषत्वेनैव विचारोपपत्तेस्तत्समाप्तौ चैवमप्यपूर्वाभावात्
शब्देभ्यो ऽपूर्वं नामपदेभ्यो वेति चिन्ता न युक्तेति प्रकृतचिन्त
णापूर्वविचारस्यापि सङ्गत्युपपत्तेस्ताद्विवक्षयोद्भिदादिप्रामाण्यस्म
मयुक्तं प्रामाण्यस्मारणेनैव प्रसक्तत्वाल्लक्षणासङ्गतस्यापि विच
कर्त्तव्यत्वोक्तौ स्मारणात्कर्त्तव्यत्वं कर्त्तव्यत्वे च सति तत्सङ्गति

१ उत्तरविचारेति २ पु० पा० ।

द्ध्यर्थं समारम्भमितीतरेतराश्रयापत्तिरत एव च टुप्टीकायां केचिदानर्थक्येनोत्सूत्रं पूर्वपक्षं कुर्वन्ति सूत्रेण तत्परिहारमित्येतन्मतमुपन्यस्य तत्रानर्थक्यस्य पूर्वमेव सर्ववेदविषयस्य निराकृतत्वादिति स्वयमेव दूषितम्। तथापि नामधेयत्वे सति उद्भिच्चित्रादिशब्दानां धर्मप्रमोपयोगो ऽस्त्युत नेती चिन्ता क्रियमाणा न विरुध्यते। को धर्मः कथं लक्षण इति हि प्रकारवाचिना थमुप्रत्ययेन प्रामाण्यप्रकारो ऽपि लक्षणार्थत्वेनाभिहितः। यथोक्तम् ॥ बृहट्टीकायाम् ॥

चोदनासूत्रनिर्दिष्टो यः प्रमाणपरिग्रहः।
सप्रकारः स आद्येन लक्षणेन प्रपञ्चितः॥

इति। किं प्रत्यक्षश्रवणमेव वेदस्य प्रामाण्यप्रकारो ऽथ मन्वादिस्मरणेनोपस्थापनमपीति सामग्रीगतप्रकारे तृतीयपादेन चिन्तिते किमप्रवृत्तप्रवर्त्तनस्तुतिविहितार्थप्रकाशनान्येव प्रामाण्यद्वाराण्युत नामधेयतापीति अवान्तरव्यापाररूपप्रकारान्तरचिन्तार्थो ऽयमारम्भो लक्षणपूर्वपादाभ्यां सङ्गच्छते। प्रामाण्यस्वरूपविषयत्वे त्वस्याश्चिन्तायाः प्रत्यक्षवेदविषयत्वात्स्मृतिविचारात्प्रागेव कार्यतापत्तेर्न स्मृतिपादानन्तरमारम्भो युक्तस्तस्मान्नामधेयानां धर्मप्रमोपयोगो ऽस्ति न वेति इह विचारार्थः। तत्सिद्ध्यर्थं चैषां विध्यादित्रयान्यतमान्तः पातो ऽस्त्युत नेति चिन्तनीयम्। त्र्यंशावेदातिरिक्तत्वे नामधेयानामनुष्ठानानौपयिकत्वेन धर्मप्रमायोगानुपपत्तेरिति नामधेयानर्थक्ये ऽप्याम्नायस्येति सूत्रं योजयन् पूर्वपक्षमाह ॥ किं तावदिति[1] ॥ ननु सर्ववेदविषयस्यानर्थक्यस्याध्ययनविधिबलेन तत्रैव सिद्धान्ते निराकृतत्वान्नामधेयानर्थक्ये ऽप्युद्भिच्चित्रादिशब्दानां गुणविधित्वेनापि प्रामाण्योपपत्तेर्मन्त्रार्थवादवत् पुनः प्रत्यवस्थानायोगात् नानर्थक्याशङ्का युक्तेत्याशङ्क्य नोद्भिच्चित्रादिशब्दानां स्वरूपेणानर्थक्यं विवक्षितं किं तु नामधेयत्वे सतीत्येतमर्थं दर्शयितुं वृद्धवाक्यमुदाहरति ॥ आह चेति ॥ यद्युद्भिच्चित्रादिपदं नामधेयत्वेन त्र्यंशाद्वेदादधिकमतिरिक्तमिष्यते ततो धर्मानुपयुक्तार्थाभिधायित्वादानर्थक्यं प्रपद्यतइत्यर्थः। अनुपयुक्तं सदितिपाठे नामधेयत्वेन त्र्यंशाद्वेदादधिकं सदानर्थक्यं प्रपद्यतइत्यर्थः। ननु त्र्यंशवेदातिरेके ऽपि नामधेयत्वेनैव धर्मप्रमोपयोगो भविष्यतीत्याशङ्क्य ॥ त्र्यंशेत्युक्तम् ॥ ननु नामधेयत्वे ऽप्युद्भित्संज्ञको यागः कार्य इति विध्युद्देशान्तर्गतिसम्भवात् फलोद्भेदनिमित्तोद्भित्संज्ञकत्वात् प्रशस्तो ऽयं याग इति चार्थवादान्तर्गत्युपपत्तेः संज्ञात्वेन

---

१ किं प्राप्तमिति २ पु॰ पा॰।

वानुष्ठेयसंज्ञियागप्रकाशनसामर्थ्यान्मन्त्रकार्योपपत्तेः कथमति
८।१२ पत्तिरित्याशङ्क्याह * न हीति * यागानुष्ठेयताया यजेतेत्येत
सिद्धेरेतद्विधेयत्वेनैव च यागविशेषावधारणासिद्धेः साध्यांशा
धानेनैव विध्युद्देशान्तर्भावो वाक्यो न च नामधेयत्वे ऽन्यतमां
धानं सम्भवतीत्याह * साध्येति * संज्ञायाः संज्ञिस्वरूपानि
र्थत्वेन प्राशस्त्यपरत्वाभावात्स्तुतिबुद्ध्यनुत्पादकत्वेनार्थवादाति
पपादयति * स्तुतीति * स्वरूपनिर्देशार्थत्वेनैव च कृतार्थत्वा
योगार्हरूपाभावेन कर्मकालप्रयोज्यत्वाभावात् विभुत्वेन च
कर्वांशे[1] प्रयोग इत्यज्ञानात् कर्मस्वरूपप्रकाशनार्थत्वायोगात् क
भूतस्य चोद्भिदादिसंज्ञकस्य प्रकाशनार्हस्याभावान्न मन्त्रान्तर्ग
त्याह * कर्मेति[2] * उद्भिच्चित्रादिपदेषु अध्येतृभिर्मन्त्रशब्दाः
त् मुख्यमन्त्रत्वशङ्कानुपपत्तेस्तत्कार्यकारित्वमात्रेण मन्त्रान्तर्ग
ङ्क्येति सूचयितुं कार्यशब्दः । ननु विध्यादित्रयातिरेके[3] ऽपि न
यस्य गुणफलोपबन्धोपयोगित्वेनार्थवत्त्वं भविष्यतीत्याशङ्क्य
न चेति * विधित एव यागविशेषावधारणसिद्धेर्गुणफलोप
ऽपि सेत्स्यतीत्याशयः । उपसंहरति * इतीति * सूत्रोक्तं सिः
माह * अत्रेति * उक्तेनाध्ययनविधिसामर्थ्यलक्षणेन हेतुना
वेदस्य त्र्यंशत्वावधारणात् यदुद्भिच्चित्रादिशब्दस्य नामधेयत्वे
त्र्यंशत्रयातिरेकापत्तेरप्रामाण्यं पूर्वपक्षिणोक्तं तन्न सिध्यति न
यस्यापि वेदत्वेनांशत्रयान्तःपातावसायात् इत्यर्थः । एतेन
नोक्तमस्माभिरित्याद्यन्यतमस्मै प्रयोजनाय भवेयुरित्यन्तं भा
द्यसूत्रव्याख्यानार्थमिति सूचितम् । नामधेयप्रामाण्यविचारा
न्ताभिधानार्थमप्येतत्सूत्रं गुणविधिनामधेयविचारपूर्वपक्षे
ध्याहारेण शक्यं योजयितुमिति प्रदर्शनायादौ भाष्यकृता
यविचारोपक्रमः कृतः । वार्त्तिककृता त्वध्याहाररहितस्य
पूर्वपक्षाभिधानासामर्थ्यमुक्तम् उभयाभिधानशक्तस्यापि सूत्र
क्यभेदापत्तेरुभयत्र तात्पर्यासम्भवमभिप्रेत्य द्वितीयाधिकरण
क्षस्यानुमितत्वोक्तिरिति भाष्यवार्त्तिकयोरविरोधः तत्र तावा
दिभाष्यं नामधेयस्य मन्त्रार्थवादान्तर्भावशङ्कानिराकरणार्थं त
र्गतावप्यन्यतमांशान्तर्गतिसिद्धेरेतदर्थकमित्याह * यदेति
द्धारितरूपांशविशेषान्तर्गतिं विनान्यतमांशान्तर्गत्यनिर्वाहात्

१ अशेति अधिकं २ पु० पा० ।
२ कर्माङ्गभूतेति २ पु० पा० ।
३ आधिक्ये ऽपीति २ पु० पा० ।

स्मात्कारणात् तन्नामधेयं विध्याद्यर्थत्रयान्यतमार्थमित्युक्तमपि
शेषानिरूपणात् निर्वाहमगत्वैव स्थितं तदा तस्मात्कारणात् कि-
र्थमिति विशेषविचारः कर्त्तव्य इत्यर्थः। न त्वेकस्मिन्विचारे पर्य-
सिते विचारान्तरारम्भोक्तिरेषा तथा सत्यधिकरणत्रयापत्तेर्द्वयोर-
करणयोरित्यनुपपत्तिप्रसङ्गात् तत्र तावदिति भाष्यं व्याचष्टे *
तावदिति * एतदेवाक्षेपपूर्वकमुपपादयति * कथं पुनरिति *
वयववाच्ययं शेषशब्दः किं तूपयुक्तेतरवाची वायव्यं श्वेतमि-
ादेर्हि स एवैनं भूतिं गमयतीत्यन्तस्यैकस्य वाक्यस्य मध्ये भूति-
ामान्तेभ्यः साध्यगादिप्रतिपादनेन विधेयार्थाभिधानोपयुक्तेभ्यः
देभ्यः परिशिष्टानां वायुर्वै क्षेपिष्ठेत्यादीनामर्थवादत्वेष्यते। ननु
ाधिवाक्यावयवत्वरूपैकवाक्यत्वमात्रेण भूतिकामादिपदानामप्य-
वादत्वापत्तेर्नामधेयानां च विधिविषयविशेषावधारणार्थत्वेन वि-
यार्थाभिधानोपयुक्तत्वात् न परिशिष्टतास्तीत्यर्थः। ननु विधिवि-
षादेव विधेयविशेषावधारणसिद्धेर्नामधेयानां तादर्थ्यासम्भवात्
रिशिष्टता भविष्यतीत्याशङ्क्याह * तदिति * उत्पत्तिवाक्ये विधे-
विशेषावधारणस्यान्यतः सिद्धावपि समे यजेतेत्यादौ दर्शपूर्णमा-
ादिनामधेयं विना विशेषावधारणासिद्धेर्वक्ष्यमाणत्वात् विध्यु-
ान्तर्गतिस्तावत्सम्भवत्येव न च तत्सम्भवे स्तुत्यर्थत्वाङ्गीकरणं
क्तमिति प्रधानं विधिरङ्गं स्तुतिस्तत्र प्रधानविशेषणसम्भविनस्त-
गामित्वमेव न्याय्यमित्यत्रोक्तमित्यर्थः। गुणगुणिसम्बन्धकीर्त्तना-
कत्वाच्च स्तुतेर्न गुणमात्रैकवाचिनैकेन पदेनोपपत्तिरित्याह *
चेति * ननु संज्ञया गुणिभूतस्य संज्ञिनोऽर्थातूपात्तस्योपस्थाप-
पपत्तेः स्तुतिः सेत्स्यतीत्याशङ्क्याह * न चेहेति * संज्ञायाः संज्ञि-
वहारार्थत्वेन स्तुतिपरत्वायोगान्नेह नामधेये स्तुतिप्रतिपत्तिः स-
भवतीत्यर्थः। ननु नामधेयस्यापि फलोद्भेदनादिगुणयोगनिमित्त-
ात् सहस्राक्षादिवत्स्तावकत्वोपपत्तिरित्याशङ्क्याह * यदपीति *
ज्ञायाः संज्ञिव्यवहारार्थत्वेन कृतार्थायाः संज्ञायाः स्तुत्यर्थत्वमेव
ावत्स्वमनीषिकामात्रेण कल्प्यं न तु युक्तियुक्तं कथं चित्कल्पित-
प्येतत्फलोद्भेदनस्य कर्त्तेति धातूपपदप्रत्ययार्थसमुदायस्य तृतीय-
न्यार्थत्वप्रतीतेः प्रातिपदिकार्थप्राधान्याविघाताद् बाध्येतेत्यर्थः।
मन्त्र इति। मन्त्रान्तर्गतिशङ्कानिराकरणार्थं भाष्यं व्याख्यातुं
मन्त्रस्वरूपनिराकरणे तावत्प्रायिकस्यास्यन्तत्वादिलक्षणस्याभिधान-
ादकत्वस्य चाध्येतृप्रयोगस्य च व्यापकस्याभावं सूचयितुं हेतुमाह

१ निरासार्थमिति २ पु० पा०।

र्थत्वे च ब्राह्मणाद्विच्छिन्नस्यैकपदमात्रस्य मन्त्रत्वानाशङ्कनात्
गस्य चाख्यातान्वयं विना नैराकाङ्क्ष्याभावान्न कर्मकालप्रयोज्य-
सम्भवतीत्याह * न चेति नन्वध्याहारेण निराकाङ्क्षीकृत्य
कालप्रयोज्यत्वं भविष्यतीत्याशङ्क्य निराकुर्वन् कर्मकालाप्रयो-
त्वमेवोपसंहरति * अतश्चेति * अतः साकाङ्क्षत्वेनाप्रयोगार्ह-
न कर्मकाले प्रयोगः सम्भवति न चाध्याहारेण निराकाङ्क्षीकृत्य
गो ऽविनियुक्तत्वेन प्रत्यक्षविनियोगान्यथानुपपत्तिकल्प्या-
हारायोगादित्यर्थः । नामधेयत्वेन च प्रत्यक्षब्राह्मणैकवाक्यत्व-
तेन श्रुताध्याहारेण निराकाङ्क्षीकरणं युक्तमित्याह * स्फुटं
ं * मन्त्रानन्तर्गतिमुपसंहरति * इतीति * पारिशेष्यादिति २८
ये मन्त्रार्थवादान्तर्गत्यसम्भवे ऽपि नामधेयत्वोपपत्तेः पारिशे-
द् गुणविध्यसिद्धेरयुक्तमाशङ्क्य समाधातुमाह * तस्मादिति *
धेयस्य विध्युद्देशान्तर्गतिमात्रं पारिशेष्येणाभिमतं गुणग्रहणं
राधिकरणापातनिकार्थमित्याशयः । विध्युद्देशान्तर्गतस्यैव ना-
गस्य गुणविधिर्नामधेयं वेत्येवं विचारः क्रियतइति भावे लकारः
याङ्गसमर्पकत्वाभिप्रायो गुणविधिशब्दः नामधेयस्य च विध्यु-
न्तर्गतेर्न नामधेयं विधायिष्यतइत्येतद्भाष्यव्याख्याने विस्तरेणो-
दयिष्यमाणत्वात् तदवष्टम्भेनेह सिद्धवदभिधानमुद्भिदादिश-
ां च नामधेयत्वं याज्ञिकप्रसिद्ध्यैव सिद्धं स एष यज्ञः पञ्चवि-
अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इत्यादिलिङ्ग-
ैश्चावधारितम् इत्यविचारितसिद्धमङ्गीकृत्य नामधेयत्वस्य धर्म-
ाणप्रकारता ऽस्त्युत नेत्याद्येनाधिकरणेन विचारिते क्वास्ति
धेयं क्व वा नेति कौतुकशोधनिकार्थमुत्तरः प्रपञ्चः । सो ऽपि
वार्थव्याख्यानत्वेन प्रमाणलक्षणासङ्गतिप्रसङ्गान्नोद्भिदादिशब्दो
विधिर्नामधेयं वेत्येवं रूपः । किं तु यथा सर्ववाक्यशेषाणाम् आ-
क्यनिराकरणेनार्थवादत्वे ऽर्थवादाधिकरणेनैव सिद्धे तत्रद्वी-
विधित्वाशङ्कानिराकरणायोत्तराधिकरणद्वयं तथोद्भिदादिश-
ां याज्ञिकप्रसिद्ध्यवधारितेन नामधेयत्वेन धर्मप्रमोपयोगे सा-
। प्रसिद्ध्यादिहेतुकेन गुणविधित्वेनैव धर्मप्रमोपयोगसिद्धेः किं
न नामधेयत्वेनेत्याशङ्क्य नामधेयत्वमेव दृढीकर्तुं गुणविधित्वा-
निरासायोत्तराधिकरणचतुष्टयं । ततो वाजपेयाधिकरणे तन्त्र-
न्त्वेन विशिष्टविधिसम्भवाद् गुणविधिपक्षोक्तमत्वर्थलक्षणादि-
परिहारेण प्रत्यवस्थानमाशङ्क्य वैरूप्यात्तन्त्रसम्बन्धानुपपत्तेर्दो-
रिहारासम्भवेन गुणविधित्वनिराकरणे दृढीकृते विशिष्टवि-

धावाख्यातोपपदार्थयोर्द्वयोर्विधानात्सन्निकृष्टविध्यसम्भवनिबन्ध
त्वाच्च विप्रकृष्टविधेर्युगपत्सम्भवासम्भवविरोधाश्च क्वापि विशि
धिः सम्भवतीत्याशङ्क्याग्नेयाधिकरणे विशिष्टविधौ व्युत्पादिते
र्हिरादिशब्दाः संस्कारनिमित्ताः जातिनिमित्ता यौगिका वेत्या
रणत्रयेण प्रसङ्गाद्विचारिते प्रासङ्गिकसमाप्त्या बुद्धिस्थस्य वि
विधिव्युत्पादनस्य प्रयोजनमुत्पत्तिशिष्टबलीयस्त्वं वैश्वदेवश
गुणविधित्वशङ्कानिराकरणार्थं व्युत्पाद्याष्टाकपालादिशब्दानां
वाक्यगतत्वेनोत्पत्त्युत्पन्नशिष्टत्वाविभागाभावाद् गुणविधित्व
ङ्काष्टत्वादीनां परस्परविरोधित्वेनैकवाक्यविधानायोगाद् बल
क्यभेदप्रसक्तेरुत्पत्तिशिष्टद्वादशत्वावरुद्धे यागे ऽष्टत्वादिविधय
दष्टाकपालादिशब्दैर्गुणवृत्त्या द्वादशकपालस्तुतिरिति वैश्वानर
करणे ऽभिहिते प्रसङ्गाद् गुणवृत्तित्वलक्षणं तत्सिद्धिसूत्रेण
यथा विध्युद्देशान्तर्गतस्यापि उद्भिदादिपदस्य नामधेयरूपेण प्रव
न्तरेण धर्मप्रमोपयोगित्वं तथा वाक्यशेषस्यापि स्तावकत्वातिरे
सन्दिग्धनिर्णायकत्वेनेत्युक्ताधिकरणेनोक्ते स्रुवाधिकरणे वाक्
यवत् सामर्थ्यस्यापि सन्दिग्धनिर्णायकत्वेन धर्मप्रमोपयोगव्युत
नात् सकलस्य पादस्य प्रमाणलक्षणसङ्गत्यविघातः । भाष्यानु
णोद्भिदादिशब्दानां गुणविधित्वेन धर्मप्रमोपयोगित्वं नामधेय
वेत्युभयथा प्रामाण्यमङ्गीकृत्य प्रकारविशेषव्युत्पादनार्थापि गु
धिनामधेयचिन्ता प्रकारस्यापि लक्षणार्थत्वात् न लक्षणसङ्गति
हन्ति प्रामाण्यविषयविशेषनिरूपणार्थेयं गुणविधिनामधेयचिन्त
प्रकारविशेषनिरूपणार्थेति परव्याख्यादूषणार्थस्तु वार्त्तिकका
यत्न इति सर्वमनवद्यम् ॥ उद्भिद्गुणत्वादिद्वितीयाधिकरण
पक्षभाष्यं तात्पर्यतो व्याचष्टे * तत्र तावदिति * ननूद्भिदा
ब्दानां लोके खनित्रादावप्रसिद्धत्वादवयवव्युत्पत्त्या तु क्व
पि प्रवृत्तिसम्भवात् कथं प्रसिद्ध्या गुणविधित्वनिश्चय इत्या
* बलवत्त्वेनेत्युक्तम् * उच्छब्दस्योद्गत्वे भिदेश्च विदारणे लोक
करणयोः प्रसिद्धत्वादुद्भिच्छब्दस्य खनित्रेऽवयवप्रसिद्धिर्बली
प्रकाशनार्थतायास्त्वप्रसिद्धत्वाद्यागस्य चाबोधकत्वेन प्रकाश
भावात् उत्पादकत्वेनापि प्रकाशकत्वोपचारे सर्वकर्मणां स्व
त्पादकत्वेनोद्भिच्छब्दवाच्यतापत्तेर्यागे प्रसिद्धिर्दुर्बलेति भावः
विधौ त्विति भाष्यमभ्यधिकमर्थं विदधतइत्यवयवत्वेन प्रवृ
शेषकत्वमुक्तमर्थवन्तो भविष्यन्तीत्यनेन च प्रयोजनवत्त्वा

१ बलवतीति २ पु० पा० ।

ख्यातुं प्रयोजनवशेन चाधिकत्वात् * प्रवृत्तेश्चेत्युक्तम् * वि-
[शान्तर्गतस्योद्भिदादिशब्दस्य गुणरूपमङ्गरूपं वाच्यमित्यनुष-
याहाराभ्यां योज्यम् । किमर्थं तदुच्यतइत्यपेक्षायामाख्यातेन
ातुमिति * विधीयत * इत्यनेनोक्तं भाष्यमप्युद्भिदूगु-
ं यागस्याख्यातेन विधातुमुद्भिदादिशब्दो विधेयगुणस-
क इत्येवं योज्यं धातूपसर्गरूपावयवशक्त्यनुसारेण ताव-
च्छब्दस्योर्द्ध्वविदारणसाधनद्रव्यवाचित्वमुपपादयति * प्राति-
कमिति[1] * द्रव्यविषयायाः प्रसिद्धेर्बलीयस्त्वोपपादनार्थं न-
ामिति भाष्यावयवं व्याचष्टे * न चेति * भिदिर्विदारणइति-
प्रकाशने स्मृत्यभावाद्यागस्याप्रकाशकत्वादौपचारिकप्रकाश-
। सत्यप्यातिप्रसङ्गापत्तेरवयवप्रसिद्ध्योद्भिच्छब्दस्य यागार्थत्वा-
ात्समुदायप्रसिद्ध्या तदर्थता वाच्या न चासावस्तीति सूचना-
समुदायशब्दः । ननु लोकप्रसिद्ध्यभावे ऽपि यजिसामानाधि-
ण्याद्यागार्थतावगम्यतइत्याशङ्कानिराकरणार्थं न चेति भाष्याव-
सामानाधिकरण्यावगतस्यार्थस्य पारिभाषिकत्वाभावात् अ-
माशङ्क्य व्याचष्टे * न चेति * वैय्यधिकरण्येनापि यजिस-
धोपपत्तेः सामानाधिकरण्येन यागार्थत्वस्यावगन्तुमशक्यत्वा-
किकार्थकल्पना पारिभाषिकी आपद्येत सा च सम्बन्धस्याशास्त्र-
वादित्यैन्द्र्यधिकरणसूत्रावयवेन निरस्तत्वादयुक्तेत्याशयः ।
सया चोद्भिच्छब्दार्थस्य करणत्वावगतेर्द्रव्यस्यैव च करणत्वोपपत्ते-
नुसारेणापि उद्भिच्छब्दस्य द्रव्यवाचितावसीयतइत्याह * तृती-
े चेति * ननु यागस्यापि फलोद्भेदनहेतुत्वात्फलभावनाकरण-
च तद्वाचित्वे ऽप्यवयवप्रसिद्धिस्तृतीया च न विरोत्स्यतइ-
ाङ्क्याह *न चेति[2] * यागस्योर्द्ध्वविदारकत्वं प्रकाशकत्वं वा ता-
स्त्येव करणत्वं तु विधिसामर्थ्यगम्यमपि कर्तृव्यापार-
्यत्वरूपकर्मत्वापेक्षत्वेन ततो दौर्बल्यात्तेनाभिभूतं सन्न तृती-
ादनक्षममिति प्रसिद्धशब्देन प्रकृष्टत्वेन कर्मत्वात् बलीयस्त्वेन
ुद्धं यतस्तेनाभिभवितुं न शक्यतइत्यभिधानात्सूचितम्।कुठा-
नां तु छेदनादौ करणत्वात् उद्यमनादौ च कर्म-
द्भिन्नविषयत्वेनाविरोधादनभिभूतं करणत्वं तृतीयोत्पादन-
मित्याशयः । नन्वर्थवन्तो भविष्यन्ति इतिभाष्यावयवेनार्थवत्त्व-
तृतीयोपपत्तित्वेनोक्तत्वात् प्रयोजनवशेन चेति द्वितीयोपपत्ति-

---

१ प्रातिपादिकं तावदिति २ पु० पा० ।

२ न च यागस्येति पु० पा० ।

द्दादिपदानां विशेषवाचित्वाभ्युपगमे तत एव विशेषसिद्धे-
नर्थक्यं प्रसज्येत न च सामान्योक्त्या तस्यार्थवत्त्वं विशेषान्त-
न सामान्यसिद्धेरित्यर्थः। ननु यागविधिवाक्ये गुणस्यापि
गौरवं स्यादित्याशङ्क्याह * लाघवं चेति * हेतुत्रयसङ्कुल-
त्प्रतिपादकान् भाष्यावयवान् यदि गुणविधिरित्यादिभाष्यो-
। व्याख्यायोपेक्षितं यदीत्यादिभाष्येण तद्व्याचष्टे * यद्येवमि-
ति ब्रूम इति परिहारभाष्यमाक्षेप्तुमवतारयति * अत आहे-
आक्षिपति * नन्विति * कर्मविध्यभावे गुणविध्ययोगादवश्यं
श्चत् कर्मविधाने ऽभ्युपगन्तव्ये ज्योतिष्टोमवाक्यसन्निधा-
र्त्तव्यतास्नानात् तस्याश्च कर्त्तव्यत्वलिङ्गत्वात् भूयस्त्वेनो-
ित्यनेन न्यायेनास्य कर्मविधित्वं भविष्यतीति समाधत्ते *ग-
ादिति * नन्वेवं सति ज्योतिष्टोमपदस्य का गतिरित्याशा-
ा गतिमाह * तद्व्यावृत्तेश्चेति * नन्वेवमपि तद्विकार-
न्तराभावात् प्रकृतिशब्दो न युक्त इत्यन्यथाक्षिपति * न-
ति * समाधत्ते * सिद्धान्तेति * प्रस्तुताधिकरणासि-
प्रकृतित्वानभिधानादव्यक्तासु तु सोमस्येत्यत्र वक्ष्यमाण-
द्भिदादियागप्रकृतित्वस्योद्भिदादिशब्दानां गुणविधित्वाभिधा-
ध्यत्वेनानुद्भाव्यत्वादपरितोषेणान्यथा समाधत्ते * अथ
कथं दूरस्थे ज्योतिष्टोमे गुणविधिरित्याशङ्क्य * ताण्डके *
ष्टोमानन्तरमुद्भिदाद्याम्नानाद् गुणविधित्वेन चासम्बद्धपदा-
ाभावात् सर्वत्र ज्योतिष्टोमस्य प्रकृतत्वोपपत्तेस्तत्र गुणविधि-
ावः प्रकृतित्वाभिधानेनोक्त इति भावः। यदा त्वथैष ज्यो-
ादिवर्ज्जमुदाहरणमिति श्येनाधिकरणवक्ष्यमाणन्यायेन ज्यो-
शब्दानां गुणविधित्वाशङ्काविषयत्वं नेष्यते तदा तेष्वपि गु-
ुपपत्तेर्ज्योतिष्टोममात्रे गुणविधानाभिधानमयुक्तमित्याशङ्क्य
त्रा ह्निरुक्तत्वादिति न्यायं सूचयितुं तदपेक्षया प्रकृतित्वाभि-
त्याह*अथ वेति*अव्यापारस्य व्यापारावच्छेदं विना विधेय-
ात्तस्य च व्यापारवाच्याख्यातान्वयाधीनत्वात् कारकविभक्ति
ाख्यातान्वयायोगात् लोकसिद्धस्यैव च गुणस्य कारकविभक्ति-
ाज्यत्वात् न स्वरूपज्ञापनार्थप्रातिपदिकार्थप्रधानप्रथमानिर्दिष्ट-
ेयत्वं सम्भवतीत्याशयः। नन्वेवमपि ज्योतिष्टोमपदस्य ना-
र्थं तद्वाक्येन फलसम्बन्धे व्यापृतेनापेक्षितायाः कर्मोत्पत्तेः
यजेतेत्यनेन करणादुत्पत्तिशिष्टेन सोमेन गुणविधित्वे वा
ाप्ते कर्मणि गुणफलसम्बन्धरूपानेकार्थविधाने वाक्यभेदा-

पत्तेर्ज्योतिष्टोमवाक्यस्यैव कर्मोत्पादकत्वात् उत्पत्तिशिष्टेन ज्योति
षां श्रुतिमतामग्न्यादिद्रव्याणां स्तोमेन समुदायेन ज्योतिष्टोमशब्द
वयवशक्त्यनुसारावगतेनावरोधाज्ज्योतिष्टोमे गुणविधानं न युक्त
मित्यन्यथाक्षिपति * नन्विति * फलपदानुरोधात् फले गुणा
विप्रतीतेर्ज्योतिष्टोमाश्रितस्य गुणस्य फले विधानं भाष्यकृतोक्ता
ति मत्वा तावत्समाधत्ते * काम्यत्वादिति * एवं तावदुद्भिद
दिद्रव्येण यागमभिनिर्वर्तयेदिति सन्देहहेतुभाष्यस्योद्भिद्गुण
यागस्येति च पूर्वपक्षभाष्यस्याविहिते च कर्मणि तत्र गुणविधा
मनर्थकमित्याशङ्काभाष्यस्य चानुपपत्तिप्रसङ्गात्सर्वकाम्यप्राप्तपश्व
दिफलानुवादकत्वेन च फलपदोपपत्तेरपरितोषादन्यथा समा
त्ते * अथ वेति * यद्यपि गुणविशिष्टं विहितं कर्मौत्पत्तिकेन
णेन नैराकाङ्क्ष्याच्च तद्विरुद्धं वाक्यान्तरोपात्तं गुणान्तरं ग्रहीतुं
क्नोति तथापि यजिना गुणरहितं स्वरूपमात्रं निष्कृष्याकाङ्क्षोत्थ
नेन गुणान्तरं विहितं सन्नौत्पत्तिकाद्विशिष्यतइत्यध्याहृत्य यदि त
शब्दकावपि शब्दावृत्त्या योज्यम् ।

अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधा
कत्वात् ॥ २ ॥

पूर्वसूत्रे श्रुत्यार्थाद्वा गुणविधित्वस्यानुक्तत्वादशाब्दस्य
शाब्दनिराकरणानन्वयात्तन्निरासार्थापि वा शब्दासामञ्जस्यं व्याग
पेक्षया सूचितं भाष्यकृता त्वाकृत्यधिकरणाद्यसूत्रवन्ना
याधिकरणसिद्धान्ताभिधानार्थस्यापि सूत्रस्यावृत्त्या ततश्चान्यथ
यार्थत्वासम्भवात्पारिशेष्याद् गुणविधिरित्यध्याहारेणैतदधिक
पूर्वपक्षेऽपि योजना शक्येति मत्वा तन्निरासार्थत्वेनापि वाः
व्याख्यातः । यथा सर्वमुद्भिच्चित्रादिनामधेयमपि क्रियार्थं स्य
त्युक्ते नामधेयस्य विध्युद्देशान्तर्गतत्वेन श्रुतिस्मृत्यर्थत्वायोगा
वृत्तिविशेषकरत्वाभावेन च विध्युद्देशेऽनुपयोगादानर्थक्यं स्य
त्याशङ्कामुपस्थितां निराकर्तुमपि वा नामधेयं स्यादिति सूत्राव
शेषं तु यौगिकानां कर्मसामानाधिकरण्यनिर्दिष्टानां गुणविधि
धेयत्वविचारे सिद्धान्ताभिधानार्थमिति व्याख्येयम् । एतदेव
ख्यानमभिप्रेत्य यदा तदर्थत्रयान्यतमार्थमिति स्थितं तदा विचा
त्याद्यधिकरणशेषभूतं विचारान्तरं कृतम् । आद्याधिकरणशेषत्व
स्य विचारस्य द्वयोरधिकरणयोरित्यविरुद्धं तस्मान्नामधेयमपि

र्थमेव स्यादिति पूर्वसूत्रगततदर्थशब्दानुषङ्गेणैव शब्दार्थे वाश-
ङ्गीकारेण चाद्याधिकरणशेषतया व्याख्यानस्य स्पष्टत्वात् एत-
त्प्रकरणशेषत्वाभावाच्चाव्याख्यानमिति सर्वं समञ्जसं यदुत्पत्ता-
वेमिति सूत्रावयवमाधिकरणविषया ऽभिधानार्थतया तावत्स्वयं
ाचष्टे * यदुत्पत्तावितीति * प्रथमेत्यनेनोत्पत्तिशब्दस्य सामा- २८।
धिकरण्यप्रागभाववाचितया व्याख्यानाद्व्यधिकरणनिर्दिष्टेष्वग्नि-
त्रादिशब्देषु तत्प्रागभावविशेषणानर्थक्यात् अग्निहोत्रादिशब्दव्या-
ेकत्वं सूचितम्। अर्थान्तरेत्यनेनापूर्वशब्दस्यार्थान्तरनिरूढच्चित्रा-
ाब्दव्यावर्त्तकत्वं सूचितम्। सामानाधिकरण्यात् प्रागर्थविशेषा
ाश्रयोक्त्या सामानाधिकरण्यस्य नामधेयत्वनिश्चायकत्वं सूचि-
ेति दर्शयितुम् * सामानाधिकरण्यादित्युक्तम् * भाष्यकृता
यस्माच्छब्दार्थे यदित्यव्ययमभिप्रेत्यापूर्वशब्दो नामधेयत्वहेतुप्रति-
ज्ञार्थत्वेनैवमिति भाष्येण व्याख्यातः तदनुसन्धत्ते *अथ वेति *
नधेयत्वस्य सामानाधिकरण्येनैव यागविषयत्वनिश्चयात्तदनाश्रय-
वा नामधेयत्वस्यैवायोगाद् द्रव्यनामत्वे च द्रव्यस्य विधेयत्वापत्ते-
ाविधिप्रतियोगिनो नामधेयशब्दस्य प्रधानकर्मनामधेयविषयत्वाव-
ात्कस्य नामधेयमिति सन्देहानुपपत्तेरपूर्वनिष्पादकत्वस्य च नाम-
ानिमित्तत्वाभावाद्धोमादिसाधारण्याच्चोपलक्षणत्वानुपपत्तेरन-
मतमपि व्याख्यानान्तरं विभवार्थमाह * अथ वेति * अविधाय-
वादिति सूत्रावयवं स्वव्याख्याने हेत्वभिधानार्थत्वेनावता-
पूर्वकं व्याचष्टे * किं कारणमिति * नामधेयत्वे प्रतिज्ञाते गु-
वेधित्वनिराकरणहेत्वभिधानेनाद्याधिकरणसिद्धं नामधेयत्वानां
ेषां गुणविधिमात्रशङ्कानिराकरणार्थान्युत्तराधिकरणानीति सू-
तम्। कथं न युज्यतइत्यपेक्षायां फले तावद् गुणविधौ पञ्चदोषानाह
फलमिति * यजिपरेणाख्यातेनोद्भिदा पशून्भावयेदिति पर-
योः सम्बन्धविधानम् उद्भिदा यजेत पशुकाम इति च व्यवधाने-
ान्नातयोः सम्बन्धकल्पना धातोर्विध्यनुपयोगित्वेन प्रत्ययानुग्रह-
र्थत्वात् पारार्थ्यं काम्यत्वाच्च नित्यस्य सोमेन यजेतेत्युत्पत्ति-
क्यविशिष्टस्य सोमस्य बाधः कुशरादिवच्च यागसाधनत्वेनाप्रसि-
नाभक्षेण याग इत्यर्थः।ज्योतिष्टोममात्रे गुणविधौ फलपदानर्थक्यं
मेन सह विकल्प इति द्वौ दोषौ फलविशिष्टे तु ज्योतिष्टोमे गुण-
धौ वाक्यभेदः सामान्यशिष्टस्य च सोमस्य विशेषशिष्टेन खनि-
दिना बाध इति द्वौ दोषौ परपदार्थविधानात् प्रत्ययव्यापारस्य वि-
कर्षः! धात्वर्थे च गुणविधानात् धातोः पारार्थ्यं अभक्ष्येण च

याग इति दोषत्रयम् । द्वयोस्तुल्यमिति द्वेधा यागे गुणविधि
त्व्य पञ्चदोषानाह * तथेति * विशिष्टविधावपि विशिष्टस्याप
त्वेन सर्वेषां नामधात्वाख्यातानां तत्समर्पणार्थत्वात् पारार्थ्यं ।
पगुणविधिं च विना विशिष्टविध्ययोगादनेकविधशक्तिकल्पना
च्छब्दस्य च द्रव्यविशिष्टयागपरत्वान्मत्वर्थलक्षणाविधिसाम
तृतीयान्तधात्वर्थावगतेस्तुल्यविभक्तित्वेनावगम्यमानस्यैकार्थत्
स्य त्यागो ऽभ्यस्ययागश्चेति पञ्चदोषानाह * तथेति * उप
ति * तस्मादिति * एतच्च नामधेयत्वसिद्ध्यर्थं गुणविधित्वनिर
भाष्यकृतापि मत्वर्थलक्षणादोषोपन्यासेन कृतत्वान्नास्माकम
च्छाभिधायितामापादयतीत्याह * तदिति * श्रुतिश्चेति भ
सौत्रमुत्पत्त्याख्याद्यभावविकारगतप्राथम्यलक्षणगुणयोगेन श्रु
त्तिपरं व्याख्याय तद्व्यतिरेकप्रतिपादनार्थत्वेन गुणविधौ मत्
क्षणोपन्यासान्नामधेयत्वोपपादनार्थेनोत्पत्तिशब्देनैवार्थाद् गुण
मत्वर्थलक्षणोक्तेति सूचितमिति न भाष्यस्याप्युत्सूत्राभिधान
त्मः विधानायोद्भिदादिश्रुतिः खनित्रादीन् वक्ष्यति यजिसा
धिकरण्यार्थं च तद्वतो यागान् लक्षयेदिति युगपत् श्रुतिल
पत्तिरित्यर्थः । एवं त्वाख्यातद्वयान्वयार्थं चकाराध्याहारापत्तं
अन्तं पाठान्तरमुक्तं यागेनेत्यादि भाष्यस्य श्रुतिश्चेत्यादिना सह
रुक्तमाशङ्क्य विवेकमाह * प्रातिपदिकेति * समुच्चयवाचि
काभावात् युक्त्यन्तरत्वं न युक्तमित्याशङ्क्य किं च शब्दाभ्या
यागेन कुर्यादिति व्याचष्टे * किं चेति * ननु यागानुवा
गुणविधानस्य पूर्वपक्षत्वाद् गुणविधौ च तस्य साध्यत्वेनानुव
करणतेत्याशङ्क्य *अनुवादे चेत्युक्तम्* अनुवादो ऽप्यपूर्वस्या
गुणं विधातुं यद्यागेन कुर्यादित्येवमेव स्यादित्याशयः । न
भाष्येणोद्भिच्छब्दस्यावयवव्युत्पत्त्योर्ध्वविदारणसमर्थद्रव्यवाचि
सिद्धेस्तस्य यागेनाप्रसिद्धकर्मवाचित्वकल्पना निष्प्रमाणिका तृ
निर्देशस्य व्रीह्यादिषु कर्मवाचित्वाभावे ऽपि दर्शनेनासाध
दित्याशङ्क्योच्यत इत्यनेन कोकिलः पिक इत्यादौ लोके प्रसि
मानाधिकरण्येनाप्रसिद्धार्थनिर्णयदर्शनाद् व्रीह्यादिवच्च वा
क्षाद्विपरीतप्रसिद्ध्यभावात् तृतीयानिर्देशो ऽप्यत्र प्रामाणिकत्व
येण परिहारमुक्त्वा कथं तृतीयानिर्देशात्कर्मवाचितावगम्य
१८५।२ पृष्टे करणवाचिनो हीत्युत्तरं दत्तं तदाक्षिपति * यदीति *
ग्रामस्थणिमानममूर्तं सन्तं क्रियायाः करणमिति शब्द आह
रणाभिधायिन्या तृतीयया विभक्त्या संयुज्य निर्दिशत्यस्या

भाष्यान्तरविरुद्धं प्रातिपदिकस्य करणवाचित्वाभिधानमित्य- । करणशक्त्यधिष्ठानलक्षणार्थो ऽयं करणशब्द इति परिह- * नैष इति * करणशब्दार्थविषयो वायं करणशब्द इ- परिहारान्तरमाह * अथ वेति * करणशब्दवदुद्भित्प्रा- दिकस्य करणशक्तिविशिष्टद्रव्यानभिधायित्वाद्यादृशतादृशश- द्रव्यरूपत्वमात्राभिप्रायौ व्याख्येयौ करणशब्दो यादृशरूपमर्थं प्र- ते तादृशस्य द्रव्यरूपस्य प्रातिपदिकं वाचकमित्यर्थः। ननु करण- ऽपि करोतिना क्रियाभिधानात् ल्युटा च करणशक्त्यभिधानात् द्रव्यवाचितास्तीत्याशङ्क्याह * कृदन्तेनेति * द्रव्योपसर्जनत्वे- करणशक्तिर्ल्युटोच्यते न तृतीयावद्विष्कृष्येत्यर्थः। एतदेवोपपाद- । * तथा चेति * कथं कारकान्तरयोगमात्रेणाप्राधान्यं कर- शक्तेरित्यपेक्षायामाह * अन्यथा हीति * कारकप्राधान्येन त- सर्जनत्वात् द्रव्यस्यैकेन कारकेण वशीकाराद्यथा घटमानयेति कारकेण वशीकृतस्य घटस्य घटेनेत्यादिपदान्तरोपात्तेनापि द्रव्य- कारकान्तरेण योगो न भवति तथा ल्युट्प्रत्ययोपात्तं करणकार- प्रत्युपसर्जनस्य करणशब्दवाच्यस्यापि द्रव्यस्य कारकान्तरयोगो स्यादित्यर्थः । ननु द्रव्योपसर्जनत्वात् कारकान्तरयोगासम्भवे । ल्युट्प्रत्ययोक्तस्य करणकारकस्यैव कारकान्तरयोगो भविष्य- याशङ्क्याह * शक्तेस्त्विति * कारकं हि शक्तिस्तस्याश्च प्रति- र्थे व्यवस्थिताया एव कल्पितत्वात् न व्यवस्थासिद्धये शक्त्यन्तर- ल्पना युक्तेत्याशयः। एतमेव परिहारमुपसंहरति * तस्मादिति * करूपसर्जनमस्येति विग्रहः। एतदेव भाष्यं व्याचष्टे * तेनेति* तीयानिर्देशाभावात्कथं यागस्य करणतेत्याशङ्क्य भावार्थाधिकर- क्ष्यमाणतोक्ता नैतद्युक्तमित्याशङ्काभाष्यं तात्पर्यतो व्याचष्टे * चेति * करणभूतयागैकवाक्यत्वविशिष्टतृतीयान्तत्वस्य यागवाचित्वे साध्ये नैकान्तिकत्वप्रदर्शनार्थत्वेन व्रीहिसोम- दिति दृष्टान्तं व्याचष्टे * यथैवेति * कर्तृव्यापारव्या- धीनत्वात्करणत्वस्य तदाक्षिप्तकर्तृव्यापारव्याप्यत्वरूपानीप्सित- त्वापेक्षया व्रीह्यादिशब्दानां यजिना सह वैयधिकरण्ये र्थत्वे ऽपि यथा करणभूतयागैकवाक्यत्वविशिष्टं तृती- न्तत्वमविरुद्धमेवमत्रापीत्यर्थः । हठशब्दं व्याचष्टे * हठ इति * उद्भिच्छब्दस्य यागवाचित्वं लौकिकाप्रसिद्धमपि अत्र नैव वाक्येन स्यतइत्याशङ्कानिरासार्थमपि चेति भाष्यं स्पष्टत्वान्न व्याख्यातं उद्भिच्छब्दस्याप्रसिद्धमेव यागनामधेयत्वं करणभूतयागैकवाक्यत्व-

विशिष्टतृतीयान्तत्वेनाज्ञातं ज्ञाप्यते किं तु द्रव्ये यागे वावयवव्युत्प
त्तितुल्यत्वात्सन्देहे सति सामानाधिकरण्येन लोकनिर्णयोपायेन नि
र्णीयतइति परिहाराभिधानार्थं न नामधेयं विधायिष्यतइति भाष्यम
र्थतो व्याचष्टे * तदुच्यतइति * उद्भिच्छब्दस्यावयवव्युत्पत्त्यप
र्यालोचने द्रव्यवाचित्वस्याप्यज्ञानात् पर्यालोचने वा सन्देहादुभयो
पादाने ऽपि कादिपदमर्थविशेषवाचित्वेनाज्ञातं सन्दिग्धं चाक्षादिप
कोकिलः पिको ऽधिदेवनो ऽक्ष इत्यर्थविशेषवाचित्वेन प्रसिद्धैरपृथ
क्श्रुतिसामानाधिकरण्यनिर्दिष्टं सदर्थविशेषवाचित्वेन निर्णीयमा
लोके दृष्टमित्युद्भिदादिपदमपि तथा निर्णीयते । यत्त्वर्थविशेषवाचि
त्वेन निरूढं नियतं तत्प्रसिद्धपदसामानाधिकरण्ये ऽपि स्वार्थाज्ञाप
नीयतइत्यर्थः । अनेन चानिरूढत्वविशेषणाद्धेतोरपि व्यभिचारः परि
।२ हृतः । श्लोकं व्याचष्टे * व्रीह्यादयो हीति * ननूद्भिच्छब्दस्य स्मृत्य
नुसारेणोर्द्ध्वं विदारणसमर्थद्रव्यवाचित्वावधारणात् प्रकाशनार्थ
त्वे तु स्मृत्यभावादतुल्यत्वेन सन्देहाभावात् कथं सामानाधिकरण्या
न्निर्णय इत्याशङ्क्याह * प्रधानं चेति * किमुद्भित्प्रातिपदिकस्या
वयवार्थानुसारात् द्रव्यवाचितास्तु तृतीयानुसाराद्वा यागवाचिते
ति सन्देहे ऽवयवार्थस्य गुणत्वात् तद्बाधेन प्रधानभूततृती
यार्थानुसाराद्यागवाचितैव न्याय्येत्याशयः * अपि चेति * भाष्यो
क्तवाक्यभेदाशङ्कानिरासार्थमध्ये तदेवं भाष्यम् उद्भित्सञ्ज्ञकेन यागेन
पशून्भावयेदित्येवं नामधेयस्यापि यज्यर्थविशेषणत्वेन विधेयत्वात्
अयुक्तमाशङ्क्य धूम एवाग्नेर्दिवा ददृशे नार्चिरितिवद्यथा गुणविधौ
बहुविधानं नैवं नामधेयपक्षे ऽस्तीत्यौपचारिकार्थत्वेन व्याचष्टे *वि
चेति * शङ्कान्तरनिरासार्थं भाष्यावृत्तिसूचनार्थः किंचशब्दः यश्च
नामधेयपक्षे वाक्यभेदः शङ्कितः सो ऽप्ययुक्तः प्रत्युत तस्मिन्नेव पक्षे
विधिलाघवेन गुणविधिपक्षवद् गौरवलक्षणवाक्यभेदाभावान्नामधे
यविशिष्टयागभावनारूपैकार्थविधेश्चावृत्तिलक्षणवाक्यभेदस्यानाश-
ङ्कत्वादित्यर्थः । ननु यथा नामधेयपक्षे प्रातिपदिकस्य यज्यर्थविशे
षकत्वेन विधिसम्बन्धे सत्याख्यातावगतयोः संख्याकारकयोर्विभ
क्त्यानुवादोपपत्तेर्लाघवं तथा गुणविधिपक्षे ऽपि यागोद्देशेन विहि
तस्य द्रव्यस्य योग्यतया करणत्वावगमात् प्राथम्येन चैकत्वावगतेर
नुवादो भविष्यतीत्याशङ्क्याह * त्वत्पक्षे हीति * कारकान्वयं वि
ना प्रातिपदिकार्थस्य क्रियान्वयासम्भवेन विधेयत्वायोग्यत्वात्
श्रुतायाश्च संख्यायाः कारकाङ्गत्वाभावात् तत्रैकत्वमयज्ञाङ्गभूतमि
त्यनेन न्यायेनाविवक्षापत्तेः प्रातिपदिकार्थैकत्वविशिष्टं करणत्वमेव

पक्षे विधेयं स्यादित्याशयः। ननूद्भिच्छब्दस्य भाष्यकारोक्ते प्रशने समृत्यभावात् कर्मणश्चाप्रकाशकत्वात् अवयवद्वारेणापि कयप्रसिद्धेर्नामधेयत्वायोगात् अगत्या गौरवाश्रयणमदोषमित्याशाह * तस्मादिति * उक्तेन यजिसामानाधिकरण्यप्रधानानुरोत्तिविधिलाघवलक्षणेन हेतुत्रयेण कर्मनामधेयत्वावधारणे प्रवृत्तिमत्तं विना तदनिर्वाहाद्यथासम्भवे कस्मिंश्चिन्निमित्ते नामधेयत्वाहायान्विष्यमाणे भूविदारणस्य भूनिखातनिध्यादिप्रकाशनहेद्भिदारणात्राचिनो भिदेर्लक्षणया तत्कार्ये प्रकाशने प्रवृत्त्युपपत्ते च वस्तुनि केन चित्प्रकाशिते ऽनेनेदमुद्भेदितमिति प्रयोगदत्पादकस्य च कर्मणः प्रकाशनहेतूत्पत्तिकारणत्वेनोपचारात्प्रकत्वव्यपदेशोपपत्तेर्युक्ता पशुप्रकाशनस्योद्भिच्छब्दप्रवृत्तिनिमित्याशयः। या भाष्यकृतावयवद्वारेण कर्मण्यपि प्रसिद्धिरुक्ता तस्मादनन्तरोक्ताद्धेतुत्रयान्नामधेयत्वावधारणे सति तदन्यथापत्तिलभ्यत्वादप्युपपन्नेति योज्यम्। न च सुराणां वै बलस्त प्रावृतो स्माभिधानमासीत्तस्मिन् गव्यं वस्त्वन्तरासीत् तं देवा क्नुवन् भेत्तुं ते ततो बृहस्पतिमब्रुवन्निमान्न उत्सृजेति स उद्भिबलं व्यच्यावयत्तं बलभिदाभिनदित्यन्वाख्यानावगतगोयुक्तबिवरापरपर्यायबलच्यावनद्वारस्य तद्भिदारणाद्वारस्य वा पशुप्रकास्य निष्प्रमाणकत्वात् मुख्यवृत्त्योद्भिद्बलभिच्छब्दप्रवृत्तिनिमित्तानुपपत्तेः पशुकामपदावगतपश्वाख्यफलोत्पादनं लक्षणयोद्भिद्भिच्छब्दप्रवृत्तिनिमित्तं वाच्यं तस्य च ज्योतिष्टोमादावपि तुवेनातिप्रसङ्गापत्तेर्नोद्भिद्बलभिच्छब्दप्रवृत्तिनिमित्तत्वं सम्भवशङ्कते * ज्योतिष्टोमादेरिति * समुदायशक्त्यैव यागविशाचित्वात् नातिप्रसङ्ग इति परिहरति * नेति * सामानारण्येनैवावधारितैतद्वाक्यविहितयागाख्यविषयविशेषस्योद्भिदस्य गवादिशब्दवद्व्युत्पत्तिनिमित्तमात्रत्वेनावयवान्वाख्यानार्थः। सम्बन्धस्याशास्त्रहेतुत्वाद्वैदिकसामानाधिकरण्यरूपप्रमात्रेण समुदायशक्तिकल्पनानुपपत्तेर्न व्युत्पत्तिनिमित्तमात्रता द्भेदनस्य युक्तेत्यपरितोषात्परिहारान्तरमाह * अथ वेति * पङ्कजशब्दस्य विशिष्टविषयप्रयोगान्यथानुपपत्त्या पद्मत्वैकार्थेत्रतपङ्कजननविशेषनिमित्तत्वावधारणात् व्यवस्था तथोद्भिच्छशब्देतद्यागगतोद्भेदनविशेषनिमित्तत्वावधारणाद्व्यवस्थेत्यर्थः। ब्दस्य जातिनिमित्तस्यापि व्याकरणे ऽवयवान्वाख्यानात् दृष्टानोपादानम्। ननु यद्यत्र भाष्ये कर्मण्यप्युद्भिच्छब्दस्य प्रसिद्धिः

सामानाधिकरण्याधीननिर्णयोपपादनार्थं विवक्षिता ततो न
यं विधायिष्यतइति किमर्थमुक्तमित्याशङ्क्याह * अविधा
दिति * नैतद्युक्तमित्यादिभाष्योक्तामप्रसिद्धकल्पनाशङ्काम
न्नावयवेन निरस्तां दर्शयितुमेव मुक्तमित्याशयः । यदि तु
तइत्यादिना स्वयमाशङ्कापरिहारमुक्त्वा इदानीमेवैतद्भाष्यमे
वयवव्याख्यानार्थत्वेन व्याख्यायते ततः स्वयमुद्भावितशङ्काप
नभिधानात् भाष्यकृतः शून्यहृदयतापद्येतात एव टुप्टीकाया
ष्यव्याख्यानार्थं क्रियायोगेन प्राप्तत्वादिति द्वयोरपि परिहार
कम् । वाक्यभेदशङ्कापरिहारे मुख्यवृत्त्यैतद्भाष्यं योजयितुमा
ज्ञेति * यदि हि यागेन पशून्भावयेत्तस्य च यागस्योद्भित
साध्यसाधनसम्बन्धसञ्ज्ञासञ्ज्ञिसम्बन्धरूपौ द्वावर्थौ वि
ततो वाक्यभेदः स्यात् सञ्ज्ञासञ्ज्ञिसम्बन्धस्य त्वननुष्ठेयत
मानाधिकरण्यावयवप्रसिद्धिभ्यामेव च सिद्धेरविधेयत्वान्न
भेदापत्तिरित्यर्थः । नन्वविधेयत्वे नामधेयस्य विध्युद्देशा
न स्यादित्याशङ्क्याह * नन्विति * नामधेयस्वरूपाविधा
न्द्भित्सञ्ज्ञकेन यागेन पशून् भावयेदिति तदर्थविधानाद्विध्यु
र्भावोपपत्तिरित्याशयः। ननु विहितविधानासम्भवेनैतद्विधिव
यागस्य विध्यन्तरयागेभ्यो भेदावगमाद्धातुत एवानुष्ठेयत्वय
२८७।१ गविशेषसिद्धेरनर्थको नामधेयार्थविधिरित्याशङ्क्याह * तद
त्वादिति * अप्रवृत्तप्रवर्त्तनात्मकविधिविषयत्वान्यथानुपप
लोचनया धातोर्यागविशेषपरत्वावगमे ऽपि को ऽसौ या
इति निर्द्धारणस्य स्वरूपोक्तिमन्तरेणाशक्यत्वाद् द्रव्यदेवत
श्रवणात् नामधेयार्थविधानधीनैव निर्द्धारितविशेषसिद्धिरित्
नन्विह सामानाधिकरण्येन विशेषणविशेष्यभावस्येष्टत्वात्
भिन्नप्रवृत्तिनिमित्तैकार्थवृत्तित्वलक्षणस्य संज्ञासंज्ञिनोरसम
ल्यविभक्तिकनिर्द्देशमात्रस्य सामानाधिकरण्यस्य तु गौरश्व इ
विशेषणविशेष्यभावानापादकत्वात्कथं संज्ञया संज्ञिविशेषसि
त्याशङ्क्याह * इह हीति * सामानाधिकरण्याभावे ऽपीह वि
विशेष्यभावान्न भेदो नान्यथात्वं किं तु विशेषणविशेष्यभाव
भावे लकारः कथमित्यपेक्षायामात्मरूपेत्युक्तम् । अर्थद्वारे वि
विशेष्यभावे भिन्नप्रवृत्तिनिमित्तैकार्थवृत्तित्वलक्षणसामाना
रण्यापेक्षा संज्ञायास्तु स्वरूपेणैव संज्ञान्तरविशेषात्स्वविषयव
कत्वान्नैवं रूपसामानाधिकरण्यापेक्षेत्याशयः । ननु संज्ञयात्म
द्ययागाभिधाने विशेषणत्वादात्माप्यभिधीयेतेत्याशङ्क्य * नहि

णान्तरावगतस्यापि काकनिलयानादिवद्व्यावर्त्तकत्वोपपत्तेर्ना-
भिधानापत्तिरिति परिहरति * प्रत्यक्षेति * कथं तर्हि जाति-
शेषव्यक्त्यभिधाने जात्यभिधानापत्तिरित्याशङ्क्याह * सर्वत्रेति *
हि व्यवहारे जातेः प्रत्यक्षेणाग्रहणात् अभिधानापत्तिरिति
र्थः। ननु संज्ञाया विशेषणत्वे स्वानुरक्तबुद्धिजनकत्वलक्षणत्वा-
स्वरूपस्य संज्ञिन्यारोपापत्तिरित्याशङ्क्याह * न चेति *
शविशेषा गोत्वादयो ऽर्थे[1] वस्तुनि न विद्यन्ते ततो गवादिशब्द-
स्वानुरूपबुद्धिजनकत्वेनार्थे ऽध्यासः स्यात्तेषां तु विद्यमानाना-
गवादिशब्दैरुद्धरणमात्रं निष्कर्षमात्रं क्रियते इत्यनन्तधर्मके
स्येकधर्मावधारणे शब्दो ऽभ्युपायमात्रं स्यान्नात्माध्यारोपकार-
त्यत्र प्रत्यक्षसूत्रे ऽभिहितमित्यर्थः। स्वानुरूपबुद्धिजननं विना
शब्देनांशविशेषोद्धरणमित्याशङ्क्य तदनुवेधेनेत्युक्तम्। एतच्छ-
ाच्यो ऽयमित्यवधारिते यस्तेन शब्देनानुबन्धः, स्ववाच्यस्य श-
तरवाच्येभ्यो व्यवच्छेदस्तेनेत्यर्थः। एवं तावद्यत्राप्यनन्यपर-
त्रपुनःश्रवणान्यथानुपपत्त्या विध्यन्तरविहितेभ्यो यागेभ्यः स्व-
यस्य भेदसिद्धिस्तत्रापि निर्द्धारितरूपविशेषप्रतीतिर्नामधेया-
त्युक्तम्। उद्भिदादिवाक्ये तु विधिपुनःश्रवणस्य फलाद्यर्थत्व-
भवेनाभेदकत्वादनुपादेयसम्बन्धसहकृता सन्निधिलक्षणेन च
णान्तरेण दूरस्थेभ्यो भेदावगमे ऽपि प्रकृताद्व्यवधायकाभावेन
हिताज्ज्योतिष्टोमान्नामधेयं विना भेदासिद्धेर्नामधेया ऽर्थो ऽव-
विधेय इत्याह * नाम्नैवेति * भेदं विना प्रकृतिविकारभावा-
द्विशेषणानर्थक्यापत्तेश्च प्रकृतौ ज्योतिष्टोमे इति भाष्यगतप्रकृ-
ब्दवदयमपि प्रक्रियतइति व्युत्पत्त्या प्रकृतवचनः। यद्वा देव-
शपूर्वकद्रव्यत्यागरूपत्वं निमित्तीकृत्य यजिप्रवृत्तेः पशूद्देनहे-
च निमित्तीकृत्योद्भिच्छब्दप्रवृत्तेर्भिन्नप्रवृत्तिनिमित्तैकार्थवृत्तित्व-
णसामानाधिकरण्यनिबन्धनैव विशेषणविशेष्यता सम्भवतीत्या-
अथ वेति* यथारुणैकहायन्यादौ सामानाधिकरण्यनिबन्धना-
षणविशेष्यता तद्वदेवात्रापीत्यर्थः एतच्च यजेत पशुकाम इत्ये-
तासिद्धत्वात्पशूद्देनहेतुना यागेन पशून् भावयेदिति नामधे-
विध्यानर्थक्यापत्तेः प्रौढिमात्रेणोक्तम्[2]। एवमाकृतेरविधेयत्वा-
पूर्वपक्षवार्त्तिकोक्तं नामधेयानर्थक्यं परिहृत्य यदा च लौ-
नापि प्रकारेणेत्यनेनोक्तम्। नामधेयार्थविधौ यज्यानर्थक्यं प-

---

[1] र्थे इ० २ पु० पा०।
[2] णेत्युक्तमिति २ पु० पा०।

निरस्यति * न चेति * अवयवव्युत्पत्तिपर्यालोचनयोद्भिच्छब्दस्य न्योन्यादानुकूल्यस्वभावविध्यन्तरविहितकर्मव्यावृत्तकर्मविशेषनाम त्वागमे ऽपि यागरूपता कर्मणो यज्यधीनेति दर्शयितुं यागशब्दः नन्वेवमितरेतराश्रयत्वं शङ्कनीयं परस्परसन्निधानलभ्यत्वेन न्योन्यनियमस्यैकैकाधीनत्वानभ्युपगमादित्याह * परस्परेति * ननु विधानायोग्यत्वेनैव सामान्यव्यावृत्तिसिद्धेर्न तदर्थं नामधेयस न्निधानापेक्षा इत्याशङ्क्य प्रकृतस्यैव फलाद्यर्थं पुनःश्रुत्युपपत्तेर्न त द्व्यावृत्तिर्नाम्ना विना सिध्यतीति दर्शयितुं प्रकृतौ वेत्युक्तम्। एतदेवो पसंहरति * तस्मादिति * ननूभयाविधाने वाक्यभेदापत्तेर्नामधे यस्यानुवादताङ्गीकार्येत्याशङ्क्याह * विशिष्टेति * वाक्यभेदं विना प्युभयविध्युपपत्तेर्न तद्भयेनानुवादताभ्युपगन्तव्येत्यर्थः। नामधेयार्थ स्य विधेयत्वे नामधेयत्वस्य गुणविधिप्रतियोगित्वे ऽपि विधित्वमा त्रप्रतियोगित्वाभावात् तद्भयेन परेषां विध्यादित्रयातिरेकवर्णनमयु क्तमित्याह * एवमिति * यत्त्वित्यादिभाष्येणोद्भिदादिशब्दो नाम धेयत्वे स्वप्रवृत्तिविशेषकरत्वादनर्थकः स्यादिति पूर्वपक्षोक्तं ना मधेयानर्थक्यमनुभाष्य गुणफलोपबन्धेनार्थवत्त्वमुक्तं तस्योपलक्ष णार्थत्वं दर्शयितुमाह * अशेषेति *

संज्ञायाः कर्मभेतृत्वं द्वितीये यद्वदिष्यते ।
यच्चैषां यागपङ्क्तस्य फलवत्त्वं वदिष्यते ॥
सोमयागस्य च ज्योतिष्टोमे ऽध्याये चतुर्थके ।
यथाग्निहोत्रधर्माणां प्रवेशः कौण्डपायिने ॥
सप्तमे वक्ष्यते सर्वं तन्नाम्ना फलमिष्यते ।
वाक्यान्तरोत्पादिते च कर्मण्यङ्गं विधीयते ॥
फलं वा यत्र तत्रास्मान्नर्ते कर्मविशेषधीः ।
द्रव्यदेवतशून्यायां यागोत्पत्तौ च नामतः ॥
विना निर्द्धारणाभावाद्विशेषस्याविधेयता ।
धर्मप्रमोपयोगित्वमप्यस्येत्थं च सिध्यति ॥
यागेनानेन यक्ष्ये ऽहं तेन याजय मामिति ।
नाम्ना विनैवमादिश्च व्यवहारो न सिध्यति ॥
मीमांसाविधिवाक्यार्थज्ञानानुष्ठानलक्षणे ।
त्रिविधे व्यवहारे ऽस्मिन्सर्वस्मिन्नामकारणम् ॥

ननु विधायकवाक्यनिर्देशेनाप्यार्त्विग्वरणादिषु यागविशेषा- ख्यानसिद्धेः कथं नाम्नामशेषव्यवहाराङ्गतेत्याशङ्क्याह * न हीति * विधिवाक्यं पठित्वानेन विहितो यो याग इत्याख्याने गौरवापत्तेर्ना-

मधेयादन्यो लघुराख्यानोपायो नास्तीत्यध्याहारेण योज्यम् । भाष्याभिप्रेतमर्थमुक्त्वा स्वरूपतो व्याचष्टे * दर्शपूर्णमासाविति * तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मादिति * एवं जातीयकशब्देन सौत्रोत्पत्तिशब्दसूचितं सामानाधिकरण्यनिर्दिष्टत्वम् अपूर्वशब्दसूचितं च यौगिकत्वं विवक्षितम् ॥ १ ॥

॥ चित्रादिशब्दानां यागनामताधिकरणम् ॥ २ ॥

## यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥३॥

इत्युदाहरणमितीतिकरणेन भाष्यकृता गुणविधौ प्रसज्ञ्याक्यभेदानां वाक्यानामुदाहरणत्वं यस्मिन् गुणविधौ प्रसजद्वाक्यभेदानां वाक्यानामुदाहरणत्वं यस्मिन् गुणोपदेश इति सूत्रावयवसूचितं दर्शितं तदिहापि कर्मसामानाधिकरण्येनैव गुणविधित्वनिराससिद्धेः । कारणान्तरोपन्यासानर्थक्यात् अयुक्तमाशङ्क्य सामानाधिकरण्यहेतुकानिर्णयाविषयत्वं दर्शयितुमाह * इदानीमिति* अयौगिकशब्दव्याख्यानार्थं लोकरूढेष्वित्युक्तं कस्मिन्नर्थे लोके रूढा इत्यपेक्षायां जातीत्युक्तम् । आज्यशब्दो घृतजातौ रूढः पृष्ठशब्दः शरीरावयवजातौ चित्राशब्दो गुणे पवमानशब्दोऽपि पवनक्रियायोगनिमित्तत्वात्सर्वत्र यौगिकैर्द्रव्यमेवाभिधीयतइति न्यायात्पावनक्रियाकर्त्तरि रूढः । अनेन च यदुत्पत्तावपूर्वमिति सूत्रावयवनिर्दिष्टस्य सामानाधिकरण्यनिर्देशानिरूढत्वविशेषणद्वययुक्तस्य पूर्वाधिकरणविषयस्यात्रानिरूढत्वविशेषणाभावेनाभावात् पूर्वाधिकरणप्रत्युदाहरणरूपेण पूर्वस्मिन्प्रत्यवस्थानादनन्तरसङ्गतिरप्युक्ता भवति एतच्च न चैते कर्माणि प्रसिद्धा न च यौगिका इत्यत्र भाष्ये स्पष्टयिष्यते । ननु निरूढार्थत्वेनाज्ञातसन्दिग्धत्वाभावात्सामानाधिकरण्यानिर्णयत्वेऽपि प्रधानभूतकरणत्वानुरोधात्कर्मवाचित्वानुमानं भविष्यतीत्याशङ्क्याह * न हीति * प्रसिद्धिद्वयस्यापि कल्प्यत्वे प्रधानाश्रितयेतरा बाध्यते न तु क्लृप्तायाः प्रधानाश्रितयापि कल्प्यया बाधो युक्त इत्याशयः । आज्याद्युदाहरणान्याक्षिपति * नन्विति * ननु चित्रावाक्यवदनुत्पत्तिवाक्योदाहरणेऽपि न दोष इत्याशङ्क्याह * तथा हीति * उत्पत्तिशब्देनेह कर्मनिर्देशो विवक्षितः । तदभावे च निर्विषययोर्गुणनामधेययोरवधारणासम्भवात् व्यवहाराङ्गत्वं स्यादिति भावः । अतः सैवोदाहरणाय क्षमा युक्तेत्यर्थः । नातिप्रयत्निनां समाधानमाह * सा त्विति * उदाहरणव्याप्त्युपपत्तिर्यत्रोदाहृता तत्सूत्रकृता गुणवाक्यस्योदाहरणायाश्रि-

तत्त्वादित्यर्थः । सूत्रकारस्यापि पर्यनुयोगवाक्येनैतत्समाधानं
यति * अथेति * तेषामेव परिहारमाह * यथेति * उत्प
वाक्योदाहरणे फलविशेषस्योक्तत्वादेतत्परिहारापरितोषेण परि
हारान्तरमाह * पूर्वपक्षेति * उत्पत्तिवाक्ये पक्षद्वयोपपादकहे
त्वभावे तत्रैव पूर्वोत्तरपक्षौ विचार्य पक्षद्वयबलाबलनिर्णयार्थं वाक्या
न्तरगतेनापि वाक्यभेदेन पूर्वपक्षनिराकरणोपपत्तेर्भाष्यपरितो
षकमतेनान्यथा परिहरति * अथ वेति * नामधेयत्वं तावद
सिद्ध्यपेक्षामुपपादयति * चूतेति * निरूढार्थत्वात्सामानाधिक
रण्यस्याभिधायकमित्याशयः । किञ्च न नामधेयं विधायित्व
मनेन न्यायेन नामधेयार्थविधाने ऽपि तत्कर्माभिधायकस्य
स्यानुवादत्वात् अन्यतः सिद्धिरपेक्षणीयेत्याह * यान्यान्या
ति * ननूद्भिदादिवदुत्पत्तिवाक्यगतकर्मसामानाधिकरण्येनैव
कर्मसंज्ञात्वसिद्धेर्नान्यतः सिद्ध्यपेक्षेत्याशङ्क्य * यद्यपीत्युक्तम्
सामानाधिकरण्यकर्मनिर्देशस्योत्पत्तिशब्देन विवक्षितत्वात्तस्यापि
सामानाधिकरण्ये प्रवृत्तिनिमित्तं विना कर्मनामत्वानिर्वा
हः पशुकामादिवच्चेहोत्पत्तिवाक्ये प्रवृत्तिनिमित्तद्योतकश
ब्दाभावादन्यतः सिद्ध्यपेक्षेत्यर्थः । सहैव दशभिः पुत्रैः
भारं वहति गर्दभीतिवत्सहयोगिन्या तृतीयया समभ्यर्थलाभः । ननु
सामानाधिकरण्येनावधारिते नामधेयत्वे कथमनेनाभिधीयतइति
प्रवृत्तिनिमित्तापेक्षायां तद्बलेन कस्य चित्कल्पयितुं शक्यत्वात्तद्
वाक्यान्तरोदाहरणे ऽर्थवादस्योदाहार्यत्वापत्तेरपरितोषात्स्वमतेन
हि परित्यागायान्यतः सिद्ध्यपेक्षामाह * उत्पत्तीति * उत्पत्तिवा
क्ये सामानाधिकरण्यात्स्तुतिनामधेयतया स्थितमवगतमाज्यादि
बाधकत्वादित्यागेन स्तुतिनामत्वानिर्वाहायान्यतः सिद्ध्यपेक्षामित्य
यद्योत्पत्तिवाक्यस्य आज्यादिपदस्याविधायकत्वं पूर्वमुक्तम् । इदा
नीमुत्पत्तिवाक्यस्यैवाज्यादिपदं विधायकमुपायत्वेन गुणवाक्य
स्यैवाज्यादिपदं विधायकमुपायत्वेन गुणवाक्यस्याज्यादिपद
स्याविधायकत्वमिति विवेकः । गुणविधित्वे ऽन्यतः सिद्ध्यपेक्षामुपपा
दयति * गुणेति * आज्यशब्देन तत्प्रकाशकमन्त्रलक्षणया ते
स्तोत्रसम्बन्धकारिवाक्यमाज्यप्रकाशकैर्मन्त्रैः स्तोत्रमित्येवं विधा
तव्यमित्यर्थः । नन्वाज्यैः स्तुवतइत्यत्राज्यशब्दलक्षितानां मन्त्रा
णां स्तुतिकरणत्वेन विध्युपपत्तेर्न वाक्यान्तरापेक्षेत्याशङ्क्याह * पृ
ति * ननु वाक्यान्तरप्राप्तस्तोत्रमन्त्रस्वरूपस्यानुवादे ऽपि मन्त्र
११ लक्षणा तुल्येत्याशङ्क्याह * अनुवादत्वे त्विति * प्रमाणान्तरप्रा

रित्वादनुवादे प्रसज्यमानापि लक्षणा न दोष इत्यर्थः । नन्वप्रकत्वे ऽपि घृतस्य सन्निधानमात्रेण स्मारकतया स्तुत्युगित्वाद्रथघोषेण माहेन्द्रस्तोत्रमुपाकरोतीतिवत्करणत्वोपनीज्यशब्देन मन्त्रलक्षणापत्तिरित्याशङ्क्याह * तेनेति * करणेन विधौ मत्वर्थलक्षणादोषो नानुवादे तेन ण्येन स्तोत्राणामाज्यलक्षितमन्त्रवत्तावदाज्यवत्ताप्यन्यत एव ग्रव्येत्यर्थः । पक्षद्वये ऽप्यन्यसापेक्षत्वमुपसंहरति * तदिति * गादित्यर्थे तदित्यव्ययम् । आज्यादिशब्दार्थानिर्णयं तर्ह्युत्पत्तिवाय कीदृशो ऽर्थ इत्यपेक्षायामाह *ततश्चेति * गुणवाक्योदाहरणमुपसंहरति * इतीति * उत्पत्तिवाक्यस्यैवाज्यादिशब्दयतो ऽर्थनिर्णयार्थं गुणवाक्योदाहरणमित्यर्थः । पवमानशब्दोरणं पूर्वन्यायसिद्धत्वेनाक्षिपति * पवमानशब्दस्त्विति * यौत्वे ऽपि पवनक्रियाकर्त्तरि निरूढत्वात् स्तोत्रस्य च पवमानाकर्तृत्वासम्भवान्न पूर्वन्यायेन सिद्धिरिति परिहरति * अत्विति * ननु पवमानशब्दवाच्यसोमप्रकाशकमन्त्रसाध्यत्वात् ऽपि पवमानशब्दप्रसिद्धेः सन्देहे सत्यस्त्येव पूर्वन्यायविषयशङ्क्याह * सोमो हीति * तत्रावयवप्रसिद्ध्यभावाल्लक्षितलयात् सा च मत्वर्थलक्षणातो दुर्बलेति सामानाधिकरण्येन नामवासिद्धेर्न पूर्वन्यायसिद्धान्त इत्यर्थः । नन्वेवं सति मत्वर्थलक्षसङ्गेनात्र गुणविधित्वनिरासासिद्धेः । केन हेतुना निरास इङ्क्य * वाक्यभेदेन वेत्युक्तम् * अनेन गुणविधौ प्रसङ्गाद्वाक्यनाभिहोदाहरणत्वं वाक्यभेदपरिहारसम्भवासम्भवाभ्यां च ह इत्यपि सूचितम् । प्रसिद्धेरिति पूर्वपक्षभाष्यं व्याचष्टे *तत्रे* प्रवृत्तिविशेषकरत्वे ऽर्थवत्त्वं हेतुः वाक्यवस्वरूपे वार्थवत्त्वे सिद्धेर्हेतुः त्रयो ऽपि वा गुणविधित्वे साक्षाद्धेतव इति व्याख्यापूर्वशब्देनातिदिष्टं विज्ञातत्वाच्च यागविधिरिति विशिष्टविधिनिलत् गुणे फलकल्पनायामित्यनेन च फले गुणविधिनिरासात् या चित्राशब्दो गुणविधिरिष्टः स कस्मिन्कर्मणीत्यपेक्षायामाह त्रेति * ननु दधिमधुपयोघृतन्धाना उदकं तण्डुलास्तत्संसृष्टं पत्यमिति प्रकृतप्राजापत्येष्टित्यागेनाग्नीषोमीये गुणविधिरसो तो ऽभिप्रेत इति कथं ज्ञायत इत्यपेक्षायां चित्रो गुणो विधीयमास्त्रीलिङ्गनिर्देशात्स्त्रीद्रव्यके यागे विधीयेत न चासौ स्त्रीपुंपशुके यागे ऽग्नीषोमीये ऽस्ति पशुकामपदोपादानात् । पशुकामकविधीयेत सो ऽपि पशुकामः कर्त्ता नाग्नीषोमीये ज्योतिष्टो-

माग्निकार्गिकर्तृके ऽग्नीत्युत्तरपक्षे निरासेन द्योतनादित्युक्तम् । प्र कृतकर्मण्यागेनाप्रकृते गुणविधिः कस्मादिष्ट इत्याशङ्क्याह * अत्रे ति * चित्रत्वस्यानैकपदोपात्तेन स्त्रीत्वेन योगो ऽवगम्यते स्त्रीत्वयो गश्च प्राणिज्ञानादेव सम्भवति तेन कारणेनैते चित्रत्वस्त्रीत्वे प्रा णिद्रव्यकस्य यागस्याङ्गमित्यर्थः । स्त्रीत्वयोगनिमित्तं चित्रत्वस प्राणियागाङ्गत्वं वक्तुं द्विवचनम् । नन्वप्राणिन्यपि खट्वादौ स्त्री प्रत्ययदर्शनान्न स्त्रीत्वस्य प्राणित्वाव्यभिचारितेत्याशङ्क्य स्वभावत इत्युक्तम् । खट्वादौ त्वविद्यमानमेव स्त्रीत्वं टाबादिप्रत्ययदर्शनेना रोप्यत इति भावः । ननु प्राणियागाङ्गत्वे ऽपि मेष्यां चित्रमात्रविध्यु पपत्तेर्नाग्नीषोमीये चित्रत्वस्त्रीत्वयोर्विधिर्युक्त इत्याशङ्क्य * प्रकृति मित्युक्तम् * प्राकृतेन कृष्णसारङ्गादिना गुणान्तरेण निराकाङ्क्षत्वाद मेष्यामनारभ्यविधिना चित्रत्वं विधातुं शक्यं प्रकृतौ त्वाकाङ्क्षावशा त्कृत्स्नमित्याशयः । कथमग्नीषोमीयस्य सर्वप्राणियागप्रकृतितेत्य शङ्क्य दैक्षस्य चेतरेष्वित्याष्टमिकन्यायं सूचयितुं यो दीक्षितो यद ग्नीषोमीयं पशुमालभेतेति दीक्षायागयुक्तवाक्यविधाननिमित्तो ऽग्नी षोमीये दैक्षशब्दः प्रयुक्तः । श्लोकं व्याचष्टे * स्त्रीत्वादिति * सर्वप्राणि यागेषु कस्मान्न विधीयतइत्याशङ्क्य तार्तीयन्यायोपन्यासः । सौत्य एकादशिनीप्रकृतित्वादेकादशिनीनां च पशुगणप्रकृतिनिमित्तत्वा त्कथं दैक्षस्य सर्वप्राणियागप्रकृतितेत्याशङ्कानिरासार्थः परमशब्दः ननग्नीषोमीयक्रमाम्नातेन कृष्णसारङ्गादिना गुणेन उत्पत्तिवाक्य शिष्टेन पुंस्त्वेन च बाधापत्तेर्नाग्नीषोमीये चित्रत्वस्त्रीत्वयोर्विधिर्युक्त इत्याशङ्क्याह * तत्रेति * कृष्णसारङ्गादेरुत्पत्तिवाक्यशिष्टत्वाभावादु त्पत्तिवाक्यशिष्टं पुंस्त्वं क्रमाम्नातं कृष्णसारङ्गादिगुणान्तरं चेति व्यवहितान्वयः कृष्णसारङ्गो ऽग्नीषोमीय इति सामानाधिकरण्यनि र्देशाभिप्रायो वोत्पत्तिशब्दः । फले विधावुद्धिदेव सोमस्य बाधो याग तु विधौ विकल्प इति पूर्ववच्छब्दार्थः । नन्वनारभ्याधीतत्वाच्चित्रत्व स्त्रीत्वयोरेव प्रकरणाविशेषात्तु विकृतौ विरोधः स्यादिति तार्त्तीयि कन्यायेन बाधः स्यादित्याशङ्क्याह * साप्तदशेति * सामिधेनी मात्रसंयोगेन श्रुतस्य साप्तदश्यस्याऽक्लृप्तक्रतुसंयोगत्वात् पाञ्चद श्येन प्रकरणक्लृप्तक्रतुसंयोगेन बाधो युक्तः चित्रत्वस्त्रीत्वयोस्तु क्र तुसंयोगेनैव श्रवणात्तद्विशेषाग्नीषोमीये सम्बन्धो यथा कृष्णसार ङ्गादेः पशुसंयोगश्रुतस्य क्रमात्तथानयोः सामर्थ्यानुगृहीतात् प्रकृतौ वेति न्यायादिति तुल्यत्वात् साप्तदश्यपूर्वपक्षे यथोभयोः सा मिधेनीसंयोगाविशेषाद्विकल्पः तथात्रापीत्याशयः । नन्वग्नीषो

ीये चित्रत्ववत् स्त्रीत्वस्याप्यप्राप्तेरनेकार्थविधानाद्वाक्यभेदः स्यादि-
ाशङ्क्याह * एकेति * परस्परासम्बद्धानेकार्थविधौ वाक्यभेद-
ापरिहार्यत्वात् विशेषणविशेष्यभावासिद्ध्यर्थम् एकपदोपादानमुक्त-
। ननु चित्रत्वस्त्रीत्वयोर्द्रव्याश्रितत्वेनान्योन्याविशेषणविशेष्य-
ायोगान्नैकपदोपादाने ऽपि न तत्प्रतीतिः सम्भवति इत्याशङ्क्यैक-
ारकेत्युक्तम् । चित्रत्वस्त्रीत्वविशिष्टमेकं तृतीयोपात्तं कारकं वि-
ीयतइति भावः । ननु चित्रत्वस्त्रीत्वयोरेकपदोपात्तत्वाद्वाक्यभे-
ानापादकत्वे ऽपि पशुकामपदोपात्तफलसम्बन्धविधानाच्चित्राप-
ोपात्तगुणसम्बन्धविधानाच्च वाक्यभेदः स्यादित्याशङ्क्याह * पशु-
ामेति * स्वतन्त्रकर्मविधौ कामिपदस्य फलपरत्वाभावे नैष्फल्या-
धानानर्थक्यापत्तेः । फलपरत्वे ऽपि फलवज्ज्योतिष्टोमाङ्गभूते
ग्नीषोमीये गुणविधौ साक्षात्फलाभावे ऽपि ज्योतिष्टोमफलेन प-
ंपरया फलवत्त्वोपपत्तेरयं पशुकामशब्दो न पशुयागफलं प्रतिपा-
यतीति शेषः । ननु अफलस्य काम्यत्वायोगात्कामशब्दोपबन्धे
साधकं तु तादर्थ्यादिति स्वर्गकामाधिकरणसिद्धान्तन्यायेन
लपरो ऽयमित्याशङ्क्यानुवाद इत्युक्तम् । पशोरिहाफलत्वेन मु-
यवृत्त्या भविष्यतीति भावः । कथं प्राप्तिरित्याशङ्क्यार्जनाङ्गत्वा-
त्युक्तम् । अनर्जितानुपात्तेन पशुना यष्टुमशक्यत्वादकाम्यस्य
ोपादानायोगादुपादानाङ्गत्वेन प्राप्ता कामनानूद्यतइत्यर्थः । ननु
ुकामशब्दात्पशोः साधनत्वाप्रतीतेः कथं तदुपादानाङ्गत्वेन काम-
प्राप्नुयादित्याशङ्क्य स्वर्गेत्युक्तं स्वर्गकामादिबहुव्रीह्यर्थस्य पुरुषस्य
वनाक्षेपलभ्यत्वात् एकादशाद्यभाष्योक्तन्यायेन स्वर्गकामादिश-
स्य लोहितोष्णीषादिवत् विशेषणपरत्वावगतेस्तदुपात्तस्य स्वर्गा-
ागं प्रति गुणत्वेनान्वयः प्राधान्येन वेति सन्दिह्य द्रव्याणां कर्म-
योगे गुणत्वेनाभिसम्बन्ध इति षष्ठाद्यस्वर्गकामाधिकरणपूर्वपक्ष-
त्रे भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यतइति न्यायात् भूतस्य
र्गपश्वादेर्द्रव्यस्य भव्यं कर्म प्रति गुणत्वेनान्वयस्य वक्ष्यमाणत्वात्
ुकामशब्दात्पशोः साधनत्वावगतिसिद्धिरित्यर्थः । नन्वेवमपि
ुकामपदोपात्तसाधनभूतपशुविधानाच्चित्रापदार्थविधानाच्च वा-
भेदः स्यादित्याशङ्कां निरस्यन्नर्जनाङ्गत्वेन कामनाप्राप्तिं विवृणोति
न हीति * पशुसाधनताग्नीषोमीयस्योत्पत्तिवाक्यादेवावगतेति
ता पशुयागशब्देनाशङ्का निरस्ता । चित्रया यजेतेति गुणविधौ
शिष्टविधिनिमित्तगौरवशङ्कानिरासार्थं भाष्यं मध्यप्रतीकेनावता-
पपादयति * यागेति * श्लोकं व्याचष्टे * यावदिति * नन्वेवं २

करणत्वाक्षिप्तस्य साध्यांशानुवादो युक्त इत्याशङ्क्योत्पत्तिवाक्ये
पे विधिबलात् करणत्वावगमो ऽस्तीति सूचयितुम् * उत्पन्नेत्यु-
म् * पूर्वोत्तरपूर्वपक्षभाष्यसन्देशेनास्यापि पूर्वपक्षभाष्यत्वाव-
ः साधारणत्वायोगात् पूर्वपक्षभाष्यमेवैतदिति स्वमतमाह *गु-
ति * भाष्योक्तस्य धातुपारार्थ्यस्य परपदसम्बन्धाविधानव्यव-
तकल्पनौत्पत्तिकगुणबाधोपलक्षणार्थत्वं सूचयितुम् * पूर्वाधि-
रणेत्युक्तम् * आज्याद्युदाहरणेषु पूर्वपक्षाभिधानार्थं तथेति
ष्यमश्रुतं भवत्यध्याहारादयुक्तमाशङ्क्याह * तथेति * अस्ति-
न्तीति परः प्रथमपुरुषे ऽप्रयुज्यमानो ऽप्यस्तीति स्मृत्यास्तिधातुर्भव-
शब्दवाच्यवर्त्तमानार्थलड्विभक्तिपरः प्रथमपुरुषे समानाधिकर-
मदस्मद्व्यत्तिरिक्तोपपदे सत्यप्रयुज्यमानो ऽप्यस्तीत्यनुशासनात्
स्तिभवत्योश्चैकार्थत्वाद्भवत्यध्याहारेण सत्तायाः स्तोत्रसमीपे क-
नं रचनं पूर्वपक्षिणो ऽभिमतामिति शेषः। नन्वेवमपि विधाय-
श्रवणाद् गुणविधित्वं न युक्तमित्याशङ्क्याह * प्रयोगेति * ननु
त्ययान्तस्य पञ्चदशादिशब्दस्य स्तोत्रीयसंख्यावाचित्वात्तत्समा-
धिकरणयोराज्यपृष्ठशब्दयोर्घृतशरीराङ्गवाचिता न युक्तेत्याशङ्क्ते
ननु चेति * कस्मान्नायं संख्यामात्रवाचीत्याशङ्क्य स्मृतिं प-
ते * स्तोम इति * कथमनया स्मृत्या संख्यामात्रवाचित्वं वा-
इत्याशङ्क्याह * न हीति * स्तुतेर्मानं स्तोम इति स्मृतेः स्तोत्री-
संख्यावाचित्वावधारणादित्याशयः। स्तुतेः साधनद्वारेण सं-
त्मकमानपरिच्छेद्यत्वात् स्तुतिसाधनपरिच्छेदिकायाः स्तुतिमा-
वेन स्तोमत्वादृचामिव घृतादेरपि रथघोषवदुपस्थापकतया स्तु-
साधनत्वोपपत्तेः उप्रत्ययाविरोध इति परिहरति * नैष दोष २०
े * स्तोत्रसाधनानामृचामिव परिच्छेदिका संख्या स्तोमशब्दवा-
ा न साधनान्तरपरिच्छेदिका इति शङ्कानिवृत्त्यर्थो मात्रशब्दः।
एवं सति स्तोमशब्दवाच्यस्तोत्रसाधनसंख्यापरिच्छेद्यत्वार्थं घृता-
नां स्तोत्रसाधनत्वं वक्तुम् आज्यवन्ति पृष्ठवन्ति बहिष्पवमानवन्ति
त्राणीति वक्तव्यं तथा च[2] मत्वर्थलक्षणाप्रसङ्गान्न लक्षणेत्ययुक्त-
त्याशङ्क्याह * न चात्रेति * एतदेव प्रश्नपूर्वकमुपपादयति
कुल इति * विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे लक्षणावाक्य-
ो आधिक्याभ्युपगमे त्वादिशब्दोक्तमानर्थक्यम्। अथ वा[3] न्यूनस्या-

१ उत्पत्तौत्युक्तमिति २ पु० पा० अयमेव मुद्रिततन्त्रवार्तिके दृश्यते।
२ वक्तव्यं तथा चेति २ पु० पा०।
३ यद्वेति २ पु० पा०।

धिकार्थविषयत्वकल्पने लक्षणावाक्यभेदौ गौणत्वाध्याहारौ
इत्यर्थः । न्यूनत्वे लक्षणावाक्यभेदौ आधिक्ये त्वानर्थक्यं अन्
त्वकल्पने विपरिणामव्यवहितकल्पना अवधारणकल्पनादोष
वा योज्यम् । अनुमिते तु विवक्षितार्थाभिधानशक्तस्यैवानुमा
कश्चिद्दोष इति भावः । द्रव्यसंख्यारूपानेकार्थविधिलक्षणावाक
दपरिहारो ऽपि लक्षणापरिहारन्यायेनैवोक्त इति सूचयितुं वा
भेदोपादानम् । ननु इहाज्याज्यैः स्तुवतइत्यादिषु श्रुतिष्वेवोत्पत्ति
क्येषु मत्वर्थलक्षणा प्रसज्येतेत्याशङ्क्याह * इह तावदिति *
मत्वर्थलक्षणापत्तेः श्रुतवाक्यगतेन विधिना सहाज्यादीनां संब
भावात् स्तोत्रप्रकरणे यत्पञ्चदशानीत्यादिगुणवाक्याम्नानं त
मिते च पञ्चदशसंख्याविशिष्टैराज्यैः स्तोत्रस्योपकर्त्तव्यमित्यादि
क्येन कृतो यः स्तोत्राज्यादिसम्बन्धस्तत्पूर्वकप्रयोगवचनेन विधि
त्यर्थः । नन्वाज्यादीनामक्रियात्मकत्वेन प्रकरणग्रहणायोगान्न त
न वाक्यानुमानं युक्तमित्याशङ्कते *तत्रेति* भवत्युपात्ताज्यादि
त्ता प्रकरणग्राह्या भविष्यतीति परिहरति * सत्त्वेवेति * ननु
वाच्यत्वमात्रेण सत्तायाः क्रियात्वे ऽपि चेतनक्रियात्वाभावेना
ष्ठेयत्वान्न प्रकरणग्राह्या भविष्यतीत्याशङ्क्याह * प्रधानेति * स
याः स्वरूपेणाननुष्ठेयत्वे ऽपि अङ्गत्वेन स्तोत्रसामीप्यावगमात्तस
सन्निधिस्थापनासाध्यत्वात्तेन रूपेणानुष्ठेयत्वं भविष्यतीत्याशयः
सर्वद्रव्यत्वादाज्यानां स्वरूपेण संख्यायोगाभावे ऽपि पञ्चद
ज्यपात्राणि समीपे निधाय स्तोतव्यं पूर्वपक्षे कर्त्तव्यं सप्तदश
ऋभुखप्राणिस्थापनेन सप्तदश पृष्ठानि समीपे निधाय स्तोतव्यं
च्छब्दवाच्यं च त्रिपुटा त्रिसिंधापरपर्यायलताद्रव्यम् पवनार्ह
कृत्वा यज्ञादौ पवमानं सदसो बहिः समीपे निधाय स्तोतव्यं
तत्वाक्यार्थानुष्ठानं सन्निधिस्थापनमात्रेणाप्यग्निवदुपकारकत्वे
तेः साधकतमत्वविवक्षया उत्पत्तिवाक्येषु अनुवादार्थतृतीयया
देशोपपत्तिरिति दर्शयितुमाह * अतश्चेति * नन्वेवं सत्युत्पत्ति
क्येष्वाज्याद्यनुवादो ऽनर्थकः स्यादित्याशङ्क्य प्रशस्तमिदं स्तोत्रं
त्क्रियमाणमाज्यादिसन्निधियुक्तं भवतीत्येवं स्तोत्रप्रशंसार्थत्वेन
वादसाफल्यं सूचयितुमाहेलीति भाष्यकृता गुणोपदेश इ
गुणोपदेशयुक्तविषयनिर्देशेनैव वाक्यभेदप्रसङ्गस्य गुणवि
रासहेतोः सूचितत्वात्प्रधानतो ऽभिसम्बन्ध इति सूत्रा
वो नामधेयत्वप्रतिज्ञार्थतया व्याख्यातः । तत्र नामधेयत्वप्रति

१ बर्हिरिति २ पु० पा० ।

ः पूर्वसूत्रोक्ताया एवानुषङ्गसम्भवात् प्रधानशब्दस्य च कर्मपर-
लक्षणाद्दोषापत्तेः कर्मसम्बन्धस्य च गुणविधावप्युपपत्तेर्नामधे-
यात् सहार्थेन च तसिप्रयोगादर्शनेनासाधुत्वापत्तेरपरितोषात्स्व-
वाक्यभेदोपपादनार्थतया अवतारणपूर्वकं व्याचष्टे *प्रधानत इति
अनेन च प्रधानद्वारानेकेषां गुणानामनेकविशेषणविधिप्रस-
समर्थेनैकेन विधिना सम्बन्धो भवति न चात्र प्रधानभूतं क-
त्वत्पक्षे विधीयतइत्येवं व्याख्यातं त्रिषयानिर्देशकगुणोपदेश-
ब्दसूचितं गुणविधिनिरासहेतुवाक्यभेदप्रसङ्गव्याख्यानार्थं गुण-
धौ हीति भाष्यमाग्नेयो ऽष्टाकपाल इत्यादौ गुणविधावपि वाक्य-
दाभावादयुक्तमाशङ्क्य कर्मानुवादविषयत्वेन व्याचष्टे * अत्र पु-
रेति * पुंपशाविति भाष्येणोत्पत्तिशिष्टपुंस्त्वावरुद्धे ऽग्नीषोमीये
त्वं विधातुमशक्यमिति अभिधानपूर्वकं चित्रत्वस्त्रीत्वगुणपशुफ-
रूपानेकार्थविधानाद्वाक्यभेदो विवृतः । तत्रोत्पत्तिशिष्टगुणावरुद्धे
द्विरोधित्वगुणान्तरविध्यसम्भवो वैश्वदेवाधिकरणे व्युत्पादयि-
माणो ऽत्र हेत्वन्तरसमुच्चयार्थमुक्तो वाक्यभेदप्रसङ्ग एव त्वत्र
गोपदेशशब्दोक्तः प्रधानहेतुरित्यभ्यर्हितं पूर्वं निपततीतिन्यायेन सू-
नार्थं प्रथमं वाक्यभेदमुपपादयितुं चित्रत्वस्त्रीत्वविशिष्टैककारक-
धानादवाक्यभेदाभिप्रायं पूर्वोपन्यस्तं निरस्यति * न चेति *
वित्कारकस्य द्रव्यस्यापि चोत्पत्तिवाक्यादेव प्राप्तत्वाच्चित्रत्व-
त्वमात्रमत्र विधेयं तयोश्च परस्पराविशेषणविशेष्यत्वाभावेनैक-
शिष्टेतरविध्ययोगादपरिहार्यो वाक्यभेद इत्याशयः । शङ्कासम्मत्यैत-
। द्रढयति * आह चेति * ननु चित्रया कुर्यादिति सकृदु-
रितस्य प्रत्ययस्यानेकार्थप्रतिपादकेनाप्येकेन चित्रापदेनान्वयोप-
तेन प्रत्ययोच्चारणावृत्त्यापत्तिरित्याशङ्क्याह * एकेति * अथापि
तन्त्रत्वं तथापि तदनेकतेति ग्रहाधिकरणवार्त्तिकोक्तन्यायेन स-
दुच्चारितस्यापि प्रत्ययस्यैकपदोपात्तानेकार्थविधिशक्तत्वे ऽप्येकैनैवं
पारेणानेकविध्यशक्तेर्व्यापारभेदकल्पनावश्यम्भाविनीत्यर्थः । श-
शब्देन व्यापारो विवक्षितः पुंपशाविति भाष्यावयवोक्तोत्पत्ति-
ष्टगुणावरुद्धे कर्मणि तद्विरुद्धगुणान्तरविध्यसम्भवं हेत्वन्तरस-
च्चयार्थत्वेनेदानीं व्याचष्टे * उत्पत्तीति * विधातुमिति शेषः
उत्पत्तिशिष्टैकहायन्यवरुद्धे ऽपि क्रये हिरण्यादीनां विधिदर्शनात्
प्रमशक्यतेत्याशङ्क्य * तद्विरोधीत्युक्तम् * विक्रेतानतिजन- २९
कहायन्याः क्रयसाधनत्वादानत्यतिरेकार्थे द्रव्यान्तरसमुच्चयो-

१ एवेति २ पु० ना० ।

पपत्तेरविरोध इत्याशयः । ननु विरोधे ऽप्युत्पत्तिशिष्टगुणबाधे
विकल्पेन वा गुणान्तरनिवेशो भविष्यतीत्यत आह * यत्रेति
विशिष्टविधौ शुद्धस्याविहितत्वेनाप्राप्तेरनुवादायोगाद्विशिष्टमेव
र्मानुवादितव्यं तस्य च समुच्चये ध्यानतिवदतिरेकाभावादेकेनैव
शेनाकाङ्क्षानिवृत्तेर्न गुणान्तरसम्बधोपपत्तिरित्यर्थः । यत्तु विशेषण
विशेष्यविधिपूर्वकत्वाद्विशिष्टविधेर्विशेषणवद्विशेष्यस्वरूपस्याप्यर्थ
पत्तिप्रसूतेन विधिना विहितत्वेन प्राप्तिसम्भवाद्विशिष्टविहितस्या
कर्मणः स्वरूपमात्रं निष्कृष्य गुणान्तरविधानमुद्भिदधिकरणापूर्वप
ऽभिहितं तन्निरस्यति * न चेति * एतदेव प्रश्नपूर्वकमुपपादया
* कुत इति * शुद्धस्य कर्मणो ऽननुष्ठेयत्वेन विधातुमशक्यत्व
च्छ्रुतेष्वपि गुणविधिषु स्वातन्त्र्येण गुणविधानस्याघाराग्निहोत्र
धिकरणे वार्त्तिककृता निराकरिष्यमाणत्वेनार्थापत्तिप्रसूतेषु स्वात
न्त्र्यस्य दूरनिरस्तत्वात्तद्दृष्टान्तत्वेन विशेष्यस्वरूपस्य स्वातन्त्र्य
विधानाशङ्कानुपपत्तेरार्थैरपि विधिभिर्विशिष्टावयवत्वेनैव विशे
णविशेष्यांशानां विधानाच्छुद्धस्य कर्मणो प्राप्तेर्न निष्कृष्यानुवा
युक्तः । एवं सत्यपि यदि स्ववाक्यस्थगुणसम्बन्धवेलायामेव व
क्यान्तरगतानामपि गुणानां क्रियासम्बन्धः स्यात्ततो विशेषाग्रहण
त् सर्वेषां तुल्यबलत्वं स्यात्तेषां तु पूर्वपश्चाद्भावात्स्ववाक्यस्थगु
निराकाङ्क्षायां क्रियायां वाक्यान्तरगतगुणविधानानुपपत्तिरित्याश
यः । ननूत्पत्त्युत्पन्नशिष्टयोः क्रियासम्बन्धपूर्वपश्चाद्भावनिमित्ते
लाबलविशेषे सत्युत्पन्नशिष्टानामपि व्रीह्यादीनां भिन्नवाक्यगतत्वे
युगपत् क्रियासम्बन्धायोगात्पौर्वापर्यनिमित्तं बलाबलं स्यादित्य
शङ्क्याह * यानीति * उत्पत्तिवाक्यापेक्षत्वेनोत्पन्नवाक्यानां तत्
दौर्बल्यं न पौर्वापर्यमात्रकृतमित्याशयः । चित्रत्वविधौ स्त्रीत्वविध्य
सम्भवं वाक्यभेदप्रसङ्गेनोत्पत्तिशिष्टपुंस्त्वविरोधाच्च पुंपशावि
भाष्यावयवोक्तमुपपाद्य पशवः फलमिति भाष्यावयवोक्तं वाक्यभे
दापत्तेरेव फलविध्यसम्भवमुपपादयति * पशुकामेति * न
फलस्याविधेयत्वात्कथं वाक्यभेदो ऽत आह * यद्यपि चेति * न के
वलमनेकार्थविधिलक्षणो वाक्यभेदः किं तु वैरूप्यमपीत्याह * अ
चेति * ननु स्त्रीपशुद्रव्यके मैत्रीयागे चित्रत्वमात्रविधानादुपादान
ङ्गत्वप्राप्तपशुकामानुवादाच्च गुणविधावपि न वाक्यभेद इत्याश
ङ्कानिरासार्थं चित्रो गुणो विधीयमानो वाक्यभेदपरिहाराय स्त्री
यत्र यागे द्रव्यं तत्र विधीयते तत्र च स्त्रीद्रव्यके ऽपि मैत्रीया
प्राकृतकृष्णसारङ्गादिगुणनिराकाङ्क्षे ऽनारभ्याधीतस्य चित्रत्वस

ातुमशक्यत्वादग्नीषोमीयसर्वपशुयागपरमप्रकृतिभूते गुणाका-
ृष्णसारङ्गादिगुणान्तरेण सह पूर्वोपपादिततुल्यकल्पत्वाद्विक-
मानो विधीयते। न चासौ स्त्रीपुंपशुद्रव्यके ऽग्नीषोमीये ऽस्तीति
वाविधानापत्तेरपरिहार्यो वाक्यभेदः पशुकामश्च यत्र कर्त्ता
विधीयेत तत्र च षष्ठाद्यसिद्धान्तन्यायेन पशुकामशब्दस्य फलप-
तावधारितस्योपादानाङ्गत्वप्राप्तपशुकामानुवादकत्वायोगात् फ-
न पशून् कामयमानः पशुकामशब्देन वाच्यः। सो ऽपि प-
ामा नाग्नीषोमीये ऽस्तीति तन्निमित्तो ऽपि वाक्यभेदो ऽपरिहा
ते भाष्यकृतोक्तम्। तत्र मेधीयागाङ्गत्वाशङ्कानिरासस्य स्पष्टत्वा-
याज्र्जनाङ्गत्वप्राप्तानुवादाशङ्कानिरासं व्याचष्टे * न चेति *
व प्रश्नपूर्वकमुपपादयति * कथमिति * नन्विच्छां विना कर-
कर्त्तव्यत्वयोः कथं प्रवृत्तिरित्याशङ्क्याह * तत्साधनेति *
येनार्थनमिच्छा कामना नेच्छामात्रं पुरुषार्थसाधने तदङ्गे चेदं
वेदिति एवं प्राधान्येनानर्थं विनापि प्रार्थितसिद्ध्येच्छया प्र-
रेत्यर्थः। एतदेव व्याचष्टे * न हीति * ननु करणोपकारा-
ुरुषार्थे ऽपि काम्यत्वव्यपदेशो ऽस्तीत्याशङ्क्याह * गौणी वे-
यथाकाम्यसिद्ध्यर्थं प्रवर्त्तते तथा करणोपकारसिद्धये ऽपीति
र्यात्काम्यत्वोपचारस्तत्रेत्यर्थः। नन्वेवं सति काम्यमान-
ार्थत्वेन गुणवृत्त्या वा साधनस्यापि काम्यत्वोपपत्तेर्न कामश-
न्धात् फलत्वावगतिः सम्भवतीत्याशङ्क्याह * अत इति *
पेक्षस्य गौणस्य वा काम्यत्वस्य प्रमाणान्तरानुसारेण कल्प्य-
दे च तदभावान्नात्र तत्कल्पना युक्तेत्याशयः। तदेव कामशब्दो-
ात्प्रतीमः। तच्च फलमिति योज्यं यदि च कामशब्दोपबन्धा-
नश्वादेः फलत्वं न प्रतीयते ततो निष्फलस्य कर्मणो न कश्चि-
को ऽनुष्ठाता स्यात् फलार्थत्वात्कर्मणि प्रवृत्तेरिति युक्त्यन्तरं
ाक्यमित्याशयेन स्वर्गकामाधिकरणसिद्धान्तसूत्रं पठति * वि-
चैतदिति * कामशब्दोपबन्धस्य फलत्वाप्रतिपादकत्वे क-
साधकशून्यं स्यात् फलार्थत्वात् प्रवृत्तेरिति सूत्रार्थः। नन्वेक-
ा ऽन्ये क्रतवः कामायाह्रियन्ते सर्वेभ्यो ज्योतिष्टोम इति ज्यो-
मद्वारा सार्वकाम्यप्राप्तपशुफलत्वानुवादस्तर्हि भविष्यतीत्या-
ाह * फलं चेति * औपचारिकानुवादस्यानर्थक्यापत्तेरस-
विशेषणत्वं तु वाक्यभेदापत्त्यैव सार्वकाम्यप्राप्तज्योतिष्टोमवि-
त्वे वाक्यभेद इत्युद्भिदधिकरणवार्त्तिकोक्तन्यायान्निरस्तमित्या-
। प्राजापत्येष्टिप्रकरणबाधापत्तेरप्यग्नीषोमीये गुणविधिर्न युक्त

इत्याह * प्रकरणं चेति * ननु चित्राशब्दस्य गुणे निरूढत्वेनो
दादिशब्दवत्कर्मण्यवयवद्वारेण प्रसिद्ध्यभावात्संज्ञासंज्ञिसम्बन्ध
वादानुपपत्तेर्नामधेयत्वपक्षे ऽपि प्राजापत्येष्टेः फलं पशवः सा च
त्रासंशकेतिकर्मफलसम्बन्धसंज्ञासंज्ञिसम्बन्धरूपानेकार्थविधाना
क्यभेदः स्यादित्याशङ्क्याह * नामधेयत्वे त्विति *
ध्यादिचित्रद्रव्यकत्वात् स्त्रीप्रत्ययान्तेनेष्टिशब्दवाच्यत्वाच्च क
णि स्त्रीलिङ्गचित्राशब्दप्रसिद्धेरनुवादोपपत्तिरिति भावः । आज
ष्वुदाहरणेषु द्रव्यसंख्यासम्बन्धस्तोत्रद्रव्यसम्बन्धरूपानेकार्थवि
लक्षणावाक्यभेदाभिधानार्थं तथेति भाष्यं तात्पर्यतो व्याचष्टे
पञ्चदशानीति * द्रव्यानुवादाभावे ऽपि भाष्योक्तं यदि कश्चित
ख्यानुवादेन द्रव्यविधानमाशङ्केत तन्निरासार्थं द्रव्यसंख्ययोरि
त्त्कम् । ननु स्तोत्रेष्वप्राप्तावपि कर्मान्तरे ऽप्युपसदादिषु आज्य
३।१ प्राप्तेस्तदनुवादेन संख्याविधिर्भविष्यतीत्याशङ्क्याह * कर्मान्तर
चेति * स्तोत्रप्रकरणे कर्मान्तरस्याबुद्धिस्थत्वादित्याशयः । न च
व्यस्वरूपानुवादेन संख्याविधिर्युक्तः । तथा सति द्रव्याङ्गत्वापत्तेर
र्माङ्गत्वप्रसङ्गेनानर्थक्यापातादित्याह * तदनुवादेन चेति * द्रो
न्तरमाह * प्रकरणेति * एवं तर्हि संख्याविशिष्टं द्रव्यमेव प्रकर
न स्तोत्राङ्गत्वासिद्ध्यर्थं विधीयतामत आह * न चेति * अ
चाथ कस्माद्व पञ्चदशसंख्याविशिष्टान्याज्यानीत्यादिभाष्ये द्वा
तावर्थौ एकस्य वाक्यस्याशक्यावित्यस्यानन्तरं द्रष्टव्यमित्यपक्र
व्याख्येयत्वस्य वक्ष्यमाणत्वात्कथं व्याख्येयमित्यपेक्षायामिति क
ख्यातं द्रव्यसंख्ययोः प्रधानभूतैकक्रियावशीकारं विशेषणवि
ष्यत्वाप्रतीतेः संख्याविशिष्टद्रव्यविध्यसम्भवहेतोः भाष्यव्याख
येव विवरिष्यमाणत्वात् भाष्यसूचितानि हेत्वन्तराणि वक्तुं
ख्याविशिष्टद्रव्यविधौ द्रव्यविशेषणत्वेन संख्यायाः कर्माङ्गत्व
भावादनुपादाने ऽपि कर्मवैगुण्याभावेनानादरं तत्रैकत्वमयु
ङ्गभूतमर्थस्य गुणभूतत्वादिति चतुर्थाधिकरणपूर्वपक्षसूत्रो
तावदाह * इतीति * तच्छब्देन द्रव्याणि त्वविशेषेणान
क्यात् प्रतीयेरन्निति पूर्वाधिकरणसूत्रोपात्तद्रव्यपरामर्शो
कत्वग्रहणस्य चोपादेयगतसंख्यामात्रोपलक्षणार्थत्वाद्यज्ञशब्दस्य
क्रियामात्रोपलक्षणार्थत्वात् तत्र द्रव्ये यत्पशुमालभेतेत्येकत्वमन
वाहौ युनक्तीति वा द्वित्वं कपिञ्जलानालभेतेति वा बहुत्वं तदा
याङ्गमुपश्लेषलक्षणया श्रुत्या प्रातिपदिकार्थं प्रति गुणभूतत्वादि
सूत्रार्थः । द्रव्यविशिष्टस्य विधेयत्वसम्भवे ऽप्यक्रियाङ्गत्वापत्ते

ष्टद्रव्याविध्यसम्भव उक्तः। परमार्थतस्त्वक्रियाविशेषणस्य-
येयत्वमेव न सम्भवतीत्याह * न चेति * कथं तर्हि पश्वेक-
देर्विधेयत्वं क्रियाङ्गत्वं वेत्याशङ्क्य तत्र विधेयत्वाक्रियोपादानात्
यायाश्चैकप्रत्ययोपादानलक्षणया श्रुत्यैकपदोपादानलक्षणश्रुतिग-
ातिपदिकार्थाङ्गबाधेन कारकाङ्गत्वावगतेस्तद्द्वारेण क्रियाङ्ग-
श्रसायात् क्रियाङ्गत्वेन विधेयत्वं पश्वेकत्वाधिकरणसिद्धान्ते च-
ाणं सम्भवति इह तु क्रियानुपादानाच्चतुर्थाधिकरणसिद्धा-
ायासम्भव इति वैलक्षण्यं वक्तुमाह * न चेति * क्रियानु-
नादेवाक्रियात्मकत्वेन स्तोत्रप्रकरणग्राह्यत्वायोगात् तदङ्गत्वा-
त्तरानर्थक्यापातादपि विशिष्टद्रव्याविध्यसम्भव इत्याह * न
मिति * अक्रियात्मकस्य प्रकरणाग्राह्यत्वे वृद्धसम्मतिमाह
ाह चेति * नन्वास्तिर्भवन्तीपर इति स्मृतिकल्पितभवतिवा-
त्ता द्रव्यक्रियाद्वारा द्रव्यसंख्ययोः प्रकरणेन ग्रहणं भ-
तीत्याशङ्क्याह * न चेति * द्रव्यसंख्ययोर्भवतिक्रियाङ्ग-
ाति तद्द्वारा प्रकरणेन ग्रहणं स्यात् न तु द्रव्यसंख्ययोः
तां प्रत्यङ्गत्वं सम्भवतीत्यर्थः। असम्भवे हेतुमाह * सर्वो हि-
* क्रियासिद्धौ व्याप्रियमाणं कारकं क्रियाङ्गं भवति सत्तासि-
लायां चालब्धात्मकत्वान्न व्यापारः सम्भवति इत्याशयः। न-
याख्याद्यभावविकारेण लब्धात्मकस्य सत्ताख्याद्वितीयभावावि-
सिद्धौ व्यापारः सम्भविष्यतीत्याशङ्क्याह * सत्तायास्त्व-
उत्पत्तुमारभमाणस्यापि कुतश्चित्कारणात्सत्तासिद्ध्यभावे सि-
त्रट इत्यात्मलाभव्यवहारासम्भवात् सत्तातः प्रागलब्धात्मक-
तद्व्यापारः सम्भवतीत्याशयः। वस्त्वात्मलाभमात्रस्य सत्तातो
ात् समाप्तेस्तस्या न वस्तुना साध्यत्वमिति योज्यम्। आद्यभाववि-
ापक्रान्तस्यात्मलाभस्य द्वितीयेन पर्यवसानमित्यपवर्गशब्देनो-
दि च पञ्चदशसंख्यैराज्यैः स्वसत्तां भावयेदिति वाक्यार्थः
तो ऽन्यसाध्यानपेक्षणेन स्तोत्रोपकारस्य साध्यत्वेनासम्बन्धात्
त्राङ्गत्वं स्यादित्याह * तद्व्यतिरिक्तेति * ननु रथन्तरं भव-
दौ भवतिक्रियाद्वारेण प्रधानक्रियाङ्गत्वदर्शनादिहापि तथा
त्याशङ्क्याह * यत्त्विति * बृहद्वा रथन्तरं वा पृष्ठं भवतीति वचनं-
ाख्यस्तोत्रसाधनतया विकल्पेन विहितयोर्बृहद्रथन्तरयोर्विकृ-
तदेशप्राप्तायां वैकल्पिकायां सत्तायां रथन्तरसत्तानियमार्थमि-
त्यम्। तत्र चातिदेशप्राप्तस्य पृष्ठाख्यस्तोत्ररूपावान्तरक्रियास-
धस्य प्रज्ञानाद्युक्तं विकृतिप्रकरणग्रहणमित्यर्थः। लोकसि-

अन्वेन चाज्यादिसत्ताया विधेयत्वायोगात् न तद्द्वाराज्यादीनां स्तोत्रप्रकरणग्रहणं युक्तमित्याह * नचेति * नन्वाज्यादिसत्तायाः स्वरूपतः सिद्धावपि स्तोत्रसामीप्यासिद्धेस्तेन रूपेण विधेयत्वं भविष्यतीत्याशङ्कते * स्तुतीति * स्तोत्रसान्निध्यरूपेणासिद्धावपि सत्तायाः पुंव्यापारत्वाभावेनानुष्ठेयत्वाभावाद्विधेयत्वं न सम्भवतीत्याशङ्कानिरासायानुष्ठानार्हस्थापनोपन्यासः । कथमश्रुतोपस्थापनप्रतीतिरित्याशङ्काप्राप्तत्वेनाज्यादिसत्ताया विधेयत्वप्रतीतेर्विधेश्च विधेयस्वभावनैकगोचरत्वेन विधेश्च भावनाक्षेपकत्वाद्भावनायाश्चानुष्ठेयधात्वर्थावच्छेदं विनात्मलाभाभावादवच्छेदकधात्वर्थविशेषापेक्षायां योग्यतया स्थापनावगतिं सूचयितुं भावनाग्रहणं विधेरश्रुतत्वात् सत्तायाश्चाननुष्ठेयत्वेन विधानानर्हत्वात् अश्रुतविधिकल्पनानुपपत्तेर्न तावाद्विध्यन्यथानुपपत्त्या भावनाक्षेपस्तदवच्छेदकस्थापनाख्यधात्वर्थविशेषाक्षेपो वा युक्तः । अविधेयत्वेन चाङ्गत्वायोगात् न स्तोत्राङ्गत्वकल्पिततत्सामीप्यसम्पादनायापि सन्निधिस्थापनाक्षेपो युक्तः सामीप्यसम्पादनरूपेण विधेयत्वादङ्गत्वम् अङ्गत्वं विना सामीप्यासिद्धेरितरेतराश्रयत्वं स्यादित्यभिप्रेत्य निराकरोति * नेति * अनेनस्तु सन्निधिस्थापनस्य विधानं प्रकरणग्रहणं च युक्तमिति पूर्वपक्षोक्तदृष्टान्तवैषम्यमाह * अग्निमिति * अथ त्विति भाष्यमपि चैत्यनेनापि पूर्वपक्षस्यैव निरासान्मध्ये सिद्धान्तसमर्थनस्यासङ्गतत्वादयुक्तमाशङ्क्याग्नेयो ऽष्टाकपालो भवतीत्यादिवदिहाप्यावश्यककार्यं भवति वाच्यभावनाख्यप्रयोज्यव्यापाराक्षिप्तभावनाख्यप्रयोजकव्यापारविध्यन्यथानुपपत्त्या पञ्चदशसंख्यैराज्यैः स्तोत्रोपकारं भावयेदिति विनियोजकवाक्यकल्पनयाज्यानां स्तोत्रसम्बन्धसिद्धेः श्रुतस्य संख्यासम्बन्धमात्रविधानान्न वाक्यभेद इति वाक्यभेदपरिहाराशङ्कानिरासार्थत्वेन व्याख्यातुमाह * सिद्धान्तेन चेति * गुणविधिकल्पनायामपि न लक्षणेति पूर्वपक्षिणोक्तं तन्निरासार्थमपि चेति भाष्यमुदाहृतवाक्ये स्तोत्राज्यसामानाधिकरण्यानुपादानादयुक्तमाशङ्क्योत्पत्तिवाक्याभिप्रायेण व्याचष्टे * यदि त्विति * अनेन च यदि वाक्यभेदपरिहारायोत्पत्तिवाक्यविहिताज्यानुवादेन पञ्चदशत्वं गुणो विधीयते ततः सामानाधिकरण्यसिद्ध्यर्थमाज्यशब्देन मत्वर्थलक्षणया विहितेष्वाज्येषु गुणविध्यापत्तेर्लक्षणैव दोष इत्येवं भाष्यं व्याख्यातम् । उत्पत्तिवाक्ये तृतीयानिर्दिष्टानामप्याज्यानां गुणविधौ करणत्वाविवक्षासूचनार्थो भाष्ये प्रथमानिर्देशः संसर्गित्वेनाज्यानाम् अनेकेषामप्येकत्र मेलने सत्येकत्वापत्तेः पृथ-

विशिपञ्चदशत्वयोगासम्भवात्पञ्चदशाज्यपात्राणीत्याज्यभेदा-
काज्याधारभूतपात्रलक्षणापि गुणवाक्ये स्यादित्याह * संसर्गे-
पलादिपरिमाणभेदे ऽपि पात्रभेदं विनाज्ये भेदबुद्ध्यनुपपत्तेः
देपरिमाणावच्छेदकपात्रभेदोपलक्षणार्थं पलादिग्रहणम् अतः
ामधेयानीति भाष्यं गुणवाक्यगतानामप्याज्यादिशब्दानां गु-
धित्वे वाक्यभेदापत्तेरुत्पत्तिवाक्यगतानां नामधेयत्वस्यासम्भ-
पत्तेरयुक्तमाशङ्कोपपादयितुमाह * तेनेति * गुणवाक्यस्य-
स्योत्पत्तिवाक्यावगतार्थाधीनत्वेन गुणवाक्ये गुणविधिनाम-
ाचारानुपयोगात् उत्पत्तिवाक्यगतानामेवाज्यादिशब्दानां ना-
त्वसिद्ध्यर्थं गुणवाक्ये गुणविधित्वे वाक्यभेदापादनात् ना-
क्तेत्याशयः। यत्त्विति भाष्येण न चैते कर्मणि प्रसिद्धा
पूर्वपक्षोक्तं प्रसिद्ध्यभावात्कर्मनामत्वासम्भवमनुभाष्यावयव-
सेत्यादिनावयवोपयोगेन प्रसिद्धिमुपपाद्य तस्मादित्यनेनोप-
: कृतः सो ऽतः कर्मनामधेयानीत्यनेन पुनरुक्त इत्याशङ्क्य सर्व-
ङ्कलनार्थत्वादपौनरुक्त्यं सूचयितुमाह * गुणवाक्येति * २०४।
रति भाष्योक्तसामानाधिकरण्यलक्षणहेतुसङ्कलनार्थं समभि-
ोन चेत्युक्तम्। अस्यान्वयहेतुत्वसूचनार्थश्चकारः आज्यार्थं-
ाठित्वा व्याचष्टे * यदाजिमिति * प्रजापतिर्देवेभ्य आत्मानं
त्वा प्रायच्छत्ते ऽन्योन्यस्मा अग्रायणातिष्ठन्त तानब्रवीदाजि-
वेतेति आजिमायन्निति अर्थवादोपक्रमव्याख्यानव्याख्यानरूप-
ानार्थमस्मिन् यज्ञे काष्ठां गच्छतेति प्रजापतिवचनादेतानि
णि काष्ठां कृत्वा यस्मादाजिगता देवास्तस्मादाज्यार्हत्वादेषा-
वमित्यर्थवादार्थः। स्पर्शनवचनात्पृष्ठानीति पृष्ठशब्दव्युत्पत्ति-
इनार्थं भाष्यं स्पर्शननिमित्तपृष्ठशब्दप्रतिपादनपरार्थवादाश्र-
ुक्तमाशङ्क्योपपादयितुमाह * तथेति * पृष्ठानि वा अस्तृ-
इत्युक्ते कथमसृज्यन्तेत्यपेक्षायामापो वा ऋत्विजमालभन्ता-
ुः पृष्ठे व्यवर्त्तत इत्यात्तवयुक्तानामपां पृष्ठे वायोर्विवर्त्तन-
ाामिव स्त्रियां पुंसो ऽभिधीयमानं मैथुनात्मकं स्पर्शनमेव
स्तोत्रसाधनत्वनिमित्तपृष्ठशब्दवाच्यं रथन्तरादिसृष्टिहेतु-
भवतीत्याशयः। विवर्त्तनशब्दस्य मैथुनाख्यस्पर्शवा-
द्योतयितुं पृष्ठइत्युक्तं स्पर्शनवचनस्य कैमर्थ्यापेक्षायां पू-
ः पृष्ठसृष्टेर्हेत्वाकाङ्क्षापूरणार्थत्वेनापेक्षिताभिधानसिद्ध्यर्थं पृ-
हेत्वभिधानार्थत्वावगमादुत्पाद्योत्पादकभावाभिधानस्य च
क्षायां पशवो वै बृहद्रथन्तरे इत्युपक्रम्याभिधा-

नेन रथन्तरादिषु पृष्ठशब्दव्युत्पत्तिनिमित्तप्रतिपादनाः
गमाद्रथन्तरादीनीत्युक्तम् । अनेन च स्पृशेर्धातोरौः
थक्प्रत्यये कृते तिथपृष्ठगूथप्रोथा इति सूत्रेण सकारलोपे ि
व्रश्चादिसूत्रेण च शकारस्य षकारादेशे कृते ष्टुत्वे च कृते पृ
व्युत्पत्तिरुक्ता भवति न न्वापो वा ऋत्वियमार्च्छन्नित्युपक्रः
वसुवामं समभवत् तन्मित्रावरुणौ पर्यपश्यतां तावब्रूतां वाः
इदं देवेष्वाजनीति तस्माद्वामदेव्यमित्यनन्तरं वामदेव्यशब्दप्र
मित्ताभिधानाद्वामदेव्यादिष्वेव पृष्ठशब्दप्रवृत्तिनिमित्ताभिधा
स्यावसीयते न रथन्तरबृहद्वैरूपवैराजशाक्वररैवतेष्वित्याः
* तत्प्रकृतित्वाच्चेति * अयमाशयः पृष्ठैः स्तुवतइत्युत्पत्तिवाः
असामानाधिकरण्यात् पृष्ठशब्दस्य स्तोत्रमेव वाच्यं न रथन्तरा
थन्तरं पृष्ठं भवतीत्यादौ पृष्ठशब्दस्य साधनलक्षणार्थत्वात्साः
करणयं रथन्तरं पृष्ठाख्यस्तोत्रस्य साधनं भवतीत्यर्थः । पृ
ष्ठतइत्यादौ तु रथन्तरादिषु पृष्ठशब्दप्रसिद्धिसिद्ध्यर्थमनेनार्थः
प्रवृत्तिनिमित्ताभिधानम् । पशवो वै बृहद्रथन्तरम् इत्युपक्र
प्रतीयते वामदेव्यनौधसश्यैतेषु ज्योतिष्टोमे पृष्ठशब्दाभावात्व
न्यसृज्यन्तेति बहुवचनमित्यपेक्षायां पृष्ठशब्दवाच्यरथन्तरा
त्वेन तेषामौपचारिकपृष्ठत्वप्रदर्शनार्थस्य पिता वै वामदे
पृष्ठानीति अर्थवादस्य तत्पृष्ठेषु न्यदधुरिति अस्य चावसरः
ततो वामदेव्यमित्याद्युक्तम् इति पृष्ठैः स्तुवतइत्येतत्तु बहुवच
भूत उपदधातीतिवत् लिङ्गसमवायादिति सप्तमे वक्ष्यते
विश्वजित्सर्वपृष्ठो भवतीति उदाहृत्य किमयं पृष्ठशब्दो ऽ
न वेति विचारयितुं ज्योतिष्टोमिकपृष्ठविषयो ऽयं पृष्ठशब्द
कपृष्ठविषयो वेति सन्दिग्धे विश्वजितो ज्योतिष्टोमपूर्वकः
च पृष्ठैः स्तुवतइति सप्तदशानि पृष्ठानि इति बहुवचनवः
न्द्रादिषु चतुर्षु स्तोत्रेषु पृष्ठशब्दवाच्यत्वावगतेः । पृष्ठबहु
वादतिदेशप्राप्तज्योतिष्टोमिकपृष्ठानुवादत्वान्नातिदेशार्थो ऽ
ब्द इति विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वात् ज्योतिष्टोमिकाः
स्ति च पृष्ठशब्द इतिसूत्रेण पूर्वपक्षयित्वा बृहद्वा रथन्तरं व
वतीत्येकस्यैव पृष्ठस्य ज्योतिष्टोमे विकल्पेन विधानात् पृष्ठ
वेन सर्वशब्दायोगात् षाडहिकानामेव रथन्तरबृहद्वैरूपवैः
रैवतानां षण्णां पृष्ठानामतिदेशार्थः पृष्ठशब्द इति षडहाः
चोदनेनेति सूत्रेण सिद्धान्तयिष्यते।ननु ज्योतिष्टोमे पृष्ठबहु

१ नकाररहितः पाठमिति पा० २ पु० दृश्यते ।

हुवचनानुपपत्तिः स्यात् इत्याशङ्कानिरासार्थोत्पन्नाधिकारो ज्योतिष्टोम तेसूत्रेण माहेन्द्रस्तोत्रस्यैव बृहद्वा रथन्तरं वा पृष्ठं भवतीति वाक्ये-ज्योतिष्टोमे पृष्ठत्वावधारणात् वामदेव्यनौधसश्यैतानां पृष्ठत्वा-ावादुत्पन्नानि चान्यतः पृष्ठत्वेनावगतानि स्तोत्राण्यधिकृत्य पृष्ठ-द्प्रयोगात् प्रमाणान्तरापेक्षत्वेन लिङ्गसंमवायात् पुरोडाशानल-र्विल्यादिबहुवचनोपपत्तिरित्युक्तम् । ननु पृष्ठैः स्तुवतइति पृष्ठ-ब्दस्य स्तोत्रनामत्वे रथन्तरादिविषयपृष्ठशब्दप्रसिद्ध्यर्थो ऽयमर्थवा-ऽनर्थकः स्यात् । न च पृष्ठैरुपातिष्ठतइत्येतद्वाक्यगतरथन्तरादिवि-षपृष्ठशब्दप्रसिद्ध्यर्थो ऽयमर्थवादो युक्तस्तस्याभित्वेत्याद्यृग्वाचित्वस्य ष्टमे वक्ष्यमाणत्वात् तत्र ह्ययं पृष्ठशब्दो हिङ्कारादिपृष्ठधर्मातिदे-र्थो न वेति विचारयितुङ्किमयं स्तोत्रवाची ऋग्वाची वेति सन्दि-चित्राधिकरणे स्तोत्रक्रियावाचित्वेन स्थितस्य पृष्ठशब्दस्येहानेका-दोषप्रसङ्गाद्दकृद्रव्यवाचित्वकल्पनानुपपत्तेर्मुख्यानां च पृष्ठानाम् अ-त्र क्रियावाक्ये विनियुक्तानामिह विनियोगात् मासमग्नि-त्रं जुहोतीतिवर्द्धमातिदेशार्थतेति कर्मणि पृष्ठशब्दः स्यात्तथाभू-ापदेशादिति सूत्रेण पूर्वपाक्षिते ऽभिधानोपदेशाद्वा विप्रतिषेधा-द्रव्येषु पृष्ठशब्दः स्यादिति सूत्रेणाभित्वा शूरेत्याद्यानामृचामयं पृष्ठ-ब्दो वाचक इति सिद्धान्तयिष्यते उपान्मन्त्रकरणइति उपपूर्वस्था-ष्ठतेर्मन्त्रकरणे ऽर्थे वर्त्तमानादात्मनेपदस्मृतेः समीपस्थाने च म-त्रस्य करणत्वायोगादभिधानार्थोपस्थानवाचित्वं धातोः कल्पयि-ोपस्थानकार्यमभिधानं कुर्वतो मन्त्रस्योपस्थाने ऽपि यागस्य कार्यफ-प्रति ग्रहणायोग्यत्वं कुर्वतां यजमानसंस्काराणां याग इव कर-णत्वोपपत्तेरभिधानार्थमग्निसमीपे तिष्ठेदित्याख्यातपदार्थावगमा-समभिव्याहृतस्य पृष्ठशब्दस्य स्तोत्रक्रियावाचित्वे सत्यात्मनेपद-प्रतिषेधापत्तेस्तत्परिहारार्थं पृष्ठाख्यस्तोत्रसाधनत्वेनान्यत्र विनियु-ासु ऋक्षु लक्षणया प्रवृत्त्युपपत्तेः ।

कुशा दर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः ।
न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः ॥

इतिस्मृतेश्च मन्त्राणां विनियुक्तविनियोगाविरोधात् ऋग्वा-च्ययं पृष्ठशब्द इति सूत्रार्थः । अतो ऽर्थवादाद्रथन्तरादीनां पृष्ठत्वं त्प्रकृतित्वाद्वामदेव्यादीनामित्ययुक्तम् । उच्यते रथन्तरादिगीति-विशिष्टानामेव ऋचां पृष्ठसाधनतया पृष्ठशब्देन लक्षयितुं शक्यत्वाद-था चाऽभित्वाद्यृग्विशेषप्रतीतावपि करणाभावाद्विशेषणे च पूर्व-प्रत्ययाद्रथन्तरं पृष्ठं भवतीत्यादौ च रथन्तरादिषु पृष्ठशब्दप्रयोगा-

तु साम्नो ऽपि चाभिधायकाक्षराभिव्यक्तिद्वाराभिधाने ऽपि क
करणत्वोपपत्तेर्न ऋग्वाचित्वाभिधानाद्रथन्तरादिवाचित्वं पृष्ठश
स्य प्रसिद्धं किं त्वनुज्ञातमेवेत्यदोषः । द्रव्यसंख्यारूपानेकार्थप्र
पादितवाक्यभेदपरिहाराशङ्कानिराकरणभाष्यमधिकरणोपसंहा
पसंहारादनन्तरम् असङ्गतत्वादयुक्तमाशङ्क्यापकृष्य व्याख्येयमि
ह * द्वावेताविति * भाष्यकृता तु प्रधानतो ऽभिसम्बन्ध इत्यं
सूत्रावयवेनावृत्त्या प्रधानक्रियोपादाने सत्येव क्रियावशीकारा
भिमुखीभूतयोर्द्रव्यसंख्ययोर्विशेषणविशेष्यसम्बन्धः स्यात् न
प्रधानक्रियोपादानमस्तीत्येवमेषा शङ्का निराक्रियते इति सूचनार्थं
वता शङ्कापरिहारावन्ते कृतावित्यदोषः । आशङ्कानिराकरणार्थं
शिष्टानामिति भाष्यं विशिष्टवाचिशब्दाभावे ऽप्यरुणैकहायनी
ग्रये शुच्ये ऽष्टाकपालं निर्वपेदिति वद्वा सामानाधिकरण्यमा
विशिष्टप्रतीतिसम्भवादयुक्तमाशङ्क्याह * विशिष्टानामिति * अय
शयः गौरश्च इतिवत्परस्परसामीप्यैकविभक्तिनिर्देशमात्रेण
मानाधिकरण्यायोगान्नारुणैकहायन्योस्तद्वशाद्विशेषणविशेष्यभा
गतिः किं तु निर्द्रव्यगुणस्यामूर्त्तत्वेन क्रियासाधनत्वानुपपत्तेर्नि
स्य च द्रव्यस्यानुपादेयत्वेन क्रियासाधनत्वानुपपत्तेर्द्वयोः
क्रियानुगृहीतत्वेन द्रव्यगुणान्तरानापेक्षकत्वात् क्रियासाधन
नुपपत्त्याग्निशुच्योस्तु देवतात्वेनान्वयात् तस्य चोद्देश्यत्व
त्रेण क्रियासाधनत्वात् अमूर्त्तस्य निर्गुणस्यापि चोद्देश्य
पपत्तेः क्रियासाधनत्वान्यथानुपपत्त्या विशेषणविशेष्यभ
नवगमे ऽपि तदनभ्युपगमे प्रत्येकमन्वयायाख्यातावृत्त्यापत्तेः
धानभूताख्यातावृत्तेश्चात्यन्तान्याय्यत्वात् प्रत्येकं च देवतात्वाप
णभेदेनादृष्टकल्पनागौरवापादककर्मभेदप्रसङ्गादेकक्रियावशीका
वसायात्तदन्यथानुपपत्त्या विशेषणविशेष्यभावावगतिः । पञ्च
न्याज्यानीत्यत्र तु प्रधानभूतसाध्यक्रियावाक्याख्याताश्रवणात
तस्य सामानाधिकरण्यनिर्देशमात्रेण विशेषणविशेष्यभावावगति
म्भवतीति । नन्वित्याशङ्काभाष्यमाख्यातनिरपेक्षस्य समभिव्याह
मात्रस्य विशिष्टावगतिकरणत्वानुपपत्तेरुक्तत्वादयुक्तमाशङ्क्याह
न्विति * न तत्पदद्वयमपीत्याशङ्कानिराकरणभाष्यं तस्य किल
माशयः पञ्चदशान्याज्यानीत्यत्र विशेषणविशेष्यभूते द्रव्यसं
विधीयेते अनूद्येते वा एकानुवादेनेतरविशिष्टेना वा विधीयते तत्र
योर्विधाने परस्परनैरपेक्ष्याद्विशेषणविशेष्यभावो न स्यात् लोके
च्चिद्विशेषणविशेष्यभावेन प्राप्तयोर्द्रव्यसंख्ययोरनुवादे श्रुतस्य

स्यानुवाद्यघृतत्वेन स्तोत्रसम्बन्धविधायकत्वाभावात्तत्सम्ब-
नुपपत्तेरानर्थक्यापत्तिः स्वरूपेण चैकमनूद्येतरविधानानर्थक्या-
ः स्तोत्रसम्बन्धित्वेन चैकस्याप्यप्राप्तेर्नैकानुवादेनेतरविशिष्ट-
विधातुं शक्यमिति तत्रैकभवतिक्रियावशीकारेणोभयोर्विधीय-
नयोररुणैकहायन्यादिवद्विशेषणविशेष्यभावोपपत्तेरनुपपत्तिमाश-
ाह *न तदिति* भवतिवाच्यायाः सत्ताख्यायाः क्रियाया द्रव्यसं-
ःप्रत्यात्मलाभोपकारजननेन गुणत्वात्प्राधान्याभावेनोभयवशी-
रसामर्थ्यं नास्तीत्याशयः । ननु निर्द्रव्यायाः संख्यायाः निःसंख्यस्य
द्रव्यस्यात्मलाभाभावात् कथं सत्तायाः प्रत्येकवार्त्तेत्याशङ्क्याह *
इदानीमिति* अर्थाक्षिप्तयत्किञ्चित् द्रव्यसंख्याक्षेपे ऽप्यप्रधान-
या क्रियया वशीकर्त्तुमशक्यत्वात् नान्योन्यनियमसिद्धिरित्याश-
। नन्वेकक्रियावशीकाराभावे ऽपि द्रव्यसंख्ययोरितरेतरापेक्षायां
प्रधानेनैतयोरेव परस्परनियमाद्विशेषणविशेष्यभावो भाविष्य-
याशङ्क्याह * तस्मादिति * एकक्रियावशीकारसम्भवे तद्ध-
। विशेषणविशेष्यभावापत्तेः संख्याविशिष्टद्रव्यविधिः शङ्कितुं
य्यते तदसम्भवे तु स्वतन्त्रयोरेव विधानापत्तेस्तस्य च वाक्यभे-
सङ्कलासम्भवात् पाश्चात्येन विशेषणविशेष्यभावेन विधानका-
नस्य वाक्यभेदस्य परिहर्त्तुमशक्यत्वात् नोभयविधिः सम्भवती-
ः । अविधायक इतिभाष्यावयवं व्याख्यातुमाह * न चेति *
शः क्वचिल्लोके पञ्चदशघटनिक्षिप्तेष्वाज्यपञ्चदशत्वयोर्विशेषण-
शेष्यभावः प्राप्तस्तादृशस्य स्तोत्रेषु विधायकाभावेनाभावात् स्तो-
; विधायकाभावेनाभावात् स्तोत्रसम्बन्धित्वेन विधानानुवादायो-
त् स्वतन्त्रानुवादे त्वानर्थक्यप्रसङ्गान्नोभयमनुवादकमित्यर्थः ।
मत्रेति भाष्यावयवं प्राक् पठितमपि उभयविध्यनुवादासम्भवा-
नसिद्धित्वात् पश्चाद्व्याचष्टे * तस्मादिति * नन्वेवं सत्या-
नुवादेन तेषां पञ्चदशत्वसंख्याविशिष्टविधिराशङ्कावायुक्तः सि-
दित्याशङ्क्याह * नामधेयत्वइति * स्तोत्रनामत्वे सत्याज्यश-
स्याज्यैः स्तुवतइत्येतद्वाक्यप्रामाण्याज्यान्यनूद्य संख्याविशिष्टत्वं
ातुं शक्यं घृतानां त्वप्राप्तत्वान्नानुवादः सम्भवतीत्याशयः ।
न चास्य भाष्यावयवस्याशङ्कानिराकरणमध्यगतस्यापि लिङ्गबली-
त्वात्सिद्धान्तसिद्ध्यर्थतोक्ता लिङादिरहितस्य विध्यशक्तेर्विधाय-
त्वानुपपत्तिमाशङ्क्याह * विधायकमिति * ननु संख्याविशिष्टा-
विध्यसम्भवे ऽपि पञ्चदशान्याज्यानि स्तोत्रेषु भवन्तीत्याज्यस्य
स्य स्तोत्रसंख्यापदाभ्यां तत्र सम्बन्धादर्थाद् द्रव्यसंख्ययोर्विशेष-

णाविशेष्यभावो भविष्यतीत्याशङ्क्य वैरूप्यापादनेन तन्त्रसम्ब रासार्थं न चात्रैकमाज्यपदं विशेषणं संख्यां प्रत्युद्देशकमिति वाजपेयाधिकरणवक्ष्यमाणस्य तन्त्रसम्बन्धनिरासस्यानागता न्यायेनेहाभिधानार्थमिति सूचनायोपेक्षितम् । डप्रत्ययान्तशब्दस धिकरणयालिङ्गादप्याज्यपृष्ठशब्दयोः स्तोत्रनामतावसीयतइत्याह श्रदशानीति * क्रियामात्रस्य कारकमात्राधीननिरूपणत्वात् च कथं चिदुपस्थापकत्वेनोपकारकत्वसम्भवे ऽप्यवाचकत्वेन धत्त्वाभिधानलक्षणां स्तुतिं प्रति कारकत्वायोगात् तृतीयया कतमत्वोपचारे ऽपि मुख्यसाधकतमत्वासम्भवात् न तत्सं मुख्यं स्तोमत्वमवसीयतइत्याशयः ॥ २ ॥

॥ अथ अग्निहोत्रादिशब्दानां यागनामधेयताधिकरणम् ॥ ३

१९५।१ तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

निरूढानिरूढत्वेन द्विविधस्यापि नामधेयस्य विच त्वादुत्तराधिकरणद्वयानर्थक्यमाशङ्क्ते * नन्विति * पूर्व णविधिनिरासहेत्वभावादिह हेत्वन्तरेण निरासार्थं चिन्तेति रति * उच्यतइति * वाक्यभेदासम्भवाच्चिन्तेत्यनुषङ्गः । तत्प्रख्यान्यशास्त्रसद्भावेन गुणविधिनिराकरणमुत्तरत्र तद्व्यप न्यशास्त्रसद्भावेनेति विवेकः । यथा चाज्यादिशब्दानां गुण गतवाक्यभेदालोचनेन गुणविधित्वनिरासस्तथाग्निहोत्राघा योरपि गुणवाक्यगततत्प्रख्यान्यशास्त्रालोचनेनेत्यनन्तरसङ्ग तद्व्यपदेशस्य त्वर्थवादगतत्वाद्वैलक्षण्यं, न च यौगिकत्वसाम्य उद्भिदधिकरणानन्तरमेतदारब्धुं युक्तं सामानाधिकरण्यनिर यौगिकत्वस्य नामधेयासाधकत्वेना। किं चित्करत्वात्तत्प्रख्यत्वप संभवासम्भवाभ्यां च सन्देह इति सर्वमनवद्यम् । अग्निहोत्र देवतालक्षणगुणविधित्वाभिधानार्थं गम्यते हीति भाष्यं चत् मासलक्षणाभावादयुक्तमाशङ्क्याह * तत्रेति * ननु सिद्धा माणान्तरावगतार्थानुवादत्वात्तेन चाग्नेर्दैवतात्वावगतेस्तद चतुर्थीबहुव्रीह्यङ्गीकरणं युक्तं, विधिपक्षे तु प्रमाणान्तराभाव क्षणा । ननु गतसमासाङ्गीकरणं युक्तमित्याशङ्क्यान्येत्युक्तम् तत्पुरुषे सम्बन्धविशेषानवधारणेन व्यवहारासिद्धेः सर्वहोमा न्याधारत्वस्य यदाहवनीयवाक्यादेव प्राप्तेः सप्तमीबहुव्री क्यालक्षणानुगतत्वाद्विशेषाच्च समासान्तरानुपपत्तेः ष्याच्चतुर्थीबहुव्रीहिरेवावसीयतइत्याशयः । न चेति भाष्ये वध

ङ्गिन्न्यायवैषम्यं बहुव्रीह्यङ्गीकरणस्य प्रयोजनमित्याह * अन्त-
तेति * प्रसिद्ध्यादिहेतुत्रयं विक्षिप्योक्तं सङ्कलय्य पूर्ववद्व्या-
यमित्याह * तएव चेति * पूर्वव्याख्यातिदेशार्थस्तत्त्वोपचारः ।
ु गौरवभयेनेहाप्युद्भिच्चित्राादिवद्विशिष्टविध्यनाश्रयणाद्यद्-
ये च प्रजापतये च सायं जुहोति यत्सूर्याय च
ापतये च प्रातर्जुहोतीति वाक्ययोरनेकगुणोपादानात्क-
नुवादेन गुणमात्रविधौ वाक्यभेदापत्तेर्गुणविशिष्टकर्मविधानाव-
ात् तद्विहितयोः कर्मणोः सन्निधानादग्निहोत्रशब्दो गुणविधिः
ज्येत तत्र च सायं होमे ऽग्नेः प्राप्तत्वावगमात्तत्प्रख्यशास्त्रान्तर-
द्रावे चानर्थक्यापत्तेर्नाग्न्याख्यदेवताविधिर्युक्त इत्याशङ्क्याह *
यामिति * तद्वर्जमित्यनेनोभयोः सन्निधानाविशेषे ऽपि प्राप्त-
त् सायं होमवर्जनमिति दर्शितम् । उत्पत्तिशिष्टसूर्यप्रजापत्यवरुद्धे
। प्रतिहोमे ताभ्यां सह समुच्चयेन विकल्पेन वाग्निर्निवेक्ष्यते य-
ग्निहोत्रं जुहुयात्स्वर्गकाम इत्यत्र वाक्ये ऽग्निहोत्रशब्देन फले
त्रीयमानो गुणः प्रकृताश्रयापेक्षायां सायं होमे ऽग्न्याख्यस्य गुण-
न्यतः प्राप्तेरभिधेयतया फलान्वयायोगेनाश्रयान्तरापेक्षत्वात् प्रा-
मिमाश्रयत्वेन गृह्णन्नित्यतद्गुणं सूर्यादिकं बाधित्वा निवेक्ष्यते
। यज्जुहोति तत्सूर्याय च प्रजापतये चेति चशब्देनान्योन्यसा-
स्यैव देवताद्वयस्य क्रियान्वयप्रतीतेः प्रतिकारकं प्रत्ययव्यापारा-
त्रादनेकगुणोपादाने ऽपि वाक्यभेदानापत्तेः सूर्यवाक्यस्यापि गुण-
त्ररितविधिशक्तत्वेन कर्मोत्पादकत्वाभावात् सूर्यप्रजापत्योरुत्प-
शिष्टत्वाभावेन बलीयस्त्वानुपपत्तेः सायं च प्रातश्च जुहोतीत्य-
नुपादेयकालसम्बन्धात् प्रकरणान्तरन्यायेनाश्विनवाक्यवत् पू-
क्षे कर्मविधित्वावगमात्तस्य चासम्भवद्विकल्पसमुच्चयसायम्प्रातः
ऌलक्षणगुणद्वययोगेन यदाग्नेयो ऽष्टाकपाल इतिवत् कर्म-
विधायकत्वावगमेस्तद्विहिते प्रातर्होमे वाक्यान्तरविहिताभ्यां
प्रजापतिभ्यां सह तुल्यबलत्वाद्विकल्पेनाग्निहोत्रवाक्यमाग्निं वि-
यतीति वक्ष्यमाणानुषङ्गेण वाक्यं पूरणीयम् । भाष्यकृता तु सायं
प्रातश्च जुहोतीत्येतद्वाक्यविहितस्य कर्मद्वयस्य यदग्नये च सू-
। चेति वाक्याभ्यां सायम्प्रातःकालविशिष्टकर्मविशेषानुवादेन
ताविधायकाभ्यां विहितेनाग्निसूर्यादिना नैराकाङ्क्ष्यात्सन्निहिते
तस्मिन् अग्निहोत्रवाक्येन गुणविधानाशक्तेर्दूरस्थेष्वप्यविहि-
वताकेषु जुहोतिचोदितेषु दर्विहोमशब्दवाच्येषु गुणविधिरित्यु-
। । तदुपपादयति * होमेति * सूर्याग्निवाक्ययोः कालदेवता-

विशिष्टकर्मविधायित्वे सायम्प्रातर्वाक्यस्य तत्र कालविधायित्वायो
गादत्रत्यपूर्वपक्षे चाग्निहोत्रवाक्यस्य कर्मविधायित्वाभावात्कालवि
शिष्टकर्मविधायित्वापत्तेस्तद्विहिते ऽपि कर्मणि जुहोतिचोदितत्वाद
ग्निहोमशब्दवाक्ये देवताविधिं वक्तुं सर्वशब्दः । नन्वेवं सन्निहि
त एव सायम्प्रातर्वाक्यविहिते कर्मणि गुणविध्युपपत्तेर्दूरस्थेषु वि
धिर्न युक्त इत्याशङ्क्य होममात्रेत्युक्तं सूर्याग्निवाक्ययोः कालवि
शिष्टकर्मानुवादेन देवताविधायकतया विशेषरूपत्वात् तद्विहितदेव
तावरुद्धे कर्मणि सन्निहिते ऽप्यग्निहोत्रवाक्यं होममात्रानुवादेन दे
वताविधायकतया सामान्यरूपत्वात् ततो दुर्बलं न शक्नोति देवता
न्तरं विधातुमित्याशयः । नन्वसन्निहितस्य कर्मणो प्रत्यभिज्ञाना
कथमनुवाद इत्याशङ्क्यैकवाक्योपात्तजुहोतिसामर्थ्यात् प्रत्यभिज्ञानं
तपसिरुक्ता । नन्वाघारमाघारयतीत्येतद्वाक्यविहिते कर्मणि चतुर्गृही
वा एतदभूत्तस्याघारमाघार्य त्रिरितः प्राचीनं प्रयाजान् यजतीति वा
क्यान्तरेणाघारशब्दवाच्यस्य क्षरणार्हद्रवद्रव्यस्य चतुर्गृहीतस्याज्य
विशेषरूपेण प्राप्तत्वात् सामान्यविधेश्चाविशेषोपसंहारेणा पयः
शृतिद्रवद्रव्यान्तरप्रापकत्वायोगात्तत्प्रख्यशास्त्रान्तरसद्भावेनाघारश
ब्दस्य गुणविधित्वं न युक्तमित्याशङ्क्याघारश्चेति आर्षेणाघारशब्दवा
च्यं द्रव्यमात्रमुपांशुयाजे विधीयत इत्युक्तं तदुपपादयितुमाह *
थेति * ननु क्षारितस्य नष्टत्वात्कथं प्रयोजनापेक्षेत्याशङ्क्याह *
समाप्तं चेति * प्रतिपत्त्यर्थत्वे दृष्टार्थत्वात् सर्वस्य क्षारणं स्यात्
त्वदृष्टसंस्कारार्थत्वात् शब्दमात्रे ऽनुष्ठिते ऽपवृज्येतेत्यर्थः * तत्र
रितेति * तस्मादित्यर्थे तदित्यव्ययम् । ननु यदि सोमं न विन्देत पू
कानभिषुणुयादित्यभिषवस्य स यदि राजन्यं वा वैश्यं वा याजये
त् स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभीराहृत्य ताः संपिष्य द
ध्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमामिति भक्षस्य च प्रकरणेन य
गसाधनसंस्कारतया प्रत्यभिज्ञानादभिषवयुक्तानां पूतिकाख्य
वृक्षविशेषाणां भक्षयुक्तस्य च न्यग्रोधस्यावरोधांश्च फलानि चौ
म्बराण्याश्वत्थानि प्लाक्षाणि अभिषुणुयात्तानि भक्षयेदित्येतस्य
द्वयो ऽवरोधशब्दवाच्यानां स्तिभिनीनामौदुम्बरादिफलमात्रस्य
वणात्तत्समुदायस्य भूम्ना फलचमसशब्दाभिधेयस्य यागसाधन
युक्तं क्षारणस्य तु कथमित्याशङ्क्याह * लोके ऽपि चेति * क्ष
णस्याप्युपयोक्ष्यमाणसंस्कारत्वेन लोके ऽवधारणात् नष्टकस्य
द्रव्यस्यावश्यं कस्मिंश्चित्कर्मणि साधनत्वावगमेयुक्ता प्रयोजना
त्याशयः । प्रयोजनापेक्षामुपसंहरति * तेनेति * ननु यदि सोमं न

। सोमाभावे पूतिकानां प्रतिनिधिनियमार्थेन विधिप्रतीतेस्तत्का-
रित्वं युक्तमाघाराख्यस्य तु द्रव्यस्य कस्य चिदभावे विध्यभा-
प्रतिनिधित्वाप्रतीतेः कथं कर्मापेक्षेत्याशङ्कानिरासाय प्रतिनि-
रहितदृष्टान्तातराभिधानं पूतिकादिवत् संस्कार्यत्वान्यथानुप-
स्यापि कर्माङ्गत्वावसायात् विशेषानवगतेः सामान्यतस्तावद्-
पो ऽस्तीत्यर्थः । नन्वेवमपि उपांशुयाजार्थत्वापत्तिः कथमि-
ङ्क्याह * प्रकरणेति * पार्वणहोमादिनिवृत्त्यर्थः प्रधानशब्दः
क्रियात्मकत्वेन द्रव्यस्य प्रकरणग्राह्यत्वात् स्ववाक्योपात्तेनैव
णान्वयो युक्तो न प्रकृतेनेत्याशङ्कानिरासार्थं वृद्धसम्मतिमाह
ाह चेति * श्रुतः संस्कारेण सम्बन्धो यस्य द्रव्यस्य तन्मुख्यैः
मावगतैः स्ववाक्योपात्तैः कर्मभिरसङ्गतमपि कर्मान्वयं विना
कारसम्बन्धायोग्यत्वात्प्रकृतैरन्वयं यातीत्यर्थः । यद्वा यदि
मं न विन्देत यदि सोमं विभक्षयिषेदिति च मुख्ययागसाधन-
मप्रसङ्गात् पूतीकफलचमसयोस्तत्कर्मकारित्वप्रतीतेः प्रकृतकर्मा-
यो युक्तो ऽस्य तु कथमित्याशङ्कानिराकरणार्थं मुख्यैराघारणसं-
र्यैर्द्रव्यान्तरै र्यद्यप्यसङ्गतमित्युक्तम् । एवमाघारवाक्यस्य सं-
ारविधायित्वमङ्गीकृत्य संस्कार्यत्वान्यथानुपपत्त्योपांशुयाजे द्र-
विनियोगपर्यवसायितोक्तेदानीं वाक्यस्यैवोपांशुयाजे द्रव्यविनि-
जकत्वमाह * अथ वेति * नन्वाघारणलक्षणधात्वर्थभेदा-
ब्दान्तरन्यायेन भावनाभेदप्रतीतेः कथमुपांशुयाजभावनानुवाद
ाशङ्काघारद्रव्यसाध्यत्वादेवेत्युक्तम्। आघारणक्रियायोगप्रवृत्ता-
रशब्दवाच्येन यत् साध्यते तदाघारणमेव भवतीत्येवं प्राप्तो धा-
र्थः प्रत्ययानुग्रहायानूद्यमानो न भावनां भिनत्तीत्याशयः । नन्वत्र
द्भावनावाचिकरोत्यश्रवणात् शुद्धस्य चाख्यातस्याप्रयोज्यत्वात्
तुविशिष्टेन प्रत्ययेन धात्वर्थावच्छिन्नभावनानुवादपूर्वकद्रव्यवि-
ानापत्तेः प्रागेव धात्वर्थप्राप्तिर्वाच्येत्याशङ्कानिरासायान्यथाप्राप्ति-
ह * ध्रौवप्राप्तेति * तावब्रूतामग्नीषोमावाज्यस्यैव नौ उपांशु २
र्णमास्यां यजन्नित्यस्य कालविध्यर्थत्वेनाज्यविध्यर्थत्वासम्भवात्स-
स्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यमित्याज्यप्रापकमुक्तम्
वं तर्ह्यविलीनाज्यस्य होमाशक्त्यैव व्यावृत्तेराघारशब्दस्याज्यवि-
षणत्वायोगात् आनर्थक्यं स्यादित्याशङ्क्य * क्षरणेत्यु-
म् * क्षरणात्मकत्वसिद्ध्यर्थं प्रागाज्यप्राप्त्यभ्युपगमे एवा-
र्थक्यपरिहारायाज्येन सह विकल्पमानं द्रवद्रव्यमात्रं विधीय-

१ संयोगादिति २ पु० पा० ।

तदस्याशयः । ननु नामधेयत्वेनैवानर्थक्यपरिहारो भविष्य
त्याह * न चेति * क्षरणात्मकत्वविशेषस्य धात्वर्थपर
त्वेन सिद्धेर्नामानर्थक्यमित्यर्थः । आघारणस्य च तस्याघार
काश्रयत्वात् प्रयाजार्थजौहवचतुर्गृहीताज्यसंस्कारार्थत्वाद
संस्काराणां च संस्कार्यनिष्ठत्वात्तद्विशेषणेन विशेषसिद्धेः
क्यमित्याह * न चेति * आघारशब्दे गुणविध्यर्थे ऽपि
लक्षणा नास्तीत्यभिधानार्थमाघार इति भाष्यं गुणाभि
भिमतस्याघारशब्दस्य द्वितीयान्तत्वाद् गुणत्वाभिधानाश
माशङ्क्य व्याचष्टे * श्रुत्यैवेति * विधित्सित
मन्यच्छास्त्रं यस्मिन्स्तदपि नामधेयमिति पूर्व
स्मिञ्छब्दानुषङ्गेण च सूत्रं योजयन् सिद्धान्तमाह * 
पूर्वसूत्रनिर्दिष्टगुणपरामर्शार्थत्वेन तच्छब्दं व्याख्यातुं 
गुणेत्युक्तम् अनेन च स विधित्सितो गुणः प्रख्याप्यते प्राप्य
विग्रहो दर्शितः । अग्निप्रजापत्योर्द्वयोः शाखान्तरप्राप्तयोः
चनं प्रजापतिपरिसंख्यार्थमित्याशङ्क्य प्रत्यक्षश्रुतपरिसंख्या
पत्त्यापत्तेः परिसंख्येयस्य च विध्यानर्थक्यापत्तेरयुक्ता 
त्याभिधानार्थं प्रजापतिनिवृत्त्यर्थमित्यादिभाष्यं व्यर्थत्वात्तया
तं भवति इह च सो ऽन्यतः प्राप्तो यदग्नये चेति द्रुष्टाभ
त्वादिहापि देवताव्यवस्थापरे वाक्ये वाक्यान्तरतः प्रा
ऽनूद्यतइत्याघाराग्निहोत्राधिकरणे वक्ष्यमाणत्वात् भाष्य
कृतो ऽपि यदग्नये च प्रजापतये च सायं जुहोतीत्येतदे
ख्यशाखान्तरमभिमतं लक्ष्यते भिन्नपदोपात्तस्यापि देवता
शब्दात् परस्परसापेक्षस्याख्यातान्वयप्रतीतेः । प्रत्येकं वि
राभावात् वाक्यभेदानापत्तिश्चादीनां हि निपातोपसर्गाण
पदत्वे ऽपि केवलाप्रयोगित्वेन स्वातन्त्र्येणार्थप्रतिपादकत्व
दान्तरार्थातिशयद्योतनार्थत्वावधारणात् तत्समभिव्याहृत
पदस्याख्यातपदस्य वा तन्नैरपेक्षेण स्वार्थासमाप्तत्वात् पद
यानुपपत्तेश्चशब्दोपहितयोरेवाग्निप्रजापतिशब्दयोराख्यात
रेतरनिरपेक्षयोः प्रत्येकं विधिव्यापारो युज्यते अत एव
श्वाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च
तस्य द्वादशशतं दक्षिणेति चशब्दसमुच्चितानां[2] दक्षिणा
धेनुर्दक्षिणेति श्रुतायाः धेन्वाः प्राकृतकृत्स्नदक्षिणाविव

१ तत्पूर्वसूत्रगतनामधेयपदानुषङ्गेणेति २ पु० पा० ।

२ चशब्दयोगेन समुच्चितानामित्ति २ पु० पा० ।

रामे वक्ष्यते तत्र ह्यथैष भूर्यैश्वर्ये ब्रह्मैकाहे सर्वस्तस्य विश्ववत्यः स्तोत्रीया धेनुर्दक्षिणेत्युदाहृत्य किं धेनुर्गवां निवर्त्तिकोतकृत्स्नाया दक्षिणाया इति सन्दिग्धे यच्छब्दयोगः प्राथम्यमित्यादुहेश्यलक्षणाभिधानेन न्यायेन दक्षिणासम्बन्धे प्रथमं गवादीनामुपादानेनोद्देश्यत्वावगमात् उद्देश्यगतस्य चशब्दोक्तस्यापि साहित्यस्याविवक्षितत्वात् प्रत्येकं दक्षिणात्वावगतेर्गोत्वैकार्थसमवेतदोग्ध्रीत्ववाचिना धेनुशब्देन गवामेव दोग्ध्रीणां निवृत्तिप्रतीतेरेकवचनेन च द्वादशशतसंख्यानिवृत्तिप्रतीतेर्यथा सौर्यं चरुं निर्वपेदिति निर्वापलक्षणगुणशब्दे नैष्ठिको विध्यन्तो नियस्यते तथा धेनुशब्देन गोमात्रनिवृत्तेर्नाश्वादिनिवृत्तिरिति तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात् सामान्यात्तद्विकारः स्यात् यथेष्टिर्गुणशब्देनेति सूत्रेण पूर्वपक्षयित्वा सर्वस्य वा क्रतुसंयोगादेकत्वाद्दक्षिणार्थस्य गुणानां चार्थैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात्तत्समवायो हि कर्मभिरिति सूत्रेण सिद्धान्तितं तस्यार्थः सर्वस्य क्रतुदाक्षिण्यस्य धेनुर्विकारो बाधिका कुतः तस्य विश्ववत्यः स्तोत्रीया इति तच्छब्दानुषङ्गेण तस्य भूनाम्नः क्रतोर्धेनुर्दक्षिणेति कृत्स्नक्रतुसंयोगाद्विकृतौ भूनाम्नि क्रतौ प्राकृते ऽर्थे दक्षिणात्मके कार्ये श्रुतितो भूतं प्रत्यक्षश्रुत्या प्राप्तं धेनुद्रव्यमानुमानिकं सर्वदक्षिणाबाधकं स्यात् । ननु ज्योतिष्टोमे बहुद्रव्यानतानामृत्विजां कर्मसम्बन्धावगतेस्तद्विकृतौ भुव्यप्येकद्रव्यानतानां कर्मसम्बन्धो न युक्त इत्याशङ्क्य * तत्समवायो हीत्युक्तम् * तथा दक्षिणया ऋत्विजां कर्मसम्बन्धावधारणात् एकेनापि द्रव्येण दक्षिणात्वेन भुतेमानतानां कर्मसमवायो युक्त इत्यर्थः । ननु गवादिद्रव्यजन्यानामानतीनां भेदाश्च गोजन्यानत्यर्थं विहितया धेन्वाश्वादिनिवृत्तिर्युक्तेत्याशङ्क्यैकत्वाद्दक्षिणार्थस्येत्युक्तम् । ऋत्विगानत्युपायापेक्षायामृत्विग्भ्यो दक्षिणां ददातीत्यानतिसाधनवाचिदक्षिणाशब्दस्य ददात्यन्वयाद्दक्षिणायाश्चोपादेयत्वेन विवक्षितैकसंख्यत्वात् तदर्थस्य प्रयोजनस्यानमनस्याप्येकत्वमित्यर्थः । ननु दक्षिणां ददातीत्येकवचनश्रवणे ऽपि गौश्चाश्वश्चेत्यादिवाक्ये दक्षिणासमुच्चयप्रतीतेस्तत्प्रयोजनानतिभेदो ऽवसीयत इत्याशङ्क्य गुणानां चार्थैकत्वादित्युक्तं चशब्देनेतरेतरसहितानामेव गवादीनां दक्षिणात्वप्रतीतेस्तस्य द्वादशशतं दक्षिणेत्येकवचनाच्च समुच्चितानामेव दक्षिणात्वमित्यर्थः । गवादीनामुद्देश्यत्वात् साहित्याविवक्षाशङ्कानिरासायोपादेयत्वज्ञापनार्थं गुणशब्देनाभिधानं दक्षिणात्वं च गवादीनां प्रत्युद्देश्यमिति ज्ञापयितुमर्थशब्देनोक्तं ततश्च यथैव गौर्दक्षिणेति न प्रत्येकं दक्षिणाशब्द

सम्बध्यते तथाग्न्यग्नये जुहोति प्रजापतये जुहोतीति प्रत्येकमाख्यात सम्बन्धाभावाच्च वाक्यभेदापत्तिः।न चैतावताग्नीषोमादिवत्सम्भूय तयोर्देवतात्वापत्तिः पृथक्चतुर्थीनिर्देशेनेतरेतरनिरपेक्षयोरेव देवतात्वप्रतीतेः पदान्तरसम्बन्धे हि चशब्दात्साहित्यं प्रतीयते न विभक्तिसम्बन्धे तत्सम्बन्धात् यागपरिपूर्णस्य पदान्तरेण चशब्देनान्वयानुपपत्तेः । तस्माद्देवतयोरेवात्र चशब्दात्साहित्यमवगम्यते । सहितयोर्देवतात्वं न चाग्निसूर्यवाक्याभ्यां देवताविधौ तत्प्रकाशनसमर्थयोर्मन्त्रयोर्लिङ्गादेव प्राप्तेरग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोतीति मन्त्रविध्योस्तदर्थशास्त्रसद्भावेनानर्थक्यं शङ्कनीयम् अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति सायं जुहोति सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातर्जुहोतीति च मिश्रलिङ्गमन्त्रविधिपर्युदस्तयोः केवललिङ्गयोः प्रतिप्रसवार्थं विधानार्थवत्त्वोपपत्तेश्चतुर्थीतश्च मन्त्रवर्णदौर्बल्यात् प्रजापतेरपि च यज्ञसाधनत्वधर्मयोगात् अङ्कतेर्वा गत्यर्थादग्निशब्दव्युत्पत्तेर्हिरण्यगर्भत्वसंस्तवसामान्याद्वाग्निशब्देनेन्द्रीवद्गौणया वृत्त्याभिधानोपपत्तेर्न चतुर्थीसद्भावे देवताप्रापकत्वं युक्तं मिश्रलिङ्गमन्त्रपक्षे च द्विदेवत्यहोमापत्तेः केवलस्याग्नेर्देवतात्वाभावान्नित्यवदनुवादो न युक्तः । प्रजापतिमात्रविधेश्चैकेनैव वाक्येन सिद्धेरन्यतवाक्यानर्थक्यं व्यवस्थानपेक्षणाच्च सायम्प्रातःशब्दावनर्थकौ स्यातां तस्मादाधाराग्निहोत्राधिकरणे मान्त्रवर्णिकदेवताभिधानं परमतेति द्रष्टव्यम् । ततश्च ब्राह्मणेनाग्निसूर्ययोः शुद्धयोर्देवतात्वविधानाच्चोक्तावेवाग्निसूर्यौ द्रव्यत्यागवेलायामुद्देष्टव्यौ न मन्त्रवर्णानुसारेण ज्योतिष्ट्वगुणविशिष्टाविति यदग्नये चेति शाखान्तरेण सायं हुतेऽग्निविधानाच्चतुर्गृहीतं वा इत्यनेनाघाराख्ये कर्मणि द्रव्यविधानाच्चाग्निहोत्राघारशब्दयोर्विधानार्थत्वं युक्तमित्यभिधानार्थं यदग्नये चेत्यादिभाष्यं दर्विहोमोपांशुयाजयोर्गुणविधिः पूर्वपक्षान्तस्य कर्मान्तरगतेन गुणविधिना वैयर्थ्यापादकत्वादयुक्तमित्याशङ्क्य * अतीति * पूर्वपक्षिणा उक्तमपि सायंहोमे देवताविधिमात्रं च द्रव्यविधिमापाद्य तदुक्तमित्येवं भाष्यं समाधातुमग्निहोत्रशब्दस्य तावत् परमार्थतो विधानार्थत्वेन नास्तीत्याह * उच्यत इति * यद्यग्निहोत्रशब्दो धात्वर्थत्वात् विधेयसमर्पकः स्यात् ततोऽस्य विधेयगुणविषयभूतकर्मापेक्षिणः प्रातर्होमे दूरस्थेऽपि वा दर्विहोमे निवेशः स्याद्विशिष्टविधौ गौर

१ यागपरिपूर्णस्य पदस्येति २ पु० पा० ।

:। कर्मानुवादेन गुणविधानस्य युक्तत्वात् यदग्नये चेति त्वन्ये-
ात्रेणाग्नेर्होत्रेण हूयमानेन हविषा सम्बन्धे कृते प्रवर्त्तमान-
ान प्राप्तार्थत्वादग्निहोत्रपदे ऽनुवादलक्षणं स्पष्टमित्यर्थः। न केवलं
ार्थविधानात्[1] गुणविध्यसम्भवः किं त्वनुवाद्यकर्माभावादपीत्याह
अनूद्येति * ततश्च प्रकृतकर्मानुवादेन गुणविधावुत्पत्तिशिष्टसूर्या-
ोधेन प्रातर्होमे गुणविध्ययोगात् सायं होमे गुणविध्यापत्तेस्तत्र
ग्नेः शास्त्रान्तरेण प्राप्तेः सिद्धा तत्प्रख्यतेत्याह * प्रकृतमिति *
तत्प्रख्यतापरिहारायैवाप्रकृतौ विधिर्भविष्यतीत्याशङ्क्याह *
यत्रेति * प्रत्यभिज्ञायमानविषयत्वं नानुवादानां प्रकृतपरिग्रहस्य
ाध्यत्वादित्यर्थः। न केवलं तत्प्रख्यत्वात् प्रत्यभिज्ञायमानदोषाभ्यां
ृता ऽप्रकृतानुवाद्यकर्मालाभः किं त्वप्राप्तत्वादपीत्याह * नेति *
ुणविधित्वाभावे तर्ह्यग्निहोत्रवाक्यस्य का गतिरित्याशङ्क्याह *
ःमादिति * ननु यदग्नये चेत्यादीनां ऋजुमाघारयतीत्येवमादी- २९
गुणसंक्रान्तिशक्तित्वात् कर्मविधायित्वासम्भवे ऽपि सायं च प्रा-
ध जुहोतीत्यस्यानुपादेयकालसम्बन्धादग्निहोत्रं जुहुयात्स्वर्गकाम
यस्य चानुपादेयफलसम्बन्धाद्यावज्जीवमग्निहोत्रं जुहोतीत्यस्य
ानुपादेयनिमित्तसम्बन्धादूर्ध्वमाघारयतीत्यस्य चानुपादेयदेशस-
न्धात् प्रकरणान्तरन्यायेन कर्मविधायित्वात् तद्विहितयोः कर्म-
ोरग्निहोत्राघारशब्दौ गुणविधी भविष्यतइत्याशङ्क्याह * साय-
ाति * सिद्धान्ते तावदग्निहोत्राघारवाक्यविहितयोः कर्मणोः प्र-
यभिज्ञानात् प्रकरणान्तरन्यायाभावात्पूर्वपक्षे ऽपि विशिष्टविधेः
व चिदनभ्युपगमात् केवलस्य गुणस्य कर्मणो वा विधेयत्वापत्तेर्न
करणान्तरन्यायः सम्भवतीत्याशयः। ननु भिन्ने जुहोतीत्यादिष्व-
ग्रहितदेवताकेषु दूरस्थेषु दर्विहोमेषु कर्मप्रत्यभिज्ञाभावेनानुपादेय-
ेनिमित्तादिसम्बन्धेन च प्रकरणान्तरन्यायात् कर्मविधिप्रतीतेस्तत्र
वताविधिर्भविष्यतीत्याशङ्क्याह * दूरस्थस्येति * तेषामसम्बन्ध-
यवायेनाबुद्धिस्थत्वान्नानुवादः सम्भवतीत्यर्थः। कुण्डपायिनामिदं
ौण्डपायिनं कुण्डपायिनामयनाख्यं सत्रं तत्सम्बन्धिनो होमस्य
ासमग्निहोत्रं जुहोतीति विहितस्य असम्बद्धव्यवायेनाबुद्धिस्थत्वा-
ग्रदग्नये चेत्यादिदेवताविधौ दध्ना जुहोतीत्यादिद्रव्यविधौ चानु-
ादो यथा न युक्त इत्यातिदेशिककर्मसम्बन्धाङ्गीकरणेन दृष्टान्त-
सिद्धिः। यदाहवनीये जुहोतीत्यादौ द्रव्यदेवतस्योपदेशतो ऽतिदे-

१ प्राप्तार्थत्वादिति पु॰ पा॰।
२ असंबद्धपदव्यवायेनेति पु॰ पा॰।

शतो वा लाभासम्भवेनारूपत्वात्कर्मणो विध्यनुपपत्तेरगत्या द्रव्य
नुवादाश्रयणमित्याशयः । एवं कर्मानुवादेन गुणविधित्वे ऽग्निहो
वाक्यस्य पूर्वपक्षयुक्ते निरस्ते यदि कश्चिद् गुणविशिष्टकर्मविधिमङ्गी
स्य प्रत्यवतिष्ठेत तं प्रति अन्यतो विशेषणांशस्य विशेष्यांशस्य
प्राप्तिसम्भवे विशिष्टविधिगौरवाश्रयणमयुक्तम् । यदग्नये चेति
श्रान्तरेण चोभयवादिसिद्धगुणविधित्वेनेह विधित्सितस्य प्रा
त्वात् व्यर्थं विशिष्टविधानमित्युत्तरद्वयं वाच्यमित्याह * ि
धीयतामिति * विकल्पयते ऽन्यथा पूर्वपक्षो रच्यतइत्य
देवताधिकरणे देवताप्राधान्यस्य निषेध्यमानरूपतया होत्रशब्दा
धेयस्य हूयमानस्याग्न्यर्थत्वाभावात् प्रकृतिविकारभावायोगाच्च च
र्थीतदर्थार्थबलिहितसुखरक्षितैरिति चतुर्थीसमासलक्षणाभाव
व्यधिकरणबहुव्रीहेश्च नियतविषयत्वाच्च चतुर्थीबहुव्रीहिर्युक्त इत्य
ह * नेति * समासान्तरं तर्हि भवत्वित्याशङ्क्याह * न चेति
ननु शेषलक्षणाया अपि षष्ठ्याः सम्प्रदानसम्प्रदेयलक्षणसम्बन्ध
शेषनिष्ठत्वसम्भवाद्देवतायाश्च सम्प्रदानशब्दवाच्यं त्यज्यमान
व्योद्देश्यत्वप्रतिग्रहीतृत्वसमुदायैकदेशेन त्याज्यद्रव्योद्देश्यत्वेन
तिग्रहीतृत्वांशाभावे ऽपि समुदायलक्षणया सम्प्रदानत्वोपपत्तेः प
तत्पुरुषेण देवताविधिर्भविष्यतीत्याशङ्क्याह * य इति * वि
लक्षणानुपपत्तेरिति भावः । षष्ठीसमासाश्रयणे ऽपि व्यधिकरण
हुव्रीहेरसामञ्जस्यात्तत्पुरुषो ऽभ्युपगन्तव्य इति तत्पुरुषादित्यनेनो
यस्मिन्नग्नये होत्रं होमे तद्धोमात्मकं कर्माग्निहोत्रशब्दवाच्यं भ
तीति भाष्येण सिद्धान्ते ऽपि चतुर्थीबहुव्रीहिराश्रितः स कथं स
ञ्जसः स्यादित्याशङ्क्याह * अनुवाद इति * नामधेयत्वे ऽनुवा
त्वात्तस्य च प्रमाणान्तरपारतन्त्र्यादन्यतः सिद्धे देवतात्वलक्षण
म्बन्धविशेषे तल्लक्षणार्था सम्बन्धमात्रवाचिन्यपि षष्ठी हूयतइति
कर्मणि जुहोतेर्धातोर्हुपामाश्रुभसिभ्यस्त्रन्नित्यौणादिके त्रन् प्रत
कृते सार्वधातुकार्द्धधातुकयोरिति च गुणे कृते होत्रशब्दव्युत्प
रग्निहोत्रशब्दस्य बहुव्रीहिं विना जुहोतिसामानाधिकरण्यायोगाद्व
धिकरणे बहुव्रीहिः कण्ठेकालवत्कथ्यते इत्यर्थः । यथा ऽश्वार्थो घ
इति प्रमाणान्तरसिद्धतादर्थ्याविवक्षायामपि प्रकृतिविकारभावा
वेन तदर्थसमासायोगात् तादर्थ्यलक्षणार्थः षष्ठीतत्पुरुषः कथ्यत
दृष्टान्तार्थः । ननु यद्यपि गौरवापत्तेस्तत्प्रख्यशास्त्रान्तरसद्भाव
विधिर्न युक्तः । नापि च सायंहोमे गुणविधिः द्रव्यस्यानुवादा भा
च्च न दर्विहोमे गुणविधिः तथापि प्रकृते प्रातर्होमे देवताविधिर्भवि

ाशङ्क्याह * विधातव्यश्चेति * बहुव्रीह्यर्थस्य होमस्य प्राप्तत्वा-
हितोष्णीषादिवत्तद्विशेषणभूतयोर्द्रव्यदेवतयोर्होत्राग्निपदार्थयोः
म्बन्धो जुहोतिपरेण प्रत्ययेन विधातव्यः स्यादित्यर्थः। समासा-
त्त्यादिदोषसमुच्चयार्थश्चशब्दः। ननु प्रातर्होमे ऽग्नेरविधाने नि-
ाभावान्नाग्निहोत्रनामधेयानुवादः सम्भवेदित्याशङ्क्याह * ए-
शे ऽपि चेति * अग्निहोत्रवाक्योत्पादितस्य कर्मणः सायं च
श्च जुहोतीति वाक्यान्तरवशात्सायम्प्रातरावृत्तावपि ज्योतिष्टोमव-
रूपभेदाभावात् तदेकदेशे सायं होमे ऽग्निदेवत्यत्वज्ञानान्नाग्नि-
ं नामधेयानुवादो ऽपगच्छतीत्यर्थः। एतच्चाहवनीये होमो
रयोरिति गार्हपत्यान्वाहार्यपचनयोर्होमनिषेधाद् बह्वृचब्राह्मणे
च शतानि विंशतिश्च संवत्सरे सायमाहुतयः सप्तशतानि
ातिश्च संवत्सरे प्रातराहुतयः तावत्यो ऽग्नेर्यजुष्मत्य इष्ट-
संवत्सरेणाहास्याग्निना चित्येनेष्टं भवति य एवं वि-
ाग्निहोत्रं जुहोतीत्याहवनीयाहुतिसंख्ययैवाग्निहोत्रस्य स्तुत
त् प्रातर्होमे चाहवनीये ऽग्निदेवत्यहोमाभावात्तत्पक्षाश्रयणेनो-
द्वे आहवनीये जुहोति चतस्रो गार्हपत्ये चतस्रो ऽन्वाहार्यप-
इति तु दशाहुतिपक्षे। द्वे आहवनीये द्वे गार्हपत्ये द्वे आन्वाहार्य-
नइति षडाहुतिपक्षे वा प्रातर्होमे ऽपि गार्हपत्यान्वाहार्यपचन-
ग्नये गृहपतये स्वाहा ऽग्नये संवेशपतये स्वाहेत्यादिमान्त्रवर्णिका-
देवत्यहोमसद्भावादग्निहोत्रशब्दप्रवृत्तिः सुतरां युज्यते यथा च
पदार्थसम्बन्धविधानादिक्लेशापत्तेर्नाग्निहोत्रशब्दस्य प्रकृते ऽपि-
र्होमे गुणविधित्वं युक्तं तथाघारशब्दस्यापि क्षरणसमर्थद्रव्य-
त्रवाचित्वं कल्पयित्वा तस्यान्यत्र विनियुक्तस्यापि द्वितीयामात्रे-
संस्कार्यत्वं कल्पयित्वा तदन्यथानुपपत्त्योपांशुयाजाङ्गत्वकल्प-
शमाघारयति परेण वा प्रत्ययेनोपांशुयाजभावनामनूद्याघाराख्य-
मविधिकल्पने ध्रौवाज्यप्राप्तापादितक्षरणात्मकत्वोपांशुयाजभा-
ानुवादेन वा द्रव्यविधिकल्पनेति क्लेशापत्तेर्नाघारशब्दस्योपांशु-
जाख्येन कर्मणा सह तदङ्गभूतार्थाभिधानेनान्वयो युक्त इत्याह
आघारस्येति * ततश्चोपांशुयाजे द्रव्यविध्यसम्भवात् आघार-
ोत्याख्यातविहिते कर्मण्याघारशब्दस्य द्रव्यविधित्वापत्तेस्तत्र च
ुर्गृहीतवाक्येनैव द्रवद्रव्याज्यप्राप्तेः। प्रयाजाज्यसंस्कारार्थे चाघा-
ु द्रव्यान्तरानपेक्षणात्पयःप्रभृति द्रवद्रव्यमात्रविधानानुपपत्तेः त-
व्यशास्त्रान्तरसद्भावो ऽपरिहार्य इत्याशयः। नन्वस्य संस्कारकर्मत्वे
ति यद्भाष्यकृतोच्यतइत्यादिना घारणाक्रियया प्रयाजद्रव्यस्यैकदेश-

थाचितेत्युक्ते ननूद्भिदादिसिद्धान्तन्यायेन तृतीयान्ततयैव सामा
धिकरण्यात् कर्मनामत्वं सेत्स्यतीत्याशङ्कानिरासार्थं नन्विति भ
व्याचष्टे * न चेति * निरूढार्थत्वेनैषां न सामानाधिकरण्यं
र्णायकमितिभावः। ननु यथा वै श्येन इत्याद्यर्थवादावगतो व
र्थः कर्मणि प्रवृत्तिनिमित्तं भविष्यतीत्याशङ्क्याह * वत्यर्थोपा
नेन चेति * श्रुतिवृत्त्यपेक्षया विप्रकृष्टापि लक्षणा वाच्
स्वसम्बन्ध्युपस्थापनात् सन्निकृष्टा गौणता तु वाच्यल
तेन वाच्यसम्बन्धिनोऽर्थस्योपस्थापनात् अत्यन्तविप्रकृष्टा वत्यर्थो
दानेन कर्मणि प्रवृत्तौ गौणता स्यात् सा चात्यन्तविप्रकृष्टेति योज्य
ननु श्येनादेर्योगसम्बन्धानवगमात् कथं लक्षकतेत्याशङ्क्याह * स
नं हीति * उद्भिदादीनामिवेति दृष्टान्तोपादानेन तद्वदेव ज्यो
ष्टोमे गुणविधानस्य सूचितत्वात् तदुद्देशेन विधीयमानस्य श्येन
स्तत्साधनत्वप्रतीतिः। स्वसाध्यलक्षकत्वं युक्तमिति भावः। न
सति वैदिकत्वेन श्येनादिशब्दानामपि निरूढलक्षणापत्तेः गुणाद
नत्वान्मतुप्लोपोऽन्वाख्यातव्यः स्यादित्याशङ्क्याह * चिनेवेति
मतुप्लोपः स्मर्यतइति सिद्धान्ते दर्शनात् स्मर्यमाणेनेति
कल्पनीयः। गुणवचनेषु शब्दस्वभावनिबन्धनत्वात् लक्षणाया गुण
ब्दस्य गुणिनि वृत्तिप्रतीतेर्वाचकत्वशङ्कायां तन्निरासार्थं मतु
पान्वाख्यानं श्येनादिशब्दानां तु पदान्तरसामानाधिकरण्यनिब
नत्वात् मतुल्लोपानन्वाख्याने ऽपि वाचकत्वशङ्काभावात् तन्निरा
र्थमन्वाख्यानमनर्थकमित्याशयः। मत्वर्थलक्षणायां च श्रुत्यर्थस
वाक्यार्थान्वयित्वेनात्यागाद्वत्यर्थस्य प्रतीतिमात्रौपाधिकत्वेन वाक्
र्थान्वयाभावात् त्यागापत्तेर्मत्वर्थलक्षणैव ज्यायसीत्याह * किं च।
मत्वर्थस्य वैशिष्ट्यस्य यज्यन्वयमात्रात्सिद्धेः श्येनप्रातिपदि
तात्पर्याभावेन श्रुत्यर्थप्राधान्याविघातात् स्वार्थपरश्येनोपयिक
वा पाताख्यानान्वयासम्भवे ऽपि[1] यजिसामानाधिकरण्योत्तर
तदन्यथानुपपत्त्या लक्षणेति सामानाधिकरण्यरूपैकवाक्यवश
त्युक्तं गौणत्वे तु श्रुत्यर्थस्य वाक्यार्थानन्वयात् श्येनप्रातिपदि
तात्पर्यानुपपत्तेर्वत्यर्थ एव सादृश्ये तात्पर्यकल्पनां विनाख्यात
वायोगात् वत्यर्थाकल्पनापुरःसराख्यातान्वयसिद्ध्यर्थं पद
थामेवासौ श्रुत्यर्थतात्पर्यत्यागेन लक्षणीय इति श्रुत्यर्थबाधापत्तेर
र्थाद् दुर्बल इत्यर्थः। श्लोकं व्याचष्टे * गुणविधिपक्षे हीति
तेन श्येनादिनेति भाष्येण सौत्रं तच्छब्दं यस्मिन् गुणोपदेश

१ स्वार्थपरस्यैवाख्यातान्वयासंभवे ऽपीति २ पु० पा०।

[त्र]ानाद्य विधित्सितगुणपरामर्शिनमङ्गीकृत्य विशब्दं च भेदवा-
मङ्गीकृत्य तेन विधित्सितेन च श्येनादिरूपेण गुणेन भिन्नार्थ-
व्यपदेशः सङ्कीर्त्तनं यस्य श्येनादिपदस्य तदपि नामधेयमिति ना-
ग्रपदानुवृत्त्या सूत्रं योजितं तत्र कथं भिन्नार्थत्वावगतिरित्यपेक्षिते
ादिशब्दानां कर्मणि प्रवृत्तिनिमित्तप्रदर्शनार्थेन साहश्यव्यपदेशादि-
ेभाष्येणोक्तमार्थवादिकं श्येनसाहश्यमेव भिन्नार्थत्वावगताव-
ारणमिति प्रदर्शयन् सिद्धान्तमाह * तदिति * उपपत्तिरि-
ावुपशब्दस्य साहश्यार्थत्वदर्शनात् उपमीयते साहश्येनावगम्यते
ति व्युत्पत्त्या साहश्यावच्छेदकमुपमाशब्देनोक्तं तथा यद्वस्तु
ते तद्भिन्नया सत्या तस्माच्छ्येनद्रव्येणोपमानेनोपमितस्य श्ये-
यजेतेति श्येनशब्दार्थस्य श्येनद्रव्याद्भेदो ऽवसीयतइत्यर्थः ।
श्येनशब्दार्थस्य पक्षिविशेषस्योपमानात् पक्षिविशेषादभेदे ऽपि
ो यागस्य ततो भेदात्साहश्येन स्तुतिर्भविष्यतीत्याशङ्क्य विधे-
त्युक्तम् । एतदधिकरणपूर्वपक्षे यजिना ज्योतिष्टोममनूद्य तत्र
ादिगुणमात्रविधानमभ्युपगमात् तदेव स्तोतव्यं न याग इत्याश-
नतु स्तुतिः स्वरूपसत्यत्वानपेक्षणात् यथा कथं चिदुपपत्स्यते
ाशङ्क्य न हीत्युक्तं साहश्यद्वारा स्तुतिर्भेदाभावे साहश्यस्योपा-
ात्वेनापि वक्तुमशक्यत्वात् निरालम्बना स्यादित्याशयः । ननु
ं गगनाकारं सागरः सागरोपम इत्यादावभेदे ऽपि साहश्येन
ेतद्दृष्टस्याशङ्क्य * सदेत्युक्तम् * काल्पनिकभेदाश्रया स्तुतिर्गत्या
चिदङ्गीक्रियते न सर्वदेत्यर्थः । श्लोकं व्याचष्टे *
ादिवाक्येषु हीति * सदेति पदं शङ्कानिरासार्थत्वेनाथोच्यते-
देना व्याख्यातम् । श्रुतिर्हीति भाष्यं नामधेयत्वे वत्यर्थलक्षणया
र्थत्यागापत्तेरयुक्तमाशङ्क्योपमासामञ्जस्यपरत्वेन व्याचष्टे * ना-
यत्वे त्विति * लक्षणेति भाष्यं मत्वर्थलक्षणाया वत्यर्थलक्षणा-
याश्च तस्योक्तत्वादयुक्तमाशङ्क्य वत्यर्थलक्षणायाः पक्षद्वयसाम्ये-
र्येनुयोज्यत्वाद् गुणविधौ च काल्पनिकभेदाश्रयणत्वेनात्यन्ता-
ञ्जस्यात् मत्वर्थलक्षणादोषाधिक्याभिप्रायत्वेन व्याचष्टे * इतर-
हीति * सामानाधिकरण्यसिद्ध्यर्थं श्येनवता यागेनेति मत्व-
ावल्लक्षयितव्यः कर्माङ्गभूतस्य च श्येनस्य इतरश्येनैकजातीय-
भूयो ऽवयवसामान्ये योगो जात्यन्तरस्य तदिति भिन्नजातीया-
त्वेनोक्तस्य जातिसाहश्यस्याभावात् काल्पनिकभेदाश्रयणे ऽपि
णि व्यापृतस्य भ्रातृव्यादातृत्वायोगादभिचार्यस्य च यजमानभ्रा-
ग्रस्यादाने योग्यत्वस्याप्यभावात् साहश्यानुपपत्तेरर्थवादोक्तस्यापि

यस्तुतो सम्भवात्तदालम्बनसिद्ध्यर्थं भ्रातृव्यादानसाधनद्वारा तदङ्ग-भूते श्येने मत्वर्थो ऽपि लक्षयितव्य इत्यर्थः। ननु यागस्य भ्रातृव्यादानसाधनत्वेन श्येनसादृश्योपपत्तेर्विधेयश्येनस्तुत्यर्थायामिव वेतसावका-स्तुत्यर्था स्तुतिर्भविष्यतीत्याशङ्क्याह * न चेति * यागविधेर्निराक-र्तुमशक्यत्वात् स्तुतेर्नान्यत्र सञ्चारो युक्त इत्यर्थः। एतदेव विवृणोति
१ * अविधेयेति * ननु यागविधावपि तद्विशेषणतया द्रव्यस्यापि विधेयत्वोपपत्तेः स्तुतिभाक्त्वं भविष्यतीत्याशङ्क्य नामधेयत्वेन गति-सम्भवे विशिष्टविधिगौरवस्यानाश्रयणीयत्वात् द्रव्यस्याविधेयत्वमु-क्तं सामानाधिकरण्यार्थं च द्रव्येण मत्वर्थे यागं लक्षयित्वा याग-स्तुतिं द्रव्ये सञ्चारयितुं पुनरपि यागेन द्रव्यलक्षणाद्विप्रकर्षो ऽस्मिन् पक्षे स्यादित्याह * पुनरपि चेति * यथा च लौकिकप्रयोगात् श्येनशब्दस्य द्रव्यवचनत्वं मुख्यं तथा वैदिकात् सामानाधिकरण्या-द्यागवचनत्वमपि मुख्यं वक्तुं शक्यमिति श्रुतिहीति भाष्यं प्रौढ्या यथाश्रुतं व्याख्यातुमाह * समभिव्याहाराच्चेति * लक्षणेत्यादिभा-ष्यम् अन्यथा व्याचष्टे * विधौ चेति*गुणे श्येनशब्देन विहिते वि-धौ मत्वर्थलक्षणा स्यात् इत्येवमनेन भाष्येण व्याख्यातम् । एतदेव भाष्यं गुणशब्देषु मतुल्लोपस्य विहितत्वात् मत्वर्थलक्षणा युक्ता ना-न्यत्रेत्यन्यथा व्याख्यातुमाह * गुणेति * नन्विवलोपस्याप्यस्म-रणात् तदर्थलक्षणाप्ययुक्ता स्यादित्याशङ्क्याह * इवार्थस्त्विति * क्लृप्तकल्पाभिप्रायौ वा भाष्यगतौ श्रुतिलक्षणाशब्दावित्यन्यथा व्या-ख्यातुमाह * मत्वर्थलक्षणा त्विति * दोषान्तराण्यपि भाष्यगतेन लक्षणाशब्देनोपलक्षितानीति सूचयितुम् उद्भिदधिकरणवार्त्तिकोक्ता-न्यागं प्रति गुणविधावभिचरन्निति फलपदस्यानुवाद्यज्योतिष्टोमया-गविशेषणत्वासम्भवादानर्थक्यं सार्वकाम्यप्राप्तज्योतिष्टोमविशेषण-त्वे वाक्यभेदः प्रत्ययव्यापारविप्रकर्षः धातुपारार्थ्ये यागमा-त्रे च गुणविधौ उत्पत्तिविशिष्टेन सह विकल्पः फलविशिष्टयागे गुण-विधौ सामान्यशिष्टस्य सोमस्य विशेषविशिष्टेन श्येनादिना बाध इति दोषान् योजयति * पूर्वोक्तांश्चेति *

॥ अथ वाजपेयादिशब्दानां यागनामधेयताधिकरणम् ॥ ५ ॥

## नामधेये गुणश्रुतौ स्याद्विधानमिति चेत् ॥ ६ ॥

ननु किमत्र ज्योतिष्टोमयागानुवादेन वाजपेयलक्षणगुणवि-धिः पूर्वपक्ष्यते, गुणविशिष्टयागविधिर्वा, तत्राद्ये कल्पे ज्योतिष्टोम-क्रियातो वाजपेयक्रियाया भेदाभावाल्लिङ्गदर्शनसूत्रानुपपत्तिः । सा-

ाम्स्वाराज्यकामानुवादापत्तेश्च । फलसम्बन्धस्याविवक्षित-
ा सूत्रस्याप्यनुपपत्तिः । द्वितीयकल्पे तु मत्वर्थलक्षणा स्यात्
न्धेन मत्वर्थलक्षणापरिहारशङ्कायामुद्भिदादिष्वपि तन्त्रस-
ुपगमेन मत्वर्थलक्षणापरिहारोपपत्तेर्गुणविधित्वसम्भवात्
वसिद्धान्तः प्रत्युद्धियेत वाजं पेयमस्मिन्निति बहुव्रीहिणा
भाभ्युपगमे बहुव्रीह्यान्तर्णीतगुणसम्बन्धस्य कर्मण एव श्रु-
विधानादर्थाद् गुणविधाने ऽपि वचनव्यक्त्यन्यथात्वाभावा-
त्रानुपपत्तिस्तदवस्थितेत्याशङ्क्याह *तन्त्रसम्बन्धेनेति* वि-
ावपि तन्त्रसम्बन्धेन मत्वर्थलक्षणापरिहारशङ्कोद्भिदादि-
प्रसज्यमाना तदाक्षेपेण प्रत्यवस्थानाच्च दुष्यतीति ता-
। यागानुवादेन गुणविधावनूद्यमानस्य यागस्य फ-
ाद्धुमशक्यत्वादुभयसम्बन्धाभावेन तन्त्रत्वानुपपत्तेः । फ-
तयान्यतः प्राप्तस्य गुणवत्त्वाभिधानायावश्यं मत्वर्थलक्षणा-
शिष्टविधौ तु विध्युत्तरकालं तत्सामर्थ्यलभ्ये धात्वर्थस्य
त करणत्वे ऽर्थाक्षिप्ते च गुणं प्रति साध्यत्वे सत्यपि वि-
ावस्थायां कारकविभक्त्यभावाद्धातुतः स्वरूपमात्रेण प्रतीत-
म्बन्धो मत्वर्थलक्षणां विना ऽपि न विरुध्यते फलसम्ब-
ालं गुणसम्बन्धाभ्युपगमे फलसम्बन्धेन साधनत्वाक्षेपात्
साधनभूतेन गुणेन समत्वात् सम्बन्धो न युज्यते गुणस-
रकालं च फलसम्बन्धाभ्युपगमे गुणसम्बन्धेन साध्य-
् साध्यभूतेन फलेन न युज्येतेति युगपदुभयसम्ब-
नार्थं तन्त्रत्वमुक्तम् । आख्यातपदस्य तन्त्रेणोभयसम्बन्धो-
तेनैव हेतुना धात्वर्थस्य साध्यसाधनभावो भवन्न विरोत्स्य-
ौ तृतीयामङ्गीकृत्य योज्यम् । ननु वैरूप्यापत्तेर्मत्वर्थलक्षणां
सम्बन्धो न युक्त इत्याशङ्क्य तेनेत्युक्तं येन कारणेन धात्व-
ाध्यसाधनत्वनिरपेक्षस्य स्वरूपमात्रेण धातुनोक्तस्योभयस-
रकालमर्थादापन्नः साध्यसाधनभावो न विरुध्यते तेन का-
ापद्विधेयव्यापारोत्तरकालं तद्धेतुकसाध्यसाधनरूपेणोभा-
ार्थलक्षणया विनैव धात्वर्थस्य सम्बन्धत्वसिद्धिरित्यर्थः ।
न्धेन च विशिष्टविधावपि मत्वर्थलक्षणपरिहारसम्भवे
क्ये ऽपि चित्रात्वस्त्रीत्वविशिष्टयागविधानोपपत्तेः । स्त्री-
ागद्रव्यकत्वेन दैक्षसादृश्यात्तदीयेतिकर्तव्यतालाभेन नै-
ोपपत्तेर्न वाक्यभेदापत्तिः । आज्यैः स्तुवत इत्यादिष्वप्याज्या-
स्तुतिविधानोपपत्तेः पञ्चदशादिवाक्यैराज्याद्यनुवादेन सं-

यसाधनत्वनिरपेक्षस्य स्वरूपमात्रेणधातुनोक्तस्योभयसंबन्ध इ० २ पु० पा० ।

ख्यामात्रविधानाच्च वाक्यभेदापत्तिः सूर्याग्निवाक्ययोश्च देवताद्र
विशिष्टहोमान्तरविधायित्वोपपत्तेरग्निहोत्रवाक्याविहिते होमे शास्त्र
न्तरेणाग्नेः प्राप्त्यभावात्तत्प्रख्यता परिहर्तुं शक्या । श्येनादिवाक्येष्वा
श्येनादिवाक्यविहितस्य च द्रव्याविशिष्टस्य यागस्य श्येनादिद्रव्योपम
नेन स्तुत्युपपत्तेस्तद्व्यपदेशतापि परिहर्तुं शक्येति सूचितम् । यद्यपि ध
तादेः स्तुतावकरणत्वात्कारकविभक्तिसम्भवे चोपपदविभक्तित्वाश्र
यणस्यायुक्तत्वात् सहार्थे तृतीयाङ्गीकरणेनाज्यादिभिः सह स्तुवतः
त्येवमपि विशिष्टविधानं न युज्यते तथापि पञ्चदशादिवाक्येष्वेवाध्याहृ
तभवतिपराख्यातोक्ताया यागभावनायाः स्थापनाख्यधात्वर्थावच्छेद
भ्युपगमात्तस्य च देशानपेक्षस्यानुष्ठानाशक्तेर्विध्ययोगात् प्रकरण
गम्यस्तोत्रदेशान्विताज्यादिविध्यवगतेराज्यादिपदस्य प्रकरणप्राप्त
स्तोत्रेण वाक्योपात्तया च संख्यया सह तन्त्रेण सम्बन्धात् संख्य
विशिष्टघृतादिरूपैकार्थविधानोपपत्तेर्न वाक्यभेदापत्तिरिति दर्शि
तथेत्युक्तम् । आदिशब्दात्त्रिवृच्छब्दस्य बहिष्पवमानत्वयोगोक्त्यर्थः
र्वाक्षेपे सूत्रसामञ्जस्यप्रदर्शनार्थम् * तस्मादित्यनेन * सूत्रम् र
जितं मत्वर्थलक्षणापरिहारमात्रेणाक्षेपे सत्युद्भिदधिकरणानन्तरमे
तदधिकरणारम्भोपपत्तेरिहासङ्गतिमाशङ्क्य सर्वेत्युक्तम् । कथं वाक
भेदादिपरिहरणीयमित्यपेक्षिते ऽस्मदुक्तप्रकारसूचनार्थं यथासम
धमित्युक्तमिति । ननु पूर्वाधिकरणचतुष्टयाक्षेपेणैतदधिकरणार
सत्यपूर्ववाक्योदाहरणमनर्थकमित्याशङ्क्याह * तत्रेदमिति * व
पेयमिस्मिन्निति बहुव्रीहिणैव मत्वर्थलाभान्मत्वर्थलक्षणानापत्तेः पे
त्वस्य च वाजशब्दवाच्यान्नविशेषणत्वोपपत्तेः पानार्हत्वविशिष्टवा
रूपैकार्थविधानसम्भवाद्वाक्यभेदानापत्तेस्तत्प्रख्यान्यशास्त्रतद्व्यपदे
शयोश्चाभावात् पूर्वन्यायचतुष्टयेन वाजपेयशब्दस्य गुणविधित्वनि
रासिद्धेर्वैरूप्यापत्त्या तन्निरासायेदं वाक्यम् उदाहृतमित्यर्थः । य
द्युपदिष्टेषु धात्वर्थेपूपदेशसामर्थ्यात्करणत्वं प्रतीयते तेन चार्थात
त्तृव्यापारव्याप्यत्वरूपं साध्यत्वं कल्प्यते तथाप्युपदिश्यमानावस्थ
कारकविभक्त्यभावात् साध्यसाधनत्वशून्यरूपस्वरूपमात्रेण ध
नोक्तस्य धात्वर्थस्य तन्त्रसम्बन्धेन मत्वर्थलक्षणां विनैव गुणवि
नोपपत्तेर्नास्ति मत्वर्थलक्षणेति यदुक्तं तत्रैव वृद्धसम्मतिमाह
आह चेति * यद्वा करणभूतस्यापि च यागस्योत्पत्तिवाक्यावगतः
णत्वाक्षिप्तसाध्यांशानुवादेन गुणे ऽपि विधीयमानेन मत्वर्थलक्ष
ति चित्राधिकरणपूर्वपक्षवार्त्तिकोक्तन्यायेन यागानुवादेनापि गुण
धौ मत्वर्थलक्षणानापत्तेः किमिति विशिष्टविधिमभ्युपेत्य तन्त्र

ध्येन मत्वर्थलक्षणापरिहारक्लेशः क्रियतइत्याशङ्कानिरासार्थो ऽयं ोकः करणेषूपदिष्टेषु सत्सु याथार्थ्येसाध्यत्वकल्पना तस्यां च गु- वधाने मत्वर्थलक्षणा न नास्ति किं त्वस्त्येति द्वौ नञौ प्रकृत्यर्थं ायतः इति न्यायेन योज्यः। विधिसामर्थ्याद्धातोः साधनत्वरूपस्या- ातिपादकत्वावगतेस्तत्सिद्धये ऽर्थाक्षिप्तस्यापि साध्यत्वस्याशाब्द- ाच्छब्देन गुणेनान्वयानुपपत्तेरन्यथा च क्व चिदपि मत्वर्थलक्ष- नापत्तेरित्याशयः।

## तुल्यत्वात् क्रिययोर्न ॥ ७ ॥

नन्वेतल्लिङ्गोपन्यासात् वाजपेयवाक्यमेवात्रोदाहरणं प्रतीय- ्त्याशङ्क्याह * वाजपेये तावदिति * वक्ष्यमाणसूत्रोक्तवैरूप्यल- णन्यायमूलत्वाल्लिङ्गस्य न्यायस्य च सर्वसाधारण्यान्न लिङ्गमात्रेण ङ्कोचो युक्त इत्याशयः। भाष्यकृता सौत्रं नञं पूर्वपक्षनिरासा- ्वेन व्याख्याय गुणविशिष्टकर्मविधिपक्षे वाजपेयक्रियाया दर्शपूर्ण- ासक्रियया तुल्यत्वात् दार्शपौर्णमासिकविध्यन्तापत्तेर्दीक्ष्योपसद्द- ं न युक्तमिति पूर्वपक्षनिरासलिङ्गाभिधानार्थत्वेन च सूत्रं व्या- ाय नामधेयत्वे सत्यव्यक्तचोदितत्वेन ज्योतिष्टोमक्रियया तुल्यत्वा- ीक्षोपसद्दर्शनं युक्तमिति सिद्धान्तलिङ्गाभिधानार्थत्वेन व्याख्यातं त्र नामधेयपक्षवद् गुणविधिपक्षे ऽपि स्वार्थविहितदेवताशून्यत्वलक्ष- ाऽव्यक्तचोदितत्वसद्भावात् सौमिकविध्यन्तप्राप्त्युपपत्तेरौषधद्र- यकत्वेनेष्टिसादृश्ये ऽपि सत्यैष्टिको विध्यन्तः सौमिको वेति सन्देहे ीक्षोपसद्दर्शनात् सन्दिग्धेषु वाक्यशेषादिति न्यायेन सौमिकविध्य- तनिश्चयात् नानेन लिङ्गेन गुणविधित्वनिरासो नामधेयत्वं वा ाध्यतीत्याशङ्क्याह * वाजमिति * विप्रतिपत्तौ हविषा नियम्येत र्मणस्तदुपाख्यत्वादित्यष्टमाधिकरणन्यायेन द्रव्यसादृश्यस्य बली- ास्त्वाद्दीक्षोपसद्दर्शनस्यापि वा न्यायपूर्वत्वाद्यत्र नित्यानुवादव- ्ननानि स्युरिति विध्यन्ताधिकरणोक्तन्यायेन यथा सम्भवं परि- ारोपपत्तेरौषधिद्रव्यकत्वे सति द्रव्यसारूप्येण वाजपेयस्य दर्श- ूर्णमासाभ्यां समानत्वादिष्टिप्रकृतिकत्वं प्रसज्येतेत्यर्थः।

## ऐकशब्द्ये परार्थवत् ॥ ८ ॥

भाष्यकृता यदि गुणविशिष्टकर्म विधिः स्यात् ततः स्वा- र्थवत्परार्थवच्चाभिधानं प्रसज्येत तच्च यजेतेत्यस्य शब्दस्यै- कत्वाद्विप्रतिषिध्येतेति वदता गुणविशिष्टकर्मविधौ स्वार्थवत्

स्वविधानार्थवदपूर्वविधित्वेनोपादेयत्वेन गुणत्वेन चाभिहित याग्स्य परार्थवत् गुणविधानार्थवत् प्राप्तानुवादत्वेनोद्देश्यत्वेन प्र धान्येन च अभिधानमेकशब्दे सकृदुच्चरिते धातोर्न युक्तमिति पूर्व सूत्रगतस्य नञः काकाक्षिवदिहाप्यन्वयमङ्गीकृत्य विप्रतिषेधशब्दे न नञर्थव्याख्यानात् सूत्रं योजितं तत्र गुणप्रधानत्वाद्यनपेक्षस्वरू पमात्रेण धातुनोक्तस्य यागस्य पश्चाद्गुणप्रधानत्वादिरूपापत्तावा विधीयमानावस्थायामेकरूप्येण तन्त्रसम्बन्धोपपत्तेरुक्तत्वाद्विप्रति धासम्भवमाशङ्क्याह * तन्त्रत्वमिति * अयमाशयः । धात्वर्थस्य क्रियारूपत्वात् कर्मकारकेण तत्फलेन करणकारकेण च गुणेन स साक्षात् सम्बन्धायोगात् भावनाद्वारा ताभ्यां सम्बन्धो वाच्यः । चाकारकरूपस्य क्रियारूपया भावनयान्वयः सम्भवतीति भावनान्व यायावश्यं कारकरूपता धात्वर्थस्याभ्युपगन्तव्या अशाब्देन च कार कत्वेन शाब्दे व्यवहारे अन्वयायोगात् कारकत्वरूपेणैव धात्वर्थ भावनान्वयार्थं धातुनाभिधातव्यस्तत्र कर्मत्वेनाभिधाने फलसम्ब न्धायोगात् करणत्वेन चाभिधाने गुणसम्बन्धायोगात् तन्त्रसम्ब न्धायोगात्तन्त्रसम्बन्धानुपपत्तिरिति योज्यं चैवं यदि यः फलस साधनाकाङ्क्षापूरणलक्षणो धात्वर्थसम्बन्धेनोपकारः क्रियते स एव गुणस्यापि यो वा गुणस्य साध्याकाङ्क्षापूरणलक्षणः स ए कालस्यापि[1] ततो वैरूप्याभावात् तन्त्रत्वं युक्तं तदभावे त्वि हावृत्तेरुभयसम्बन्धो लक्षणद्योतको भवतीति नन्वृत्विजो वृणी ते ग्रहं सम्मार्ष्टीत्यादौ उपकारतुल्यत्वे ऽपि प्रत्येकं वाक्यप रिसमाप्तेरावृत्तिप्रसङ्गात् तन्त्रत्वं नास्तीत्याशङ्क्याह * द्रव्य हीति * सकृदुक्तस्यापि वरणसम्मार्गादेः सभामध्यस्थप्रदीप वत् प्रत्येकमुपकारकत्वेनान्वयोपपत्तेर्नाख्यातावृत्तिस्तत्र कल्प्येत्या शयः । एवं तर्ह्यरुणया पिङ्गाक्ष्यैकहायन्येति क्रयवदृत्विगादिसमु दाये ऽपि वाक्यपरिसमाप्तिः कस्मान्नेष्टेत्याशङ्क्याह * आख्यातगु णत्वेति * आख्यातेन च स्वार्थस्य गुणत्वप्राधान्यरूपेणानभिधाने प्र धानभूतेनर्त्विगादिना गुणभूतेन चारुण्यादिनान्वयायोगात् गुणत्व प्राधान्यरूपेण स्वार्थाभिधानद्योतनायाख्यातस्य गुणप्रधानतार्थगतो पचारेणोक्ता गुणभूतेन चरणादिना प्रधानभूतानामृत्विगादीनां स मुदायिकर्तुमशक्यत्वात् आख्याततन्त्रत्वे ऽपि प्रत्येकं वाक्यसमा प्तिरङ्गीकार्येत्याशयः । पूर्वसूत्रगतानुषक्तनञभिहितविप्रतिषेधविवर णार्थेन यदीति भाष्येण फलंप्रति विधेयतयोक्तस्य यागस्य गुणवि

१ फलस्यापीति २ पु० पा० ।

नायानुवाद्यतयाभिधानं न युक्तं तत्रोत्पत्तिविधिव्यापारपूर्वकत्वे-
ारविधिव्यापाराणां द्रव्यवत्फलस्याप्यनुत्पन्नया क्रिययान्वयायो-
त् उत्पन्नायाश्च विधानायोगात् पूर्वं फलसम्बन्धे ऽपि तद्विधाना-
यागस्यानुवाद्यत्वाद्विप्रतिषेधानुपपत्तिमाशङ्क्याह * तदिहेति *
श्च न फलसम्बन्धे यागस्यानुवाद्यतेत्याशयः। कथं विधेयत्वस्य
लत्वाभावापादकतेत्याशङ्क्याह * उद्दिश्यमानं हीति * यमर्थ-
धकृत्य प्रवर्त्तन्ते तत्प्रयोजनमिति नैयायिकोक्तलक्षणानुसारात्
शुद्देश्यप्रयोजनस्य फलत्वप्रसिद्धेर्विधेयत्वं च यागमनुतिष्ठता स्वा-
र्ग्यं कामयितव्यमित्युपादेयत्वापत्तेः। कृत्युद्देश्यत्वाभावात्फलत्वं
स्यात् प्रत्युत विधेयत्वादङ्गतैव स्यादित्यर्थः। एवं तर्हि फलस-
न्धवत् द्रव्यसम्बन्धे ऽपि यागस्यैव सन्निकृष्टतया विधेयत्वेनैक-
यात् तन्त्रत्वं युक्तमित्याशङ्क्याह * यागो ऽपीति * यद्यपि वि-
त्वं प्रत्ययोपात्तं न नामपदमृच्छतीत्याघाराग्निहोत्राधिकरणवा-
कोक्तन्यायेन सर्वत्र धात्वर्थावच्छिन्ना भावनैव विधेया तथापि
लं सिद्धवत्कृत्य यथापाद्यत्वेन यागो विधीयते नैवं द्रव्यं सिद्धव-
त्यापाद्यत्वेनासौ विधीयते निमित्तदेशकालसंस्कार्याणां पञ्चाना-
व सिद्धवत्कारोपपत्तेर्द्रव्यस्य च देशादिचतुष्टयान्तर्गत्यसम्भवा-
ारिशेष्यात्संस्कार्यत्वापत्तेस्तथा च सति तृतीयाबाधापत्तिरित्यर्थः।
तभाव्युपयोगाभावाच्च द्रव्यस्य च संस्कार्यता न युक्तेत्याह * न
ति * एवं यजेः तन्त्रेण फलद्रव्यपदसम्बन्धे पूर्वपक्ष्युक्ते निरस्ते
दि कश्चिद् द्रव्यपदस्येतराभ्यां तन्त्रसम्बन्धं ब्रूयात् तन्निरासायाह
एतेनेति * यागस्य द्रव्यं प्रत्युपादानस्य निरस्तत्वेन फलस्य च
गं प्रत्युपादानस्य निरासात् सुतरां द्रव्यं प्रत्यसम्भावनेत्यर्थः।
व्यस्यैवंभूतप्रत्युपादेयत्वेनैकरूप्यं फलं प्रत्युपादानस्य निराकरि-
माणत्वात् न सम्भवतीत्याशयः। नन्वेवं सति फलस्य सर्वप्रा-
न्येनैकरूप्यादितराभ्यां तन्त्रसम्बन्धो भविष्यतीत्याशङ्क्याह *
चेति * फलस्य त्वितरे प्रत्युपादानमनाशङ्क्यमेवेत्याशयः। ननु
था सोमेन यजेतेत्यादौ यागद्रव्ययोरेकस्यां भावनायामुपादानमि-
ते तथा फले ऽपि किं न स्यादित्याशङ्क्याह * एकेनेति * भा-
नायाः साध्यसाधनेतिकर्त्तव्यतारूपांशत्रयाकाङ्क्षत्वात् साधनाका-
यां धात्वर्थान्वयनिवृत्तायामपीतिकर्त्तव्यताकाङ्क्षायां द्रव्येणाप्य-
यो युक्तः। फलस्य तु साधनप्रतियोगिकसाध्यत्वासिद्ध्यर्थं साधन-
त्राकाङ्क्षत्वात् एकेन साधनेन नैराकाङ्क्ष्ये कृते ऽन्यस्य तदुद्देशे-
ाविधानात् न तादर्थ्येनापाद्यता युक्तेत्याशयः। ननु द्रव्यमप्यप्राप्त-

त्वादवश्यविधेयं तस्य फलार्थत्वाभावे कैमर्थ्येन विधिः
ङ्क्याह * यथेति * प्रतिपदाधिकरणभाष्योक्तन्यायेन
व्यं भविष्यतीत्यर्थः । नन्वेवमपि द्रव्येण विशेष्यमाण
फले विधानात् तन्त्रसम्बन्धाविरोध इत्याशङ्क्याह
फलसाधनतया विधीयमानस्य यागस्य तृतीयानिर्दिष्टे
त्वर्थलक्षणां विना विशेषणमशक्यत्वादिति भावः । मत्वर्थ
हारार्थं तु फले यागविधाने यागे च द्रव्यविधाने चा
वैरूप्यमपरिहार्यमित्याह * तत्रेति * नन्वर्थाद्यागस्य
साधनत्वापत्तौ द्रव्यसम्बन्धे च साध्यत्वापत्तावपि
पेणाभिधानान्न वैरूप्यापत्तिरित्याशङ्कां निराकर्त्तुं त
म्भवमुपसंहरति * ततश्चेति * भावनान्वयनिरपेक्षस्य
धातुमशक्यत्वात् अविधीयमानस्य च भावनान्वय
न्वयायोगाद्विधीयमानावस्थायामेव साधनरूपताभ्युपग
शाब्देन साध्यसाधनत्वरूपेण शाब्दे व्यवहारे ऽन्वयः
शब्देनैव साध्यसाधनरूपताभिधातव्येत्यपरिहार्यं वैरू
साध्यसाधनत्वरूपाभिधानस्य त्रिविधवैरूप्यापादकत्व
देयेत्युक्तं साध्यस्य तावत्प्रयोजनत्वात् प्राधान्यम्। साध
सिद्ध्यर्थत्वेन पारार्थ्यात् शेषत्वापरपर्यायं गुणत्वं प्रा
न्यस्य च कृत्युद्देश्यं विनानुपपत्तेरुद्देश्यत्वापादकत्वम्
देष्टुमशक्यत्वात् प्राप्तानुकीर्त्तनरूपानुवादापादकत्वम्
स्य शेषिपारतन्त्र्यरूपत्वात् पारतन्त्र्यापाद्यत्वलक्षणोप
कत्वम् । उपादेयत्वस्य विध्यधीनत्वात् विधेयत्वापाद
रुद्धत्रिकद्वयापत्तिः । देशकालयोर्विधेयगुणभावे ऽभ्युपा
त् प्राधान्यानुवाद्यत्वाभावे ऽपि चोद्देश्यत्वाभ्युपगमा
त्वस्योपादेयत्वापादकत्वमुद्देश्यत्वस्य चानुवाद्यत्वापाद
ङ्कानिवृत्त्यर्थं यागशब्दः देशकालयोः स्वभावसिद्धत्वेन
त् सिद्धवत् करणरूपमुद्देश्यत्वं प्रधानत्वं स्वाभाविक
ऽपि नापनीयते कर्मणस्तु स्वभावसिद्ध्यभावात् उभय
सम्भवे प्रतियोग्यन्वयानुरूपविवक्षोपपत्तेर्गुणत्वस्योप
कत्वं सिद्धवत्करणस्य च स्वयम्प्राप्त्यनापादकत्वे ऽप्य
द्धवत्कर्त्तुमशक्यत्वात् प्राप्त्यपेक्षत्वं युक्तमेवेत्याशयः
द्देश्यानूद्यप्रधानभूतापेक्षणादित्यपेक्षामात्रमुक्तम् । इह
क्यश्चेत्यत्र गदमदचरयमश्चानुपसर्गेइत्येतत्सूत्रगतानु

१ सिद्धसाध्यरूपेतरार्थः ।

या ऽनुपसर्गे सुबन्ते उपपदे वदतेःक्यप्प्रत्ययान्वाख्यानात् उप-
र्गयोगे क्यप्प्रत्ययाभावेन किन्निमित्तसम्प्रसारणाभावात् ऋहलो-
र्ण्यदिति सामान्यविहितण्यत्प्रत्ययप्राप्तेः प्रवाद्यापवाद्येतिवदनु-
द्येति रूपापत्तेर्नु क्षिप्रं वाद्यं नूद्यमिति क्षिप्रवाचिनि नुशब्दे निपा-
रूपे सुप्युपपदे वदः क्यपं कृत्वा ऽनुवाद्यस्य प्राप्त्यपेक्षत्वेन
प्रोद्यत्वायोगात् नूद्यं न भवतीत्यनूद्यमिति नञ्समासाश्रयणेन
रसिद्धिः कार्या। ननु यद्यपि फलेनोपादेयत्वादिरूपेण यागो
ह्यते गुणेन चोद्देश्यत्वादिरूपेण तथापि एकेन रूपेणा-
धानादितरेण चार्थात्प्रतीतस्योभयसम्बन्धो न विरोत्स्यते इ-
शङ्क्याह * एकेति * आभिधानिकं रूपं विना शाब्दे
वहारे ऽन्वयायोगाद्यागस्यैकरूपाभिधाने ऽप्यविशेषादुपादे-
त्वादिरूपेणाभिधानाश्रयणे गुणस्य यागेनासम्बन्धादुद्देश्यत्वा-
साधारणादिरूपेण फलस्यासम्बन्धस्तन्त्रत्वाभाव इत्यतीतानुषङ्गे-
समापनीयम्। तर्ह्युपादेयोद्देश्यत्वादिसाधारणरूपेणाभिधानादु-
यसम्बन्धो भविष्यतीत्याशङ्क्याह * तत्रेति * अनेन च सिध्येत
ति भाष्यं व्याख्यातम्। ननु सकृदुच्चरितस्यैवोभयसम्बन्धात् कथं
क्यभेदापत्तिरित्याशङ्क्याह * अवश्यं हीति * सकृदुच्चरिते चा-
मन् विवक्षैकैव दृश्यतइति अनेन न्यायेन सकृदुच्चरितस्य विरु-
नेकरूपाभिधानपरत्वायोगाद्यत्र गुणसम्बन्धे यागस्योद्दिश्यमाना-
रूपमभिधेयं यत्र च फलसम्बन्धे यागस्योपादीयमानाद्यात्मकता-
धेया तत्राख्यातपदावृत्त्या स्वाराज्यकामो यजेत वाजपेयेन यजेते-
द्वे वाक्ये कल्पनीये स्यातामित्यर्थः। भावनायाः सर्वत्रैकरूप्या-
न्त्रेणानेकसम्बन्धसम्भवे ऽपि भावनासम्बन्धोत्तरकाले धात्वर्थस्य
रकसम्बन्धालोचनकाले वैरूप्यापत्तिरिति सूचयितुम् * याग-
त्युक्तम्। नन्वित्याशङ्काभाष्यमाख्यातैक्येनैकवाक्यतायाः स्पष्ट-
ादयुक्तमाशङ्क्य व्याचष्टे * ननु चेति * तन्त्रेणाख्यातस्योभयस-
न्धाद्वाक्यार्थद्वित्वेन वाक्यद्वित्वाभिधानमित्यर्थः। नैतदेवमिति
रिहारभाष्यमाख्यातद्वयाभावे ऽपि तन्त्रसम्बन्धोपपत्तेः। पदचतु-
याप्रसङ्गादयुक्तमाशङ्क्याह * चत्वारीति * उच्यतइत्याशङ्काभि-
ायविवरणार्थं भाष्यं व्याचष्टे * परस्य त्विति * विभक्त्यभावा- ३
र्मकरणत्वनिरपेक्षस्वरूपमात्रेण धात्वर्थस्य धातुना ऽभिधाना-
त्याशयः। कारकरूपाभिधानं विना क्रियारूपया भावनया सह
न्वयायोगात्कारकरूपेणैव धात्वर्थो ऽभिधातव्यः। ततश्च धात्वर्था-
धानलक्षणाकार्यप्राधान्यात्कार्यगतकर्मकरणत्वाभिधानवैरूप्याद्यागं

यागेनेति शब्दरूपस्य वैरूप्यापत्तिरिति परिहाराभिप्रायविवरण तदस्तीति भाष्यं व्याचष्टे * नैतदस्तीति * यद्यपि विभक्त्यभ तोः स्वतो रूपभेदो नास्ति तथापि यद्यप्राप्तो धात्वर्थस्तदा विधिः प्राप्ते त्वनुवाद इति विध्यनुवादरूपत्वात् अर्थतो प्रसज्येतेति भाष्यार्थः । विधिशब्देनोपादानगुणत्वे ऽनुवा च्योद्देश्यत्वप्राधान्ये ऽप्युपलक्षिते वाजपेयेन गुणेन सम्बन्धं मनूद्येतेत्यनेन यद् गुणसम्बन्धे धात्वर्थस्यानुवाद्यत्वं वैरूप नायोक्तं तदाक्षेपार्थमाहेति भाष्यं व्याचष्टे * आहेति * जपेयशब्दस्याख्यातकृत्यवत्प्रवर्त्तनानभिधायित्वे ऽपि विधेयत्र त्वाद्विधायकत्वं भविष्यतीत्याशङ्क्य भाष्यकृता नामशब्दा व्यापार एव साक्षाद्विधेयः न च नामशब्दस्यार्थो व्यापार इ नन्वाख्यातशब्दार्थव्यापारद्वारा नामशब्दार्थस्य विधेयत्वं तीत्याशङ्क्य यश्चात्रेत्युक्तं पूर्वापरीभूतानिष्पन्नरूपत्वात् धात्व व्यापारः धातोश्चानुवाद्यत्वसमर्पकत्वस्य त्वयोक्तत्वात्तस्या पारो न विधातुं शक्यतइत्याशयः । अतः फलसम्बन्धवद् सम्बन्धो ऽप्याख्यातस्य विधिरूपत्वात् न वैरूप्यापत्तिरिति यार्थः यदीति समाधानभाष्यस्यायमाशयः धात्वर्थानुवादे ऽ यार्थस्य भावनायाः सर्वकारकानुरञ्जनसहत्वात् फलविशिष्टत्व णविशिष्टतयाप्यैकरूप्येण विधानात्तद्द्वारा नामशब्दार्थस्यापि वि पपत्तेर्न विध्यभावदोषापत्तिः।यदि तु भावनातिरस्कारेण साक्ष त्वर्थस्यैव फलवद् गुणविधिरिष्यते ततस्तस्य व्यापारात्मकत्वे ऽ त्पादानुकूलस्वभावत्वाभावेनाक्रियारूपस्यैकरूप्येणातुल्यरूपानं रकानुरञ्जनासहत्वात् फलं प्रति गुणभूतस्य गुणं प्रति प्रा योगेनोभयं प्रति गुणत्वापत्तेः प्रत्येकं वाक्यपरिसमाप्तिप्रसङ्गा गुणयोः परस्परानन्वयः स्यादिति तत्र वाजपेयाख्यद्रव्यं प्रति गुणत्वे द्रव्यस्य यागसंस्कार्यत्वापत्तेस्तृतीयानुपपत्तिदोषः ष्योक्त इत्याशङ्क्याह * यदीति * स्वग्रन्थानादरकारणमि यः । ननु यथा व्रीहिविधेर्दर्शपूर्णमासविध्येकत्वाभावे ऽपि प्र दर्शपूर्णमासयोरेव व्रीहीणामवरोधात् व्यवस्था तथा वाजपे स्वाराज्यकामयागएव प्रकरणेनावरोधात् व्यवस्था भविष्यत ङ्गार्थं प्रकरणादिति भाष्यं व्याचष्टे * प्रकरणेति * नेति रभाष्यमपूर्वसाधनांशलक्षणार्थं वाक्यस्य प्रकरणापेक्षित्वा धोपपत्तेरयुक्तमाशङ्क्य व्याचष्टे * नेति * यद्वाजपेयेन तत् स्वाराज्यकामा यत् स्वाराज्यकामो यजेत तद्वाजपेयेने

शेषितेन यागेनेतरस्य सम्बन्धे ज्ञातवद्विशेषणत्वेनोपादाना-
वच्च विधानाद्वैरूप्यलक्षणवाक्यभेदापत्तेस्तन्त्रसम्बन्धे परस्प-
क्षेति भाष्यतात्पर्यव्याख्या तत्रैवं परस्परनैरपेक्ष्ये सति गुणो
यमानः सार्वत्रिको ऽपूर्वयागसम्बन्धो वेति मात्रशब्दस्य द्वेधा
या प्रकरणानिष्पत्तेः शुद्धयजिसम्बन्धादित्याशङ्कापरिहारः अ-
याशङ्काभाष्यं स्पष्टत्वादव्याख्याय नेत्यादिपरिहारान्तरभाष्यं
ष्टे * तेनेति *

॥ अथाग्नेयादीनां नामनामताधिकरणम् ॥ ६ ॥

## तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थेन चेद-न्येन शिष्टाः ॥ ९ ॥

अत्र भाष्यकृताग्नेयादयः शब्दा गुणविधयः कर्मनामधेयानि
चिन्ता दर्शिता साष्टाकपालादिसामानाधिकरण्यात् कर्मणश्चा-
ान्मन्त्रतस्तु विरोधे स्यात् इत्यत्र चाग्नेयाग्नीषोमीययोर्ब्राह्मणा-
पर्ययेण मन्त्रक्रमाम्नानस्य वक्ष्यमाणत्वेन क्रमविनियुक्तमन्त्रा-
त् श्रुत्यविनियुक्तानां च मन्त्राणां स्वार्थसमवायकल्पकत्वाभा-
मान्त्रवर्णिकदेवताकल्पनानुपपत्तेर्द्रव्यदेवतासंयोगेनापि यागस्य
यतुमशक्यत्वात् आग्नेयं चतुर्द्धा करोतीत्यादिव्यवहारस्य द्रव्य-
त्वेन कर्मनामानपेक्षत्वात् निष्प्रयोजनत्वेनाप्याग्नेयादिशब्दस्य
मत्वशङ्कानुपपत्तेरयुक्तेत्याशङ्क्याह * एवमिति * अयमाशयः
करणे तन्त्रसम्बन्धानुपपत्त्या विशिष्टविधौ निरस्ते क्व चिद्-
त्तेन प्रत्ययेन विशिष्टविधिर्नसम्भवतीत्याशङ्क्य विशिष्टविधिव्यु-
ायैतदधिकरणं तद्बुत्पादनस्य चोत्पत्तिशिष्टबलीयस्त्वसिद्धिः
नं सोमेन यजेतेति सोमविशिष्टे यागे श्रुतेन प्रत्ययेन विहिते
याप्राप्तत्वेनानुवादायोगात् विशिष्टस्य च द्रव्यान्तरानाकाङ्क्ष-
त्पत्तिशिष्टसोमावरुद्धे ज्योतिष्टोमे खनित्रादिद्रव्यान्तरं वि-
शक्यमित्युद्भिदादिशब्दानां नामधेयत्वं सिध्यति श्रुतेन तु प्र-
शुद्धं यागं विधायोपपदानर्थक्यपरिजिहीर्षया तदर्थविधा-
श्रुतप्रत्ययान्तरकल्पने श्रुतस्यैव वा वृत्तिकल्पने शुद्धयागानुवा-
रस्युत्पन्नशिष्टयोर्वाक्यीयत्वाविशेषात्तुल्यबलत्वेन विकल्पोप-
मधेयत्वं न सिध्यतीत्युद्भिदादिशब्दानामुत्पत्तिशिष्टगुणाव-
यागे गुणान्तरविधायकत्वासम्भवान्नामधेयत्वं द्रढयितुं
विधिरिह व्युत्पाद्यते सर्वे चात्र विशिष्टविधयः उदाह-

रणं तत्र सन्निकृष्टविध्यसम्भवनिबन्धनत्वाद्विप्रकृष्टविधेर्विशिष्टा
धौ च सन्निकृष्टविप्रकृष्टयोर्विशेष्यविशेषणयोर्युगपद्विधेयत्वात्
न्निकृष्टविधानार्थं तस्य विधेयत्वसम्भवो विप्रकृष्टविधानार्थं न
सम्भवो ऽभ्युपगन्तव्यः स्यादिति युगपद्विरुद्धसम्भवाऽसम्भवा
गात् न क्वचित्सकृच्छ्रुतेन प्रत्ययेन विशिष्टविधिः सम्भवतीति प्र
तत्त्यागादिकर्मतद्विशेषणभूताश्च सोमादयो गुणा युगपद्विधीयेरा
ति प्रतिज्ञाय शुद्धस्य कर्मणो ऽनुष्ठानाशक्तेर्विधानासम्भवाद्वि
नार्थे लिङ्प्रत्यये विशेषणविशेष्यविधिविभागाभावादिति हेतुरु
एवं तर्ह्यंशत्रयोपेताया भावनायाः सर्वत्रानुष्ठानयोग्यत्वेन विधेयत
द्वाक्यान्तरगतानामप्यङ्गानां प्रधानविधिनैव विधेयत्वापत्तेरुत्प
त्पन्नशिष्टविवेको न स्यादित्याशङ्क्य न चेदन्येन शिष्टा इत्युक्तं
च्चित्केन च्चित्कथं च्चित् कुर्यादिति सर्वत्र सामान्यतः साध्यसा
नेतिकर्त्तव्यतान्वितभावनाविधाने ऽपि विशेषाकाङ्क्षायां वाक्यान्त
विहितविशेषलाभेनोपपन्नस्य प्रधानविधायिनः प्रत्ययस्य तद्विध
क्लेशाङ्गीकरणायोगात् स्ववाक्यगतविशेषविधानमात्रपर्यवसानं
पत्तेरुत्पत्त्युत्पन्नविशिष्टविवेकाविरोध इत्याशयः । अतः परमार्थ
विशिष्टविधिव्युत्पादनायैवैतदधिकरणम् तथापि पूर्वापवादत्वेन
ङ्गतिं वक्तुं भाष्यकृता गुणविधयः कर्मनामधेयानि वेति विच
दर्शित इत्यपवादशब्देन सूचितं । नामधेयत्वाशङ्कायाश्चेह निर्वि
त्वात्तदपवादो ऽनर्थक इति तद्द्वारा नामधेयकार्यस्य गुणफल
बन्धादेरपवादो ऽयमिति नामधेयकार्यशब्देन सूचितम् । नामधे
भावे ऽप्याग्नेयं चतुर्द्धा करोतीत्यादिव्यवहारोपपत्तेश्चशब्देनाग्
दिशब्दे गुणविधिनामधेयचिन्तायाः निष्प्रयोजनत्वं सूचितम् । उ
दादिशब्देषु हि गुणविधित्वे खनित्रादिना यष्टव्यं नामधेयत्वे
मेनैवेति चिन्ताप्रयोजनं चित्राशब्देष्वप्येवं स्पष्टमेव प्रयोजनं त
ख्याविचारे ऽप्यग्निहोत्रशब्दस्य गुणविधित्वे दर्विहोमेष्वविहित
वताकेष्वग्निर्देवता नामत्वे मान्त्रवर्णिकी आघारशब्दस्य तु गुण
धित्वे द्रवद्रव्यमात्रेणोपांशुयाजः कार्यो नामत्वे त्वाज्येनैवेति प्रयो
नमाग्नेयादिशब्दस्य तु गुणविधिनामधेयत्वयोर्न प्रयोजनविशे
ऽस्तीत्यपवादत्वे सङ्गतिप्रदर्शनमात्रार्थः । सन्देहवेलायां नामधे
क्षोपन्यासो ऽत एवानेकगुणोपादानात् गुणविध्यसम्भव एव पू
क्षितः । सिद्धान्ते ऽपि गुणविधित्वसमर्थनमात्रं कृतं न नामत्वं
राकृतं गुणविध्यसम्भवस्य चाधिकरणपञ्चकोक्तस्यापवादायै
धिकरणे गुणविध्यसम्भवे त्वाग्नेयादिशब्दस्यानर्थक्यपरिहारा

त्या यथा कथं चिन्नामत्वं शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमु-
ांशुयाजः पादावग्नीषोमीय इत्यादि व्यवहारसिद्ध्यर्थमेष्टव्यमिति
र्शयितुं नामधेयत्वोपन्यास इति द्रष्टव्यम्। ननु समाप्तायां नामधेयत्व-
चिन्तायाम् अपवादप्रस्तावस्योचितत्वात् दर्विहोमपदमविचार्यापवा-
ो न युक्त इत्याशङ्कते *कस्मादिति* वैश्वदेवपदस्य तु नामत्वमङ्गी-
कृत्य गुणार्थताप्यस्ति नास्तीति वैश्वदेवाधिकरणे चिन्तेत्यभिप्रेत्य त-
च्चिन्तेहानाशङ्किता समिदादिपदानामपि तत्प्रख्यन्यायान्नामत्वे स-
येव पार्वणशब्दस्य कर्मनामधेयस्यापि कालाभीज्या समुदायाभीज्या
ति विचारेण देवताविधित्वावसायात्तन्न्यायेन देवताविधित्वमङ्गी-
कृत्य प्रकृतसमिदादिशब्दवाच्यदेवतासंस्कारार्थाः प्रयाजा इत्याश-
ङ्क्य द्वितीयान्तत्वेन देवताविधित्वायोगात् मान्त्रवर्णिकसमिदादि-
देवतायोगेन यागेषु लक्षणया समिदादिशब्दप्रवृत्तेर्मन्त्रवर्णेभ्यश्चा-
ुर्वाणां देवतानामेव यागार्थत्वप्रतीतेर्न देवतासंस्कारार्थतेति नवमे
क्ष्यमाणत्वात् नेह तच्चिन्ताशङ्किता। दर्विहोमपदं किं गुणविधिः
र्मनामधेयं वेत्यष्टमे विचारयिष्यमाणमिहैव कस्मान्न विचारितमि-
ाशङ्कितम्। लौकिकहोमेष्वाचारतस्त्वग्बिलया मूलदण्डया दर्व्या
ुहोतीति स्मृत्या च विधित्सितस्य दर्विलक्षणस्य गुणस्य प्राप्तेः पु-
ो ऽनुवाक्यामनुयाज्यया जुहोति सदेवत्वायेति विध्येकवाक्यतया
ार्थवादत्वेनोपयुक्तस्य समासान्निःकृष्य दर्विपदस्य तद्विधायित्वम-
ङ्गीकृत्य स्मृतिमूलत्वकल्पनायोगात्तत्प्रख्यन्यायेनैव नामधेयत्वं सि-
द्धं वैदिकेष्वपि स्रुवेण जुहोति चमसेन जुहोतीति साक्षाद्विहितेन
स्रुवादिना सह समासान्निष्कृष्य विधेयत्वेन कल्प्यमानाया दर्वे-
र्विकल्पायोगाच्छास्त्रान्तरेण वैपरीत्यप्राप्तेस्तत्प्रापणस्यासम्भवेन वै-
यर्थ्यापत्तेस्तेनैव च सिद्धमित्याभिप्रेत्य परिहरति * विचारितमिति*
एवं त्वाष्टमिकस्य गुणविधिनामधेयविचारस्य पौनरुक्त्यापत्तेरपरि-
तोषादन्यथा परिहरति * विध्युद्देशगतानामिति * ततश्च विध्यु-
द्देशगतानां नामधेयविचारस्य समाप्तत्वाद्युक्तो ऽपवाद इत्याशयः
अर्थवादगतानामपि तुल्यन्यायतया सिद्धस्य नामधेयत्वस्य किं लौ-
किकानामेवैतन्नामधेयमुत अलौकिकानां वैदिकानां तत्रापि किं यज-
तिचोदनानामप्युत जुहोतिचोदनानामेवेति विशेषविचारार्थं स्मारण
मितीहाप्यपरितोषादन्यथा परिहरति * सिद्धे वेति * ननु विशेष-
विचारे गुणविध्याशङ्का न युक्तेत्याशङ्क्याह * या त्विति * परि- ३
चोदनामात्रत्वोपपादनायात्राधिकरणमध्यशब्दः तत्र हि दर्विहोमो

१ अनूच्य याज्यया जुहोतीति २ पु० पा०।

यज्ञाभिधानं होमसंयोगादिति सूत्रेण होमपदेनास्य समासपद
संयोगात्तत्र च होमस्य प्राधान्यात्तद्वाची दर्विहोमशब्द इति
शब्दलक्षितकर्मनामधेयत्वं प्रस्तुत्य तद्विशेषे ऽपेक्षिते स लौकि
नां स्यात् कर्त्तुस्तदाख्यत्वादित्यनेन स्मार्त्ताष्टकादिकर्त्तरि दर्विहो
कसमाख्यानात् स्मार्त्तानामेवैतन्नामेति पूर्वपक्षं कृत्वा सर्वेषां
दर्शनाद्वा ऽस्तु होमे इत्यनेन वैदिके ऽपि वास्तु होमे यदेकया जुहु
द् दर्विहोमं कुर्यादिति दर्विहोमशब्दप्रयोगात् वैदिकानां चैतन्न
कत्वाभावे सत्येकया स्रुचा दर्विहोमशब्दप्रयोगानुपपत्तिप्रसङ्
होमशब्दस्य च सामान्याभिधायित्वात्सर्वेषां नामेति सिद्धान्
तत्रापि विशेषापेक्षायां यजतिचोदनानामपि दर्शपूर्णमासादे
चतुरवत्तादिवाक्यैर्होमत्वापत्तेस्तेषामप्येतन्नामेति प्राप्ते जुहोति
दनानां चातत्संयोगादित्यनेन होमशब्दसंयोगात् होमनामत्वप्रत
र्यजतिचोदनानां च देवतोद्देशद्रव्यत्यागमात्रेण पर्यवसानाच्चतु
त्तादिवाक्यैर्यागीयद्रव्यप्रतिपत्त्यर्थं प्रक्षेपविधाने ऽपि होमत्वा
त्तेर्जुहोतिचोदनानामेव दर्विहोमशब्दो नामेति सिद्धान्तयित्वा द्र
पदेशाद्वा गुणाभिधानं स्यादित्यनेन दर्विहोमशब्दात्पात्ररूपद्रव्य
देशप्रतीतेर्गुणविधिरित्याशङ्क्य न लौकिकानामाचारग्रहणात् श
वतां चान्यार्थविधानात् इत्यनेन लौकिकेष्वाचारेषु दर्व्या गृ
त्त्वाद्वैदिकेषु चान्येषां स्रुवादीनां पात्राणां होमनार्थितानाम
ङ्क्तितानां विधानाद्दर्विसमासान्निष्कृष्य विधानं न युक्तमित्याश
निराकृत्य नामधेयत्वमुपसंहृते ननु विशेषविचारो ऽपीहैव नाम
चिन्ताधिकारात्कर्त्तुं युक्तो नाष्टमे विशेषातिदेशलक्षणत्वात् त
त्याशङ्क्याह * सर्वमेवेति * लक्षणान्तरगोचरो ऽपि विच
प्रसङ्गाल्लक्षणान्तरे क्रियमाणो न दोषमावहतीत्याशयः । कथं
प्रसङ्ग इत्यपेक्षायामाह * पूर्ववदिति * अविहितेतिकर्त्तव्यत
ष्वतिदेशेनेतिकर्त्तव्यताप्राप्ता युक्तायां दर्विहोमेष्वविहितेतिक
व्यताकेष्वपि नातिदेशेनेतिकर्त्तव्यता प्राप्तिरस्तीत्यपवादार्थं किं द
होमाः कुतश्चिद्धर्मग्राहित्वात् पूर्ववन्तो ऽथ पूर्वा इति चिन्ताम
कृत्य सर्वेषां जुहोतिचोदितानामपूर्वत्वसिद्ध्यर्थं विशेषचिन्तेह
आग्नेयादिवाक्येषु कर्माश्रवणात् नाग्नेयादिशब्दानां तन्नामत
द्व्युक्तेत्याशङ्कते * केनेति * तत्र शिरो वा एतद्यज्ञस्य यदा
इति यज्ञावयवस्तुत्या प्रसिद्धयागनामोपांशुयाजशब्दसाहचर्या
यागनामत्वप्रतीतेर्व्युत्क्रमाम्नातानामष्टाकपालादीनां लिङ्गदर्शन
कस्यां चिच्छाखायां क्रमाम्नानं भविष्यतीत्यारोप्य मान्त्रवर्णि

वतान्वयेन यागकल्पनोपपादनार्थं प्रकाशनार्हानुष्ठेयक्रियां विना प्रकाशकमन्त्रान्वयायोगादष्टाकपालादीनामप्राप्तत्वेन विधेयत्वावसायात् विधेश्च भावनैकगोचरत्वात् तदाक्षेपकत्वेनाष्टाकपालादिवाक्येषु भावनाप्रतीतिं तावदाह * तदिति * भावनानां चावच्छेदकधात्वर्थविशेषापेक्षायां यागाख्यधात्वर्थान्वयसिद्धये ऽग्न्यादिदेवत्यमन्त्रान्वयं दर्शयितुमाह * तासां चेति*आनन्तर्यमचोदनेत्यानन्तर्यलक्षणस्य क्रमस्याविनियोजकत्वाभ्युपगमात् पाठसादृश्यलक्षणक्रमप्रतिपत्त्यर्थः स्थानशब्दः यागाङ्गमन्त्रवाचियाज्यानुवाक्यासमाख्ययापि यागाक्षेपसूचनार्थं याज्यानुवाक्यायुगलानीत्युक्तम् ननु श्रुत्यविनियुक्तानां मन्त्राणां करणत्वानवगमाददृष्टार्थत्वेनाप्यङ्गत्वोपपत्तेः स्वार्थसमवायकत्वाभावाच्च तत्प्रतिपाद्यस्याग्न्यादेः क्रियाङ्गत्वसिद्धिरित्याशङ्क्योपांशुयाजे याज्यानुवाक्यायुगलानां क्रमविनियुक्तानामपि देवताकल्पकत्वदर्शनात् तत्सामान्यमात्रेणापि देवताकल्पकत्वसम्भवं दर्शयितुमाह * तानीति * ननूपांशुयाजे यजिना विहितस्य यागस्य देवताकाङ्क्षत्वाद्यथाकथंचिदुपस्थापितदेवताग्रहणं युक्तम्। इह तु यज्यश्रवणेनानाकाङ्क्षिताया देवतायास्तत्सम्बन्धप्रमाणतद्धिताद्यभावेन युक्ता कल्पनेत्याशङ्क्याघारादिवद्यज्यश्रवणे ऽपि क्रियातत्समवेतार्थप्रकाशनेन मन्त्राणां क्रियाङ्गतेति सामान्यतो दृष्टेनाग्न्यादेः क्रियाङ्गत्वमुपपादयति * न हीत्यादिना * क्रियाङ्गमित्यन्तेन नन्वग्न्यादेः क्रियान्वये देवतात्वावगतिः कथमित्याशङ्क्याह * न चेति * अग्निर्मूर्द्धेत्यादिमन्त्रेष्वग्न्यादीनां प्राधान्येनाभिधानाद्यमर्थं प्राधान्येन मन्त्रो ऽभिदधाति सापि देवतेति लक्षणेन देवतात्वावसायात् कर्मस्वपि देवतात्वावगतिरित्यर्थः। नकेवलं मन्त्रेष्वग्न्यादीनां देवतात्वात् कर्मस्वपि देवतात्वं किं त्वष्टाकपालादिशब्दानामनेकत्र पुरोडाशशब्दसामानाधिकरण्यदर्शनादिहापि ते पुरोडाशं कूर्मभूतं सर्पन्तमपश्यन्नित्यष्टाकपालवाक्यशेषात् पुरोडाशपरत्वावगतेः पुरोडाशादीनां च वृद्धव्यवहारात् धानाः करम्भः परिवापः पुरोडाशः पयस्येत्येष वै यज्ञो हविःपङ्क्तिरित्यादिलिङ्गाच्च हविष्ट्वप्रसिद्धेर्हविःशब्दस्य चार्चिशुचिहुसृपिछादिभ्य इसिरिति जुहोतेरौणादिके कर्मणि इसिप्रत्यये कृते हूयतइत्येतस्मिन्नर्थे हविःशब्दव्युत्पत्तेर्देवतां च विना होमायोगात् द्रव्याकाङ्क्षावशादग्न्यादेर्देवतात्वावगतिरित्याह * पुरोडाशादिभिरिति * जुहोत्युत्पन्नस्यापि हविःशब्दस्याहूयमाने ऽपि द्रव्ये हवींष्यासादयतीति प्रयोगदर्शनात् तादर्थ्यनिमित्तत्वाप्रतीतेरजुहो-

तिचोदिते कर्मणि होमस्यैव यागीयद्रव्यसंस्कारार्थत्वेन द्रव्यस्य
मार्थत्वायोगात् यागार्थद्रव्यवाची हविःशब्द इति मत्वा देवतान्व
विनापि द्रव्यान्वयमात्राद्यागानुमानसूचनार्थं यागेत्युक्तम् । नन्व
सत्यपि देवतान्वये कथं यागकल्पनं कथं च सत्स्वपि यागेष्वा
यादिशब्दानां नामतेत्याशङ्क्याह * इतीति * यजतिस्तु द्रव्यफ
भोक्तृत्वसंयोगादित्यत्र द्रव्यदेवतान्वयेन यागकल्पनस्य वक्ष्यमा
त्वाद्विधित्सितस्य च गुणस्यान्यतः प्राप्तौ नामत्वस्योक्तत्वात् उभ
सिद्धिरिति भावः । नन्वष्टाकपालादिवाक्यान्याग्नेयादिशब्दैर्विना प
वस्यन्ति न वा तत्रापर्यवसाने स्वार्थासमाप्तस्य वाक्यस्य वाक्यान्तर
न्वयायोगात् मन्त्रान्वयाभावे तत्प्रतिपाद्यदेवतान्वयकल्प्ययाग
सिद्धिः । पर्यवसाने त्वाग्नेयादिशब्दस्यानन्वयान्नामत्वानुपपत्तिरित्
शङ्क्याश्रुतयागनामत्वाशङ्कासम्भवे ऽपि च चतुरवत्तं जुहोतीति
तद्धोमनामत्वेन पूर्वपक्षो भविष्यतीत्याह * अथ वेति * चतुरव
वाक्याद्धोमनिष्पत्तावपि आग्नेयादिशब्दानां कथं तन्नामतेत्याश
क्रमविनियुक्तमन्त्रवशात् देवताप्राप्तेस्तत्प्रख्यन्यायेनैवेति दर्शि
तथैवेत्युक्तम् । सकृच्छ्रवणेन होमैक्यान्मन्त्राणां च बहुत्वाद्विसंख्यत
न क्रमानुपपत्तिमाशङ्क्य यावद्द्रव्यमित्युक्तम् । कानि द्रव्याणीत्य
क्षिते ऽष्टाकपालादीनां सम्बन्धिनां होमानामित्युक्तं कथं चतुरव
वाक्यस्याष्टाकपालादिविषयतेत्याशङ्क्याष्टाकपालादीनां चतुरवत्त
क्ता तदुपपादनार्थं द्विरिति वाक्याद्द्व्यवदानसिद्धिरुक्ता तस्याष्टा
पालादिविषयत्वोपपादनार्थं हविष्ट्वादित्युक्तम् । एवमपि चतुरव
निष्पत्तिः कथमित्यपेक्षिते चोदनान्तरेणेत्युक्तम् । ननूपस्तृणात्यभि
रयतीति चोदनान्तरेणोपस्तरणाभिघारणयोर्ग्रहणे ऽपि तयोरुपस्त
णाभिघारणयोरुपस्तृणन्नभिघार्याज्यस्य यजेतेति ध्रौवाज्यसाध
त्वेनाष्टाकपालादीनां कथं चतुरवत्ततेत्याशङ्क्य तत्संस्कारार्थत्यु
दशमे कृष्णलचरावुपस्तरणाभिघारणयोरर्थलोपेन बाधं वक्तुं
वा संसर्गार्थनिवृत्तित्वात् तस्मादाप्तिसमर्थत्वमिति सिद्धान्तस
हविषः स्रुक्संसर्गस्योपस्तरणाभिघारणयोर्निवर्त्यत्वेन प्रयोजन
कृष्णले च विशदत्वेन स्वत एव निवृत्तेश्चत्वारि चत्वारि कृष
लान्वद्याति चतुरवत्तस्याप्त्यै इति चोपस्तरणाभिघारणसाध्यस्य
तुरवत्तत्वसम्पादनस्यान्येनाप्तेस्तदकरणसमर्थनादकरणं तयोरि
वक्ष्यमाणत्वाद्धविषः स्रुच्यसंसर्गलक्षणसंस्कारार्थत्वमनयोरवस
यतइत्याशयः । नन्वग्नीषोमीयब्राह्मणस्य प्राक्पाठादाग्नेयब्राह्मण
च पश्चात्पाठाद्याज्यानुवाक्यायुगलयोश्च ब्राह्मणक्रमविपर्ययेण

ठादविद्यमानकर्माम्नानाध्यारोपेणात्यन्तक्लिष्टनामत्वाशङ्का न युक्तेत्याशङ्क्य * आहैवं चेति * प्राप्ते कर्मण्याग्नेयादिवाक्यैर्द्रव्यदेवताद्यनेकगुणविधाने चोदिते हि तदर्थत्वात् तस्य तस्योपादिश्यतेत्यनेन वाक्यभेददोषापत्तिः। विशिष्टविधाने तु सन्निकृष्टविप्रकृष्टविशेषणविशेष्यरूपानेकार्थविधानापत्तेस्तत्र च सन्निकृष्टविधानासम्भवनिमित्तत्वाद्विप्रकृष्टविधानस्य युगपत्सन्निकृष्टविधानसम्भवासम्भवाभ्युपगमदोषसम्भवाद् गुणविध्यसम्भवमात्रमत्र पूर्वपक्षिणोऽभिमतं तथा च सत्याग्नेयादिशब्दानर्थक्यापत्तेस्तत्परिहारार्थं यथाकथञ्चिन्नामधेयत्वाभिधानमित्याशयः। एवं नामधेयत्वे सत्याग्नेयादिशब्दस्य गुणविधित्वाभावान्न सन्निकृष्टविप्रकृष्टविशेष्यविशेषणरूपानेकार्थविधिनिमित्तो युगपत् सन्निकृष्टविप्रकृष्टविधिसम्भवासम्भवाभ्युपगमदोषो भविष्यत्येतदर्थं नामधेयत्वं यथाकथञ्चिदुक्तं न तु पूर्वपक्षिणोऽभिमतमित्यर्थः। पूर्वपक्षभाष्यं चानेन व्याख्यातं तत्र च विशिष्टविधेः सिद्धान्तिनोऽभिमतत्वात् विशेष्यस्य यागस्याश्रुतत्वेन द्रव्यदेवतासम्बन्धलक्षणगुणविधिकल्प्यत्वात् श्रुत्या गुणमात्रविधिं मत्वा गुणे विधिशब्दः तस्मिन्सत्यनेको विशेषणविशेष्यरूपोऽर्थोऽभिधीयते तत्र च सन्निकृष्टविध्यसम्भवनिमित्तत्वाद्विप्रकृष्टविधेर्युगपत्सन्निकृष्टविशेष्यविधिसम्भवासम्भवाभ्युपगमदोषापत्तिरित्युक्तम्। ननु विशेष्यस्य यागस्याश्रुतत्वात् कथं गुणविधौ सति विशेषणविशेष्यरूपानेकार्थविधिः स्यादित्याशङ्क्याग्निर्देवता पुरोडाशो द्रव्यमिति द्रव्यदेवतासम्बन्धलक्षणगुणविधिद्वारेत्युक्तमिति भाष्यं योज्यम्। एतच्च वार्त्तिककृताधाराग्निहोत्राधिकरणे परदौर्बल्यवतोऽष्टौ श्रुतिप्रकारान् परीक्षाञ्चिराकुर्वता विशिष्टविधेरत्यन्तक्लिष्टत्वं तृतीयस्थानानिवेशासम्भवोपपादनार्थं वक्ष्यमाणत्वान्नेह प्रपञ्चितमित्यनवद्यम्। सूत्रं योजयन् सिद्धान्तमाह * तथेति * यत्र पुनरन्येन वचनेन शिष्टा गुणा भवन्तीति भाष्याद्विशेषणस्यैवान्यतः प्राप्तावविधेयत्वं विशेष्यस्य त्वन्यतः प्राप्तावपि सन्निरपेक्षविशेषणविध्ययोगात् विधेयतेत्याभाति तच्च सर्वतो पदार्थसङ्क्रान्तविधिशक्तौ धात्वर्थानुवादाभ्युपगमात् अयुक्तमित्याशङ्क्य गुणग्रहणस्योपलक्षणार्थत्वं दर्शयितुं यागइत्युक्तम्। न चेदिति सूत्रावयवे प्राप्तेर्विधेयत्वहेतुत्वाभिधानार्थं इति प्राग्व्याख्यया सूचितम्। तच्च कर्मेति भाष्यात् तच्च गुणाश्चेत्येकवचनाध्याहारेण विग्रहः प्रतिभाति तत्रोदाहरणबहुत्वेन तुल्यत्वात्क्रिययोर्नेति सूत्रोक्तक्रियापरामर्शितच्छब्दोपात्तयागबहुत्वोपपत्तेः श्रुतस्यैव बहुवचनस्य तन्त्रेणोभयान्वये

सम्भवत्यश्रुतैकवचनाध्याहारायोगात् अयुक्तमित्याशङ्क्य न इ
हुवचनान्तविग्रहो दर्शितः । सोमेन यजेतेत्यादौ गुणकर्मणो
पदोपादाने ऽपि तावच्छुद्धस्य कर्मणो ऽशक्यानुष्ठानत्वेन वि
गात्सन्निकृष्टस्य शुद्धरूपेण विध्यसम्भवात् विशिष्टरूपेण च
धात् रूपभेदेन युगपत्सम्भवासम्भवविरोधपरिहारोपपत्तेर्विशि
धेरदुष्टत्वाभिधानार्थमविभागाद्विधानार्थ इति सूत्रावयवविः
लिङ्प्रत्यये गुणकर्मविध्योरविभागादित्येव व्याख्यातुमविभक्त
सकृदुच्चरितेन विधिनेत्युक्तम्। आग्नेयादिवाक्ये त्वेकस्मिन्
धेयसमर्पके तद्धितान्ते शब्दे गुणकर्मविभागादित्येवं व्याख्या
धेयसमर्पकेण तद्धितान्तेन शब्देन सह गुणकर्मशब्दानामवि
त्सन्निकर्षविप्रकर्षविरोधाभावाभिधानायैकशब्दोपादानप्रदर्शन
तद्धितान्तेन विधिनेति योज्यम्। हिशब्दः पादपूरणार्थः । ननु :
वर्णिकदेवतासंयोगान्यथानुपपत्त्या यागप्राप्तेरसिद्धान्याशिष्ट
शङ्कां निराकरोति * नेति * संस्कारशब्देन स्मृतिहेतुर
रोद्बोधार्थो मन्त्रो विवक्षितः । अष्टाकपालादिद्रव्यं देवतासं
अग्निर्मूर्द्धेत्यादिमन्त्रः तत्संयोगेन यो ऽत्र यागविधिः पूर्वपक्षि
स नोपपद्यतइत्यर्थः । यदपि पुरोडाशादीनां हविष्ट्वाद्याग
नत्वप्रतीतेर्यागानुमानमुक्तं तदपि निराकरिष्यतइति तावत्
सूचितम्। यद्वा यागविधिस्तावन्नोपपद्यते ततश्च तन्नामत्वमन
च्चतुरवत्तचोदनाविहितहोमतापि निराकरिष्यतइत्येवं ताव
योज्यः । एतदेव प्रश्नपूर्वकमुपपादयति * कथमिति * ननु
वनाकाङ्क्षायां मन्त्रसम्बन्धस्योक्तत्वात् स्वरूपेण द्रव्यस्य मन्
ङ्क्षानिरासो न युक्त इत्याशङ्क्याह * नेति * भावनाया :
त्वात् विध्यश्रवणाच्च तद्दर्शनापि कल्पयितुमशक्यत्वात् अप्रा
पि च द्रव्यस्य भावनानिवेशं विना विधेयत्वायोगात् विभि
भावनाकल्पने विधेरपि भावनाकल्प्यत्वेनेतरेतराश्रयं वक्तुं
भावाभिधानं कथं चिद्भावनाकल्पने ऽपि धात्वर्थानवच्छिन्न।
त्या अनुष्ठातुमशक्यत्वान्मन्त्राकाङ्क्षानुपपत्तेर्मन्त्रान्वयादेव
क्यदेवतासंयोगेन यागाख्यधात्वर्थकल्पने चानुष्ठेयत्वासिद्धये
र्थविशेषावच्छेदाधीनत्वात् मन्त्रान्वयस्येतरेतराश्रयापत्तेर्द्रव्यर
रूपेणैवाकाङ्क्षापद्यतइति सूचनार्थः काश्चच्छब्दः । सामान्यतं
पुरुषव्यापारो न विधीयते किमुत धात्वर्थावच्छिन्न इत्यर्थः ।
ष्टाकपालभवनस्यासिद्धत्वेनानुष्ठेयत्वान्मन्त्राकाङ्क्षा भविष्यः
शङ्क्या न चेत्युक्तम् । भवनक्रियायामसिद्धस्यैव कर्तृनियमात् ि

त्मकपुरुषानुष्ठेयत्वाद्योगाश्च स्मारकापेक्षेत्याशयः। ननु द्रव्यस्यैव लद्ध्यनुष्ठानात्प्राक् असिद्धत्वेनानुष्ठानापाद्यत्वात् स्मारकापेक्षा भविष्यतीत्याशङ्क्य नापीत्युक्तम्। तस्याव्यापारात्मकत्वेनानुनिष्पादितत्पत्त्यादिवत् साध्यत्वे ऽपि अननुष्ठेयत्वात् न स्मारकापेक्षेत्याशयः। कथं चिरसत्यामपि द्रव्यस्य मन्त्राकाङ्क्षायां अग्न्यादिवाचिना मन्त्रेण सह सम्बन्धो न प्रतीयतइत्येवमुत्तराद्धं व्याचष्टे * न चेति * ननु पुरोडाशादिभिर्हविरात्मकत्वाद्यागसाधनत्वेनावगम्यमानदेवतापेक्षणात्तद्वाचिमन्त्राणामन्वयो भविष्यतीत्याशङ्क्याह * न चेति* पुरोडाशे यागः साध्यत्वेन नावधारित इत्युक्ते यागसम्बन्धाश्रयणे ऽपि हविः शब्दाभिधेयत्वात् यागानुमानं भविष्यतीत्याशङ्क्य हविष्ट्वमपि नावधारितमित्युक्तम्। श्लोकं व्याचष्टे *यदि हीति* भावनोपादाने सति तस्या धात्वर्थविशेषापेक्षायां कथञ्चिद्यागत्वावधारणं शक्येत न तु तदस्तीति दर्शयितुं भवतिशब्देन भावनानुपादानाद्यागत्वं नोक्तमित्युक्तं हविः शब्दस्तु यागान्वयं विना न क चिदस्तीत्यर्थः। हविष्ट्वाभावादेव चतुरवत्तचोदनाविहितहोमनामतापि निरस्तेत्याह * एतेनेति * नन्वाघारादिवद्यागत्वावधारणात् प्रागपि मान्त्रवर्णिकदेवताकल्पनं भविष्यतीत्याशङ्क्याह * आघारादिषु त्विति * उपांशुयाजे तु वाचनिकविनियोगाभावे ऽपि यागात्मकत्वात् सामान्यतो देवतान्वये सिद्धे मन्त्रवर्णाद्धि शेषमात्रावधारणं युक्तं न तु श्रुत्यविनियुक्तस्य मन्त्रस्यापूर्वदेवताकल्पकत्वं क चिदस्तीत्याशयः। तद्धितेन देवतान्वयसम्भवे तद्धितचतुर्थीमन्त्रवर्णानां देवतान्वयप्रमाणानां मध्ये जघन्येन मन्त्रवर्णेन देवताकल्पनं न युक्तमित्याह * सर्वजघन्यश्चेति * न च तद्धितसम्भवे मन्त्रवर्णस्य प्रामाण्यमप्यस्तीत्याह * अन्यथेति * मन्त्राङ्गत्वान्यथानुपपत्तिस्तद्धितेन देवतान्वये ऽवधारिते नास्तीत्यर्थः। ननु तद्धितेन देवतान्वयावगमे लिङ्गादेव मन्त्रप्राप्तेर्मन्त्राम्नानमनर्थकं स्यादित्याशङ्कां निराकुर्वन् सिद्धान्तमुपसंहरति * तस्मादिति * सामान्यतो ऽग्निदेवत्यमन्त्रप्राप्तावप्यग्निर्मूर्द्धेत्यादिमन्त्रविशेषार्थं क्रमाम्नानमित्यर्थः। अविद्यमानमपि क्रमं पूर्वपक्ष्यारोपितमभ्युपगम्य परिहारसामर्थ्यप्रदर्शनार्थः क्रमशब्दः। ननु तद्धितेन देवतान्वये कृते ऽपि तस्याविधायकत्वाद्विधेयत्वमित्ययुक्तमित्याशङ्क्य भवति इति पञ्चमलकाररूपेणाख्यातशब्देनेत्युक्तम्। नन्वस्य वर्त्तमानापदेशसन्दिग्धत्वात् पञ्चमलकारत्वनिश्चयः कथमित्याशङ्क्यार्थवादेत्युक्तम्, अङ्गिरसो वा इत उत्तमाः स्वर्गं लोकमायन्नित्याद्यर्थवादान्वयान्यथानुपपत्त्या

विधित्वनिश्चयः । अन्यथास्यार्थवादत्वासम्भवेनानर्थक्यापत्ते
शयः । नन्वेवं सति विधिगौरवक्लेशः स्यादित्याशङ्क्याह * अ
न्येति * विधानार्थ इति भाष्यं तद्धितस्याख्यातकृत्यत्वाभावे
धायकत्वादयुक्तमाशङ्क्य व्याचष्टे * विधानार्थेति * अविभा
ति सूत्रावयवव्याख्यानार्थमविभक्ता हीति भाष्यावयवं तद्धि
गत्यभिधानार्थत्वेन तत्सापेक्षत्वात् पश्चाद्व्याचष्टे * सर्वं चे
एतद्देवोपपादयति * देवतेति * नन्वाग्नेयतेति भावप्रत्ययात्
न्धस्यापि अविभक्ततोक्ता प्रतिभाति सा च सम्बन्धवाच्यत्वस
रुणाधिकरणे निषेत्स्यमानत्वादयुक्तेत्याशङ्क्याह * सम्बन्धो
ति * नन्वेवमप्यष्टाकपालशब्दवाच्यस्याष्टत्वकपालतदधिकर
स्कारोपसर्ज्जनस्य पुरोडाशस्याग्नेयादिशब्दानन्तर्गतत्वादष्टाक
स्येति विशेषणाभिधानमयुक्तमित्याशङ्क्याह * तदिति * नैव
व्यमात्रस्य तद्धितैर्देवतोच्यते अस्य शब्दाभिधेयस्य विशेषस्यैव
तेत्यनेन न्यायेनाष्टाकपालपदार्थो ऽपि तद्धितान्त एव शब्दान्तर्ग
त्यर्थः । स एष इति भाष्येण यागस्य तद्धितान्तर्गतिरुक्ता सा
विनापि यथाकथञ्चित्सिद्धाग्नेयत्वसङ्कीर्त्तनोपपत्तेरयुक्तेत्याशङ्
यस्य भाव्यमानत्वं यागं विना न सिध्यतीति दर्शयितुं भावना
तिपूर्वकं यागान्तर्गतिमाह * द्रव्यस्येति * अन्तर्गतेति शेषः
व्यापारस्य भावनाया यागावच्छेदकत्वाद्विशेषो न व्यक्ति
सर्वान्तर्गत्यभिधानस्य पूर्वपक्षोक्तवाक्यभेदपरिहारं प्रयोजनम
ततश्चेति * तद्धितान्तपदेनोपात्तस्यार्थस्य विधिनेति विग्रहः
पदोपादानाभावाच्च वाक्यभेदापत्तिरित्याशयः । नन्वेकपदोपा
नेकार्थस्य विधानाच्चित्रत्वस्त्रीत्वविधाविव वाक्यभेदः स्यादि
शङ्क्याह * भावनेति * यागो हि विहितो भवतीति भाष्ये
शब्दो यागावच्छिन्नभावनाभिप्रायेणेत्याशयः । स एवमिति
व्याचष्टे * तत इति * ननु सम्बन्धो हीति भाष्येण सम्बन्धवि
न्यथानुपपत्त्या सम्बन्धिनोर्द्रव्यदेवतयोर्विधानाक्षेपस्योक्तत्वात
त्यविरुद्धं भावनाविधानाभिधानमित्याशङ्क्याह * सर्वेति *
र्क्षात्वर्थकारकैः सम्बध्यत इति कर्मव्युत्पत्त्या भावना सम्बन्ध
नोक्तेरर्थः । किमित्येवं व्याख्यायत इत्यपेक्षायामाह * न ही
विशिष्टविधावप्यन्यतो लभ्यमानस्याविधानाच्च गौरवलक्षण
भेदापत्तिरित्यभिधानार्थो न चेदन्येन शिष्टा इति सूत्रावयवो
स्वित्यादिभाष्येणानेककपालाधिकरणसंस्कारस्य पुरोडाशाद
प्रसिद्धेस्ते पुरोडाशं कूर्मं भूत्वा सर्पन्तमपश्यन्नित्यर्थवादाव

पुरोडाशस्याष्टसंख्यकपालाधिकरणसंस्कारविधिनैव प्राप्तेः कपालानां तद्बहुत्वस्य तदधिकरणस्य संस्कारस्य च कपालेषु अपयतीति वाक्यान्तरादेव प्राप्तेर्बहुत्वविशिष्टत्वमात्रविशिष्टद्रव्यविशेषाग्न्याख्यदेवताविशिष्टयागभावनाविधानान्नातिगौरवापत्तिरित्येवं व्याख्यातः । तन्नाविभागादित्यावृत्तिलक्षणवाक्यभेदपरिहारार्थो हेतुः । न चेदिति तु गौरवलक्षणवाक्यभेदपरिहारार्थ इति हेतुद्वयस्य विविक्तविषयत्वं दर्शयितुमाह * अविभागादिति * तद्धितान्तोक्तेन देवताविशिष्टेन द्रव्येण सम्बन्धस्य विभागात् सम्बन्धं विना वैशिष्ट्यासिद्धेरर्थात् सम्बन्धाक्षेपः । न क्रियाकर्तृसम्बन्धादृते सम्बन्धनं क चिदित्यनेन च न्यायेन क्रियागर्भत्वात्सर्वसम्बन्धानां देवतोद्देशपूर्वकद्रव्यत्यागाच्च विना द्रव्यस्य देवतान्वयायोगाद्यागाख्यस्य क्रियाविशेषस्य द्रव्यदेवतासम्बन्धाविभागात्तेनार्थादाक्षेपः । यागस्य चाभावितस्यानिष्पत्तेर्भावनाया यागाविभागात्तेनार्थादाक्षेप इत्यर्थः । अन्यथानुपपत्त्यधीनत्वाच्चार्थाक्षेपस्यान्यतः प्राप्तस्य कपालादेरनाक्षेपान्नातिगौरवापत्तिरित्यदुष्टो विशिष्टविधिरित्याशयः । यत्तु विधित्सितस्यान्यतः प्राप्तौ तद्वाचिनः शब्दस्य नामधेयतेति एतदर्थपरत्वेन न चेदित्यवयवस्य पाठपूर्वकं व्याख्यानान्तरं भाष्यकृता कृतं तन्नामधेयत्वस्य पूर्वपक्षिणोऽप्यनभिमतत्वात्तत्प्रख्यं चान्यशास्त्रमित्यनेन च पौनरुक्त्यापत्तेरयुक्तमित्युपेक्षितं वार्त्तिककृतेति विशिष्टविधिव्युत्पादनार्थतैवास्याधिकरणस्यावसीयते ॥

॥ बर्हिरादिशब्दानां जातिवाचिताधिकरणम् ॥ ७ ॥

## बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥

बर्हिरादिशब्दो लवनादिसंस्कारनिमित्तः कुशत्वादिजातिनिमित्तो वेति चिन्तायाः प्रकृतगुणविधिनामधेयचिन्तारूपत्वाभावात् पूर्वाधिकरणकृतविशिष्टविधिव्युत्पादनवच्च तच्छेषत्वाभावाच्च प्रकरणासङ्गतिरित्याशङ्क्य प्रासङ्गिकीं प्रकरणसङ्गतिमाह * नामधेयेति * अनन्तरसङ्गतिस्त्वाग्नेयादिशब्दानां देवतोद्देशपूर्वकद्रव्यत्यागात्मकयागाख्यक्रियागर्भसम्बन्धनिमित्तदेवताविशिष्टद्रव्यवाचित्वात्तद्द्वारेण क्रियानिमित्तत्वेऽभिहिते बर्हिरादिशब्दानामपि संस्कारात्मकक्रियानिमित्ततास्त्युत नेति विचारात् स्पष्टैवेति नोक्ता पुरोडाशोदाहरणमुत्सूत्रत्वादयुक्तमाशङ्क्याह * तुल्यहेतुत्वादिति * यूपादिवद्वचनव्यक्तिविपर्ययाश्रयणसम्भवासम्भवमस्य सन्देहहेतोः

१ असंख्येति २ पु० पा० ।

संस्कृतप्रयोगबलीयस्त्वस्य च पूर्वपक्षहेतोः संस्कारनिमित्त
परस्पराश्रयपरिहारासम्भवस्य च सिद्धान्तहेतोस्तुल्यत्वात
बर्हिराज्यग्रहणमुपलक्षणार्थमित्याशयः । सर्वत्रेति भाष्या
संस्कृतप्रयोगस्य सार्वत्रिकत्वं पूर्वपक्षोपपत्तित्वेनोक्तं नासंस्कृ
त्यनेन चासंस्कृतप्रयोगाभावः तदुभयमप्ययाज्ञिकदेशे संस्कृतं
योगाभावादसंस्कृतेष्वपि च कस्मिंश्चिद्देशे प्रयोगादयुक्तम
व्याचक्षाणः पूर्वपक्षमाह * तत्रेति * याज्ञिकप्रयोगो
विवक्षितः सर्वे च याज्ञिकाः संस्कृतेष्वेव प्रयुञ्जते नास
ष्वित्याशयः । तस्य बलीयस्त्वाय शास्त्रस्था वेत्युक्तं यश्चासं
क्व चित्प्रयोगः स प्रादेशिकत्वेनाशिष्टस्थत्वेन च दौर्बल्यात्साद
पत्तेर्न याज्ञिकप्रयोगस्य विगीतत्वापादने शक्त इत्येवमर्थत्वेन
संस्कृतेष्वपीत्याशङ्कानिरासार्थं सादृश्यादिति भाष्यं व्याख्या
गीतत्वादित्युक्तम् । ननु बर्हिराद्यनुवादेन विधीयमानस्य संस
प्राक्सिद्धबर्हिराद्यपेक्षत्वेनेतरेतराश्रयापत्तेर्न बर्हिरादिशब्द
३०५।१ निमित्तता युक्तेत्याशङ्क्याह * तथा हीति * क्व चिद्देशे पुरो
दिशब्दैर्व्यवहारे सत्यप्यभियुक्तजने लोक्यते दृश्यते शब्दार्थ
न्धो ऽनेनेति व्युत्पत्त्या लोकशब्देन विवक्षिते व्यवहाराभाव
ष्टप्रयोगविरोधिच्चाशिष्टप्रयोगस्याप्रामाण्यात् यद् बर्हिस्तल्लुना
द्विवचनव्यक्त्यनुपपत्तेर्यल्लूयते तद् बर्हिरित्यादिविपरीतवच
त्त्याश्रयणात् । पुरोडाशादिशब्दानां संस्कारहेतुतेत्यर्थः । र
पलाशे बध्नातीति प्रकृत्य यूपं छिनत्तीति श्रवणाच्छेदनस्य
शाविषयत्वावधारणाच्छेदनसंस्कृतपलाशनामत्वं यूपशब्द
सीयते तथाऽपि दर्भैस्तृणीत हरितैः सुपर्णैरिति बर्हिस्त
मन्त्रे कुशवाचिदर्भशब्दश्रवणाद् बर्हिःशब्दस्य लवनादिसंस्कृत
नामत्वावधारणात् पिष्टानि संयौति पिण्डं करोतीत्यादिश्र
पुरोडाशशब्दस्य प्रथनादिसंस्कृतपिष्टपिण्डनामत्वावधारणा
नादीनां च घृतविषयत्वं कथं चित्तुत्प्रेक्ष्याज्यशब्दस्योत्पवन
स्कृतघृतनामत्वावधारणाद्यूपादिवद्वचनव्यक्तिविपर्ययाश्रवणा
मिति दृष्टान्तेन सूचितम् । संस्काररहिते कुशादिजातिमात्रे ब
दिशब्दस्य क्व चित्प्रयुक्तस्य संस्कृतेष्वपि जात्यनपगमेन लाक्ष
संस्कारशब्द इत्येवं सूत्रव्याख्यानार्थमेवं प्राप्तइति भाष्यं व
* तदिति * शास्त्रस्य शब्दार्थसम्बन्धहेतुत्वाभावेन लोकप्र
पेक्षत्वात् प्रादेशिकस्यापि प्रयोगस्य शास्त्रस्थप्रसिद्ध्या बाध्यो
इति वक्तुमेकदेशे ऽपीत्युक्तम् । श्लोकं व्याचष्टे * य एवेति *

ामिति भाष्येणासंस्कृतेषु सादृश्यात् प्रयोगोपपत्तिः पूर्वपक्षोक्तामभाष्य तच्चेत्यनेन संस्कारशब्दत्वप्रसिद्धेः सादृश्यनिमित्तप्रयोगकपना न युक्तेत्युक्तं तदतिस्पष्टत्वाद्व्याख्याय कथमिति प्रश्नपूर्वकमसिद्ध्युपपादनार्थं बर्हिरित्यादिभाष्यम् असंस्कृतेष्वपि शब्दलाभात्यनेनैकस्या युक्तेरुक्तत्वाद्युक्त्यन्तरसमुच्चयार्थत्वेन व्याचष्टे * किंति * जातिशब्दत्वाभावे पलाशे बध्नातीतिवत्कुशादीनामप्रकृतन संस्काराऽन्वयाज्ञानात् मन्त्रस्य च श्रुत्यविनियुक्तत्वेन स्वार्थसवायकल्पकत्वानुपपत्तेस्तद्दर्शनेनापि लवनादेः कुशविषयत्वाज्ञाना उत्पवनादीनां च घृतविषयत्वोत्प्रेक्षायाः प्रापकानुपलम्भेनायोात् प्रथनादीनां च कथं चित्पिष्टपिण्डविषयत्वज्ञानसम्भवे ऽपि युकार्यपशुबन्धनार्थत्वेनेव पलाशस्य पुरोडाशकार्ययागार्थत्वेन पिपिण्डस्याश्रवणात् पुरोडाशशब्दस्य प्रथनादिसंस्कृतपिष्टपिण्डनात्वावधारणाशक्तेः पिष्टपिण्डप्रथनादिना पुरोडाशीकुर्यादिति वचनप्रस्याश्रयणायोगात् यद्बर्हिरादिशब्दवाच्यं तत्संस्कार्यं यच्च संस्क्रियते तद्बर्हिरादिशब्दवाच्यमितीतरेतराश्रयस्यापरिहार्यत्वात् लोकसम्मतं बर्हिरादिशब्दानां जातिशब्दत्वं तद्भेदेनापि लवनादिस्कारे विधेये तस्मात्प्रागाश्रितमित्यर्थः । ननु संस्कारविधितः ागेव केन चिद्यदृच्छया लवनादिभिः संस्कृतं कुशादि बर्हिरादिशरुद्दिश्य संस्कारविधिसम्भवान्नेतरेतराश्रयापत्तिरित्याशङ्कायाः ।ाश्रयस्यापूर्वसाधनत्वयोग्यताधानार्थायाः क्रियायाः संस्कारशवाच्यत्वाद्विध्यभावे च तादर्थ्यानवधारणात् यदृच्छया लवनादौ ते ऽपि संस्कारस्याभावेन बर्हिरादिशब्दप्रवृत्तौ निमित्तत्वायोगात् परिहार्यमितरेतराश्रयमित्येवं निरासार्थं न चेत्यादिभाष्यम् आङ्कायास्तुच्छत्वे ऽप्यन्वयव्यतिरेकाभ्यां जातिवाचित्वावधारणामिति व्याख्यातुमाह * तेनेति * येन संस्कारात् प्रागेव जातिब्दत्वमाश्रितं तेनेत्यर्थः । सत्यां च गतौ वचनव्यक्तिविपर्ययाङ्गीरणमयुक्तमित्यभिधानार्थं न चालौकिकानां सतामित्यादिभाष्यं ाचष्टे * न चेति * श्लोकं व्याचष्टे * यदि हीति * प्रयोजनाष्यं तु निर्देशात्तु विकृतावपूर्वस्यानधिकार इत्यत्र तृतीये यूपावटस्तणार्थे बर्हिषि यूपाञ्जनार्थे चाज्ये लवनोत्पवनादयः संस्काराः कार्या वेति विचारेण स्पष्टीकरिष्यमाणत्वान्न व्याख्यातम् ।

॥ प्रोक्षण्यादिशब्दानां यौगिकताधिकरणम् ॥ ८ ॥

प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥

अत्र भाष्यकृता प्रोक्षणीशब्दः किमुत्पवनादिसंस्कारनि
जातिनिमित्तो वा प्रकर्षसेचनलक्षणक्रियानिमित्तो वेति स
पूर्वन्यायनिरस्तमपि संस्कारशब्दत्वमत्तच्छब्द इति पूर्वसूत्राव
ह सूत्रे प्रतिज्ञाकाङ्क्षयानुषक्तेन निरासप्रतीतेस्तद्व्याख्यानायो
सपूर्वकं निरस्य पूर्वन्यायेनैव जातिशब्दत्वं प्राप्तं यौगिकत्वेनाप
तद्रथकाराधिकरणे समुदायप्रसिद्धेरवयवप्रसिद्धितो बलीयस्त्व
क्ष्यमाणत्वात् विरुद्धमित्याशङ्कते * नन्विति * षष्ठे हि वचन
कारस्याधानस्य सर्वशेषत्वात् इत्यत्र वर्षासु रथकार आदधीतेति
मवयवप्रसिद्ध्या त्रैवर्णिकानामन्यतमो रथकारशब्देनोच्यते स
यप्रसिद्ध्या वा ऽन्यो जातिशब्द इति सन्दिग्धे ऽवयवप्रसिद्ध्या
कारिणि त्रैवर्णिके रथकारशब्दसम्भवात् अपशूद्राऽधिकरणप्र
द्धस्यात्रैवर्णिकस्याधिकारो न युक्त इति प्राप्ते समुदायप्रसिद्ध्य
वप्रसिद्धिबाधाद्वचनबलेनात्रैवर्णिकस्यैवाऽधिकार इति वक्ष्यते
न्यत एव तु समुदायप्रसिद्धिबलीयस्त्वसिद्धौ न्यायेन प्रतिषि
प्यत्रैवर्णिकस्यैव वचनबलेनाधिकारनिश्चयात्सन्देहाभावेन र
राधिकरणारम्भो न युज्यते। न चान्यत्र क्वचित्समुदायप्रसि
लीयस्त्वव्युत्पादनं दृश्यते । न च तद्व्युत्पादनं विना पारिशेष्य
णात्रैवर्णिकस्याधिकारसिद्धिः। त्रैवर्णिकस्याप्यवयवार्थयोगेन र
रशब्दवाच्यत्वसम्भवे वसन्तादिवाक्यैस्तस्याधानप्राप्तावपि र
कारित्वेन निमित्तेन वर्षाकालाधानार्थतया वचनोपपत्तावा
ऽत्रैवर्णिकस्याधिकारकल्पनानुपपत्तेः । अत एव वचनादिति
हेतुं व्याख्यायाधानस्यासर्वशेषत्वादित्यनेनाधानसम्बन्धितया स
ब्राह्मणराजन्यवैश्येभ्यः प्राप्तेभ्यो ऽत्रैवर्णिकस्य परिशिष्टत्वादयम
विधिरित्येवमुक्तो हेतुः सर्वशेषश्चात्रैवर्णिक आधानइति भाष्ये
कारेण चशब्दप्रयोगादुपचयोपपत्तित्वेन व्याख्यातः । तस्माद्र
राधिकरणसिद्धमेतत्समुदायप्रसिद्धिबलीयस्त्वमिहोक्तम्। कथं
दायप्रसिद्धेः श्रुतिस्थानीयत्वं कथं चावयवप्रसिद्धेर्वाक्यस्थानीय
पेक्षिते रथकाराधिकरणवक्ष्यमाणमेवोभयमुपपादयति * तथ
३०६।१ ति * वर्णसमुदायशक्तिनिमित्तज्ञानात्मकत्वेन समुदायप्र
शब्दात्मकत्वात् श्रुतित्वाभावे ऽप्यक्षरश्रवणमात्रापेक्षत्वात् श्रु
ल्यत्वं प्रातिपदिकावयवशक्तिनिमित्तज्ञानात्मिकायास्त्ववयव
द्धेरेकार्थपदसमुदायात्मकवाक्यत्वाभावे ऽपि यौगिकप्राति
तिपाद्यस्य विशिष्टस्यार्थस्य ये प्रकर्षादयो भागास्तेषामेकार्थत्व
नियमलक्षणेनोपसंहारेण प्रवृत्तेर्विप्रकृष्टत्वाद्वाक्यतुल्यतेत्य

काराधिकरणे ऽवयवप्रसिद्धितः समुदायप्रसिद्धेर्बलीय-
ते तथापीह समुदायप्रसिद्धेरात्मलाभसदसद्भावौ चिन्त्येते
समुदायप्रसिद्धेरात्मलाभसदसद्भावौ चिन्त्येते यदि च
दायस्यैव शक्तिर्न क चिदवयवानां ततः सा चिन्ता विरु-
वतदस्ति तथा सत्यवयवप्रसिद्धेः सर्वत्राभावापत्तेरित्य-
परिहरति * सत्यमिति * ननु समुदायप्रसिद्धेः क्वा-
हास्ति क च नेति कथं ज्ञातव्यमित्यपेक्षायामाह * तत्र
ननु समुदायप्रसिद्ध्या सर्वत्रावयवप्रसिद्धेर्बाधेनावयवा-
सर्वत्रैव समुदायः प्रसिद्ध्येदित्याशङ्कानिरासपूर्वं श्लोकं
* लब्धात्मिका हीति * नन्वेवं सति रथकारशब्दे ऽवय-
त्रे समुदायप्रसिद्ध्यनात्मलाभादभावे चाप्रतियोग्यभावात्त-
ानुपपत्तेरनर्थकं रथकाराधिकरणं स्यात् इत्याशङ्क्याह
न * रथकारशब्दस्य रथकारिण्यवयवप्रसिद्धिसम्भवात्
करिण्यां च रथकारः प्रजायतइति * स्मृते * आनुलोम-
न्वनास्तुहीनत्वात्मन्त्रवर्णात् प्रतीयेरन्नित्यनेन वा न्यायेन
वा देवतानां व्रतपते व्रतेनादधामि इति रथकारस्यादध्यादि-
त्रवर्णात् सौधन्वना ऋभव इति च सौधन्वनशब्दसामा-
यस्य ऋभुशब्दस्य तं नेमिमृभवो यथेति मन्त्रवर्णाद्रथका-
प्रसिद्धेः ।
त्यात्तु जायते वैश्यात् सुधन्वाचार्य एव च ।
मारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥
ति सात्वताद्यपरपर्याये सौधन्वनाख्ये जातिविशे-
ायप्रसिद्धिसम्भवाद्रथकार आदधीतेत्यत्र समुदाय-
लीयस्त्वाभिधानं युक्तमित्यर्थः । नन्वेवं तर्ह्युदासी-
प्रकर्षसेचनकरणत्वाभावे ऽपि क चिद्देशे प्रयोग-
प्रकर्षसेचनकरणत्वे सत्यपि च तैलादावप्रयोगाद्योगस्य
त्वेन समुदायप्रसिद्ध्यात्मलाभोपपत्तेस्तद्बलीयस्त्वाद्रथ-
रणसिद्धान्तात् जातिवाचितैव युक्तेत्याशङ्क्य तुशब्दस-
पुनः शब्देन निरस्यन् सिद्धान्तमाह * अत्रेति * औदा-
ायामपि प्रकर्षसेचनकरणत्वशक्तिसद्भावात् प्रयोगोपप-
द्भावेन च शब्दप्रयोगावश्यम्भावाभावात् तैलादावप्रयो-
। कल्पसावयवशक्त्यानुसारेणैव शब्दप्रयोगोपपत्त्यार्थापत्तेः
: समुदायस्य शक्त्यन्तरकल्पनानुपपत्तेः समुदायप्रसिद्ध्या-
नास्तीत्याशयः । स्वरूपतो ऽवयवार्थाभावे शक्तिसद्भावमा-

त्रेणाग्नाविवादग्धृत्वावस्थायामपि दग्धृशब्दस्य प्रोक्षणीशब्द
पपत्तौ समुदायस्य शक्त्यन्तरकल्पनं न युक्तमित्येतदेव व्या
ष्टान्तमुखेन दर्शयितुमाह * तथा हीति * शालाख्ये वृक्ष
ऽश्वत्वकर्णत्वयोः शक्तिरूपेणाप्यभावात्समुदायस्य शालजाति
त्वं कल्पितमित्यर्थः । सिद्धान्तमुपसंहरति * तस्मादिति
न्वेवं सति तैलादावपि प्रोक्षणीशब्दः किमिति न प्रयुज्यते
ङ्क्याह * इतीति * समुदायप्रसिद्ध्यभावसिद्धयौगिक
मर्शार्थो ऽयमितिकरणः । यस्मात्प्रोक्षणीशब्दस्य समुदा
द्ध्यभावाद्यौगिकत्वं सिद्धं तस्मात्तैलादावपि साधारणतास्त
योगाभावस्तु सत्यपि वाच्ये न विरुध्यतइत्याशयः । यद्वा स
प्रसिद्धेर्बलीयस्त्वे ऽप्यप्सु प्रोक्षणीशब्दस्य तदभावादवयवप्र
रङ्गीक्रियमाणा न रथकाराधिकरणविरुद्धेति सूचनार्थत्वात्
ऽयमितिकरणः । प्रयोजनभाष्ये प्रोक्षणीशब्दस्य संस्कार
धृते ऽप्यविकृतस्य प्रयोगमुक्तमाक्षिपति * नन्विति * प
* यदि हीति * निपातानामनेकार्थत्वात् शङ्कानिरासार्थो हि
एतदेवोपसंहरति * तस्मादिति * यौगिकत्वे स्त्रीप्रत्ययम
३०७।१ वृत्तिप्रयोजनत्वेनोक्तामुपपादयति * यौगिकत्वे त्विति * न
गिकत्वे ऽपि घृतप्रोक्षणं भवतीति विधिवाक्ये घृतशब्दश्रवण
धिशब्दस्य मन्त्रत्वाभावः स्यात्तेन चोदनेति दशमाधिकरण
द्रव्ये ऽपि देवतावद्विधिगतस्यैव शब्दस्य प्रयोगानियमाज्ञातिश
वत् घृतशब्दस्यैव प्राप्तेः प्रातिपदिकस्यापि निवृत्तत्वात् स्त्रीप्र
अनिवृत्त्यभिधानं न युक्तमित्याशङ्क्याह * न चेति * दश
मये पवमानायाष्टाकपालं पुरोडाशं निर्वपेदिति विहिते किम
वमानादिगुणशब्दसहितेनाग्निशब्देनाभिधेयः केवलेन वेति
प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यादिति सिद्धान्तेनोप
विकारो वार्थशब्दानपायात् स्याद् द्रव्यवदित्यनेनार्थस्याग्नेश्च
प्राप्तस्य चाग्निशब्दस्य केवलाभिधाने ऽप्यनपायाद्यथा सा
सर्वदेवत्या यदजा वशा वायव्यामालभेत भूतिकाम इत्यजाश
विहिते द्रव्ये वशाशब्दवाच्यवन्ध्यात्वगुणयुक्ते चातिदेशप्राप्तौ
गशब्देन निर्गुणेन चाभिधानं तथेहाप्यविकारः स्यादिति पू
पन्यस्यारभ्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रु
वायित्वादवचने च गुणशास्त्रमनर्थकं स्यादित्यनेनार्थस्य दे
श्रुतिसमवायित्वादारभ्भेण स्वरूपेण कर्मणयसमवायाद् गुण
धाने च गुणशास्त्रस्यानर्थक्यापत्तेः चोदितेन सगुणेना

स्यादित्येवं निरस्य द्रव्येष्वेवारम्भगामित्वादर्थे विकारसामर्थ्यमित्यनेनारम्भेण स्वरूपेण द्रव्येषु क्रियागामित्वाद्विकारसहितस्यापि शब्दस्य द्रव्यरूपेऽर्थे सामर्थ्यमस्तीति वैधर्म्यं वदता द्रव्येष्वर्थरूपेण कर्मणि समवायाभ्युपगमाद्विधिगतशब्दप्रयोगनियमो नास्तीत्यर्थः।

॥ अथ निर्मन्थ्यशब्दस्य यौगिकत्वाधिकरणम् ॥ ९ ॥

## तथा निर्मन्थ्ये ॥ १२ ॥

वैद्युताद्यग्निव्यक्तेर्मन्थनजन्यत्वे शक्तेरप्यभावात् पूर्वन्याया-तुल्यत्वमाशङ्क्य विशेषरूपेण शक्त्यभावेऽप्यग्निजातीयस्य कस्य चिन्मन्थनजन्यत्वदर्शनेन शक्त्यवधारणाद्वैद्युतादावप्यग्निजातीयकत्वा-विशेषेण सामान्यतः शक्तिसम्भवेन कथं चित् कलशावयवशक्त्यनु-सारात्प्रयोगोपपत्तौ समुदायस्य शक्त्यन्तरकल्पनानुपपत्तेस्तुल्यत्वा-तिदेशायेदमधिकरणमित्याह * निर्मन्थ्येऽपीति * भाष्यकारेणा-चिरनिर्मन्थितत्वं यौगिकत्वप्रयोजनमुक्तमाक्षिपति * वैद्युतेति * पाकान्यथानुपपत्त्याग्निमात्रप्राप्तौ मन्थनजन्यत्वविशेषणस्यातज्जन्या-ग्निव्यावृत्त्या कृतार्थत्वात् नाचिरत्वाक्षेपकत्वं युक्तमित्यर्थः। ननु ना-वनीतेन भुङ्क्त इत्यत्रापि घृतशब्दानुदापानात्तैलादेरपि प्राप्तौ तन्नि-वृत्त्या नावनीतशब्दस्य कृतार्थत्वात् नाचिरत्वाक्षेपकतेत्याशङ्क्याह * लोक इति * प्रमाणान्तरावगतवक्त्रभिप्रायानुसारात्तत्र विशेषप्र-तीतिर्न शब्दसामर्थ्यादिति भावः। यद्वा यथैवाभ्यासः सामधेनीनां प्राथम्यात् स्थानधर्मः स्यादित्यत्र त्रिः प्रथमामन्वाह त्रिरुत्तमामिति प्रथमोत्तमशब्दयोः प्रथमावगताद्यन्तस्थानपरत्वातिक्रमहेत्वभावात् तदुपलक्षितप्रवो वाजा आजुहोतेति ऋक्परतेति नवमे वक्ष्यते तथ नावनीतशब्दस्यापि प्रथमावगतनवनीतविकारत्वलक्षणधर्मातिक्रमेण तदुपलक्षितघृताख्यधर्मिपरत्वाभावात् धर्मस्य च प्रवो वाजा इति प्रथमऋक्प्रतीकम्। आजुहोतेति अन्त्यऋक्प्रतीकं तत्परता धर्मिग-तस्पर्द्धमानधर्ममात्रव्यावर्त्तकत्वेनास्पर्द्धमानधर्म्यन्तरव्यावर्त्तकत्वा-योगात् तैलादिव्यावृत्त्यप्रतीतेर्घृते च नवनीतविकारत्वावरुद्धधर्मान्त-राऽभावादबुद्धिस्थनवनीतव्यक्तिविकारत्वव्यावृत्त्या बुद्धिस्थनवनी-तव्यक्तविकारपरत्वावगतेश्चिरकालवगतायाश्च नवनीतव्यक्तेरबुद्धि-स्थत्वादचिरावगतनवनीतव्यक्तिविकारत्वप्रतीतेः। शब्दसामर्थ्या-देवाचिरनिर्दग्धत्वावगतिरित्याह * सर्वघृतानां चेति * प्र-करणादिना घृतप्रतीतिमभिप्रेत्य पुनःश्रुतेरित्युक्तं नावनीतेन घृते-भुङ्क्त इत्येवंविधवाक्याभिप्रायेण वा पञ्चम्यन्तं वा श्रुतिशब्दमङ्गीकृ

स्य श्रुतितो ऽपि पुनरेवमचिरनिर्दग्धत्वावगतिरित्येवं योज्यम्। अ
र्थैक्यानुपपत्तिलक्षणार्थो वा पुनः शब्दः। निर्मन्थ्यशब्दे तु शब्दप्र
णकत्वेन प्रमाणान्तरानुसारायोगादमन्थनजन्याग्निनिवृत्त्या च कृ
र्थत्वेन शब्दसामर्थ्याभावादचिरनिर्मन्थितत्वाप्रतीतेर्नाचिरनिर्म
तविषयता कल्प्येति वैषम्यमाह * इह त्विति * चिरग्रहणं दृष्टान्
ननु पङ्कजादिशब्दवन्निर्मन्थ्यशब्दस्य योगरूढित्वादचिरनिर्मन्थि
ग्निगतमन्थनक्रियायोगानिमित्तत्वप्रतीतेर्विशेषावगतिर्भविष्यतीत्य
ङ्क्याह * न हीति * पद्मव्यतिरिक्ते द्रव्ये पङ्कजन्यत्वे सत
पङ्कजशब्दप्रयोगाभावात् योगरूढित्वं कल्पितं निर्मन्थ्यशब्दस्य
ग्निमात्रे प्रयोगस्य भाष्यकृतोक्तत्वान्न योगरूढिता कल्प्येत्याश
आक्षेपमुपसंहरति * तस्मादिति * पाकाङ्गत्वेनेह विधीयमा
मन्थनस्य पाकैकदेशकालकर्तृकत्वादचिरनिर्मन्थितत्वसिद्धिं
परिहरति * नैष दोष इति * श्लोकं व्याचष्टे * यथैवेति
नन्वेवं सति देशकर्त्रैक्यमपि कस्मान्नोक्तमित्याशङ्क्याह * तेनेति

॥ अथ विश्वदेवादिशब्दानां यागनामधेयताधिकरणम् ॥ १० ।

## वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥

अत्र भाष्यकृता किं वैश्वदेवशब्दो गुणविधिः कर्म न
धेयं वेति चिन्तोक्ता सा पूर्वपक्षसूत्रे विकल्पाभिधानात् सिद्धा
सूत्रे च तन्निराकरणमात्रप्रतीतेरयुक्ता च प्रकरणपर्यालोचनया
णविधिनामधेयविचारो ऽधिकरणस्य तात्पर्यावगमादेवमुपन्य
युक्तः । आग्नेयाधिकरणे ऽपवादान्नामधेयविचारस्य पर्यवसितः
वगतेर्नामधेयविचारस्यापर्यवसितस्याप्यपवादसम्भवे दार्विहोम
स्येहैव विचार्यत्वाशङ्काष्टमाध्यायासङ्गत्या शङ्कायास्तत्रैव नि
कार्यत्वेनेहाप्रस्तुतत्वात् न युज्येताथाग्नेयाधिकरणस्यापवाद
न सङ्गतिप्रदर्शनार्थं गुणविधिनामधेयविचारे ऽपि विधि
विधिव्युत्पादने तात्पर्यादपवादे तात्पर्याभावेन पर्यवसानद
कत्वं नास्तीत्युच्यते तथा सत्युत्पत्तिशिष्टगुणबलीयस्त्वासि
प्रयोजनत्वाद्विशिष्टविधिव्युत्पादनस्य तदधिकरणोक्ताक्रियानि
त्त्वप्रसक्त्या कृते ऽधिकरणत्रये यत्प्रसक्त्या यो विच
स्तत्समाप्तौ स एव बुद्धिस्थो भवतीति प्रासङ्गिकाधिकरण
समाप्त्या तस्यैव बुद्धिस्थस्य प्रयोजनविचारायैतदधिकरणमिति
णामिति गुणविधिनामधेयविचारे तात्पर्याभावात्तदुपन्यासस्तात
तो ऽप्ययुक्तः । उत्पत्तिशिष्टबलीयस्त्वव्युत्पादनार्थे चास्मिन्नधि

णे सत्युद्भिदादीनामेवोदाहरणत्वोपपत्तेर्वैश्वदेवोदाहरणं व्यर्थ-
मित्याशङ्क्याह * तद्धितेति * अयमाशयः (सत्यपि विशिष्टवि ३
धौ )गुणाविशिष्टस्यापि कर्मणो विहितस्य विशिष्टविध्यन्यथानुपपत्ति-
सूतेन विधिना विशेष्यस्यापि विशेषणवद्विधानाच्छुद्धानुवादेनापि
ाक्यान्तरस्थस्यापि गुणस्य स्ववाक्यस्थवद्वाक्यीयत्वाविशेषाद्विकल्पे-
विधानोपपत्तेरुत्पत्तिशिष्टेनापि सोमेनोत्पन्नशिष्टस्य खनित्रादेर्बा-
ाायोगादुद्भिदादिशब्दानां ज्योतिष्टोमे गुणविधित्वोपपत्तेरुत्पत्ति-
शष्टबलीयस्त्वेन गुणविधित्वनिरासायोत्पत्तिशिष्टबलीयस्त्वसिद्ध्य-
' विशिष्टविधिव्युत्पादनं व्यर्थमित्याशङ्क्यानुष्ठानायोग्यत्वेन शुद्ध-
य विधातुमशक्यत्वात् अग्निहोत्रं जुहोतीत्यादावपि सामान्यतो
व्यदेवताविशिष्टस्यैव विधेयत्वाभ्युपगमात् विशिष्टविधौ स्ववा-
यश्रुतद्रव्यादिविशेषविशिष्टस्यैव प्राप्तत्वेनानुवादापत्तेस्तादृशेन च
राकाङ्क्षे स्ववाक्यश्रुतगुणविरोधिगुणान्तरविध्यनुपपत्तेर्विशिष्ट-
वधौ सत्युत्पत्तिशिष्टेनोत्पन्नशिष्टस्य बाधसिद्धिरिति विशिष्टविधि-
युत्पादनप्रयोजनमुत्पत्तिशिष्टबलीयस्त्वं समर्थयितुमेतदधिकरणम्
थाप्युत्पत्तिशिष्टबलीयस्त्वेनैव वैश्वदेवशब्दस्य नामधेयत्वं सिध्यति
ान्यथेति दर्शयितुं भाष्यकृतैवं विचारारम्भः कृतः । वैश्वदेवोदा-
रणस्याप्येतदेव प्रयोजनमित्येतदेवोपपादयितुं पूर्वोक्तकारणासम-
स्तद्धितोपात्तत्वादित्यादिना दर्शितः । न तूद्भिदाद्यधिकरणैरगता-
त्वम् दर्शयितुम् इति भ्रमितव्यं गतार्थत्वशङ्कानुपपत्तेस्तन्निरासाया-
तार्थत्वाभिधानानर्थक्यात् सास्यदेवतेति हि देवतातद्धिताधिकारे
ूक्तहविषोरिति स्मृतेर्देवतातद्धितस्य सूक्ते हविषि वा मुख्यत्वाव-
मे ऽपि द्रव्यविशेषस्येहानुपादानेनास्य शब्दाभिधेयत्वायोगात्सा-
ानाधिकरण्योपात्तत्वेनास्य शब्दाभिधेयस्य यागस्यैव देवतास-
बन्धावगतेस्तदन्यथानुपपत्त्या द्रव्यस्यैव लक्ष्यमाणत्वात् मत्वर्थस्य
ागस्य लक्षणा नाशङ्कितुं शक्या आग्नेयमष्टाकपालं निर्वपति सौम्यं
रुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तक-
ालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमित्यष्टौ कर्माणि
कृतानि वैश्वदेवेन यजेतेति याजिनानूद्य विधित्सितस्य देवतालक्ष-
ास्य गुणस्यामिक्षायागे प्राप्तस्यापि इतरेषु सप्तसु प्राप्त्यभावात्
वधिसम्भवे तत्प्रापणवैयर्थ्याभावात् तत्प्रख्यतापि नाशङ्कितुं शक्या
ाक्यभेदाद्याशङ्का त्वत्यन्तनिर्मूलेत्यगतार्थत्वाभिधानर्थक्यापत्तिरु-
पत्तिशिष्टबलीयस्त्वेनैव वैश्वदेवशब्दस्य नामधेयत्वं दर्शयितुमेव-

१ अ० पा० २ पु० पा० ।

मारम्भ इतीदृश्यैव ग्रन्थतात्पर्यव्याख्या युक्ता । ननु गुणविधि
धेयचिन्तात्मकस्याधिकरणस्य बर्हिराज्यादिविचारात् प्रागेवार
स्यादित्याशङ्क्याह * सर्वत्र चेति * बर्हिरादिशब्दो ऽपि कस्य
त्ययं विचारात्मकत्वात् तस्याव्यवधायकतेत्यर्थः । यदा
णविधिप्रतियोगित्वेन विधिनिरपेक्षलोकप्रसिद्धदध्यादिनाम
क्षणां विधेयकर्मण्यलौकिकं नाम वेदेन विधीयमानं नामधेयशब्
च्यते तदा संस्कारनिमित्तत्वपक्षे यल्लूयते तस्य बर्हिःशब्दो
ति विधेयसंस्कारयुक्ते द्रव्ये वेदेनालौकिकस्य नाम्नो विधीय
त्वात् नामधेयत्वजातिनिमित्तत्वे यौगिकत्वे च विधिनिरपेक्षलो
सिद्धत्वात्तन्नामधेयतेति सामान्यत एव नामधेयचिन्तात्मक
स्पष्टमेवाव्यवधायकत्वं यद्वा निर्मन्थ्यशब्दस्य यौगिकस्य नाम
त्वे सत्यपि गुणविधित्वस्य दर्शनाद्वैश्वदेवशब्दस्यापि यौगिक
सत्यपि नामधेयत्वे गुणविधित्वमप्यास्त्विति समुच्चयेन पूर्वपक्ष
वलनामधेयत्वेन सिद्धान्त इत्येव विचाराङ्गीकरणेनानन्तरसङ्ग
वं वक्तुं शक्यतेत्याह * अथ वेति * एतच्चानन्तरसङ्गत्युपपा
सामर्थ्यप्रदर्शनमात्रार्थमुक्तं न पारमार्थिकं सिद्धे हि वैश्वदेवश
नामधेयत्वे समुच्चयेन पूर्वपक्षः स्यात् तत्सिद्धिश्च तत्प्रख्यतयैव
षां नामधेयमिति वार्त्तिकदर्शनात् तत्प्रख्यन्यायेनाशङ्क्यते
चाविदितबोधनं च विधिरित्युच्यते विदितं चात्रान्यतो गुणवि
नमिति तत्प्रख्याधिकरणभाष्यादतस्तत्प्रापणं व्यर्थमिति च
र्त्तिकाद्विधित्सितस्य गुणस्यान्यतः प्राप्तौ विध्यानर्थक्याद् गुणवि
त्वानुपपत्तेः पारिशेष्यान्नामधेयतेत्येवं रूपः प्रतीयते न चामिक्षाय
व्यतिरिक्तेषु यागेष्वन्यत्र विधित्सितस्य गुणस्यान्यतःप्राप्तिरस्ति
कृत्याविशेषणाष्टस्वपि यागेषु गुणविधित्वापत्तावप्यस्यामिक्षा
त्कार्थत्वेनानर्थक्यायोगात् गुणविधित्वमाश्रित्य वैश्वदेवीमामि
मित्यस्यैवामिक्षामात्रविशिष्टभावनाविधायित्वाश्रयणेन क्रमा
युक्तवैश्वदेवयाज्यानुवाक्यायुगलकल्पितमान्त्रवार्णिकदेवता
याद्यागे ऽनुमिते वैश्वदेवीशब्दस्यामिक्षायागनामधेयत्वं वरं
मन्त्रवर्णाच्च तद्धितस्य बलीयस्त्वात् तद्धितेनुक्ताया अपि देवत
वैश्वदेवेन यजेतेत्यनेन विधिरविरुद्धः उत्पत्तिशिष्टाग्न्याद्यवरु
त्वादामिक्षायागव्यतिरिक्तेषु देवताविध्यसम्भवेनामिक्षायागे देव
विधिप्रसक्तिमापाद्य तत्प्रख्यतया नामधेयत्वासिद्ध्यभ्युपगमे केव
मिक्षायागनामत्वापत्तेः सर्वनामतेष्टा न सिध्येत् । वार्त्तिककारि
तत्प्रख्यत्वाभिधानमुत्पत्तिशिष्टबलीयस्त्वेनैतदधिकरणव्युत्पादिते

णविध्यसम्भवान्नामधेयत्वे साधिते प्रवृत्तिनिमित्तप्रदर्शनार्थं न तु
मधेयत्वसिद्ध्यर्थम् सर्वत्र च गुणविधित्वसम्भवेनैव नामधेयत्वा-
भिधानात् इह गुणविधित्वसम्भवे नामधेयत्वानुपपत्तेः। समुच्चयेन
र्वपक्षस्यानाशङ्क्यत्वात्प्रौढिमात्रमेतदिति स्थितं विशिष्टविध्यसम्भवे
स्य चिद् गुणस्योत्पत्तिशिष्टस्याभावात्तद्बलेन प्रसिद्ध्यादिहेतुत्रया-
श्रितगुणविधित्वनिरासाशक्तेः सन्देहायोगाद्विशिष्टविधौ व्युत्पा-
ते सत्युत्पत्तिशिष्टगुणसम्भवात्तद्बलीयस्त्वसन्देहेन गुणविधि-
मधेयसन्देहो भवतीति सूचनार्थत्वेनेति चेदिति सूत्रावयवव्या-
र्थं यदीति भाष्यं स्पष्टत्वान्न व्याख्यातं विकल्पशब्दस्य गुणवि-
प्रतिज्ञानार्थत्वेन व्याख्यानार्थं वैश्वदेव इति भाष्यमुपपादयति
तत्रेति * विफलेन गुणविधिप्रतिज्ञानस्य किं प्रयोजनमित्य-
ङ्कायामुत्पत्तिशिष्टाग्न्याद्यविरुद्धेषु यागेषु देवतान्तरविध्ययोगाद्
णविध्यसम्भवाशङ्कानिरासप्रयोजनमाह * एवं हीति * ननू-
त्तिशिष्टबलीयस्त्वस्योत्पत्तिवाक्यविज्ञातमित्यादिना चित्राधिकर-
साधितत्वात् नेहोत्पत्त्युत्पन्नशिष्टयोर्विकल्पः पूर्वपक्षयितुं युक्त इ-
शङ्क्याह * न चेति * वाक्यभेदापत्त्या तत्र गुणविधित्वानिरा-
त् पुंपशौ प्राप्ते स्त्रीपशुरिति भाष्यावयवव्याख्यानार्थानागतावेक्ष-
नैतदधिकरणसिद्धोत्पत्तिशिष्टबलीयतास्माभिरुक्तेत्यर्थः[1]। भाष्या-
वो ऽप्यनागतावेक्षणेनाभ्युच्चयहेतत्वभिधानायेति भाष्यकारशब्दे-
सूचितम्। ननूत्पत्तिशिष्टामिक्षावरुद्धे यागे वाजिनस्योत्पन्नशिष्टस्य
धानाऽयोगेन भेदकत्वस्य गुणाधिकरणे वक्ष्यमाणत्वात् इह तु-
बलत्वाशङ्का न युक्तेत्याशङ्क्य * क्व चिदित्युक्तम् * वैश्वदेव्या-
क्षा वाजिभ्यो वाजिनमिति तद्धितचतुर्थीकृतं बलाबलं तत्र व-
ते नोत्पत्त्युत्पन्नशिष्टकृतमित्याशयः। नन्वेवमप्यष्टदोषविकल्पा-
कत्वाद् गुणविधिर्न युक्त इत्याशङ्क्याह * किं चेति * वसन्ता-
ककालादियोगेनैव समुदायापादनसिद्धेः समस्तानुवादानर्थक्य-
ङ्गाद्वैश्वदेवशब्दस्य चाग्नेयादिषु प्रत्येकं समुदाये वा प्रवृत्तिनि-
ताभावेन नामधेयत्वायोगादगत्या विकल्पापादको गुणविधिरेव
यानित्याशयः। श्लोकं व्याचष्टे * यदि हीति * नन्वाग्नेयादिषु
कं समुदाये वा विश्वदेवसम्बन्धस्य प्रवृत्तिनिमित्तस्याभावान्ना-
यत्वासम्भवे ऽप्यामिक्षायागनामत्वं प्रवृत्तिनिमित्तसद्भावाद्भवि-
तीत्याशङ्क्याह * न चेति * यजिसामानाधिकरण्यनिबन्धनत्वान्ना-
यत्वस्य यजेश्चामिक्षायागमात्राग्राहित्वायोगात् तन्मात्रनामधेय-

१ तत्राध्य इ० २ पु० पा०।

त्वस्य च निष्प्रयोजनत्वेन सिद्धान्तिनो ऽप्यनिष्टत्वात् नैषा
युक्तेत्यर्थः । आमिक्षायागे तत्प्रख्यान्यशास्त्रसद्भावाद् गुणविधि
३०९।१ स्यादित्याशङ्कां निरस्यन् पूर्वपक्षमुपसंहरति * तस्मादिति * उ
त्पत्त्युत्पन्नशिष्टयोस्तुल्यबलत्वेनोत्पत्तिशिष्टाग्न्याद्यवरुद्धेष्वा
गेषु विकल्पेन देवतान्तरनिवेशः सम्भवति नामधेयत्वं च स
नुवादानर्थक्यापत्तेरामिक्षायागव्यतिरिक्तेषु च प्रवृत्तिनिमि
वात् तन्मात्रनामत्वस्य चानिष्टत्वात् न युज्यते तस्मादित्यर्थः
ङ्कानिरासार्थं सर्वास्वित्युक्तम् । ननु प्रकृतत्वाविशेषात् सर्वेषु याग
जिना गृहीतेषु एकस्यैव वैश्वदेवशब्दस्यामिक्षायागव्यतिरिक्तेषु
धित्वं तस्मिंश्चानुवादत्वं वैरूप्यापत्तेर्न युक्तमित्याशङ्कते * तत्रे
परिहरति * तत्रेति * प्रकृतत्वात् सर्वयागानां ग्रहणाविशेषे ऽपि
यागेषु गुणस्याप्राप्तिस्तेषु विधिप्रत्ययस्य तात्पर्योपसंहारात् ता
समर्पकस्य वैश्वदेवशब्दस्यापेक्षाऽभेदाद्वैरूप्यमित्यर्थः ।

न प्रकरणात्प्रत्यक्षविधानाच्च न हि प्रकरणं
व्यस्य ॥ १४ ॥

वैश्वदेवशब्दे गुणविधानस्य प्रकृतयागापेक्षत्वात् तेषु
त्यक्षेण द्रव्यदेवताविशिष्टयागविधिनैवाग्न्यादिदेवतालक्षणस्य
स्य विधानात्ताद्विरोधिगुणान्तरनिवेशानुपपत्तेर्न गुणविधिः स
तीत्युत्पत्तिशिष्टबलीयस्त्वेन गुणविधिनिराकरणमविहितदेव
पांशुयाजादियागे देवताविधौ देवताविशिष्टयागान्तरविधौ
सम्भवतीति प्रकृतयागानुवादो न गुणविधिरुत्पत्तिशिष्टबलीयः
निरस्यत इति दर्शयन्सौत्रनञुक्तां प्रतिज्ञां व्याचष्टे * अत्रेति *
त्पत्त्युत्पन्नशिष्टत्वलक्षणवैषम्याभिधानसूचितमुत्पत्तिशिष्टेनोत्प
ष्टस्य बाधं प्रश्नपूर्वकं हेतुत्वेनाह * कथमिति * उत्पत्त्युत्पन्न
योर्वाक्यार्थत्वाविशेषात् विकल्पोपपत्तेः किमित्युत्पत्तिशिष्टगुण
द्धे कर्मणि उत्पन्नशिष्टो गुणो नावकाशार्ह इत्यपेक्षायां प्रकरण
त्यक्षविधानाच्चेति सूत्रावयवोक्तं वैषम्यं हेतुत्वेन योजयति *
कल्पो ऽपीति * पारिशेष्यान्नामत्वसिद्धिं तस्मादित्युपसंहा
व्योक्तां विवरीतुम् * तस्मादित्युक्तम् * उत्पत्तिशिष्टबली
प्रत्यक्षविधानादिति * सूत्रावयवोक्तम् * दर्शयितुं प्रत्यक्षेति
र्थं व्याचष्टे * अग्न्यादयो हीति * यद्यपि सोमेन यजेत

१ नामेति २ पु० पा० ।

र्मगुणयोर्भिन्नपदोपादाने ऽपि सकृच्छ्रुतेनैव प्रत्ययेनोभयविधाना-
: शुद्धकर्माप्राप्तेरुत्पत्तिशिष्टबलीयस्त्वं सिध्यति तथापीह विधेय-
मर्पकमप्येकमेव पदमस्तीत्यतिशयाभिधानार्थं तद्धितग्रहणं तेषां
गादीनामिति भाष्योक्तस्याग्न्यादीनां यागसम्बन्धस्य द्रव्यसम्ब-
द्वारत्वं दर्शयितुमष्टाकपालादीनामित्युक्तम् । एकपदोपात्ताग्न्या-
वैषम्यसूचितामितरेषां भिन्नपदोपादानं विश्वेदेवा इत्यनेन दर्शि-
म् । नन्वाग्नेयमष्टाकपालं निर्वपतीत्यादावुत्पत्तिवाक्ये ऽपि द्रव्य-
शेषसम्बन्धस्याष्टाकपालादिपदान्तरसम्बन्धाधीनत्वाद्वाक्यीयत्वेन
ल्यतेत्याशङ्कते * नन्विति * नैव हि द्रव्यमात्रस्य तद्धितैर्देवतो-
यते अस्य शब्दाभिधेयस्य विग्रहवाक्यस्थेनास्येति सर्वनाम्ना सन्नि-
तस्य द्रव्यविशेषस्यैव देवतासम्बन्धस्तद्धितेन क्रियते न चैतावता
दान्तरानर्थक्यम् ।

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः ।
आमिक्षापदसामीप्यात्तस्यैव विषयार्पणम् ॥

इत्यनेनैव न्यायेन सन्निहितविशेषणापेक्षितविशेष्यासमर्पणा-
त्वात् पदान्तरस्येति परिहरति * नेति * प्रत्यक्षविधानादिति
त्रावयवोक्तेनैव तद्धितवाच्यद्रव्यविशेषसम्बन्धेन पशुसोमाधि-
रणादौ व्यवहारादपौनरुक्त्यम् अस्यापि तद्धितत्वाविशेषात् तुल्य-
माशङ्कते * वैश्वदेवशब्दे ऽपीति * देवताशब्दस्य सम्बन्धिश-
त्वेन गुर्वादिशब्दवत् प्रतिसम्बन्धिनमपेक्ष्य प्रवृत्तेर्यागस्य च स-
न्धापादकत्वेनाध्यापनादिवत् प्रतिसम्बन्धित्वायोगात् द्रव्यस्यैव
ष्यादिवत् प्रतिसम्बन्धित्वप्रतीतेः । सास्यदेवतेति देवतातद्धिता-
कारसूत्रे ऽस्य शब्दस्य प्रतिसम्बन्धिद्रव्यविषयत्वावधारणात् सू-
हविषोरिति नियतविषयत्वस्मृतेश्च वैश्वदेवशब्दस्य देवतासम्ब-
धद्रव्यवाचित्वावसायाद्यागलक्षितस्य द्रव्यस्य देवतासम्बन्धं क-
पयित्वा तद्द्वारेण यागस्य देवतासम्बन्धात्प्रवृत्तेर्विप्रकर्षसाम्या-
क्येनेति भाष्यकृतोक्तमिति परिहरति * नेति * नन्वष्टाकपा-
दे: प्रकृतस्य देवतासम्बन्धित्वोपपत्तेः किमिति यागेन द्रव्यं लक्ष-
ीयमित्याशङ्कानिरासपूर्वकमेतदेव व्याचष्टे * न तावदिति * द्र-
सम्बन्धं विना तद्धितशब्दस्यापर्यवसानेन वाक्यान्तरान्वयायो-
ात् अप्रकृतवत्प्रकृतेनापि द्रव्येण स्ववाक्ये श्रवणं विना सम्बन्धा-
पपत्तेरपरिहार्या लक्षणेत्याशयः । ननु वाक्येनैव विश्वेषां देवानां
ागसम्बन्धलाभेन प्रकरणादिति सूत्रावयवेन प्रकरणापेक्षत्वाभि-
ानमयुक्तं स्यादित्याशङ्कानिरासार्थं प्रकरणादिति भाष्यं व्याचष्टे

* वाक्येन चेति * कर्मानुवादिनां धातूनां सामान्यविषयत्वे सङ्करापत्तेस्तत्परिहारायानुवाद्यकर्मविशेषलाभार्थं प्रकरणापे शयः। तथा च प्रत्यक्षविधानादित्यनेनाग्न्यादीनामेकपदोपादा धानाद्विश्वेषां देवानां भिन्नपदोपादानां सूचितम् । तथा प्रक दित्यनेन विश्वेदेवविधौ प्रकरणापेक्षाभिधानादग्न्यादिविधौ पेक्षा सूचितेति दर्शयितुमाह * न त्विति * भाष्यगतेन वाव ब्देन वैश्वदेवशब्दे द्रव्यलक्षणाभिधानात्तत्सदसद्भावकृतमपि क्यं सूचितमिति दर्शयितुं लक्षणाशब्दः । न हीति सूत्रावयवं तावन्नन्वाग्नेयादिवाक्ये ऽपि द्रव्यदेवतासम्बन्धान्यथानुपपत्त्या कल्पयितुमारभ्यमाणो वैश्वदेवेन यजेतेति प्रत्यक्षश्रुतेन कल्प तिबन्धात् तस्यैव ग्रहणायास्त्येव प्रकरणापेक्षेत्याशङ्कानिरासा निर्वपतेरतिदेशप्राप्तानुवादत्वेन पुंव्यापारानियोगाभावात् आ दिवाक्यस्य स्वार्थासमाप्तत्वेन वाक्यान्तरान्वयायोगात् नाष्टा लादिद्रव्यस्याग्न्यादिसम्बन्धे प्रकरणापेक्षेत्येवं व्याचष्टे *न हं यद्वा वैश्वदेववाक्ये यागेन द्रव्यलक्षणाद्विप्रकर्षे ऽभिहिते ननु तस्याष्टाकपालादेर्देवतान्वयसम्भवान्न यागेन द्रव्यं लक्षणीया शङ्कानिरासार्थत्वेन द्रव्यसम्बन्धं विना तद्धितस्यापर्यवसानेन क्यान्तरान्वयायोगात् यद्द्रव्यस्य प्रकरणे श्रवणं तन्न वैश्वदे क्येनाश्रितम् इत्येवं व्याख्येयमित्याह * अथ वेति* भाष्यकृता ग्नेयादिवाक्ये प्राकरणिकयज्यपेक्षायां वैश्वदेववाक्यस्यैव या धायित्वापत्तेः पूर्वपक्षहानिप्रसङ्गात् ।प्राप्ते च कर्मण्याग्नेयादिव नानेकगुणविधेर्वाक्यभेदापत्त्या पौर्णमास्यधिकरणे निराकरि णत्वात्। आद्यायाः शङ्कायास्तुच्छत्वात् यागेन च द्रव्यलक्षणाया नानुक्तत्वेन तद्विषयाशङ्कानिरासार्थतया सूत्रावयवयोजनस्य ष्टत्वात् । प्रत्यक्षविधानप्रकरणशब्दोक्तस्योत्पत्त्युत्पन्नशिष्टत्वलक्ष वैषम्यस्य प्रस्तुतविकल्पनिरासोपयोगित्वप्रतिपादनार्थत्वेनायं वयवश्च शब्दार्थे हिशब्दं द्रव्यशब्दं चाग्न्यादिदेवतापरमङ्गीकृत्य करणापेक्षं विश्वेदेवदेवताख्यं वस्तुश्रुतस्याग्न्यादेः पाक्षिकबाधनं समर्थं येन विकल्पः स्यादिति अध्याहारेण व्याख्यातः तत्र क व्यशब्देन देवतोच्यते इत्यपेक्षायामाह * भाष्ये त्विति * देवत तिरेकजनितां वा षष्ठीमङ्गीकृत्य श्रुतस्य द्रव्यस्येति षष्ठ्या वैयधि रणनिर्देशेन द्रव्यस्याष्टाकपालादेः सम्बन्धित्वेन श्रुतस्याग्नादेर्दे रूपस्येत्येवं भाष्यकृद्व्याख्यानुसर्तव्येत्याह * वैयधिकरण्यं वे देवतात्वेनादीयते गृह्यते यदग्न्यादीत्येतदर्थप्रतिपादनार्थो ऽयम

शब्दः यागसम्बन्धित्वेन श्रुतेभ्यो विश्वेदेवेभ्यो ऽग्न्यादीनां वैषम्यप्रदर्शनार्थं द्रव्यसम्बन्धाभिधानम्। ननु प्रकृतेषु गुणविध्यसम्भवे ऽप्यविहितदेवताकोपांशुयाजानुवादेन गुणविधिर्गुणविशिष्टापूर्वकर्मविधिर्वा भविष्यतीत्याशङ्क्याह * प्रकृतेति * समस्तानुवादानर्थक्यं पूर्वपक्षोक्तं परिहरति * विप्रकीर्णेति * यद्विश्वेदेवा अयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमित्यर्थवादावगतविश्वेदेवकर्तृकत्वलक्षणैकधर्मयोगनिमित्तमष्टानां यागानां समुदायरूपत्वेनैकीकरणं समुदायानुवादप्रयोजनमित्यर्थः । ननु प्राजापत्यपशुयागादिवत् समुदायानुवादं विनापि प्रकृतत्वयागत्वाभ्यामेकबुद्धिविषयत्वलक्षणसमुदायत्वं सेत्स्यतीत्याशङ्क्य विप्रकीर्णेत्युक्तं सह विधानाभावान्नैषां प्राजापत्यादितुल्यतेत्याशयः । ननु वसन्ताद्येककालादियोगात् समुदायत्वं सेत्स्यतीत्याशङ्क्याह * न हीति * वैश्वदेवशब्दस्य समुदायवाचित्वाभावे भिन्नवाक्यविहितानां यागानां साहित्याप्रतीतेर्भिन्नेष्वपि च वसन्तकालेषु प्राचीनप्रवणदेशेषु वानुष्ठाने वसन्तादिविध्यर्थसम्पत्तेर्गुणानुरोधेन प्रधानसाहित्यकल्पनायोगात् नैकदेशकपालायोगात्समुदायत्वासिद्धिरित्याशयः। विश्वे देवा न च प्राप्ता इत्यनेन प्रवृत्तिनिमित्ताभावान्नामधेयत्वासम्भवमुक्तं परिहरति *तस्मादिति * यस्मात्समुदायानुवादेन समुदायत्वं सिद्धं तस्माल्लिङ्गसमवायात्सर्वेषां तत्प्रख्यस्य वैश्वदेवशब्दव्यपदेश्यत्वस्योपपत्तेः सर्वेषामेव वैश्वदेवशब्दो नामधेयमित्यर्थः । समुदायत्वसिद्धावपि वैश्वदेवशब्देन समुदाये गुणस्याविधित्सितत्वात्समुदाये गुणप्रापकशास्त्रान्तरस्याभावादेकदेशे प्राप्तस्य गुणस्यैकदेशान्तरे प्रापणवैयर्थ्यायोगात्तत्प्रख्यशब्दस्य च तत्प्रख्यान्यशास्त्रसद्भावप्रतिपादनासामर्थ्यात्तत्प्रख्याधिकरणन्यायासिद्धत्वं नामधेयस्यानेनोक्तमिति न भ्रमितव्यम् ।

मिथश्चानर्थसम्बन्धः ॥ १५ ॥

ननु यथा वाजिभ्यो वाजिनमित्यत्र स्ववाक्यगतेन वाजिशब्देनामिक्षायागं लक्षयित्वा विधीयमानस्य वाजिनस्य प्रकरणापेक्षाभावात्तन्निमित्तदौर्बल्याभावेनोत्पत्तिशिष्टामिक्षावरुद्धस्यापि यागस्य विधीयमानद्रव्यान्तराकाङ्क्षावशेनाकाङ्क्षोत्थापनात्तस्मिन्नेव यागे वाजिनस्य निवेशोपपत्तिरिति गुणाधिकरणे पूर्वपक्षयिष्यते तथेहापि स्ववाक्यगतेन वैश्वदेवशब्देनैवाग्नेयादियागलक्षणोपपत्तेः प्रकरणानपेक्षत्वात् तदपेक्षानिमित्तदौर्बल्याभावेनोत्पत्तिशिष्टाग्न्याद्यवरुद्धे-

ष्वपि यागेषु विधीयमानदेवतान्तराकाङ्क्षावशेनाकाङ्क्ष
नाद्देवतान्तरं निवेक्ष्यते यथा चैतद्यद्नुसवनं पुरोडाशा नि
इति पुरोडाशशब्देन धानाः करम्भः परिवापः पुरोडाशः प
ष वै यज्ञो हविष्पङ्क्तिरित्येकस्यैव पुरोडाशस्य प्रकृतत्वाद् बहु
न्वयाय हविर्गणो लक्ष्यते तथा वैश्वदेवशब्देनाप्यामिक्षाया
श्वेषां देवानां प्राप्तत्वेन विधानायोगात् तद्विधानार्थामिक्षा
क्षणायामानर्थक्यापत्तेस्तत्सहचरिताग्नेयादियागलक्षणा न
त्याशङ्कानिरासार्थत्वेनैतत्सूत्रव्याख्यानार्थमथोच्येतेति भाष्यं
ष्य व्याचष्टे * वैश्वदेवमिति * उपाधिके चेति चकारेण ल
र्थस्यापि उपशब्दस्य कर्मप्रवचनीयसंज्ञान्वाख्यानात्कर्मप्रवचनी
द्वितीयेति स्मृतेस्तद्योगनिमित्तद्वितीयाभ्युपगमेन विश्वेदेव
समीपे विहितानाग्नेयादियागान् वैश्वदेवशब्देनादाय देवतोप
त इति यदाशङ्कते तत्र युक्तमित्येवं योज्यम् । यद्वा त्वनन्तरसङ्ग
मेन द्रव्यशब्दानुपादाने ऽपि देवताशब्दस्य सम्बन्धिशब्दत्वा
तिसम्बन्धिद्रव्यमपेक्ष्य प्रवृत्तेः सास्य देवतेति अधिकारसूत्रग
स्य शब्दस्य द्रव्यविषयत्वावगतेः सूक्तहविषोरिति च तद्विष
तेर्विश्वेदेवा अस्य हविषो देवता इति वैश्वदेवशब्दार्थावसाय
जिसामानाधिकरण्यसिद्ध्यर्थं वैश्वदेवद्रव्यवतायागेनेति म
लक्षणाप्रसङ्गात् उद्भिन्न्यायसिद्धं नामधेयत्वमाश्रित्य प्रवृत्ति
त्तसिद्ध्यर्थं गुणविधिरप्यस्त्विति समुच्चयेन पूर्वपक्षः क्रियते
नामधेयगुणविधिरूपयोरर्थयोः प्रयोजनयोः सकृदुच्चरितेन वै
वशब्देन सह प्रयोजनप्रयोजनिभावलक्षणः सम्बन्धो न युक्त
सूत्रं व्याख्येयमित्याह * अथ वेति * ननु निर्मन्थ्यशब्दे प्रयो
थदर्शनान्नानयोर्विरोधो ऽस्तीत्याशङ्क्याह * निर्मन्थ्यस्त्विति *
ग्निशब्दाश्रवणेन तत्सामानाधिकरण्याभावाश्रवणे ऽपि वा निर्म
शब्दस्याग्निपर्यायत्वाभावेनाग्निमात्रनामत्वायोगात् मन्थनजन्य
विशेषस्याक्षेपकाभावेनाप्रतीतेस्तन्नामत्वस्याप्ययोगाद् गुणवि
केवलो ऽसावित्यर्थः ।

## परार्थत्वाद् गुणानाम् ॥ १६ ॥

भाष्यकृता गुणानां हविषां प्रधानार्थत्वेन तदावर्त्तकत्वा
सहप्रदानप्रसङ्गात् त्रिंशत्सम्पतिवचनं न युज्येतेत्यध्याहारेणैत
व्याख्यातम् । तत्र बहुपदाध्याहारदोषेणापरितोषात् पूर्वेण स
सूत्रतया व्याचष्टे * पूर्वेणेति * त्रिंशदाहुतया हूयन्तइति वा

र्थसम्बन्धो न स्यादित्यर्थः। गुणविधावपि हविर्भेदेन प्रधानावृत्तेः कथं सहप्रदानापत्तिरित्याशङ्कानिरासार्थत्वेन परार्थत्वादित्यत्र गुणशब्दं हविःपरमङ्गीकृत्य योजयति * कुत इति * ननु स्वत एव कर्मणां भेदात् नाश्रुतावृत्त्यापत्तिरित्याशङ्क्याह * देवतैक्यादिति * भिन्नानामपि कर्म्मणां प्रयोगवचनेन सहानुष्ठानं विहितमशक्त्या त्यज्यते एकां तु देवतां सकृदुद्दिश्यानेकद्रव्यत्यागशक्तेः साहित्यत्यागो न युक्त इत्यर्थः। ननु गुणानां प्रधानावर्त्तनाशक्तावपि प्रधानानां भेदात् स्वत एवानुष्ठानभेदो भविष्यतीत्याशङ्कानिरासार्थं तत इति भाष्यं व्याचष्टे * तेनेति * कथं भिन्नानां सहानुष्ठानं शक्यम् इत्याशङ्कानिरासार्थं सम्प्रतिपन्नेति भाष्यं व्याचष्टे * सम्प्रतिपन्नेति * सकृदनुष्ठानापादनस्य प्रकृतोपयोगाभिधानार्थं तत्रेतिभाष्यं व्याचष्टे * ततश्चेति * ननु प्रधानानुष्ठानभेदेऽप्यष्टसंख्यासम्पत्तेस्त्रिंशत्सम्पत्तिवचनं न युज्येतैवेत्याशङ्क्याह * त्रिंशत्पूरणं चेति * अपरेषां तु स्विष्टकृद्यागवाजिनेज्याग्रहणादाघारौ न गणितौ इति लिङ्गदर्शनसूत्रमुपसंहरति * सर्वथेति *

॥ वैश्वानरेऽष्टत्वाद्यर्थवादताधिकरणम् ॥ ११ ॥

## पर्ववन्तो विधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥

ननु नामधेयाधिकरणे नामधेयानां ऽर्थंशवेदबाह्यत्वाद्धर्मप्रमोपयोगाभावेनानर्थक्यमाशङ्क्य गुणफलोपबन्धाद्युपयोगित्वेन विध्युद्देशान्तर्गत्या धर्मप्रमोपयोगं प्रसाध्य क्वास्ति नामधेयत्वं क्व वेति कोष्ठशोधनमुद्भिदाद्यधिकरणैः कर्त्तुमारब्धं तस्य चात्राविचारेण पर्यवसानात्कोष्ठशोधनेन नामधेयप्रामाण्यविचारशेषत्वानुपपत्तेरर्थवादकोष्ठशोधनार्थत्वे वा द्वितीयपाद एवार्थवादप्रकरणे कर्त्तव्यत्वापत्तेः स्वातन्त्र्येण तु गुणविध्यर्थवादविचारे वाक्यार्थव्याख्यानापत्तेः प्रमाणलक्षणसङ्गत्यभावप्रसङ्गादनारभ्यमिदमधिकरणमित्याशङ्क्याह * गुणविधीति * सर्वत्र गुणविध्यसम्भवेनैव नामधेयत्वस्योक्तत्वात् तद्विचारे पर्यवसिते प्रतियोगित्वेन बुद्धिस्थस्य गुणविधित्वस्य विचारः पूर्वाधिकरणव्युत्पादितस्योत्पत्तिशिष्टेनोत्पन्नशिष्टबाधस्याष्टाकपालादिविषयो भवति न वेत्येतन्निर्णयार्थत्वे नामधेयत्वसिद्ध्यर्थोत्पत्तिशिष्टबलीयस्त्वविषयविवेकफलतया नामधेयविचारशेषत्वं प्रतिपद्यमानो नासङ्गत इत्याशयः। यद्वा गुणविधिनामधेयं निर्णीतं सन्दिग्धानामर्थानां वाक्यशेषादर्थाच्च व्यवसानमुक्तमिति द्वितीयाध्यायोपक्रमभाष्यपर्यालोचनया ऽक्त

धिकरणं यावन्नामधेयविचारप्रतीतेः साक्षान्नामधेयाविचा
सङ्गतिसिद्ध्यर्थम् अष्टाकपालादिशब्दानां नामधेयत्वेनापि पू
पक्षः कर्तुं शक्यतइत्याह * अथ चेति * अष्टाकपालादिशब
नां विशेष्यापेक्षायां द्वितीयान्तस्यापि वैश्वानरपदस्य प्रथमान
त्वेन परिज्ञातस्यान्वयप्रतीतेः । तस्य च देवतान्वितद्रव्यवाचित्वे ऽ
यागानुमानपर्यवसायित्वात् उत्पत्तिशिष्टद्वादकपालावरुद्धे
यागे ऽष्टाकपालादीनां निवेशायोगात् द्वादशत्वान्तर्गताष्टत्वादियो
स्य च प्रवृत्तिनिमित्तस्य सम्भवाद्वैश्वदेवशब्दवद्यागनामत्वमाश
द्वादशकपालस्याष्टाकपालादिव्यपदेश्यत्वलक्षणस्य तत्प्रख्यत्वस्या
वेन प्रवृत्तिनिमित्ताभावान्निराकृत्य वैकल्पिकानेकसंख्याविशिष
श्वानरयागाख्यैकार्थविधानेनानेकगुणविधावपि वाक्यभेदाप्रस
सर्वेषामुत्पत्तिशिष्टत्वाविशेषाद्वैश्वदेवन्यायवैषम्येण गुणविधि
पपाद्य सामानाधिकरण्यनिर्दिष्टद्वादशकपालान्वयेन निराका
वैश्वानरस्य विपरिणामेनाष्टाकपालाद्यन्वयकल्पनानुपपत्तेर्गुणवि
वेकवाक्यत्वायोगात् वैश्वदेवन्यायसाम्यापादनेन निराकृत्याथ
दत्वं सिद्धान्त्यतइत्यर्थः । नन्वौदुम्बराधिकरणे एव सर्वेषां वि
वन्निगदानां विधित्वाशङ्कानिरासेनार्थवादाधिकरणव्युत्पादित
र्थवादत्वस्यापि स्थापितत्वादनर्थकमेतदधिकरणं स्यादित्याशङ्क्य
र्वसिद्धैर्वेत्युक्तम् * भाष्यकारान्तरकृता ऽऽकारप्रश्लेषरहितसूत्र
ख्यानत्यागेनाकारप्रश्लेषेण भाष्यकृतो व्याख्याने कारणं वक्तुमुप
सपूर्वकं तद् दूषयति *तत्रेति* यस्माद्युदुत्पत्तावपूर्वमित्यनेना
ढानामुद्भिदादिशब्दानां नामधेयत्वावधारणात् लोकप्रसिद्धानां
विधानेनार्थवत्त्वमर्थादुक्तं भवति तस्मादेते ऽष्टाकपालादयः शब्द
कप्रसिद्धार्थत्वाद् गुणविधय इत्यर्थः । द्वादशकपालं निर्वपेदित्य
पुरोडाशप्राप्तेः संख्यामात्रपरत्वमष्टाकपालादिशब्दानां सूचयित
त्वादय इत्युक्तम् । उद्भेदनादेरवयवार्थस्य लोकप्रसिद्धस्यैव नाम
प्रवृत्तिनिमित्तत्वाल्लोकप्रसिद्धार्थस्यापि चित्रादिशब्दस्य नामधेय
सिद्धेर्न लोकप्रसिद्धार्थत्वमात्रेण गुणविधित्वासिद्धिरिति दु
शयः । किमर्थं तर्हि यदुत्पत्तावपूर्वमित्युक्तमित्याशङ्क्याह *
ति * नालौकिकार्थत्वमपूर्वशब्देनोक्तं किं त्वनिरूढार्थत्वमिति
चयितुम् * सर्वत्रेत्युक्तम् * तदपि नामधेयत्वावधारणे सा
धिकरण्यसहकारिकारणं न साक्षादिति समभिव्याहारादिभि
नेनोक्तं पूर्ववच्छब्दं प्राप्तार्थाभिप्रायमङ्गीकृत्याकारप्रश्लेषेण
कारीयव्याख्यानमनुसन्धत्ते * तस्मादिति * पूर्ववन्तो वि

ी इति सूत्रावयवो ये हीति भाष्यानुसारात् पूर्वार्द्धेन व्याख्यातः । देतादिति भाष्यानुसारादुत्तरार्द्धेनोत्तरः पूर्वार्द्धं व्याचष्टे * यदि ोति * उत्तरार्द्धं व्याचष्टे *न त्विति* ननु द्वादशत्वे ऽष्टत्वादीना- न्तर्गतः प्राप्तिर्भविष्यतीत्याशङ्क्याह * तथा हीति * यथा देव- त्त गामानयेति त्रिपदे वाक्ये गामानयेति पदद्वयसमुदायो ऽन्य- । वाक्यार्थाभिधानलक्षणैकार्थक्रियाकारित्वधर्मयोगाल्लब्धात्मको ात्र प्रत्याभिज्ञायमानो ऽपि विवक्षितवाक्यार्थाभिधाने व्यापाराभा ान्न समुदायत्वेन व्यपदिश्यते तथा संख्येयपरिच्छेदकत्वेना- यत्र लब्धात्मिकाप्यष्टत्वादिसंख्या द्वादशसंख्यापरिच्छेद्यानां क- ालानामपरिच्छेदकत्वात् परिच्छेदकत्वं च विना निरूपयितुमशा- क्यत्वात् न संख्यात्वेन व्यपदिश्यत इत्युक्तम्। ननु महासंख्यायामवा- तरसंख्याव्यपदेशाभावे सहस्रदर्शनेन शतानुमानं शतं ब्राह्मणाः ोमान् भक्षयन्तीति चोक्ते द्वादशैकैकमिति विभागकथनं सप्तमा- त्ये च चोदकनामधेययोर्विरोधे नामधेयबलीयस्त्वे सिद्धान्तिते ग- ामयने तर्हि वैश्वानरो ज्योतिष्टोमं प्रायणीयमहर्भवति इति प्रथ- मस्याह्नो नामधेयबलीयस्त्वात् ज्योतिष्टोमविकारत्वेन त्र्युपसत्त्वे प्रा- े तस्य च मुख्यत्वात् तदनुरोधेनान्येषामपि त्र्युपसत्त्वापत्तेर्द्वाद- ोपसत्त्वदर्शनं न युक्तमित्याशङ्क्य द्वादशसु तिसृणां भावात् सर्वे- षामनुग्रहार्थं द्वादशोपसत्त्वस्य तन्न्याय्यत्वात् युक्तं तद्दर्शनमित्य- भिधानं न युज्यतेत्याशङ्क्य * अर्थात्मनेत्युक्तं * वस्तुवचनो ऽर्थ- शब्दः महासंख्यापरिच्छेद्येभ्यः संख्येयेभ्यः कतिषु चिन्निष्कृष्यमा- णेष्ववान्तरसंख्या वस्तुरूपेणास्त्येवेत्यर्थः । एवं तर्हि प्राप्तत्वान्ना- ष्टत्वादीनां विधेयत्वं सिध्येदित्याशङ्क्य * नासावित्युक्तम् * अष्टसु कपालेषु संस्कृतमिति विग्रहवाक्यगतया सप्तम्याष्टत्वस्य संस्काराख्यक्रियाङ्गत्वप्रतीतेस्तस्य च संस्कारसाधनीभूतकपालपरि- च्छेदद्वारत्वात्तेषां च द्वादशत्वपरिच्छिन्नानामष्टत्वेन परिच्छेत्तुमश- क्यत्वात् निर्द्धारणस्य गुणस्य क्रियासाधनत्वायोगात् नाष्टत्वा- देर्द्वादशकपालपुरोडाशसंस्काराङ्गत्वेन प्राप्तिरस्तीत्याशयः । यथा कथं चित्प्राप्तिमभ्युपेत्यापि तद्धितसमासयोः सामर्थ्यापेक्षत्वा- त् विशेषणत्वं च विना सामर्थ्यायोगात् द्वादशान्तर्गतस्य त्वाष्टत्वादेः संख्यान्तराव्यावर्त्तकात्वाद्विशेषणत्वाऽसम्भवेनाष्टा- कपालादिशब्दानुपपत्तिसूचनायाङ्गमिति वक्तव्ये * विशेषण- मित्युक्तम् * श्लोकं व्याचष्टे * न हीति * निष्क्रि- यत्वेन संख्यायाः संस्कारसाधनभूतकपालपरिच्छेदानिरपेक्षायाः

संस्कारे व्यापाराभावान्नाङ्गत्वेन प्राप्तिरस्तीत्यर्थः । अप्राप्त्यर्थमेव संख्यापरिच्छेदकत्वं विना संख्यानिरूपणाशक्तेरसत्तुल्यत्वमविद्यमानताशब्देनोक्तं कति चिन्निष्कृष्याष्टावेतानीति परिच्छेदकत्वात् प्राप्तिसम्भवे ऽपि संस्कारसाधनीभूतद्वादशसंख्याकपालपरिच्छेदकत्वाभावान्नाष्टाकपालादिव्यपदेशोपपत्तिरिति * यद्यपि चेत्यनेनोक्तम् * ननु द्वादशकपाले ऽप्यष्टौ कपालानि सन्ति अस्मिन्निति अष्टाकपालशब्दो न शक्यो वक्तुमित्याशङ्क्य * संस्कृतेत्युक्तम् * तत्रेत्यनुवर्तमाने संस्कृतं भक्षा इत्यनेनाष्टसु कपालेषु संस्कृतमित्यस्मिन्नर्थे संख्यापूर्वसमासत्वेन द्विगुसंज्ञा दृष्टा कपालप्रातिपदिकाद्विहितस्याण्प्रत्ययस्य द्विगोर्लुगनपत्य इति द्विगुपरतद्धितलुक्स्मरणेन लोपादष्टाकपालशब्दसिद्धिरित्याशयः । नन्वेवमपि समासवेलायां संस्कारकत्वस्योपाधेरभावात् संस्कारकाणामष्टत्वेनापरिच्छेद्यत्वे ऽपि केषांचिन्निष्कृष्टानां तत्परिच्छेद्यत्वेन समासोपपत्तिरधिकानामपि च संस्कारकत्वानपायात्तद्धितोपपत्तेरष्टाकपालशब्दो न विरुध्यत इत्याशङ्क्य * तद्धितार्थेत्युक्तम् * तद्धितार्थोत्तरपदसमाहारे चेति तद्धितार्थे विषयभूते दिक्संख्ययोः सामानाधिकरण्यसमासस्मृतेः संस्कारकत्वस्योपाधित्वावसायात् द्वादशत्वपरिच्छिन्नानां च संस्कारकाणामष्टत्वेन परिच्छेत्तुमशक्यत्वात् अष्टाकपालशब्दानुपपत्तिरित्याशयः । ननु द्वादशत्वपरिच्छेद्यसमुदायैकदेशभूतानि तानि कपालानि निष्कृष्याष्टत्वादिना परिच्छेत्तुं शक्यन्त एवेत्याशङ्क्याह *तौ चेति* एकदेशभूतानामेकदेशान्तरसापेक्षत्वात्तद्धितसमासयोर्द्वयोरप्यनुपपत्तिः स्यादित्याशयः । द्वादशकपाले ऽष्टत्वाद्यभावाभिधानस्य प्रकृतोपयोगमाह * तेनेति * अष्टाकपालादिशब्देन द्वादशकपालसङ्कीर्तनस्यासत्त्वादित्यर्थः । नामधेयत्वपूर्वपक्षस्यानभिमतत्वद्योतनार्थं तदुपेक्षा अनेन चेतरथेति भाष्यमपि व्याख्यातं भवति । नन्वष्टाकपालादिशब्दैर्द्वादशकपालाऽनभिधानात्तत्प्ररोचनाऽसम्भवे ऽप्यष्टत्वादीनां द्वादशत्वान्तर्गतानां प्ररोचनार्था स्तुतिर्भविष्यतीत्याशङ्क्याह * न चेति * द्वादशकपालसाध्ये कर्मण्यष्टत्वादेर्द्वादशत्ववत् कपालपरिच्छेदकत्वाभावात् तद्वैलक्षण्येन च प्रकारान्तरेण संख्यायाः कर्मोपयोगासम्भवात् अनुपयोगिनः स्तुतिर्व्यर्था स्यादित्याशयः । अविभागादिति सूत्रे यदा त्वष्टत्वादिप्ररोचनार्थो अनर्थकः इत्यवगतमित्यनुभाषणार्थकथनपरभाष्यदर्शनादितरथेति भाष्यस्याप्ययमेवाशयो गम्यते एतच्च तत्सामर्थ्यमिति सूत्रावयवेन विधानएव साम-

---

१ संस्कारकत्वं तावतामताधिकं २ पु० पा० ।

र्थमित्यवधारणादर्थवादत्वे स्तुत्यसामर्थ्यमित्यर्थादुक्तं भाष्यकृता
याख्यातम्। नन्वष्टत्वादेः कर्मानुपयोगित्वात्स्वतः स्तुत्यनर्हत्वे द्वादशा-
वस्तुत्यर्थे वेतसावकस्तुत्यर्थे वेयं स्तुतिर्भविष्यतीत्याशङ्कानिरासा-
ां न चेति भाष्यं व्याचष्टे * यद्यपि चेति * द्वादशकपालाष्टा-
कपालशब्दयोः पुरोडाशयान्वित्वादष्टाकपालपुरोडाशस्तुत्या द्वाद-
कपालपुरोडाशस्तुतिरिह प्रतीयते न च गायत्र्याद्यक्षरसंख्यासा-
ान्येनाष्टत्वादौ कपालविशेषणे स्तुते तद्द्वारा द्वादशत्वे स्तुते क-
ालाधारसंस्कारविशेष्यः पुरोडाशः स्तुतो भवतीत्यर्थः। अनेन च
त्यक्षा ह्यष्टानां कपालानां स्तुतिः परोक्षा द्वादशानां पुरोडाशस्य तु
कथं चिदित्येवं भाष्यं व्याख्यातम्। ननु संख्यास्तुत्या पुरोडाशस्तु-
ासम्भवे ऽपि द्वादशसंख्यैवाष्टादिसंख्या स्तोष्यतइत्याशङ्कानिरा-
ार्थत्वेन प्रत्यक्षाभावे चेति भाष्यं द्वादशत्वस्यासाक्षात् सम्बन्धि-
तुत्यभावे ऽष्टत्वादिद्वाराङ्गीकार्या स्यात् तत्सद्भावात्तु परोक्षाङ्गी-
रणं न युक्तमित्येवं व्याचष्टे * अपि चेति * तस्मादित्युपसंहा-
भाष्यं व्याचष्टे * तस्मादिति * ननूत्पत्त्युत्पन्नशिष्टयोर्विकल्पः
र्वाधिकरणएव निरस्त इत्याशङ्क्याह * सर्वं चेति * वैश्वानरं
ादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं
ह्मवर्चसेन पुनाति यन्नवकपालो भवति त्रिवृतैवास्मिंस्तेजो दधा-
ि यद्दशकपालो भवति विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशक-
लो भवति त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो भव-
जगत्यैवास्मिन् पशून्दधाति यस्मिन् जातएतामिष्टिं निर्वपति
ा एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवतीत्युपक्रमोपसंहा-
ोरेकजातेष्टिविषयत्वेनैकवाक्यत्वान्नोत्पत्त्युत्पन्नशिष्टरूपो विशेषो
ास्तीत्यर्थः। एकवाक्यविहितानामपि संख्यानां समुच्चयायोगात्
कल्पो न विरुद्ध इत्याशयः। अनेन चैकवाक्यत्वाभिधानार्थत्वेन
त्रं समाम्नाय पदं व्याख्यातं भवति न त्वविधानार्थो इत्यकारप्र-
षेण व्याख्याने तत्सामर्थ्यमिति तच्छब्देनाविधानस्यैव परामर्शा-
ाविधानसामर्थ्यमिति भाष्यकारीयं व्याख्यानं पूर्वापरविरुद्ध-
त्याशङ्क्याह * तत्सामर्थ्यमिति चेति * तत्रत्यपूर्वपक्षे विक-
न फलेन गुणविधिप्रतिज्ञानात् व्यवहितस्यापि योग्यत्वात्तच्छ-
ा परामर्शो भाष्यकृता विधानशब्देन दर्शितो नैतत्सूत्रस्थस्येत्याश-
। योग्यत्वमेव विवृणोति * तदीयं हीति * प्रतिज्ञाध्याहारेण
ां पूरयति * तस्मादिति * ये वैश्वदेवादिशब्दाः पूर्ववन्तो वा-
न्तरेण गुणविशिष्टे कर्मणि पूर्वमुत्पन्ने तद्विरुद्धगुणान्तराभिधा-

यिनः ते स्ववाक्यस्थेन गुणेन निराकाङ्क्षे कर्मणि तद्विरुद्धगुण न्तराभिधानाशक्तेरविधानार्था अष्टाकपालादिशब्दानां तु सामान्न यत्वात् सहोच्चारणत्वात् एकवाक्यगतत्वात् उत्पत्त्युत्पन्नशिष्टत्व विशेषानवगमाद्वैश्वदेवशब्दस्य पूर्वपक्षे सामर्थ्यं तदेषामस्ति य स्तूत्पत्तिशिष्टेनोत्पन्नशिष्टस्य बाधस्तत्रोक्तः सो ऽत्र नास्तीति सूत्र र्थो ऽनेनोक्तो भवति ।

गुणस्यतु विधानार्थे ऽतद्गुणाः प्रयोगे स्युरनर्थव
न हि तं प्रत्यर्थवत्तास्ति ॥ १८ ॥

गुणविधानार्थत्वे ऽष्टाकपालादिशब्दानां बलाद्वाक्यभेद पत्तेरुत्पत्तिशिष्टद्वादशत्वावरुद्धे यागे ऽष्टत्वादीनां निवेशाशक्तेरत दूगुणेनानर्थक्यम् उपपादयितुं गुणस्येत्यादिभाष्यमक्षते द्वादशत्वाव वरुद्धे गुणविधौ गुणविशिष्टयागान्तरविधौ चानर्थक्याभावाद्यु
३।१२ क्तमाशङ्क्योपलक्षणार्थत्वेन व्याचष्टे * प्रकृतं इति * तथाशब्दे प्रकृताप्रकृतत्वे परामृष्टे गुणविशिष्टो यागश्चकारेणोक्तः । यागे ताव त् त्रेधापि गुणविध्यसम्भवमुपपादयति * प्रकृत इति * द्रव्यदे वतासंयोगाश्रयणेन यागानुमानं निरस्तं द्रव्ये ऽपि प्रकृतयागसम्ब न्धिनि दूरस्थयागसम्बन्धिन्यपूर्वयागसम्बन्धिनि वा गुणविधिसि विधौ ऽपि यागे गुणविधिनिरासान्निरस्त इत्याह * एतेनेति * गु णविशिष्टद्रव्यविध्यसम्भवं प्रतिज्ञातमुपपादयितुं स्मारयति * त थेति * त्रेधापि प्रत्युक्तमित्यतिदेशार्थस्तथाशब्दः । प्रकृते ताव द्यागे गुणविशिष्टद्रव्यविध्यसम्भवमुपपादयति * न हीति * यद हवनीये जुहोतीतिवद्यजेतेति स्वशब्देनानुवादाभावाद् दूरस्थे ऽपि द्रव्यविधिर्न सम्भवतीत्याह * नापीति * नन्वेवमपि तर्हि स्व तन्त्रमेव गुणविशिष्टं द्रव्यं विधीयतामत आह * न चेति * न वं बलमानर्थक्यापत्तेरविधानं किं त्वशक्यत्वादपीत्याह * नापीति विध्यशक्तेरेव तदधीनफलकल्पनाशक्तेर्नाश्रुतफलकल्पनयानर्थक परिहर्तुं शक्यमित्याह * अत इति * ननु वैश्वानरो ऽष्टाकपाल भवतीति वैश्वानरपदानुषङ्गेण द्रव्यदेवतासम्बन्धानुमितयागलाभ दष्टाकपालादिपुरोडाशविशिष्टापूर्वयागविधिर्भविष्यतीति तृतीयं प्र कारमाशङ्क्याह * वैश्वानरपदमिति * पदोत्तरत्वेन श्लोकं व्या चष्टे * स्यादेतदिति * ननु स्तुतिरपि विधेयवैश्वानरयागविषय त्वान्न वैश्वानरपदानुषङ्गं विना युक्तेत्याशङ्क्याह * तदा चेति

नुवादस्य प्रमाणान्तराधीनत्वान्न शब्दव्यापारापेक्षेत्याशयः । अतस्त्रे-
ापि पुरोडाशविधानं न सम्भवतीत्युपसंहरति * तस्मादिति *
वं प्रकृताप्रकृतापूर्वयागसम्बन्धितया त्र्यधाप्यष्टाकपालादिपुरो-
ाशविधाने निरस्ते यदि कश्चित् प्रकृते द्वादशकपाले ऽष्टाकपा-
ऽष्टाकपालादिविधिमाशङ्कते तं प्रत्याह * न चेति * अयमा-
यः । यथैवाष्टाकपालस्य यागाङ्गत्ववादिना वैश्वानरो ऽष्टाकपा-
इति विपरिणतवैश्वानरपदानुषङ्गो ऽङ्गीक्रियते तथैव द्वादशक-
ालो ऽष्टाकपाल इति विपरिणतद्वादशकपालपदानुषङ्गोऽङ्गीका-
: । स च तद्वदेवाप्रमाणकः । तदभ्युपगमे ऽपि सामानाधिक-
ण्यनिर्देशेन पुरोडाशभेदानवगमात् द्वादशकपालाङ्गत्वेनाऽष्टाक-
लादिशब्दैर्वैकल्पिकसंख्यान्तरविधानापत्तेस्तस्य च यागाङ्गत्ववान्नि-
द्धत्वान्नाशङ्का युक्तेति ननूत्पत्तिशिष्टद्वादशत्वावरोधान्नाष्टत्वादेः
कृते यागे पुरोडाशे वा विधिः सम्भवतीति त्वयोक्तं तन्न सर्वस्यै-
वाक्यत्वात्पूर्वपक्षिणा परिहृतमित्याशङ्क्याह * न चेति * वै- ३
ानरपदस्य द्वितीयान्तेन द्वादशकपालपदेन प्रथमान्तैश्चाष्टाकपाला-
पदैर्वैरूप्यापत्तेस्तन्त्रान्वयायोगात् श्रुतद्वितीयान्तद्वादशकपाल-
ान्वयत्यागेनाष्टाकपालादिपदैरन्वयापत्तेर्द्वितीयान्तत्वेन परिणतै-
न्त्रान्वयाभ्युपगमस्यात्यन्तायुक्तत्वात् वैश्वानरवाक्ये द्रव्यदेवता-
शिष्टो यागो विधेयत्वेन प्रयोजनमितरेषु संख्येति प्रयोजनरूपार्थ-
द्विभागे च नैराकाङ्क्ष्याद् गुणविधिपक्षे बलाद्वाक्यभेदः प्रस-
तेत्याशयः । एकवाक्यत्वे चाऽष्टाकपालं नवकपालं दशकपाल-
कादशकपालं द्वादशकपालं वैश्वानरं कुर्यादिति समुदाये वाक्य-
माप्त्या सर्वसंख्याविशिष्टैकभावनाविधिप्रतीतेर्वस्तुतः संख्यानां
मावेशायोगे ऽपि निरपेक्षसाधनत्वानवसायान्न विकल्पः स्यादि-
ाह * यदि चेति * आख्यातगुणभावेनाष्टाकपालं वैश्वानरं कु-
न्नवकपालं कुर्यादित्यादिप्रत्येकं वाक्यसमाप्त्ययोगान्न निरपेक्ष-
धनत्वं वक्तुं शक्यमित्याह * अष्टत्वादीनां चेति * ननु समु-
येन तर्हि पूर्वपक्षो ऽस्त्वित्याशङ्क्याह * न चेति * तथा सति
श्चाशत्संख्यापत्तेरष्टत्वादीनां मध्ये न काचित्स्यादित्यर्थः । नन्व-
वादीनां द्वादशत्वान्तर्भूतानामेव समुच्चयोपपत्तेर्न संख्यान्तरोपज-
ापत्तिरित्याशङ्क्याह * संख्यान्तरेति * अतो वैश्वदेवन्या-
हाप्युत्पत्तिशिष्टेनोत्पन्नशिष्टबाधान्न गुणविधिः सम्भवती-
पसंहरति * तेनेति * अपि चेति भाष्येणाष्टत्वादीनां प्रक-
ागम्ययागाङ्गत्वबाधेन पुरोडाशैकवाक्यत्वावगमात् न यागाङ्ग-

त्वम् * सम्भवतीत्युक्तम् * तत्पूर्वेण पुनरुक्तमाशङ्क्य विविक्त
षयत्वं भाष्यद्वयस्याह * एवमिति * पूर्वेणोत्पत्तिशिष्टद्वादशत्व
वरोधाद्यागस्याष्टत्वाद्यनाकाङ्क्षोक्ता अनेनाभ्युपगम्य यागाकाङ्क्षां
क्येन पुरोडाशाङ्गत्वावसायाच्च यागाङ्गतेत्युच्यते इति विवेकः
ननु पुरोडाशस्वरूपचिन्तायामानर्थक्यापत्तेरपूर्वसाधनांशलक्षण
वाक्येन प्रकरणापेक्षणात् न विरोधो ऽस्तीत्याशङ्क्य * ऽष्टत्वा
इत्युक्तम् * द्वादशत्वावरुद्धपुरोडाशद्वाराष्टत्वादेर्यागाङ्गत्वायो
त् तन्नैरपेक्ष्येण यागाङ्गत्वं वाच्यम् न च पुरोडाशमतिक्रम्याष्टत्वाद
यागान्वयं सहन्तइत्याशयः । सहेः कर्त्तरि क्तप्रत्यये परभूते हो
इति हकारस्य ढकारादेशे कृते झषस्तथोर्धो ध इति तकारस्य ध
ष्टुत्वे कृते ढोढे लोप इति पूर्वढकारे लुप्ते कृते सहिवहोरोदवर्ण
स्यकारस्यौकारादेशात्सोढा इति रूपसिद्धिः । यागप्रकरणशब्दौ
श्वानरयागविषयतयैकवाक्यत्वे च यागानङ्गत्वं हेतुतया व्या
* ते ऽपीति * कस्मिन्नर्थे पुरोडाशैकवाक्यत्वं हेतुरित्यपेक्षायां
वेत्युक्तं कस्य प्रकरणमित्यपेक्षायां तच्छब्देन वैश्वानरयागः प
मृष्टः भाष्यस्थं यागशब्दं वैश्वानरविषयं द्योतयितुं त
त्युक्तम् । वैश्वानरयागप्रकरणं बाधित्वा पुरोडाशैकवा
त्वाच्चाष्टत्वादयः पुरोडाशान्वयानपेक्षाः वैश्वानरयागस्य भवि
न्ति येनोत्पत्तिशिष्टेन द्वादशत्वेन भिन्नविषयतया विरोधा
वाच्च बाधेरन्निति भाष्यार्थः । यागशब्देन च भाष्यकृता परार्थत
द् गुणानामिति पूर्वाधिकरणसूत्रगतेन परशब्देन निर्दिष्टो यागो
द्गुणा इति तच्छब्देन परामृष्ट इति द्योतितम् यागानङ्गत्वे को न
इत्याशङ्क्य प्रयोगे स्युरनर्थका इति सूत्रकृतोक्तं तद्व्याख्यानार्थं
गासम्बन्धे चेति भाष्यं व्याचष्टे * तथा चेति * पुरोडाशस्य
गाङ्गत्वात् तद्द्वारा ऽष्टत्वादेः पुरोडाशान्वये ऽपि फलवत्त्वोप
फलाभावादित्ययुक्तमाशङ्क्य केवलेत्युक्तम्।यागाङ्गभूतस्य पुरोडा
द्वादशत्वावरोधेनाष्टत्वाद्यन्वयायोगात् पुरोडाशस्वरूपान्वयो
त्वादेर्वाच्यस्तत्र चानर्थक्यं स्यादित्याशयः।न हि तं प्रत्यर्थवत्तास्ती
तत्सूत्रावयवव्याख्यानार्थमपि पुरोडाशेति भाष्यमतद्गुणा इति
च्छब्दपरामृष्टयागान्यवाचिता नञा निर्दिष्टस्य पुरोडाशस्य तं प्रत
तच्छब्देन परामर्शो ऽनेन भाष्येणोक्त इति सूचयितुं पूर्वेणैको
व्याख्यातम्। न हीति सूत्रावयवः पुरोडाशेति भाष्येण कथं व
ख्यात इत्यपेक्षायामाह * न हीति * स्वयमन्यथा व्याचष्टे
अथ वेति * तच्छेषो नोपपद्यतइति चेदिति सूत्रपातानिकार्थः

त्वेन त्विति भाष्यं तत्तु स्तुत्यर्थत्वेनोपपन्नत्वान्नानर्थकमित्यनेना-
ा व्याख्यातत्वान्न व्याख्यातम् एतत्सूत्रार्थस्य चेतरथार्थवादाः
तो ऽनर्थकाः स्युरिति भाष्येण तत्सामर्थ्यमिति विशेषणाक्षिप्त-
क्तत्वादिति यदुक्तमितिभाष्येणाभाषान्तमेतत्सूत्रमित्युक्त्वा वि-
गाङ्क्षितार्थे स्तुत्यर्थेनोपपद्येरन्निति सूत्रं परिहारार्थत्वेन भा-
कृता पृथक् पठितमपि यदा त्विति भाष्यावयवेनाभाषासूत्रार्थस्य
हारसूत्रार्थेन सहैकीकृत्य व्याख्यानात् स्वयमपि तथा व्याख्या-
कीकृत्य पठति * तच्छेष इति इति चेदिति * पदद्वयं भाष्य-
रेणापठितमपि वृत्त्यन्तरे दृष्टत्वाद्वार्त्तिककृता पाठितं यदा त्विति
ष्यावयवेन पूर्वसूत्रगतगुणशब्दनिर्दिष्टाष्टत्वादिपरामर्शितं तच्छे-
ाङ्गीकृत्याष्टत्वादिशेषो यदष्टाकपालो भवतीत्याद्यर्थवादो नोप-
त इति एवमाभाषासूत्रं व्याख्यातं तदष्टत्वादेर्भवतिपरेणाख्या-
विहितस्य स्तुत्युपपत्तेरयुक्तमाशङ्क्योपपादयति *अष्टत्वादीति* ३१
यत्तिशिष्टद्वादशत्वावरुद्धे यागे ऽष्टत्वादेर्विधानानर्हत्वात् इयमष्ट-
देः प्ररोचना सती व्यर्था स्यादित्यर्थः।तदेति भाष्यावयवेन विधा-
र्थे स्तुत्यर्थे नोपपद्येरन्निति परिहारसूत्रावयवं विधानविषयभू-
ादशत्वस्तुत्यर्थेन यदष्टाकपालो भवतीत्यादयः शब्दा उपपद्यन्त
। एवं च व्याख्यातुं लक्षणयाष्टाकपालादिशब्दैर्द्वादशकपालस्तुति-
युक्तं तत्र लक्षणायां को हेतुः कथं चाष्टत्वादिना द्वादशत्वं
यतइत्यपेक्षायामाह * तस्मादिति * अष्टत्वादिप्ररोचनार्थे-
र्थस्य हेतुत्वं तस्माच्छब्देनोक्तम्। अवयवावयविसम्बन्धस्य च ल-
णाबीजत्वमवयवद्वारमित्यनेनोक्तम्। एतदेव व्याचष्टे* यदिति *
अष्टाकपालादिशब्दानां द्वादशत्वान्तर्गताष्टत्वादिपरत्वं कथम-
ायमित्याशङ्कानिरासार्थत्वेनाविभागादिति सूत्रावयवव्याख्यानं[1]-
सन्ति हीति भाष्यं तात्पर्यतो व्याचष्टे * तदिति * सामीप्य-
व्यविभागशब्द इत्याशयः। ननु गायत्र्यादिशब्दैः संख्यासा-
नाष्टत्वादिषु स्तुतिप्रतीतेः कथं द्वादशकपालस्तुतिरित्युक्तामि-
शङ्क्याष्टत्वाद्येवात्र द्वादशत्वस्तुत्यर्थं स्तूयतइति अत इति भा-
णोक्त्वा कथमवयवस्तुत्यावयवी स्तुतो भवतीत्याशङ्कानिरासार्थं
ाति भाष्ये दृष्टान्ताभिधानं कृतं तत्तात्पर्यतो व्याचष्टे * एकदे-
ते * ननु चक्रावयवत्वाल्लेख्यादेस्तत्स्तुत्यावयविनः स्तुतिर्युक्ता
ष्यानां त्ववयवावयविभावाभावान्नाष्टत्वादिस्तुत्या द्वादशत्वं
तं भवतीत्याशङ्क्यावयवावयविभावाभावे ऽप्येकदेशैकदेशिभावेन

१ उपपन्नतरत्वादिति २ पु० पा०।

समुदायिहस्त्यादिस्तुत्या समुदायसेनास्तुतिदर्शनात् संख्यानाम
चैकदेशैकदेशिभावप्रसिद्धेरष्टत्वाद्येकदेशस्तुत्यैकदेशिनीद्वादशत
सङ्ख्या स्तुता भवतीति प्रतिपादनार्थत्वं द्वितीयदृष्टान्त
भिधानस्य सूचयितुमेकदेशैकदेशिशब्दौ तस्मादित्युपसंह
रभाष्यं कीदृशी स्तुतिरित्यज्ञानाद्व्याचष्टे * तेनेति * यच्च प्रत्यक्ष
भावे त्वपरोक्षः स्यादिति पूर्वपक्षभाष्येण द्वादशत्वस्य प्रत्यक्षरू
त्मीयस्तुतिसद्भावात् परोक्षाष्टत्वादिद्वारा स्तुत्यङ्गीकरणमयुक्तं
त्परिहारार्थत्वेनाप्येतदेव भाष्यं पूर्वोक्तानुभाषणापूर्वकं व्याचष्टे
यत्विति * प्रत्यक्षपरोक्षस्तुतीनां प्रत्येकं ग्रहणे सति प्रत्यक्षरै
नैराकाङ्क्ष्यात् परोक्षाश्रयणमयुक्तं स्यात् तासां तु यस्मिन् जा
एतामिष्टिं निर्वपति स पूत एव तेजस्वी अन्नाद इन्द्रियावी प
मान् भवतीति प्राशस्त्यप्रतिपादनोपपादकतया सर्वासां युगपत्
हणान्नैकया नैराकाङ्क्ष्यमिति वक्तुम् * ऐकरूप्येणेत्युक्तम् * 
ल्पयैव स्तुत्या प्ररोचनोपपत्तौ महती स्तुतिरनर्थिकेत्याशङ्कानिर
सायापरिमाणत्वादित्युक्तम् । अनियतपरिमाणत्वमेवोपपादयति
सर्वत्रेति *

## कारणं स्यादिति चेत् ॥ २० ॥

स्वयं तावत्सूत्रं व्याचष्टे * जनकत्वेनेति * भाष्यकारी
व्याख्यानमुपपादयति * तेषामिति * फलस्य साधनविषयप्रवृत्ति
हेतुत्वात् साधनं प्रति कारयितृतास्तीत्याशयः । किमेवमिति भ
ष्येण किमर्थं कारणत्वाभिधानमिति पृष्ट्वा पुरोडाशस्येत्यादिनो
क्तदोषपरिहाराय गुणफलसम्बन्धिरूपपूर्वपक्षान्तरप्रदर्शनार्थमेतत्स
त्रमित्युक्तम्।तत्प्रपञ्चयितुमाह* यदुक्तमिति*काम्यस्याप्युपन्नशि
स्योत्पत्तिशिष्टबाधकत्वं कथमित्याशङ्क्य नैमित्तिके तु प्रकृतौ त
द्विकारः सम्प्रयोगविशेषादिति तृतीयाधिकरणवक्ष्यमाणन्यायमा
११ * तथा हीति * अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य त
सन्दिग्धमाराद्विशेषशिष्टं स्यादिति दशमाधिकरणन्यायेन ना
काम्यं नित्यस्य बाधकमित्याह * विशेषतश्चेति * जातेष्टिप्रयोगम
त्रविषयत्वात् सामान्यरूपे द्वादशत्वे प्राप्ते ब्रह्मवर्चसकामादिप्रयो
गविशेषविषयत्वेनाष्टत्वादेः प्रवर्त्तनादित्यर्थः । पौर्वापर्ये पूर्वदौर्बल
प्रकृतिवदिति षष्ठाधिकरणन्यायेनाप्येवमित्याह * पूर्वेति * उ
त्पत्तिशिष्टत्वात् पूर्वं प्राप्ते द्वादशत्वे ऽष्टत्वादेरुत्पन्नकर्माश्रयत्वे
पश्चात्प्रवर्त्तनादित्यर्थः । तार्त्तीयं न्यायं विवृणोति * पुरुषार्थेति

ाम्यस्य नित्यबाधकत्वे ऽयमेव मुख्यो न्यायः सम्भवमात्रेण तु
ायान्तरोपन्यासस्तत्रेति सूचयितुमस्यैव विवरणगुणफलसम्बन्ध-
धानोपपादनफलमानर्थक्यपरिहारमुपसंहरति * तस्मादिति *
तु भवतीति वर्त्तमानापदेशसन्दिग्धस्य पञ्चमलकारतया विधित्व-
र्णयः स्तुत्यन्वयान्यथानुपपत्त्यधीना गायत्र्यैवैनमित्यादेस्तुत्यभा-
नास्य विधित्वनिर्णयाशक्तेर्गुणफलसम्बन्धविधिर्न युज्येतेत्याशङ्क्य-
* ननु चेति * विध्यभावे ऽपि समभिव्याहारादेव गुणफल-
म्बन्धः सेत्स्यतीति केषांचित्परिहारमुपन्यासपूर्वकं दूषयति *
त्रेति * स्वमतेन परिहरति * अतो ऽयमिति * श्लोकं व्याचष्टे
यदिति *

आनर्थक्यादकारणं कर्त्तुर्हि कारणानि गुणार्थो हि विधीयते ॥ २१ ॥

गुणफलसम्बन्धविधौ स्तुत्यर्थत्वायोगादेकोपक्रमोपसंहार-
पत्वेन एकवाक्यत्वं प्रतीयमानं बाध्येतेत्यानर्थक्यादकारणमिति
त्रावयवव्याख्यानार्थं यदीति भाष्यं व्याचष्टे * वाक्यानीति *
ोकं व्याचष्टे * पुत्र इति * तस्येति भाष्यावयवं यद्यष्टत्वादयो
सम्बन्ध्येरंस्ततो वाक्यान्तरत्वं स्यात् स्तुत्यर्थत्वेन सम्बन्धोपपत्ते-
वाक्यान्तरता युक्तेति व्यवधारणकल्पनया व्याख्यातुमाह
तावतीति चेति * ननूपक्रमोपसंहारपर्यालोचनयैकवाक्य-
ा सति सर्वसंख्यानामुत्पत्तिशिष्टत्वाविशेषेण बलाबलवि-
षाभावादाद्यपूर्वपक्षनिरासो न युक्तः स्यादित्याशङ्क्याह* त-
ति * तस्मिन्नपि पक्षे न चाष्टत्वादीनां द्वादशकपालेनैकवा-
यता तवोपपद्यतइत्यादिनैकवाक्यस्य निरस्तत्वादिति भावः । अनेन
गुणफलसम्बन्धविधिपक्षे वाक्यभेदापादनेन गुणफलसम्बन्ध-
धौ गम्यमानैकार्थ्याभावप्रसङ्गादित्येवमानर्थक्यादिति सूत्रावयवो
ोजितो भवतीत्याह * अर्थान्तरेति * स्तुत्या विनैकवाक्यता क- ३
माज्ञोपपद्यतइत्यपेक्षितस्य ग्रन्थस्य तदुपपादनार्थत्वेनान्वयप्रतीते-
ानर्थक्यादित्यस्यार्थैक्याभावप्रसङ्गादित्यर्थावसायादेवं व्याख्यातं य-
ाश्रुतस्यानन्वयापत्तेः । एवं च गुणफलसम्बन्धविधौ वाक्यभेदापा-
नस्य सूत्रारूढतोक्ता भवति स्तुत्यर्थत्वानभ्युपगमे ऽर्थान्तरस्यास-
भवादानर्थक्यमेवावशिष्यतइत्यभिधानार्थेनैवानेन सूत्रावयवेनार्था-
तरपरत्वे वाक्यभेदप्रसङ्गाख्यं दूषणान्तरमप्युपलक्षितं भाष्यकृता

विवृतं स्वरूपार्थस्तु यद्यर्थवादा अपीत्यनेन वक्ष्यते अस्मिन्पक्षे ऽथ
न्तरेति ग्रन्थो लिङ्गात् स्वातन्त्र्येणानर्थक्यादिति सूत्रावयवयोजन
र्थो यथाश्रुत एव भवति । ननु गुणफलसम्बन्धविधानेनाप्यर्थवत्त्व
पपत्तेः कथमानर्थक्यापत्तिरित्याशङ्कानिरासार्थं कर्तुर्हि कारणानी
सूत्रावयवं व्यवधारणकल्पनया व्याचष्टे * यदि हीति * गोदो
नेन पशुकामस्य प्रणयेदितिवत् पूतत्वकामस्याष्टाकपालो भवती
श्रवणे सति कामिनः कर्तुः काम्यमानतया सम्बन्धीनि सन्ति पू
त्वादीनि फलत्वात्कर्तुः प्रवृत्तिकारणानि स्युस्तेषां तु यस्मिन् जा
एतामिष्टिं निर्वपति पूत एव स इत्यादिसमभिव्याहाराद्वैश्वानरे
मात्रसम्बन्धित्वप्रतीतेः कामिपदनिरपेक्षसमभिव्याहारमात्रप्रमा
कत्वस्य च साध्यत्वस्य पर्णमय्यधिकरणे निराकरिष्यमाणत्वात्
लाभावेन कर्तृप्रवृत्तिकारणत्वं नास्तीति भाष्यानुसारात्सूत्रावय
ऽनेन योजितः । अष्टत्वादौ कारणशब्देन विवक्षिते यद्यष्टाकपालं
र्थादिति कर्तुः प्रवृत्तिविषयतयाष्टत्वादीनि सम्बन्धीनि स्युस्तत
मीहितसाधनत्वं विना प्रवृत्तिविषयत्वायोगात् उत्पत्तिशिष्टद्वा
शावरुद्धवैश्वानरयागोपकारसाधनत्वस्यासम्भवाद्रात्रिसत्रन्यायेन
र्थवादावगतानि पूतत्वादीनि प्रवृत्तिजनकानि स्युः । विध्यश्रवणे
त्वेषां समीहितसाधनत्वाप्रतीतेः समभिव्याहारमात्रकल्पस्य सा
नत्वस्यौदुम्बराधिकरणे निरस्तत्वात् न पूतत्वादीनि प्रति कारणत
स्तीति योज्यः । ननु पूतत्वादेः फलत्वाभावे किमर्थं कीर्त्तनमित्याश
ङ्कानिरासार्थं गुणार्थो हीति सूत्रावयवं व्याचष्टे * तस्मादिति
निपातानामनेकार्थत्वात्तस्माच्छब्दार्थे हि शब्दव्याख्यानार्थं तस्मा
त्युक्ता तद्व्याख्यानायान्यस्यार्थान्तरस्यासम्भवादित्युक्तम् । स्तुति
षयत्वेन गुणशब्दं व्याख्यातुं स्तुत्यर्थ इत्युक्तम् । इतिशब्दः पूर्वो
स्तुतिप्रकारपरामर्शार्थः । यस्मादन्यो ऽर्थो न सम्भवति तस्मादु
प्रकारस्तुतिरूपो ऽर्थः पूत एवेत्यादिभिर्ज्ञाप्यत इत्यर्थः । अनेन च
एष इतिभाष्यगतस्य तच्छब्दस्य स्तुत्यर्थेनोपपद्येरन्निति एतत्सू
क्तस्तुतिरूपार्थपरामर्शकत्वात् सौत्रगुणशब्दव्याख्यानार्थत्वमेतच्छ
ब्दस्य च पूर्वोक्तावयवद्वारस्वरूपस्तुतिप्रकारपरामर्शकत्वं सूचित
अविधीयते वैश्वानरयाग इति भाष्यावयवेन सौत्रो हिशब्दः प्र
द्धार्थवाचित्वात् वैश्वानरेष्टेश्च पूर्वविहितत्वेन प्रसिद्धत्वादष्टत्व
देः स्तुतिसम्बन्धे सति विधेयत्वापत्तेस्तन्निरासार्थं पूतत्वादे
श्वानरेष्टिविषयत्वाभिधानार्थतया व्याख्यातस्तदुपपादयितुमाह *

१ मतीति २ पु० पा० ।

ति* यत्तदोरेकविषयत्वाद्यस्मिन् जात एताम् इष्टिं निर्वपेदिति स
इति पूतत्वादीनां जातेष्ट्यन्वयप्रतीतिर्नाष्टत्वाद्यन्वयो ऽस्तीत्यर्थः।
इष्टेर्नैमित्तिकत्वेन फलानपेक्षतया पूतत्वाद्यन्वयायोगाद् गुण-
सम्बन्धविधानायाष्टत्वाद्यन्वयः कल्पयिष्यते ऽत आह * न
।*स्तुत्यर्थेनेष्टान्वयोपपत्तेर्नाप्रतीयमानाष्टत्वान्वयकल्पना युक्तेति
ः।पूतत्वादीनां च पूत एव स इति तच्छब्दानिर्दिष्टैकपुत्रविषय-
समुच्चयप्रतीतिर्व्यवस्थितत्वादष्टत्वादिफलत्वं न सम्भवती-
* न चेति * नन्वेवं सत्येकैकस्याष्टत्वादेः फलपञ्चकं भवि-
त्याशङ्क्य निरासार्थं ब्रह्मवर्चसादीनामित्युक्तम्। गायत्र्यैवैनं ब्र-
र्चसेन पुनातीत्यादिवाक्यवशादष्टत्वादीनां व्यवस्थितफलत्वाव-
त् समुच्चयो न युक्त इत्याशयः। यो ऽष्टत्वादीनां गुणानां ब्र-
र्चसादीनां च स्तवनाम् एभिः पूतत्वादिभिर्विभागेन सम्बन्धो
क्षतः स न प्रतीयतइत्यर्थः। नन्वेवं तर्हि गायत्र्यैवैनमित्यादि-
व विभागेन फलसम्बन्धः करिष्यतइत्याशङ्क्याह * यत्र त्वि-
* स्तुत्यभावे विध्यभावोपपत्तेरित्याशयः। ननु चतुर्थे फल-
गस्त्वचोदितेन स्यादशेषभूतत्वादित्यत्रैतदेव वाक्यमुदाहृत्य कि-
वैश्वानरेष्टिरात्मगामिफलप्रयुक्ता पुत्रगामिफलप्रयुक्ता वेति
दध्याधानगतात्मनेपदपर्यालोचनयात्मगामिफलप्रयुक्तत्वे प्राप्ते
मन् जातएतामिष्टिं निर्वपति पूत एव स इति फलवचनस्य पुत्र-
त्वावगते पितृशेषत्वाभावात्फलभागित्वेनाचोदिते पितरि
संयोगो न स्यादिति पूतत्वादीनां पुत्रगामिफलत्वस्य वक्ष्यमाण-
फलसम्बन्धापन्हवो न युक्त इत्याह *अत इति* रात्रिसत्रन्याये-
वादत्वेनोपयुक्तानां पूतादिफलवचमानां परावर्त्य फलपरत्वक-
ऽष्टत्वादीन् प्रति फलं नास्तीत्यर्थः। फलपरत्वे सतीह स्तु-
भिधानं विरुध्येतेत्याशङ्क्याह * प्रथमेति * नन्वेवं पूतादि-
व स्तुतिसिद्धेर्यदष्टाकपाल इत्यादीनां गुणफलसम्बन्धविधि-
ङ्गीकरणे सत्यानर्थक्यं स्यादित्याशङ्कानिरासार्थं तेन चेत्यादि-
यं व्याचष्टे * एतैरेवेति * नन्वेवं सति स्तुत्यर्थत्वेनोपपत्ते-
र्थक्याभिधानं न युक्तमित्याशङ्क्यार्थवादत्वानभ्युपगमेन गुणफ-
म्बन्धविधिपरत्वाभ्युपगमे तदसम्भवादानर्थक्यमापद्येतेत्येवमा-
क्यपदव्याख्यानार्थं ततः कामायेति भाष्यम्। अर्थान्तरपरतायामि-
नैव व्याख्यातत्वात् तस्मादिति [illegible]व्याख्यानार्थं पूर्व-
गतकारणपदव्याख्यानार्थभाष्यव्याख्यानेन तेषां कार्यितृत्वाद्धि-
नैव व्याख्यातत्वान्नेह व्याख्यातम्। तस्मादित्यर्थवादत्वोपसंहा-

स्भाष्यमर्थवादविचारस्येहासङ्गतत्वेन गुणविधित्वसम्भवासम्भ मात्रविचारस्याधिकरणार्थत्वात् अयुक्तमित्याशङ्क्य गुणविधित्वा स्भवोपसंहारपरतया व्याचष्टे * तस्मादिति *

॥ अथ यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थताधिकरणम् ॥ १२ ॥

तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रया ॥ २२ ॥

अत्र भाष्यकृता यजमानः प्रस्तर इत्यादृयुदाहृत्य विध्यर्थवादचिन्ता सा तावत् पूर्ववदेवासङ्गता गुणविधिसम्भवासम्भवचिन्ताप्येवंविधेषु विधिप्रत्ययशून्येषु सम्भवविध्यन्तरैकवाक्यत्वेन औदुम्बराधिकरणएव विधित्वाशङ्काया निरस्तत्वात् । अयुक्ता पूर्वाधिकरणे त्वौदुम्बराधिकरणपूर्वपक्षन्यायेन विधित्वमङ्गीकृत्य वैश्वदेवाधिकरणोक्तस्योत्पत्तिशिष्टेनोत्पन्नशिष्टबाधस्याष्टत्वादेर्विषयो भवति न वेति चिन्तितम् । इह त्वङ्गीकृत्य विधित्वं चिन्तान्तराभावात् कृत्वाचिन्तान्यायः सम्भवति । न चार्थवादत्वाभिधाने विधित्वाशङ्कायां वैतत्सूत्रं समर्थम् । तत्सिद्ध्यादीनां गुणवादनिमित्तत्वाभिधानमात्रप्रतीतेस्तदभिधानमपि यदि निमित्तासम्भवेन गुणवादासम्भवशङ्कानिरासार्थं ततो रूपात्प्रायादित्यादिना यथासम्भवगुणवादनिमित्तानामुक्तत्वादनर्थकम् । लक्षणासम्भवेन तु गुणवादासम्भवशङ्का गौणमुख्याधिकरणे स्वाभिधेयलक्ष्यमाणगुणयोगनिमित्तलक्षणाया गौण्या वृत्तेः साधयिष्यमाणत्वादयुक्ता । अथ तत्र प्रकृतगौणमुख्यविषयमन्त्रविनियोगविचारसिद्ध्यर्थं गौणवृत्तिसद्भावप्रतिपादनान्न लक्षणविशेषाभिधाने तात्पर्यम् । इह तु प्रसिद्धार्थत्यागेनाप्रसिद्धतद्गुणवृत्तित्वलक्षणे गौणत्वे स्वार्थत्यागेन वेदाप्रामाण्यापत्तेः समुदायवाचिनो वैकदेशवृत्तित्वलक्षणे समुदायानित्यत्वेन शब्दार्थसम्बन्धस्यानित्यत्वापत्त्या वेदाप्रामाण्यापत्तेरारोपितार्थवृत्तित्वलक्षणस्य च गौणत्वस्यारोपकपुरुषाभावाद्वेदे ऽनुपपत्तेरेतल्लक्षणत्रयनिरासेन गुणयोगनिमित्तवृत्तित्वलक्षणप्रतिपादनार्थं तत्सिद्ध्यादीनां निमित्तत्वाभिधानमित्युच्यते ततो गुणवादसूत्रानन्तरमेवैतत्सूत्रं कार्यं गौणवृत्तित्वलक्षणाभिधानार्थे चास्मिन्सूत्रे सति कथं भाष्यकारीया विध्यर्थवादचिन्ता सम्बध्येतेत्याशङ्कासमकं निराकर्तुमाह * अर्थवादेति * विध्यर्थवादचिन्तायाः प्रकरणासङ्गतत्वविधित्वशङ्कानिरासस्य चौदुम्बराधिकरणेन गतत्वम् । सूत्रस्य

भिधानात्सामर्थ्यं तादर्थ्यानभ्युपगमेनैव परिहृतम् । गुणवादास-
वाशङ्कानिरासार्थत्वेनाभ्युपगमो ऽपि लक्षणशब्देनोक्तः । नात्र गुण-
दस्तस्य वा निमित्तमभिधीयते येन गौणमुख्याधिकरणेन रूपात्
गादित्यादिना वा गतार्थत्वं स्यात् किं तु गुणवादस्य तत्सिद्ध्या-
निमित्ताभिधानद्वारेण लक्षणमभिधीयते । गुणशब्देन गौणवृत्त्य-
धानाद्वाश्रयशब्देन च निमित्ताभिधानात्तत्सिद्ध्यादयो गौण्या वृत्ते-
मित्तमित्युक्ते यस्यां वृत्तौ ते निमित्तं सा गौणी वृत्तिरित्यर्थात् प्रतीते
निमित्ते गुणयोगनिमित्तायां च वृत्तौ तेषां निमित्तत्वाद् गुणयोग-
मित्तवृत्तित्वमेव गौण्या वृत्तेर्लक्षणमित्यवसीयत इत्याशयः । गुण-
सूत्रानन्तराभिधेयत्वशङ्कानिवृत्त्यर्थं तत्र नोक्तमित्युक्तम् । अर्थ-
वत् श्येनचितं चिन्वीत नेन्द्रस्त्वमसि दाशुषे मासमग्निहोत्रं
वतीत्यादिषु विधिमन्त्रनामधेयेष्वपि श्येनेन्द्राग्निहोत्रादिशब्दा-
गौणत्वदर्शनात् सर्वसाधारण्यसूचनाय सर्वोपयोगव्युत्पादनान-
मेव गौणवृत्तिलक्षणाभिधानं युक्तमित्याशयः । सूत्रस्य गौणवृत्ति-
णार्थत्वे विध्यर्थवादविचारासम्बद्धत्वशङ्कानिवृत्त्यर्थम् * अर्थवा-
युक्तम् * सूत्रकृतो प्रसक्ताभिधायित्वपरिहाराय लक्षणाभिधान-
प्रसङ्गसिद्ध्यर्थं विध्यर्थवादचिन्तयोपक्रान्तम् यथाकृतिसद्भावे
प्रतिपिपादयिषितेयं गौरित्यस्य शब्दस्य को ऽर्थ इति वाच्यत्व-
नोपक्रान्तमित्यर्थः । कथमर्थवादत्वोक्त्या गौणवृत्तिलक्षणाभिधा-
प्रसङ्गो भवतीत्यपेक्षायां तदुपकारीत्युक्तम् । पूर्वाधिकरणस्य गु-
धिसम्भवासम्भवचिन्तार्थत्वेनार्थवादत्वाभिधाने तात्पर्याभा-
पूर्वाधिकरणोक्तार्थवादप्रसङ्गेनानन्तरसङ्गतिरनाशङ्कनीया । ननु
मित्ताभिधानद्वारेण चेदनेन सूत्रेण लक्षणमुच्यते ततो रूपात्प्रा-
इत्यादिभिरपि सूत्रैर्निमित्ताभिधानद्वारेण लक्षणज्ञानसिद्धेरनर्थ-
मिदं सूत्रं स्यादित्याशङ्कते * ननु चेति * रूपप्रायेति वक्तव्ये
क्तिनिर्देशः प्रदेशविशेषज्ञापनार्थः इति गुणाश्रया इति प्रकार-
चनेतिकरणेन तत्सिद्ध्यादिप्रकाराणि गुणवादनिमित्तानीत्यभि-
नात् प्रकारस्य च व्यवच्छेदकत्वेन लक्षणत्वाद्यथा तत्सिद्ध्यादेर्गौ-
त्तिनिमित्तलक्षणत्वेनाभिधानं नैवं रूपादेः किन्तु स्तेनं मन इ-
युदाहृतार्थवादगतगुणवादाख्यलक्ष्यविषयस्य किन्निमित्तो ऽयं
वाद इत्येवंविधस्य व्यवहारस्य सिद्ध्यर्थमिह सिद्धं सारूप्यशब्देन
स्य निमित्तत्वं भूमशब्देन च प्रायभूयस्त्वयोर्निमित्तत्वं प्रशंसाश-
च दूरस्थत्वपराधीनिमित्तदुर्ज्ञानत्वादेः सुकरस्य प्रशस्तत्वात् द-
स्य तदभावात्मकत्वान्निमित्तत्वं तत्र नीतमिति परिहरति * स

त्यमिति * उदाहृतशब्देन रूपादेः सर्वगुणवादाव्यापकत्वादपि लक्षणत्वं नास्तीति सूचितम् । ननु यदष्टाकपाल इत्यादौ तत्सिद्ध्यादेरभावेनाव्यापकत्वादलक्षणं स्यादिति शङ्कां सर्वशब्देन निरस्यन्निति करणेन प्रकारवाचिना तत्सिद्ध्यादीनां निमित्तं लक्षणेनोक्तमिति व्यतिरेकमाह * अत्र त्विति * अष्टत्वादेरपि द्वादशत्वपरिच्छेद्यानां कपालानां मध्ये कति चिन्निष्कृष्याष्टावेतानीत्यादिसंख्येयपरिच्छेदकत्वेन द्वादशत्वकार्यकरत्वोपपत्तेरष्टाकपालादिशब्देन तत्सिद्धिसद्भावादन्यत्रापि च यथासम्भवं तत्सिद्ध्यादिषट्कमध्ये कस्य चिन्निमित्तस्योहितुं शक्यत्वान्नाव्यापकतेत्याशयः । ननु सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावे ऽपि तद्वदुपचारः इति सूत्रेण यष्टीः प्रवेशयेति सहचरणात् ब्राह्मणेषु यष्टिशब्दस्य मञ्चाः क्रोशन्तीति स्थानात्पुरुषेषु मञ्चशब्दस्य कटं च्छिनत्तीति तादर्थ्यद्वारेण कटशब्दस्य यमो ऽयं राजेति वृत्तात् राज्ञि यमशब्दस्य आढकमश्नातीति मानात् सक्तुष्वाढकशब्दस्य तुलयानुलिम्पतीति धारणाच्चन्दने तुलाशब्दस्य गङ्गायां घोष इति सामीप्यात्तीरे गङ्गाशब्दस्य नीलः शाटक इति योगाच्छाटके नीलशब्दसामानाधिकरण्यस्य अन्नं बलमिति साधनाद् बले ऽन्नशब्दसामानाधिकरण्यस्य अयं पुरुषः कुलमित्याधिपत्यात्कुले पुरुषशब्दसामानाधिकरण्यस्य प्रयोग इति वदद्भिर्नैयायिकादिभिरन्येषामपि गौणवृत्तिनिमित्तानामुक्तत्वान्न षट्कस्यापि सर्वगौणवृत्तिव्यापकतेत्याशङ्क्ते * ननु चेति * न चैतत् तार्किकस्थितिमात्रं लोके ऽपि दर्शनादित्याह * लोके चेति * लक्षणार्थे च निमित्ताभिधाने व्यापकत्वाय सर्वाण्युपसंहार्याणीत्याह * तानीति * परमतेन परिहरति * लिङ्गेति * एवं तु सृष्टिशब्दे ऽपि सृष्टिसञ्ज्ञेष्टकासमवायेनेतरेष्टकाप्रतीत्युपपत्तेर्भूम्नो ऽथवाचकत्वापत्तेर्भूयो ऽल्पत्वप्रतीतिवैलक्षण्याद्वा भेदेनोपन्यासे ऽत्रापि साहचर्यादिप्रतीतिवैलक्षण्यात् पृथगुपन्यासापत्तेरपरितोषात् परिहारान्तरमाह * अथ वेति * जहत्स्वार्थाभिधायित्वलक्षणे समुदायवाचिनो वैकदेशवृत्तित्वलक्षणे ऽध्यारोपितार्थवृत्तित्वलक्षणे वा गौणत्वे वेदे तदसम्भवेनाप्रामाण्यापत्तेस्तन्निरासेन लक्ष्यमाणगुणयोगवृत्तित्वलक्षणज्ञापनायैतन्निमित्ताऽभिधानम् । लक्षणावृत्तौ तु वेदाप्रामाण्यापादकस्य लक्षणस्य कैश्चिदनुक्तत्वेन वेदप्रामाण्याविरोधिलक्षणज्ञापनार्थेन निमित्ताभिधानेनोपयोगाभावात्साहचर्यादीनां च लक्षणावृत्तिनिमित्तत्वान्नेहाभिधानमिति भावः । न

यत्र परशब्दस्य परत्र वृत्तेस्तुल्यत्वान्नानयोः शब्दवृ-
र्भेदो ऽस्तीत्याशयेन पृच्छति * किं चेति * लक्षणभेदा-
नोत्तरमाह * बाढमिति * प्रश्नपूर्वकं लक्षणभेदमा-
* कुत इति * अभिधेयसम्बन्धित्वरूपापरित्यागप्रदर्शना-
ऽभिधेयाविनाभूतशब्दः गौण्यां तु वृत्तावभिधेयसिंहादि-
बन्धित्वरूपानादरेण तल्लक्षितप्रसह्यकारित्वादिगुणयोगमात्रादर-
नायाभिधेयस्य गुणलक्षणायां व्यापारे ऽप्यनुपादानम् । ननु ल-
ायामविनाभावापेक्षणे यष्ट्यादेः पुरुषाविनाभावाभावात् न य-
ादिशब्दे लक्षणा स्यात् इत्याशङ्क्याह * तत्रेति * अयमाशयः नात्र
णाहेतुत्वेनाविनाभावोपादानं तस्याः सम्बन्धमात्रेण शब्दतात्प-
शादुपपत्तेः । न चात्र लक्षकस्याभिधेयस्य लक्ष्येणाविनाभावो ऽग्नि-
धूमस्योक्तः विपरीताभिधानात् । किं त्वभिधेयसम्बन्धित्वरूपा-
प्रदर्शनार्थं यष्ट्यादिशब्दानामपि चाभिधेययष्ट्यादिसम्बन्धित्वा-
रेण पुरुषस्वरूपे प्रवृत्त्यभावेनाभिधेयाविनाभूतप्रवृत्तित्वाविघा-
त् सम्बन्धमात्रस्य च लक्षणाहेतोर्भावाद् युक्तैव लक्षणया प्रवृत्ति-
ते । ननु सम्बन्धमात्रेण लक्षणोपपत्तावग्न्यादिशब्दानामपि अ-
ध्येयाग्न्यादिसम्बद्धपैङ्गल्यादिसम्बन्धेन लक्षितलक्षणया माणव-
कौ प्रवृत्त्युपपत्तेर्गौणत्वाख्यवृत्त्यङ्गीकरणं न युक्तमित्याशङ्क्याह *
नैरिति* लक्षणाहेतुसम्बन्धसद्भावे ऽप्यविनाभावशब्दोक्ताभिधे-
म्बन्धिस्वरूपादराभावान्न लक्षणात्वप्रसिद्धिरभियुक्तानामित्या-
: । अभिधेयसम्बन्धित्वरूपानादरमेव प्रश्नपूर्वकमुपपादयन्नाह
क तर्हीति* लक्षणोपायमात्रत्वेनाभिधेयस्यावस्थानं सूचयितुम् *
हत्वल्लक्षितादित्युक्तम् * सादृश्यसामान्यापेक्षत्वादग्निसम्बन्धा-
क्षपैङ्गल्यादिस्वरूपमात्रयोगान्माणवके ऽग्निशब्दप्रवृत्तिरिति सा-
शब्देनोक्तम् । नन्वत्र लक्षणानिमित्तानभिधाने धूमलिङ्गसमवा-
रभिधेयसम्बन्धादरेण लक्षणानिमित्तत्वात् उपन्यासो न युक्त
ाशङ्क्याह * सर्वत्र चेति * वस्तुतस्तयोर्लक्षणानिमित्तत्वे ऽप्य-
ध्येयसृष्ट्यादिसमुदायिलक्ष्यमाणसमुदायाख्यगुणयोगात् समुदा-
तरे सृष्ट्यादिशब्दवृत्तेर्गौणत्वसम्भवात् जहत्स्वार्थवृत्त्यादिलक्ष-
ङ्गायां वेदाप्रामाण्यापत्तेस्तन्निरासायाभ्युपगम्य गौणत्वं तन्नि-
त्त्वेनेहोपन्यास इत्याशयः । प्रस्तरप्रभृतौ तत्सिद्धिकरादौ यजमा-
देशब्दानां क्व चिल्लक्षणावृत्तिसद्भावे ऽपीयं तावद् गौणी वृ-
रस्त्येवेति योज्यम् । सूत्रकृतो ऽप्रसक्तगौणत्ववृत्तिलक्षणाभिधा-

१ वृत्तिभेदाङ्गीकरणमिति २ पु० पा० ।

यित्वपरिहारार्थं प्रकृतसिद्ध्यर्थवादाचिन्तयोपक्रमितुं भाष्यकृता ।
धोपन्यस्ते ऽपि सन्देहे पूर्ववत् प्रौढ्या नामधेयाचिन्तया सह साक्ष
सङ्गतिप्रदर्शनार्थं अथा सन्देहमाह * अत्रापि चेति * पूर्वस्मिन
धिकरणे त्रयः पक्षा स यथात्रापीति योज्यम् । किं तावदित्यादिपू
पक्षभाष्यमर्थवादानर्थक्यस्यार्थवादाधिकरणे निरस्तत्वादयुक्तमाः
ङ्क्योपपादयति * तत्रेति * ननु शब्दसमभिव्याहारमात्रेण स्तुत्य
तीतावपि सर्वाभ्यर्हितयजमानत्वोपचारेण प्रस्तरस्तुतिः प्रत्येष्य
इत्याशङ्क्याह * न चेति * ननु गौण्या वृत्या परशब्दस्य परत्र
त्तिर्गुणवादसूत्रे वर्णितेत्याशङ्क्याह * न चेति * एतत्सूत्रसिद्धां
दे गौणीं वृत्तिमङ्गीकृत्य तत्र गुणवादेन परशब्दस्य परत्र वृत्ति
र्ण्यते इह तु नैव वेदप्रामाण्याविरोधिनिमित्ताभावाच्छेदे न सम्भ
तीति पूर्वपक्षी मन्यतइति भावः । ननु स्तुतिसिद्धिकरत्वादि तस्या नि
मित्तं तच्च वेदे ऽपि सम्भवतीत्याशङ्क्याभ्युपगम्य तस्य निमित्त
प्रस्तरे यजमानशब्दप्रवृत्तौ यजमानकार्यकरत्वस्य निमित्तस्य प्रम
णान्तरेणासिद्धे स्तत्कार्ये प्रस्तरविध्यपेक्षत्वात् गुणविधिरेव बल
दापद्येतेत्याह * न चेति * तस्माद्विधिरिति पूर्वपक्षोपसंहारभ
ष्यं व्याचष्टे * तस्मादिति * न च प्रस्तरो याजमानं शक्नोति
र्तुमित्युत्तरभाष्यदर्शनात् अन्यतर इत्युपक्रममात्रं कुण्डपायिना
यने यो होता सो ऽध्वर्युः स पोता य उद्गाता स नेष्टा सो ऽच्छाव
को यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्त्ता यः प्रस्तोता स ब्राह्मण
च्छंसी स ग्रावस्तुधः प्रतिप्रस्थाता सो ऽग्नीत्स उन्नेता गृहपति
हपतिः सुब्रह्मण्यः सुब्रह्मण्य इत्यृत्विक्समासे समाम्नाते होत्रा
शब्दानां मुख्यार्थत्वमङ्गीकृत्य तत्सामानाधिकरण्यायाध्वर्य्वादिशब्द
नां लक्षणार्थत्वं तृतीये विप्रतिषेधे करणः समवायविशेषादिति
मवायविशेषव्याचक्षणेन भाष्यकृतोक्तमिह दृष्टान्तितम् । अन्यवि
तशास्त्रार्थायोगात्कतरो ऽत्र कार्यलक्षणो ऽर्थः पूर्वपक्षिणो ऽभि
इत्यपेक्षायां मुख्यं वा पूर्वचोदनाल्लोकवदिति द्वादशाधिकरणन्याय
यजमानशब्दस्य मुख्यार्थत्वमङ्गीकृत्य प्रस्तरशब्दस्य कार्यलक्षणार्थत
माह * तत्रापीति * आग्नावैष्णवमेकादशकपालं निर्वपेत्स
स्वतीमाज्यस्य यजेतेत्युदाहृत्य किं विकल्पेनान्यतरस्य तन्त्रं प्रस
नान्यतरस्योपकारकत्वात् कर्त्तव्यम् उतआग्नावैष्णवं चरुं तन्त्रमेवे
सन्दिह्य विशेषादनियमे प्राप्ते भूयसां स्यात् स्वधर्मत्वामिति पूर्वस्

१ प्रतत्रतर्व्योत २ पु० पा० ।
२ चरुमिति १ पु० मा० ।

स्वधर्मत्वपदं परित्यक्तभावप्रत्ययमनुषज्य मुख्यमाग्नावैष्णवक-
र्वचोदितत्वेनानुपसञ्जातविरोधित्वात् स्वधर्मकं यथा लोके
तानां पूर्वासनेषूपवेशनं जघन्यागतानामितरेष्विति वक्ष्यते ।
वमित्यादिसिद्धान्तभाष्यं यजमानशब्दस्य मुख्यत्वेन कार्यलक्ष-
त्वायोगात् तत्कार्ये प्रस्तरविधानस्यानाशङ्कितत्वेनायुक्तमाश-
पादयति * न तावदिति * प्रस्तरकार्ये यजमानविधौ निरस्ते
कश्चिद्यजमानकार्ये प्रस्तरविधिः शङ्केत तन्निरासाय स्वकार्यवि-
द्यजमानस्यन प्रस्तरकार्ययोगोऽचेतनस्य च प्रस्तरस्य चेतनकार्य-
धाद्यजमानकार्ययोगो न सम्भवतीति यजमानकार्ये प्रस्तरचोद-
पत्तिमभ्युपेत्यैतावदुक्तम् वस्तुतस्तु मुख्यत्वेन यजमानशब्दस्य
लक्षणार्थत्वायोगात्सापि नोपपद्यतइत्यर्थः । आदिशब्देनैकक-
ोपादानम् । यजमानस्यैककपालकार्यार्थत्वे सर्वतन्त्रलोपापत्त्यभि-
प्रस्तरकार्यार्थत्वे ऽपि तुल्यमित्याह * एकेति * भाष्यकृता तु ३११
रस्य मान्त्रवर्णिकदेवतान्वयेनानुषङ्गिकयागसाधनत्वे ऽपि प्रह-
स्य प्रतिपत्तित्वेन प्रस्तरकार्यत्वाभावाद्यजमानस्य च पुरोडाशक-
वदन्यार्थस्यैव स्रुग्धारणविनियोगे ऽपि तन्मात्रनिष्पत्त्या कृतार्थ-
भावेनाप्रतिपाद्यत्वात् प्रहरणानापत्तेस्तदुपेक्ष्येतरत्रैव दूषणमुक्तम्
अन्तरं चेत्यादिभाष्येण विध्येकवाक्यत्वं विनार्थवादत्वायोगेना-
क्यपरिहाराय कथं चिद्विधित्वमेष्टव्यम् इत्याशङ्कानिरासायैकस्यो-
सादनविधिशेषता इतरस्य च सर्वहोमविधिशेषतेत्यभिधानपूर्व-
विधित्वासम्भवोपसंहारेणानुवादत्वमुक्तं तद्व्याचष्टे * तस्मा-
ति * कथं पुनरिति भाष्येण प्रस्तरैककपालशब्दयोः कार्यलक्षणा-
वाभावे कथं यजमानशब्दसामानाधिकरण्यज्ञानमिति पृष्ट्वा गौ-
ा वृत्त्या सामानाधिकरण्यं भविष्यतीत्याशङ्कानिरासार्थं वेदे गौ-
वृत्त्यसम्भवं मनसि कृत्वा कथमिति प्रश्नाभिप्रायो विवृतः । त-
ाश्लिष्य व्याचष्टे * कथमिति * किमर्थं चेति प्रश्नान्तरभाष्यं वि-
र्थवादचिन्तोपक्रमेण सम्वादस्य स्तुत्यर्थत्वाज्ञानादयुक्तमाशङ्क्य
तिप्रकारप्रश्नविषयतया व्याचष्टे * किमाकारा वेति * उक्तय-
ाति द्वितीयप्रश्नोत्तरभाष्यं व्याचष्टे * यजमानो हीति * उत्तर-
ब्दव्याख्यानार्थोपरिशब्दः कथमित्यादिप्रश्नानुभाषणपूर्वकं गौणवृ-
लक्षणाभिधानापातनिकार्थं गुणवादस्त्वितिसूत्रेणोत्तराभिधाना-
भाष्यं व्याचष्टे * गुणाच्चेति * गौणवृत्त्यसम्भवाभिधानार्थं क-
मिति भाष्यं गुणादिति पञ्चम्या परशब्दस्य परत्र प्रवृत्तौ गुणस्य
तुत्वमात्राभिधानात् लक्ष्यमाणस्यापि च हेतुत्वोपपत्तेर्वाच्यत्वान-

भिधानादयुक्तमाशङ्क्य व्याचष्टे * कथमिति * अयमाशयः न लक्ष्यमाणगुणयोगमात्रेण सिंहादिशब्दस्य देवदत्तादौ वृत्तिर्युक्ता लक्ष्यमाणगुणस्याशाब्दत्वाच्छब्देन देवदत्तादिना धूमोऽयं ज्वलतीतिवदनन्वयापत्तेः । प्रसह्यकारित्ववच्च दंष्ट्रित्वचतुष्पात्त्वादेरपि सिंहगुणस्य देवदत्ते प्रत्ययापत्तेर्लक्षणायां त्वभिधेयसम्बन्धित्वरूपादरेण तत्र शब्दतात्पर्यावगतेर्यत्परः शब्दः स शब्दार्थ इत्यनेन न्यायेनाभिधेयसम्बन्धित्वरूपस्यापि शब्दार्थत्वाच्छाब्दार्थान्तरेणान्वयो युक्तः । तात्पर्यव्यवस्थानादेव च गङ्गादिशब्दानामभिधेयसम्बन्धाविशेषेऽपि सिकतादिलक्षकत्वानापत्तिः । तस्माल्लक्ष्यमाणगुणयोगनिमित्तवृत्तित्वस्य गौणवृत्तिलक्षणस्यायोगात् प्रसिद्धवाच्यत्यागेन तद्गुणवाचित्वं गौणवृत्तित्वलक्षणमभ्युपगन्तव्यम् । सिंहादिशब्दस्य हि स्वार्थवाचित्वे देवदत्तशब्दसामानाधिकरण्यायोगात् तद्गुणप्रसह्यकारित्ववाचित्वाकल्पनायां देवदत्तेऽपि तत्सद्भावाद्गौरो देवदत्त इतिवत्सामानाधिकरण्यमुपपादयितुं शक्यते । स्वार्थत्यागेन च तद्गुणे वर्त्तमानत्वात्तत्र भव इत्येतस्मिन्नर्थे तद्धितोत्पत्तिः । पौरुषेये च वाक्ये वक्त्रभिप्रायानुसारात् स्वार्थत्यागेन तद्गुणे वृत्तिर्युक्ता वेदे तु स्वार्थत्यागेन प्रामाण्यबाधापत्तेस्तत्त्यागेन गुणवाचित्वकल्पना न युक्तेति स्वार्थाभिधानेनेत्युत्तरभाष्याभिप्रायमाह * सिद्धान्तस्त्विति * गुणस्यावाचकोऽपि स्वार्थमभिधाय लक्षणया गुणं ब्रवीतीति वदता लक्ष्यमाणगुणयोगनिमित्तत्वं सिद्धान्त्यभिमतं गौण्या वृत्तेर्लक्षणं सूचितं भवतीत्याशयः । सर्व इति भाष्यं पराभिमतलक्षणनिरासार्थतया व्याचष्टे * अजहत्स्वार्था इति * न जहाति शब्दः स्वमर्थं यासु वृत्तिषु इति विग्रहः । यथा श्रुतिवृत्तौ लक्षणावृत्तौ वा शब्दः स्वार्थं न जहाति तथा गौण्यामपीत्यर्थः ततश्च स्वार्थत्यागाभावान्न वेदाप्रामाण्यापत्तिरित्याशयः ।भाष्यकृता प्रसिद्धार्थहानाप्रसिद्धार्थकल्पनापत्तिः पराभिमतलक्षणनिरासे हेतुत्वेनोक्ता सा गवादिशब्दानामपि सास्नादिमदर्थत्यागेन पृथिव्यादिवाचित्वनिरासापादकत्वादहेतुरित्याशङ्क्य स्वयं हेतुमाह * पूर्वेति * कथं पूर्वक्लृप्तशास्त्रानुसारेण परशब्दस्य परत्र वृत्तिरित्याशङ्क्यार्थसम्बन्धादित्यादिभाष्यं वक्ष्यमाणं प्रकारमाह * सम्भविष्यतीति * भविष्यन्निर्देशेनान्यस्य प्रकारस्य वक्ष्यमाणत्वं सूचितम् भाष्योक्तं हेतुमनुसन्धत्ते * इतीति * स्वोक्तहेतूपजीवित्वसूचनायेति करणः प्रसिद्धहानाप्रसिद्धकल्पनस्य दोषत्वोपपादनार्थं व्यवहारोच्छेदकत्वाभिधानम् । न चेति भाष्यं मतान्तरनिरासार्थत्वेन

तुं तत्तावदुपन्यस्यति * अन्येषां त्विति * सिंहादिशब्दो-
जातिवद् द्रव्यादीनामपि प्रतीतेरवाच्यत्वे वा शब्दत्वेन द्र-
ाच्चिशब्दान्तरासामानाधिकरण्यायोगात् समुदायवाची सिं-
शे देवदत्तादौ समुदायाभावेनैकदेशे गुणादौ लक्षणया व-
गुणशब्दस्याङ्गे प्रयोगादङ्गशब्दस्य चावयवापरपर्यायैकदेशे प्र-
ंदेशाख्ये गुणे वर्त्तमानत्वात् पूर्ववद् गौण इत्युच्यते तस्मा-
दायवाचिनस्तदेकदेशवृत्तित्वं गौणवृत्तिलक्षणं तच्च समु-
यत्वेन शब्दार्थसम्बन्धानित्यत्वापत्तेरप्रामाण्यापादकत्वाद्-
सम्भवतीत्याशयः । एतन्मतनिरासार्थतया न चेति
याचष्टे * तत्रेति * समुदायवाची वेति भाष्यावयवस्य
वाचित्वाङ्गीकरणेन एकदेशवृत्तिनिरासार्थत्वशङ्कानिवृत्तये
क्यत्वेन समुदायवाचित्वनिरासार्थत्वसूचनायादौ व्या-
वं सति वेदमधीत्य स्नायादिति क्त्वाप्रत्ययस्य पूर्वकालतानन्त-
यवाचिनो ऽध्ययनविध्यविरोधार्थं तदेकदेशे पूर्वकालत्व-
त्यभ्युपगमो विरुध्येतेत्याशङ्क्य नावयवे श्रुत्या वर्णितुमर्ह-
ध्याहारेण व्याख्यातुं मुख्यरूपेणेत्युक्तं गुणाहीमे ऽपि इत्या-
यवव्याख्यानार्थं भवतीत्याद्युक्तम् । समुदायवाचित्वनि-
सर्वेति दूषणान्तरभाष्यं सिद्धान्तविरोधाभिधानार्थतया
ाचष्टे * सामान्येति * एतदेव भाष्यं सामान्यवचनः शब्द
तज्ञासिद्ध्यर्थो यदि व्यक्तिः शब्दार्थो भवेदित्यादिभाष्योक्तौ
ाच्चित्वनिरासो न्याय्य इत्येवं व्याख्यातुमाह * क्रिये- ३२०।१
प्रबलारिमर्दनादिक्रियाणां शौर्यादिगुणानामित्यर्थः । किं
कवाचित्वपक्षे व्यक्त्यन्तरे प्रयोगासम्भवे ऽप्येकस्यां ताव-
कालान्तरे ऽपि प्रयोगः सम्भवति । गुणादिसमुदायवा-
वेकस्यामपि व्यक्ताववस्थाभेदेन तेषां भेदात् सम्बन्धाग्रह-
धानाशक्तिरित्याह * एकस्यामेवेति * ननु गुणक्रियाणाम-
येकं किंचिद् गुणक्रियावान्तरसामान्यसम्बन्धग्रहणायोपल-
विष्यतीत्याशङ्क्याह * न चेति * आसां गुणक्रियाणां समु-
व्यापकमुपलक्षणभूतं सिंहत्वादन्यत्सामान्यं नास्ति । न
त्वादिसामान्यस्यैव सिंहशब्दवाच्यत्वोपलक्षणत्वं युक्तम् । तस्य
प्रशो व्यापकत्वाभावेन प्रत्येकमुपलक्षणापत्तेस्तथोपलक्षितानां
क्रियाणां व्याघ्रादिजात्यन्तरे ऽपि व्यस्तानां भावात् सिंहश-
त्वं नास्तीत्याशयः । ननु सिंहत्वमेव तद्युपलक्षणं भवत्वि-

दति २ पु० मा० ।

त्याशङ्क्याह * तत्रेति * उत्तरार्द्धं व्याचष्टे * न हीति * स
वार्थत्वान्निरासस्य परोक्तगौणवृत्तिलक्षणनिरासोपयोगमाह *
ति * न चास्तीति भाष्यमारोपितार्थवृत्तित्वरूपगौणवृत्तिल
निरासार्थत्वेन व्याख्यातुं तन्मतं तावदुपन्यस्यति * कश्चिदि
समारोपिते तस्मिन् वाक्ये भावः प्रवृत्तिर्यस्य शब्दस्य स गु
वाच्यमारोप्य प्रवर्त्तमानत्वात्तत आगत इत्यस्मिन्नर्थे तद्धितो
गौण इति उच्यते समारोपितो वा यस्मिन्नर्थे तस्य वाक्यस्य
भावः सो ऽर्थो गुणतो वाच्यारोपेण शब्दात् प्रतीतत्वात् गौण
त्युच्यते ततश्च समारोपितार्थवृत्तित्वं शब्दस्य गौणत्वलक्षणं समा
पितार्थाश्रयत्वं चार्थस्य तच्च वेदे समारोपकपुरुषाभावाच्च सम्भ
तीत्याशयः । एतदेव लक्षणमुपपादयितुमाह * तस्येति * शब्दस्य
भिधाने वृत्तिर्व्यापारो न चासावभिधेया ऽभावे सम्भवतीत्याशयः
ननु सिंहशब्दस्य देवदत्ताभिधाने व्यापाराभावे ऽपि स्वाभिधेय
क्ष्यमाणगुणयोगेन देवदत्तप्रतिपत्त्यर्थं प्रयोगो भविष्यतीत्याशङ्क्य
* न चेति * सिंहशब्दाभिहितेन सिंहत्वेन गम्यमानस्यापि गुणस्य
शाब्दत्वाच्छब्देन देवदत्तेनान्वयायोगादित्याशयः । सिद्धान्त्यभिम
लक्षणासम्भवमुक्त्वा स्वाभिमतं प्रश्नपूर्वकमुपपादयति * कथं त
ति * ननु सिंहशब्देनैव देवदत्ते स्ववाच्यसिंहत्वरूपमारोपेणा
विषयीकृत्य शब्दप्रवृत्तावितरेतराश्रयः स्यादित्याशङ्क्य स्वयमेव
वक्ताध्यारोप्येत्युक्तम् । आरोपनिमित्तमाह * सिंहादीति * ि
हादिरूपतां प्रतिपद्यन्त इत्यर्थः । ननु देवदत्ते सिंहत्वं वक्त्रारोपि
मिति कथं ज्ञायत इत्याशङ्क्याह * ततश्चेति * शब्दप्रयोगस्य व्या
पत्त्योपपत्तेः सिंहशब्दप्रयोगान्यथानुपपत्त्या सिंहत्वारोपः कल्प्य
इत्याशयः । नन्वेवं वाक्ये एव शब्दप्रयोगान्मुख्यत्वं स्यादित्याशङ्क्या
ह * न चेति * नन्वारोपिते वाक्ये ऽर्थान्तराभिधानानपेक्षत्वात्
स्वतःप्रथमप्रवृत्तेर्मुख्यत्वाविरोध इत्याशङ्क्याह * यत्र त्विति
वस्तुवृत्त्या स एवार्थो यत्र न पुनरारोप्यते तत्र प्रवर्त्तमानः शब्द
मुख्य इत्युच्यते इतरत्र तु जघन्यवदारोपात् पश्चात्प्रवृत्तेर्जघन्य
गुणतश्चारोपात् गौण इत्युच्यत इत्याशयः । न च शुक्तिकादावा
रजतत्वारोपेण रजतादिशब्दप्रवृत्तेर्गौणत्वापत्तिः । पुरुषोत्प्रेक्ष
प्रभवत्वाभावेन शुक्तिकादौ रजतादिबुद्धेरारोपितत्वाभावादि
सूचनायादोष इत्युक्तम् । एतन्मतनिरासार्थत्वेन भाष्यं व्या
चष्टे * तत्रेति * एतदेवोपपादयति * तथा हीति * सिं
हदेवदत्तयोरत्यन्तवैलक्षण्येनारोपायोगादसम्भविनश्चार्थापत्त्यापि

ःर्पयितुमशक्यत्वात् नाभिधानसिद्ध्यर्थमप्यारोपो युक्त इत्यर्थः।
क्षण्यं ऽप्यूषरादौ तोयाध्यारोपदर्शनाद् * भ्रान्तिवर्जितैः *
ुक्तम्। नचैवं सति योषा वा गौतमाग्निरिति योषायामग्नित्वारोप-
र्थेन स्यादितिवाच्यम्। तद्गतःप्रक्षेपस्य मध्यायत्कर्त्वमभवदभीक्ष
। द्वाभ्यामृग्भ्यां स्वाहाकारान्ताभ्यां रेतः सिञ्चेदिति स्वाहाकार-
ध्यत्वस्मृतेस्तथाविधस्य च होमत्वप्रसिद्धेर्यूपशकला होतव्या इ-
च देवतोद्देशद्रव्यत्यागानिरपेक्षप्रक्षेपमात्रे ऽपि जुहोतेर्वेदे दर्शना-
कर्मीभूतस्य रेतसो ऽर्चिशुचिहुसृपिछदिछर्दिभ्य इसिरिति जुहो-
ःसिप्रत्ययान्वाख्यानाद्धविःशब्दव्यपदेश्यत्वेन योषाया रेतोरू-
विराधारतयाग्निसादृश्यसम्भवाच्छुचेनचितं चिन्वीतेति च यो-
ामाग्निसादृश्यारोपस्य विधेयत्वादित्याशयः। ननु भ्रान्तिवर्जि-
ं विसदृशे वस्तुनि वस्त्वन्तरारोपाशक्तावपि भ्रान्त्यवसितसा-
े ऽपि तत्त्वारोपेण शब्दः प्रयोक्ष्यतइत्याशङ्क्याह * यदेति * ३२
मतथोषरे भ्रान्त्या शौक्ल्यचञ्चलत्वादितोयगुणदर्शनेन तोयसा-
ाध्यवसानात्तोयमुत्प्रेक्ष्य तोयशब्दप्रयोगे तत्त्वतो भ्रान्तावपि भ्रा-
ध्यवसितस्यैव कारणत्वोपपत्तेरुत्प्रेक्षामात्रत्वाभावेनारोपाभावाद्
मपि गत्वा भ्रान्तित्वस्य परिहर्त्तुमशक्यत्वे प्रथममेव सादृश्यज्ञा-
ापेक्षस्य भ्रान्त्यङ्गीकरणस्य च युक्तत्वात् मुख्यतैवावसीयते न
ातेत्याशयः। परानभिमतमपि वा भ्रान्तेरारोपत्वं लोकप्रसिद्ध्यनु-
ेणापाद्यारोप्येत्युक्तम्। तोयस्य तत्राविद्यमानत्वात् मुख्यत्वानुप-
त्माशङ्क्य * भ्रान्तीत्युक्तम् * भ्रान्त्यध्यवसितस्यापि प्रथमं शब्दात्प्र-
ीमुख्यत्वाविरोध इत्याशयः। भ्रान्त्यध्यवसितो मुख्यो भ्रान्तिमुख्य
। शाकपार्थिववन्मध्यमपदलोपी समासः। ननूभयोर्भ्रान्तावर्थान्त-
मध्यानैरपेक्ष्येण प्रथमवृत्तेर्मुख्यत्वाद् गौणत्वासम्भवे ऽपि वक्तु-
्त्यभावेऽपि श्रोतृप्रतारणायोषरे तोयशब्दप्रयोगे भ्रान्तिमुख्यत्वस्या-
म्भवाद् गौणत्वं भविष्यतीत्याशङ्क्याह * अथापीति * श्रोतृवञ्चना-
व परशब्दस्य परत्र प्रयोगोपपत्तेर्नासम्भाविनो ऽध्यारोपस्य कल्प-
युक्तेत्याशयः। ननु द्वयोः श्रोतुरेव वा भ्रान्त्या वारोपाभावे ऽपि
स्या प्रतारणार्थेन वा परशब्दस्य परत्र प्रयोगोपपत्तेर्माभूदारोपक-
ना द्वयोरपि तु भ्रान्त्यभावे सिंहो देवदत्त इत्यादावारोपं विना
प्रयोगानुपपत्तेस्तत्कल्पनैवोचितेत्याशङ्क्याह * यदा त्विति *
दृश्यमादिशब्दोपात्तो वा सादृश्यहेतुर्गुणयोगो निमित्तं यस्य प्र-
ेस्य तस्य परत्र परशब्दप्रवृत्तौ निमित्तत्वेनाध्यवसानान्नारोपक-
ना युक्तेत्यर्थः। चत्यप्रयोगात्तदर्थाध्यवसानासम्भवाशङ्कानि-

शास्त्रार्थान्तर्णीतशब्देनाभिप्रेतत्वमुक्तम् । ननु वक्त्रर्थाभिप्रायस्यैव निमित्तत्वं नारोपस्येति नियमे को हेतुरित्याशङ्कां पूर्वश्लोकव्याख्यानेन निरस्यति * तथा हीति * ननु सत्यपि विवेके प्रसन्नक्रात्वादिसादृश्यादारोपः सम्भवतीत्याशङ्क्याह * यथेति * विवेकिनाम् पुंसाम् आरोपानुपपत्तौ हेतुमाह*न हीति * ज्ञानस्य व्यवहाराङ्गत्वात् अर्थनिरपेक्षेण च ज्ञानरूपेण व्यवहाराभावात् अध्यवसानात्मकमेव सर्वं ज्ञानं न ततो ऽन्यादृशं न च विवेकेन ऽध्यवसिते तत्त्वारोपः सम्भवतीत्याशयः । यद्वा विवेकज्ञाने तत्त्वभ्रान्त्यसम्भवे ऽप्युत्प्रेक्षामात्रप्रभवा कल्पनारूपा बुद्धिरारोपशब्दवाच्योपपत्स्यतइत्याशङ्क्य * न हीत्युक्तम् * अयमाशयः कल्पनारूपापि बुद्धिरर्थान्तरात्मना यद्यर्थान्तरमवभासयेत्ततो मानान्तरेण भ्रान्तिरेव स्यात् सा च विवेकिनः न सम्भवतीत्यर्थानवभासिकासावभ्युपगन्तव्या न चार्थानवभासिनी बुद्धिः सम्भवतीति व्यवहारानङ्गत्वापत्तेस्तावन्निरालम्बना बुद्धिर्न सम्भवतीत्युक्तं बुद्धिस्वाभाव्यादप्येवमित्याह * किं चेति * पुरुषप्रयोज्यत्वात्तदधीनो ऽपि शब्दः प्रवृत्तिनिमित्तं विषयं विना न वर्तते घटे वैयात्यात्पटशब्दोच्चारणे ऽपि बुद्ध्यनुपपत्तेः । बुद्धिः स्वच्छन्दत्वाद्विषयं विनोत्पत्तुमेव नार्हतीत्यर्थः । ननु स्वांशएव विषयो भविष्यतीत्याशङ्क्याह * न चेति * आरोपसम्भवात्कल्पनायुक्तेत्युक्त्वा कल्पकाभावादपि तत्कल्पना न युक्तेत्याह * अ चेति*अयमाशयः । स्वप्रत्ययानुसारेण श्रोत्रा वक्त्राभिप्रायानुसारे श्रोतुरारोपितार्थप्रत्यये सति वक्तर्यारोपकल्पना युज्येत तस्यैव देवदत्तपदसामानाधिकरण्यात्पूर्वं सिंहपदात्सम्बन्धग्रहणकालावगतानारोपितसिंहत्वरूपार्थप्रतीतेस्तत्सामानाधिकरण्योत्तरकालमपि सिंहसादृश्यमात्रप्रतीतेरारोपितार्थप्रत्ययाभावान्न वक्तर्यारोपकल्पना युक्तेति पदजन्यस्य पदार्थज्ञानस्य केवलसंस्कारजन्यत्वाभावात् स्मृतित्वाभावे ऽपि अधिकार्थत्वाभावसूचनार्थः स्मृतित्वोपचारः । ततश्चानारोपितमुख्यार्थग्रहणान्न श्रोतरि नापि वक्तर्यारोप इत्यर्थः श्लोकं व्याचष्टे * सर्वथेति * यदि द्रुतमध्यादिविभागवदर्थविशेषनिरपेक्षो गौणमुख्यविभागः स्यात् ततः श्रोतृप्रत्ययानपेक्षत्वात् वक्त्र परशब्दप्रयोगान्यथानुपपत्त्याध्यारोपः कल्प्येतापि स त्वर्थप्रत्ययापेक्षत्वात् तस्य श्रोतृगामित्वात् श्रोतुरारोपितार्थप्रत्ययान्यथानुपपत्त्या कल्पनीयः।न च तस्यारोपितार्थप्रत्ययः सम्भवतीति दर्शयितुम् *श्रोतृणामित्युक्तम् * सादृश्यादीत्यादिशब्देन तद्धेतुगुणयोगो

ाम् । नन्वेवं सति सादृश्यस्यैव वाच्यत्वापत्तेः स्वार्थत्यागः स्यादि-
शङ्क्य * सा चेत्युक्तम् *तमेवन्यायं प्रश्नपूर्वकं वक्तुम्* कथमि ३२
त्म्* अस्यैव श्लोकस्योत्तरार्द्धं व्याख्यातुम् *यदा चेत्युक्तम् *
शी तर्हि परत्र परशब्दप्रयोगोपपत्त्यर्थं वक्तरि कल्पनेत्यपेक्षायां प्र-
ूर्वकम् *कथं तर्हीत्युक्तम्* प्रसह्यकारित्वादेः सिंहत्वेनाविना-
ं देवदत्ते ऽनुपपत्तिप्रसङ्गात् बहुव्रीह्यभ्युपगमे चाविनाभूतशब्द-
विशेषणत्वात्पूर्वनिपातापत्तिः बाधिते च सिंहे व्यभिचारात् प्र-
कारिता तत्र प्रायेणेति भाष्ये प्रायशब्देनाविनाभावानादरसूच-
सम्बन्धमात्रविवक्षया ऽविनाभूतशब्दः अनेन च कथं तु स्वार्था-
ानेन प्रत्यय इत्यादिभाष्यमनागतावेक्षणन्यायेन व्याख्यातं भव-
स्वोत्प्रेक्षितगौणवृत्तिलक्षणाभ्युपगमे ऽनवस्थितवेदप्रामाण्याप-
यानुचितत्वान्नारोपितार्थवृत्तित्वं गौण्या वृत्तेर्लक्षणमित्याह* किं
ं * आरोपस्य पुरुषधर्मप्रदर्शनार्थं वक्तृणामित्युक्तम् किं तर्हि
वृत्तिनिमित्तलक्षणमित्याशङ्क्येति गुणाश्रया इतीतिकरणेन प्र-
वाचिना तत्सिद्ध्यादिगुणयोगस्य गौणवृत्तिनिमित्तत्वाभिधाना-
चेतम् । गुणयोगवृत्तित्वं गौणवृत्तिलक्षणमाह*तस्मादिति* उ-
ाधीनवृत्तित्वादीनां गौणवृत्तिलक्षणानां वेदाप्रामाण्यापादकत्वा-
ानिराकरणे ऽपि गौणमुख्याधिकरणे निराकरिष्यमाणत्वात् प-
प्रसिद्धिप्रदर्शनार्थम् * तस्मादित्युक्तम् * गुणयोगनिमित्तायाः
प्रवृत्तेर्गौणत्वेनेष्टत्वाद्वाच्यगुणानां प्रभूतानामर्थान्तरे वृत्तिर्योगः
जने प्रवृत्तौ निमित्तं यस्य स गौण इत्येवं व्याख्येयम् । गुणानाम-
त्वाच्छब्देनार्थान्तरेणान्वयानुपपत्तिः प्रसह्यकारित्वादिवच्च दं-
ादेरपि प्रत्यापत्तिरित्याशङ्कानिरासार्थं यो हि मन्यते प्रसह्य-
ण्णं प्रत्याययेयमिति भाष्यावयवव्याख्यानार्थेन सिंहत्वाविनाभू-
कक्रियागुणसमुदायो ऽनेन विवक्षित इति ग्रन्थेन प्रसह्यकारि-
ानां तात्पर्यवृत्त्या व्यवस्थितं शाब्दत्वं यत्सूचितं तद्विवरणार्थेन
जनशब्देन प्रयुज्यते ऽनेनेति व्युत्पत्त्या निमित्तमुक्तम् । भेदनादे-
ात्तस्य होमादिप्रयोजकत्वाभ्युपगमाच्छेषिणो ऽपि तावन्निमि-
ाप्रयोजकत्वासम्भवोपालम्भः । इह तु यथा रामस्य वेतनदाने
ात्तस्य शेषित्वरूपमपि प्रयोजनत्वं तथा देवदत्ते सिंहगुणयोगस्य
शब्दप्रवृत्तौ निमित्तत्ववत् प्रतिपाद्यत्वेन प्रयोजनत्वमप्यस्तीति-
यितुं प्रयोजनशब्देनाभिधानं युक्तमेव । आरोपवादस्य लक्षण-
यापकत्वमाशङ्कते * नन्वेवमिति * खपुष्पादेरसद्रूपत्वेन गु-

व्याधिते इति २ पु० पा० ।

णाभावादात्मादौ तद्गुणयोगानुपपत्तेः खपुष्पादीनां शब्दानां
ष्पमात्मेत्यादिगौणप्रयोगो ऽस्मिन् लक्षणे न युज्येतेत्यर्थः । न
द्रूपस्याध्यारोपयितुमशक्यत्वादारोपितार्थवृत्तित्वमपि खपु
त्मेत्यादिगौणप्रयोगेष्वसम्भवादव्यापकं स्यादित्याशङ्क्याह *
ख्यादीति * असद्रूपस्यारोपासम्भवे प्रधानादेरसद्रूपत्वेनाप्र
प्रसङ्गादप्रसक्तस्य प्रधानं नास्तीत्यादिनिषेधायोगात् प्रस
सद्रूपत्वाभ्युपगमे निषेधविरोधापत्तेरारोपस्यैव प्रसक्ति
थे ऽवश्याङ्गीकार्यत्वादसतो ऽप्यारोपापत्तेरात्मनि
ष्पत्वारोपेण खपुष्पमात्मेति गौणप्रयोगसम्भवान्नास्मत्पक्षे
क्षणस्याव्यापकतेत्याशयः । सिद्धान्ते तु त्वदीयस्यैव ल
स्याव्यापकत्वाख्यो दोषो नास्मदीयस्येति प्रतिजानाति ता
अत्रेति * परपक्षे तावत्प्रश्नपूर्वकं दोषमुपपादयति * कुत इ
किंचिद्रूपमुपादायातद्रूपे तद्रूपकल्पनारोपः खपुष्पस्य त्वेवं
मिति निरूपणासम्भवान्न शक्या कल्पना गौणप्रयोगसिद्ध्यर्थं
र्थान्तरे ऽन्वयारोपो वाच्यः अर्थान्तरस्य चात्मनो सद्रूपतयात्म
पुष्पमात्मेति गौणशब्दप्रयोक्तुर्बौद्धादेरभिप्रेतत्वान्न तस्मिन्नारो
त्तिरित्यर्थः । एतदेव व्यतिरेकमुखेनोत्तरार्द्धेन विवृतं गुणे
सत्ता च प्रज्ञातं यस्येति विग्रहः । एतदेवोपपादयति * यस
दिति * असद्रूपस्यारोपाभावे प्रसक्त्यभावात् खपुष्पं नास्तीति
योगानुपपत्तेरसद्रूपस्यापि खपुष्पादेरारोपो ऽङ्गीकार्य इति श
ङ्का प्रधानादिनिषेधोपन्यासेन कृता सा येऽपि प्रधानात्मादीनां नि
इत्युपन्यासपूर्वकं पश्चात्परिहरिष्यते खपुष्पमात्मेत्यादिगौणप्र
तावत् खपुष्पस्यारोपासम्भवो ऽधुनोच्यतइति तावच्छब्दार्थः ।
पुष्पशब्दस्य गौणत्वद्योतनार्थः स्थानीयशब्दः । अनिर्द्धारितरूपस्य
पासम्भवद्योतनार्थं निर्द्धारणार्थतरप्प्रत्ययप्रयोगः । अन्यस्य
न्यत्रारोपो भवति खपुष्पस्यारोप्यत्वेनाभिमतस्यारोप्याश्रयादात
ऽन्यत्वेनानवधारणान्नात्मन्यारोपः सम्भवतीत्यन्यशब्देनोक्तम्
२३।१ न्वात्मनः सद्रूपादसद्रूपस्यान्यता प्रसिद्धैवेत्याशङ्क्य * त्वयेत्युक्त
नैरात्म्यवादिनो बौद्धादेः खपुष्पमात्मेति प्रयोगः तन्मते चासत्त्व
शेषान्नान्यत्वं सम्भवतीत्याशयः । यद्यपि खपुष्पशब्दस्य खाधा
ष्पावच्छिन्नाभाववाचित्वं गम्यते तयोश्चाभाववाचित्वं पूर्वेणैव
वे ऽवगते इत्यादिना वक्ष्यते तेनैव न्यायेनात्मशब्दस्यापि नैरात्म
क्षे शरीराद्याधाराहम्प्रत्ययग्राह्यावच्छिन्नाभाववाचित्वं गम्यते त
श्चाभावयोर्द्धर्मिप्रतियोगिभेदेन भेदादात्मनो ऽन्यत् खपुष्पं

पि वक्तुं शक्यते तथापि खपुष्पत्वरूपस्य शरीराद्यध्या-
राह्यरूपे ऽध्यारोपाभावात् स्वरूपेण चाऽभावयोरवैलक्ष-
रूपस्यान्यत्वावधारणं सम्भवतीति दर्शयितुं*यदध्यारो-
* तस्मादात्मनि खपुष्पारोपासम्भवेनारोपितार्थ-
सेमन्प्रयोगे ऽनुपपत्तेस्तवैवाऽव्यापकत्वलक्षणो दोषः
तात्पर्यार्थः। ननु खस्य पुष्पस्य च कथं चित् संसर्गक-
त्मकं खपुष्पमभ्युपगम्यात्मन्यारोपयिष्यते इत्याशङ्क्याह
एवं खपुष्पशब्दस्य खपुष्पसंसर्गात्मकारोपितार्थत्वेन ख-
णत्वोपपत्तेर्गौणशब्दवृत्तिविषयतया खपुष्पस्यैवारोप्यस्य
द्येत न चैतस्यारोप्यस्य लोके गौणत्वं प्रसिद्धं सिंहत्वा-
गौणत्वप्रसिद्धेः। ततश्चैतद्गौणत्वलक्षणमतिव्यापकं स्या-
येन कारणेन स्वरूपेणानवधारितस्यान्यत्रारोपो न स-
त पूर्वं तावत्स्वरूपमेवारोपात्मकमभ्युपगन्तव्यं ततश्च
तस्यैवापद्येत सा च लोकाननुसारित्वादयुक्तेत्यर्थः।
भागस्यार्थविषयत्वे ऽर्थस्यारोपितार्थवृत्तिशब्दविषयत्वं
णमभिप्रेत्यैतदुक्तम्। शब्दविषयत्वेन चैतस्मिन्नारोप्ये
स्य सिंहादिशब्दस्येव लोके गौणत्वप्रतीतिरिति व्याख्येयम्
तार्थशब्दवृत्तिविषयत्वगौणत्वलक्षणं येन सिंहत्वादेरपि
सज्येत किं त्वारोपितार्थाश्रयत्वं ततश्च सिंहत्वादेस्ताव-
प्तिः खपुष्पस्य तु गौणत्वं युक्तमेव तथा हि खपुष्प-
ऽवृत्तिर्वक्ष्यते न चाभावस्तस्य वाच्यः तथा सति खपु-
प्रयोगानुपपत्तिप्रसङ्गादतो स्ववाच्यखपुष्पसंसर्गारोपे-
र्तमानः खपुष्पशब्दो गौणो भविष्यति आरोपितखपुष्प-
त्वाभावाच्चाभावो गौण इत्याशङ्क्याह* मुख्य इति *अ-
समासं विना खपुष्पशब्दात्संसर्गाप्रतीतेः समासवा-
ष्पसंसर्गस्याभ्युपगन्तव्यं विग्रहवाक्यार्थश्च समासवा-
न्तरेण च खस्य पुष्पस्य खसंसर्गाप्रतीतेः खस्य पुष्पम-
हायोगात्खस्य पुष्पं नास्तीति वाक्यार्थे समासप्रतीतेः ख-
एव खपुष्पशब्दस्य वाच्यत्वान्मुख्यो ऽर्थ इति संसर्गस्यैव
राभिमतमभ्युपेत्य लोके गौणस्य मुख्यपूर्वकत्वप्रसिद्धेर्मु-
भावेन गौणतानेन निरस्यते। नन्वारोपितस्य मृगतो-
मुख्यत्वप्रसिद्ध्यभावात्पारिशेष्याद्गौणतैव स्यात् इत्याश-
प्रथमेति * गौणमुख्यव्यवहारे मुखवत् प्रथमं प्रतीय-

तीति २ पु० पा०।

मानं मुख्यत्वेन प्रसिद्धमित्याशयः । ऊहितां शङ्कामुद्घाटयति
र्थमिति * आरोपिते मुख्यत्ववत् गौणत्वस्याप्यप्रसिद्धेस्तु
माह * तुल्यमिति * नन्वसतो गुणायोगासम्भवान्माभूत्त
गौणत्वमारोपनिमित्तं तु भविष्यतीत्याशङ्क्याह * यत्र ह
आरोप्याश्रयस्य देवदत्तादेर्गौणत्वं प्रसिद्धं नारोप्यस्य सिंह
रित्यर्थः । नन्विहाप्यारोप्यस्य खपुष्पस्य गौणत्वासम्भवे ऽ
प्याश्रयस्यात्मनो गौणत्वं भविष्यतीत्याशङ्क्याह * खपुष्पं
खपुष्पमात्मेति गौणप्रयोगवादिमते आरोप्यखपुष्पाश्रयत्वेना
स्यात्मनो ऽप्यसत्त्वाद्भेदाधिष्ठानत्वेन चाश्रयाश्रयिभावस्य
यत्र खपुष्पारोपस्यानाशङ्कनीयत्वात् आश्रयानपेक्षकेवलारो
त्ररूपतया खपुष्पस्यारोपितार्थाश्रयस्वरूपलोकप्रसिद्ध्यनुसा
णायोगात् आरोपितार्थवृत्तिशब्दविषयत्वमेवारोपवादिना
वाच्यं तच्च मुख्ये ऽपि सिंहत्वादावारोपवादिमते ऽस्तीति अति
कं लक्षणं स्यादारोपितार्थाश्रयत्वं तु खपुष्पमात्मेति प्रयोगे ऽनु
रव्यापकमिति तात्पर्यार्थः । एवमविद्यमानमेव खस्य पुष्पस्य च
गमारोप्य खपुष्पाभावे खपुष्पशब्दप्रवृत्तेरारोपितार्थवृत्तित्वं
गौणत्वलक्षणमारोपितार्थवृत्तिशब्दविषयत्वं चार्थारोपवाद्य
मित्यङ्गीकृत्य सिंहत्वे ऽपि सिंहशब्दस्य गौणत्वापत्तेर्दूषणे ऽ
ऽध्यारोपवादी स्वाभिमतमारोपिताश्रयत्वमर्थस्य गौणत्वलक्षण
सिकृत्वा खपुष्पस्याप्यारोपितघटादिसत्ताश्रयत्वाद् गौणत्वमस्
नाव्यापकत्वं लक्षणस्येति शङ्कते * तत्रैतत्स्यादिति * आत्मन्य
तसत्ताकत्वरूपखपुष्पगुणदर्शनेन देवदत्ते सिंहत्ववत् खपुष्प
रोपपत्तेः । खपुष्पमात्मेति अत्रापि गौणप्रयोगलक्षणसद्भावा
पकत्वमनाशङ्क्यमेवेति भावः । विद्यमानस्य घटादेर्यत्सद्रूपं तत्स
पुष्पादावारोप्यते प्रातिपदिकार्थः सत्तेति सर्वप्रातिपदिकानां
वाचित्वस्मृतेः । ततश्चारोपितसत्तारूपार्थाश्रयत्वात् खपुष्प
णतास्त्येवेत्यर्थः । सर्वप्रातिपदिकानां सत्तावाचित्वस्याकृत्यधि
निरस्तत्वात् स्मृतेश्च लिङ्गसंख्यान्वययोग्यसिद्धरूपार्थप्रतिपाद
नपरत्वात् यदि परं प्रतीतिबलेन खपुष्पशब्दस्य सत्तावाचित
क्तव्यं न च खपुष्पादिशब्दात् सद्रूपप्रतीतिरस्तीति निराकरोति
दिति*नन्वेवं सति पदात्सदसत्साधारणरूपार्थप्रतीतेरभावः
खपुष्पशब्दवाच्यत्वं न स्यात्। अथ सदसत्साधारणपदार्थस्वरू
त्रवाचिनो ऽपि पदस्य व्यवहारयोग्यार्थाभिधाने तात्पर्यात् स
णस्वरूपस्य च व्यवहारायोग्यत्वात् अभाववाचित्वस्थले । तथा

थनाख्यप्रकथने धर्माद्यर्थविनियोगाख्योपयोगे उपपूर्वस्य साहसि-
कर्माख्यसाहसिक्ये उपपूर्वस्य सतो गुणान्तराधानाख्ये प्रतियत्ने प्र-
गाद् गन्धनावक्षेपणासेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु
इति स्मृतेश्चानेकार्थत्वेनोत्पादनार्थत्वनियमाभावात्कथमुत्पत्त्या-
भवनकर्तृकर्मनिष्ठत्वनियम इत्याशङ्क्याह * सत्यपि चेति *
नियमाभावे ऽपि वा यदोत्पादनार्थत्वं तदोत्पाद्यमानकर्मनिष्ठत्वं
वेष्यतीत्याह * अथ वेति * करोत्यर्थकर्मणो भवनक्रियापेक्षा-
पादितामुपसंहरति * तेनेति * लब्धायां च भवनक्रियायां
कर्तृकर्मनिष्ठत्वं करोत्यर्थस्य सिद्धं भवतीति तावच्छब्देन सूचि-
। नन्वेवं करोतेर्भावयतिवद्भवत्यर्थकर्तृकर्मनिष्ठत्वे ऽपि णिजन्त-
भावेन प्रयोजकव्यापारवाचित्वायोगात्कथं भावयतिना तुल्या-
त्याशङ्क्याह * ततश्चेति * करोत्यर्थस्य भावयत्यर्थत्वोपपाद-
य प्रयोजकव्यापारत्वप्रतिपादनार्थं तत्कर्तुः प्रयोजकत्वाभिधानं
ोज्यं विना प्रयोजकत्वायोगात्तत्सिद्ध्यर्थं प्रयोजत्वाभिधानम् । ननु
च्प्रत्ययरहितस्य धातोः प्रयोजकव्यापारवाचित्वे करोतिवद्भवते-
पि तद्वाचित्वापत्तेर्भावयतीति णिच्प्रत्ययो ऽनर्थकः स्यात्प्रयोज्य-
ापारवाचित्वे वा भवतिवत्करोतेरपि तद्वाचित्वापत्तेः प्रयोजक-
ापारवाचित्वं न स्यादित्याशङ्क्याह * भवतीति * णिच्प्रत्यय-
हितत्वाविशेषे ऽपि यथा विक्लिदेः प्रयोज्यतण्डुलव्यापारवाचित्वं
चतेस्तु प्रयोजकदेवदत्तव्यापारवाचित्वं वृद्धव्यवहारान्नियतं तथा
ोरपीत्यर्थः । ननु प्रयोज्यप्रयोजकव्यापारयोः परस्परापेक्षत्वा-
थमनयोः प्रयोज्यप्रयोजकव्यापारमात्रवाचितेत्याशङ्क्याह * तत्र
ति * प्रयोज्यव्यापारानपेक्षप्रयोजकव्यापारयोगादेवकारोक्ता-
मात्रे विवक्षा न युक्तेत्याशङ्क्य प्रयोज्यव्यापारस्यान्यतो ऽवगति-
द्धेः पारिशेष्यात्प्रयोजकव्यापारमात्रविवक्षोपपन्नेति केवलमित्य-
न तु पारिशेष्यवाचिना क्रियाविशेषणेनोक्ते कथं प्रयोज्यव्यापार-
ाभिधानं विनावगतिरित्यपेक्षायां घटमिति द्वितीययाभिहितया क-
ाख्यया शक्त्याक्षिप्तः प्रयोज्यस्य घटस्य भवनाख्यो व्यापारो य-
स्मिन्नित्युक्तम् । कथं वा कर्मणः प्रयोज्यव्यापाराक्षेप इत्याशङ्क्य *क-
णः शक्त्येत्युक्तम् * निर्व्यापारस्य कर्मत्वायोगात्तद्बलेनाक्षेप इति ३
ावः । करोतिमात्रप्रयोगे कथमाक्षेप इत्याशङ्क्य * स्वयमाक्षिप्तप्र-
ोज्यव्यापारेत्युक्तम् * घटो भवतीत्यत्र प्रथमाया अप्यभिहि-
कारकविभक्तित्वाभ्युपगमात्प्रथमाभिहितकर्तृशक्त्याक्षिप्तः प्रयोज-
व्यापारो यस्मिन्स्वयं वाक्षिप्तः प्रयोजकव्यापारो येनेति बहुव्रीहि-

विग्रहेण व्याख्येयम् । पचतिविक्लिद्यतीतिदृष्टान्तार्थौ उभयोस्तु व्या
पारयोर्भिन्नपदोपात्तयोः समुच्चयेन विवक्षायां करोतिभवत्योः स
म्बन्धित्व प्रयोग इत्याह * कदा चिदिति * ननु करोतेः प्रयोजकव्या
पारवाचित्वे तदाक्षिप्तस्यापि भावनाख्यस्य प्रयोज्यस्य व्यापारस्य
ब्दत्वेन प्राधान्यानुपपत्तेः क्रियते घट इति प्रयोज्यवाचिना घटश
ब्देन सामानाधिकरण्यं न स्यादित्याशङ्क्याह * कदा चिदिति
तिङा घटस्य कर्मत्वोक्तेः कर्मणश्च वस्तुतः प्राधान्यात् सव्याप
स्यैव च कर्मत्वादाक्षिप्तस्यापि प्रयोज्यव्यापारस्योपसर्जनीभूतः
योजकव्यापारो यस्य स विवक्ष्यतइत्युत्तरग्रन्थगतविवक्ष्यतइति प
नुषङ्गेण व्याख्येयम्।ननु प्रयोज्यव्यापारस्य प्राधान्यविवक्षायां करो
प्रयोगोपपत्तावुपसर्जनत्वविवक्षायां सुतरामुपपत्तेर्न कदा चिद्भ
वतिः प्रयुज्येतेत्याशङ्क्याह *कदा चित्पुनरिति* समानस्य पदस्यैक
शेनोपात्ता प्रयोज्यक्रियोपसर्जनीभूता यस्येति विग्रहः तदा च स
नपदैकदेशोपात्तत्वविवक्षायां करोतेरेवाशक्तत्वेन भवतेरपि प्रयो
क्रियामात्रपर्यवसायित्वेन प्रयोजकव्यापारविवक्षायां णिच्प्र
विना प्रवृत्त्यशक्तेः सो ऽप्यधिकः प्रयुज्यतइत्यर्थः ।क्रियाया धातु
च्यत्वप्रसिद्धेर्णिचश्च केवलस्य धातुत्वाभावान्न क्रियावाचितास्त
ये वदन्ति तन्मते न द्योतकत्वोक्तिः।स्वमते तु भुविक्लिद्योः प्रयो
कक्रियावाचित्वे केवलप्रयोज्यक्रियानिष्ठत्वोक्तिर्विरोधापत्तेर्णिच
व तद्वाचकत्वम्। प्रयोज्यक्रियावाचिना णिचा विना प्रयोजकक्रि
यामशक्तिं वृद्धवचनेन द्रढयति * तथा चाहेति * प्रयोज्यक
काणां भवनादीनां व्यापाराणां प्रतिपादका ये भूवादयो धात
स्तेषांप्रयोज्यानां घटादीनां ये प्रयोजकाः कुलालादयस्तेषां व्याप
यन्ता एव प्रयुज्यन्तइत्यर्थः। भवनादीनामन्योत्पादानुकूलत्वाभ
नाव्यापारत्वमाशङ्क्य *एकान्तेत्युक्तम्* अन्योत्पादानुकूलत्वा
वे ऽप्यनिष्पन्नरूपत्वादेकान्तेन व्यापारतास्तीत्याशयः। ननु भ
त्यादीनां णिचं विना प्रयोजकक्रियाभिधानाशक्तौ करोत्यादीन
प्यशक्तिप्रसङ्गात्तेषां वा शक्तावन्येषामपि शक्तिप्रसङ्गाद्वैषम्य
युक्तेत्याशङ्क्याह * न चेति * शक्तीनां स्वभावत्वेनापर्यनुयो
त्वात्प्रकृतयः प्रत्ययास्तत्समुदायात्मकानि चादिशब्दोक्तानि पद
नानारूपानर्थान्वदन्तीत्यर्थः । अतो भवत्यर्थकर्तृकर्मनिष्ठप्रयोज
व्यापारवाचित्वेन करोतिभावयत्योस्तुल्यार्थत्वात्सिद्धकर्तृक्रिया
चिषु चाख्यातेषु करोतिसामानाधिकरण्येन करोत्यर्थस्य
च्यत्वावगमात्तद्द्वारा भावयत्यर्थस्यापि वाच्यत्वासिद्धेर्यज

भ्रातो ऽवगम्यते भावयोदिति चेदित्यादिभाष्यं युक्त-
याह * एवमिति * ननु भावनायाः प्रत्ययवाच्यत्वे
धात्वर्थस्यैव निष्पाद्यत्वलक्षणक्रियारूपेण प्रत्ययेनाभिधानाद्भा-
त्वोपपत्तेरन्योत्पादानुकूलत्वे ऽपि वा भावनालक्षणे धात्वर्थे-
धातुना व्यापारात्मनोपादीयमानस्य प्रत्ययावगतानुष्ठेयत्वान्य-
पपत्त्या फलोत्पादानुकूलतयावगमाद्भावनात्वोपपत्तेर्भावयेद्या-
ते क्रियाकरणतया भेदेन निर्देशो न युक्त इत्याशङ्क्य भवनक्रि-
र्तृकर्मनिष्ठप्रयोजकव्यापारत्वं धात्वर्थव्यावर्त्तकं लक्षणमाह *
ते * येन कारणेन करोतिभावयत्योरुक्तप्रकारेण तुल्यार्थत्वं
कारणेनेत्यर्थः। यत्त्वाक्षेप्त्रा विधिमात्राभिधायित्वाल्लिङादीनां
नाभिधायित्वं न सम्भवतीत्युक्तं तदनुभाषणपूर्वकं निराकरो-
* यत्तूक्तमिति। अयमाशयः * किं विधिमात्रशब्देन भावयति-
वाच्यत्वं भावनायाः प्रत्ययानभिधेयत्वे कारणमभिप्रेतं विधि-
रिक्तभावनाभावो वा। तत्र विधेरपि भावयतिधातुवाच्यत्वेन
यवाच्यत्वापत्तेर्नाद्यः कल्प इत्यभिधाभावनाशब्देन सूचितं
जकव्यापारवाचित्वात् भावनाशब्दस्य विधेरपि प्रयोजकलि-
व्यापारत्वात् भावनात्वमस्तीत्याशयः। ननु विधेर्लिङादिवा-
भ्युपगमात्तदुच्चारणात्प्रागसिद्धत्वे सति अगृहीतसम्बन्धत्वेन
त्वायोगाल्लिङाद्युच्चारणात्प्रागेव सिद्धेस्तत्परत्वं न युक्तमि-
ङ्क्य शब्दश्रवणानन्तरभाविप्रवृत्तिहेतुप्रेषणाध्येषणादिव्यापारा-
प्रवर्त्तनासामान्याभिधानेन तद्विशेषापेक्षायामपौरुषेये वेदे पुरु-
स्य प्रेषणादेरसम्भवात्तद्व्यतिरिक्तविध्याख्यस्य विशेषस्य पारि-
ल्लक्षणया गम्यमानस्य सम्बन्धग्रहणानपेक्षत्वेन प्राक् सिद्ध्य-
णादविरुद्धा शब्दव्यापारतेति सूचनायाभिधाशब्दः। कर्त्तृव्युत्प-
करणव्युत्पत्त्या वाभिधाशब्दस्य शब्दपरत्वमङ्गीकृत्याभिधायाः
स्यात्मनो भावनां व्यापारं प्रवर्त्तनासामान्यव्यक्तिभूतं लिङाद्-
वर्त्तनासामान्यमभिदधाना निर्विशेषसामान्यायोगात्प्रैषादौ च
दृष्टस्य विशेषस्य पुरुषधर्मत्वेनापौरुषेये वेदेऽसम्भवात्प्रवर्त्तना-
न्यस्य च प्रैषादिप्रवर्त्तकव्यापारवर्त्तित्वदर्शनाल्लिङादेरेव च
प्रवर्त्तकत्वावधारणाल्लक्षणया गमयन्तीत्यर्थः।अन्यामित्यपरत्व-
ना ऽन्यशब्देन शब्दभावनायाः पाश्चात्यमभिदधतार्थभावना-
यत्वेन तदपेक्षत्वसूचनाद्विध्यभिधायित्वं नार्थभावनाभिधायि-
बाधकं प्रत्युत साधकमिति सूचितम्। न च विधिव्यतिरि-
वनापह्नवार्थो विधिमात्रशब्दार्थो युज्यते विध्यभावे ऽपि सर्वा-

ख्यातेषु दर्शनेनापह्नोतुमशक्यत्वादिति द्वितीयकल्पनिरासायो
र्थे विधेयायाः भावनायाः पुरुषार्थरूपभाव्यनिष्ठत्वसूचनार्यच्च
नित्वं सूचयितुमिच्छार्थादर्थयतेर्णिजन्तादर्थयतइति कर्तृवि
थामेरजित्यच्प्रत्ययोत्पादनेनार्थिनः पुरुषस्यार्थशब्देनाभिधान
वनायाश्च पुरुषधर्मत्वाद्धर्मधर्मिणोश्चात्यन्तभेदाभावात्तादात्म्यं
वक्षित्वार्थात्मा चासौ भावना चेति विग्रहः कार्यः । अन्याभि
३५।२ भावनापेक्षित्वं शब्दभावनायाः सूचितमुपपादयति * यदा हि
पुरुषव्यापाररूपेत्यनेनार्थशब्दस्यार्थयतइति व्युत्पत्त्यार्थिपुरुषप
व्याख्यानं सूचितम्। विध्यादीनां भावनाव्यक्तित्वाभावे ऽपि वि
त्वेनावच्छेदकत्वात् विशेषतोक्ता लिङादिषु शब्दविशेषेषु अ
यत्सामान्यमाख्यातत्वं नाम तद्व्यतिरिक्तैर्लिङादिशब्दविशेषैव
इत्याख्यातत्वेति त्वप्रत्ययाध्याहारेण व्याख्येयम्। व्यक्तीनां साम
द्त्यन्तव्यतिरेकाभावे ऽपि आख्यातरूपवाच्यार्थभावनाव्यति
विध्याद्यर्थान्तरवाचित्वोपपादनार्थं कथं चिद्व्यतिरेकविवक्षया
तिरेकशब्दः। लिङ्लोट्तव्यपञ्चमलकाराणां विधिर्वाच्यस्तेषाम
प्रयुक्तानां निषेधः। लङ्लुङ्लिटां भूतकालः लृट्लुटोर्भविष
लः लटो वर्त्तमानकालः आदिशब्दोपात्ता क्रियातिपत्तिर्लृङ
आशीरादीनामपि लिङादिशब्दवाच्यानामादिशब्देनोपादानं
वोदाहरणैरुपपादयितुम् * तथा चेत्युक्तम् * ननु विध्या
भावनापेक्षित्वे ऽप्यभिधाभावनायाः किमायातं का वाभिधाख
कथं चास्याः सापेक्षतेत्याशङ्क्य * तत्रेत्युक्तम् * विधेरेवाभि
शब्दधर्मभावनात्वात्तस्याश्च प्रयोजकशब्दव्यापारत्वेन प्रयोज्य
व्यापारात्मकार्थभावनाविषयत्वात्तदपेक्षितेत्याशयः । शब्दव्या
ण व्यापारस्यानुपलम्भेनाभावमाशङ्क्यात्यन्तभेदाभावेनानुपलम्
पादनायाभिधात्मिकेत्युक्तम् । ननु भावनायाः सर्वत्रांशत्रयोपे
द्विधेश्चांशत्रयानिरूपणाच्च भावनात्वमस्तीत्याशङ्क्याह * विधे
श्चेति * पुरुषप्रवृत्तिविधिज्ञानप्ररोचनाख्यसाध्यसाधनेतिकर्त्तव
विशिष्टरूपेण वर्णितेत्यर्थः । यच्च करोतिभावयत्योः प्रत्ययेन
प्रयोगात्सहाप्रयोज्यत्वलक्षणपर्यायास्थित्यतिलङ्घनेनापर्यायत्वमुप
दप्यनुभाषणापूर्वकं त्रेधा परिहरति * यस्त्विति * पर
णां सहाप्रयोज्यत्वस्यानर्थक्यापत्तिप्रयुक्तत्वात् पर्यायत्वस्वरू
प्रयोजकत्वेन स्वरूपप्रयुक्तसाहित्यलक्षणव्याप्त्यभावादिह च
त्यनुग्रहादिप्रयोजनत्रयसद्भावेनानर्थक्यापत्त्यभावाच्च सह
ज्यत्वानिवृत्त्या पर्यायत्वानिवृत्तिरित्याशयः । प्रकृत्यनुग्रहार्थत

ादयति*यदि हीति* ननु तृजादिप्रयोगेणापि प्रकृत्यनुग्रहसि-
ख्यातनियमो ऽनर्थकः स्यादित्याशङ्क्याह *तेनेति* येन प्रत्ययं
पभ्रंशत्वप्रसङ्गस्तेनावश्यं कस्मिंश्चित्प्रत्यये प्रयोज्ये तृजादिप्र-
कर्त्राद्यर्थान्तरापत्तेस्तस्य च विवक्षितार्थाभ्यधिकत्वेनावाच्य-
ाकृत्यर्थानुवाद्याख्यातमेव नियम्यतइत्यर्थः। नन्वधिकार्थापत्ति-
[ कर्त्ता भावयितेत्यादिकर्त्रादिवाचितृजादिप्रयोगायोगे ऽपि
श्तपो वाभ्यधिकार्थानापादकत्वेन प्रयोगोपपत्तेः क्रिर्भावि: क-
ावयतिरिति वा कस्मान्न प्रयुज्यतइत्याशङ्कते*ननु चेति *
धिकार्थत्वाभावे ऽपि तद्युक्तयोः करोतिभावयत्योः स्वरूपवा-
नाख्यातार्थवाचित्वहानापत्तेर्न युक्तः प्रयोग इति परिहरति
ादिति * नन्वर्थे ऽपि क्तिन्नन्तस्य शितबन्तस्य वा धातोः प्रयोगान्ना-
त्वहानिरित्याशङ्क्याह * यत्त्विति * एतदेवोपसंहरति
स्मादिति * कर्तृसंख्यादिसङ्गहार्थत्वं विवृणोति * यदि ३५६
* पूर्वस्मिन्परिहारे सर्वप्रत्ययार्थाविवक्षापत्तेः परिहारान्तर-
: भावनांशानुवादस्त्विहापि तुल्य इत्याह * यस्त्विति *
ावनायाः प्राधान्येनाख्यातार्थत्वाद् गुणभूतकर्तृसंख्यादिसंग्र-
ुवाद्यत्वानुपपत्तेः प्रकृत्यनुग्रहाय धातुनिर्देशार्थस्यैव प्रत्ययस्य
याार्थपरत्वोपपत्तेः प्रयोगो युक्त इत्याशङ्क्याह * अन्यथा
* आख्यातार्थकथनाय भावनामात्रवाचिनि क्रिभाव्यादि-
प्रयुज्यमाने भावनामात्रस्याख्यातार्थत्वभ्रान्ति करोतिभा-
ाव सर्वाख्यातार्थवाचित्वभ्रान्ति व्यावर्त्तयितुं कर्तृसं-
ाख्यातेनावश्यं वाच्यमित्यर्थः। रूपाविनाशसिद्ध्यर्थ-
पादयति * नित्यं चेति * एतच्च ननु कारो भाव
[ भावोत्पन्नकृत्प्रयोगे ऽभ्यधिकार्थान्तरानापत्तेः शब्द-
कत्वानापत्तेश्च नाख्यातनियमः सम्भवतीत्याशङ्क्य * परिहा-
मुक्तम् * श्लोकार्थमुपसंहरति * तस्मादिति * एवं पर्याय-
र प्रत्ययस्य प्रयोजनान्तरार्थत्वेन पौनरुक्त्याभावात्सह प्रयोगो
वेरुध्यतइत्युक्तम् * इदानीं भावनाया वस्तुतः प्रत्ययमात्रवा-
ऽपि प्रतीतिमात्रव्यवहारिणा लोकेन विवेक्तुमशक्यत्वादा-
ादेन धात्वर्थवत् भावनाप्युच्यतइत्येतावदवगम्य पचतीत्यस्य
। इति पृष्टे धातुमात्रवाच्यत्वेन निश्चितं धात्वर्थं पाकमिति
ाय सम्मुग्धाख्यातपदवाच्यत्वेन भावनां ख्यापयितुं करोतौ
तौ वा प्रयुज्यमाने प्रकृत्यनुग्रहार्थं प्रत्ययमात्रस्य भावनावाचि-
वेनापौनरुक्त्यं मत्वा प्रयोगो न विरुध्यतइत्याह * किं चेति *

पर्यायत्वाभावादपि तिङ्प्रयोगाविरोध इत्येवम् किं च शब्दव्या
नपूर्वकम् । श्लोकं व्याचष्टे * यदि हीति * लोकानवगतं ि
कुर्वतां परीक्षकाणां लोकविरोधपरिहारसूचनार्थं लोकस्य विवे
नप्रयोजनाभावाभिधानम् । ननु धातोः व्यभिचारित्वेनावाच
निश्चयात्प्रत्ययमात्रवाच्यत्वं विवेक्तुं शक्यमित्याशङ्कते * स्य
दिति * प्रत्ययस्यापि व्यभिचारस्तुल्य इति तावत्परिहरति *
दिति * प्रौढ्या भावनावाचित्वेनाभिमतस्य सिद्धकर्तृक्रियावा
धातोरव्यभिचारं वक्तुमुपक्रमते * न वेति * प्राधान्याप्रतीत
स्वरूपमात्रप्रतीतिदर्शनायात्यन्तमित्युक्तम् । अस्तिः प्रतीतिलक्षण
तत्र कृद्विशेषाणां कृत्यानां प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति प्रै
चित्वस्मृतेरप्राप्तविषयस्य च प्रैषस्य विधित्वाद्विधेश्च भावनावि
त्वादप्रधानभूतायाश्चांशत्रयोपसंहारासामर्थ्येन विधातुमशक्य
दीषत्प्राधान्यमप्यस्तीति सूचयितुं पूर्वं कृत्येषु किं चिदपकृष्ट
णभावनारूपप्रतीतिं दर्शयति * कृत्येषु तावदिति * कृत्यमध्ये
भोक्तव्यमित्यादेर्भावोत्पन्नात्कृत्याद्गन्तव्य इत्यादिषु कर्मोत्पन्नेषु
७।१ नतरागम्यतइत्याह * तत्रापीति * द्रव्यप्राधान्येन धात्वर्थस्
प्राधान्याभावाद्भावनायाः सुतरां नास्तीति सूचितं कथं न्यूनत
चेत्यपेक्षायामाह * न हीति * भोजनं कर्त्तव्यमित्यत्र प्रयोजक
पारस्य धात्वर्थप्रधानत्वाद्गन्तव्य इत्यत्र च प्रयोज्यद्रव्यपरत
प्राधान्यमित्यर्थः । द्रव्यस्वरूपस्य तव्यवाच्यत्वाभावेन प्राधा
योगात् कर्मस्वरूपेण प्राधान्यं वक्तुं प्रयोज्यशब्दः । निर्व्यापा
प्रयोज्यत्वायोगात्कर्मशक्त्याक्षिप्तप्रयोज्यव्यापारविशिष्टोक्ता । न
वं सति तिङ्क्षु भावनावाचित्वस्य भावनाप्राधान्यव्याप्तेः कृ
भावनाप्राधान्यनिवृत्त्या तद्वाचितापि निवर्त्ततइत्याशङ्क्य तिङ्क्ष
सर्वेषु भावनाप्राधान्याभावाद्वाच्यत्यभावं सूचयितुमाह * ए
ति * भावोत्पन्नाः कर्मोत्पन्ना वा स्थानिनो लकारा येषां भुज
देवदत्तेन भुज्यते ऽन्नमित्यादीनामादेशानां तिङन्ते ऽप्यनेन भावक
त्पन्नकृत्यव्याख्यानेन व्याख्याता इत्यर्थः । एतदेव विवृणोति *
ष्वपीति * अतो भावनावाचिनामपि सर्वेषां तिङन्तानां तत्प्रा
न्यलक्षणतुल्यत्वाभावाद्भावनावाचित्वस्य तत्प्राधान्येनाव्याप्तेर्न
त्येषु भावनाप्राधान्यनिवृत्त्या तद्वाचित्वनिवृत्तिरित्युपसंहरति
अत इति * अव्ययसंज्ञकेषु कृत्सु कृत्यसंज्ञकेभ्यो ऽपीषन्न्यूनभ
नाज्ञानमित्याह * तथेति * ननु तेषामपि भोक्तव्यमिति कृत्यसं
धकद्भावोत्पन्नत्वस्मरणाविशेषात्कथं कृत्यवाच्यभावनातो ऽव्यय

च्यावा भावनायाः न्यूनतेत्याशङ्क्य * अव्ययेत्युक्तम् * स्मृत्युप-
ासेनाव्ययकृत्सु इति ज्ञातुं शक्यत्वान्न कण्ठेनोक्तम् । ईषन्न्यून-
वनाज्ञानस्य स्वसंवेद्यत्वमुदाहरणैर्दर्शयति * अभिक्राममिति *
तुसम्बन्धे प्रत्यया इति धातुसम्बन्धाधिकारविहितानामपि णमु-
दीनां धात्वर्थसम्बन्धं विना धातुसम्बन्धायोगात् धात्वर्थनिष्पा-
ऽक्षणभावनायाः सम्बन्धं च विना धात्वर्थसम्बन्धायोगाद्भाव-
सम्बन्धवाचित्वप्रतीतेः समानकर्तृकयोः पूर्वकालइत्यनेन समान-
ृकयोः धात्वर्थयोः पूर्वकाले धात्वर्थे वर्त्तमानाद्धातोः क्त्वाप्रत्ययं
ाय आभिक्ष्ण्ये णमुल्चेति तस्मिन्नेवार्थे पौनःपुन्याख्याभीक्ष्णाधि-
णमुल्विधानादभिक्रमणं कृत्वा होमं करोतीति णमुल्श्रुत्यैव
भावना सापेक्षाभिक्रमणभावनाश्रीयते । करणे हन इति च क-
वाचिन्युपपदे हन्तेर्णमुल्प्रत्ययविधानादुपहननं कृत्वा होमं क-
ोति हननभावना होमभावना सापेक्षावगम्यते । होमं कृत्वा भ-
ं करोतीति भक्षणभावना सापेक्षा होमभावना क्त्वाश्रुत्यैवावग-
े । भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् इत्यनेन
ुमर्थइत्यनुवर्त्य भावं च तुमर्थत्वेन विवक्षित्वा भावो लक्ष्यते-
ति च भावलक्षणशब्दार्थं विवक्षित्वा तिष्ठतेरिणः कृञोवदेश्चरे-
तिस्तमिर्जनेश्च धातोर्भावलक्षणार्थे भावे वर्त्तमानात्तोसुन् विधा-
ुरा वाचः प्रवदितोरनूच्य इत्यत्र प्रवदितोरित्यव्ययतोसुन् श्रुत्यैव
ते दिक्शब्दयोगात् लुप्तपञ्चमीकतया वाक्प्रवादक्रियातः पुराप्रात
ाकानुवचनं कार्यमित्यनुवाचनभावनासापेक्षा प्रवादभावना ग-
। अतो भावनान्तरसापेक्षत्वात्स्वसम्वेद्या न्यूनतेत्याशयः । नि-
ञ्ज्ञयोस्तु क्तक्तवत्वोः कृतो न्यूनतरभावनाज्ञानं स्वसम्वेद्यमि-
* पक्व इति * पक्वः पक्ववानित्यत्रौदनः कृतपाको देवदत्तः पाकं
वानिति निष्पन्नरूपायाः भावनायाः यथासंख्यं कर्मकर्तृरूपद्र-
सर्जनत्वप्रतीतेर्निष्पाद्यत्वप्राधान्ययोर्द्वयोरप्यभावात्कृत्यसञ्ज्ञ-
ः कृद्भ्यो न्यूनतरेत्याशयः । एवं कृत्याव्ययनिष्ठासञ्ज्ञकेषु
शेषेषु अपकृष्यमाणभावनारूपप्रतीतिमुक्त्वा कृदन्तरेषु यथा-
वमतिदिशति * एवमिति * पाचकः पक्तेत्यादिषु कर्त्रुत्प-
पाककारकः पाककर्त्तेत्यादिकर्तृप्राधान्यप्रतीतेरादिशब्दोपात्तेषु
इत्यादिषु भावोत्पन्नेषु पाकः क्रियेत्यादिधात्वर्थप्राधान्यप्रतीते-
यत्वाभावेन च प्राधान्यानपेक्षणात् कृत्येभ्यो न्यूनतरेति भा-
स्वसम्वेद्यमपि सर्वेषु सिद्धकर्तृक्रियावाचिषु धातुषु भावनाज्ञानं
तेपन्नान्प्रत्यर्थापत्त्या साधयति * तथा चेति * भावोत्पन्नेषु

कृत्येषु कस्य केनेति कर्मकर्तृकरणानां कर्मोत्पन्नेषु केनेति
णयोरभिक्रामामित्यत्र कर्तुरुपघातमित्यत्र कस्य कः केनेति
र्तृकरणानां प्रवदितोरित्यत्र कस्येति कर्मकर्त्रोः पक्व इत्यत्र
कर्तृकरणयोः पक्ववानित्यत्र कस्य केनेति कर्मकरणयोः पाच
त्र कस्य केनेति कर्मकरणयोः पाक इत्यत्र कस्येति कर्मकर्त्रो
च करणस्याधिकरणाद्यपेक्षायाश्च यथायोगं दर्शनात्तस्याश्च
दिषु भावनानुपलब्धावदर्शनाद्भावनाज्ञानहेतुत्वावधारणा
थानुपपत्त्या भावनाज्ञानं कल्प्यतइत्यर्थः । करोतेश्च
प्रत्यये कारकशब्दस्य मनिन्प्रत्यये । कर्मशब्दस्य तृच्प्रत्यये
ब्दस्य ल्युट्प्रत्यये करणशब्दस्य व्युत्पत्तेः कारकव्यपदेशतद्वि
र्मादिव्यपदेशानां करोत्यर्थव्यापारसम्बन्धनिबन्धत्वात्तदन्य
पत्त्यापि भावनाज्ञानं कल्प्यतइत्याह * न चेति * ननु धात्व
व्यापारत्वात्कारकापेक्षा कर्मादिषु च कारककर्मादिव्यपदेशाः
त्स्यन्त इत्याशङ्क्याह * न त्वस्तीति * धात्वर्थस्य निष्पाद्यत
त्यप्यन्योत्पादानुकूलत्वलक्षणकरोत्यर्थक्रियारूपव्यापारत्वाभा
क्रियासम्बन्धिरूपकारकापेक्षा धात्वर्थसम्बन्धनिबन्धना वा
कादिव्यपदेशाः सम्भवन्तीत्याशयः । यत्र धात्वर्थे किं चि
जायते स व्यापारो न भवतीत्यर्थः । अतः करोतिभावयत्योर
स्सर्वधातूनामर्थः सिद्ध इत्युपसंहरति * ततश्चेति *
व्यातेषु भावनावाचित्वं करोतिसामानाधिकरण्येन व्याप्तं (
करोतिसामानाधिकरण्ये व्यावृत्त्या न व्याप्तं) कृत्सु करोतिसा
धिकरण्ये व्यावर्त्तते इत्याशङ्क्याह * शक्यते चेति * ननु ए
रानेकक्षणव्यासक्तरूपपूर्वापरीभूतत्वस्य व्यापारलक्षणस्य घ
दिष्वप्रतीतेः कथं भावनाख्यव्यापारवाचितास्तीत्याशङ्क्य * ।
पीत्युक्तम् * यथा शुक्लत्वमित्यत्र भावप्रत्ययाद् गुणस्य नि
प्रतीतेर्द्रव्योपसर्जनत्वरूपाप्रतीतावपि गुणस्वरूपवाचित्वं न
न्यते तथात्रापि घञादिप्रत्ययात् सिद्धरूपप्रतीतेः पूर्वापरीभूत
पनिष्पाद्यत्वाप्रतीतावपि भावनास्वरूपवाचित्वं न विहन्यः
भावः । कथं शक्यमित्यपेक्षायामाह * तद्यथेति * णमुलन
तौ करोतिसामानाधिकरण्यं प्रदर्शयितुं प्रश्नार्थे किमिति प्रयो
अन्यथैवं कथमित्थमस्विनियोगिनि किम्युपपदे करोतेर्णमुल्प्रत्यः
धानात् * कथङ्कारमित्युक्तम् * किं कृत्वा भक्षयन्त्यभि
हुत्वेति वक्तव्यं होमाभिषवयोः पौर्वापर्यसन्देहनिवृत्त्यर्थं जुहोत

१ अयं पा० १ पु० मा० ।

किङ्कर्त्रोः पुरा प्रवदितोरिति कृञ्वदिभ्यामेकसूत्रेण तोसुन्वि-
ात्सुज्ञातत्वाच्च दर्शितम् किं कर्त्तेत्युच्यमाने कर्मविशेषप्रश्नाश-
ाप्तेः क्रियाविशेषविषयत्वज्ञापनार्थं का क्रियास्येति विवक्षित-
त् * किं क्रिय इत्युक्तम् * नन्वाख्यातेषु भावनायाः प्राधान्य-
तेः प्रत्ययार्थत्वावधारणाच्च धातुवाच्यतेत्याशङ्क्याह * न च-
* प्रत्ययार्थस्यापि कर्तृसंख्यादेर्गुणत्वदर्शनात्प्रत्ययार्थस्य प्राधा-
मृतिरप्रमाणमित्याशयः। अतो यथा धातवो धात्वर्थं न व्य-
रन्ति तथा भावनामपीत्युपसंहरति * तस्मादिति * भिन्न-
ऽपिशब्दः सर्वधातूनां करोत्यर्थवाचित्वे ऽभियुक्तानां संमति-
* तथा चाहुरिति *

विभज्य सेनां परमार्थकर्मा सेनापतींश्चापि पुरन्दरोऽथः।
नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातून्॥

नन्वाख्यातेषु सर्वधातुवाच्यत्वे भावनायाः प्राधान्यप्रतीतिः क-
त्याशङ्क्याह * यत्त्विति * गुणप्रधानभावस्यार्थाद्गम्यमानत्वेन
ार्थत्वपक्षे ऽपि प्राधान्यस्य वाच्यत्वाभावात्प्रौढिमात्रेण वा-
ाभिधानमिति सूचयितुम् * काममित्युक्तम् * अस्मिन्पक्षे
धर्थश्चात इत्यतःशब्देन धातुमात्रपरामर्शात् धात्वर्थश्च धातो-
च्यते भावयेदिति चेति भाष्यं व्याख्येयम्। नन्वेवं भावनायाः प्र-
ाच्यत्वाभावात्प्रत्ययस्य करोतिभावयतिभ्यां पौनरुक्त्याभावे
यागेनेति घञन्तेन धातुना धात्वर्थे कथ्यमाने भावनाया
तेनैव धातुनोपात्तत्वाद्भावयेदिति पुनरुक्तं स्यादित्याश-
* नन्विति * ननु घञा भावनातो धात्वर्थस्य निष्कृष्टत्वात्कथं
ोपादानमित्याशङ्क्यैकशब्दोपात्तयोः शुद्धाभिधानलक्षणनिष्क-
ात्सिद्धरूपाभिधानलक्षणो निष्कर्षो वाच्यः। भावनाया अपि
रूपेणाभिधानोपपत्तेरपरिहार्यं पौनरुक्त्यमिति सूचयितुं व्या-
मानं इति वक्तव्ये निष्कृष्टमित्युक्तम्। तृतीयान्तेन करणात्मना
र्थस्य निष्कृष्टत्वाद्भावनायाश्च क्रियात्वेन करणत्वायोगाद्धात्व-
धातुना विवक्षित्वा शब्दान्तरेण भावनारूपार्थव्याख्या
परिहरति * नैष दोष इति * सामान्यविशेषशब्दयोरवच्छे- ३४८।
छेदकपरत्वं विशेषणभावाच्च यागादयो भावनाविशेषा इत्यत्र
व वक्ष्यते एवं प्रौढ्या धातुमात्रवाच्यत्वमुपपाद्य केवलयोर्धा-
पयोर्व्यभिचाराद्धात्वनुगृहीतेन प्रत्ययेन प्रत्ययानुगृहीतेन वा
उभाभ्यां वा परस्परानुगृहीताभ्यां भावनोच्यत इत्यपि
ाक्यमिति यदुपक्रमे ऽभिहितं तदुपपादयति *अथ वेति* कर-

णांशस्य धात्वर्थस्य कर्तृसंख्यादीनां चैकवाच्यत्वे ऽपि भावनासमुदायवाच्यत्वाविरोध इत्याशयः। अस्मिन्पक्षे यज्याद्यर्थश्चातस्यतःशब्देन धातुप्रत्ययसमुदायं परामृश्यातःसमुदायाद्यज्यादित्वंशस्य चार्थो ऽवगम्यते समुदायार्थश्च भावनेति भाष्यं व्याख्येयं प्रकृतसूत्रपर्यालोचनयाप्येतत्पक्षद्वयं प्रतिभातीत्याह * तथा चेक्रियत इत्यस्मिन्नर्थे करोतेर्मनिन्प्रत्ययस्मृतेः कर्मशब्दस्यानुष्ठेयत्वाद्धात्वर्थानवच्छिन्नायाश्च भावनाया अनुष्ठेयत्वाद्धात्वर्थस्यैवानुष्ठेयत्वेन कर्मशब्दवाच्यत्वात्कर्मशब्दशब्देन धातून् विवक्षित्वा तत्सामानाधिकरण्याद्भावार्थता तेषामेवाश्रितेत्यर्थः। समुदायवाच्यत्वपक्षे भावार्थानां धातुप्रत्ययसमुदायानां धात्वंशेन कर्मशब्देन सामानाधिकरण्यं प्रत्ययस्य तु भावार्थत्वेन कथं चित् सामानाधिकरण्यमित्याशयः। नन्वेवं सति सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति इत्यादिना कस्मात्प्रत्ययवाच्यतोक्तेत्याशङ्क्याह * शास्त्विति * इहैव तावद्यज्याद्यर्थश्चातो यजेतेति पदादवगम्यते भावयेदिति चेति धातुवाच्यादर्थाद्भेदेन भावनावगमाभिधानाद्धातुमात्रस्य चानिर्दिष्टस्यातःशब्देन परामर्शानुपपत्तेस्तन्मात्रपरामर्शे यागादिश्चातो ऽवगम्यते इति वक्तव्यत्वात्प्रत्ययार्थत्वाभिप्रायागवशब्दान्तराधिकरणे च यजेतेत्यस्य पूर्वो भागो यजत्यर्थं ब्रवीति उत्तरो भागो भावयेदिति इत्यादिभाष्ये परो भागो भावनावचन इत्यत्र च स्पष्टप्रत्ययवाच्यत्वाभिधानात्सामानाधिकरण्यस्य चाख्यातपदरूपाः शब्दाः प्रत्ययांशेन भावार्थाः धात्वंशेन कर्मशब्दा इत्येधातव एव भावनाविशेषणभूतस्वार्थवाचित्वेन भावनाप्रयोजनत्वाद्भावार्था इत्येवं वोपपत्तेः। प्रत्ययमात्रार्थता शास्त्रकाराणामभिप्रेतेत्याशयः। प्रत्ययार्थत्वमुपपादयितुमुपक्रमते * तत्रेति * भावप्रधानमाख्यातमिति नैरुक्तिकस्मृतेर्णिजन्ताद्भवतेरच्प्रत्यये कृते भावशब्दव्युत्पत्तेर्भावनाप्राधान्यविषयत्वावसायात्प्राधान्याभावे च कृदन्तवन्निरपेक्षस्य कारकान्वयायोगापत्तेराख्यातेभ्यश्च भावनाप्राधान्यावगतेः। सर्वस्य सम्वेद्यत्वान्न तावत्प्राधान्ये विप्रतिपत्तुं शक्यम्। प्रकृत्यर्थत्वे च सति विशेषणत्वापत्तेः प्राधान्याभावप्रसङ्गात्प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येनेति प्रत्ययार्थप्राधान्यस्मृतेश्च कर्तृसंख्यादेः प्रत्ययार्थस्य प्राधान्याभावात्प्रत्ययार्थः प्रधानमेवेति नियमायोगे ऽपि प्रत्ययार्थ एव प्रधानमिति नियमोपपत्तेर्नामस्वपि च कृत्तद्धितान्तेषु कारकविभक्त्यन्तेषु च प्राधान्यस्य प्रत्ययार्थत्वाव्यभिचारात्सत्त्वप्रधानानि नामानि इति

तेश्च लिङ्गसंख्यासम्बन्धार्हत्वाविषयतया व्याख्यानोपपत्तेः। प्रा-
ादिकार्थप्राधान्यपरत्वे ऽपि वा प्रतीत्यनुसारात्प्रथमान्तनामवि-
तया व्याख्यानोपपत्तेः। प्रातिपदिकार्थप्राधान्यस्य प्रत्ययार्थत्वव्य-
ारानापादकत्वात्प्राधान्येन भावनायाः प्रत्ययार्थतावसीयतइ-
ायः। प्रकृत्यर्थस्य विशेषणत्वोपपादनार्थं पूर्वार्द्धं प्रत्ययार्थवि-
णीभूतस्यार्थाभिधानेन प्रकृतेः प्रत्ययार्थपरत्वस्य विवक्षितत्वात्
कतात्पर्यं व्याचष्टे * यद्यपीति * तदागमन्यायेनापि भावना-
प्रत्ययार्थतावसीयतइत्याह * तथेति * नन्वन्वयव्यतिरेका-
निष्कृष्टे ऽर्थे नियम्यतइत्यन्वयव्यतिरेकैकशरणत्वान्निष्कृष्टार्थ-
यशक्तिनियमस्य धातुव्यतिरेकेण चाख्याताभावादिह तन्मात्रा-
व्यतिरेकानुपपत्तेः कथं तन्मात्रवाच्यत्वानिर्णय इत्याशङ्क्याह
केवलमिति * धात्वपरित्यागे ऽपि प्रत्ययश्रवणकाले धातुश्र-
भावे ऽपि भावनाप्रतीतेर्धातुश्रवणकाले च प्रत्ययश्रवणाभावे
तीतेः शब्दवत्तूपलभ्यते न तदागमे हि तद् दृश्यते तस्य
यथान्येषामिति चातुर्थन्यायेन निर्णयो भविष्यती-
ायः। यत्तु कृदन्तधातुवदस्त्यादिपरस्य प्रत्ययस्या-
भावनाव्यभिचारात्तद्वाचित्वं न सम्भवतीत्युक्तं तद्-
षणपूर्वकं परिहरति * यत्त्विति * अयमाशयः पचतीत्या-
प्रतीयमानायाः भावनायाः धात्वर्थेन स्वनिष्पादकतया लक्ष्य-
त्वे गुणत्वापत्तेः प्राधान्यप्रतीतिविरोधापाताद्वाच्यत्वं तावद्-
ाङ्गीकार्यं तच्च व्यभिचारात्प्रत्ययस्यावाचकत्वे धातुसमुदाययो-
ाचकत्वापत्तेर्विरुध्येत समुदायार्थत्वपक्षे ऽपि हि धातुमात्रस्या-
ासाहित्यात्मकः समुदायो भावनावाची स्यात्पच्यादिधातुवि-
र वा तत्र धातुविशेषस्य शुद्धस्यापि अव्यभिचारोपपत्तेर्द्वयो-
कत्वकल्पनस्यान्याय्यत्वाच्छुद्धधातुवाच्यत्वस्य प्राधान्यविरो-
ाभ्युपगमे प्राधान्यस्य शुद्धप्रत्ययार्थत्वेन कारकविभक्तिवाच्येषु
कषु व्याप्तेः। शुद्धप्रत्ययार्थत्वस्यैव न्याय्यत्वापत्तेर्धातुमात्राख्या-
दायार्थताभ्युपगन्तव्या सा च व्यभिचाराविशेषान्न युक्तेति
ये ऽपि यत्र पचतीत्यादौ भावना प्रतीयते तत्रैव वाच्यताङ्गी-
तत्र चोक्तरीत्या प्रत्ययार्थतैव निश्चीयतइति। नन्वेवं सति
ायाः सार्वत्रिकं प्रत्ययार्थत्वं न सिध्यतीत्याशङ्क्याह * अन्य-
ाति * प्रयोजकव्यापारस्य भावनात्वात् अस्त्याद्यर्थकर्तुश्चा-
त्वेन प्रयोजकत्वायोगात् भावनानुपपत्तेरसत्याश्च कस्य वा-
विचाराविषयत्वात्प्रत्ययस्य भावनावाचित्वाभावे ऽपि प्रकृ-

त्यनुग्रहार्थत्वेन कर्तृसंख्याद्यभिधानार्थत्वेन वा टाबादेरिव वाचिनः खट्वादौ स्त्रीत्वाभावेन तद्वाचित्वाभावे ऽप्यर्थवत्त्वे सत्यानर्थक्यपरिहारायापि वाच्यानाकाङ्क्षणाद्यत्र प्रतीयते तत्र त्ययार्थत्वं विचार्यते तत्र च सार्वत्रिकतास्त्येवेत्याशयः । सति व्यभिचारात्प्रत्ययस्य भावनावाचिता न युक्तेत्याशङ्क्याह चिदिति *

नान्वयव्यतिरेकाभ्यां त्वपूर्वो ऽर्थो ऽवगम्यते ।
सङ्कीर्णो ऽवगते त्वर्थे ताभ्यां शक्तिर्नियम्यते ॥

तेनानेकात्मकाच्छब्दादनेकार्थावबोधने सिद्धे यदागमे ऽर्थः स तस्येत्यवधार्यते इत्यनेनानेकशब्दोच्चारणादने प्रतीतौ कस्य शब्दस्य को ऽर्थ इति विवेकमात्रस्य तदागम यात्मकान्वयव्यतिरेकाधीनत्वादस्त्यादौ च भावनाप्रतीत्य कस्यासावर्थ इति विवेकानाकाङ्क्षणात्कूपयूपसूपादिवद्व्यभि ऽपि यत्रानेकार्थप्रतीतिस्तत्र तदागमन्यायाविघाताञ्च कश्चि प इत्युत्तरमुक्तमित्यर्थः । प्रौढ्या ऽस्त्यादिना परस्पर यस्य भावनावाचित्वं वक्तुमुपक्रमते * अथ वेति * प प्रश्नपूर्वकमुपपादयति * कुत इति * भाव्यं विना भावनानुपप माशङ्क्य भाव्यान्तराभावे ऽपि कर्तैव भाव्यो भविष्यतीत्युक्ते थमेकस्यैव कर्तृकर्मतेत्याशङ्कानिरासार्थांशशब्दः घटो भवतीत्यु माने घटे प्रयोगात्तस्यां चावस्थायां पूर्वापरीभूतस्य घटस्य केन देशेन सिद्धत्वात्केन चित्साध्यत्वात्सिद्धैः कर्त्तुर्घटस्यांशे सम भाव्यकर्त्रंशविषया भावनास्त्येवेत्यंशशब्दात्परां सप्तमीमधिकर कर्मरूपविषयपरतयावसेयं व्याख्येयम् । नन्वेवं सति तत्र करो सामानाधिकरण्यं कस्मान्न भवतीत्याशङ्क्योत्तरार्द्धं सिद्धासि नां घटावयवानामत्यन्तभेदाभावादन्यत्र कर्तृव्यतिरिक्ते भाव्ये त्वाभावाद्व्यतिरिक्तभाव्यनिष्ठत्वाभावात्करोत्यर्थभावनारूपेणा न प्रकाशते न प्रतिभातीत्यर्थः । केन चिद्देशेन सिद्धो घ ऽशान्तरं करोतीत्यपि विवक्षितुं शक्यत्वात्प्रत्युक्तम् । कथं चित्करोत
१ र्थरूपप्रतीतावपि प्रकर्षेण न प्रतीयत इत्यर्थः । अनुपलब्धिविरोधाश निरासार्थत्वेनोत्तरार्द्धव्याख्यानपूर्वकम् श्लोकं व्याचष्टे * यद्य ति * प्रशब्दव्याख्यानाय * अतीवेत्युक्तम् * अंशांशिनोरत्यन्त दाभावात् * आत्मानमित्युक्तम् * अंशत्रयं विना भावनाया नैराक क्ष्याभावाद्भाव्यांशसूचितौ करणेतिकर्तव्यतांशौ दर्शयितुं निरन्तरपू क्षणावयवोत्पत्तेः करणत्वं व्यवहितावयवोत्पत्तेश्चेतिकर्तव्यतात्व

। ननु घटो भवतीति वाक्ये कथमंशत्रयप्रतीतिरित्याशङ्क्य तत्र
गे त्रयो ऽप्यंशा धातूपात्तेन भवनेन * पूर्यन्तइत्युक्तम् * प्रत्य-
त्ताया भावनाया भाव्यापेक्षायां घटस्य भवतिपदात् भवितृत्वा-
र्भाव्यांशे निवेशार्हत्वाद्धातूपात्तस्य च भवनस्य धात्वर्थान्तर-
करणेतिकर्त्तव्यतांशान्वयात् घटः स्वभवनेन करणेतिकर्त्तव्य-
पेणात्मानं भवनं भावयतीत्यर्थो भवतीत्याशयः । ननु व्यापा-
रासम्भवे ऽप्येकस्य भवनस्यानेकांशपूरकत्वं न युक्तमित्याशङ्क्य
कर्तृभूतावयवभेदेन भवनभेदं सूचयितुं केचिदवयवाः प्रयुज्य-
: चित्प्रयोजका इति श्लोकगतांशशब्दार्थे व्याख्याते के प्रयो-
के प्रयोजका इति व्यवस्थापेक्षायां भवनं कुर्वतामुत्तरावयवा-
्रयोज्यत्वोक्त्या भवनस्य प्रयोज्यव्यापारत्वेन भाव्यांशपूरकता
भवनानां च पूर्वावयवानां प्रयोजकत्वोक्त्या सिद्धत्वेन करणे-
र्तव्यतांशपूरकतोपपादिता अवस्थाविशेषाभिप्रायौ चेमावंशाव-
ब्दौ । घटादिर्हि मृत्पिण्डादेरुत्पद्यमानो घटादिशब्दवाच्यपृथु-
राद्याकारात्मकावस्थाविशेषात्प्रागवस्थान्तराणि अनुभूय घटा-
दवाच्यावस्थाविशेषरूपेणोत्पत्तेः पूर्वावस्थाभिर्भाव्यः पूर्वा-
ाश्च तत्साधनत्वाद्यथार्हं करणेतिकर्त्तव्यतात्वेन विव-
शक्यन्ते घटशब्दवाच्यस्य त्वस्यैवैकस्यावस्थाविशेषस्य प्रयोज्यत्वे
ततः प्राचीनानामप्युत्तरोत्तरावस्थानां पूर्वपूर्वावस्थाहेतुकत्वं
ार्थं सूचयितुम् अवयवा इति बहुवचनम् । ननु सिद्धभवनानां
यवानां प्रयोजकत्वेनाभिमतानामसिद्धभवनोत्तरावयवोत्पत्तौ
ः को ऽसौ व्यापारो यो भावनेत्युच्यतइत्याशङ्क्य * सिद्धे-
् * सिद्धभवनानां नियतपूर्वक्षणवर्त्तित्वेनासिद्धभवनो-
त्वावगमात् व्यापारं च विनोत्पादकत्वायोगाद्भवनाख्यस्या-
ष्ठत्वेनान्योत्पत्त्यननुकूलत्वादवश्यं सिद्धभवनप्रयोजकावय-
ारत्वात्तत्कृत्यसिद्धभवनप्रयोज्यावयवनिष्ठत्वाच्च तद्वृत्तिस-
र्थानुरञ्जनसहत्वरूपं व्यापारसामान्यमभ्युपगन्तव्यम् । तच्च
निष्ठभावकव्यापारत्वेन भाव्यभावकोभयसम्पर्काद्भावनेत्यु-
त्यर्थः । भवतिपराख्यातस्य भावनावाचित्वोपपादनेन तत्प-
न्यादिपदस्य सिद्धमपि भावनावाचित्वं भूसत्तायामिति स्मृतेः
व्यद्वितीयभावविकारवाचित्वेन भवतेराद्यभावविकारवाचि-
दिपर्यायत्वं नास्तीति भ्रमप्रसङ्गात्तद्व्यावृत्त्यर्थं लोकप्रयोगानु-
् भवतेराद्यभावविकारवाचित्वेन जन्यादिपर्यायत्वं सूच-

भवन्तमिति २ पु० पा० ।

विमुक्तिविदिशति * एतेनेति * आदिशब्देनोत्पद्यतिपरा
ग्रहणम् । ननु भवतेरुत्पत्त्याख्यप्रथमभावविकारवाचित्वेन
वस्तुनि प्रयोगाद्भावयान्तरायोगे ऽपि आत्मनो[1] भाव्यत्वो
भावनात्मकत्वे ऽपि अस्तेः सत्ताख्यद्वितीयभावविकारवा
निष्पन्ने वस्तुनि प्रयोगादात्मनो भाव्यत्वानुपपत्तेः । स्वनिष्ठ
भाव्यान्तरायोगात्कथं तत्र भावनावाचित्वं स्यादित्याशङ्क्याह
भिः पुनरिति * लभ्यमानसत्ताकत्वावस्थैवास्तेर्वाच्या न ल
त्ताकत्वावस्था तस्याविपरिणामादिभावविकारान्तरेष्वप्यनुवृ
तीयभावविकारवाचित्वाभावापत्तेस्तस्यां चावस्थायामलब्धस
त्माद्युक्तेवात्मनो भाव्यतेत्याशयसूचनाय * उपरितनीमित्युक्त
भवनानन्तरं भवितृत्वायोगात्कथं भाव्यतेत्याशङ्क्य * सत्त
कम् * सिद्धभवनस्य सद्रूपेणापि कथं भवितृतेत्याशङ्क्य क
विकरणार्थश्चेत्यधिकरणे ल्युडुत्पत्तेः । भवनाश्रयवाचिना भ
केन भवनविशिष्टत्वाभिधानादात्मना स्वरूपेण सिद्धभवन
सत्ताकरूपेण भवनकर्तृता * युक्तेत्युक्तम् * आत्मना भवनं
यद्भावादिना वा भवनविशिष्टत्वाभिधानं करोतिकर्तव्यताका
भानुपात्तायाः सत्ताया एव करोतिकर्तव्यतांशपूरकत्वं वक्तुं
सत्त्वमवगन्तव्यम् । सत्तया भवदित्यनुपात्तभवनविशेषणत्वं स
न युक्तमित्याशङ्क्य भवनानन्तर्यात्सत्ताया एव भवनलक्षणार्थ
भवनार्थलक्षणार्थो भवति प्रयुक्तः कथं भवतिवाच्यावस्था
र्थमस्तिवाच्यायाः अवस्थाया इत्याशङ्कातिदेशसूचितं जन्या
र्थत्वं विवृतम् । ननु घटाकारावस्थाविशेषोत्पत्तेरतदाकारावस्थ
उत्पत्तिसापेक्षत्वात्प्रयोज्यप्रयोजकव्यापारभेदकल्पना युक्ता स
यास्त्ववस्थान्तरानपेक्षत्वेन एवंविधभेदकल्पना न युक्तेत्याशङ्क्
* तत्रापि त्विति * उत्पत्त्याख्याद्यभावविकारानन्तरभावित्व
तीयभावविकाररूपायाः सत्तायास्तस्याश्चावस्थाकालभेदेन भेदा
निष्पादिसत्ताभेदस्यावश्यम्भावात्सिद्धसत्ताकाः पूर्वे ऽवयवा
योजकाः सत्ताभवनव्यापृताश्चासिद्धसत्ताका उत्तरे ऽवयवाः
योज्याः । सिद्धसत्ताकासिद्धसत्ताकवर्तित्वसामान्यं भावना
व्यापार इति कल्पनानुसर्तव्येत्यर्थः । ननु वस्तुत्वसामान्यरूप
सत्तायाः स्वरूपेणैकत्वे ऽपि कालकृतो भेदो ऽनेनोक्त इति शङ्
यम् । तस्या धातुवाच्यत्वाभावान्निष्पन्ने वस्तुनि इदानीमस्तीति प्र
गस्य कालसंसर्गविषयत्वेन वस्तुस्वरूपविषयत्वाभावात् पूर्वक

१ भावनाभाव्यतेति २ पु० पा० ।

तासम्बन्धस्य चोत्तरकालसत्तासम्बन्धं प्रति हेतुत्वाभावेन प्र-
जकत्वव्यवस्थानुपयोगितया इह कालसंसर्गस्यावक्तव्यत्वात्काल-
ो भेदो येषां पूर्वोत्तरावयवानां तेषां या सत्ता या च्चोभयवर्त्तिनी
मान्यसत्ता तद्रूपेणेति विग्रहः । नन्वेवं सत्याग्नेयो ऽष्टाकपालो
तीत्यादौ भवत्यर्थावच्छिन्नायाः पुरोडाशभावनाया विधेयत्वोप-
ः पुरुषव्यापारकल्पनानर्थिका स्यादित्याशङ्क्याह * सत्यामपि
ति * निष्पन्नकर्तृविषयत्वोपपादनार्थं चेतनग्रहणम् । ननु भव-
यर्थे ऽपि विधिदर्शनात्कथं तत्र विधिप्रतिषेधयोरसम्भव इत्या-
ते * स्यादेतदिति * स्वप्रयोजकसिद्धकर्तृव्यापारलक्षणार्थ-
ात्र भवत्याद्यर्थस्य विधिविषयत्वं युक्तमिति परिहरति * स-
ोति * भवतिनास्तिरप्युपलक्षितः नन्वृत्विक्त्वस्यासिद्धत्वेन
वनस्य सिद्धपुरुषव्यापारलक्षणार्थतास्तु रथन्तरादेस्तु सिद्ध-
तद्भवनस्य विधिविषयत्वोपपत्तेः पुरुषव्यापारलक्षणार्थत्वं न स-
ातीत्याशङ्क्याह * तथेति * भवतीति श्रुत्या भवनस्य विधेस-
त्र प्रतीयमाने ऽप्यचेतनव्यापारे विध्यसम्भवाद्विधेये भावना
णेत्याशयः । ननु चेतनगतस्य तर्हि भवनस्य वि-
षयत्वं भविष्यतीत्याशङ्क्याह * यत्र त्विति * ति-
र्थवाचित्वात्स्मृतावपि इह भवेदिति देशविशेषाश्रितस-
न्धानेन गतिनिवृत्त्याख्यातिष्ठत्यर्थवाचित्वसम्पत्तेरेवमुक्तामि-
कः स्यादिति प्रयोगे ऽस्तेरपि तिष्ठत्यर्थवाचितैवमूहितव्या
त्विजा भवितव्यमित्यादावृत्विक्त्वादिभवितृव्यतिरिक्तभावयि-
षव्यापाररूपभावनासद्भावे भवितृव्यापारस्य भावनाभ्युपगमो
: स्यादित्याशङ्क्याह * तेनेति * विध्यादिशब्दोपात्ते च प्रैषादौ ३५०।१
ये च भवितृव्यापारव्यतिरिक्ताख्यातवाच्यभावनासद्भावे ऽपि
द्युपदेशेष्वभावान्न भवितृव्यापारस्य भावनात्वाभ्युपगमस्य वै-
ापत्तिरित्याशयः । ननु श्रुताद्युपदेशे ऽपि आत्मानमभावय-
ाति भावयिष्यतीति वा व्यवहारादर्शनाद्भव्यर्थो भवितृव्यापा-
भावनात्वाभ्युपगमः स्यादित्याशङ्क्य *अपारमार्थिकमित्युक्तम *
द्वारानुपात्यापि भवितृव्यापारस्य भावनात्वमाख्यातार्थवत्त्वाय
भ्युपगतमित्याशयः । एतच्च सिद्धभवनानामवयवानां भावना-
यापारो भवतिपदेन भवनं करोतीत्यभिधानादुच्यते ऽसिद्धभव-
वव्यापारस्तु धातुमात्रेणोच्यतइत्यङ्गीकृत्य प्रयोज्यनिष्ठप्रयोज-
पाररूपभावनावाचित्वमाख्यातस्योक्तम् । यदा प्रतीत्यनुसारात्स-
्य भ्रमच्चक्रोपस्थानप्रभृतेर्घटाकारनिष्पत्तिपर्यन्तस्य व्यापारस्य

वाचको धातुरिष्यते तदा प्रयोज्यप्रयोजकव्यापारभेदा
भावोक्तव्यापारस्य च कर्त्तुरेकत्वेन प्रयोज्यप्रयोजकत्वभेदा
त्वेन च घटस्य प्रयोजकत्वायोगादवयवलक्षणायां च
भावात्प्रयोजकव्यापाररूपभावनानुपपत्तेर्भूताद्युपदेशे ऽपि
दिमात्रमाख्यातेनोच्यते न भावनेत्याह * भूतादीति *
मानमत्ताकत्वावस्थावाचित्वात्तस्याश्चोत्पत्तिवद् तदाकारा
मानपक्षत्वेनावयवशब्दाभिलप्यावस्थाभेदायोगे ऽप्युत्पत्त्यन
न्तरं त्परत्यवस्थाकालभेदेन भेदावश्यम्भावापत्तिसूचनार्थ
गम् । यथा प्रतीत्यनारूढत्वादवयवकालव्यतिरिक्तार्थान्तर
स्यानाश्रयणं तथावयवकालकृतस्यापीत्यादिशब्देन सूचितम् ।
चैकस्यैव प्रयोज्यव्यापारता प्रयोजकव्यापारता च विरु
एवं तर्हि व्यभिचारो दुर्वारः स्यादित्याशङ्क्याह * न चेति
धातूनां भावनावाचित्वमुक्तं तदनुभाषणपूर्वकं दूषयति *
ति * धात्वश्रवणे ऽप्योदने पच्यमाने दृष्टे पक्तृव्यापाररू
प्रतीतेर्धातुश्रवणे ऽपि च मानसादपचाराद्धात्वर्थाप्रतीत
धात्वर्थाव्यभिचारद्वारा धातूनामव्यभिचारो न स्वत इत्यर्थ
त्वर्थाव्यभिचारे च सति तत एव प्रतीत्युपपत्तेः । सत्यपि
भिचारे तद्वाच्यत्वकल्पना न युक्तेत्याह * तैरेव त्विति * च
ऽनुशब्दः यदि चाख्यातवत् स्वप्राधान्येन कृदन्तेषु भावना
न ततो धात्वर्थप्रतीतिनिरपेक्षभावनाप्रतीत्युपपत्तेर्वाच्यत्वं
धात्वर्थनिष्पादकत्वेन तु तद्गुणत्वप्रतीतेर्धात्वर्थप्रतीतिसा
न साक्षाद्वाच्यत्वकल्पना युक्तेत्याह * तथा हीति * देवद
दिकारकाविभक्तिश्रवणे यथाकारकसिद्ध्यर्थत्वेन तद्गुणतया
गम्यमानाया भावनाया न कारकविभक्तिवाच्यत्वं कल्पितं त
त्वर्थसिद्ध्यर्थत्वेनाप्यवगम्यमानाया न धातुवाच्यत्वं कल्पनी
दृष्टान्तार्थं कारकग्रहणम् । एतदेव कर्त्रधिकरणसिद्धदृष्टान्तपू
वृणोति * यथैवेति * नन्वर्थादवगम्यमानाया भावनाया अश
ब्दत्वात्सामानाधिकरण्यं पदान्तरोपात्तकारकान्वयश्च न
त्याशङ्क्याह * गम्यमानेति * पक्तव्यमित्यादेर्भावनानपेक्ष
कर्त्तव्यमित्यादिप्रश्नानुरूप्यायोगादुखायामोदनस्य काष्ठैर्दे
पाक इत्यादौ च क्रियत इत्याद्याख्यातानपेक्षत्वे पाकभावनेत
ऽन्वयाप्रतीतेः । निष्पाद्यरूपभावनावगतिसापेक्षत्वादन्वयस्य
नायां तात्पर्यावगतेरवाच्यत्वे ऽपि भावनायास्तात्पर्यवृत्त्या
त्याद्युक्तं सामानाधिकरण्यादीत्याशयः । गम्यमानाया अपि भ

नश्चाख्यातस्यापेक्षया तात्पर्यावगतिरिति तात्पर्यसूचना-
गम्यमानस्यापि तात्पर्यवृत्त्या शाब्दत्वात्सामानाधिक-
ौ कर्त्रधिकरणसिद्धदृष्टान्ताभिधानं तथाभूतयेत्यपेक्ष्य-
ात्पर्यवृत्त्या शाब्दीभूतयेत्यर्थः भावनया कारकाणामन्व-
पे धात्वर्थेनैव गम्यमानभावनान्वयापादितसाध्यभावेना-
यतीति प्रौढ्या परिहारान्तरमाह * अथ चेति * धात्व-
त्वसिद्ध्यर्थभावनायास्तन्निष्पादकत्वेनोपसर्जनतोक्ता। ननु
क्रियारूपत्वात्कथं कारकान्वयो ऽत आह * स एव
याया अपि निष्पन्नायाः कारकानपेक्षत्वात् साध्यत्वप्र-
पेक्षावगतेरक्रियारूपस्यापि च धात्वर्थस्य क्रियान्वयेन
र्युक्तः कारकान्वय इत्याशयः। नन्वाख्यातश्रवणे तर्हि
न्वयाभ्युपगमो ऽत आह * भावनापि चेति * गुणस्येव
विना कारकाणां धात्वर्थनिष्पादनं विना भावनान्वया-
सिद्ध्यर्थत्वेनैव भावनया ग्रहणादाख्याताश्रवणे भाव-
ऽपि धात्वर्थान्वयो गौररुणेत्यत्र गुणस्य द्रव्यवद्विरु-
। कारकान्वयान्यथानुपपत्त्या कृदन्तानां भावनानभिधा-
वैषां भावनापरतोक्ता तद्विशेषाणां तु कृत्यानां प्रैषवा-
पपत्त्यापि भावनापरतावगम्यतइत्याह * कृत्यानां
देव प्रश्नपूर्वकमुपपादयति * कुत इति * प्रैषाणां पुं-
त्वे ऽपि धात्वर्थस्यैव पुंव्यापारत्वोपपत्तेः किं भाव-
ः तस्य चेत्युक्तम् * पुंसः को व्यापार इत्यपेक्षायां
ययमित्यर्थः। एवमपि प्राधान्याप्रतीतेः साध्यसाध-
शत्रयवशीकारासामर्थ्यात्कथमंशत्रयपरिपूर्णतेत्याश-
ाकेत्युक्तम्। अंशत्रयावच्छेदं विना ऽनुष्ठेयत्वाभावादे-
तेपात्तदूबलेनैव प्राधान्यमपि कथं चिद्भविष्यतीत्याश-
पुंव्यापारविषयत्वोपपादनपूर्वकम् श्लोकं व्याचष्टे *
णां भावनाविषयत्वोपपादनस्य प्रकृतभावनातात्पर्यो-
* ते यदीति * ननु वैदिकानां कृत्यानां पुरुषाशयावि- ३५१।१
ायोगाद्विधौ चास्मृतेरनुष्ठापकत्वाभावात् कथं
ाङ्क्याह * यावांश्चेति * प्राप्तविषयत्वप्रवर्त्तकत्व-
प्रवाचिनां कृत्यानां ब्राह्मणे प्राप्तविषयत्वाभा-
सम्भवे ऽपि प्रवर्त्तनात्मकत्वे तदेकदेशे ऽपि लक्षणया
ाप्तविषयप्रवर्त्तनस्य च विधित्वादस्मृतमपि विधाय-
त्याशयः। मन्त्रगतेषु कृत्येषु प्राप्तविषयत्वोपपत्तेर्ब्राह्मण-

चित्वं निरसनीयम्। संयोगविभागविशेषलाभाय च
गिनोश्चाभिधानापत्तेरतिगौरवं यज्यादेश्च संयोग-
ायोगात् संयोगविभागात्मकधात्वर्थवचनमव्यापकं
त्मकस्वस्वामिविभागयज्यर्थाभ्युपगमे ऽपि ज्ञाना-
चेत्संयोगविभागानिरूपणादव्याप्त्यपरिहारः भवति
दात्तु विक्लिदिपचत्योरिव नियतं प्रयोज्यप्रयोज-
वामिति वार्त्तिकाद्व्यापारस्यैव धात्वर्थतावसीयते
च न प्रत्ययाविषयतयातद्वार्त्तिकं व्याख्यातुं शक्यम्
त्त्वाभावात्प्रयोज्यकर्तृकैकान्तव्यापारप्रतिपादकाः
युज्येत संयोगविभागात्मकत्वे च धात्वर्थस्याव्यापार-
नादिभिराश्रयत्वेन ग्रहणं न युज्यते धात्वर्थावच्छि-
पत्वाश्रयत्वाभ्युपगमे गुणफलसम्बन्धाविधौ वा-
ताश्रयापेक्षणाद्भावनाभेदमुपपत्तेर्गुणकामेष्वाश्रयैः
ानविध्याविचारः संख्याधिकरणे करिष्यमाणो न
पत्वे ऽपि करोत्यर्थक्रियारूपत्वाभावाक्रियारूपायां
त्वाविरोधः।

रूपधात्वर्थादतो भेदमपश्यताम् ॥
रूपधात्वर्थवर्णनं भेदतृष्णया ॥ १ ॥
रूपधात्वर्थात् सान्या स्पन्दात्मिका हि किम् ॥
मा द्विरूपा वा सर्वथापि न युज्यते ॥ २ ॥
भावना चेत् स्यान्न रथो गच्छतीति हि ॥
स्यात्प्रयत्नो हि चेतनेष्वेव सम्भवेत् ॥ ३ ॥
र भावनात्वे तु यजेतेति न चेतने ॥
ारणरूपत्वे शब्दो वक्तीत्यसम्भवः ॥ ४ ॥
स्पन्दयत्नौ हि विभुत्वाच्चेतनत्वतः ॥
तिधात्वर्थसामान्यं भावना पतेत् ॥ ५ ॥
हेतुभूतमन्यत्तन्नोपलभ्यते ॥
ादनं चान्यद्धात्वर्थान्नैव दृश्यते ॥ ६ ॥
दानुकूलत्वे भावनैकं च तद्यदा ॥
ावनाभेदो भवेद्धात्वर्थभेदतः ॥ ७ ॥
र्थमन्यत्वं न च तस्यावधार्यते ॥
दमात्रेण फलभेदप्रसिद्धितः ॥ ८ ॥
ण येन स्याद्धात्वर्थः फलसाधनम् ॥
भावनान्यश्च प्रतिधात्वर्थमिष्यते ॥ ९ ॥

तस्य धात्वर्थधर्मत्वे पुम्धर्मत्वं विरुध्यते ॥
पुम्धर्मस्तु प्रयत्नः स्यात् स च पूर्वं निराकृतः ॥ १०
किं च धात्वर्थनिर्वृत्तिपर्यन्तत्वात् सभावना ॥
कथं धात्वर्थसाध्या हि सेष्यतेफलसाधनम् ॥ ११ ।
अथ धात्वर्थजन्योऽपि शक्त्यात्मा पुरुषाश्रितः ॥
प्रतिधात्वर्थमन्योऽसौ नापूर्वादतिरिच्यते ॥ १२ ॥
तस्याव्यापाररूपत्वाद्भावनात्वं न चेष्यते ॥
व्यापारत्वेऽपि करणव्यापारत्वान्न भावना ॥ १३ ।
तत्कर्तृव्यापृतिः सा हि प्रत्ययार्थश्च नत्वदः ॥

अतो धात्वर्थातिरिक्तभावनानुपपत्तेः प्रत्ययार्थता न
तात्पर्यार्थः । परिहरति * नैष इति * व्यापारत्वाविशेषाद्धात्वर्थ
नयोर्भेदानवभासेऽपि पाकं करोति यागं करोतीति भिन्नेषु धा
करोत्यर्थानुवृत्तेर्धात्वर्थाद्भेदोऽध्यवसीयत इत्यर्थः । श्लोकं व
* सर्वत्र हीति * सर्वधात्वर्थसाधारणस्य व्यापाररूपस्य कर
स्याख्यातपदांशप्रत्ययवेलायां प्रतीतिसूचनार्थांशशब्दः विक्ले
द्देशेन क्रियमाणस्याधिश्रयणादेः पचिवाच्यत्वं वक्तुं विक्लि
णां समासस्थायाः षष्ठ्याः सम्बन्धमात्रोत्पन्नाया अपि तादर्थ
णसम्बन्धविशेषनिष्ठत्वाद्विक्लित्त्यर्था अधिश्रयणादय इति स
र्थः । आदिशब्दोपात्तस्य वा विक्लिदेर्विक्लित्तिर्वाच्या धात्व
नियतकर्तृस्थभावनातो वैलक्षण्यं वक्तुं केषांचित्कर्मस्थत्व
नायांक्ता कोऽसावधिश्रयणादिकर्तृस्थव्यापारातिरिक्तसामान
व्यापार इत्यपेक्षायामाह * तत्रेति * औदासीन्यमकुर्वत् रू
वस्था ततः प्रच्युतिः कुर्वद्रूपत्वं करोतिप्रत्ययवेद्यमन्योत्पाद
त्वं तेन रूपेण यन्निरूप्यते सा भावना इत्यर्थः । संयोगवि
दिहतोः स्पन्दादेर्धात्वर्थाद्वैलक्षण्यप्रदर्शनार्थो मात्रशब्दः अव
धातुवाच्यध्वननादिधात्वर्थानन्तरं नियमेनान्योत्पाददर्शनात्स
कृधातुवाच्येभ्यश्च गमनादिभ्योऽनन्तरमेव संयोगविभागाद्यु
त्पाद्यानाकाङ्क्षणाद्भाव्याकाङ्क्षालक्षणभाव्यनिष्ठत्वापरपर्याया
त्पादानुकूलत्वरहिताद्धात्वर्थादकुर्वद्रूपत्वलक्षणौदासीन्यप्रच्युत
त्मकत्वेनान्योत्पादनरूपत्वादनन्तरं च फलानुत्पत्तेर्भाव्यनिष्ठत
रपर्यायान्योत्पादाकाङ्क्षालक्षणान्योत्पादानुकूलत्वात् भाव
वैलक्षण्यमित्याशयः । ततश्च यथा प्रयोज्यापरपर्यायकर्मस्थस्य
क्लेदनादेर्व्यापारत्वे सत्यपि प्रयोजकापरपर्यायकर्तृव्यापारत्व
वात् न भावनात्वं तथाधिश्रयणादेः प्रयोजकव्यापारत्वे स

ऽयनिष्ठत्वाभावाच्च भावनात्वमित्याशङ्कापरिहारः सूचितो भवति
ाधिश्रयणादेः परिस्पन्दात्मकात्प्रयोजकव्यापारादन्यो भाव्यनि-
प्रयोजकव्यापारश्चेदस्ति किमिति तद्व्यतिरेकेण नोपलभ्यतइ-
ाङ्का *परिस्पन्दरूपमित्युक्तम्* भावनाया धात्वर्थेन विषयभूतेन
स्येव ज्ञेयेन निरूपितायाः अवच्छिन्नायाः कार्यभूतेन वा धात्वर्थेन
गतया निरूपितायाः कल्पितायाः निरूप्यत्वाद्धात्वर्थं विनानुप-
र्ययुक्तेति भावः । भावनावच्छेदकधात्वर्थमात्रोपलक्षणार्थः
स्पन्दशब्दः रूपशब्दस्य करणव्युत्पत्तौ परिस्पन्दो रूपमस्येति
हः । कर्मव्युत्पत्तौ वा परिस्पन्देन निरूप्यमाणमिति विग्रहः । स्व-
रस्य स्पन्दस्य ह्यात्मप्रयत्नहेतुकत्वव्याप्तेः । परशरीरे स्पन्ददर्शना-
त्नो ऽनुमीयते स्वप्रयत्नश्च मानसप्रत्यक्षवेद्यो ऽपि गमने ऽहम्प्र-
पाके ऽहम्प्रयते इति गमनादिना स्पन्देन यागे ऽहम्प्रयते ध्याने
प्रयतइति वा चलनात्मकेन यागादिना धात्वर्थेनावच्छिन्न एव
भाव्यनिष्ठप्रयोजकव्यापारत्वात्मकभावनालक्षणयोगादर्थिपुरुष-
ारत्वाच्चार्थयतइति कर्तृव्युत्पत्तिद्वारा ऽर्थयितृपुरुषव्यापारवा-
भावनाशब्दव्याच्यः सर्वेषु लङाद्याख्यातेषु गम्यते । यत्त्वस्मि-
रथो गच्छतीत्यचेतने नाख्यातं प्रयुज्यते इत्युक्तं । तत्रैवं वाच्यं
ाख्यातप्रयोगान्यथानुपपत्त्या रथादौ भावना कल्प्यते । प्रतीतिव-
ाभ्युपगम्यते न तावत् स्पन्दातिरिक्ता भावना प्रत्यक्षेण प्रतीयते
कादाचित्कत्वं स्पन्दाख्यकार्यदर्शनात्कल्प्यते इति रथवोढ्-
ेप्रयत्नात् स्पन्दमानाश्वादिशरीरसंयोगात्तदभावे ऽपि वा प-
तिबन्धकाधारसंयोगाभावसहकृताद् गुरुत्वाद्रथस्पन्दोपपत्तेः
संयोगादिसद्भावभावितया च दृष्टस्य पर्णादिपतनस्य न कार-
कल्पना युक्ता वायोस्तु स्वाभाविकस्पन्दो न शक्नोत्येव स्वका-
वेन व्यापारान्तरं कल्पयितुं स्पन्दस्य च वायुरथादेः स्पन्दनं च-
गमनं वर्त्ततइति आख्याताश्रवणे ऽपि धातुमात्रात्प्रतीतेरा-
ार्थत्वं भाव्यनिष्ठत्वाभावाच्च भावनात्वं नाभ्युपगन्तुं युक्तं
तिचलत्योश्चाकर्मकत्वात्तद्वाच्यस्य स्पन्दस्य भाव्यनिष्ठत्वमना-
मेव ततश्च वायुरथादौ स्पन्दस्य भावनात्वायोगात्तदतिरिक्त-
ारानुपलब्धेश्च प्रयत्नात्मकभावनानभ्युपगमे आख्यातस्य भा-
र्यभिचारो दुष्परिहरः स्पन्दस्य भावनात्वाभ्युपगमे ऽपि स्प-
ादिधातुनैव तदभिधानसिद्धेस्तत्परस्याख्यातस्य व्यभिचारस्त-
प्र एव स्पन्दत्यादिपराख्यातवच्च पचत्यादिपराख्यातस्यापि
वाचित्वं न युक्तं न हि पचतीत्यस्य पाके स्पन्दतइत्यर्थं के

चिद्व्याचक्षते तथा यज्यादर्थश्चातो ऽवगम्यते भावयेदिति चेत्
कीदृशी पुनराख्याताद्भावनावगम्यते इत्यपेक्षायां तथा यतेत
किं चिद्भवतीति प्रयत्नवाचिताख्यातस्य भाष्यकृता विवृता दर्शे
यकामाधिकरणे च जुहुयादिति शब्दस्यैतत्सामर्थ्यं यद्धोमविषि
प्रयत्नमाहेत्यभिधानात् जुहुयादित्यस्य होमे यतेतेत्यर्थः सूचि
भवति। प्रयत्नस्य चेच्छायोनित्वान्निष्फले चेच्छायोगाद्भाव्यनिष्ठ
धगतेर्धात्वर्थनिष्पत्तिमात्रेण च फलवत्त्वासिद्धेस्तन्निष्पत्तिमात्रेण
र्यवसानायोगेन धात्वर्थकरणकस्य प्रयत्नस्य फलसाधनत्व
घातात्प्रयत्नस्य भावनात्वे न कश्चिद्दोषः। प्रयत्नाभावे च वातरोग
ना देवदत्ते स्पन्दमाने नायं स्पन्दं करोति किं तु वातादिवशा
स्पन्दो भवतीति व्यवहारदर्शनात्प्रयत्न एव करोत्यर्थो ऽवगम्यते
थादावपि न रथः स्वयं गमनं करोति किं त्वश्वादिनास्य गमनं
यत इति व्यवहारदर्शनाद्धातुवाच्यस्पन्दातिरिक्तकरोत्यर्थभा
प्रतीत्यभावः सिद्धः । आख्यातप्रयोगान्यथानुपपत्त्या तु रथादौ
वनाकल्पने रथो भवतीत्यत्रापि सर्वदा भावनाकल्पनापत्तेः
दिकथनं ऽव्यवयवादिकृतभेदानाश्रयणे धात्वर्थमात्रं कर्तृसंख्य
ख्यातपदार्थत्वेनावधार्यन्ते न भावना न च भावनाव्यभिच
दोष इति वार्त्तिकं विरुध्यते अवयवादिकृतभेदाविवक्षायामस्त
भावनाभ्युपगमः पूर्वोत्तरवार्त्तिकपर्यालोचनया प्रौढिमात्रेणेत्
अथ वा सो ऽपि प्रयत्नाभिप्रायेण व्याख्यातुं शक्यते नित्यस्यात्म
रीरशरीरिणोरभेदविवक्षया शरीरानिष्पत्तावनिष्पत्तिव्यपदेशो
पञ्चधातून् स्वयं षष्ठ आदत्ते युगपत्प्रभुरित्यादिस्मृतिपर्यालो
या चात्मनः शरीरोत्पादनप्रयत्नावगमात् सिद्धभवनशरीर
याधिष्ठानेनात्मनासिद्धभवनान् शरीरावयवान्प्रति प्रयोजक
स्य प्रयत्नात्मिका भावना न विरुध्यते। एवं च सिद्धकर्तृक्रियाव
नीत्यपि चेतनाभिप्रायं व्याख्यातुं शक्यम् । यद्वा अर्थभावनायाश्च
मात्राश्रयत्वे ऽपि शब्दभावनायाश्चेतनाश्रयत्वायोगादुभयव्या
सिद्धमात्रग्रहणं नित्यस्यापि शब्दस्याभिव्यक्तिः सिद्धिरभिप्रेत
व्यनिष्ठप्रयोजकव्यापारत्वलक्षणयोगाच्च शब्दव्यापारस्यार्थ्या
भावनात्वं। यथैव हि इच्छायोनित्वात्प्रयत्नस्येष्यमाणभाव्यं चि
लाभायोगाद्भाव्यनिष्ठत्वं तथा लिङादिव्यापारस्यापि प्रेरणा
प्रवृत्त्याख्यभाव्यकल्पत्वेन तन्निष्ठतावसीयते। न च यथा स्पन्दा
मेव संयोगविभागोत्पत्तेराकाङ्क्षातः प्रागेवाकाङ्क्षणीयलाभे
व्यालाभनिमित्ताकाङ्क्षानुपपत्तेरन्यथा च कदाचिन्नैराकाङ्

त्तिप्रसङ्गात् स्पन्दस्य भाव्याकाङ्क्षालक्षणं भाव्यनिष्ठत्वं नास्ति । प्रेषणाया भाव्यनिष्ठत्वाभावः पुरुषप्रवृत्तेः साध्यसाधनेतिकर्तव्यतापर्यालोचना सापेक्षत्वेन प्रेरणानन्तरमनुत्पत्तेः अनेनैव न्यायेन सर्वशब्दगतस्याभिधानलक्षणस्यापि व्यापारस्यार्थप्रतिपत्त्याख्यव्यकल्पितस्य भावनात्वमनुसन्धेयं तस्या अनभिहिताया एव कार्ययोगित्वाल्लिङादियुक्तेषु वाक्येषु द्वे भावने प्रतीयेते इत्यादौ भावनाद्वयोपन्यासाविरोधः ॥

स्पन्दप्रयत्नयोरेव भावनात्वमिति भ्रमम् ।
अपनेतुं प्रसक्तानुप्रसक्त्यैतदुदीरितम् ॥
प्रयत्नव्यतिरिक्तार्थभावना तु न शक्यते ।
वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते ॥ २ ॥
स्त्रीत्वाभावे ऽपि खट्वादौ टाबादिप्रत्ययो यथा ।
प्रयुज्यते तथाख्यातं यत्नाभावे ऽप्यचेतने ॥
स्त्रीत्वादेः प्रत्ययार्थत्वं चतुर्थे वक्ष्यते स्फुटम् ।
तथा च लिङ्गमित्यत्र प्रयत्नस्य तथा भवेत् ॥
धातोरनुग्रहार्थं वा वाच्यन्तरश्रियेथ वा ।
प्रत्ययो ऽवश्यवक्तव्यस्तावता न त्ववाच्यता ॥
वोढृश्वादिगतं यत्नं रथादावुपचर्य वा ।
उपपाद्यः प्रयोगो ऽत्र मुख्यार्थानुपपत्तितः ॥
तिङ्वाच्यो हि करोत्यर्थः सामानाधिकरण्यतः ।
प्रयत्नश्च करोत्यर्थस्तदन्यानुपलम्भनात् ॥
न चौलूक्यैः प्रयत्नस्य गुणत्वपरिभाषणात् ।
अकरोत्यर्थता शङ्क्या सिद्धरूपा प्रतीतितः ॥
बुद्धीच्छाद्वेषयत्नानां शब्दज्ञैः कर्मतेष्यते ।
इत्याचार्यैश्च यत्नस्य व्यापारत्वाभिधानतः ॥
चेतनप्रेरकत्वं च विधेस्तद्विषयत्वतः ।
काष्ठाद्यप्यन्यथाकस्मान्न प्रेरयति वायुवत् ॥
विध्यर्थाज्ञानतो प्रेर्यं चेत्काष्ठादि ततः कथम् ।
सौधन्वननिषादादेरप्रेर्यस्याधिकारिताम् ॥
विधिस्त्वप्रेरयत्यत्रेत्यप्रेर्यो ज्ञाप्यते कथम् ।
विद्वद्भिर्ज्ञापनादेव प्रेर्यत्वे ऽन्योन्यसंश्रयम् ॥
धात्वर्थव्यतिरिक्तातः प्रयत्नाख्यार्थभावना ।
यजत्यादिपराख्यातवाच्यतेत्यसमञ्जसम् ॥

ननु धात्वर्थभावनयोर्द्वयोर्व्यापाररूपत्वे समत्वेनान्योन्य-

समन्वयो न स्यादित्याशङ्क्याह * ये त्विति *
पारत्वसाम्ये ऽपि भावनाया एव भाव्यनिष्ठत्वेन करोत्यर्थ
क्रियात्वाद्धात्वर्थस्य च भाव्यनिष्ठत्वाभावेन क्रियारूपत्वाद्यथा
सन्निकर्षविप्रकर्षापेक्षया करणत्वेनेतिकर्त्तव्यतात्वेन वा भावन
यः सम्भवतीत्याशयः । यथा कर्मगतस्य विक्लेदनादेः प्रयोज्य
पारस्य विक्लिद्यतस्तण्डुलान् पचतीत्यादिप्रयोगदर्शनात् व्या
त्वसाम्ये ऽपि भावनान्वयो न विरुध्यते तथा कर्तृगतस्य पा
प्रयोजकव्यापारत्वसाम्ये ऽपीत्यर्थः । एवं च तर्हि यस्य कस्य
धात्वर्थस्य यया कया चिद्भावनयान्वयः कस्मान्न स्यादित्याशङ्
रासायानुरञ्जकत्वविशेषणम् । ननु धात्वर्थविशेषाणां भावनानुर
त्वाभ्युपगमे गौः शाबलेय इतिवत् सामान्यविशेषात्मकैक
त्वापत्तेः क्रियाकरणविभागो न स्यात् इत्याशङ्क्ते * एवं तर्हि
भावनायाः प्रयत्नात्मकत्वात् धात्वर्थस्य च स्पन्दात्मकत्वाद
त्त्वात्मकत्वाभावे ऽपि भावनाया भाव्यनिष्ठत्वाद्धात्वर्थे च
भाव्यासिद्धेः स्वरूपेण धात्वर्थसाधनत्वे ऽपि भाव्यावच्छिन्न
धात्वर्थविशेषसाध्यत्वात् सामान्यरूपतोपपन्नेति परिहरति *
मिति * एतदेव प्रश्नपूर्वकमुपपादयति * कथमिति * अयमा
द्वैधीभावाद्युद्देशप्रवृत्तोद्यमनादिकर्तृव्यापारव्याप्यस्य परश्वादेः
णत्वदर्शनात् भाव्योद्देशप्रवृत्तभावनाव्याप्यत्वेनाख्याते धात्वर्थ
रणतयावसीयते णिजन्ताद्धि भवतेरचो यदिति कर्मणि कृत
कृते भाव्यशब्दव्युत्पत्तेरीप्सिततमस्य च कर्मत्वाद्भावयितुमि
यदुद्दिश्य भावना प्रवर्त्तते तद्भाव्यं ततश्च यथा गामानयायं
इत्युक्ते तृतीयां विनापि दण्डस्यान्यथान्वयायोगात्करणत्वं प्र
तथा किञ्चिदीप्सितं भाव्यं भावयतीत्युक्ते भाव्यान्तरोद्देशेन
त्तया भावनया धात्वर्थस्य भाव्यत्वेनान्वयायोगात्करणत्वं प्र
तस्माद्यागादौ साध्यात्मकभावनासामान्याविरुद्धकरणात्मक
र्थसामान्यसद्भावात् भावनासामान्यं न समवेतमिति करण
भावनासामान्याविरोधप्रदर्शनायोत्तरार्द्धम् । ननु निर्विशेषभाव
मान्यायोगाद् बलाद्धात्वर्थेषु विशेषेषु समवायापत्तिरित्याशङ्क्य
भावनाया हीति * ज्ञेयैक्ये ऽपि ज्ञानस्येव धात्वर्थैक्ये ऽपीष
ऽहमतिशयेन प्रयते ऽहमिति सातिशयानतिशयादिभेदेन प्रयत
भावनाभेदावगतेरनौपाधिकभेदद्योतनायैवकारः भावना चेन्न
त्वर्थसामान्यं किं तदित्यपेक्षायामाह * तथेति * यथा यद्भ
सामान्यं तद्धात्वर्थेन समवैति तथा यद्धात्वर्थसमवेतं तद्भाव

न्यं न भवतीति सूचनार्थस्तथाशब्दः कथं यागादेर्भावनाकर-
तित्याशङ्क्य भावनायाः केनेति करणांशेनापेक्षाहेतुत्वेनोक्ता धात्व-
भावनयोर्भेदस्य सूत्रकृत्सूचितत्वं द्योतयितुं यद्भावार्थाः कर्मश-
ा इत्यनेन कर्मशब्देनाभिधीयतइत्युक्तम । नन्वेवं सति कृभ्वस्तयः
त्यासान्यवचनाः क्रियाविशेषवचनाः पचत्यादय इत्यादियागा-
धात्वर्थानां क्रियाख्यभावनाविशेषस्मरणं न युज्यते इत्याशङ्क्या-
* विशेषणेति * भुवो णिजन्तस्य क्रियासामान्यवचनताभिप्रेता ३
स्तेरध्यार्द्धधातुके णिचि कृते ऽस्तेर्भूरिति भ्वादेशस्मृतेर्भावनाख्य-
त्यासामान्यवाचित्वोपपत्तिः । ननु क्रियाशब्दो यथा तद्भूतानां क्रि-
र्थेन सामाम्नायः । आम्नायस्य क्रियार्थत्वात्तेभ्यः क्रिया प्रतीयते
त्यायां पुरुषश्रुतिः । प्रतिषेधेषु कर्मत्वात् क्रिया स्यात् क्रिया स्याद्द्र-
मात्राणामित्यत्र भावनायां प्रयुज्यते तथा आकृतिस्तु क्रियार्थत्वात्
त्याणामाश्रितत्वात्क्रियाया ह्यस्तिसम्बन्धः क्रियातो व्यपदिश्ये-
त् तस्य क्रियाग्रहणार्थोक्तं क्रियाभिधानमित्यत्र धात्वर्थे ऽपि तथा
त्यत्वा।क्रियर्योर्न क्रियार्थानां संस्कारे तु क्रियान्तरमित्यत्रोभयोः क-
शब्दश्च यथा फलस्य कर्मनिष्पत्तेः भावार्थाः कर्मशब्दास्तद्भेदात्क-
णो ऽभ्यासः संख्यायाः कर्मभेदः स्यात् फलश्रुतेस्तु कर्म स्यात्
ळस्य कर्मयोगित्वात् समेषु कर्मयुक्तं स्यात्संस्कारश्चाप्रकरणे क-
शब्दत्वात्कर्मणः श्रुतिमूलत्वात् एतेषां कर्मसम्बन्धात्केवले कर्म-
ाषः स्यात्कर्माण्यपि जैमिनिः कर्तृगुणेषु कर्मसमवायात् अचोदितं
र्म भेदात् कर्मणो चोदितत्वात् कर्मणो व्यवस्था स्यात् द्रव्याणां
र्मसंयोगे कर्मतो ह्यभिसम्बन्धः तस्मात्कर्मोपदेशः स्यात् । अपि
; कर्मशब्दः स्यात् ॥ कर्मणः पृष्ठशब्दः स्याद्धविर्भेदात्कर्मणो ऽभ्यास
त्यत्र धात्वर्थेषु प्रयुज्यते तथा कर्मैके तत्र दर्शनादित्यत्र तच्छब्दप-
ामृष्टः कर्मविषयः कर्मशब्दः कर्मणः सम्बन्धात् शब्दान्तरे कर्मभे-
स्तदुत्सर्गे कर्माणीत्यत्र भावनायामपि एकस्यैवमित्यत्र चैवं शब्दे-
ानुकृष्टः कर्मशब्दः फलं वा कर्मसन्निधाववििभागात्तु कर्मणः क-
धर्मः प्रकरणादित्यत्र चोभयोस्तेनैव व्यतिकरदर्शनाद्धात्वर्थभाव-
योरभेदो ऽध्यवसीयते इत्याशङ्क्याह * शास्त्रेति * भावनावा-
चेनः क्रियाशब्दस्य धात्वर्थवाचिनश्च कर्मशब्दस्य लक्षणयेतरत्र प्र-
योगोपपत्तिरित्याशयः । भावनाधात्वर्थस्वरूपवाचिनामपदाभा-
ाच्च लाक्षणिको ऽपि प्रयोगो न दोषायेति न स्वरूपाभिधानेनेत्यनेन
सूचितम । एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति * श्लोकं व्या-
चष्टे * भावनाशब्दो हीति * एकस्मिन् क्षणे भावनायाः समस्तो-

पसंहृतरूपाप्रतीतेः । कथं निष्पन्नरूपतेत्याशङ्क्य वस्तुतो नि
रूपत्वे ऽपि नामपदसामर्थ्यात् सत्त्वस्य द्रव्यस्य यदेकत्रोपसंहृ
रूपं तदापन्नामारोपितसिद्धरूपामित्युक्तं कथं नामपदसाम
द्रव्यरूपत्वारोप इत्याशङ्क्य नामपदोक्तो लिङ्गादियोगः कारण
क्तः द्रव्यधर्मलिङ्गादियोगात् भास्वरत्वादिनेव शुक्तौ रजतत्वा
युक्त इत्याशयः । न केवलं नामपदेनाख्यातसदृशी भावना नो
किं तु करोत्यादिधातुनापी त्याह * तथेति * अनन्यशब्दव
त्वोपपादनस्यासाधारण्येनाख्यातस्य भावनार्थत्वसिद्धिप्रयो
सूचयितुम् उपसंहरति * इतीति* नन्वाख्यातप्रत्ययस्य भाव
त्वे ऽपि स्वर्गस्य द्वितीयाभावेन भाव्यत्वाप्रतीतेः स्वर्गकामपद
स्यन्धात् स्वर्गं भावयेदिति ब्रूयुरिति भाष्यमयुक्तमित्याशङ्क्य स्व
भाव्यांशनिवेशमुपपादयितुमुपक्रमते * सा त्विति * साध्यत्व
यात् प्रागंशान्तरान्वये भावनास्वरूपस्य सङ्कल्पाख्येच्छाविशेषरू
त्वेन यागादेस्तत्साधनत्वायोगात्तत्सिद्ध्यर्थं साध्यनिष्ठत्वाभावे
वनात्वस्यैव बाधापत्तेः साध्यांशस्य प्राधान्यात् साधनेतिकर्त्तव
शवच्चापेक्षान्तराधीनत्वाभावात्प्राथम्यमुक्तम् । नन्वेकप्रत्ययोपा
त् भावनामात्रस्य विधेयत्वावगतेः साध्याद्यन्वयः प्रतीतो ऽपि
ध्यसंस्पर्शादविवक्षितः स्यादित्याशङ्क्याह * तत्रेति * उ
धाः किरिति विपूर्वस्य दधातेः किप्रत्यये कृते विधिशब्दव्यु
कृदन्तत्वाद्भावप्रत्ययेन विधिसम्बन्धाभिधानम् । नन्वेवमप्येक
पादानेन प्रत्यासत्तेर्धात्वर्थस्यैव भाव्यत्वं कस्मान्न भवतीत्याशङ्
* विधित्वेति * कामियोगादपि स्वर्गस्य साध्यत्वावगति
पुरुषार्थं इत्यनेनोक्ता ।

यस्य येनार्थसम्बन्धो दूरस्थस्यापि तेन सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥

इति श्लोको ऽपि चाम्नानसामर्थ्याच्चोदनार्थेन गम्येताथ
ह्यर्थवत्त्वेन वचनानि प्रतीयन्ते ऽर्थतो ह्यसमर्थानामानन्तर्ये ऽ
म्बन्धः तस्माच्छ्रुत्येकदेशः स इति विश्वजिदधिकरणसिद्धान्त
गतस्यार्थानां ह्यर्थवत्त्वेनेत्याद्यवयवस्य योग्यतानुरोधेन व्यवहि
यप्रतिपादनपरतया व्याख्यानात्तत्रैव पूर्वाचार्यैर्वक्ष्यत इत्यौचित
वनया प्रतिभाति पदश्रुत्या धात्वर्थस्य साध्यत्वावगमे ऽप्येका
नश्रुत्या पुरुषार्थसाध्यत्वावगमाद् बाध इति सकलस्य तात्पर्य
विरोध एव नास्तीत्याह * किं चेति * श्लोकं व्याचष्टे *
|२५|॥ न्धेति * एवं भावनाया भाव्यापेक्षायां धात्वर्थस्य भाव्यत्वा

। विध्यन्वयबलात् पुरुषार्थस्य भाव्यतोक्ता अधुना इच्छायोनि-
न भावनायाः समीहितभाव्यनिष्ठत्वावधारणात् भावनास्वरूपा-
चनयैव पुरुषार्थस्य भाव्यतामाह * किं चेति * श्लोकं व्या-
ष्टे * यत्र हीति * ननु भावनास्वरूपालोचनयैव समीहितसा-
त्वावगमे स्वर्गकामादिपदं व्यर्थं स्यादित्याशङ्क्याह * तत्रेति *
वेवमपि स्वर्गादिपुरुषार्थविशेषलाभस्य शास्त्राधीनत्वात् सर्वथा
ध्यांशनिवेशस्य विधिविषयत्वनिरासो न युक्त इत्याशङ्क्याह
तदपि चेति * साध्यशब्दस्य इष्टतमत्वलक्षणकर्मवाचिकृत्यप्र-
ग्रान्तत्वेन साधयितुमिष्टमित्येवमर्थत्वात् स्वर्गादेश्चेष्टतमत्वस्य
सम्वेद्यत्वेन शास्त्रानधीनत्वान्न साध्यत्वेन विशेषः शास्त्रादपेक्ष्यते
पे तु स्वर्गादीनां साध्यानां मध्ये ऽस्या भावनायाः को विषय इत्येवं
धेयभावनाविषयत्वेनेत्यर्थः। साध्यांशस्य विधेयत्वनिरासप्रयोज-
[पसंहरति *ततश्चेति*एवकारो धात्वर्थनिवृत्त्यर्थः अश्रुतपश्वादि-
वृत्त्यर्थः कृतास्पदशब्दः कृतं कमिपदेनास्पदं साध्यांशनिवेशार्हत्वरू-
रस्येत्यर्थः। ननु स्वर्गादेः साध्यस्याशास्त्रीयत्वेन सन्निकर्षविप्रकर्षा-
क्षत्वे ऽपि भावनाविशेषान्वयस्य शास्त्रीयत्वेन तदपेक्षत्वात्सन्नि-
ष्टेन धात्वर्थस्य भावनान्वयेन बाधः स्यादित्याशङ्क्याह * धात्व-
ते * धात्वर्थस्यायोग्यत्वेन साध्यांशनिवेशितयानपेक्षितत्वान्ना-
यः सम्भवतीत्याशयः। न केवलमनपेक्षितत्वाद्धात्वर्थस्य सा-
ांशेन नान्वयः किं तु विधिश्रुतिबाधापत्तेरपीत्याह * विधीति *
तुश्रुतेः प्रत्यासत्तिमात्रबाधात्तरामित्युक्तं न केवलं स्वर्गादेरिष्ट-
त्त्वाद्भाव्यत्वं किं तु भवितृतयोपादानादपीत्याह * किं चेति *
ु धात्वर्थस्यापि निष्पाद्यत्वाद्भवितृतास्तीत्याशङ्क्याह * न चेति*
ाब्दं भवितृत्वं शाब्दे व्यवहारे ऽनुपयोगीति भावः। स्वर्गादेः कथं
वितृतयोपादानमित्याशङ्क्याह * स्वर्गादीनां त्विति * एतदेव प्र-
श्नपूर्वकमुपपादयति * कुत इति * भवेदेतदित्येवंरूपस्यैवाशयस्ये- ३
ष्टत्वादिच्छाविषयत्वोपपादनादेवान्यथानुपपत्त्या भवितृत्वावग-
ारिति भावः। स्वर्गाख्यदेशविशेषस्य सिद्धत्वात् भवितृत्वाभावमा-
ङ्क्य स्वसम्बन्धित्वेन भवितृत्वं भेदशब्देनोक्तं भवितृतयोपादानस्य
ाव्यंशान्वयोपयोगित्वे भावनापेक्षाकारणमाह * तेनेति* नन्वेवम-
ाकशब्दोपात्तस्य धात्वर्थस्य यागादिनेति भाष्येण पश्चादन्वयाभि-
ानं न युक्तमित्याशङ्क्याह * तत इति* धात्वर्थस्य करणांशे निवे-
ाभिधानाद्भावनास्वरूपस्य च निर्ज्ञातसङ्कल्पाख्येच्छाविशेषकरण-
ात्वेन करणानाकाङ्क्षत्वात्फलान्वितरूपस्य करणाकाङ्क्षयाः फला-

न्वयोत्तरकालं प्रवृत्तेर्युक्तं पश्चाद्धात्वर्थान्वयाभिधानम् इत्याशय
नन्वेवमपि नामार्थस्य सिद्धत्वेन योग्यत्वात्करणांशान्वये वा
धात्वर्थस्यासिद्धत्वेनायोग्यत्वात्करणांशान्वयाभिधानमयुक्तमित्य
शङ्क्याह * तत्रेति * आदिशब्देन नामार्थस्य करणांशानिवेशहेतु
प्रकर्षोऽभिप्रेतः।ननु सन्निधिवद्योग्यत्वस्याप्यन्वयहेतुत्वान्नामार्थ
सिद्धत्वेन योग्यत्वात् करणांशनिवेशो युक्तो न धात्वर्थस्यासि
त्वेनायोग्यत्वादित्याशङ्क्य प्रमाणान्तराच्चेत्युक्तं सिद्धस्यापि मृ
दः पटादावयोग्यत्वेन सिद्धत्वमात्राद्योग्यतानवगतेरदृष्टार्थेषु
कार्यगम्यविशेषयोग्यत्वस्य प्रमाणान्तरेण ज्ञातुमशक्यत्वात् सा
न्यतश्च धात्वर्थस्यापि भोजनादेस्तृप्त्यादिफलसाधनत्वदर्शनेन ः
शक्यत्वान्नायोग्यत्वेन धात्वर्थस्य करणांशात्प्रच्युतिर्युक्तेत्याशय
न च साध्यांशवत्करणांशनिवेशे विधिविरोधोऽस्तीति विध्यविरो
ध्वेत्यनेनोक्तं ततश्चायोग्यत्वविरोधलक्षणस्य साध्यांशे धात्वर्थानि
मकारणद्वयस्यात्राभावात् यागेनेत्येवमन्वयो विज्ञायतइत्यर्थः ।
त्युत नामार्थस्यैव धात्वर्थनिरपेक्षस्य क्व चित्करणत्वानुपलब्
योग्यतातिक्रमणकारणमस्तीति सर्वत्यनेनोक्तम्।यत्त्वनिष्पन्नत्वेन
ग्यत्वं पूर्वपक्षिणोक्तं तन्निरस्यति * यद्यपि चेति * नन्वेवं
स्वनिष्पत्त्यपेक्षणाद्विलम्बः स्यादित्याशङ्क्य नामार्थस्यापि नित्यसि
भावात् साम्यमाह * सर्वमेव चेति*न च प्राक्सिद्धस्यैव शा
करणत्वं वाच्यमिति नियमे हेतुरस्तीत्याह * न चेति * किं
तीतस्यापि ग्रहोपसर्गादेः शुभाशुभोत्पत्तौ वर्त्तमानस्य च ज्ञा
र्थप्रकाशे भविष्यन्त्याश्च वृष्टेर्मत्स्यविकारहेतुत्वदर्शनान्न प्रागसि
मात्रेण साधनांशनिवेशायोग्यतेत्याह * प्रमाणेति*उपसंहरति
स्मादिति * यस्य चेति भाष्यं सङ्क्षेपेण व्याचष्टे * तच्चेति *
च यागादिधात्वर्थरूपकर्मवाचिभ्यो धातुशब्देभ्योऽपूर्वप्रतीति
प्रयोजनवाच्यर्थशब्दाभ्युपगमेन प्रकृतिप्रत्ययौ प्रत्ययार्थं सह
इति स्मृत्यनुसाराद्धातोरपि भावार्थत्वोपपत्तेः सामानाधिकः
व्याख्यासम्भवात् नावश्यं प्रत्ययांशेन भावार्थाः धात्वंशेन च
शब्दाः पदरूपाः शब्दा इत्येवं व्याख्येयमित्याह * ततश्चेति *
यदि भावनाया भाव्यनिष्ठत्वादीप्सिततमस्य च कर्मणो भाव्यः
नीप्सितधात्वर्थातिक्रमेणेप्सिततमस्य स्वर्गादेर्भावनाकर्मत्वं
र्थस्य च भाव्यान्वितभावनारूपे करणत्वं ततोऽकर्मकेषु धातु
र्माभावाद्भावना न स्याद्भावनाभ्युपगमे वा तेषामपि सकर्मकत्वा
रित्याशङ्कते * ननु चेति * भावनावगतिहेतुत्वाद्वा सकर्मक

रवैमाख्यातं प्राप्नोतीत्यर्थोदुक्तं शङ्काभिप्रायं व्याचष्टे *
। * येन कारणेनेप्सिततमैः स्वर्गादिभिः पदार्थैर्भावना-
त्यंशो ऽवरुध्यते धात्वर्थश्चेप्सिततमभावावरुद्धकिमित्यंश-
गी तेन कारणेन न कश्चिद्धातुः अकर्मकः स्यादकर्मको
कश्चिद्धातुः स सर्वो न भावनायोगी स्यादिति द्वेधा
द्वेधा श्लोकं व्याचष्टे * यदि वेति * भावनाकर्मणैव
कर्मकत्वे स्यादथ दोषः न त्वेतदस्ति धात्वर्थसाध्यकर्मनिब-
द्तोः सकर्मकत्वस्येति परिहरति * नैष दोष इति *
ाध्यस्य कर्मणो ऽकर्मकेष्वभावान्न सर्वेषां सकर्मकत्वाप-
पूर्वार्द्धेनाद्यशङ्कापरिहारः भावनानिबन्धनस्य कर्मणः
भावान्नाकर्मकेभ्य भावनानुपपत्तिरित्युत्तरार्द्धेन द्विती-
भिप्रायपरिहारः धात्वर्थभावनाकर्मणोरभेदे भावाभाव-
ुपपत्तेस्तत्सिद्धये ऽन्यत्वाभिधानं धात्वर्थसाध्यमिति वाच्ये
र्मणो व्यवहितासिद्धेर्धात्वर्थकर्मणो ऽनन्तरसिद्धत्वेनान्यत्वो-
र्थम् * प्राप्यमित्युक्तम् * कर्मद्वयस्याधिष्ठानान्यत्वानियमा-
: यदेव धात्वर्थं प्रति कर्मत्वं तदेव भावनां प्रति न भवती-
त्ररूपान्यतोक्ता यद्धि यथाकथञ्चिदपि धात्वर्थसिद्धौ स-
रं नियमेनोत्पद्यते तद्धात्वर्थस्वरूपप्रयुक्तत्वाद्धात्वर्थकर्म
ारितेन पुंसानुष्ठितकर्मणि कदा चिदुत्पद्यते कुतश्चिद्वाकार-
दा चिदुत्पद्यते तन्नियोगप्रयुक्तत्वान्नियोगस्य च भावना-
ात् भावनाकर्म। उदाहरणनिष्ठं श्लोकं व्याचष्टे * ओदन- ३५५।२
: पाकसमाप्त्यनन्तरमेवौदनाख्यं कर्मोत्पद्यते गमनसमा-
रं च ग्रामप्राप्त्याख्यं नान्यत्किं चिदपेक्षितमिति द्योतनायाप-
: अधिष्ठानान्यत्वनियमो ऽनेनोक्त इति शङ्कानिवृत्त्यर्थं तत्रे-
धात्वर्थसमाप्त्यनन्तरं नियमेनोत्पद्यमानत्वादोदनस्य धा-
त्वे ऽप्युद्देश्यत्वलक्षणेप्सिततमत्वस्य प्रयत्नाख्यभावनैकगो-
दोदनमात्रोद्देशेन यदा प्रवर्त्तते तदैकस्यैवोभे प्रति कर्मता य-
दनादिकर्मविशिष्टेन धात्वर्थेनावच्छिन्ना भावनान्यद्वेतनला-
सततमुद्दिश्य प्रवर्त्तेत तदा कर्माधिष्ठानमपि भिद्यतइत्याशयः
निष्पत्त्युत्तरकालभाविना वेतनलाभादेः कथं निष्कृष्य भाव-
वावधारणेत्याशङ्क्याह * ततश्चेति * विप्रकर्षार्थः पर-
। धात्वर्थाद्विप्रकृष्टकालत्वेन धात्वर्थान्तरैश्च व्यवधानेन
देधात्वर्थकर्मत्वावधारणाशक्तेर्भावनाकर्मत्वावधारणेत्युक्ते न-
नाकर्मत्वावधारणाप्यस्मादेव हेतुद्वयादशक्येत्याशङ्क्य तद्वा-

स्य * मात्रत्वेनेत्युक्तम् * धात्वर्थफलस्य स्वरूपप्रयुक्तत्वात् स
द्व्यवधाने न शक्यो जन्यजनकभावो ऽवसातुं भावनाफलस्
नियोगप्रयुक्तत्वात्तस्य च लोके नियोक्तृराजादेः सन्तोषादिपूर्वेष
लदानप्रवृत्त्या व्यवधानदर्शनात् वेदे ऽपि योगसिद्ध्यधिकरणन्य
नानन्तर्यनियमाभावादनन्तरजन्यत्वानपेक्षभावनाव्याप्यमात्रत्वे
नियोगवशाद् गम्यमानत्वात् भावनाकर्मत्वावधारणेत्याशयः ।
च्चाकर्मकधातुयुक्तेष्वप्याख्यातेषु भावाद्भावनावगतिः सम्भवः
सर्वत्रेत्यनेन सूचितम् । नन्वकर्मकेषु धात्वर्थकर्मभावे ऽपि भावन
र्माभ्युपगमे स्वास्थ्यं शयीतेति द्वितीया कस्माच्च प्रयुज्यतइत्य
ङ्क्याह * तच्चेति * भावनाया भाव्यनिष्ठत्वाद्भवितुरेव भ
त्वात् द्वितीयायाश्च प्राधान्यापरपर्यायेप्सिततमत्वमात्रवाचि
भवितृत्वानभिधायित्वादेवं कामशब्दात्त्विदं भवेदिति भवितृत्वा
त्स्नैव भावनाकर्मत्वप्रतीतिः । अग्निमादधीतेत्यादौ तु भावन
र्मत्वान्यथानुपपत्त्या भवितृत्वकल्पनया क्लेशेन भावनाकर्मत
र्वाह इत्यर्थः । धात्वर्थभावनाकर्मणोरन्यत्वाभिधानस्याशङ्कानिरा
योजनत्वं पूर्वसूचितं प्रकटयितुमाह * सत्यपीति * प्रकट
* तेनेति * नन्वग्निमादधीतेत्यादौ द्वितीयानिर्दिष्टस्यैव प्रायेण
वनाकर्मत्वदर्शनादेवं कामशब्दहेतुकत्वस्य प्रायिकत्वाभिधानम
स्यादित्याशङ्क्याह * यजेरपि त्विति * विष्णुं यजतीत्यादौ द्वि
यानिर्दिष्टामपि देवतां कामशब्दोपबन्धाभावाद्भावनाकर्मत्वेन ल
कामशब्दोपबद्धस्य स्वर्गादेरेव भावनाकर्मत्वाश्रयणाद्युक्ता का
ब्दोपबन्धहेतुकत्वस्य प्रायिकतेत्याशयः । द्वितीयोक्तस्य कर्मत्वस्य
विशेषत्वाशङ्कानिरासार्थं यजिधात्वर्थकर्मतोक्ता यागे ऽपि देवत
स्वरूपेणासमवायात् कर्मत्वायोगमाशङ्क्यानभिमतमपि पूज्यत्वं
ज्यमानद्रव्योद्देश्यत्वलक्षणत्वाद्देवतात्वस्य त्यज्यमानद्रव्योद्दे
च्च गुर्वादेर्लोके पूज्यत्वदर्शनादुपचारेणोक्तं शङ्कानिरासमुपसंह
* तस्मादिति * नन्वेवमपि भावनाकर्मणैव तद्विशेषणभूतस्या
शयनादेरपि धात्वर्थस्य सकर्मकत्वे सकर्मकाकर्मकविभागो क
ज्यतइत्याशङ्क्ते * कस्तर्हीति * भावनाविशेषणत्वसाम्ये ऽपि
भागहेतुमाह * उच्यतइति व्यवहितस्याप्यङ्कुरादिरूपतया बी
दिपरिणतस्य बीजावापादिधात्वर्थकर्मत्वदर्शनात् साक्षाच्छब्दे
च्चिन्नैरन्तर्ये क्वचिन्नियतरूपत्वमभिप्रेतं यदुप्तं बीजं तदेवाङ्कुरत्व
परिणतमिति नियतरूपेण प्रतीतेः। पारम्पर्यशब्देन साक्षात् शब्दे
नैरन्तर्याभाववाचिना तदुक्तस्यैव नियतरूपत्वस्याव्यभिचारशब्दे

व नियमस्याभाव उपलक्षितः । भावनाकर्माभिधानस्य धात्वर्था-
कत्वोपपादने तात्पर्यं सूचयितुं व्युत्क्रमेण श्लोकं व्याचष्टे *
नेति * श्रान्तस्यासीनस्य सुखीभावाच्छयानस्य स्वास्थ्याभावा-
भिचारोपलब्धेः कदाचित्प्रबुद्धस्य चिरेणान्नपचनादिना धातु-
यलक्षणस्वास्थ्यासद्भावेऽप्यानन्तर्याभावाच्छयानस्यासीनस्य चै-
लोमिति नियतरूपानिरूपणाद्वा साक्षादनुपपत्तेर्धात्वर्थकर्मत्वा-
ादास्यादेरकर्मत्वं पच्यादीनां तु धात्वर्थानां विक्लिद्यता त-
ठादिना तच्छब्देन परामृष्टगमिधात्वर्थलक्षितं गन्तृसंयुज्यमानेन
ग्रामादिना साक्षादानन्तर्येणेदं तदिति वा नियतरूपतया धात्व-
म्बन्धिनौदनरूपापत्त्या प्राप्यमाणत्वेन वा कर्मत्वेन कर्मणा
भेचाराभावात्पच्यादीनां धातूनां सकर्मकत्वमिति पचिगम्या-
ामिति धात्वर्थपरतया स्वरूपपरतया चावर्त्त्य योज्यम् । साध्यसा-
न्वयाभिधानमात्रेण सूत्रव्याख्यानसिद्धेः । किं केन कथमित्या-
ात्रयाभिधानमनर्थकमित्याशङ्क्याह * सेयमिति * कथं यथा
त्कर्षं शास्त्रानुसारेण कल्प्यते कथं वा तदभावाद्यथा कथं चि-
स्याप्यमानेत्यपेक्षायां * श्रुत्यादीत्युक्तम् * अतिदेशस्योपकारद्वार-
इ *अत्यन्तेत्युक्तम् * भावनायास्त्र्यंशापेक्षत्वेऽपि स्ववाक्योपात्त- ३५६
ननमात्रान्वये विधिपर्यवसानभ्रान्तिं निवर्त्तयितुमाह * तत इति *
विशेषणविधिं विना विशिष्टविधिर्न सम्भवतीत्याह * तद्विधा-
ोति * तस्मादित्युपसंहारभाष्यमधिकरणार्थोपसंहारार्थमिति
ं निवर्त्तयितुं सूत्रार्थमात्रोपसंहारार्थत्वेन व्याचष्टे * इतीति *
शब्दत्वभावार्थत्वयोरेकैकेनाख्यातोपलक्षणसिद्धेरुभयोपादानान-
यमथेति भाष्येणाशङ्क्योच्यतइत्यनेन भावार्थत्वविशेषणप्रयो-
मुक्तं तत्र श्येनादिशब्दानां कर्मनामधेयत्वस्य यजिसामाना-
करण्याधीनत्वाद्यागादिस्वतन्त्रकर्मशब्दत्यागेनोदाहरणमयुक्तमि-
शङ्क्याह * भवन्तीति * ननु श्येनादिशब्दवद्यागा-
ाब्दानामपि धात्वर्थाख्यकर्मवाचित्वाद्भावार्थता नास्तीत्याशङ्क्याह
यागादयो हीति * धातोराख्यातप्रत्ययोपात्तभावनोपश्लिष्टस्वा-
ाचित्वोपलम्भादिहापि भावनोपश्लिष्टस्वार्थवाचित्वं कथं नानु-
तइत्याशयः । कर्मशब्दत्वविशेषणप्रयोजनाभिधानार्थं केचिदि-
भाष्यं तत्रोदाहरणमाक्षिपति * केचिदिति * ननु णिजन्ता-
ातेरप्रत्ययोत्पादनेन भावनावाचितया भावशब्दस्य व्युत्पादित-
त्कथमनुदाहरणतेत्याशङ्क्याह * तत्रेति * भवनाख्यप्रयोज्य-
ापारविशिष्टप्रयोजकव्यापारवाचिभावशब्दार्थैकदेशप्रयोज्यव्यापा-

स्यवाचित्वात् लक्षणयैतयोरपि भावार्थतोपपन्नस्यतइति परिहर
* तावपि त्विति * यदा तु भावनाप्रयोजनत्वाभिप्रायो भावा
शब्दो व्याख्यायते तदा भावनैकदेशभूतभवनवाचित्वेनैषां भावना
योजनत्वाद्युक्तैव भावार्थतेति परिहारान्तरमाह * अथ चेति * न
भावादिशब्दानां लक्षणया भावनाप्रयोजनत्वाद्वा भावार्थत्वे कर्म
स्यानुष्ठेयव्यापारवाचित्वेन कर्मशब्दत्वान्नानेन विशेषणेन व्या
प्तिरित्याशङ्कते * कथं पुनरिति * क्रियतइत्यस्मिन्नर्थे करोतेः
णादिके मनिन्प्रत्ययस्मृतेः । कर्मशब्दस्यानुष्ठेयव्यापारवाचित्वाद्
वनादेश्चासिद्धकर्तृव्यापारत्वेनानुष्ठेयत्वात्तद्वाचिनो भवत्यादेर्धा
कर्मशब्दत्वायोगाद्युक्तरवार्त्तिकानुसाराच्चानुष्ठेयव्यापारवाचित्व
धात्वभिप्रायो धातुमात्रशब्दः धात्वर्थविशेषानवच्छिन्नायाः भाव
या अनुष्ठातुमशक्यत्वात्तद्वाचिनो धातोरपि कर्मशब्दत्वं नास्ति
परिहरति *निर्विशेषस्येति* ननु भवनाख्यधात्वर्थविशेषावच्छिन्न
या भावनायास्तर्ह्यनुष्ठेयत्वात् भावादिशब्दानां कर्मशब्दतो
पन्नस्यतइत्याशङ्क्याह * अत इति * भवनस्यासिद्धकर्तृव्यापारत्व
भावनाविशेषणत्वं नास्तीत्याशयः । किं पुनरित्यादिभाष्येणोदाहर
प्रश्नपूर्वकं विचारस्वरूपं स्पष्टयित्वा स्थितइत्युक्तम् । तच्छङ्कोत्तर
नावतारयति * यदीति * नन्वेवं सति नामधेयचिन्तोपोद्घातत
ततः प्रागेवेदं कार्यमिति शङ्कते * कस्मादिति*सत्यप्युपोद्घातत
भेदचिन्तयैव नामधेयचिन्तयापि सम्बन्धे ऽर्थचिन्तात्मकत्वात्प्र
णलक्षणासङ्गतेस्तत्र न कृतमिति परिहरति * प्रमाणेति * पूर्व
ह्याख्यातपदस्य फलपदान्वयान्नामपदस्य तदन्वये ऽस्मिन्नधिक
निरस्ते तदेतरत्तदर्थमित्याख्यातान्वयप्राप्तौ गुणविधित्वेनाख्याता
नामधेयत्वेन वेति इहापि प्रसङ्गात् सङ्गत्युपपत्तेः ।
स्मान्नामधेयचिन्तापीहैव न कृतेति शङ्कते * अथेति * प्रा
ङ्गिकत्वेनानन्तरसङ्गतौ सम्भवन्त्यामपि लक्षणासङ्गतेर्नेह
तेति परिहरति * भेदेति * शङ्काद्वयनिरासमुपसंहरति * तस
दिति * तथेत्यादिभाष्यं स्पष्टत्वादव्याख्याय न चेति भाष्यं स
भावयोरिति फलान्वयस्य प्रागुक्तत्वात्किं केन कथमिति भाव्या
काङ्क्षाया एवोपायस्योक्तत्वात्तद्विरुद्धपुरुषान्वयाभिधानादयुक्त
शङ्क्य व्याचष्टे * न चेति * अर्थवाचिनः कामिपदस्य लक्षण
ऽर्थिशब्देनाभिधानात्तस्य चैकादशाद्यभाष्ये फलपरत्वस्य वक्ष्यमा
त्वादविरोध इति भावः । श्येनेनाभिचरन्निति व्यधिकरणविभ
त्यलक्षणस्य विभक्तित्वस्य साध्यसाधनान्वयापादकत्वेन विपरीत

त्वादहेतुत्वमाशङ्क्य वीत्युपसर्गो विगमार्थो विशेषार्थो वेति
। व्याचष्टे * विभक्तित्वादिति * तस्मादित्युपसंहारभाष्यं फ-
ा क्रियेति फलभावनान्वयोपक्रमान्न द्रव्यगुणशब्दाः फलान्व-
ारापूर्वस्याक्षेपका इत्येवमर्थमिति सूचयन्व्याचष्टे * तस्मादिति *
ेव सिद्धान्तं वृद्धवचनेन द्रढयति * आह चेति *

सर्वेषां भावो ऽर्थ इति चेत् ॥ २ ॥

नन्वाख्यातपदादेव भावनाप्रतीतेः। सर्वेषां भावनार्थत्वाभि-
मयुक्तमित्याशङ्क्याह * न तावदिति * अयमाशयः धात्वर्थस्य
गत्वं वक्तुं धातोः फलपदान्वयद्वारेणापूर्वाक्षेपकत्वं यदुक्तं त-
ापादयेदं सूत्रम्। न च भावनावाचिनः प्रत्ययस्य फलपदान्वयद्वा-
र्वाक्षेपकत्वं सिद्धान्तिनो ऽपीष्टं धातोरपि स्वतः प्रत्ययनिरपे-
। भावनावाचित्वाभावेन फलपदान्वयायोगान्नापूर्वाक्षेपकत्वमिष्टं
तु परतः प्रत्ययान्वयद्वाराभावनानुरञ्जकत्वलक्षणाया भावार्थत्वव-
तच्च नाम्नो ऽपि श्येनेन कुर्यादिति प्रत्ययान्वयेन भावार्थत्वोप-
ः सममिति श्लोकं व्याचष्टे *यदीति* भावनावचनस्यैवेत्येवका-
कारणवाचिशब्दानपेक्षोक्ता भावनावाचित्वेन तु फलपदद्वारा प्र-
स्यापूर्वाक्षेकपतोभयवादिसमानत्वान्न विचार्यत्वेनेष्टेत्याशयः। ना-
म्नस्यापीत्यपिशब्देन श्लोकस्थो वा शब्दार्थो ऽप्यर्थे व्याख्यातः।

येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामा-
नि तस्मात्तेभ्यः पराकाङ्क्षाभूतत्वात् स्वे-
प्रयोगे ॥ ३ ॥

ननु भावार्थत्वाविशेषाद्धातुवन्नाम्नो ऽपि फलपदान्वयसम्भ-
न्नियमानुपपत्तौ शङ्कितायां नामाख्यातयोः स्वरूपकथनमसम्बद्ध-
याशङ्क्याह *यदुक्तमिति* अयमर्थः धात्वर्थानपेक्षस्य नामार्थस्य ३५९
वनानुरञ्जनाशक्तेर्न तावद्धातुतुल्यं भावार्थत्वं नाम्नो ऽस्ति तद-
े ऽपि दध्नेन्द्रियकामस्येत्यादौ नाम्नः फलपदान्वयदर्शनाद्य-
कथं चित्तु भावार्थत्वमात्रस्य फलपदान्वयोपयोगित्वमाशङ्क्या-
ग्रभिमतमभ्युपगम्य धातुनाम्नोर्विशेषं वक्तुमेतत् सूत्रद्वयं तत्र
कस्मादिति भाष्येण सर्वेषां फलपदान्वये बह्वदृष्टकल्पनापत्ति-
ास्य तु तदन्वये ऽल्पकल्पनेति यदुक्तं तत्रैकान्वये ऽपि नाम्नो
ायबहुकल्पना धातोस्त्वन्वये ऽल्पकल्पनेति विशेषः सार्द्धेन सूत्रे-

णोक्तः आश्रितत्वात्प्रयोगस्येति सूत्रावयवेन श्रुतिवाक्यकृतश्चा
अयं च सिद्धसाध्यत्वकृतो विशेषो न श्रुतिवाक्यकृतविशेषवच्छब्द
मात्रनिमित्तः किं तु वास्तवो ऽपीति वस्तुधर्मेणेत्यनेनोक्तं कीदृश
ऽसौ विशेष इति प्रश्नपूर्वं विवरीतुमाह * कथमिति * प्रतिपद्य
क्षारिष्टत्वोपपादनस्यानिष्टापत्त्यभिधानार्थत्वेन प्रस्तुतोपयोगं वक्तु
माह * कस्मादिति * कथं नाम्नः फलपदान्वये बह्वदृष्टप्रसङ्गापरि
हार इत्याशङ्क्याह * नाम्नश्चेति * ननु सिद्धरूपस्यापि नामार्थ
स्याश्रयत्वेन निष्पाद्यो धात्वर्थो दृष्टेनोपकरिष्यतीत्याशङ्क्याह *
हीति * विधीयमानस्य धात्वर्थस्य किं चित् समीहितं प्रति साध
नत्वं विना विधेरपर्यवसानान्नामार्थं प्रति साधनत्वायोगात्तादर्थ्ये
न विध्यनुपपत्तेरन्यार्थत्वेनैव विहितस्याश्रयत्वेन ग्रहणात् सत्यप्या
श्रयत्वे कश्चिददृष्टो नामार्थस्योपकारो धात्वर्थसाध्यो ऽस्मिन्पक्षे
कल्प्यः स्यादित्याशयः । आश्रयत्वेन धात्वर्थं गृह्णन्नपि नामार्थः सा
धनत्वेन नापेक्षते येन नामार्थस्य फलान्वये धात्वर्थस्तस्य दृष्टेनोप
कुर्यादित्यर्थः । उच्चारणोत्पत्ताविति भाष्यावयवेनोत्पत्तिशब्दमुच्चा
रणार्थत्वेन व्याख्याय स्वे ऽर्थ इत्यनेन प्रयोगशब्दो वाक्यार्थत्वेन
व्याख्यातः । तत्र प्रयुज्यमानशब्दात्कर्मव्युत्पत्तिरुक्तेत्याभाति तत्स्वा
र्थस्योच्चार्यत्वाख्यप्रयोज्यत्वाभावादयुक्तमाशङ्क्याधिकरणव्युत्पत्ति-
माह * प्रयुज्यतइति * प्रयुज्यमानशब्दविषयभूते ऽर्थे रूपोपलब्धि
रिति व्याख्यानेन सूचिता प्रयुज्यमानशब्दविषयत्वाल्लक्षणयार्थस्य
प्रयुज्यमानतोक्तेत्याशयः । सूत्रान्त्यप्रयोगशब्दवत् अयमप्युच्चार
णार्थतया प्रसिद्धः प्रयोगशब्दो वाक्यार्थतया कस्माद्व्याख्यायतइ
त्याशङ्क्य प्रयोगस्य सप्तम्या रूपोपलब्ध्या ऽऽधारत्वोक्तेर्वाक्याश्रितत्वा
च्च तस्या इत्याह * तदाधारैव हीति * उच्चारणे ऽपि निष्पाद्य
रूपोपलब्धेर्निष्पन्नरूपतेह विवक्षितेति निष्पन्नशब्देनोक्तं यत्सक्तादि
भाष्येण रूपोपलब्धिपदं स्थायिरूपाभिप्रायेणान्वयमुखेन व्याख्यात
क्रियावैधर्म्याभिधानेन व्यतिरेकमुखेन व्याख्यातं तदुभयमपि ना
मार्थस्य साधनानपेक्षत्वाय निष्पन्नत्वस्य वक्तव्यत्वाद्धात्वर्थस्य साध
नापेक्षत्वायानिष्पन्नत्वस्य वक्तव्यत्वादयुक्तमाशङ्क्याह * अनुत्पन्नत्व
इति * निष्पन्नत्वे नामार्थस्य वक्तव्ये स्थायित्वप्रदर्शनमित्यर्थो युक्तं कर्म
नामधेयत्वेन नाम्नः फलपदान्वयस्यानाशङ्क्यत्वात्तन्निरासार्थसिद्धरू
पार्थत्वाभिधानानर्थक्यापत्तेः द्रव्यगुणशब्दत्वाभ्युपगमे ऽनाशङ्कि
सूचयितुं द्रव्यगुणशब्दा इति व्याख्याते किमर्थं तर्हि नामानीत्युक्त
इत्याशङ्क्य सत्त्वप्रधानानि नामानीति स्मृत्या सिद्धार्थत्वोपपादनार्थं

पर्यायत्वाभिधानेन सूचितं, तत्स्पष्टत्वाद्व्याख्याय तस्मात्तेभ्यः
ाकाङ्क्षेति सूत्रावयवव्याख्यानार्थं यत एषामिति भाष्यं सूत्रे नञ-
ादयुक्तमाशङ्क्याध्याहारार्थत्वेन व्याचष्टे * तेभ्य इति * स्व-
न्यवाचित्वेन परशब्दं व्याख्याय प्रधानवाचित्वं भाष्योक्तं व्या-
तुम् *निष्पाद्यत्वेन वेत्युक्तम्* निष्पाद्यत्वेन प्रधानस्य सतो या
त्रनाकाङ्क्षा सा न विद्यते निष्पाद्यत्वाभावादित्यर्थः । दूरवाचि-
त्रा परशब्देनैव नञर्थो लभ्यतइत्यन्यथा व्याचष्टे * अथ वेति *
त्वादित्यादिसूत्रावयवं नैराकाङ्क्ष्योपपादनार्थत्वेन व्याचष्टे *कुत
पौनरुक्त्यं परिहरति * स्वरूपेति *

येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्या-
तानि तस्मात्तेभ्यः प्रतीयेताश्रितत्वात्प्रयोगस्य ॥४॥

आख्यातस्वरूपकथनस्य प्रयोजनमाह * आख्यातेति * श्लो- ३५९
व्याचष्टे * धात्वर्थस्तावदिति * व्यापारात्मकत्वाद्धात्वर्थस्य
ारस्य चानुपसंहृतरूपत्वाख्यानिष्पन्नरूपत्वात्स्वभावेनैव साध्या-
तेत्याशयः । ननु नामधेयत्वे नाम्नो ऽपि साध्यार्थत्वान्निष्पन्नस्य
ुष्ठेयत्वाख्यसाध्यत्वायोगात्फलपदान्वयः प्रसज्येतेत्याशङ्क्य
न्विति * नामधेयत्वस्य धातुसामानाधिकरणाभिधानस्वात्फलप-
ये च सामानाधिकरण्याभावान्नामधेयत्वं न स्यादिति परिहरति
ति * अन्योत्पादानुकूलार्थाभिधायित्वेन साध्यसाधनेतिकर्त्त-
ाकाङ्क्षोत्थानसूचनार्थं ते भावशब्दा इति वक्तव्ये तान्याख्या-
त्यभिधानात् सूचितम् । परिहारान्तरमाह *अपि चेति* श्लो-
याचष्टे * यद्यपीति * ननु सिद्धत्वरूपतयाभिधाने ऽपि व-
ः साध्यत्वात् साधनाकाङ्क्षानुष्ठेयत्वनिर्वाहार्थं च फलाकाङ्-
भविष्यतीत्याशङ्क्याह * अभिधानेति * यागादिशब्दोच्चारणे
साध्यत्वानुरक्तावाकाङ्क्षानुपलब्धेरभिधानकृतैवाकाङ्क्षेत्या-
। तस्मात्तेभ्यः प्रतीयेतेति तस्माच्छब्देन साध्यत्वोपपादित-
ानाकाङ्क्षावशान्नामार्थस्य धात्वर्थान्वये इष्टार्थत्वं हेतुत्वेन प-
ष्टमिति सूचयितुमुपसंहरति * तस्मादिति * अनेन च भ-
ास्ति इति भाष्यमपि तात्पर्यतो व्याख्यातम् । उच्चारणाख्यप्रयोग-
स्वार्थे प्रयोगो न विद्यतइत्युक्ते प्रयोगकाले प्रयोगनिषेधायोगा-
षणभूते ऽर्थे निषेधावतारात्प्रयोगकाले ऽर्थो न विद्यतइत्यर्थप्र-

ामानाधिकरणाधीनत्वादिति २ पु० पा० ।

त्वात्ः स्पष्टत्वात्तद्व्याख्यानार्थं भाष्यं न व्याख्यातम् । अदृष्टकल्पनाल्प त्वबहुत्वकृतेन विशेषेण धात्वर्थफलवत्त्वसिद्धेराश्रितत्वादिति हे त्वानर्थक्यमाशङ्क्य किं चेति भाष्येण हेत्वन्तरसमुच्चयार्थत्वेन व्या ख्यातम् । पूर्वोक्ताद्विशेषादेतदुक्तस्य विशेषस्य विवेकमाह * विं चेति * एक पदोपादानाद्धात्वर्थस्य प्रत्यासत्तिलक्षणया श्रुत्या भा वनान्वयः नामार्थस्य वाक्येनेत्यर्थः । धात्वर्थानपेक्षस्य नामार्थस्य भावनाननुरञ्जकत्वाद्वस्तुतो ऽपि धात्वर्थस्यैव प्रत्यासत्तेर्न शब्दग्रह णाद्रास्नवत्वनिवृत्तिः । अत्र भाष्यकृतो तेषामाख्यातानां प्रयुज्यते ऽस्मिन्निति व्युत्पत्त्या प्रयोगशब्दवाच्यः प्रतिपाद्यो ऽर्थो धात्वर्थानु रक्तभावनाख्यः पुरुषेणाश्रित इति सूत्रावयवस्वरूपं व्याख्याय तदु पपादनार्थं पुरुषान्वितभावनाख्यातैरुच्यत इत्युक्तेन व्याख्यातेषु पुरु षानुपादानात्कथं तदन्वयावगतिरित्याशङ्क्य पुरुषस्याख्यातैर्भावनायां नियोगादर्थाक्षेपलभ्यत्वमुक्त्वा तथापि धात्वर्थस्य फलपदान्वयः कथ- मित्याशङ्क्यार्थाक्षितस्य पुरुषस्य फलपदाद्विशेषप्रतीतेराख्यातोपात्तस्य धात्वर्थस्य भावनाद्वारा पुरुषान्वयः प्रतीयते न तु द्रव्यादेर्नामार्थस्ये- त्युक्ते तस्यापि भावनाद्वारान्वयो भविष्यतीति सर्वेषां भावो ऽर्थ इति सूत्रोक्तं चोद्यमनुभाष्य श्रुतिवाक्यविशेषाभिधानेन परिहृतं तत्सङ्क्षेपतो व्याचष्टे * पुरुषेति * भावनायां पुरुषस्य नियोज्य- त्वोपपादनार्थं तद्व्यापारतोक्ता धात्वर्थानवच्छिन्नभावनानुष्ठानाश- क्तेस्तदुपश्लेषो भावनायाः पुरुषेणापेक्षित इत्युक्तम् । दर्शपूर्णमासाभ्या- मिति नाम्नः फलपदान्वये दर्शकालः पौर्णमासकालश्चेति भाष्ये कालवाचित्वाभिधानान्नामधेयविचारे ऽनुदाहृतत्वाद्धात्वर्थस्यापि फलान्वये गुणविधित्वाशङ्काप्रसक्तेस्तन्निरासार्थं दर्शपूर्णमासकाला- न्वितस्यैवाग्नेयादियागस्य विहितत्वात्तत्प्रख्यन्यायेन लक्षणाया याग- नामधेयत्वाभिधायकं यदा यागेनेति भाष्यं स्पष्टत्वान्न व्याख्यातम् ।

॥ अथ अपूर्वस्यास्तिताधिकरणम् ॥ २ ॥

## चोदनापुनरारम्भः ॥ ५ ॥

कथं पुनरित्यादिभाष्येण शङ्कानिरासार्थत्वेनैतत्सूत्रमवतारि- तमिति दर्शयितुमाह * सूत्रसिद्धमिति * अपूर्वाभावे केभ्यो ऽपूर्वं प्रतीयत इति प्रतिपत्त्युपायविशेषविचारायोगात्तत्प्रतिपादनापेक्षायां सूत्रकृदाहेति भाष्यतात्पर्यमित्यर्थः चोदनेत्यपूर्वं ब्रूम इत्यादिभा- ष्योक्तं सूत्रार्थं तात्पर्यतो व्याचष्टे * फलायेति * चतुर्थ्युक्तफला- र्थत्वं तच्छब्देन परामृष्टं श्लोकं व्याचष्टे * वेदवाक्येति * बुध्यन्त-

:पूर्वाभावे ऽपि कर्मफलसम्बन्धोपपत्तेरपूर्वस्य निष्प्रमाणकत्वा-
र्थाधिकरणस्य च केभ्यः फलोत्पादावगतिरित्येतावति पर्यव-
पपत्तेः सूत्रस्य चारम्भकं प्रवर्त्तकं वाक्यं चोदनेति चोदनास्व-
थनार्थतयाऽपि व्याख्यातुं शक्यत्वान्नेदं सूत्रमपूर्वसद्भावाभिधा-
नेत्युक्तं तद् दूषयितुमुपन्यस्यति * अत्रेति * केन चित्प्रमाणे-
गतपूर्वकत्वादवयवार्थमनुगतमस्य नामेति बहुव्रीहिरुपहासार्थः
व्याचष्टे * वस्त्विति * प्रत्यक्षाप्रवृत्तिं तावदुपपादयति * त-
* आदिशब्देन लोकसिद्धेन्द्रियविषयमात्रग्रहणम्। अनुमाना-
मुपपादयति * नापीति * प्रत्यक्षसूत्रे सत्ता च नानुमानेन
चित्सम्प्रतीयतइत्यत्रोक्तं शब्दाप्रवृत्तिमुपपादयति * पदेति *
व्याचष्टे * आगमिकत्वमिति * उपमानाप्रवृत्तिमुपपादयति
चेति * प्रत्युतासत्त्वएवोपमानं प्रवर्त्तते इत्युपहासार्थमाह १६११।
नमिति * अर्थापत्त्यप्रवृत्तिमुपपादयति * अर्थापत्त्यापीति *
न्ताभिमतश्रुतार्थापत्तिनिरासार्थम् * फलेत्युक्तम् * श्लोकं
ष्टे * दृष्टार्थापत्तिरिति * शब्दप्रामाण्यानादरेण दृष्टार्थाप-
ारासथा चेश्वरेच्छादेरपि वैचित्र्यहेतोः पराभिमतस्यापि श-
ादानम्। ननु श्रुतायाः फलयागादिसङ्गतेरपूर्वं विना ऽनुपपत्तेः
ापत्तिर्निराकर्त्तुमशक्येत्याशङ्क्याह * श्रुतार्थापत्तिरिति * अ-
न कदा चित्फलसाधनत्वेन सम्भाव्यतइति व्यतिरिक्ताभि-
् सम्भवित्वाभिधानायान्यथानुपपत्तेः कथं चित्परिहारा-
ः दार्ढ्यवाचिना प्रत्यक्षशब्देनोक्तमिति न कथं चिदपीत्यनेन
ातं।न केवलमन्यथानुपपत्तेः कथंचित्परिहारासम्भवादेव द्रव-
त्वस्य सम्भवित्वं किं तु सामान्यतः प्राप्तत्वादपीत्यपि चेत्यनेनो-
ेष्वप्यवदानप्रसक्तेरित्यर्थः। द्रवाख्यविशेषे ऽप्यवदेयसामान्य-
श्रुतहान्यभावः सामान्येन च विशेषाक्षेपादश्रुतापत्त्यभावः।
व्यमानस्याविरोधिनश्च श्रुतार्थापत्तिविषयत्वात् श्रुतार्थापत्ते-
र्वो न प्रवर्त्ततइति भावः। तत्रापूर्वाभावे ऽपि श्रुतसाध्यसा-
म्बन्धानुपपत्तिपरिहारं कथं विनष्टं साधयतीत्यादिनाशङ्कापूर्वं
दयिष्यमाणमभिप्रेत्यापूर्वस्यासम्भावित्वं तावदाह * अपूर्वं त्वि-
अनेनैव ग्रन्थेन पाक्षिकप्रसक्तेरपि निरस्तत्वात्परिशेषसिद्धिरू-
चदर्थापत्तिरनाशङ्क्यैवेति यतो ऽन्येत्यनेनोक्तम्। ननु प्रसक्त्यभावे
ानिवृत्तिमात्रेण परिशेषः कस्मान्न सिद्ध्येदित्याशङ्क्याह * य-
* श्लोकं व्याचष्टे * न हीति * श्रुतसाधनसम्बन्धविरो-

व्यतिरिक्ताभिधानादिति १ पु० पा०।

धि चापूर्वमित्याह * अपि चेति * न च साध्यसाधनत्वाका
६२।१ तत्कल्पयितुं शक्यं प्रमाणाभावादित्याह * न चेति * कः
श्रुतसाध्यसाधनसम्बन्धासिद्धिरित्याशङ्क्याह * तेनेति *
त्याशङ्कापूर्वकमुपपादयति * कथमिति * न च स्थायित्वं
धकत्वे प्रयोजकमाकाशादिष्वपि प्रसङ्गादित्याह * अपि चे
एतदेव विवृणोति * यदि चेति * ननु शास्त्रेण यागादे
साधनत्वावसायाद्विनष्टत्वेन च तस्य साक्षात् साधनत्वायोग
स्थिसम्बन्धिद्वारा साधनत्वासिद्धये ऽपूर्वकल्पनेति स्वयमे
निरस्यति * अथेति * तदेव व्याचष्टे * यदीति * अ
ऽतीतो विनष्टो यागो यस्येति विग्रहः । नन्वात्मनः स्वरूपे
ऽस्याद्यागादेश्चातिक्रान्तस्यासत्त्वेनावच्छेदकत्वायोगात् फलं
हेतुत्वं न स्यादित्याशङ्क्य यागादिविनाशस्य तर्हि प्रतियो
द्विनिरूपणाधीननिरूपणत्वादसत एव घटादेर्विनाशप्रतियो
र्यनावच्छेदापादितवैचित्र्यस्य फले ऽपि वैचित्र्यहेतुत्वोपपत्तेः
मः सम्बन्धिनश्च साधनत्वं भविष्यतीति पक्षान्तरमाह * र
श्लोकं व्याचष्टे * विनाशिनीति * ननु विनाशोत्तरकाली
फलस्य कथं तज्जन्यत्वावधारणेत्याशङ्क्य यच्च यत् प्रतीत्य
प्राप्य यस्मिन्सतीत्युक्तम्। ननु कर्मविनाशान्वितस्यात्मनः सा
न चातिक्रान्तयागेभ्यः पुरुषेभ्यः फलोद्गतिरित्यादिना नि
नत्वात् स्वतन्त्रस्याभावस्य क्वचित्साधनत्वादर्शनाच्चेह सा
ल्पनेति स्वयमेवाशङ्क्य निरस्यति * स्यादेतदिति * श्लोके
घ्रयादिफलोत्पत्तिनिमित्तस्य भोजनादेः क्रियात्वं धर्मो दृष्ट
मस्योभयपक्षसाम्यात् तत्फलत्वाविशेषेणाभावस्यैव तन्नि
कल्पनोचितेत्यर्थः । विनष्टस्य कर्मणः साधनत्वायोगे क
भाविफलसाधनत्वस्यापूर्वकल्पकस्य शास्त्रार्थत्वानवधारण
६३।१ पूर्वकल्पनेत्याह * किं चेति * श्लोकं व्याचष्टे * क्रिये
ष्वनन्तरफलानुपलब्धेः शास्त्रप्रामाण्याच्चावश्यं फलोत्पत्त्य
त्कालान्तरभाविफलसाधनत्वं भविष्यतीत्याशङ्कते * तत्रेति
नुष्ठानात्प्रागनन्तरानुत्पत्तेर्ज्ञातुमशक्यत्वादुत्तरकालं च शा
पाराच्छास्त्रान्तर्गतिर्नापूर्वस्य सम्भवतीति परिहरति * द
श्लोकं व्याचष्टे * न हीति * ननु योग्यत्वावधारणाधी
क्यार्थप्रतीतेरननुष्ठितस्य च योग्यताया: प्रमातुमशक्यत्वात्स
नुष्ठानोत्तरकालं शास्त्रार्थावधारणेत्याशङ्क्य ज्ञाते वा वचनं
द्वान्विहितो ऽस्तीति तार्तीयसूत्रावयवेनानुष्ठानोत्तरकालं *

प्रकारणे सत्यन्योन्याश्रयापत्तिः सूचिता कर्मफलकालयोर्वियोगो विप्रकर्षः प्राक्चापूर्वानपेक्षस्य कर्मणः साधनत्वे निश्चिते पश्चात्तदन्तर्भावना शास्त्रविरुद्धेति सूचयितुम् * यच्चेत्युक्तम् *वैगुण्यकल्पनयापि वानन्तरानुत्पत्तिसम्भवान्न शास्त्राविरुद्धार्थापूर्वकल्पना युक्तेत्याह *अपि चेति* सर्वाङ्गप्रधानसाध्यत्वात्फलस्य कस्मिंश्चित् विगुणे सति इतरसाद्गुण्येऽप्यनुत्पत्तिसम्भवं वक्तुं सर्वशब्दः।बहुपुरुषसाध्यत्वाच्चैकाशक्तावपि वैगुण्यापत्तिः कर्तृष्विति बहुवचनेनोक्ता । सर्वेषु पदार्थेषु बहवः कर्त्तारस्तेषु मध्ये क्व चित्पदार्थे क्व चित्कर्त्तर्यशक्तेरपरिहार्यत्वादित्यर्थः । श्लोकं व्याचष्टे * दृश्यतइति* प्रायेण तावद्वैगुण्यं दृश्यते यत्रापि न दृश्यते तत्रापि शास्त्राविरोधात्तदेव कल्पनीयमित्यर्थः । ननु स्वर्गनरकयोरामुष्मिकत्वेनानन्तर्यायोगात्प्रागप्यनुष्ठानादपूर्वद्वारेव तदुत्पत्त्यवधारणं भविष्यतीत्याशङ्क्याह * नेति * एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति * निरतिशयसुखदुःखात्मकयोस्तादृशसुखदुःखोपभोगयोग्ययोर्देशविशेषयोर्वा स्वर्गनरकवाच्यत्वात्तयोश्चानेन शरीरेण प्राप्त्यसम्भवाच्चानन्तर्यानुपपत्तिरित्याशङ्क्यालौकिकयोः सम्बन्धग्रहणासम्भवेन वाच्यत्वायोगात्सूक्ष्माणि वासांसि स्वर्गः चन्दनं स्वर्ग इति च सुखहेतौ द्रव्ये स्वर्गशब्दप्रयोगेणाकृतिन्यायाद्विशेषणभूतस्य लौकिकस्य सुखस्य स्वर्गशब्दवाच्यत्वावगतेर्दुःखहेतौ च दारिद्र्ये नरकापरपर्यायदुर्गतिशब्दप्रयोगाद्विष्ठायां च दुःखहेतौ नरकशब्दप्रयोगदर्शनादाकृतिन्यायेनैव लौकिकदुःखवाचित्वावगतेरानन्तर्योपपत्तिरिति सुखदुःखात्मकत्वेनेत्यनेनेन सूचितम् । श्लोकं व्याचष्टे * न हीति *ततश्च स्वर्गनरकयोरप्यानन्तर्योपपत्तेर्न ग्रामादिभ्यो विशेषोऽस्तीत्युपसंहरति* नेतीति * शास्त्रीयक्रियाजन्यत्वेनापूर्वस्य चेष्टत्वान्निषेधाधिकारे च निषेध्यस्य हननादेर्लोकसिद्धत्वेनाशास्त्रीयत्वात् शास्त्रीयायाश्च तन्निवृत्तेः फलाभावेनापूर्वानपेक्षत्वान्न तत्कल्पना युक्तेत्याह * किं चेति* श्लोकं व्याचष्टे * ब्राह्मण इति*एवं चापूर्वस्य श्रुतसाध्यसाधनसम्बन्धविरोधित्वाद्विनष्टस्यापि च कर्मणस्तत्सम्बन्धिनः पुरुषस्य वा विनाशस्यैव वा साधनत्वोपपत्तेः कालान्तरभाविफलत्वानन्यथाद्यापूर्वस्यासम्भवित्वात्कल्पनानुपपत्तिमुक्त्वा इदानीं श्रुतसाध्यसाधनसम्बन्धानुपपादकत्वादपि कल्पनानुपपत्तिमाह * कल्पितमिति * यागादेर्हि व्यापारात्मकत्वात् जन्मनैव कार्यारम्भकत्वं युक्तम् अपूर्वस्य त्वव्यापारात्मकत्वान्निर्व्यापारस्य कार्यारम्भकत्वानुपपत्तेः। श्रुतसाध्यसाधनसम्बन्धानुपपादकत्वाद्व्यर्था कल्पनेत्याशयः ।

स्वर्गनरकोपभोगाय देशान्तरे शरीरस्य प्राप्तिर्लोभोत्पत्त्यपरपर्या
क्षिता य चादिशब्दात्पुत्रादेः प्राप्तिरपेक्षिता तत्साधनेनापूर्वं समः
त्यर्थः। स्थाय्याश्रयाभावेन चापूर्वस्य स्थायित्वायोगाच्छ्रुतसाध्यः
नसम्बन्धोपपादकत्वं नास्तीत्याह *न चेति * प्रक्षेपान्तस्य याः
पूर्वारम्भकत्वेनेष्टत्वात्प्रक्षेपस्य च द्रव्यदानाश्रितत्वाद् द्रव्यदा
तिरिक्ते यजमाने ऽपूर्वारम्भकत्वानुपपत्तेर्द्रव्यदानस्य च विनाः
शापूर्वाश्रयः स्थायी सम्भवतीत्याशयः । वार्त्तिककृन्मते यागस्य
डाशसाध्यत्वे ऽपि सङ्कल्पात्मकत्वेनात्माश्रितत्वाद् द्रव्यदानप्र
दीनां हि सर्वेषामिति सिद्धान्तवार्त्तिकदर्शनाच्च पुरोडाशादा
मानत्वात्पुरोडाशादिशब्देन द्रव्यदानमेवोक्तम्।अङ्गापूर्वाणामप
स्थाय्याश्रयः सम्भवतीत्यतिदिशति * एवमिति * अङ्गापूः
प्रधानापूर्वेण सम्बद्धं न वा असम्बद्धत्वे तावन्नोपकारित्वं सः
तीत्याह *किं चेति * आराच्छब्देन क्रियासाधनासमवायो ऽभि
प्रधानाश्रयात्माश्रितत्वात्प्रधानाश्रयत्वे त्वारादुपकारित्वं विरु
त्याशयः । श्लोकार्थमुपपादयति * न हीति * सम्बन्धस्तु संः
द्धभावादाश्रयाश्रयिभावो वाच्यः अङ्गानां च प्रधानापूर्वसम्ब
भावेन तत्समवेतापूर्वोत्पादकत्वायोगात्पारिशेष्यात्पतनप्रबन्धल
एवाश्रयाश्रयिभावः परिशिष्यते। न चामूर्त्तस्य पतनप्रतिबन्धः
स्तीत्याह *न चेति * नन्वारादुपकार्यङ्गानां प्रधानापूर्वसम्बन्धः
धेन तत्समवेतापूर्वोत्पादकतायोगे ऽपि सन्निपत्योपकार्यङ्गाः
धानापूर्वसाधनाश्रयत्वेन तत्सम्बन्धसद्भावात्तत्समवेतापूर्वोः
कत्वं भविष्यतीत्याशङ्क्याह * यदपि चेति * लक्षणार्थत्वेनोपन्न
व्रीह्यादिद्रव्यमात्रक्षये तत्समवायिनो ऽपूर्वस्य क्षयादित्यर्थः
व्रीह्याश्रितस्याप्यपूर्वस्यावघातेन व्रीहिनाशे ऽन्यत्र तण्डुलादावस
राच्च तद् द्वाराप्रधानापूर्वोपकारित्वं स्यादित्यर्थः । सन्निपात्यः
आत्मात्मिकापूर्वमात्रपर्यवसायित्वस्य वक्ष्यमाणत्वात्फलसाधनस
धानस्य साध्यं यदपूर्वं तस्येति व्यधिकरणे षष्ठ्यौ व्याख्येये ।
ङ्गापूर्वाणां प्रधानापूर्वसमवाये ऽपि प्रधानापूर्वाश्रयात्माश्रितः
कार्थसमवायात्प्रधानापूर्वोपकारकत्वं भविष्यति फलसाधनः
ध्यतासाधनार्थत्वेन च क्रियासाधनांशानिवेशाभावात् सन्निपत्
कारित्वानापत्तेरारादुपकारकत्वाविरोध इत्याशयेनाशङ्कते *
५।१ त्विति*प्रधानापूर्वाणामप्यात्माश्रितत्वसूचनायापिशब्दः आत्मा
त्वे सत्यपूर्वस्य योग्यतालक्षणत्वात्फलभोगयोग्यत्वस्यैवात्मनापेक्ष
त्पुरुषार्थतापद्येतेति दूषणमाह*एवं सतीति* विधिस्थैकश्रुतित्व

त्र चान्योन्यसापेक्षाणामङ्गापूर्वाणामुपकारकत्वस्य वक्ष्यमाणत्वा-
म्बन्धानां चान्योन्यसापेक्षैककार्यारम्भकत्वलक्षणयौगपद्यायोगा-
पकारकत्वं सम्भवतीत्याह *अपि चेति * एकोखासंयोगादिलक्ष-
न्योन्यसम्बन्धसम्बद्धानामेव ग्रावादीनामेकोखाख्यैव धारणाख्य
कार्यारम्भदर्शनात् सम्बन्धं विनान्योन्यस्यापेक्षैककार्यारम्भक-
लक्षणं यौगपद्यं न सम्भवतीत्याशयः। प्रधानापूर्वाणामप्यन्यो-
पेक्षाणामेकफलसाधनत्वलक्षणं फले यौगपद्यमेकादशाद्ये वक्ष्य-
णमन्योन्यसम्बन्धभावादेवायुक्तमित्यातिदिशति * एतेनेति *
ो ऽपूर्वस्यासम्भवित्वाद्विरोधित्वादनुपपादकत्वाच्च कल्पनानुप-
त्तन्निरपेक्षाणामेव प्रधानानां पुरुषार्थसाधनत्वमङ्गानां च प्रधा-
कारसाधनत्वमित्युपसंहरति * तस्मादिति * कृतत्वमात्र-
न विनष्टस्य कर्मणो ऽतिक्रान्तयागस्य वा पुरुषस्य कर्मविनाश-
व वा फलसाधनतेति पक्षत्रयमपि संगृहीतं, किं चापूर्वं यागादि-
त्पाद्यते ऽभिव्यज्यते च नोभयथापि सम्भवतीत्याह * न चे-
* उत्पत्त्यसम्भवे तावत्प्रश्नपूर्वकं विकल्प्य हेतुमाह * कुत
। * अङ्गकर्मजन्यस्योपकारापूर्वस्य प्रधानकर्मजन्यस्य च फला-
स्यानवयवत्वात्क्रमशो ऽपि तज्जन्मसम्भवित्वं न प्रतीयतइत्यर्थः।
देवोपसंहरति * एवं तावदिति * ननु यथा स्फोटवादिभिर्नि-
यवस्यापि स्फोटस्य क्रमवर्त्तिभिर्नादैरस्फुटस्फुटस्फुटतरत्वेनाभि-
क्तिरिष्यते तथापूर्वस्य निरवयवस्याप्याग्नेयादिभिः क्रमप्रवर्त्ति-
स्फुटस्फुटस्फुटतरत्वेनाभिव्यक्तिर्भविष्यतीति द्वितीयकल्पमा-
त्य दूषयति * न चेति * एतदेव प्रश्नपूर्वमुपपादयति * क-
ति * प्रत्यक्षग्राह्यस्यैवार्थस्य लोके ऽभिव्यक्त्यपेक्षादर्शनात्त-
श्चेन्द्रियविषयद्वयान्यतमसंस्कारद्वारदर्शनादप्रत्यक्षत्वाच्चापूर्वे
नुपपत्तेर्नाभिव्यक्तिः सम्भवतित्याशयः। ननु कुलालादिव्यापा-
तविलक्षणाप्यभिव्यक्तिः घटादेः सांख्यैरिष्टेत्याशङ्क्य नो लौकि-
नां * दर्शनइत्युक्तम् * श्लोकं व्याचष्टे * सर्वेति * अपूर्वापे-
न्तरशब्दः घटादेश्चालोकानन्तरमुपलम्भात् प्रत्यभिज्ञया च प्राक्
वावसायात्तदभिव्यङ्क्तेष्यते ऽपूर्वस्य तु यागाद्यनन्तरमप्यनुपल-
त्प्राक् सत्त्वे च प्रमाणासत्त्वान्न द्वयमप्यभिव्यङ्ग्यत्वकारणमस्ती-
ह * यदि चेति * अपरेषां निपुणं मन्यानां मतमुपन्यस्तमुपसं-
ति * इतीति * असम्भाव्यमानत्वाद्विरोधित्वादनुपपादकत्वा-
त्त्यभिव्यक्त्योश्चाभावादिति सर्वथाशब्देनोक्तं न केवलमपूर्वास-
वादस्य सूत्रस्यापूर्वसद्भावप्रतिपादनार्थत्वं ते नेच्छन्ति किं त्वबा-

चकत्वादपीत्याह * न चेति * भाष्यकृद्व्याख्यादूषणमुपसंह
* इतीति * प्राभाकरवत्कार्यनियोगापरपर्यायस्वतन्त्रापूर्वाभ्यु
गमे परोक्ता दोषाः स्युर्नास्मदभिमतशक्तिरूपाभ्युपगम इति भाष्य
दूष्याख्यानमभिधातुमुपक्रमते * अत्रेति * विग्रहवद्विवेति शरी
तं स्वातन्त्र्येण कार्यारम्भकत्वमुपमानेनोपलक्षितम्। अङ्गकर्मभ्यः
फलोत्पादनायोग्यस्य प्रधानकर्मणः फलोत्पादनयोग्यता प्रधानक
भ्यः प्राक् फलोपभोक्तृत्वायोग्यस्य पुरुषस्य फलभोक्तृत्वयोग्यत
र्थः। कर्मजन्यत्वं वक्तुं कर्मभ्यः परेत्युक्तं लौकिककर्मजन्याया
ग्यताया अपूर्वत्वनिवृत्त्यर्थम् * शास्त्रेत्युक्तम् * श्लोकं व्या
* प्रधानेति * तदुपलम्भकप्रमाणाभावेनापूर्वस्यासत्त्वं यदुक्तं
६।५ दनुभाषणपूर्वकं निरस्यति * यत्त्विति * सर्वप्रमाणाभावे स
भावः स्यान्न कतिपयप्रमाणाभावमात्रेणेत्याशयः। न तु प्रत्यक्ष
प्रवृत्तौ शशशृङ्गवदभावनिश्चयात्तद्विरोधेन श्रुतार्थापत्तेरप्यप्रवृ
पपत्तेः कथमन्याप्रवृत्तिरदोष इति स्वयमेवाशङ्क्याह * किमि
प्रमाणान्तरायोग्यत्वादप्रवृत्त्या नाभावनिश्चय इत्याशयः। न
सत्यपूर्वस्यानागमिकत्वात्तद्द्वारस्य श्रेयः साधनत्वस्यागमिकत
स्यादित्याशङ्क्याह *शब्देति * श्रुतशब्दैकदेशभूतशब्दकल्पकत्वेन
ब्दैकदेशभावाच्छ्रुतार्थापत्तिरप्यागम एवेत्यर्थः। विवक्षितार्थ
वाक्यार्थप्रतिपादनाशक्तेः श्रुतशब्दमात्रस्यापरिपूर्णत्वसूचनार्थः
र्थशब्दः। शब्दैकदेशत्वमेवोपपादयितुमुपक्रमते * येनेति *
विनष्टाविनष्टकारणसाधारणी शक्तिः कार्यकारणनियमासि
कल्प्यमानापि क्रियाजन्यत्वाभावान्नापूर्वशब्दाभिधेयेत्याश
* नियोगतश्चेति * शक्तिकल्पनावश्यकत्वं वक्तुमेतदुक्तं व
स्त्वत्र कर्मफलसम्बन्धचोदनायामतीतानामेव कर्मणां जन्य
क्तिरेष्टव्येत्यर्थः अनन्तरफलोत्पत्तावप्यावश्यकत्वं नियोगतश्चे
नोक्तम्। एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति * श्लोकं
चष्टे * यदेव हीति * केवलस्यापि दर्शस्यानेककर्मात्मकत्व
७।१ क्तिं विना साहित्यासम्पत्तेः * तदन्त्यं वेत्युक्तम् * यदा च
विना भूयसां यौगपद्यं न सम्भवति तदानन्तरफलोत्पत्तावपि
कर्मान्ते फलोत्पत्तेरभ्युपगन्तव्यत्वाच्छक्त्यनङ्गीकरणे चानन्त
शेषेणैकस्यैव साधनत्वापत्तेः शक्तिद्वारा यौगपद्यं सर्वकर्मणां
धनत्वव्यवहारायाङ्गीकार्यमित्याह * नियोगतश्चेति * सर्व
द्धवाक्येन द्रढयति * तथा चाहेति * सर्वपदार्थानां कार्यार
म्भव्यवहाराङ्गतत्त्वस्य शक्तिद्वारत्वात्प्रोक्षणादिपदार्थस्वरूपे

तत्वादन्यदेशे विनष्टत्वाच्चान्यकाले ऽपि सञ्चारिस्थायिशक्ति-
ा व्यवहारः सिद्ध्यतीत्यर्थः । नन्वचिनष्टस्य कर्मणः शक्तिरलौकि-
त्याह * लौकिकं चापीति * कालान्तरे यस्योद्गतिरिति विग्रहः
कं व्याचष्टे * यान्यपि चेति * क्रियाअन्यकार्योत्पत्त्यनुकूलाद्द-
तिशयात्मकत्वात् संस्कारूपतापूर्वस्य संस्कारशब्देन सूचिता
; लोके प्रमाणान्तरानुसारात्संस्कारात्मकशक्तिकल्पनं युक्तं वेदे
ास्त्रैकसमधिगम्यत्वात्तस्य चानुष्ठानात्प्रागेव प्रवृत्तेस्तदा च फ-
य कालान्तरीयत्वान्निश्चयात्मापूर्वाख्यसंस्कारात्मकशक्तिकल्पना
त्याशङ्कां निरस्यन् श्रुतार्थापत्तिप्रमाणकत्वमपूर्वस्योपसंहरति *
ति * फलस्यानेकाङ्गप्रधानसाध्यत्वात्तेषां च क्षणिकत्वेन स्वरूप-
हित्यायोगात्फलस्यानन्तरोत्पत्तावपि साहित्यसिद्ध्यर्थं शक्तिक-
नानुष्ठानात्प्रागप्युपपन्नेत्याशयः । एवं स्वपक्षसाधनमुक्त्वा इदा-
परोक्तानि दूषणानि परिहरिष्यन्नपि च यदि तावदित्यनेनोक्तं
तसाध्यसाधनसम्बन्धविरोधं तावदनुभाषणपूर्वकं परिहरति *
त्वाति * श्लोकं व्याचष्टे * यदि हीति ननूदकाहरणसाधनघट-
धनस्यापि कुलालस्योदकाहरणसाधनत्वाप्रसिद्धेः । कथं यागो-
ादितया शक्त्या साधितस्य फलस्य यागः साधनमित्याशङ्कानिरा-
र्थत्वेन द्वारशब्दं व्याख्यातुम् * सर्वेत्युक्तम् * यथा काष्ठादेर्ज्व-
ाद्यवान्तरव्यापाररूपद्वारापेक्षत्वे ऽपि पाकादौ साधनत्वाविघा-
तथासंस्कारात्मकद्वारापेक्षत्वे ऽपि साधनत्वाविघात इति सूच-
तुं व्यापारशब्दः । नन्वपूर्वस्य व्यापारात्मकतानेनोक्ता व्यापारत्वे
य स्थायित्वानुपपत्तेः । शक्तिसंस्कारत्वोक्तिविरोधापत्तेश्च का-
त्पत्त्यनुकूलो ह्यदृष्टो ऽतिशयः सिद्धरूपः शक्तिशब्दवाच्यः सामा-
तः प्रसिद्धस्तद्विशेषस्त्वागन्तुकः संस्कारशब्दवाच्यः प्रसिद्धो न
ापारात्मकः साध्योद्देशप्रवृत्तकर्तृव्यापारव्याप्यत्वाद्व्यवहितस्या-
यागस्य साधनत्वाविघात इत्याशयः । अथ वेत्यनेन सर्वस्य द्-
ादेरवस्थान्तरापत्त्यपेक्षत्वे ऽपि साध्यत्वाविघातदर्शनात् स्वर्गादेः
त्याख्यापूर्वात्मकावस्थान्तरापत्त्यपेक्षित्वे ऽपि साध्यत्वाविघाता-
ाधानार्थत्वेनोत्तरार्द्धं व्याख्यातम् । उपभोग्यानुपभोग्यावस्थे स्थूल-
क्ष्मशब्दाभ्यामभिप्रेते यदा च स्थाय्यपूर्वं शक्त्यात्मकत्वात्कर्मफ-
ाभ्यामनत्यन्तभिन्नं तदा फलं भवद्भावयेदनेनेत्थमिति त्रयाणामपि
ावनांशानां यौगपद्याभिधानमपि कर्मफलकालयोरविच्छेदादुपप-
भवतीति सूचयितुमाह * एतावानिति * परिहारद्वये ऽपि वृ-
:सम्मतिमाह *आह चेति * ज्वलनक्रियाद्वारा पक्तव्यमिति द्वार-

निर्देशोक्तिः सर्वसाधनानां द्वारापेक्षाप्रदर्शनार्था साध्यस्यावस्थान्त
रापेक्षायामुत्तरार्द्धेन दृष्टान्तोऽभिहितः । यत्त्वपूर्वं विनापि कर्मफल
योः साध्यसाधनसम्बन्धानुपपत्तिपरिहारोपपत्तेर्नापूर्वं कदा कि
त्फलसाधनत्वेन सम्भाव्यतइत्युक्तं तदनुभाषणपूर्वकं निरसितुमुप
क्रमते * यत्त्विति * यदि शास्त्रादेवावगम्यते किं भवतो विरुध्य
इत्यनेन विनष्टस्यापि कर्मणस्साधनत्वोपपादनेनानुपपत्तिपरिहारमु
क्तम् तावत्प्रश्नपूर्वं निरस्यति * कुत इति * न सम्भावि
सामर्थ्यरूपेण स्थायित्वं यस्येति विग्रहः । श्लोकं व्याचष्टे *नूनमि
ति * एतदेवोपसंहरति * तस्मादिति * अवधारणाप्यपूर्वस्यानुष्ठा
नात्प्रागेव सिद्धा किमुत सम्भावनेत्यर्थः । यदपि यष्टुरेवात्मनं
यागैः सङ्गतस्येत्यनेनातिक्रान्तयागस्य साधनत्वोपपत्तेरपूर्वस्यासम्भ
वित्वमुपपादितं तदपि निरस्यति * न वेति * श्लोकं व्याचां
* यदि हीति * अतिक्रान्तानतिक्रान्तयागयोरिति बहुव्रीहिणा
अतिक्रान्तानतिक्रान्तयागपुरुषविशेष इति मध्यमपदलोपीसमासं
व्याख्यातः । अविशेषमेवोपपादयति * आत्मत्वमिति * नन्वा
त्मत्वाविशेषेऽपि विनष्टयागे पुरुष स एष यज्ञायुधी यजमान इ
त्यादिप्रयोगदर्शनेन यजमानत्वस्य भावादकृतयागे चाभावाद्विशेषे
ऽस्तीत्याशङ्क्याह * यागत्वमपीति * अयं भावः यागान्वितं व
रूपं यजमानत्वेनाभिमतं यागविषयं कर्तृत्वमात्रं वा तत्राद्ये कल्पे
यागरूपस्य विनष्टानुत्पन्नत्वेनोभयत्रासरूपतया तुल्यत्वादविशेष
इति स्वरूपनिष्कर्षार्थभावप्रत्ययान्तेन यागशब्देनोक्तम् । यजमानशब्द-
प्रयोगस्तु भूतगत्या भविष्यतीति द्वितीयं कल्पं निरस्यति *न चेति*
यथा क्रियारहितस्यानुत्पन्नक्रियस्य निर्व्यापारत्वात्कर्तृत्वं नास्ति तथौ-
दासीन्याख्यमवस्थान्तरं प्राप्तस्य विनष्टक्रियस्यापीत्यर्थः । कर्तृश-
क्तिस्तु सर्वदा सद्भावान्न विशेषादिकेति स्वयमेवाशङ्क्याह * क-
र्त्रीति * उक्तेन च प्रकारेणातिक्रान्तानतिक्रान्तयागयोः पुरुषयोर्वि-
शेषाभावे शुद्धस्य पुरुषस्य साधनत्वापत्तेस्तस्य चावैलक्षण्यात्फलवै-
लक्षण्यं न स्यादित्याह * अपि चेति * ननु विशेषान्तराभावेऽप्य-
तिक्रान्तयागत्वमेव विशेषो भविष्यतीत्याशङ्क्याह * तथेति *
अतिक्रमस्य विनाशस्य कार्यानुपयोगित्वेनोपलक्षणमात्रार्थत्वाद्यागा-
न्तरातिक्रमे चोपलक्ष्ये पुरुषे विशेषाप्रतीतेः फलविशेषासिद्धिरित्या-
शयः । एकयागगतप्रयोगाल्पत्वबहुत्वेऽप्येतं दोषमतिदिशति * एते-
नैवेति * फलविशेषाभाक्त्वेन निरस्ता इत्यर्थः । कर्तुश्चाख्यातवा-
च्यत्वे सति प्रकृत्यर्थस्य यागस्य तद्विशेषणत्वप्रतीतेर्विनष्टस्य च का-

नुपयोगित्वात्प्रमेयान्तर्भूतव्यावर्त्तकत्वे लक्षणाविशेषणत्वानुपपत्ते-
रलक्षणत्वमात्रकल्पनयातिक्रान्तयागस्य पुरुषस्य साधनत्वं स-
गाव्येत तस्य कर्त्रधिकरणे निषेत्स्यमानत्वाद्यागस्य पुरुषोपलक्षण-
ानुपपत्तेः शुद्धस्यैव पुरुषस्य साधनतापत्तेः फलनानात्ववैचित्र्ये
युज्येते एवेत्याह * कर्त्रिति * ननु विनष्टस्य यागस्य वैलक्षण्या-
पादकत्वे तज्जन्यस्यापूर्वस्यापि वैलक्षण्यानुपकृतेर्नावैलक्षण्यापत्ते-
वत्पक्षे ऽप्येतौ दोषौ तुल्यावित्याशङ्क्याह * यस्य त्विति * का-
कल्प्यत्वाद्यथाकार्यं विलक्षणमेव तत्कल्प्यत इत्याशयः । यथा
सत्तातिक्रान्तयागस्य कर्त्तुः फलसाधनस्य फलान्तरोत्पादनकाले
पे भावाद् बहुप्रयोगानुष्ठानानर्थक्यं तथातिक्रान्ताङ्गस्यापि कर्त्तुः
र्मोपकारित्वाभ्युपगमे सकृत्कृतेष्वङ्गेषु श्रुतिक्रान्ताङ्गस्य कर्त्तुः फ-
न्तरकाले ऽपि भावात्कर्मान्तराणामप्युपकारसिद्धेः पुनरनुष्ठाना-
र्थक्यमित्याह * किं चेति * कुसूलमध्यगतस्य धान्यस्य धान्या-
राद्यवच्छेद्यत्वदर्शनादङ्गमध्यगतत्वेनाङ्गावच्छिन्नतोक्ता यथा प्रधा-
वच्छिन्नः कर्त्ता फलसाधनं तथोपकारको ऽप्यङ्गावच्छिन्नः कर्त्तैव
दिष्यते ततः प्रकृतौ कृतैरङ्गैर्विकृतावपि प्रसङ्गेनोपकारसिद्धेर्विकृ-
वङ्गानां प्राप्तिर्न स्यादित्यर्थः । श्लोकं व्याचष्टे *प्रयाजादीनामिति*
पकार्यभेदे ऽपि तावदन्यार्थसिद्धोपकारसद्भावे ऽप्यन्यो नापेक्ष्यते
ह तूपकार्यमप्यभिन्नमिति सो ऽपि चेत्यनेन सूचितम् । नन्वङ्गानामपू-
र्थत्वस्य वक्ष्यमाणत्वान्न कर्त्तुरुपकार्यतेत्याशङ्क्य *अपूर्वाभावादि-
युक्तम् * प्रयाजादिगतस्यातिक्रान्तप्रयाजादिकर्तृजन्यस्योपकारस्य
द्भावेनान्यार्थाङ्गकृतस्योपकारस्येतरत्रापि सन्निधानाविशेषरूपप्रस-
लक्षणसद्भावात्तस्य कृतप्रयाजादेः पुरुषस्य न पुनरङ्गान्यनुष्ठातव्या-
ीति कर्त्तृपक्षेप्यङ्गीकरणात्तेन नानुष्ठातव्यानीत्यर्थः । ननु तन्त्रम-
[illegible] मुख्यतन्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वादि-
[illegible]ने तन्त्रमध्यविधाननिबन्धन-
[illegible] वक्ष्यमाणत्वात्कर्मभिः तदभावे प्रसङ्गः स्यादित्याश-
ङ्क्य * विनापीत्युक्तम् * अन्यार्थाङ्गकृतस्योपकारस्यान्यत्रापि सन्नि-
धानाविशेषस्तन्त्रार्थस्याविशिष्टत्वादित्यनेनोक्तः । तन्त्रमध्यविधानस्य
फलं तच्चेह न तन्त्रमध्यविधानं विनाप्युपकारस्यारम्भो [illegible]
यतइत्यर्थः । को ऽननुष्ठाने दोष इत्याशङ्क्याह *तत्रेति* ननु पश्व-
ममनुष्ठितैर्विद्युदादिभिर्ब्राह्मणतर्पणान्तैः सर्वैरङ्गैः सम्पाद्यस्योपकार-
याद्याङ्गानुष्ठानेनोपक्रान्तस्यान्त्याङ्गानुष्ठानात्प्रागसमाप्तेस्तन्मध्ये ऽनु-

१ अनुपलम्भे नेति २ पु० पा० ।

ीयमानेन पशुपुरोडाशेनैकदेशकालकर्तृकत्वात्प्रसङ्गेन तादर्थ्यमपि
क्तं, विकृतेस्तु प्रकृतिप्रयोगबहिर्भावात्प्रकृतौ कृतस्योपकारस्य वि-
त्या सहैकदेशकालकर्तृत्वानुपपत्तेस्तादर्थ्यमयुक्तमित्याशङ्क्य * न
वति * प्रकृतौ कृतानां प्रयाजादीनां विकृत्या सह कालभेदादेत-
याजाद्युपकृतमात्मरूपं न विकृतौ प्रसङ्गेनोपकरोतीत्यर्थः । पश्व-
स्यापि प्रयाजानुयाजादेः पुरोडाशप्रयोगे ऽनुपक्रान्ते समाप्ते च
ुष्ठानाद्भिन्नकालस्यापि प्रासङ्गिकत्वोपकारकत्वं दृष्टमित्याशङ्क्य
अत्यन्तेत्युक्तम् * पश्वर्थप्रयाजादिप्रयोगस्य पुरोडाशप्रयोगाद् ब-
र्भावे ऽपि पुरोडाशप्रयोगस्य तदन्तर्भावेन नात्यन्तं कालभेदो ऽस्ती-
ाशयः । विकाराच्च न भेदः स्यादर्थस्याविकृतत्वादिति द्वादशा-
ग्करणसूत्रे पाशुकानां प्रयाजानुयाजानामेकादशसंख्यत्वेन पौरो-
शिकेभ्यः पञ्चत्रिसंख्येभ्यो ऽनुयाजानां च पृषदाज्यद्रव्यकत्वेन शु-
ाज्यद्रव्यकेभ्यः पौरोडाशिकेभ्यो गुणतो विकृतत्वात्तिष्ठत्पशुका-
त्वेन च पाशुकानां प्रयाजानां पौरोडाशिकेभ्यः सन्नहविष्काले-
ः कालतो विकृतत्वादनुष्ठानभेदः स्यादित्याशङ्कानिरासार्थं गुण-
ालविकारे सत्यप्यर्थस्योपकारस्याविकृतत्वान्नानुष्ठानभेद इत्यभि-
ानेनास्यापि चोद्यस्योत्तरमुक्तं भवतीत्याह * वक्ष्यतीति * न-
ातदेककालोपकारविषयत्वात्कथं कालभेदचोद्यस्योत्तरमित्याश-
् आह * यदेव हीति * कर्तृव्यतिरिक्तापूर्वानभ्युपगमेनास्मि-
क्षे कर्तुरेवोपकारकत्वात्तस्य च स्थायित्वेनाविकृतत्वात्कालभेदे
यन्यथात्वाभावात्प्रसङ्गसिद्धिराविरुद्धेत्याशयः । अतिक्रान्तयाग-
र्तृपक्षोक्तदोषाः कर्मविनाशस्यापि साधनत्वपक्षे ऽतिदेष्टव्या इत्याह
एतद्धति * कथमित्यपेक्षायामनुभाषणापूर्वकमातिदिशति * य-
ापि चेति * हिशब्दार्थे चशब्दः एतदेव दृष्टान्तेनोपपादयति *त-
ा हीति * महारोगापेक्षया रोगान्तराणां शुभत्वं विवक्षित्वा शु-
शुभकर्मविनाशाविशेषदृष्टान्तत्वं वाराद्ध्येन रोगानुत्पत्तेरप्युपल-
णात्प्राक् प्रध्वंसाभावाविशेषदृष्टान्तत्वं विनाशानां तु वैचित्र्याभ्यु-
ामे वस्तुन्येव वैचित्र्यदर्शनात् वस्तुत्वापत्तेः । कर्मानन्तरभावित-
द्विनिध्वस्त्वन्तराभावान्नामान्तरेणापूर्वमेव स्यादित्याह * यदि
ाति * श्रुतहानाश्रुतकल्पनाप्रसङ्गश्चास्मिन्पक्षे स्यादित्याह * न
ति * श्लोकं व्याचष्टे * यजेतेति * यद्वा यथाश्रुतस्वर्गत्यागे-
श्रुतस्वर्गाभावस्य फलत्वकल्पनं न युक्तं तथा श्रुतयागत्यागेनाश्रु-
य यागाभावस्य साधनत्वकल्पनमपीति वक्रोक्त्या दर्शयन् पूर्वार्द्धं
ाचष्टे * अथ वेति * ननु यथापूर्वसाधनत्वकल्पने ऽपि न या-

गसाधनत्वाद्धानिस्तथा यागाभावस्यापि साधनत्वेन तद्धानिरित्याश-ङ्कानिरासार्थत्वेनोत्तरार्द्धं व्याख्यातुं पूर्वोक्तमेवापूर्वपक्षे श्रुतहानाश्रुतकल्पनाप्रसङ्गाभावमाशङ्कापूर्वकं स्मारयति * अपूर्वेति * भावनिरपेक्षस्याभावस्य साधनत्वादर्शनान्न विनाशस्य साधनत्वं सम्भवतीत्याह * न चेति * ननु विहिताकरणस्याभावरूपस्यापि प्रत्यवायसाधनत्वस्मृतेस्तत्कालान्यकरणापेक्षत्वे च तस्यौदासीन्यमात्रेणापि प्रत्यवायपरिहारसिद्धेरनुष्ठानानर्थक्यप्रसङ्गादवर्जनीयस्य निषिद्धादेः प्रत्यवायसाधनत्वे विहितानुष्ठाने ऽपि प्रत्यवायापत्तेर्विहिताकरणापेक्षत्वे[1] च तस्यौदासीन्यमात्रस्य निमिषितादेः साधनत्वेऽन्वयव्यतिरेकाभ्यामकरणस्यैव साधनत्वापत्तेर्भावनिरपेक्षस्याभावस्य साधनत्वं दृष्टमित्याशङ्क्याह * यदि त्विति * गुर्वाज्ञस्नानुष्ठानेनाहमवज्ञातो ऽस्मीत्यवज्ञानिमित्तगुरुकोपदर्शनाद्विहितावज्ञाख्यभावसहकृतस्यैव विहिताननुष्ठानस्य साधनत्वकल्पना युक्तेत्याशयः * अत एवाचार्यैः *

स्वकाले यदकुर्वन्स्तत्करोत्यन्यदचेतनः ।
प्रत्यवायो ऽस्य तेनैव नाभावेन स जन्यते ॥

इति विहितमकुर्वन्यदन्यत्करोतीति वदद्भिर्विहिताकरणनिमित्तस्यान्यकरणस्य प्रत्यवायनिमित्तत्वाभिधानादवज्ञायामेव चाकरणस्य निमित्तत्वोपपत्तेर्विहितावज्ञानमेव प्रत्यवायहेतुत्वेनोक्तम् । अभावेनैव जन्यतइत्येवशब्दोत्कर्षेण केवलस्य हेतुत्वं निरस्तम् । एवं च विहितस्याननुष्ठानान्नरः पतनमृच्छतीति स्मृतिरनुगृहीता भवति निमिषितादेस्तु हेतुत्वे विहिताकरणस्य किंचित्करणत्वाभावात् स्मृतेर्बाधापत्तिः एतां वाव स देवतामपरुणद्धि यो ऽलमग्निहोत्राय सन्नाग्निहोत्रं जुहोतीति वापरोधशब्देनावज्ञाभिधानात्सैव प्रत्यवायहेतुर्वेदादवसीयते निमिषितादेस्तु हेतुत्वं निष्प्रमाणकमेव तस्मादवज्ञाख्याशयविशेषरूपस्य भावान्तरस्य तत्रसम्भवान्न शुद्धस्य क्वचिद्धेतुता दृष्टेति ग्रन्थार्थः । याप्यपूर्वेऽस्य दोषस्य तुल्यतोक्ता तामनुभाषणपूर्वं परिहरति * यत्त्विति * यत्त्वपूर्वस्य शास्त्रानन्तर्गतिरुक्ता तामप्यनुभाषणपूर्वं परिहर्तुमाह * यत्त्विति * अनन्तरफलत्वे ऽप्यनेकाङ्गप्रधानसाहित्यमपूर्वं विना न सम्भवतीत्याशयः स्वर्गस्य ज्वरादिदुःखाननुविद्धकेवलसुखात्मकत्वेन परलोकानुभवनीयत्वेन च षष्ठाद्ये भाष्यकृता वक्ष्यमाणत्वात्तत्प्रतियोगित्वेन नरकस्य सुखाननुविद्धकेवलदुःखात्मकत्वेन परलोकानुभवनीयत्वेन च

1 पेक्षत्वेति २ पु॰ पा॰ । तत्र तस्यौदासीन्यमात्रस्येति नास्ति

१२ सूचयिष्यमाणत्वप्रतीतेरानन्तर्यासम्भवाच्छास्त्रार्थावधारणवेलाय
च कर्मफलकालयोर्विप्रकर्षावगतेरपूर्वस्य शास्त्रान्तर्गतिरस्तीत
*स्वर्गेति* निरतिशयत्वस्यालौकिकत्वे ऽपि शब्दे सुखदुःखात्मकत्व
सम्बन्धग्रहणासम्भवाच्चन्दनविष्ठादावुपचारेण स्वर्गनरकशब्दप्रयो
पपत्तेर्वाक्यशेषे ऽप्यस्य सुखनिरतिशयावगतेर्निरतिशयसुखदुःख
र्वाच्यत्वं सम्भवतीत्याशयः।ऐहिकस्यापि पुत्रादेरानन्तर्यं न सम्भव
त्याह * ऐहिकमिति * ग्रामादिप्राप्तेश्चानन्तर्यसम्भवे ऽपि चिरव
लोपभोगयोग्यत्वेन ग्रामादेः पुरुषापेक्षावशात्फलत्वावगमात्तस्य चा
र्वं विनानुपपत्तेः सूत्रादप्यपूर्वस्य शास्त्रान्तर्गतिरस्तीत्याह *न चेति
श्लोकं व्याचष्टे *चिरेति * एवं चानुष्ठानात्प्रागेव पूर्वान्तर्गत्यव
रणाद्वैगुण्यकल्पनयार्थापत्तेः प्रतिबन्धो यो ऽभिहितः सो ऽप्ययु
इत्याह * अतश्चेति * यापि निषेधेष्वपूर्वानन्तर्गतिरुक्ता तामप्य
भाषणपूर्वकं परिहरति * यद्विति * विधिवन्निषेधस्यापि शा
त्वात्तद्विषयस्य हननादेरपि शास्त्रीयतास्तीत्याशयः। हननादेर्लौकि
त्वाद्वैदिकापूर्वजनकत्वानुपपत्तिशङ्कां निरस्यन् श्लोकं व्याचष्टे *य
हीति * एवमसर्वस्य विरोधित्वासम्भवित्वे निरस्येदानीमनुपपा
कत्वं निरसितुं कल्पितमपि चेत्यनेनोक्तं निष्क्रियत्वं तावत् स
ध्यसाधनसम्बन्धानुपपादकत्वे हेतुं निरस्यति * सत्यपीति * 
श्चलस्याप्ययस्कान्तादेर्देशान्तरे कार्यारम्भकत्वदर्शनाच्चलनाख्य
याराहित्यनिमित्तो यः कार्यारम्भासामर्थ्यरूप उपालम्भो दोष उ
सो ऽप्ययुक्त इत्याशयः। निश्चलस्याप्यात्मनः प्रयत्नाख्यक्रियावत्त्
देशान्तरे शरीरप्रापणसामर्थ्यदर्शनाच्चलनादीत्यादिशब्देन यत्रोप
दानं प्रापणादीत्यादिशब्देन शरीरोत्पादनमुपभोग्यविषयोपनय
च्चोपात्तं येऽपि स्थाय्याश्रयासम्भवेनानुपपादकतोक्ता तामपि नि
२ स्यति * आत्मैव चेति * यत्त्वपूर्वजनिकायाः प्रक्षेपादिक्रियाया 
व्याश्रितत्वात्तद्व्यतिरिक्ते यजमानात्मन्यपूर्वारम्भकत्वं न सम्भवत
त्युक्तं तत्परिहरति * क्रियापीति। ननु प्रक्षेपादिक्रियायाश्चलनात्म
त्वात्सर्वगतात्माश्रितत्वं न युक्तमित्याशङ्क्याह * आत्मवाद इति
द्रव्यदानचलनहेतुभूतशरीरचलनात्मकस्य प्रक्षेपादेः प्रयोजक
व्यापारत्वात्प्रयोज्यव्यापारद्रव्यदानवत्कर्मभूतद्रव्याश्रितत्वानुपप
कर्त्राश्रितत्वस्यैव न्याय्यत्वाच्छरीरचलने ऽपि चात्मन एव कर्तृत्व
स्यात्मवादे सूचितत्वाच्चलनस्य शरीराश्रितत्वे ऽपि तदवच्छिन्न
शरीरचालनात्मकस्य प्रयत्नस्य भावनात्मकस्यापूर्वजनकस्यात्म
न्यपूर्वारम्भकत्वं युक्तमित्याशयः। एतदेव व्याचष्टे * द्रव्यदानेति

वात्माश्रितत्वे ऽपि क्रियायाः क्षणिकत्वेनोत्पन्नमात्रविनाशिन्यास्ते-
ःपद्यविनष्टत्वान्नास्यारम्भक्षमा ऽपि हीत्यनेन न्यायेनापूर्वारम्भ-
यं न सम्भवतीत्याशङ्क्याह *अतश्चेति*आशुतरविनाशः क्षणिक-
नोत्पन्नविनाशित्वियाशयः। नन्वात्माश्रितत्वे ऽपि क्रियायाः स्वस-
तापूर्वाख्यशक्तिजनकत्वानभ्युपगमे क्रियापूर्वयोः काष्ठज्वलनव-
र्धर्मि भावाभावेनात्यन्तभेदापत्तेः श्रुतक्रियासाधनत्वानिर्वाहप्रस-
त् स्वसमवेतापूर्वजनकत्वस्य बलादभ्युपगमनीयत्वापत्तेः क्रिया-
ाशे तदाश्रितस्यापूर्वस्यापि काष्ठविनाश इव ज्वलनस्य विनाशे
ोत्पत्तिकालं यावदनवस्थानाच्छ्रुतसाध्यसाधनसम्बन्धोपपाद-
वं न सम्भवतीत्याशयेनाशङ्कते * कथमिति * द्रव्यमेव विशि-
त्त्यपेतं व्यापारशब्दवाच्यं भवतीत्यनेन न्यायेन क्रियात्मनोरत्य-
ेदाभावेनात्मसमवेतस्यापूर्वस्य क्रियातो ऽत्यन्तभेदाभावात् सा-
ाधनसम्बन्धोपपादकत्वं सम्भवतीत्याशयेन परिहरति * अत्रे-
* शङ्कापरिहाराशयौ प्रकटयति * कथमिति * आत्मसमवाये
शक्तित्वं विरुध्यतइत्याशङ्कार्थः।किं चाग्न्यादेरप्यदृष्टे ऽस्यातिशय-
दाहादिकार्यसाधकत्वोपपादकत्वमेवाग्न्यादिशक्तित्वं नाग्न्या-
ामवेतत्वं भास्वरत्वादेरग्न्यादिसमवेतत्वेनापि तच्छक्तित्वाप्रसि-
स्मृतिहेतौ च संस्कारे स्मर्त्रात्मसमवेते ऽपि संवित्सामर्थ्य-
त्रेनः स्मरणादित्यादिप्रयोगादनुभवशक्तित्वप्रसिद्धिरतो ऽन्यसम-
ऽपि कर्मशक्तित्वाविरोध इत्याह * अपि चेति * श्लोकं व्या-
* यदेति*नैतावता कर्मशक्तित्वहानिरिति शेषः। यच्चारादु-
र्यङ्गापूर्वाणां प्रधानसम्बन्धाभावे तदुपकारित्वं न सम्भवति प्र-
साधनशब्दसमवायात्तु प्रधासम्बन्धाभ्युपगमे वपनादिवत् स-
त्योपकारित्वापत्तेरारादुपकारित्वं विरुध्येतेत्युक्तं तदपि निर-
ा *तथेति* वपनादेरात्मनेपदेन लिङ्गेन वा वपनाद्याश्रयभूतप्र-
सम्बन्धियजमानशेषत्वात् सन्निपत्योपकारित्वं ज्ञातं तेषां त्वा-
ाषत्वाभावात् सन्निपत्योपकारित्वानापत्तेर्नारादुपकारकत्ववि-
इत्याशयः। यत्त्वङ्गानां यजमानशेषत्वाभावात् सन्निपत्योपका-
ाभावे ऽपि अङ्गापूर्वाणां यजमानाश्रितत्वाभ्युपगमे ऽपूर्वस्य
तालक्षणत्वाद्यजमानेन च फलभोक्तृत्वएव योग्यतापेक्षणात्फ-
कतृत्वयोग्यतापादकत्वात् प्रधानवत्पुरुषार्थत्वापत्तेः कर्माङ्गत्व-
हीयेतेत्युक्तम् * तदप्यनुभाषणपूर्वकं निरस्यति * यद्वि-
* तदुद्देशविधिविषयत्वलक्षणतादर्थ्यहेतुकत्वाच्छेषत्वस्याङ्गा-
श पुरुषोद्देशेनाविधानात्प्रधानस्य च फलसाधनत्वयोग्यताधा-

नेन योग्यत्वलक्षणाविरोधात्पुरुषाश्रितत्वमात्रेण तच्छेषत्वं व
क्यं न च तत्सम्भवतीत्याशयः । आश्रितत्वस्य शेषत्वाहेतुत
दृष्टान्तेनोपपादयति * राजार्थेति * राजशेषभूतस्याङ्गानुलेपस्य
पयिकमित्यर्थः । न च पतनप्रतिबन्धलक्षण एवाश्रयाश्रयिभावो विव
क्षितः येनामूर्त्तानां न स्यादित्याह * न चेति * नन्वारादुपकार
ङ्गापूर्वाणामात्माश्रितत्वात् स्थायित्वेनोपकारित्वोपपत्तावपि सन्नि
त्योपकार्यङ्गापूर्वाणां संस्कार्यव्रीह्यादिनाशे नाशात् स्थायित्वाभावेन
पकारित्वं न सम्भवतीत्युक्तमत आह * यत्त्विति * व्रीहिसमव
यिनो ऽप्यपूर्वस्य तन्नाशे नाशात्तण्डुलादौ सञ्चारासम्भवमाशङ्
व्रीह्यादिद्रव्यस्यैवावस्थाविशेषस्तण्डुलादिरूप इत्युक्तं न व्रीह्यादिरू
संस्कार्यं किं तु तदुपलक्षितं प्रधानापूर्वसाधनीभूतं द्रव्यं तच्चावस्थ
भेदे ऽप्याहवनीयप्रक्षेपात्प्राङ्न विनश्यतीत्याशयः।यत् व्रीहिसमव
यपूर्वं तत्तण्डुलादिषु व्रीह्यादिद्रव्यावस्थासु सञ्चरणपरम्परया ह्य
द्यानपर्यन्तं गतमिति तच्छब्दाध्याहारेण योज्यम् । ननु ह्यवदानपर्य
गमने ऽपि तस्याहवनीयप्रक्षेपान्नाशे सति तद्गतस्यापूर्वस्यापि न
शान्न प्रधानापूर्वोपकारित्वं सम्भवतीत्याशङ्क्याह *तत्रापीति* प्रोक्ष
णादिजनितापूर्वाश्रितह्यवदानसाधितस्यैव प्रधानस्य स्वापूर्वानिष्पाद
त्वात्प्रधानीयापूर्वनिष्पत्तौ व्यापृत्य प्रोक्षणादिजनितमपूर्वं निवर्त
नश्यतीनतु प्रधानापूर्वमनिष्पाद्येत्युक्तम्। ननु क्रियाप्यत्रैव च स्थिते
यागादेः प्रधानस्यात्मनि समवायाभिधानात् प्रक्षेपादेश्च ह्यवदा
चलनहेतुभूतशरीरचलनात्मकत्वादात्मन्यसमवाये ऽपि प्रयोजकव्य
पारत्वात् शरीरसमवेतत्वेन ह्यवदानसमवायाभावात्तद्गतस्य प्र
क्षणादिजन्यस्यापूर्वस्य प्रधानसम्बन्धानुपपत्तेः कथं तदीयापूर्वा
ष्पत्तौ तद्व्यापार इत्याशङ्क्य * तत्रापीत्युक्तम् * देवतोद्देशद्रव
त्यागात्मकप्रयोजकव्यापाररूपांशद्वययुक्तस्य यागाख्यप्रधानस्य र
वंशावुद्देश्यदेवतात्याज्यद्रव्ययोः प्रयोज्ययोर्व्यापारौ प्रयोजकव्य
पारान्यथानुपपत्तिकल्पितौ तयोर्मध्ये यस्त्याज्यस्य द्रव्यस्य त्याग
शं प्रयोजकव्यापारं प्रति प्रयोज्यस्य व्यापारस्त्यागद्वारा प्रधानस्य
शस्तेन ह्यवदाने प्रधानस्य समवायाद्धोमाख्यस्य च प्रधानस्य
वतोद्देशद्रव्यत्यागप्रक्षेपात्मकप्रयोजकव्यापाररूपांशत्रययुक्तस्य त्य
गप्रक्षेपौ प्रयोजकव्यापाररूपावंशौ प्रति प्रयोज्यस्य त्याज्यस्य प्र
पस्य द्रव्यस्य यौ व्यापारौ त्यागप्रक्षेपद्वारेणांशौ ताभ्यां तद्ध्य
वदाने प्रधानस्य समवायादित्यर्थः । स्वमते च कृतस्य पुरोडाश
यागसाधनत्वाद् ह्यवदाने यागस्य समवायो भाष्यकारमतेनो

सर्वाङ्गानुष्ठानोत्तरकालं समस्ताङ्गापूर्वाणां युगपत्प्रधानोपका-
धनत्वस्य वक्ष्यमाणत्वात्प्रधानापूर्वनिष्पत्तौ व्यावृत्त्यनिवृत्तिरयु-
पाशङ्कानिरासार्थैवकारः आरादुपकार्यङ्गविषयो ऽसौ समस्तशा-
इत्याशयः। सन्निपत्योपकार्यङ्गापूर्वाणां प्रधानापूर्वनिष्पादनमात्रेणा
वसानं तेषामर्थाधिकरणे वक्ष्यमाणया व्यवस्थयोपपादयति *
व चेति * यच्च युगपत्प्रयोगवचनग्रहणावगतमङ्गापूर्वाणां प्र- ३७
नोपकारे प्रधानापूर्वाणां च फले यौगपद्यमन्योन्यसम्बन्धाभावा-
सम्भवतीत्युक्तम्। तदपि निरस्यति*यथैव चेति * यथाङ्गापूर्वा-
प्रधानापूर्वाणां चान्योन्यसम्बन्धस्तथारादुपकार्यङ्गापूर्वाणामे-
त्माश्रितत्वेनान्योन्यसम्बन्धाद्युगपत्प्रधानोपकारलक्षणकार्यारम्भ-
द्भिःप्रधानापूर्वाणामप्येवमेवान्योन्यसम्बन्धात्फलाख्यकार्यारम्भ-
द्भिरित्यर्थः । ननूक्तेन न्यायेनाङ्गप्रधानापूर्वाणां स्थायित्वे सम्ब-
च सम्भवत्यपि प्रधानापूर्वनिष्पादनमात्रेणाङ्गापूर्वाणां विनाश-
क्तत्वात्। प्रधानापूर्वाणां क्रमोत्पत्तित्वेनाङ्गापूर्वाणां प्रधानसम-
ञानां क्रमवर्त्तित्वापत्तेः। प्रागूर्ध्वं चोत्पद्यमानानामत्यन्तविप्रकर्षा-
हित्यानुपपत्तेर्न युगपदुपकारः सम्भवतीति शङ्कते * कथं पु-
ति * सन्निपत्यारादुपकारिणां सर्वेषां प्रधानापूर्वनिष्पत्तौ
पारमाशङ्कावाद्यभिमतमभ्युपगम्यैव तावन्निष्पन्नानामङ्गापूर्वाणां
रूपेणानागतानां च कर्त्तव्यत्वावधारणेन यौगपद्यमुपपादयति
के चित्तावदाहुरिति * समस्ताङ्गोपेतप्रधानप्रयोगप्रक्रमादागा-
नामपि तादवस्थ्यावस्थायाः प्रचलितत्वात्प्रधानसहायतोपपन्नेत्य-
। न त्वेवं सर्वाङ्गापूर्वाणां यौगपद्योपपत्तावपि एकप्रधानापूर्व-
पत्तौ विनष्टत्वात्प्रधानान्तरसहकारित्वानुपपत्तेरेकैकमिति वी-
। न युक्तेत्याशङ्क्याह * आतिथ्येति * यदातिथ्यायां बर्हिस्त-
सदां तदग्नीषोमीयस्येति श्रुतेः साधारणार्थतया चतुर्थे वक्ष्यमा-
त्राद्यथातिथ्यायामुपात्तस्य बर्हिषस्तत्समाप्तावपि नापवर्ग इति च-
सिद्धो दृष्टान्तः अनागतानामसत्त्वान्नोपकारित्वं सम्भवती-
शङ्कते * कथं पुनरिति * स्वरूपासत्त्वे ऽपि कर्त्तव्य-
वधारणमात्रेण हेतुतान्यत्रापि दृष्टत्वादुपपन्नेति परिहरति
रकान्तेति*नन्वेवं सत्युत्पत्त्युत्तराङ्गानुष्ठानवैयर्थ्यं स्यादिति शङ्कते
ननु चेति * समस्ताङ्गोपेतप्रधानानुष्ठानोपदेशान्यथानुपपत्त्या-
ङ्गानुष्ठानसहकृतानां प्रधानापूर्वाणां फलापूर्वनिष्पादकत्वावग-
दकरणे सहकार्यभावे निष्पन्नान्यपि प्रधानापूर्वाणि स्वकार्यं

१ तेषामर्थेन संबन्ध इति तृतीये।

फलापूर्वं न निष्पादयन्तीत्याशयेन परिहरति *कथमिति* कार्यापव
र्गित्वादपूर्वाणामपवर्गेण कार्यानिष्पादकत्वं लक्षितं कर्त्तव्यत्वाव
धारणस्याविहितत्वात्प्रधानोपकारित्वकल्पनानुपपत्तेरुत्तराङ्गविधीन
कर्त्तव्यत्वावधारणपरत्वाभ्युपगमे वानुष्ठानस्याविहितत्वात्प्रधानाप
र्वसहकारित्वकल्पनानुपपत्तेर्वैधे चार्थे प्रमाणान्तरानवतारादनेन प्र
कारेण यौगपद्यानुपपत्तेरपरितोषात्स्वमतेन सन्निपत्योपकार्यङ्गापूर्वा
णां प्रधानापूर्वनिष्पत्तौ सहकारित्वात्तेषां चात्मीयप्रधानापूर्वनिष्प
त्तावपवर्गे ऽपि फलापूर्वनिष्पत्तौ सहकारिणामारादुपकार्यङ्गापूर्वा
णां फलापूर्वनिष्पत्तेः प्रागनपवर्गाद्यौगपद्यं सम्भवतीति दर्शयितुम
पूर्वोत्पत्तिप्रक्रियामाह*अन्येपुनरिति * प्रधानानामन्योन्याङ्गत्वाभा
ऽपि तत्क्रमस्याङ्गत्वात्पूर्वं प्रधानमकृत्वोत्तरप्रधानानुष्ठाने ऽप्यपूर्वानि
ष्पत्तेस्तदानुत्पन्नेत्युक्तम्।पाश्चात्यानां सामवायिकानां प्रतिपत्तित्वाच्च
स्याश्च क्रत्वर्थोपात्तद्रव्यनाशदोषापरिहारनिमित्तक्रतुवैगुण्यापत्त्य
कदा चिन्निष्पन्नस्याप्यपूर्वस्य नाशापत्तेस्तत्परिहारार्थं प्रक्रान्तद्रव्य
क्रतुसम्बन्धसमापनार्थत्वेनापूर्वनिष्पत्त्यर्थत्वाभावात्प्रथमकृतेत्युक्तम
आरादुपकार्यङ्गापूर्वाणां प्रधानापूर्वनिष्पादकत्वनिरासार्थो मात्रश
ब्दः । ननु सामवायिकाङ्गापूर्वाणां प्रधानापूर्वनिष्पत्तौ व्याप
रे सति तन्मात्रेणापवर्गात्फलापूर्वोत्पादकरूपप्रधानोपकारनिष्पत्त
व्यापाराभावे सर्वेषां युगपत् प्रधानोपकारजनकत्वमेकदेशे वक्ष्यम
णं विरुध्यते इत्याशङ्क्यैवमित्याद्युक्तं सामवायिकाङ्गापूर्वानुगृहीतप्रध
नजन्यत्वं सर्वेषां प्रधानापूर्वाणामेवंशब्देनोक्तम्।यद्यप्यारादुपकार्यङ्ग
पूर्वाणामेव प्रधानोपकारनिष्पत्तौ व्यापारस्तथापि प्रधानापूर्वेष्व
निष्पन्नेषूपकारानिष्पादनात्तन्निष्पत्तेश्च सामवायिकाङ्गाधीनत्वात्स
र्वेषां युगपत् प्रधानोपकारजनकत्वाभिधानमिति दर्शयितुम् * यत्
त्युक्तम् * परमार्थतः पौर्णमास्यमावास्याख्यस्यैकैकस्य प्रधानत्रिव
स्य स्वाङ्गापूर्वानुगृहीतस्यैकैकस्वसमुदायापूर्वजनकत्वे ऽप्येकदेशि
मतेन समुदायापूर्वाभावमभिप्रेत्य दर्शापूर्वाणां तदीयारादुपकार्यङ्ग
पूर्वाणां च प्रतीक्षणमुक्तम् सामवायिकाङ्गापूर्वसाध्यात् प्रधानापू
निष्पादनात्मकात्प्रात्यात्मिकात् प्रधानोपकाराक्रमवत्प्रधानानुसारि
तया क्रमेणोत्पद्यमानात्प्रधानवैचित्र्यतो विचित्रादारादुपकार्यङ्ग
पूर्वं साध्यस्यस्योपकारस्य आरादुपकारीण्यङ्गानि प्रतिसाध्यतया !
धानानि च प्रत्यनुग्राहकतया साधारणरूपत्वेनादृष्टोपयोगित्वाच्च
पूर्वात्मकत्वेन युगपदुत्पत्त्यैकरूपत्वेन वैलक्षण्यं दर्शयितुमङ्गानीत्य
द्युक्तम्।तदुपपादनार्थं विधिस्त्वेकश्रुतित्वादपर्यायविधानादित्येका

धिकरणसूत्रावयवोक्तमपर्यायविधानमनुकीर्त्तितं व्याख्यातुम् * ापदित्युक्तम् * आरादुपकार्यङ्गापूर्वाणामखण्डोपकारनिष्पत्तेः गविनाशाद्यौगपद्यं सम्भवतीति सकलस्य तात्पर्यं कः पुनर्निष्पा- ातिरिक्तः प्रधानापूर्वाणामारादुपकार्यङ्गापूर्वैरुपकारः क्रियतइत्य- ङ्कायां फलापूर्वोत्पादनयोग्यताधानात्मकमुपकारं दर्शयितुमाह- तत इति * ननु फलापूर्वस्यापि संस्काररूपत्वाभ्युपगमात्सं- कारस्यानुभवादिजन्यस्य कालविप्रकर्षेण क्षीणत्वस्य चात्यन्तं ना- स्य चोपलम्भादपूर्वान्तरवत्फललाभात्प्रागपि नाशापत्तेः साध्यसा- नसम्बन्धोपपादकत्वं न स्यादित्याशङ्क्याह * तच्चेति * फल- २
ाभार्थत्वेनैव तस्य कल्पितत्वात्तत्पर्यन्तं तस्य स्थायित्वमक्षीणत्वं कल्पितमित्याशयः। ननु यत्र प्रतिबन्धकादिवशादनन्तरं फलं नो- द्यते तत्रास्तु नाम फलापूर्वकल्पनं यत्र त्वैहिकत्वात् पुत्रादिवद- ष्टकारणानपेक्षत्वादनन्तरमप्युत्पत्तुं शक्तं प्रतिबन्धकाभावादनन्त- मप्युत्पद्यते तत्र तत्कल्पनं विनापि साध्यसाधनसम्बन्धोपपत्तेर- ान्तरापूर्वद्वारा चाङ्गप्रधानसाहित्योपपत्तेर्यस्य च शब्दस्यार्थेन लं साध्यते तेनापूर्वं कृत्वा नान्यथेति फलापूर्वस्य सार्वत्रिकत्वा- भिधानमयुक्तमिति कोमलोक्त्या शङ्कते * यदि पुनरिति * त- ापीत्यर्थे ततो ऽपीत्युक्तम्। अनन्तरं फलोत्पत्तावप्यपूर्वं विना चिर- ालोपभोगासम्भवस्योपभोगश्चिरेणैषां न निमित्ताद्विना भवेदि- यत्रोक्तत्वात्कल्पनीयं फलापूर्वमिति परिहरति * बाढमिति * न्वपूर्वस्य चिरकालस्थायित्वाभ्युपगमे अङ्गापूर्वाणामेव साक्षात्प्रधा- ोपकारकत्वोपपत्तेरखण्डोपकारापूर्वकल्पनं व्यर्थं प्रधानापूर्वाणां च ाक्षात्फलजनकत्वोपपत्तेः फलापूर्वकल्पनं व्यर्थमित्याशङ्कते *अथे- ते * प्रात्यात्मिकशब्देन प्रत्येकमेकैकाङ्गजन्यतोक्ता साक्षात्तेषां ज- कत्वसम्भवे ऽपि कल्पकक्रमानुरोधेनैवङ्कल्पितमिति परिहरति * सत्यमिति * निषेधार्थं न हीत्यखण्डं पदं श्लोकं व्याचष्टे * प्र- धानानामिति * उत्पत्तिवाक्यावगतभेदानामपि प्रधानानां फला- न्वयात्प्रागङ्गानां च प्रधानोपकारान्वयात्प्रागपूर्वानपेक्षत्वात्तदन्वय- काले च यौगपद्यप्रतीतेर्भिन्नापूर्वकल्पनाहेत्वभावादेकमेव फलापू- र्वमुपकारापूर्वं च प्रतीयते प्रयोगकाले तु क्रमप्रतीतेः स्वरूपतः सा- हित्यायोगात्साहित्यसम्पत्त्यर्थं प्रात्यात्मिकानेकापूर्वकल्पनेत्यर्थः। नन्ववश्यकल्प्यैः प्रात्यात्मिकापूर्वैरेव साहित्यवत्फलसाधनोपकारा- न्वययोरप्युपपत्तेर्गौरवापादिका प्रागेकापूर्वकल्पना न युक्तेत्याश- ङ्क्याह * सर्वत्र चेति * प्रत्यात्मिकापूर्वाणां साहित्यसिद्ध्यर्थं क-

क्षिप्तत्वात्कार्यान्तरोपयोगित्वं न सम्भवतीत्याशयः । प्रौढ्या तु तेषां कार्यान्तरोपयोगित्वेऽप्यदोष इति प्रागुक्तं तस्मात्फलापूर्वमेव समस्तफलोपभोगपर्यन्तं स्थायि कल्प्यते तदुत्पादनमात्रेण तु प्रधाना पूर्वाणां नाशः । आरादुपकार्यङ्गापूर्वाणां प्रधानोपकारोत्पादनेन सा भवायिकाङ्गापूर्वाणां प्रात्यात्मिकप्रधानापूर्वोत्पादनेनेति व्यवस्था सिद्धेति तात्पर्यार्थः । यत्त्वस्मिन्पक्षे पौर्णमास्यां निष्पन्नानामङ्गापूर्वाण दर्शब्राह्मणतर्पणानन्तरमुपकारोत्पादनेनापवर्गाभिधानात्तावत्कालं स्थायित्वमुक्तं तदमावास्यायां पुनरननुष्ठेयत्वापत्त्या दूषयति * के चित्त्विति * को ऽननुष्ठेयत्वापत्तौ विरोध इत्याशङ्क्य * आहैवञ्चेति * प्रधानाहुत्योर्द्विसङ्ख्यत्वादङ्गाहुतीर्विना न त्रयोदशसङ्ख्या सम्पद्येतेत्याशयः । पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्ययेति पौर्णमास्यमावास्याख्ययोस्त्रिकयोः करणत्वप्रतीतिस्तस्य च साधकतमत्वलक्षणत्वात्तमबर्थस्यातिशयस्यापेक्षिकत्वेनाङ्गसाहित्यं विनानुपपत्तेरङ्गसाहित्यावगमात्तस्य चानुपादेयकालं प्रत्युपादेयत्वेन विवक्षितत्वादेकैकस्य त्रिकस्य फलसाधनत्वाभावेनानुपकार्यत्वात् त्रिकद्वयस्यैकस्मिन्काले ऽनुत्पन्नस्योपकर्तुमशक्यत्वादुपकारानिष्पत्तौ चाकृतकार्यत्वेनाङ्गापूर्वाणामपवर्गाभावे ऽपि वचनबलाद्द्विःप्रयुक्तानामुपकारकत्वाकल्पनया द्विरनुष्ठानं सेत्स्यतीत्येकदेशिनां दूषणपरिहाराभिप्रायमाशङ्कते* अन्ये त्विति* यैः प्रयोगद्वयान्ते ऽङ्गापूर्वाणामपवर्गः प्रागुक्तस्त एवान्यशब्देन परामृष्टा त्रिः सम्मार्ष्टीत्यादिवदावृत्त्य विधानात् । सकृत्प्रयुक्तानामेवोपकारकत्वोपपत्तेरपवर्गाभावे पुनः प्रयोगानर्थक्यापत्तेरपरिहार्यत्वात् स्वमतेन पौर्णमास्यान्निष्पन्नानामङ्गापूर्वाणां पौर्णमास्याख्यप्रधानत्रयसमुदायापूर्वनिर्वृत्तावपवर्गं दर्शयितुमाह* अथ चेति * कथं प्रधानापूर्वत्रयस्यैकसमुदायापूर्वजनकत्वावगतिरित्येमाश्यां पौर्णमास्येति तृतीयाश्रुत्या करणत्वावगमादित्युक्ते ननु फलापूर्वमेव प्रति करणत्वं भविष्यतीत्याशङ्क्य समर्थः पदविधिरिति पदमात्रविधेः सामर्थ्याधीनत्वस्मरणात् सापेक्षत्वे च सामर्थ्यविघातापत्तेर्विभक्तिश्रुत्यामावास्यानैरपेक्ष्यावगमात्पौर्णमास्यसहितामावास्यया स्वार्थं समुदायापूर्वं करोतीत्यकारप्रश्लेषेणोक्तम् । अङ्गापेक्षा तु करणश्रुत्याक्षिप्तत्वान्न सामर्थ्यविघातिकेति साङ्गेत्यनेन सूचितम् । पक्षा साङ्गा पौर्णमासी स्वार्थं समुदायापूर्वं करोति अमावास्याख्यमावास्ययेति करणविभक्तिश्रुतेरङ्गसहिता स्वार्थं समुदायापूर्वान्तरं करोतीति योज्यम् । यदि त्वमावास्याख्यसमुदायसहितस्य पौर्णमास्याख्यसमु-

यस्य दर्शपूर्णमासाभ्यामिति करणविभक्तिश्रुतेः स्वार्थफलापूर्वसा-
नत्वावगमात्समुदायद्वयस्य चापूर्वं विना साहित्यानुपपत्तेः। समु-
यापूर्वजनकत्वावगतिरित्येवं व्याख्यायते ततः साहित्यस्य द्वन्द्वा-
गम्यत्वाद्विभक्तिगम्यत्वाभिधानं तावद्युक्तं समुदाययोश्च फल-
धनत्वाभ्युपगमे पौर्णमास्यधिकरणे तन्निरासादरो ऽपि विरुध्येत
ङ्गापूर्वाणां प्रधानोपकारापूर्वोत्पादनमात्रेण निवृत्तिसूचनार्थम् *
ोक्तेनैवेत्युक्तम् * पौर्णमासीकालीनेष्वङ्गापूर्वेषु पौर्णमास्याख्यप्र-
नत्रयोपकारं कृत्वा निवृत्तेष्वङ्गापूर्वजनितानुग्रहविशिष्टं पौर्णा-
स्याख्यप्रधानापूर्वत्रयम् एकं समुदायापूर्वं कृत्वा अपवृज्य-
इत्यर्थः। फलापूर्वस्य तर्हि कथं निवृत्तिरित्याशङ्क्याह * त-
नरिति * स्वाङ्गापूर्वजनितानुग्रहविशिष्टामावास्याख्यप्रधानापूर्वत्र- ३
जन्यतामावास्याख्यसमुदायापूर्वस्यैवंशब्देनोक्ता समुदायापूर्वद्वया-
युपगमस्य प्रकृतोपयोगमाह *अत श्चेति * समुदायापूर्वद्वयाभ्युप-
मे पौर्णमासाख्यसमुदायापूर्वजननार्थं पौर्णमासाख्यप्रधानापूर्वत्र-
ण स्वाङ्गापूर्वजनितोपकारापेक्षणादुपकारनिर्वृत्तौ च कृतार्थतया
र्णमासीनिष्पन्नाङ्गापूर्वनाशादमावास्यायां पुनः प्रयोगानर्थक्यदो-
भावः। तदनभ्युपगमे त्वकृतार्थत्वात्पौर्णमास्यां निष्पन्नानामङ्गा-
र्वाणां नाशायोगात्पुनः प्रयोगानर्थक्यदोषो दुःपरिहर इत्यर्थः। यद-
पूर्वस्य कर्मभिरुत्पत्तिरभिव्यक्तिर्वेति विकल्पोत्पत्तिरपि युगपत्ता-
न सम्भवति क्रमवर्त्तित्वात्कर्मणामित्युक्तं तदप्यपूर्वद्वारा कर्मणां
गपद्योपपादनात्सुपरिहरमित्याह * एतयैवेति * क्रमवर्त्तिनामपि
र्मणामवान्तरकार्ययौगपद्यद्वारा युगपत्परमकार्यारम्भकत्वं वृद्धो-
हृतेन दृष्टान्तेनोपपादयितुमाह * आह चेति * वाक्यतद्वयवा-
यनरूपेण क्रमवर्त्तिनीभिरावृत्तिभिरभ्यासकर्मभिर्यथावान्तरसं-
कारयौगपद्यद्वारा वाक्यसमुदायात्मकाध्यायग्रहणसामर्थ्यरूपः पर-
संस्कारो युगपद्भवति तथेदमपीति श्लोकार्थः। यच्चानवयवत्वा-
क्रमशो ऽभ्युत्पत्तिर्न सम्भवतीत्युक्तं तदपि प्रौढ्या सावयवत्वाभ्यु-
गमेन निराकर्त्तुमाह * न चेति * आत्मादावमूर्त्ते निरवयवत्वद्-
नादपूर्वस्यामूर्त्तत्वेन निरवयवत्वं वाच्यम्। न चामूर्त्तत्वं निरवयवत्वे
योजकं मूर्त्तेष्वपि परमाणुषु निरवयवत्वादर्शनादनेकप्रयोजक-
ल्पनापत्तेः। किं त्ववयवसन्निवेशानात्मकतेत्याशयः। नन्वपूर्वस्या-
यवसन्निवेशानुपपत्तेर्निरवयवत्वं भविष्यतीत्याशङ्क्याह * अन्यै-
हीति*कारणायौगपद्याद्युगपदुत्पत्त्ययोगात्क्रमोत्पत्तिप्रतीतेस्तस्याश्च
निरवयवत्वे ऽनुपपत्तेः। सूक्ष्मदर्शनायोग्यावयवसन्निवेशरूपेणापूर्वं

प्रतीयतउत्पद्यतइत्यर्थः । अस्मिंस्तु पक्षे सर्वेषामेकफलसाधमानां प्रधानानां साक्षादेकफलापूर्वसाधनत्वाभ्युपगमात्सर्वेषां चाङ्गानां साक्षादेककरणोपकारापूर्वसाधनत्वाभ्युपगमात्कर्मभेदानुनिष्पाद्यपूर्वभेदाभ्युपमो विरुध्येत।तदभावे चाज्यौषधमांससान्नाय्यादिधर्मव्यवस्था त्वार्त्तीया वाङ्नियमादेश्चावान्तरापूर्वप्रयुक्तत्वंनावमिकं न सिद्ध्येदित्यवश्यं प्रतिकर्मापूर्वभेदस्य कल्प्यत्वात्तद्द्वारा च क्रमवर्त्तिनामपि कर्मणां युगपदपूर्वोत्पादकत्वोपपत्तेर्नार्थापत्तिरवयवकल्पनायै प्रभवति कल्पितानामपि चावयवानाममूर्त्तत्वेनान्योन्यानवष्टम्भकत्वान्नावयवारम्भकत्वसम्भवः । मूर्त्तत्वकल्पने तदारब्धस्यापूर्वस्यापि मूर्त्तत्वापत्तेर्विग्रहवदिव स्वतन्त्रमपूर्वं कल्प्यमानं श्रुतकर्मफलसम्बन्धबोधकमेव स्यादिति प्रौढिमात्रमिदं प्राक् सत्त्वे प्रमाणाभावाच्छक्तिनियमाच्च कार्यकारणनियमसिद्धेरभिव्यक्तेरप्यत्यन्तासत्या एवोत्पत्तेरवश्याभ्युपगन्तव्यत्वात् सांख्योक्तसत्कार्यवादानुपपत्तेरनभिमतमप्यभिव्यक्तिपक्षं प्रौढ्या दर्शयति * यदापीति * फलदानाभिमुख्यकरणरूपास्यापूर्वस्याभिव्यक्तिर्विषयेन्द्रियोभयसंस्काररूपत्वात्शब्दादिविलक्षणा कर्मभिर्भविष्यतीत्युक्तं कथं कर्मभिरपूर्वस्य फलदानाभिमुख्यं क्रियतइत्यपेक्षायां प्रतिपुरुषं स्वीकारादित्युक्तम्।प्रतिग्रहेणेव कर्मभिः कर्त्तारं प्रत्यपूर्वस्य स्वत्वापादनादित्यर्थः । नन्विन्द्रियसंस्कारेण विषयसंस्कारेणोभयसंस्कारेण वा लोके शब्दाद्यभिव्यक्तिदर्शनात्कथं तद्विलक्षणास्याभिव्यक्तिः कल्प्यतइत्याशङ्क्याह * तथा हीति * कुलालादिव्यापारेणापि घटाद्यभिव्यक्तेः सांख्यैरिष्टत्वादिति भावः।तस्मादात्मनाधिष्ठितस्यापूर्वस्य फलदानोन्मुखत्वलक्षणाभिव्यक्तिर्युक्तेति परिहरति * आत्मस्थेति * आत्मकामादिश्रुतितो वात्मनः स्वभावेन सर्वफलावाप्तिः सामर्थ्यावगमात्फलानुपभोगस्य प्रतिबन्धनिमित्तत्वावगतेस्तदपनयनरूपाभिव्यक्तिः सामर्थ्यात्मकस्यापूर्वस्य कर्मभिः क्रियते नादैरिव शब्दस्य श्रवणप्रतिबन्धकास्तिमितवाताद्यपनयरूपेति प्रौढ्या शब्दतुल्यामेवाभिव्यक्तिमाह * सर्वेति * आप्तकामादिश्रुतेरनुपलब्धिविरोधेनार्थवादत्वादयमपि प्रौढिवादः।अतोऽपूर्वस्य श्रुतार्थापत्तिप्रमाणकत्वात्तत्प्रतिपादनार्थत्वेन भाष्यकारीयं सूत्रव्याख्यानं युक्तमित्युपसंहरति * तस्मादिति * यच्च वृत्त्यन्तरकारैरारभतेर्णिजन्तादच्प्रत्ययमुत्पाद्यारम्भयति प्रवर्त्तयतीत्यारम्भकं प्रवर्त्तकं वाक्यं चोदनेति चोदनास्वरूपकथनार्थतया एतत्सूत्रं व्याख्यातं तत्प्रकृतापूर्वप्रतिपत्त्युपायशब्दचिन्तानौपयिकत्वाच्चोदनास्वरूपकथनार्थत्वे चास्य सूत्रस्य चोदनासूत्रानन्तरं

त्वेऽयत्वापत्तेरयुक्तमित्याह * सूत्रस्यापीति * यदपि न चैतत्सूत्रं प्रतिपादने स्पष्टमित्युक्तं तन्निरासायापूर्वप्रतिपादने सूत्रं यथाभाष्यं जयति * तेनेति * आरम्भःशिष्यतइति भाष्येणारम्भप्राति-रेकात्फलोत्पादनवाचिनस्तत्करोति तदाचष्टइति स्मृतेरारम्भमा-ष्टे इत्यस्मिन्नर्थे णिचमुत्पाद्याचप्रत्ययकरणेनारम्भ फलोत्पादनमा-ष्टे इत्यारम्भशब्दव्याख्यानादारम्भश्चोदनेत्यारम्भशब्दार्थौ लभ्यते. दनेत्यपूर्वमित्यनेन च भावशब्दा अपूर्वस्य बोधका इति भाष्य-नात् चोद्यतआक्षिप्यते इति कर्मव्युत्पत्त्यापूर्वस्य चोदनात्वमु-मिति प्रतीतेश्चोद्यते ऽनेनेति करणव्युत्पत्तौ चोदनमिति भाव-पत्तौ वा ऽपूर्वस्य चोदनेत्यर्थः। तेभ्यः क्रिया प्रतीयेतेति क्रियाश-स्य तेभ्यो ऽपूर्वक्रियावगतिरित्यनेन अपूर्वविषयत्वेन व्याख्यानात् याश्च तस्मात्तेभ्यः क्रिया प्रतीयेतेत्यनन्तरसूत्रोपपत्त्यायुक्तमाश-व्याचष्टे * यदि पुनरिति * कल्प्यस्य पूर्वस्थस्यानुवृत्तेर्विने-याहारेण लभ्यते कथमाख्यातेभ्यो ऽपूर्वं प्रतीयतइत्यपेक्षायां चो पुनराक्षिप्यते आख्यातेनापूर्वम्। अपूर्वस्य वा चोदकमाख्यातम्। म्भकत्वात्फलोत्पादनव्यापकत्वादित्यभिधानाच्च प्रकृतोपयोगी पष्टश्चायमेव सूत्रार्थ इत्याशयेन यो भाष्यकृतोक्तः सूत्रार्थः स-युक्तो न वृत्त्यन्तरकारोक्त इत्येवकारेणाभिधानात्तद्व्याख्यानार्थं प्रमपि व्याकृतं भवति। यदि पुनरित्याशङ्काभाष्यं नश्वरस्य कर्म-स्थायित्वकल्पनानुपपत्तेरयुक्तमात्रमाशङ्क्य व्याचष्टे * यदि पुन- । * कल्प्यस्यापूर्वस्य स्थायित्वकल्पनायाः सिद्धस्य कर्मणः येत्वकल्पना लाघवाद्युक्तेत्याशयः। नैवमित्यादिपरिहारभाष्य-नुपति * न हीति * गन्तापि प्रत्यक्षो देशान्तरं च तेन गत विजानात्यागत इति चेति गन्तृगम्यप्रत्यक्षत्वाभिधानेन गम-प्रत्यक्षत्वाभिधानम्। अपि वा व्यतिरेकाद्रूपशब्दाविभागाच्च गो-रैककर्म्ये स्यान्नामधेयं च सत्त्ववदिति षष्ठाधिकरणसिद्धान्तसू-रूपशब्दाविभागाच्चेत्ययथयं व्याख्यातुं यद्भाष्यकृता करिष्यते रोधो भङ्गित्वाद्यागस्येति च विनाशित्वेन यागस्य प्रस्तुतत्वात्त-श्च देवतोद्देशपूर्वकद्रव्यस्य त्यागात्मकसङ्कल्परूपत्वेनाचलनात्म-द्देशान्तरप्रापकत्वं नास्तीत्यर्थः। नानेन प्रत्यक्षानुपलब्धिरुक्ता । प्रतिक्षणविनाशिपूर्वापरीभूतावयवत्वात्सिद्धरूपा प्रतीतिः स्वा-रूपानुपलब्धिरित्येवं व्याख्यानेनाद्यं तावदाक्षेपं परिहरति त्रेति * श्लोकं व्याचष्टे * यद्यपीति * स्वरूपेणाचलनात्म- ३९ ऽपि यागस्य चलनात्मकप्रक्षेपादिविशिष्टस्य फलसाधनत्वात्ते-

नांशेन चलनात्मकत्वमभिप्रेत्य देशान्तरप्रापकत्वाभिधानमिति द्वितीयमाक्षेपं परिहरति * यागे ऽपीति * श्लोकं व्याचष्टे * नहीति * यागग्रहणेन होमस्याप्युपलक्षणमभिप्रेत्य तस्य प्रक्षेपाधिक्यागात्मकत्वात्समस्तादित्युक्तम्।कथं देशान्तरप्रापकत्वस्य स्थायित्वनिरासहेतुतेत्यपेक्षायामाह * तत्रेति * देशान्तरप्रापकत्वव्याख्यानार्थं संयोगविभागफलत्वं धात्वर्थानां वदता संयोगविभागयोर्धातुवाच्यत्वं निरस्तम् ।

त्यक्तं प्रतीतियुक्तिभ्यां भाष्यवार्त्तिकवारितम् ।
तयोर्धात्वभिधेयत्वं वदन्न व्रीडते कथम् ॥

निराश्रयस्य प्रक्षेपादेरवस्थानायोगात्तस्य स्थायित्वसिद्ध्यर्थं तदाश्रयेणापि स्थायिना भवितव्यं न चासावाश्रयः स्थाय्यस्ति संयोगविभागफलत्वेन प्रक्षेपादेः संयोगविभागयोग्यप्रादेशिकाश्रयापेक्षत्वात्तस्य स्थायिनो ऽनुपपत्तेः । स्थाय्याश्रयाभावात्कर्मणः स्थायिता न युक्तेत्याशयः । ननु चलनात्मकक र्माश्रयस्य शरीरस्य कं चित्कालस्थायित्वोपपत्तेरैहिकफलानां तावत्कर्मणां फलोत्पत्तिं यावत् स्थायित्वं सम्भवतीत्याशङ्क्याह * न चेति * अनुष्ठानोत्तरकालं योग्यानुपलब्ध्या कर्मणो सत्त्वावधारणान्नाश्रयस्थायित्वे ऽपि स्थायिता युक्तेत्याशयः । न चाभिव्यञ्जकाभावेनानुपलब्धिरभिव्यक्तस्याप्यनुपलम्भादित्यभिव्यक्तिशब्देनोक्तम् । अयं भावः अनभिव्यक्तस्य फलसाधनत्वाभावादनुष्ठानेनाभिव्यक्तिर्वक्तव्या तस्याश्च क्षणिकत्वे संस्कारजनकत्वानभ्युपगमात्फलासिद्धेः स्थायिताङ्गीकार्येति अनेन चानुष्ठानोत्तरकालानुपलम्भाभिप्रायेणान्यथाभाष्यं व्याख्यातम् । ननु चलनात्मकस्य कर्मणः स्थाय्याश्रयाभावेनास्थायित्वे ऽपि सङ्कल्पादेः स्थाय्यात्माश्रयत्वात् स्थायित्वं भविष्यतीत्याशङ्क्याह * सङ्कल्पेति * सङ्कल्पादेरपि क्षणान्तरानुपलम्भादेव नावस्थायित्वं विशेषतो ऽन्योन्यविरोधेन सङ्कल्पान्तरोत्पत्तौ पूर्वसङ्कल्पनाशादित्यर्थः । समुद्रध्यानाद्यादिशब्दाभ्यामुपात्तं न तदित्यादिभाष्यं विकल्पस्थाय्याश्रयनिरासार्थत्वेन व्याख्यातुं विकल्पं तावदाह * अवस्थानं चेति * तत्राद्यनिरासार्थं न तदित्यादिभाष्यं व्याचष्टे * न तावदिति * गमनफलप्राप्तिलक्षणार्थत्वं गमेर्दर्शयितुं व्यापिन इत्युक्तम् । विभागविशिष्टसंयोगफलत्वाच्चलनस्यात्मनि विभागरहिते ऽनुपलब्धिरित्याशयः । सर्वत्रेति भाष्यं हेतुप्रश्नोत्तरत्वेनावतारयति * कथमिति * तद्व्याख्यातुमाह * अहम्प्रत्ययेन हीति * यथास्मिन्काले ऽहमस्मीति न विशि-

े तथास्मिन्देशे इत्यपीति मात्रशब्दव्यावर्त्यं दर्शिते नन्वस्मिन्देशे
ाम्यहमित्यादिदेशतः कालतो वावच्छेदः प्रतीयतएवेत्याशङ्क्य
न्येत्युक्तम् प्रत्यक्षेण शरीरस्य देशकालवच्छेददर्शनाच्छरीराभे-
चारेणासावहं प्रत्ययः परमार्थतः स्वात्मनश्चैतन्यस्वभावत्वे-
त्स्वभावाच्छरीराद्भेदाच्चैतन्यस्य च देशकालावच्छेदाप्रतीतेर्ना-
ऽवच्छेदो ऽस्तीत्याशयः । कथमेतावता सर्वव्यापितेत्याशङ्क्याह *
श्चेति * नन्वहम्प्रत्ययस्यात्मग्राहकत्वात्तत्कार्यत्वव्यपदेशो न
इत्याशङ्क्याह * सर्वत्रेति * ग्राहकत्ववत्कार्यत्वस्यापि सद्भा-
र्थेऽ व्यपदेशोपपत्तिरित्याशयः।सुखादि वा कार्यशब्देनाभिमत-
ान्यथा व्याचष्टे * सुखेति * सुखादेः सार्वत्रिकत्वमुपपादय-
* न हीति * ननु शरीरएवसुखाद्युपलम्भात् कार्यत्वं भविष्य-
ाशङ्क्याह * न चेति * सुखादयश्च स्वयमुपालभ्यन्ते न रू-
य इव शरीरगुणाः परेणापीति भाष्ये पठिते ऽपि शरीरे परेणा
क्षेणानुपलम्भादित्यनेन हेतुना सुखादेः शरीरधर्मता निषिद्धेत्य-
कार्यस्य कारणासमानदेशत्वानियमात्समवायिकारणे कार्यसम-
त्कार्यशब्देनात्मधर्मत्वविवक्षा धर्मशब्देन सूचिता सार्वत्रिक-
ाद्युपलब्धेरात्मसार्वत्रिकत्वे हेतुतामुपपादयति * तत्रेति *
रात्मसंयोगहेतुकत्वात्सर्वस्यात्मकार्यस्य प्रादेशिकत्वे चात्मन-
देशातिरिक्तदेशान्तरगमने ऽपि शरीरस्यात्मसंयोगायोगात्तद्धत्ते-
म् नन्वित्याशङ्काभाष्यमवतारयति * शरीरमात्रेति * शरीर-
मेतात्मवाद्यार्हतः शरीरान्तर्गतात्मवाद्यौपनिषदः लिङ्गपदानु-
पूरणार्थः किमनेन हेतोर्दूषणमित्यपेक्षायामाह * अतश्चेति *
मनस्यासर्वगतत्वाक्षेपकत्वादित्याशयः। ननु सर्वगते व्योम्नि सर्व-
काशदानाख्यकार्योपलम्भदर्शनात्कथं विरुद्धतेति प्रश्नपूर्वकमु-
यति * कुत इति * अयं भावः युगपत्सर्वत्र कार्योपलम्भो
ावत्सर्वगतत्वं साधयेन्न चासावात्मन्यस्ति पर्यायेण सर्वत्र का-
लम्भस्त्वसर्वगतेष्वेव दर्शनाद्विरुद्ध इति श्लोकं व्याचष्टे * यदि
* सुखादेः शरीरात्मसंयोगहेतुकत्वेन बहिरसम्भवात्किञ्चि- ३८
दित्युक्तं सुखादेरपि शरीरान्तरगतस्योपलम्भे युगपत्सर्वत्रात्म-
पलम्भः स्यान्न चासावस्तीति शरीरान्तरइत्यनेनोक्तं यदि गमनं
कार्यक्रमो घटते ततः शरीरे ऽपि तथा स्यादित्यन्यथा हीत्यने-
सक्रियत्वप्रसङ्ग इत्यनेन सर्वगतत्वसाध्यनिश्चलत्वविरोधित्वं
क्तं निर्विशेषणस्तर्हि सर्वत्र कार्योपलम्भो हेतुर्भविष्यतीत्याश-
* सन्देहे वेति * सम्प्रति साधनस्यानिर्णायकत्वात्साधा-

रणत्वं विशेषणं शरीरसहितगमनात्सर्वत्र कार्योपपत्तेः पराभिमत बृद्धवाक्येनाह * आह चेति * शरीरेणैव सह गमनादिति वक्तव्ये श्लोकपूरणार्थमनुवादभूतः संशब्दप्रयोगः तदुपपादनाय स्वामित्वाभिधानं न हीति परिहारभाष्यमवतारयति * तत्रेति * न त्विति पूर्वभाष्यपाठे तु हिताशङ्कानिरासे तेन प्रतिज्ञातेन नोपपत्तिरुच्यते इति योज्यमित्याह * येषां त्विति * पूर्वपाठेतु न हीत्यखण्डपदं शङ्कानिरासाक्षमत्वेनोत्तरभाष्यमाक्षिपति*कथं*पुनरिति श्लोकं व्याचष्टे * परेणापि हीति * पर्यायेण हि सर्वत्र कार्योपलम्भस्यासर्वगतेष्वेव दर्शनाद्विरुद्धत्वं निर्विशेषणस्य चानैकान्तिकत्वं यदुक्तं तन्निरासो ऽस्माच्चावगम्यतइत्याशयः । गमनाभावे सति सर्वत्रोपलभ्यमानकार्यत्वादित्येवं विधस्य हेतोर्व्योम्नि सद्भावेन विरुद्धत्वाभावाच्छरीरे वा वृत्तेरनैकान्तिकत्वाभावादपुष्टत्वं मत्वा गमनाभावोपपादनेनाशङ्कानिरासायैतद्भाष्यमिति परिहर्त्तुं परिसंख्यार्थत्वेनाशङ्कानिराससामर्थ्यमाह * तत्रेति * श्लोकं व्याचष्टे * परिसंख्यारूपेणेति * तदूबहुविरुद्धमित्यपेक्षायामाह*तदिति*अमूर्त्तस्य कात्स्र्न्यायोगेन क्षीरोदकवत् कृत्स्नसंयोगासम्भवात् शरीराख्यभूतमिश्रत्वासम्भवाच्च भूतैः सहात्मनो गतिर्युक्तेत्युक्ते नन्वसर्वगतद्रव्यपरिमाणक्षणत्वामूर्त्तेरसर्वगतात्मवादिनं प्रत्यसिद्धममूर्त्तत्वमित्याशङ्क्य * स्वतस्तावदित्युक्तम् * मुक्तावस्थायां सर्वैः सर्वगतत्वाभ्युपगमात्संसारावस्थायां शरीरसंबन्धोपाधिकमेव मूर्त्तत्वं परैरिष्यते न चौपाधिकेन मूर्त्तत्वेनाकाशस्येव घटादिनास्य मिश्रत्वं सम्भवतीत्याशयः । श्लोकं व्याचष्टे * यदेति * सूक्ष्मत्वेन कृत्स्नसंयोगासम्भवकारणं सर्वतो विसारित्वं सूचितं चन्द्रप्रकाशादेरप्यनियतपरिमाणत्वेन कथं चिदमूर्त्तत्वव्यपदेशोपपत्तेस्तद्वैषम्यायात्यन्तशब्दः दृष्टान्तत्वेन ज्ञानसन्तानोपादानं स्वतः शब्दाव्यावर्त्त्यं दर्शयितुम्*योऽपीत्युक्तम्*स्यादस्ति स्यान्नास्ति स्याद्स्ति च नास्ति च स्यादवक्तव्यः स्यादस्ति चावक्तव्यश्च स्यान्नास्ति चावक्तव्यश्च स्यादस्ति च नास्ति चावक्तव्यश्चेति सप्तभङ्गिनयशाद्यार्हतःस्याद्वादी स्याच्छब्दस्याख्यातप्रतिरूपकाव्ययस्य कथं चिच्छब्दार्थवाचित्वाभ्युपगमादनैकान्तवादी बद्धानां संसारिणामात्मनां शरीरादत्यन्तव्यतिरेकाभावेन तन्मिश्रत्वान् मूर्त्तत्वं वदति अपिशब्दादौपनिषदो ऽपि यावत्संसारभाव्यणुपरिमाणलिङ्गशरीरमिश्रत्वान्मूर्त्तत्वं वदतीति सूचितं स्वस्वामिभावमात्रेण सम्बन्धस्योपपत्तेर्मिश्रत्वानाक्षेपकत्वादितरेतराश्रयाभिधानं नान्यस्य कदा चिदमूर्त्त-

वगमान्मूर्त्ततैव स्वाभाविकी भविष्यतीत्याशङ्क्य * मुक्तेत्युक्त-
मुक्तावस्थायां मूर्त्तत्वे सति वाय्वाद्यभिघातदुःखापरिहार्य-
मुक्तित्वे ऽप्यर्थापत्तेरमूर्त्तत्वेन लक्षितस्य स्वभावानपायित्वा-
ारावस्थायामपि न स्वभावान्यता युक्तेत्याशयः। ननु मिश्रणसं-
परपर्यायसम्पर्काभावे ऽपि शरीराश्रितत्वाद्रथ्येनेव रथी श-
ात्मा नेष्यते इत्याशङ्क्यास्पर्शवत्त्वाच्चेत्युक्तम् । एकदेशसंयु-
कर्षणं दृष्टं न चास्पर्शस्यैकदेशेनापि संयोगः सम्भवतीत्याश-
ानु माभूच्छरीरेणात्मनो नयनं वाय्वादिभिस्तु ज्वालादिवत्प्रेर-
विष्यतीत्याशङ्क्याह *न हीति* परप्रेरितस्य गमनासम्भवे ऽभि-
स्वतन्त्रस्य तर्हीच्छापूर्वकात्प्रयत्नाद् गमनं भविष्यतीत्याशङ्का-
रसूचनार्थम् *स्वतन्त्रइत्युक्तम्* शरीराद् बहिः कदा चिदिच्छ
प्रनादर्शनाच्छरीरगमनेनात्मगमनासिद्धेः शरीरगतावेव प्रय-
तुर्नात्मगताविस्याशयः। नन्वेवं सति देशान्तरादागमनस्यैवास-
त्सद्भावाभ्युपगमे बहुविरोधाभिधानमयुक्तमित्याशङ्क्याह *
* गमननिमित्तसार्वत्रिककार्याभ्युपगमे गमनासम्भवात्केव-
शरीरस्याचेतनत्वेन कार्याक्षमत्वात्सर्वकार्योच्छेदाभिप्रायं बहु-
ाभिधानमित्याशयः। अस्मत्पक्षे गमनाभावे ऽपि तत्फललाभा-
ध इत्याह *सर्वासर्वगतत्वे त्विति* यथेत्यनेन सर्वत्रोपलभ्य-
ार्यत्वात्सर्वगतत्वे साध्ये व्योम्नो दृष्टान्तत्वं सूचितम्। गमनाक्षि-
ासर्वगतत्वस्य बहुविरोधास्पदत्वाद् गमनस्य बहुविरोधास्पद-
भ्रानमिति सूचयितुं सर्वगतपक्षो न कथं चित्सम्भवतीत्याह
ति * शरीरपरिमितपक्षे ऽपि बहिर्निर्गतस्य केशादेरात्माधि-
रासायानिर्गत इत्युक्तं देहादनिर्गत इत्यनेन च श्याभाकतण्डु-
ाग्राङ्गुष्ठाणुमात्रपक्षात्सामान्यतो निर्दिश्याणुमात्रपक्षस्य
त्वसूचनार्थं पुनर्विशेषतो निर्देशः। ननु बौद्धैर्ज्ञानसन्तानस्या-
भ्युपगमात्तस्य चाद्रव्यत्वेनापरिमाणपक्षो ऽपि सम्भवात् क-
निरस्यतइत्याशङ्क्यात्मवादे तन्निरासादित्याह * ज्ञानेति *
त्रपक्षे तावद्दोषानाह * तत्रेति * मध्यमपरिमाणत्वे घटादि-
शापत्तेः सर्वाभ्युपगतनित्यत्वाविरोधित्वे नाणुमात्रपक्षस्य ब-
वसूचनार्थम् * नित्यः सन्नित्युक्तम् * श्लोकं व्याचष्टे *
ाति* तन्मात्रेत्यनेन मात्रान्तरसञ्चारानभ्युपगमे सर्वमात्रस्थ-
सम्भव इति यथाश्रुतं व्याख्याय तदभ्युपगमे ऽपि युगपत्पद्रा-
ाण व्याख्यातुम् *ततश्चेत्युक्तम्* अथेत्यनेन गात्रान्तरसञ्चा- ३७१

क्तिवैयर्थ्योपपत्तेरिति २ पु० पा० ।

रात्सर्वत्रोपलम्भो लघुत्वाच्च सूक्ष्मकालभेदानुपलब्धिरिति शङ्का
च्चरणप्रमाणाभावान्निपुणतो ऽपि लक्ष्यमाणे कालभेदानुपलम्भ
तिसौक्ष्म्ये च वेदानां तदनुभवोत्पत्तिकालं यावदेकत्रानवस्थानेनै
गात्रे ऽप्युपलम्भापत्तेरुपन्यासपूर्वकं निरस्ता क्रमेण वाणुमात्रेषु श
रावयवेषु सञ्चरतो ऽनन्तपरमाणवारब्धे शरीरे बहुकालं पूर्वस
द्धपरमाणुवियोगापत्तेः पुष्टिरादिशब्दोपात्तौ च वृद्धिशोषौ न र
तामित्येवं पुष्ट्यादीत्यवयवं व्याख्यातुम् * शरीरेत्याद्युक्तम्
शरीरमात्रपक्षो ऽप्यनेकादृष्टकल्पनापत्तेरयुक्त इत्याह * अर्थेति
एतदेवोपपादयति * सद्भाव इति * श्लोकं व्याचष्टे* सर्वे हीि
यथा सकलप्रतीत्यप्रतीतिव्यतिरेकेण विकलप्रतीत्यभावाच्छब्द
सावयवत्वमार्हतोक्तं स्फोटवादे प्रत्याख्यातं शब्दाधिकरणे च
वत्वाभावेनावयवानामसंश्लेषो विश्लेषावश्यम्भावाच्च नित्यत्वं
व्याख्यातं तथात्मनो ऽपीत्यर्थः । अवयवेयत्तायामुपचयापचय
रतम्यायोगादवयवानन्त्यमार्हतोक्तं शरीरमात्रपक्षविरोधीत्यवधि
ब्देनोक्तं संश्लेषाभावे को दोष इत्याशङ्क्य न चासंश्लिष्टानामित्यु
गात्रच्छेदे चेत्यनेन तत्सद्भावे चेति चकारेण सूचितमर्थं व्याख्यार
र्हतोक्तप्रमाणनिरासार्थं *यत्त्वित्युक्तम्* आत्मनः सङ्कोचविकासो
११ पत्तावार्हतोक्तदृष्टान्तनिरासार्थम् * दीपप्रभेत्याद्युक्तम् * अतिश
व्याख्यातुं कथं चिदित्युक्तं श्लोकद्वयोक्तातिरिक्ताप्यदृष्टकल
नास्मिन्पक्षे स्यादित्याह * तेन चेति * सहसा जायते त
सहसैव विनश्यतीत्यादिशब्देनोक्तमुपसंहरति * तस्मादिति * न
सर्वगतत्वे सत्युपनिषत्सु श्यामाकतण्डुलादिपरिमाणं विरुध्येतेत्य
शङ्क्याह * यत्त्विति * बालाग्रमात्रत्वाद्यादिशब्देनोक्तम् । वाक्यान
रेत्यनेनौपचारिकत्वे ऽनन्यार्थविभुत्वश्रुतिविरोधो हेतुरुक्तः सा
द्युपाख्याने ऽङ्गुष्ठमात्रत्वाभिधानमङ्गुष्ठपरिमाणे हृदये नीयमानत्व
त्कथं चिच्छ्रुतिसामान्यमात्रेण वपादिवाक्यवद्व्याख्येयमित्य
* यदपीति * गौणार्थत्वोपपादनार्थं पतिव्रताप्रशंसापरमेतद्व
क्यमित्युक्ते ननु स्वमहिम्ना सावित्र्या पतिव्रतया मृत्योस्त्रातः
तिरित्येतावता पतिव्रतात्वप्रशंसासिद्धेरङ्गुष्ठमात्रत्वाभिधानं कि
र्थमित्याशङ्क्य * काव्येत्युक्तम् * भारतस्येतिहासत्वे ऽप्यङ्गुष्ठम
त्रत्वस्योत्प्रेक्षामात्रत्वसूचनार्थः काव्यशब्दः ।

अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।
अन्यथोत्प्रेक्षते यत्र तामुत्प्रेक्षां विदुर्बुधाः ॥

इत्येवं लक्षणे उत्प्रेक्षाख्यकाव्यालङ्कारार्थं यमवशग

मृत्युरिति च विस्पष्टस्य प्रसिद्धस्य व्यवहारस्य प्रक-
म शंसनार्थं कीर्त्तनार्थमित्यर्थः । एतच्च द्वैपायनेनैव नि-
ः सर्वगतः स्थाणुरचलो ऽयं सनातन इत्यादौ सर्व-
त्वाभिधानादवसीयतइत्याह * तथा हीति * नन्वेवं सत्येकेनै-
त्मना सर्वशरीरादिष्वोपपत्तेः ते सर्वे स्वेन स्वेनात्मनोपलभ्यमा-
ः सन्त्येवेत्यात्मवादभाष्ये प्रतिशरीरात्मभेदाभिधानमयुक्तमित्या-
ङ्कते * ननु चेति * ऐकात्म्ये पशुमनुष्यादिभिन्नजातीयदेहोप-
ग्यानां फलानाम् एकजातीयेन देहेन भोगासम्भवे ऽप्येकजातीय-
होपभोग्यानां फलानामेकेन देहेनोपभोगसम्भवादनेकशरीरवैय-
पत्तेः सुखदुःखादिव्यवस्थानुपपत्तेरेकशरीरस्थेन चात्मना दृष्टार्थे
रीरान्तरस्थस्यात्मनः प्रत्यभिज्ञापत्तेर्भेद एव युक्त इति परिहरति
नैष दोष इति * आद्यं हेतुं व्याचष्टे * इतरथा हीति * ननु
थापूर्वकृतकर्मफलोपभोगायोपात्ते देहे तदुपभोगान्नष्टे कर्मान्तर-
लोपभोगार्थं देहान्तरार्थवत्त्वं तथैकस्मिन्नपि जन्मनि यत्कर्मफलो-
भोगार्थं यो देहो ऽर्जितस्तेन कर्मान्तरफलोपभोगस्याशक्यत्वात्तदर्थं
हान्तरार्थवत्त्वं भविष्यतीत्याशङ्कते * जन्मान्तरेति * परिहरति
नेति * यावन्ति कर्माणि फलदानाय प्रवृत्तानि तावद्भिरुपात्तेनै-
नैव देहेन सर्वफलोपभोगसिद्धेर्देहान्तरानर्थक्यं जन्मान्तरे तु पू-
देहनाशाद्देहान्तरार्थवत्त्वेत्यर्थः । द्वितीयं हेतुं व्याचष्टे * सर्वेति
तेशरीरं चेति * चकारसूचितानि हेत्वन्तराण्याह * अन्यदीये-
ति * प्रत्यभिज्ञापत्तिरप्यनेन सूचिता वसन्ते ब्राह्मणो ऽग्नीनाद-
त ग्रीष्मे राजन्य इत्यादिवर्णविशेषव्यवस्थया यः कर्मचोदनानां
वस्थाख्यो भेदः स न स्यादित्युक्तम्। ननु ब्राह्मणत्वादेर्देहाश्रितत्वे-
त्मैक्ये ऽपि देहभेदाद्व्यवस्थोपपद्यते इत्याशङ्क्य * एकस्यैवेत्युक्त- ३
* चेतनप्रवर्त्तकत्वाच्चोदनानामात्मनो ऽपि च देहसम्बन्धोपा-
कब्राह्मणत्वाद्यभिमानेन ब्राह्मणत्वादिव्यपदेशोपपत्तेः सर्वदेहेष्वै-
क सति व्यवस्थानुपपत्तिरिति भावः । नानात्वे तु नैते दोषाः स-
ीत्याह * अत्मेति * ननु नानात्वे सति सर्वगतत्वाभ्युपमात्स-
गमेकदेशत्वं स्यात् तच्च द्रव्याणां भिन्नदेशवृत्तित्वमियमाद्विरुद्ध-
त्याशङ्क्याह * सर्वेषामिति * मूर्त्तत्वप्रयुक्तो ऽसौ नियमो न द्र-
प्रयुक्त इति भावः। ननु यथा ह्ययं ज्योतिरात्मा विवस्वानपो भि-
बहुधैको ऽनुगच्छन्नुपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजो
मात्मेत्याद्युपनिषत्स्वैकात्म्यव्यवहारो नानात्वे विरुध्येतेत्याशङ्क्याह
तदपेक्षयैव चेति * समानदेशवृत्तिस्तच्छब्देन परामृष्टा चैतन्यं

बोधरूपत्वमात्ममहङ्कारास्पदत्वं सुखाद्याश्रयतादिशब्देनोक्ता ब
षनिवृत्तये स चौपचारिको व्यवहार इत्याशयः । ननु नानात्वे
सर्वगतत्वाभ्युपगमेन सर्वदेहसम्बन्धात्सुखाद्युपलब्धिव्यवस्
स्यादित्याशङ्कते * कथं पुनरिति * देहान्तरगतस्य सुखादे
समवायाभावान्नोपलम्भापत्तिरित्याशङ्क्य * अन्यदीयेत्युक्त
स्वासमवेतस्यापि देहादेरुपलम्भात्समानदेशत्वमात्रमुपलम्भहे
त्याशयः । परपक्षसाम्यापत्त्यान्येषां परिहारं दूषयितुमुपन्य
* केचित्तावदिति * गर्भस्य मातुश्च यावात्मानौ तद्वर्त्तिना
समासार्थः। श्लोकं व्याचष्टे *शरीरेति* स्वसमवेतस्यैव दुःखा
लब्धिरिति परिहारसाम्यमभिप्रेत्य* तत्रेत्युक्तम्* स्वासमवेत
देहादेरुपलम्भदर्शनादेनं परिहारं दूषयति * स्यादिति *
सुखाद्युपलम्भव्यवस्थायामित्यर्थः। ननूभयपक्षतुल्यस्य दोषस्यैकं
द्भावनायोगाददोषो भविष्यतीत्याशङ्क्याह * न त्विति *
साम्यमस्तीत्याह * अपि चेति * स्वकर्मोपात्तस्यैव सुखादे
योग्यत्वाद्व्यवस्थेति स्वमतेन परिहरति * तस्मादिति * :
व्याचष्टे * यदि हीति * न त्वन्यस्यात्मनोऽन्यदीये देहे भ
स्वत्कृतयोरपि धर्माधर्मयोरात्मीयत्वापत्तेरव्यवस्था स्यादित्या
निरस्यन्नुपसंहरति * तस्मादिति * तत्कर्मोपार्जितैस्त्वेतैः
२।२ माणेषु कर्मसु कर्तृता यजमानानामृत्विक्परशुकर्मवदित्यात्मव
कन्यायवार्त्तिकाद् शरीरात्मनोः स्वस्वामिभावव्यवस्थानाद्व्य
त्यर्थः । सर्वगतत्वसाधनस्य प्रकृतोपयोगमाह * एवमिति *
मात्मसमवेतस्य कर्मणोऽवस्थानमित्याद्यकल्पनिरासार्थं नेत्य
भाष्यं व्याख्याय प्रदेयद्रव्यसमवेतस्यावस्थानमिति द्वितीयकल
रासार्थं यत्रेति भाष्यं व्याचष्टे * अथेति * आश्रयोऽपीति भ
व्याचष्टे * न चेति * सत्यपीत्यादिभाष्येण द्व्यवदानस्यैवाव
विशेषत्वाद्भस्मनोऽप्यवदानविरोधित्वमाशङ्क्य भस्मावस्थायां :
वदानरूपाप्रत्यभिज्ञानात् भस्मनस्तदवस्थात्वायोगाद्विरोधितोच्य
ति तद्विपरीतशब्देन सूचितम् ।नन्वदृश्यमानमपि द्व्यवदानं काला
रभाविफलसिद्ध्यन्यथानुपपत्त्यावधारितस्थायित्वस्य कर्मणो निर
थस्यानुपपत्तेराश्रयत्वेनानुमास्यत इत्याशङ्क्यादर्शनहेत्वभावाद्योग्य
पलब्धिविरोधेनानुमानासम्भवाभिधानार्थं फलक्रियेत्यादिभ
व्याचष्टे *न चास्येति* सौक्ष्म्यादीनामित्याशङ्काभाष्यं व्याचष्टे *अ
पत्त्येति* कल्पितमिति परिहारार्थं भाष्यं निश्चितानभिधानादयुक्त
शङ्का मृदूक्त्वा परपक्षेऽप्यतिगौरवाभिधानार्थत्वेन व्याचष्टे

तीति * ननु स्वतन्त्रस्यैव कर्मणः स्थितिर्भविष्यतीत्याशङ्का-
र्थमनाश्रितमिति भाष्यं व्याचष्टे * एवमिति * क्षणिकत्वे-
वगतस्य कर्मणो ऽत्र स्थितिरनुपलब्धिकारणं च स्वातन्त्र्या-
ल्प्यमित्यतिगौरवमेवंशब्देन वदता तादृशशब्दस्यायुक्तार्थत्वं
।देशान्तरप्रापणस्वभावत्वेनान्यत्रावगतस्य कर्मण औदासी-
चकल्पने ऽप्यतिगौरवाभिधानार्थं स्वभावान्तरेति भाष्यं
पविषयत्वेन व्याचष्टे * अथेति * तस्मादित्युपसंहारभा-
ष्टे * तस्मादिति * एवकारेण स्थायित्वकल्पनस्यायुक्त-
नाद्भङ्गीत्यवयवो व्याख्यातः । प्रयोजनभाष्ये चिन्ता-
द्व्याचष्टे * मूलेति * अनन्तरसूत्राभिहिता पूर्वसद्भावप्र-
शङ्का निवृत्त्यर्थत्वे चिन्ताशब्दस्याधिकरणशब्देनोक्ते ननु
शब्दा अपीत्यपिशब्दात्प्रतिपदाधिकरणप्रयोजनमेतदित्यभावे
ादपूर्वमित्येतावन्मात्रस्य सिद्धान्तार्थत्वेन द्रव्यादेरपूर्वार्थे-
ः प्रतिनिधिर्न युक्त इत्याशङ्क्य मूलशब्देन प्राधान्याद्भावा-
णमुक्तम्।एवंशब्दार्थे ऽपि शब्द इत्यर्थः। प्रयोजनमुपपादयति
ादीनामिति * न देवताग्निशब्दक्रियमन्यार्थसंयोगादिति
रणे कर्मणामदृष्टार्थत्वात्तस्य प्रतिनिधिना सिद्धौ प्रमाणा-
तनिध्यभावो वक्ष्यतइत्यर्थः । ननु प्रक्रान्तापरिसमाप्तिनि-
परिहारार्थं कर्मणो ऽवश्यं समापनाय द्रव्यान्तरस्यावश्यो-
त् पूर्वपक्षप्रयोजनं न युक्तमित्याशङ्कते * कथं तर्हीति *
ोपादाने सदृशानादरः पूर्वपक्षप्रयोजनमिति परिहरति
नीयमेवेति * ननु पूर्वपक्षे ऽप्याश्रयत्वेन कर्मणो ऽन्वया-
े सदृशादरो भविष्यतीत्याशङ्क्य कर्मणश्चेत्युक्तम्।नन्वेवमपि
रूपात्तः स्यादित्याशङ्क्याह * न चेति * अन्यार्थत्वमुपपा-
ः पूर्वद्रव्यमिति * प्रक्रान्ता समाप्तिनिमित्तो दोषः प्रत्य-
ोक्तः। काम्यवन्नैमित्तिकस्यापि कर्मणः प्रतिनिधिना समा-
ातासमापनदोषपरिहारमात्रार्थं न फलसिद्ध्यर्थमिति शङ्का-
म् * नैमित्तिकेत्युक्तम् * प्रतिनिधिना ऽप्यनुष्ठितं नै- ३८३।१
कर्माकरणनिमित्तप्रत्यवायपरिहाराख्यं फलं साधयतीत्या-
धातोश्च फलभावनाकरणवाचित्वे श्येनादिशब्दानां तत्सा-
रण्यान्नामधेयतापि सिद्धान्तप्रयोजनमित्याह * नामधेये-
स्मात्तर्हि भाष्यकृता ऽसौ नोक्तेत्याशङ्क्याह * सेति *
ेमन्नधिकरणइत्यत्रोक्तत्वादित्यर्थः । गुणविधित्वे त्वनुष्ठे-
ाश्रयत्वे तदभावादनुष्ठानोपयोगित्वेन प्रयोजनत्वोपपत्तिः।

## ॥ अथ कर्मणां गुणप्रधानभावविभागाधिकरणम् ॥ ३ ॥

## तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥

अवगतमेतदित्यादिभाष्येण भावशब्दानामपूर्वगमकत्वोक्त तदेतरस्त्वदर्थमिति न्यायान्नामशब्दार्थस्य भावशब्दार्थे कर्मप्रत्य त्वावगतेः कर्मणां नामार्थं प्रति प्राधान्याभिधानात्प्रधानकर्मवा त्वस्यार्थादुक्तस्यापवादायेदमधिकरणं युक्तं तत्र गुणप्रधानचिन्त या भेदलक्षणासङ्गतिमाशङ्क्योपक्रमोक्तामेव सङ्गतिं स्मारयत्येवा ति द्रव्यं प्रति कर्मणो गुणत्वे दृष्टार्थत्वात् कर्मभेदे ऽप्यपूर्वभे नास्तीत्याशयः। विवेकशब्देन च न किंचिद् गुणकर्मास्तीत्याशङ्क गुणकर्मव्युत्पादनार्थता ऽस्याधिकरणस्य सूचिता भावार्थत्वेति पू पक्षभाष्यं व्याचष्टे * तत्रेति * आद्यपादेनावहन्त्यादेरपि यज्य दिवद्धात्वाद्याकाङ्क्षोत्थापनहेतुभावनावाच्याख्यातप्रत्यययोगेन भ धार्थत्वात्प्रसक्तिलक्षणाया श्रुत्या तदर्थस्य भावनया भाव्यसाध त्वेन ग्रहणात्प्राधान्यमित्येवमाश्रितत्वात् प्रयोगस्येति सूत्रावयवं क्तश्रुतिकृतधात्वर्थप्राधान्याभिधानार्थत्वेनै भाष्यं व्याख्याय भाव्य इति व्युत्पत्त्या भावशब्देन साध्याभिधानात्साध्यार्थत्वाविशेषादित्ये भूतभव्यसमुच्चारणन्यायार्थतया द्वितीयेन व्याख्याते ननु व्रीह्यादेर्न मार्थस्य द्वितीयया भाव्यत्वेनान्वयान्नेह भूतभव्यसमुच्चारणन्या ऽस्तीत्याशङ्क्य भवनकर्तृभावनावाचित्वरूपभावार्थत्वाविशेषात्सि व्रीह्यादौ भावनां प्रति भाव्यत्वमशक्यं द्वितीयया वक्तुमित्येवं तृतीये व्याख्यातम्। प्रधानभूतकर्मवाचिताख्यातस्य प्राधान्योक्त्योक्ता। न व्रीह्यादेर्भाव्यत्वानभ्युपगमे तृतीयानिर्देशाभावे च साधनत्वस्याप्ययो गादनन्वयः स्यादित्याशङ्क्य धात्वर्थस्य प्रधानत्वेनाङ्गापेक्षत्वात्फल वत्सन्निधावफलं तदङ्गमिति न्यायेनापूर्वप्रयुक्तत्वाद्धर्माणां धात्व र्थस्य चापूर्वसाधनत्वाद् तृतीयानिर्दिष्टस्यापि व्रीह्यादेर्धात्वर्थसाधन तावसीयतइति सूचयितुमाह * यावद्धीति * न्याय्यशब्देन धात्वर्थ फलवत्त्वस्य पूर्वाधिकरणन्यायसिद्धतोक्ता यथा यज्यादीनामर्थो व्रीह्यादिभिर्निष्पाद्यस्तथा ऽवहत्यादीनामपीति वदता सक्तुवत् द्विती याभङ्गः सूचितः। प्रधानकर्मत्वपूर्वपक्षस्यापूर्वभेदोपयोगित्वमाह * अत श्चेति * ततो ब्रूम इत्यादिसिद्धान्तभाष्यं तात्पर्यतो व्याचष्टे * अ त्रेति * यद्यपि द्रव्यस्य चाख्यातपदार्थस्य चान्वये धात्वर्थस्या ख्यातपदश्रुत्या फलवत्त्वावगमाद्भूतभव्यसमुच्चारणन्यायाच्च सर्व त्र धात्वर्थनिष्पादकत्वं द्रव्यस्यावसीयते तथापि द्रव्यनिष्पादितस्य

। कैमर्थ्यापेक्षायामक्लृप्तप्रयोजनस्यैव यागादेरदृष्टापूर्वसाध-
मवघातादेस्तत्कृतेनैव द्रव्योपकारेण नैराकाङ्क्ष्येणाप्रामा-
ादृष्टार्थता युक्तेत्यर्थः । अनेन च सर्वेभ्य इति भाष्योक्तगु-
शुत्पादनस्य अपूर्वभेदापवादार्थत्वं विवृतम् । श्लोकं व्याचष्टे *
* अनेन चाख्याततत्वविशेषणभूतैर्भावार्थजन्मन इति-
प्रागवस्थायामभ्युपगमेन परिहृतं व्रीह्यादेर्द्रव्यस्य सिद्ध-
रूपेण भाव्यत्वायोगे ऽप्यसिद्धेन तण्डुलीभावादिरूपेणा
ारम्भवात् सिद्धे च साध्यत्वाशक्तेरित्येतत्परिहृतं भवतीति
पकरोतीत्युक्तम् । ३८४।१

॥ प्रधानकर्मलक्षणम् ॥

द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य
णभूत्वात् ॥ ७ ॥

यद्यपि यदक्लृप्तप्रयोजनं तस्यैवापूर्वसाधनत्वं युक्तं
तथापि किमक्लृप्तप्रयोजनमिति व्यवस्थाहेत्वभावाद्विधि-
र्वेषामपूर्वसाधनतावश्यमापद्येतेत्याशङ्क्य तद्विवेकार्थ-
धानलक्षणस्यैवं सतीति भाष्योक्तमध्यायोपक्रमएवास्य
कार्थं यद्गुणप्रधानलक्षणमिति वार्त्तिकेन विवृतत्वा-
ार्थं यैरिति भाष्यं व्याचष्टे * यैरिति * यद्य-
नां भावशब्दत्वेनाभिप्रेतानां पूर्वनिर्दिष्टानां तानि द्वैध-
शब्देन परामर्शात्तद्वाच्यानां कर्मणां गुणप्रधानद्वारा तेषां
ाचितोक्तेति यद्भावशब्दवाच्यैर्यैः कर्मभिर्न द्रव्यमुप-
ां कर्मणां प्रधानत्वात्तद्वाचीनि भावशब्दाख्यान्याख्यातानि
ाचीनीति व्याचक्षाणेन भाष्यकृतोक्तम् । तथा व्याख्याता-
बुद्धिस्थत्वात्तच्छब्देन परामर्शोपपत्तेः क्लिष्टव्याख्या न
त्वा भाष्यस्थं भावशब्दमुपेक्ष्य कर्मभिरित्येतावन्मात्रमुक्तं
यस्य सूत्रोक्तं च प्राप्तिविकारार्थत्वं च दर्शयितुं * धर्म तो
* प्रधानत्वाभिधानस्यापूर्वभेदोपयोगित्वमदृष्टार्थानीत्यने-

॥ गुणकर्मलक्षणम् ॥

तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयते तस्य
व्यप्रधानत्वात् ॥ ८ ॥

सूत्रं व्याचष्टे * यैः पुनरिति * अग्निमादधीतेत्यग्नि
भाव्यत्वार्हकर्माङ्गभूताहवनीयादिरूपवाचित्वात्तस्य च यू
शास्त्रीयकर्मोत्पाद्यत्वाद्यथाधानेनाग्न्यइत्युक्तं स्वमतेनर्त्विजां
त्वाद्भाष्यकृन्मतेन चोत्पाद्यत्वादवाप्यन्ते क्रियन्ते वेत्युक्तम
ष्यादिलक्षणं विकारमेव पुरोडाशोत्पादनयोग्यत्वाधानार्थत्व
स्कारत्वेनाभिप्रेत्य संस्क्रियन्ते वेत्युक्तम् । द्रव्यप्राधान्योप
र्थः प्रयोजनवच्छब्दः सूत्रद्वयोक्तव्यवस्थाहेतूपसंहारार्थं प्र
त्यादिभाष्यं स्पष्टत्वान्न व्याख्यातं गुणप्रधानविचारस्यापूर्
द्वावविवेकप्रयोजनतया न सर्वेभ्यः शक्यमपूर्वं कल्पयितुमि
ष्यात् कुतो ऽपूर्वमित्यस्माच्च ज्ञातत्वेन प्रयोजनान्तरानपेक्षत्व
पादकं प्रयोजनमिति भाष्यमयुक्तमाशङ्क्योपपादयति * यं
यथैव भावार्थाधिकरणस्य लक्षणसङ्गत्यै धात्वर्थभेदानुनिष्प
भेदानुसारसिद्धिप्रयोजनत्वे ऽन्यदुपोद्घातेनेत्युपोद्घातश
ऽप्यनुष्ठानार्थत्वाच्चिन्तायास्तदुपयोगिप्रयोजनान्तराभिधानं त
त्याशयः । पूर्वपक्षप्रयोजनभाष्यं प्रैयङ्गवे चरौ व्रीह्युपदेशाद
शङ्क्य व्याचष्टे * तदुच्यतइति * नन्वतिदेशप्राप्तानामपि
प्रियङ्गुभिर्बाधात् कथमुत्पाद्यतइति प्रश्नपूर्वकमुपपादयति
इति * प्रयाजेज्याङ्गभूतमाज्यं यथा प्रधानाङ्गतया श्रुतेन प्रि
व्येण न बाध्यते तथा ऽवघाताङ्गभूता व्रीहयो ऽपीत्यर्थः ।
सति सिद्धान्ते ऽप्युत्पाद्या इत्याशङ्क्याह * सिद्धान्ते त्विति
देव प्रश्नपूर्वकमुपपादयति * कुत इति * व्रीहिस्वरूपानाद
साधनांशनिवेशं संस्काराणां वक्तुं प्रधानौपयिकशब्दः । नन्
तस्य निर्वापोत्तरकालं विधानात्तथात्वनिरूप्तानामेवावघातो
व्रीह्यन्तरोत्पादनानाक्षेपात्तेषां च यागप्रयुक्त्यैव लाभेनावघा
प्रयोजकत्वान्नेह पूर्वपक्षे ऽपि व्रीहिप्राप्तिरित्याशङ्कते *
त्विति * सत्यं पदप्रयुक्तोपजीवित्वेनाप्रयोजकत्वं भवति गु
कारे गुणफलसम्बन्धविधिपरस्य शास्त्रस्य वाक्यभेदापत्तेर
श्रयिसम्बन्धपरत्वायोगान्निराश्रयस्य च गुणस्य फलसाधन
पपत्तेराश्रयाक्षेपकशास्त्रान्तरापेक्षत्वाद्भवति वाजिनेज्यादौ च
स्य नैरपेक्ष्ये ऽपि वाजिनादेः प्रयुक्त्यशक्तेरिह त्ववघातशास्त्रस्य
शास्त्रानपेक्षत्वादवघातस्य च प्रयुक्तिशक्त्यविघातान्नान्यप्रयुक्त
वेन हेतुरस्तीत्याशयेन परिहरति * नैतदिति * तुल्यशब्द
२५।२ त्यानपेक्षतोक्ता । श्लोकं व्याचष्टे * व्रीहिभिरिति * यागार्थ
नियमाभावं वक्ष्यमाणमभिप्रेत्य विशेषहेत्वभावोक्तिः । न च य

दध्यामिक्षा वाजिभ्यो वाजिनमिति शास्त्रयोरन्योन्यानपेक्षत्वे तप्ते पयसि दध्यानयतीत्यानयतेर्द्विकर्मकत्वात्पयसश्चाधिकर-नाद्यदध्याख्यकर्मव्याप्यतया द्वितीयकर्मत्वात्समाप्तिः। शब्दार्थ यायेनागारे गावो वास्यन्तामित्यगारस्येव गोवासनं प्रति दध्या-प्रति प्राधान्यावसायादामिक्षायाश्च पयोरसप्रत्यभिज्ञानेन पयो विशेषमात्रत्वेन ततोऽर्थान्तरत्वाभावादामिक्षार्थत्वेन दध्यान-तत्प्रयुक्तत्वावगतेरामिक्षानुनिष्पादित्वे दध्यानयनान्निष्पत्तिर-वाजिनस्यामिक्षाप्रयुक्तादपि दध्यानयनान्निष्पत्तिसिद्धेर्दध्यान-च वाजिनार्थत्वेन प्रमाणाभावाच्च दध्यानयनं प्रति वाजिनस्य जकत्वेऽर्थापत्तिः प्रभवति। तथावघातस्य यागानुनिष्पादित्वा-यागवच्च तस्यापि पूर्वपक्षे व्रीहीन्प्रति प्राधान्याविशेषाच्च च यथा प्तमं पदमध्वर्युरञ्जलिना गृह्णातीति सप्तमपदपांसुग्रहणकर्म-नुनिष्पादित्वाभावेऽपि क्रयवच्च नयनस्य स्ववाक्याश्रुतेः। स-नात्वद्रूपदान्यनुनिष्क्रामतीति विहितनयनसाध्यत्वाविशेषेऽपि स्य प्रकृतैकहायनीसंस्कारार्थत्वेन तद्द्वारा क्रयार्थत्वावसाया-युक्तत्वावगतेस्तत्प्रत्युक्तनयनस्य लाभेनैव पदपांसुग्रहणकर्मणो रैराकाङ्क्ष्यात्प्रयोजकत्वाभावस्तथावघातस्य यागार्थैर्व्रीहिभिर्नै-ङ्क्ष्यस्ववाक्यश्रुतव्रीहिसंयोगेन वाक्यान्तरस्थव्रीह्यनपेक्षत्वादे-ङ्क्ष्यत्वं चाप्रयोजकत्वकारणं तदुपलक्षितं च निनयनादिव-पत्तित्वमनाशङ्क्यमेव उत्तरार्द्धादादिरादानामिति भावव्युत्पत्त्या-देनावदानमुक्तम्। ननु निर्वापोत्तरकालमवघातविधानाद्यागार्थ नामेव व्रीहीणामवघातसाधनत्वावगतेर्यथा पुरोडाशार्थकपा-धनत्वात्तुषोपवापस्य कपालं प्रत्यप्रयोजकत्वं तथावघातस्यापि र्थव्रीहिसाध्यत्वाद् व्रीहीन्प्रत्यप्रयोजकत्वं भविष्यतीत्यभिप्राये-जकत्वं चोद्यमिति सूचयितुं पदकर्मानन्तरमर्थाभिधानकर्मोदा-पि चरममुदाहृतम्। यागव्रीहीनवहन्तीत्यन्यार्थत्वेनाभिधाना-तुषोपवापतुल्यतेत्यर्थः। श्लोकार्थमुपसंहरति *तस्मादिति* गार्थत्वाभिधानाभावेऽप्युपादानगौरवपरिहाराय यागार्थाना-व्रीहीणामवघातसाधनत्वावगतेरन्यार्थत्वाभिधानफललाभादप्र-त्वं भविष्यतीत्याशङ्क्याह * न चास्मिन्निति * निर्वापस्या-पक्षे यागार्थव्रीहिविषयत्वे प्रमाणाभावान्निर्वापावशिष्टानाम-व्रीहीणां सन्निधेरुपादानगौरवाभावाच्च यागार्थव्रीहिनियमः तीत्याशयः। नन्वाग्नेय्याग्नीध्रमुपतिष्ठतइतिवदप्रकृतोपादा-तकृत्वन्वयलक्षणसामान्यसम्बन्धस्यापि कल्प्यत्वाद्गौरवापत्ते-

स्तत्परिहारार्थं प्रकृतानामेव व्रीहीणां ग्रहणं युक्तमित्याशङ्क्याह
चात्रेति * विशेषाश्रुतेरिमे व्रीहयः क्लृप्तसामान्यसम्बन्धा ने
विशेषाज्ञानादाग्नेयीन्यायानुपपत्तेः। प्रकरणस्यैव विशेषकत्वं वा
च तत्सम्भवति विनियोगमात्रे तस्य व्यापारादित्याशयः । ननु
नियोगे प्रमाणभूतस्येतिकर्त्तव्यताकाङ्क्षालक्षणस्य प्रकरणस्या
कत्वे ऽपि सान्निध्यपरपर्यायाधिकारलक्षणस्य प्रकरणस्य सप्त
पांसुग्रहणादौ प्रकृतैकहायन्यादिसम्बन्धित्वाभ्युपगमेन दर्शना
शेन विशेषो भविष्यतीत्याशङ्क्याह * न चेति * यदवघात
णां साकाङ्क्षत्वाभावान्नैराकाङ्क्ष्ये चाधिकारस्य नवमाधिकर
त्रे विशेषकत्वनिरासान्नात्र प्रकृतग्रहणे प्रमाणमित्यर्थः। सिद्धान्ते
कथं प्रकृतग्रहणमित्याशङ्क्याह * संस्कारेति * आनर्थक्य
द्वारायापूर्वसाधनविशेषाकाङ्क्षायामधिकाराद्विशेषलाभो युक्त इ
शयः । तत्रापि व्रीह्यादिशब्दस्यापूर्वसाधनत्वानभिधायित्वात्
वाच्यलक्षितकर्मलक्षितापूर्वसाधनत्वस्य लक्षणापरम्परयाव
क्लेशाभिधानं पूर्वपक्षे तु नासौ न्यायो ऽस्तीत्याह * न चेति *
थोक्तं प्रयोजनमुपपाद्य स्वयं प्रयोजनान्तराण्याह * धर्मेति *
थौन्दुबरमुलूखलं सर्वौषधस्य पूरयित्वावहन्त्यथैनमुपदधातीत्य
तस्य तण्डुलसाध्यपुरोडाशादिप्रयोजनाभावात्तण्डुलनिवृत्त्यर्थत्व
वेनादृष्टार्थत्वात् सकृदनुष्ठानं धर्ममात्रे त्वदर्शनात् शब्दार्थेनाप
स्यादित्येकादशाधिकरणे वक्ष्यते तथात्रापि पूर्वपक्षे स्यादित्येवं प्र
जनं यागव्रीहीणां चावघातनियमाभावो द्वितीयम्।सान्नाय्योपांशु
जाङ्गत्वाविशेषात्ताद्विकारेष्वपि प्रयोगस्तृतीयम् । आदिशब्दाद्यव
ऽपि व्रीहीणामेवावघातस्त्रयाणामेव चेति प्रयोजनद्वयम् ।

॥ अथ संमार्जनादीनामप्रधानताधिकरणम् ॥ ४ ॥

## धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ९

उदाहरणबहुत्वस्य प्रयोजनमाह * स्रुगिति * संमार्ग
ग्निकरणसमुदायभूम्ना संमार्गशब्दः । अग्निजुहोद्व्र्यवदानद्व
प्रधानान्वयतुल्यत्वे ऽपि स्रुगन्तरविषयो विप्रकर्षो ऽभिमतः । द्व्र
दानस्याग्निसम्बन्धापादनद्वारा च प्रधानसाधनत्वात् जुह्वा अ
न्यपेक्षया विप्रकर्षः सम्भवति। उपभृतः प्रयाजानुयाजार्थाज्याधार
ऽपि प्रधानहविराधारत्वाभावात् ध्रुवायाश्चोपांशुयाजार्थाज्याधार
ऽन्यसाधारण्याभावात्प्रधानकालविप्रकर्षाच्च प्रधानाविप्रकर्षः ।

१ ग्रासार्थेनेति २ पु० पा० ।

ीनां जुहूतुल्याग्निपरिधानार्थत्वे ऽपि प्रक्षिप्यमाणहविर्बहिःपत-
तिबन्धकत्वेन प्रधानकालोपयोगित्वात् हविरन्यन्वयान्तरितप्र-
नकालजुह्वपेक्षया प्रधानप्रत्यासत्तिः स्रुगन्तरापेक्षया तु स्पष्टैव
डाशस्य त्याज्यत्वात् त्याज्यद्रव्यवदानसमवायित्वाद्वान्यतः प्रत्या-
त्तेः। ननु प्रत्यासत्तिविशेषसूचनस्य किं प्रयोजनमित्याशङ्क्य प्राति-
न्येन सिद्धान्तोपयोगमाह * एतदिति * किं तावत्प्राप्तमित्या-
पूर्वपक्षभाष्यमुपकारलक्षणशेषत्वाभावेन तदभावमात्रस्य प्रधान-
त्वानापादकत्वादयुक्तमाशङ्क्योपपादयति * तत्रेति * यद्यप्यु- ३८६
ारलक्षणशेषत्वाभावात् कुतो ऽपूर्वं कुतो नेति भाष्याच्चादृष्टार्थे-
लक्षणमिदं न प्रधानलक्षणमिति वस्तुतो ऽवसीयते तथापि
श्रुतात् सूत्रात्प्रधानकर्मलक्षणं मत्वा पूर्वपक्ष इत्यर्थः। अनेन च
नकर्मलक्षणापवादार्थतास्याधिकरणस्योक्ता एवं चापवादत्वेन
तिसिद्ध्यर्थमेव तान्यदृष्टार्थानीति वक्तव्ये तानि प्रधानभूतानीत्य-
ानात् सूत्रानुपालम्भः। सिद्धान्ते वा संमार्गादेरप्यदृष्टद्रव्योपका-
ाकत्वाभ्युपगमाद्यथाश्रुतमपि लक्षणसूत्रद्वयमविरुद्धं तदा स्वे-
धिकरणस्य गुणकर्मत्वाभिधानप्रयोजनापूर्वाभावापवादाद् गुण-
लक्षणस्यैवापवादार्थत्वम्। उत्तरेण तु गुणकर्मस्यैवापवादिष्यते अत
तदपवादापवादार्थमेतदधिकरणद्वयमेतदिति तच्छब्देनानन्तर्ये-
षात्प्रधानत्वलक्षणं परामृश्य तदपवादस्य गुणत्वलक्षणस्यापवा-
मित्येवं व्याख्यातं वक्ष्यमाणगुणकर्मत्वापवादादुपचारतो
णापवादाभिधानं यदा तु सम्मार्गादिसाध्यस्यादृष्टोपकारस्यावा-
द्वारत्वाभावान्नापूर्वशब्दवाच्यतेष्यते तदा गुणकर्मस्वदृष्टार्थेष्वप्य
भावाद् गुणकर्मलक्षणद्रव्योपकारत्वस्य सम्मार्गादावपवादमभा-
यापकत्वमाशङ्क्य व्यापकत्वसिद्धये तदपवादार्थमेतदधिकरणम्।
ं तु स्तुतशस्त्रयोर्गुणकर्मत्वाभावे ऽप्युपकारकत्वसद्भावादति-
ाकत्वाभिधानेनापवादार्थमित्यध्यायार्थानुक्रमणवार्तिके व्याख्ये-
अस्मिंस्तु व्याख्याद्वये नास्याधिकरणस्य प्रधानकर्मलक्षणापवा-
त्वाभिधानार्थं यैर्द्रव्यं न चिकीर्ष्यतइत्यनेन प्रधानकर्मलक्षणमाहे-
ः किं तु पूर्वपक्षबीजप्रदर्शनार्थं किमाहेत्यपेक्षायां सङ्क्षेपतः पूर्व-
र्थमाह * द्रव्येणेति * कर्मणो ऽनुपकारित्वाद् गुणत्वाभावे
ाकार्यत्वस्याप्यभावात्प्राधान्यमपि न स्यादित्याशङ्कानिरासार्थत्वे-
द्रव्यं त्वेवं जातीयकमदृष्टार्थं कर्माभिनिर्वर्त्तयत्तत्प्रतिगुणभूत-
वं भाष्यावयवं व्याख्यातुम् * द्रव्येणेत्युक्तम् * द्वितीयाया

व्याख्याने इति २ पु० पा० ।

गुणकर्मत्वप्रामाण्यासम्भवमभिप्रेत्य तदन्यथानुपपत्तिकल्प
कारायोगाद् दृष्ट एवोपकारो वाच्यो न चासावस्तीति न
तइत्युक्तम् *

तुल्यश्रुतित्वाद्वेतरैः स धर्मः स्यात् ॥ १०

नन्ववघातादिषूक्तस्य गुणकर्मलक्षणस्येहाभावात्तत्स
भिधानमयुक्तमित्याशङ्क्याह * नैव हीति * यस्मान्नैतल्लक्ष
स्माद् गुणकर्मत्वप्रमाणाद्द्वितीयातुल्यत्वात्साधर्म्याभिधानं
मिति हि शब्दार्थः । पूर्वोक्तलक्षणत्यागे हेतुमाह * 
ति * तथा सति को विरोध इत्याशङ्क्याह * तादर्थ्येति *
यजतइत्यादिभिर्द्रव्यं न चिकीर्ष्यतइति भाष्यात्प्रत्यक्षगम्यस्यं
स्य लक्षणतोक्ता भाति सा च तृतीये निषेत्स्यमानत्वाद्वि
* श्रुत्यादीत्यनेनोक्तम् * न प्रत्यक्षादेर्ज्ञापकत्वेन निमित्तत्वं
कारस्य कारकत्वेनेत्यर्थः । लक्षणत्वाभावे किमुपन्यासप्रयो
प्रश्नपूर्वकमाह * किमर्थं तर्हीति * अपूर्वाभावोपयोगित
न स्वातन्त्र्येणेत्याशयः । श्लोकं व्याचष्टे * यद्येति * पूर्व
न सम्भवतीत्याशङ्क्याह * पूर्वपक्षेति * द्वितीयाप्रमाणकगुण
योगादेतल्लक्षणाधीनत्वमापाद्य पूर्वपक्ष इति भावः । अव
द्रव्ये द्वितीयाया गुणकर्मत्वेन व्याप्तिः सधर्मशब्देनोक्तेति
ऽनैकान्तिकत्वादिदोषदुष्टत्वान्नेह सामान्यतो दृष्टं सम्भवती
गुणकर्मणीति प्रश्नद्वाराशङ्कितेनेति ब्रूम इति भाष्येणोप्सि
त्यप्राधान्यवाचित्वस्मृतेः । प्रतियोगिनः कर्मणो गुणत्वावग
परिहृत्य * यद्यपीत्युक्तम् * तदुक्तार्थत्वात्प्रत्यक्षाद्यगृहीते 
ब्दप्रामाण्यशङ्कायाश्च प्रागेव निरस्तत्वेनासम्भवादनर्थकमा
पकारं विना विहितस्य कर्मणोऽङ्गत्वापरपर्यायगुणत्वानुपपत्ति
निरासार्थत्वेनोपकारं लक्षणया गुणभावशब्देनोक्ता प्रत्यक्षग
काराभावे ऽपि शब्दावगताङ्गत्वान्यथानुपपत्त्योपकारकत्वक
विष्यतीति प्रतिपादनार्थत्वेनार्थवदिति सूचयितुमाह * सि
सि * पश्चादुपकारापेक्षायां दर्शनं कल्पनं वा भविष्यतीत्यर्थ
चोपकारकत्वस्याप्यव्याप्तिः परिहृता एतदेव व्याचष्टे: * त

द्रव्योपदेश इतिचेत् ॥ ११ ॥

३८७।१ पूर्वपक्षाभिप्रायविवरणार्थत्वेन सूत्रं व्याचष्टे * यस्मि
श्लोकं व्याचष्टे * तन्नामेति * उपदेशान्यथानुपपत्तिलभ्यगुण

वशेषणं गुणभूते ऽपीति भाष्योक्तं दर्शयितुम् * गुणभूतेत्युक्तम् *
ाष्योक्तमन्वयव्यभिचारोदाहरणं दर्शयित्वा स्वयं व्यतिरेकव्य-
भचारोदाहरणम् * तथेत्यनेनोक्तम् * हविषामभिघारणाधारत्वे
ऽपि आधारनियमजन्यसंस्कारभाक्त्वेन प्राधान्यस्यापि विवक्षितत्वा-
न्वयाव्यभिचारादनुदाहरणत्वम्।व्यभिचाराभिधानस्य प्रकृतोपयोग-
ाह * अत इति * सत्यामपि द्वितीयायामित्यर्थः ।

न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥ १२ ॥

न गुणभूतइति भाष्येण व्यभिचारनिरासार्थत्वेन सौत्रं नञं
याख्याय तदुपपादनाय एवं हीत्यनेन स्मृतिरुपन्यस्ता। तत्र पूर्वपक्षि-
ा प्रयोगव्यभिचारस्योक्तत्वात्तन्निरासार्थं घटं करोतीत्यादौ प्राधान्ये
पि प्रयोगादनेकार्थत्वस्य वान्याय्यत्वाद्व्याप्यत्वेष्टतमत्वसमुदाया-
यकोऽप्सिततमत्ववाचिन्याश्च द्वितीयायास्तदेकदेशव्याप्यत्वमात्रेण
क्षणया विषं भक्षयतीत्यादौ प्रयोगदर्शनाद्व्याप्यत्वमात्रवाचित्वे-
तमत्वाधिक्यप्रतीत्ययोगाद् गुणत्वे तु क्व चिदप्रयोगात् प्राधान्य-
व वाच्यमिति प्रयोग एवोपन्यसनीयः । तमुपेक्ष्य स्मृत्युपन्यास-
ाभिप्रायमाह * तिष्ठत्विति * स्मृतौ सत्यां प्रयोगो नादर्त्तव्य
याशयः । प्रयोगाविरोधो ऽपि न चेति भाष्येण वक्ष्यतइति ताव-
छब्दार्थः । एतदेव प्रश्नपूर्वकमुपपादयति * किमिति * विशे-
तो ऽन्नेत्याह * विवक्षेति * एतदेव व्याचष्टे * यदि हीति *
था युक्तं चानीप्सितमिति स्मृतिस्तु लाक्षणिकप्रयोगसाधु-
ान्वाख्यानार्थान्यथालाघवाद्व्याप्यं कर्मेति स्मरणापत्तिरित्या-
यः । न चेति भाष्यं प्राधान्ये ऽपि प्रयोगानुपन्यासात्परोक्त-
देकप्रयोगप्रतियोगिप्राधान्यप्रयोगानुपन्यासाच्चापूर्वमाशङ्का पूर-
तुमाह * तथा चेति * यदपि चेत्यादिभाष्यं सङ्कलय्य तात्पर्य-
व्याचष्टे * यानि त्विति * ओदनशिखण्डाख्यकर्मान्तरोपादा-
त् पचतिकरोत्योश्च द्विकर्मकत्वाभावात्तण्डुलबल्बजयोस्तदन्व-
हेतया करणत्वावगतेर्होमान्वये च होमस्याग्न्यधिकरणत्वप्रसिद्धे-
नौ प्रक्षेपेण भस्मसाद्भावापत्तेः प्राधान्यायोगात्तृतीयार्थे द्वितीयेति
ङ्काभिप्रायः। परिहाराभिप्रायमाह * तत्रेति * ओदनाद्यवस्थाया-
ण्डुलाद्यवस्थया सह भिन्नाभिन्नत्वाद्भेदविवक्षायां तण्डुलादेर्गु- ३८
कारत्वमभेदविवक्षायां प्रधानाकारतेत्यर्थः । प्राधान्यांशमुपादाय-
विशेषणसामर्थ्यसूचितं तादर्थ्यं व्याचष्टे * यदेति * श्रुत्यु-

१ अपूर्णति २ पु० पा० ।

यत्प्रसिद्धेरस्य निगदस्य त्रयान्यतमान्तर्भावावगतेर्ऋक्सामवैलक्षण्येन पारिशेष्याद्यजुष्ट्वमित्येको हेत्वर्थः । तदाहुः । ऋक्सुब्रह्मण्या यजूः सामा इति प्रश्नोत्तरभूते मन्त्रएव खल्वयं निगदभूतो भवते तस्माद्यजुरिति वेदे निगदशब्दस्य मन्त्रशब्दसामानाधिकरण्येन हेतुना यजुष्ट्वापरित्यागेनैव निगदे मन्त्रशब्दप्रयोगावगमादिति द्वितीयः निगदस्य यजुष्ट्वापरित्यागेनैव धर्मविशेषेणोच्चैस्त्वेन व्यपदेशभेदसिद्धेरिति पूर्वपदावृत्त्या तृतीयः । गुणार्थो व्यपदेश इत्यत्र व्यपदेशहेतुर्निराकरिष्यमाणो ऽपि मुख्यत्वसूचनायेह निराकृतः । परिशेषेत्यनेन भाष्योक्तहेत्वर्थो व्याख्यातः । यद्वा त्रिष्वेव मन्त्रत्वोपसंहारान्मन्त्र एव खल्वयं निगदभूतो भवतीति च वेदे निगदस्य मन्त्रशब्दसामानाधिकरण्येन निगदे मन्त्रशब्दप्रयोगादित्येक एव हेतुः ।

वचनाद्धर्मविशेषः ॥ ४१ ॥

उच्चैस्त्वोपांशुत्वयोर्जातिधर्मत्वाभावान्न तावद्यजुष्ट्वेन निगदस्योपांशुत्वप्राप्तिः यदि परं प्रायेण यजुर्वेदविहितत्वात्तत्प्राप्तिः स्यात्सास्य वचनेनैवोच्चैस्त्वावगमान्निरस्तेत्यभिधानायैतत्सूत्रं तत्र वचनशब्दो वचनं परमित्यादौ विधानवाचित्वेन प्रसिद्धः कस्माद्व्यक्ताभिधानवाचित्वेन व्याख्यात इत्याशङ्क्याह * न्यायेति * अग्नीदग्नीन् विहरेत्यादेर्निगदस्य प्रैषसामर्थ्यात्परप्रत्यायनेनार्थवत्त्वावगतेरुच्चैस्त्वं च विना परस्य प्रत्यापयितुमशक्यत्वान्न्यायप्राप्तेनोच्चैस्त्वेनोपांशुत्वबाध इत्यर्थः ।

अर्थाच्च ॥ ४२ ॥

परप्रत्यायनार्थत्वादपि निगदस्य यजुष्ट्वे ऽपि धर्मविशेषो युक्त इत्येवमर्थतयैतत्सूत्रमाभासमानं पूर्वसूत्रेण पौनरुक्त्यापत्तेर्ननूपांशुत्वं परप्रत्यायनाशक्तौ प्रैषत्वायोगात्प्राप्तकालतायां लोट् भविष्यतीत्याशङ्कानिरासार्थत्वेनैतद्व्याख्यानार्थमस्ति चेति भाष्यं व्याचष्टे * अस्ति चेति * अवयवार्थालोचनेनाप्युच्चैस्त्वमिति हेत्वन्तराभिधानार्थत्वेनैतत्सूत्रव्याख्यानार्थं यानीति भाष्यं व्याचष्टे * तथा चेति न्यायेन वचनबाधो न युक्त इत्याशङ्कोपन्यासपूर्वं तन्निरासार्थं नन्वित्यादिभाष्यं व्याचष्टे * वाचनिकमपि चेति * परसंवेदनार्थत्वान्निगदस्य तद्द्वारेणोच्चैस्त्वे स्वरूपतश्चोपांशुत्वे प्राप्ते ।

गुणे स्वरूपतो धर्मः प्रधानद्वारतो परः ।
यत्र स्यात्तत्र विज्ञेयं गुणधर्मस्य बाधनमिति ॥

अनेन न्यायेनोच्चैस्त्वस्योपांशुत्वाद् बलीयस्त्वात् प्रमाण
लाच्च प्रमेयबलाबलबलीयस्त्वस्योक्तत्वाद्वाचनिकस्याप्युपांः
न्यायप्राप्तेनोच्चैस्त्वेन युक्तो बाधः यजुरन्तरविषयत्वाच्च व
र्थक्यपरिहार इत्याशयः ।

## गुणार्थो व्यपदेशः ॥ ४३ ॥

यस्तु व्यपदेशो भेदहेतुत्वेनोक्तः स यजुष्ट्वे ऽपि निग
च्चैस्त्वगुणाभिधानार्थत्वेनोपपन्नत्वान्न भेदसाधक इत्येवं सू
व्यानार्थमथेति भाष्यं व्याचष्टे * ब्राह्मणेति *

## सर्वेषामिति चेत् ॥ ४४ ॥

निगदशब्दस्योच्चैस्त्वगुणाभिधानार्थत्वे सत्यृक्ष्वपि ।
शब्दः स्यादित्येवमर्थत्वेन सूत्रव्याख्यानार्थं यदि त्विति भाष्य
चष्टे * अतिप्रसङ्गेति *

## नर्ग्व्यपदेशात् ॥ ४५ ॥

ऋचः सकाशात् निगदस्य भेदेनोपदेशान्नर्चो निगदत्व
रित्येवं सूत्रव्याख्यानार्थं नेत्यादिभाष्यं व्याचष्टे *न तावदिति
त्तिमनभिधाय लिङ्गमात्राभिधानमसाधकत्वादयुक्तमित्याशङ्क्य
सङ्गस्तावन्निगदशब्दस्यानृग्वाचित्वहेतुप्रवृत्तिनिमित्तप्रापकाज्ञाः
व्यपदेशान्निरस्तः या तूच्चैस्त्वे सत्यप्यृचि निगदशब्दाप्रयोगात
भिचाराशङ्का तन्निरासः प्राप्त्यभिधानभाष्ये भविष्यतीति तावन
न सूचितम्।उच्यतइत्यादिप्रश्नपूर्वं प्राप्त्याभिधानार्थं भाष्यं व्या
न चेति * गदतेरपादबद्धपदसमुदायवाचित्वात्प्रकर्षवाचिनि
ब्दोपसृष्टस्योच्चैरविनोच्चार्यमाणापादबद्धसमूहवाचितावसीयत
शयः । प्रयोजनं पूर्वपक्षे निगदानामृग्यजुःसामान्यत्वाद्वाच
शंसनाभावः।सिद्धान्ते यजुष्ट्वाच्छंसनमिति ।

॥ एकवाक्यत्वलक्षणाधिकरणम् ॥ १४ ॥

## अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ।

भाष्योक्तयजुःपरिमाणाभिधानार्थत्वत्यागेन वाक्यलक्ष
त्यैतत्सूत्रं कैश्चिद्व्याख्यातं तद्दूषणायोपन्यस्यति* के चिदि
वाक्यस्यापि लौकिकस्यैव लक्षणमित्याह * तत्रापीति * एतदे
२४।१ श्नपूर्वकमुपपादयति * कुत इति * श्लोकं व्याचष्टे * लौकि
हीति * ननु वाक्ये लक्षयितव्ये वैदिकं कस्मान्न लक्ष्यतइत्याश

* वैदिकानां पुनरिति * यस्य वाक्यस्यैकत्वादर्थैकत्वं गम्यते त-
स्यामिति वैदिकानां लक्षणमित्यर्थैकत्वमितीतिकरणेन सूचितं
माह्वैदिकवाक्यानामेतल्लक्षणानुपपत्तिरित्याशङ्क्य * अनन्येत्युक्त
* वैदिकानामर्थस्यानन्यप्रमाणगम्यत्वेन प्राग्वाक्यादज्ञातत्वाद-
ते ऽपि वाक्यात्प्राग्वाक्यैकत्वाज्ञानादर्थैकत्वासिद्धेर्नार्थैकत्वस्य वा-
लक्षणतोपपन्नेत्यर्थः कथं वाक्यैकत्वस्यार्थैकत्वज्ञानहेतुतेत्याश-
ाह * यथैव हीति*वेदवाक्यानां सौत्रलक्षणानुपपत्तौ वृद्धसम्म-
माह*आह चेति* शास्त्रासङ्गतत्वेन लौकिकवाक्यलक्षणं दूषय-
* अत्रेति * नन्वर्थापत्त्या विपरीतवेदवाक्यलक्षणार्थं लौकिक-
क्यलक्षणाभिधानमित्याशङ्क्याह * वैदिकेति * वाक्यैकत्वस्य
क्यार्थैकत्वज्ञानहेतुत्वं विनापि शब्दान्तरादिभिर्वाक्यार्थभावनाभे-
सिद्धेर्न भेदलक्षणोपयोग्येतल्लक्षणमित्याशयः। यदि त्वज्ञातलक्ष-
स्य वेदवाक्यस्य धर्मप्रामाण्यज्ञानायोगात्प्रामाण्यासिद्ध्यै लक्षणा-
भिधानं ततः प्रमाणलक्षणे वाच्यमित्याशयेनाह * किमर्थमिति *
कशब्दानर्थक्यापत्तेश्च न लौकिकवाक्यलक्षणे ऽप्येतत्सूत्रं सम-
सामित्याह * एकेति * ननु एकशब्दस्य लौकिकवाक्यलक्षणा-
पयोगे ऽप्यर्थैकत्वज्ञानहेतुवाक्यैकत्वपदसमूहत्वं वेदवाक्यलक्षणं
सूचयितुमेकशब्द इत्याशङ्क्य वेदवाक्यलक्षणमपि मन्त्रप्रकरणासङ्ग-
तत्वादयुक्तमित्याशयेनाह * कथं चेति * भाष्यविरोधश्च तेषां
स्यादित्याह * भाष्येति * न केवलं शास्त्रलक्षणाप्रकरणासङ्गति-
भाष्यविरोधा एव तद्व्याख्याने दोषाः किं त्वनुपयोगो ऽपीत्याह *
किं चेति * एकशब्दार्थवत्त्वायैकवाक्यत्वस्येदं लक्षणमिति यदि क-
श्चित् ब्रूयात्तदप्यनुपयोगीति वक्तुम् * एकत्वस्येत्युक्तम् *
मन्त्रादिषु मध्ये क उपयुज्यतइति वाक्यं तदेकत्वलक्षणवादिभिर्वक्त-
व्यमितीतिकरणाध्याहारेण योज्यम्। यजुर्व्यतिरिक्तमन्त्रेषु तावदनु-
पयोगं विवृणोति * ऋगिति * ब्राह्मणे विवृणोति * तथेति * ए-
कवाक्यत्वलक्षणस्य वाक्यभेदपरिहारोपयोगं शङ्कते * नन्विति *
दोषत्वावधारणेन वाक्यभेदस्य परिहार्यत्वात् वाक्यैकवाक्यत्वज्ञानं
च विनाप्यावृत्तिविभागयोर्दोषत्वावधारणान्नैकवाक्यत्वलक्षणस्य वा-
क्यभेदपरिहारोपयोग इति परिहरति * नेति * अनावृत्तस्याविभ-
क्तस्य वा शब्दस्य विवक्षितानेकार्थाभिधानाशक्तेः पदादिरूपस्य श-
ब्दस्यावृत्तिरादिशब्दोक्तो विभागो सामर्थ्यहेतुकत्वात् स्वत एव
दोषत्वसूचनायासामर्थ्यमित्युपचरितः असामर्थ्यहेतुकं यच्छब्दा-
वृत्त्यादि स वाक्यभेदः स चासामर्थ्यरूपत्वात् स्वत एव तावद्दोष-

त्वेतावधार्यते विभागावृत्त्योस्तु दोषतोपपादयिष्यतइत्याशयः
व्याचष्टे * पदेति * वाजपेयगुणविधावाख्यातपदावृत्तिः।अ
विवक्षायां पदैकदेशप्रातिपदिकावृत्तिः हविरार्त्तैरुभयत्वेन कि
हविरार्त्तिमार्छेदिति पदसमुदायावृत्तिः। आरुण्यस्य कृष्णप्रकः
शो ऽरुणयेति पदस्य पिङ्गाक्ष्यादिवाक्याद्विभागः। नानात्वग्रह
न्तार्थं कथं वाक्यैकत्वज्ञाननिरपेक्षैरावृत्तिलक्षणो विभागलक्ष
वाक्यभेदो दोषत्वेनावधार्यतइत्याशङ्क्याह * विभागेति * उ
क्रीणातीति तृतीयया क्रियान्वयस्य गम्यमानस्य त्यागः प्रा
कानां चानेकद्रव्याणामारुण्यनियमादनेकादृष्टकल्पना आवृत्ति
वाक्यभेदे त्वावृत्तेरभेदत्वेनाप्रामाण्यं दोष इत्यर्थः। एतदेवोपः
* इतीति * लोके त्वत्यन्तानुपयोग इत्याह * पौरुषेयेति *
णान्तरापेक्षामभ्युपेत्यैतल्लक्षणमनुपयोगित्याह * यदि चेति
हेतुप्रसिद्धेर्लौकिकवाक्यलक्षणमेतदित्युक्तं तद्वक्त्रर्थं श्रोत्रर्थं
विकल्प्य दूषयति * वक्तृणां चेति * व्यवहारानौपयिकं च
ज्ञानमात्रार्थं लक्षणं वेदवाक्ये ऽपि कस्मान्नोक्तमित्याह *
चेति * यत्त्वर्थापत्त्या विपरीतं लक्षणं सूचितमित्युक्तं तद्
दूषयति*यदि त्विति*न च वाक्यैकत्वादर्थैकत्वमितीदृग्वाक
णमित्याह * न चेति * नन्वनेनार्थैकत्वज्ञानहेत्वेकवाक्यत्वं
४२६।१ क्यलक्षणं सूचितमित्याशङ्क्याह *अपि चेति * वेदवाक्यलक्ष
योत्थितार्थापत्तिर्नैकान्ततो विपरीतं लक्षणं कल्पयतीत्याशय
लौकिकानामेवैतल्लक्षणमिति परिसंख्ययास्य लक्षणस्य वैदिक
त्वनिवृत्तेर्विपरीतं वेदवाक्यलक्षणं कल्प्यतइत्याशङ्क्याह *
ति * सत्यामपि सामान्यविशेषोपादानेन सम्भवत्या परिः
वेदवाक्यविषयत्वनिवृत्तावनेकैतत्व्यतिरिक्तलक्षणसम्भवान्न
गतो वाक्यैकत्वादर्थैकत्वमिति लक्षणं कल्पयितुं शक्य
* यदि हीति * ननु विपरीतमेव लक्षणं बुद्धिस्थं भवति
मात्रमित्याशङ्क्याह*एवमपीति* वैपरीत्यस्याप्यनेकधा सम्भः
ङ्कारणं भवतीत्याशयः।या चार्थैकत्वस्यासिद्धतोक्ता सा वाक
स्यापि तुल्येत्याह * किं चेति * श्लोकं व्याचष्टे * वाक
एतदेवोपपादयति * तथा हीति * बहुवाक्यवर्त्तिष्वेकवाक
षु वा वर्णेषु बहूनि वाक्यान्येकं वेत्यवधारणा न दृष्टेत्यर्थः। उ
न्नोक्तेनैव लक्षणेन एकवाक्यत्वसिद्धिरित्याह * तस्मादिति
वसाधारणं चैतल्लक्षणमित्याह * लोकेति * या त्वर्थैकत्व
द्धतोक्ता तामनुभाषणपूर्वकं परिहरति * यत्त्विति * श्लो

चष्टे * यदि हीति * भावनायाश्च वाक्यार्थत्वात्तस्याश्च भेदाभेदावधारणस्य शब्दान्तरादिसदसद्भावाधीनत्वाद्वाक्यैक्यज्ञानात्प्रागर्थैक्यावधारणं सम्भवतीत्याह * भावनैव चेति * प्राधान्यं विनानेकपदार्थवैशिष्ट्यायोगाद्वाक्यार्थत्वोपपादनाय प्राधान्यसूचनार्थम् * स्वकारकेत्युक्तम् * शब्दान्तरादिभिर्विना भेदासिद्धिर्नित्यमित्यनेनोक्ता श्लोकं व्याचष्टे * यस्मिन्निति * दध्ना जुहोतीत्यादौ भावनास्वरूपाभेदे ऽपि गुणविशिष्टत्वरूपेणोत्पत्तिवाक्यविहितधात्वर्थमात्रविशिष्टभावनारूपाद्भेदसद्भावान्नोत्पत्तिवाक्यस्य गुणवाक्यैः सहैकवाक्यतापत्तिः। परव्याख्यां दूषयित्वा यथाभाष्यं सूत्रं व्याख्यातुमुपक्रमते * तस्मादिति * सङ्गतिं तावदाह * भेदेति * ऋचो यजूंषि सामानीति बहुवचनश्रवणादृगाद्यवान्तरभेदाकाङ्क्षायामेतावतीयमृगित्युपदेशकाध्येतृवाक्यादृचाम् एतावदिदं सामेत्यस्माच्च साम्नां भेदसिद्धेर्लक्षणं न कृतम् करणे ऽपि यजुर्वेदस्याध्येतृवाक्यादसिद्धेर्भेदज्ञानार्थं लक्षणमित्यर्थः। ननूत्तरादिः पूर्वान्तलक्षणमिति वचनादिषे त्वेति शाखां छिनत्त्यूर्जे त्वेत्यनुमार्ष्टीत्यादिभिन्नप्रतीकाविनियोगेन यजुषामपि भेदसिद्धेस्तद्भेदलक्षणमपि न कार्यमित्याशङ्कते * नन्विति * अभ्युपगम्यैतद्वचनप्रामाण्यमव्यापकत्वं तावदाह * न तावदिति * सौत्रविनियोगस्य भेदप्रतीतिमूलतया तन्नैरपेक्ष्येण लक्षणत्वायोगात् * ब्राह्मण इत्युक्तम् * सत्यपि वा सर्वेषामभिमतभेदानां विनियोगे मध्ये विनियोगरहितमन्त्रान्तरसद्भावशङ्कानिवारणाशक्तेरर्थापत्त्ययोगाद्वचनस्य चावैदिकतया स्वातन्त्र्येण प्रामाण्याभावात्सूत्रकृद्वचनस्य चैकार्थ्यनिबन्धना पदसमूहस्यैकवाक्यतेति न्यायमूलत्वात्तस्य लक्षणस्वरूपमुच्यतइत्याह * न चेति * यजुःपरिमाणे सूत्रयोजनार्थं यावतेति भाष्यमिषे त्वेत्यादियजुषां यागे विनियोगाभावादयुक्तमाशङ्कावतारणपूर्वं व्याचष्टे * तत्रेति * यजेरुसिं प्रत्यये कृते यजुःशब्दव्युत्पत्तेस्तस्य चोणादित्वेन बाहुलकत्वात्प्रयोगानुसारेण करणवाचित्वावगतेरिषे त्वेत्यादीनामपि च प्रकरणाम्नानानुमितेन वाक्येन यागाङ्गत्वावगमाद्यजुष्ट्वाविरोध इत्याशयः। ननु श्रुत्यादिभिः छेदनादौ विनियुक्तानां कथं यागाङ्गतेत्याशङ्कानिरासार्थं यावता क्रियाया इति भाष्यं व्याचष्टे * तत इति * तावच्चेति योजनोपसंहारभाष्यं व्याचष्टे * तेनेति * वाक्यविशेषस्यैव यजुष्ट्वाद्यजुर्विषयः सूत्रे वाक्यशब्द इत्यर्थः। श्लोकं व्याचष्टे * वचनाद्धि हीति * यावान्पदसमूहो वाक्यं तावानेव यजुरिति वाक्यपरिमाणेन यजुःपरिमाणं वक्तुं वाक्यलक्षणमित्यर्थः। ननु म-

न्त्रावान्तरभेदप्रस्तावाद्यजुर्भेदे प्रतिपाद्ये यजुः परिमाणलक्षणम
ङ्गतमित्याशङ्कानिरासार्थत्वेनैतदस्माच्चेदिति भाष्यं व्याचष्टे *
च्चेति * अनेन चैतस्माच्चोदकार्थत्वात्कारणादेकयजुर्वाक्यता
तिं तस्माद्यावानेकार्थः पदसमूहस्तावदेवैकं यजुर्वाक्यमधिकं
जुर्वाक्यान्तरमिति सावधारणत्वेन भाष्यं योजितम्। किमित्युदा
प्रश्नभाष्यं विपर्ययाशयेन व्याचष्टे * किमिति * चेच्छब्दे
र्थसाकाङ्क्षावयवत्वयोः संहतयोः लक्षणत्वेनाभिधानात्प्रत्येकं
णत्वाभावेन लक्षणद्वित्वायोगाल्लक्षणाधिष्ठानाभिप्रायो लक्षण
एतदेवोपपादयति * तथा हीति * श्लोकं व्याचष्टे * पदस्य ह
प्रकृतिप्रत्यययोरन्वयव्यतिरेकाभ्यां प्रत्येकमर्थप्रत्यायनशक्त्यव
द्विभक्तप्रयोगाभावेनार्थप्रत्ययाभावः शक्तिशब्देन लक्षितः देव
दाहरणभाष्याशयमाह * प्रयोजनेति * नन्वित्यादिभेदानां
र्गाणां च बहुत्वादित्यन्तमाशङ्काभाष्यं तात्पर्यतस्तावद्व्याचष्टे
न्विति * एकैकपदस्यैकार्थ्यात्पदसमूहस्यानुदाहार्यत्वशङ्कायां
काङ्क्षावयवत्वाभावात्सत्यामित्यनेन निरस्तायां न तर्हीत्यनेन पद
नेकत्वात्पदसङ्घस्य च पदार्थातिरिक्तैकार्थवाचितायास्तङ्क्ताधि
निरस्तत्वात्पदसङ्घस्यानुदाहार्यत्वशङ्काशये विवृते ननु पदार्था
क्तैकनिर्भागवाक्यार्थायोगे ऽपि पदार्थानां भेदः संसर्गो वाक्या
स्याशङ्कानुपपत्त्यभिधानार्थं भेद इति भाष्यं व्याचष्टे * यद्दे
तथापीत्याशङ्कासमर्थनार्थं भाष्यमुपपादयितुमवतारयति *
इति * भेदानेकत्वं तावत्प्रश्नपूर्वकमुपपादयति * कथमि
ऋगतावित्यस्य धातोरौणादिके थन्प्रत्यय कृते ऽर्थशब्दव्युत्पत्तेः
१९।२ तिपदमर्थत्वाद् गम्यमानत्वादित्यर्थः।श्लोकं व्याचष्टे * व्यक्तीं
ननु यथा शुक्लशब्दसान्निधानात् कृष्णादिभ्यो गोव्यक्तेर्व्यव
प्रतीयते तथा शुक्लत्वसंसर्गस्यापि प्रतीतेः कस्मान्न वाक्यार्थः
शङ्क्य शुक्लत्वसंसर्गस्य गोपदार्थान्तर्गतत्वादित्युक्तं गोव्यक्ते
क्लशब्देन कृष्णादिभ्यः शुक्लव्यक्तेश्च गोशब्देनाश्वादिभ्यो नि
वाच्यायां कृष्णादिव्यक्तिष्वपि गोत्वस्याश्वादिष्वपि शौक्ल्यस्
त्वात्स्वरूपेणाव्यावृत्तेः शब्दवाच्यत्वरूपेण व्यावृत्तिं वक्तुं गोश
शुक्लशब्दस्य चेति चोक्तं संसर्गानेकत्वमुपपादयति * तथे
श्लोकं व्याचष्टे * आकृतीति * गोत्वशुक्लत्वयोरेकार्थसमवा
क्षणस्य संसर्गस्य सम्बन्धत्वेन द्विष्ठत्वात्तत्सम्बन्धिभेदे ऽप्यैक्यः
ङ्क्य * सामस्त्येनेत्युक्तम् * व्यक्तिसमवेतं गोत्वमितिवद् ग
समवेता व्यक्तिरित्यप्रतीतेः सम्बन्धत्वे ऽपि समवायस्य व्यासि

ग्रेये सामस्त्येनोपलम्भात् द्विष्ठत्वाभावेनैकव्यक्त्युपसंहारात्मकस्यै-
कार्थसमवायस्यापि न द्विष्ठतेत्याशयः। ननु यद्यपि गोत्वविशिष्टायां
व्यक्तौ शुक्लत्वसंसर्गाच्छुक्लत्वविशिष्टायां व्यक्तौ गोत्वस्य संसर्गो
ऽन्यस्तथापि गौः शुक्ल इति वाक्यादेकास्मिन्नर्थे गोत्वशुक्लत्वयोः
संसर्ग इत्येकरूप्येण प्रतीतेर्वाक्यार्थैक्यमित्याशङ्क्याह * यद्यपीति *
गौः शुक्लः स्थूल इति त्रिपदएव तावद्वाक्ये गौः शुक्लो गौः स्थूलः
शुक्लः स्थूल इति येन येन वाक्यैकदेशेनावस्थितं पदद्वयमन्योन्यं सं-
सृज्यते तेन तेन वाक्यैकदेशेन गोत्वशुक्लत्वादिसंसर्गस्य प्रतीतेर्वा-
क्यार्थत्रयापत्तिरित्यर्थः। द्विपदे ऽप्येकप्रयोजनवशीकाराभावेन
पदार्थानामुपकार्योपकारकत्वाभावात्स्वातन्त्र्येणैकार्थविशेषणत्वरू-
पकत्वाभावात्प्रत्येकं भेदसंसर्गस्य प्रतीतेरपरिहार्यं वाक्यार्थनानात्व-
मित्याह * किं चेति * श्लोकं व्याचष्टे * यावद्धीति * ननु सि-
द्धान्तिनो व्यक्तिपदार्थकत्वाभावाद्भेदवाक्यार्थत्वशङ्कानुपपत्तेस्त-
दुपन्यासो न युक्त इत्याशङ्क्याह * यद्यपि चेति * एकेति भाष्यं ४ः
समाधानाशयविवरणार्थत्वेन व्याचष्टे * सिद्धान्तेति * सर्वपदे-
ष्वेकस्यैव पदार्थस्येतराविशिष्टस्यैव प्राधान्येन प्रतिपाद्यत्वादेकार्थते-
त्याशयः। एवं च सति विशेष्यस्यैवैकस्य पदार्थस्येतरैः सह संसर्ग-
स्य भेदस्य वा प्रतिपाद्यत्वाच्छक्यमेवैक्यं वक्तुमित्याह *एवमिति*
उक्तोदाहरणे विशिष्टैकप्रयोजनाभिधानार्थं यथा तावदिति भाष्यं
पदार्थान्तराणां निर्वापविशेषणत्वासिद्धेरयुक्तमाशङ्क्योपपादयति
तस्मादिति * नन्वित्याशङ्काभाष्यं व्याचष्टे * परस्त्विति * यदीति
परिहारभाष्यं व्याचष्टे *सिद्धान्तेति* विशेषणद्वयानर्थक्याशङ्कार्थम-
ति भाष्यं व्याचष्टे*किमर्थमिति*उच्यतइत्यादि पुरोडाशप्रतिष्ठाप-
र इत्यन्तं भाष्यं तात्पर्यतस्तावद्व्याचष्टे*प्रत्युदाहरणे इति* अवयव
। व्याचिख्यासुर्भवतीति भाष्यं तावद्व्याचष्टे*पुरोडाशेति*नन्वित्यै-
कार्थ्याभावाशङ्काभाष्यं निर्वापन्यायेनेहाप्याशङ्कानिरासोपपत्तेरयुक्त
शङ्क्योपपादयति * निर्वाप इति* नेति परिहारभाष्यमसकृदुच्चा-
ताख्यातयोगेन भगादीनां संहत्य विशेषणत्वादनुपादानान्निरपेक्ष
धनत्वावगतेस्तद्भेदेन विभागनानात्वावगमादयुक्तमाशङ्क्योपपा-
दति * तत्रेति * स्तुत्यर्थमसमवेतनिरपेक्षसाधनभेदाभिधाने ऽपि
यान्यत्वाभावस्य चित्याधिकरणेन च कारकभेदादस्य भेदो भव-
ति वार्त्तिके वक्ष्यमाणत्वाद्भागादिकर्त्तृभेदमात्रेण तावन्न विभागा-
त्वापत्तिः। न चायुरादिवदसमवेतत्वे ऽपि प्रोत्साहनायाशास्यत्वे
भागादेः प्राधान्यं येन विशेषणभेदात् क्लृप्तिवद्विभागभेदः स्या-

दित्यर्थः । विशेषणाविवक्षाभिधानार्थः सामान्यशब्दः तं
४३।१।१ दाहरणान्तराभिधानार्थं भाष्यं व्याचष्टे * तस्मिन्निति *
श्यगिति परिहारोपसंहारभाष्यं व्याचष्टे * तस्मादिति *

॥ वाक्यभेदाधिकरणम् ॥ १५ ॥

## समेषु वाक्यभेदः स्यात् ॥ ४७ ॥

कियतः पदसमूहस्येह चिन्ताविषयतेति दर्शयन्ति * तेषामिति * दृष्टार्थस्यैव लिङ्गविनियोज्यत्वात्तत्पर्युदृष्टार्थमन्त्रत्वपर्युदासे सिद्धे ऽपीषे त्वेति शाखां छिनत्त्यूर्जे र्ग्रीत्याद्यनेकवाचनिकविनियोगसद्भावे ऽपि मन्त्रैक्यं वक्गित्युक्तम् * इषे त्वेत्यादिमन्त्राणां छेदनादिकरणत्वेन भिधानं च विना मन्त्राणां करणत्वायोगाद्यावता क्रियाय प्रकाश्यतइत्यादिभाष्याद्यावता पदसङ्घेन स्मार्यते यागसा दिवार्त्तिकाच्च प्रतिपाद्यार्थैकत्वस्यैवैकवाक्यलक्षणत्वप्रती शस्त्रमन्त्राणां चैकादृष्टसाधनत्वे ऽप्यैकमन्त्र्याभावात्कल श्यछेदनादिक्रियाभिधानाभिप्रायो भाष्यवार्त्तिकयोरदृष्ट एव तदुभाभ्यामेवं कल्पयितुं न्याय्यमित्युभयशब्दोक्तेन यमात्रस्यैकवाक्यत्वेन प्राक् दृष्टार्थत्यविरुद्धं वायवस्थेत्य श्रुतत्वाद्वायुवच्छीघ्रगामिनो भवथेति चोक्ते ऽर्थादपाकर पत्तेरपाकरणवाच्याख्यातस्य कल्प्यत्वादितरथास्यापि यश स्सापाकरणाभिधानार्थत्वायोगाददृष्टार्थत्वापत्तेरविधित्व रुद्ध्येत आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पताम् अ कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां श्रो ल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतां आत्मा थ यज्ञो यज्ञेन कल्पताम् इत्येतावतः पदसमूहस्यैकमन्त्र एतदेवोपपादयति * तथा हीति * तेषामदृश्यमानसम पदानामप्रतीतो वाक्यार्थः प्रयोजनभूतः कल्प्यस्तस्य चा माणवत्वादेक एवार्थ इत्यर्थः । अनेन चादृष्टस्य वाक्य यस्यां कल्पनायां साल्पीयसीति भाष्यं व्याख्यातं श्लोकं यदा हीति * तस्मादित्युपसंहारभाष्यं व्याचष्टे * इती कमन्त्रे प्रतीकभेदग्रहणं बहुवचनं वा युक्तं स्यादित्याश पुनरिति * आनः प्राण एतु परावतश्चान्तरिक्षात् दिव पृथिव्या अध्यमृतमसि प्राणाय त्वेति हिरण्यमभिव्यनि केन विनियोगस्य सङ्क्षेपे वक्ष्यमाणत्वान्मध्यान्त्यप्रतीका

योगोपपत्तेरभ्यासापेक्षया च बहुवचनोपपत्तेरुभयमप्युपपाद्य-
* तदुच्यतइति * श्लोकं व्याचष्टे * आदीति * एवमिति सि-
न्तोपक्रमभाष्यं व्याचष्टे * उच्यत इति * सौत्रसमशब्दो-
परस्परानाकाङ्क्षत्वं कल्प्यैकार्थत्वेन विभज्यमानसाकाङ्क्ष-
वगमादयुक्तमाशङ्क्येषे त्वेति भाष्येणानेकार्थत्वमुक्तमुपपा-
येतुं सामान्यन्यायं तावदाह * रूपादिति * श्लोकं व्या-
ष्टे * तिष्ठतु तावदिति * प्राणाय प्रयोजनाय त्वामभिव्यनि- ४३१
त्युक्ते कथं हिरण्याभिधानस्य प्राणप्राप्त्यर्थतेत्यपेक्षायां परावतो
देशादन्तरिक्षाद्दिवश्च सर्वतः प्राणो ऽस्मानागच्छतु। यच्च पृथि-
ा उपर्यायुस्तदप्यागच्छतु तवामृतत्वेनायुः प्राणादानसामर्थ्यादि-
पक्रमोपसंहारपर्यालोचनया प्राणप्राप्तिसिद्ध्यर्थत्वेन प्राणप्राप्त्या-
सनस्य रूपादेकवाक्यत्वावगतेस्तद्वशेनान्त्यप्रतीकेनापि सकल-
नियोगो युक्तो न त्वेकवाक्यत्वरूपावगमात्प्रागिति विनियोगवा-
ं वेत्यनेन सूचितम्। न च रूपभेदानुसारात्प्रयोजनभेदकल्पने ऽपि
षः प्रमाणवन्त्यदृष्टानि कल्प्यन्ते सुबहून्यपीत्युक्तत्वादित्याह * प्र-
णवच्चेति * एवं च सतीह त्वाशब्दभेदेन भिन्नवाक्यरूपावसाया-
न्योन्याकाङ्क्षोपलभ्यते। न चैकप्रयोजनत्वात्कल्प्यते तस्याप्यनुप-
म्भादिति सामान्यन्यायस्य प्रकृतोपयोगमाह * रूपेति * नन्वि-
ख्याताश्रवणेन तल्लभ्यस्य प्रयोजनस्य कल्प्यत्वात्कल्पनालाघ-
दैक्यमेव युक्तमित्याशङ्क्याह * ततश्चेति * रूपभेदात्प्रयोजन-
दावगतेर्न तदैक्यकल्पना युक्तेत्याशयः। या च प्रयोजनैक्यात्सा-
ङ्क्षावयवत्वकल्पनोक्ता साप्याकाङ्क्षावशेनैव प्रयोजनैक्यस्य क-
यत्वादयुक्तत्वादयुक्तेत्याह * न चेति * नैराकाङ्क्ष्ये च सति
वेदा वाक्यभेदः सिद्ध इत्याह * तेन चेति * विनियोगभेदा
श्रैहैकवाक्यत्वे ऽपि दुर्वारः प्रयोजनभेद इत्याह * त्वत्पक्षे ऽपि
ति * अभ्युपगम्यादृष्टार्थभेदः साधितः। वस्तुतस्तु छेदनादिसाध-
त्वविनियोगादि इषेत्वा छिनद्म्यूर्जे त्वानुमार्ज्मीति भिन्नाख्यातक-
नेन दृष्टार्थत्वात्तद्भेदेन स्पष्टो भेद इत्याह * न चेति * अनेन च
न्वत्याशङ्कानिरासार्थं यद्यपीति भाष्यं प्रत्यक्षाद्यनुपलब्धो ऽपि
योजनभूतो वाक्यार्थः श्रुतार्थापत्त्या छिनद्मीत्यादिशब्दकल्पनया ग-
ात इत्येवं व्याख्यातम्। ये तु श्रुतार्थापत्तेः शब्दकल्पकत्वं नेच्छन्ति
मते ऽप्यवाचकस्यापि मन्त्रस्य रथघोषवत्स्मारकत्वोपपत्तेर्दृष्टा-
त्याह * यद्वेति * ननु त्वेतिकर्मकारकवाचिनः पदस्य क्रियापदं
ना नैराकाङ्क्ष्यायोगाच्छ्रुतार्थापत्तेश्च शब्दाकल्पकत्वे ऽनुषङ्गेण

वाक्यसमाप्तिर्लौकिकवाक्यशेषो वेत्युत्तराधिकरणाचिन्त
विशिष्टस्तु वाक्यार्थ इति चाभिधानार्थत्वस्य मन्त्र
क्तस्य बाधापत्तेरवाचकस्य मन्त्रस्य स्मारकत्वं न युक्तमि
*उभयमपि चेति*अयुक्तो ऽप्ययं पक्षः कश्चिदाश्रितत्वादु
थः । वस्तुतस्तु व्यवस्थितशास्त्रार्थाभ्युपगमस्य न्याय्यत्व
न्पक्षे श्राद्धे मन्त्राधिकरणोक्ताभिधानार्थत्वविरोधेनावाच
नुपपत्तेर्विकल्पस्य च वाक्यस्य साकाङ्क्षत्वाद्वाचकत्वायो
गेन प्रयोगासम्भवादध्याहार एव युक्त इत्याह * स
सूत्रकृद्भ्रान्तौ किं मूलमित्याशङ्क्याह * अथ वेति *
थाविनियोगं च यावान्मन्त्रो ऽवगतस्तदनुसार्यत्वाद्विनि
णस्यानुष्ठानकाले ऽनुसन्धानेन संस्कारोद्बोधे यतितव्य
स्त्रार्थभ्रमः सूत्रकृद्भ्रान्तौ मूलमित्याशयः । ननु भ्रान्ति
पक्षो न कैश्चिदाश्रितैर्गृहीतइत्याशङ्क्याह * तत्रेति * मन्त्र
तपदवत्त्वे ऽप्यध्याहृतपदभ्रेषे मन्त्रभ्रेषनिमित्तप्रायश्चित्ताभ
म्नानोपपत्तेस्तावन्मात्रमन्त्रत्वे ऽर्थापत्त्यभावाद्वस्तुतो शास्त्री
सूत्रानुसाराच्छास्त्रीयत्वभ्रान्त्यानुष्ठानात् परिग्रह इत्याशयः।
संहरति * इतीति * यजुर्विषयत्वाच्चेह वाक्यशब्दस्य
ब्दस्य च यागसाधनवाचित्वेन यौगिकत्वात्सूक्तवाक्यवत्
थकाले भेदानभ्युपगमे ऽपि कर्मकाले विनियोगभेदाद्यजुर्भे
२३।१ भेदेनैव प्रयोज्यतेत्याशयेनाह * किं चेति * नियोगशब्द
योगवाची प्रत्येकं यागहेतुत्वसिद्धये ऽन्योन्यनिरपेक्षाणां का
क्ता विनियोगभेदेनोपपादितो अनेन वेषे त्वेति छिनत्तीति
गाभिधानभाष्यं तात्पर्यतो व्याख्यातम्।आयुरिति भाष्यं व्या
थेति * नन्वित्याद्याशङ्काभाष्यं व्याचष्टे * निर्वापवदि
च्यतइत्यादिपरिहारभाष्यं प्रत्यवयवं व्याचष्टे * नेति * म
क्लृप्तिशब्दस्य मन्त्रपरतोक्ता। ननु निर्विशेषक्लृप्तिमात्रस्येह
तत्वेन क्लृप्तिमन्त्रस्यार्थैक्यादैक्यावगतेः श्रुतमपि बहुवचनम
भिप्रायं व्याख्येयमित्याशङ्कानिरासार्थं ताश्चेति भाष्यावयवं
मेवार्थमनपेक्ष्योच्चार्यत्वेनार्थैक्यनिमित्तकवाक्यता नास्तीत्येव
चशब्दमङ्गीकृत्य व्याचष्टे * इह तावदिति * मन्त्रपरत्व
परमतत्वसूचनार्थस्तावच्छब्दः। नन्वर्थाविवक्षायां वाक्यभेदहे
दाभावात् भिन्नवाक्यतापि न स्यादित्याशङ्कानिरासार्थं
भाष्यावयवं व्याचष्टे * तत्र चेति * बहुवचनान्यथानुपप
त्ताणि प्रत्युपसर्जनभूतस्याप्यर्थस्य भेदो ऽवसीयतइत्याशयः।

स्य चार्थस्याविवक्षितत्वेन विशेषानपेक्षत्वादायुरादिविशेषा-
ानस्य मन्त्रबहुत्वापादनमेव प्रयोजनमित्यभिधानार्थं क्लृप्तीरिति
ावयवं व्याचष्टे * क्लृप्तीरिति * ननु बहुवचनस्य श्रुताभ्या-
क्षयोपपत्तेरर्थभेदकल्पनानुपपत्तेर्मन्त्रे च क्लृप्तिसंज्ञायाः क्लृ-
भिधानमात्रेणोपपत्तेरेकवाक्यतैव युक्तेति शङ्कार्थे नन्विति भा-
पूर्वदृष्टान्तत्यागेन दृष्टान्तान्तराभिधाने ऽभिप्रायमाह * यथेति *
च्छ्रुतत्वान्निर्वापस्य भेदे ऽप्यभ्यासेन क्लृप्तीनां भेदो भविष्यती-
त्यवस्थानानुत्थानार्थं दृष्टान्तान्तराभिधानमित्याशयः। एतदेव
गोति * पुनरिति * क्लृप्तिसंज्ञायाः कल्पतामिति शब्दवत्त्वे-
ुपपत्तेः क्लृप्तिमात्रस्याप्यविवक्षितत्वान्नैकार्थेनैकवाक्यतापत्ति-
ागसमान्यस्य तु कर्माङ्गत्वेन तत्प्रकाशनं दृष्टार्थत्वाद्युक्तमिति वै-
ाभिधानार्थं नैतदिति भाष्यं व्याचष्टे * नैतदिति * शङ्काशेषत्वे
थेति भाष्यावयवं व्याख्यायेदानीं परिहारशेषत्वेन व्याचष्टे *
वेति * विभागमन्त्रैक्याभिप्रायेणैतद् दृष्टान्ताभिधानमिति भ्रा-
शङ्कते * ननु चेति * भ्रान्तिनिरासेनोत्तरमाहैवं * तर्हीति *
सत्यष्टदोषदुष्टविकल्पापत्तेरैक्यमेव युक्तमित्यनेन प्रकारेण भे-
वाक्षेपान्नासङ्गतिदोषः कथमस्माद्भाष्याद्विकल्पप्रतीतिरित्याश-
ष्टान्तेन सहात्यन्तसाम्यापादनपरत्वादित्युक्तं शङ्काभाष्यं वि-
ापादने योजयित्वा तन्निरासे परिहारभाष्यं योजयति * नै-
ते * यदि गुणभूते इत्यादिपूर्वाधिकरणभाष्येण साधनप्राधा-
ादाभिधानादिहार्थाविवक्षायामपि प्रतीतिमात्रेणायुरादिप्राधा-
भिधानं क्रियाप्राधान्ये ऽपि विशेषणभेदाद्भेदः शक्यो वक्तुमि-
ोद्धिदर्शनाय * अथापीत्युक्तम् * नन्विहार्थस्याविवक्षितत्वात्कथं ४३४
परत्वेत्याशङ्कानिरासार्थत्वेन दृष्टार्थत्वादिति भाष्यावयवं व्याच-
भेदपरत्वे चेति * पूर्वं मन्त्रबहुत्वापादनार्थत्वरूपं यद् दृष्टा-
युक्तं तदेव भेदपरत्वे साध्ये हेतुत्वेनोच्यत इत्यर्थः। अपि चे-
भाष्यमिहेत्यादिभाष्येण पुनरुक्ततया भासनं पूर्वोक्तमन्त्रपर-
ादर्थपरत्वरूपपक्षान्तराभिधानार्थत्वेन व्याचष्टे * अथ वेति *
र्ग अग्ने ऽस्यायुर्मे देहीत्यादिवदिहाप्यायुरादिशब्दानां प्रधान-
क्षणार्थत्वेन प्रोत्साहनार्थत्वोपपत्तेस्तद्वदेव च लक्ष्यमाणार्थैक्ये
भिधेयार्थभेदाद्भिन्नवाक्यत्वोपपत्तेः मन्त्राधिकरणनिरस्तोच्चार-
त्रप्रयोजनत्वपक्षानुपपत्तिसूचनार्थो ऽथ वा शब्दः। ननूच्चारणार्थ-
चेरर्थकर्मता न युक्तेत्याशङ्कते * कथं पुनरिति * शब्दः पद्यते
े ऽभिव्यज्यते ऽनेनेति व्युत्पत्त्योच्चारणं शब्दपदशब्देनोक्तम्। उ-

च्चारणावाचितया लोके वचिः प्रयुज्यतइत्यर्थः । अभिधानव
ऽपि लोके वचिः प्रयुज्यत इति परिहरति * नैष इति * श
रयन्तं प्रयुञ्जाने वाचयतेः प्रयोगात्तदन्तर्गतस्य वचेर्यथोक्त
र्थता ऽवगम्यते तथार्थमभिदधानं प्रयुञ्जाने ऽपि प्रयोगाद
र्थतापि गम्यतइत्याशयः । तेनैष शास्त्रार्थो भवतीत्याह *तस्म
क्रियाभिधानप्रतिपादनस्य प्रकृतोपयोगाभिधानार्थमायुरित्या
ऽयाचष्टे * तत्प्रकाशनेन चेति * इष्टार्थशब्देन प्रोत्साहना
शेषान्मन्त्रभेदे ऽपि सर्वप्रयोगः सूचितः । प्रयोजनं तु मन्त्रे
त्येकदेशभ्रेषे ऽपि सर्वावृत्तिः भेदे तु यस्मिन्मन्त्रे भ्रेषस्तस्यै
रित्याशयः । तस्मादित्युपसंहारभाष्यं व्याचष्टे * इतीति *

॥ अनुषङ्गाधिकरणम् ॥ १६ ॥

## अनुषङ्गो वाक्यपरिसमाप्तिः सर्वेषु तुल्ययोगि त्वात् ॥ ४८ ॥

भिन्नाहः प्रयोज्यत्वेनानुष्ठानकाले ऽत्यन्ताबुद्धिस्थस्या
समाम्नानकाले बुद्धिस्थत्वादनुषङ्गो भवतीत्यतिशयद्योतना
हरणमिति सूचयितुं मन्त्रप्रयोगस्य विषयं विविनक्ति * ज्यो
इति * पूर्वाह्णापराह्णयोरभ्यस्यमानमाग्नेयसौम्यवैष्णवयागत्रय
सत् तथाविधानां तिसृणामुपसदां ज्योतिष्टोमे विहितानाम
ता प्रत्येकमादावाग्नेय्युपसदग्निमनीकमिति वाक्येन विहिता
ग्नेय्यस्तिस्रो भवन्तीत्यपिशब्देन सूचितम् । एवं च सति मन्त्रत्र
थासंख्यलक्षणेन क्रमेण भिन्नाहप्रयोज्याग्नेय्यङ्गत्वात् भिन्नाहः
तेत्याशयः । अहस्त्रयावच्छेदेनोपसदां त्रित्वात्प्रथमोपसदव
ग्नेयी प्रथमा उत्तरोपसदवयवभूते उत्तरे अत्रेति सन्देहभाष्यं
न्यतः शेषसद्भावासिद्धौ लौकिको वैदिको वेति विशेषचिन्त
रेरयुक्तमाशङ्क्योपपादयितुमाह * तत्रेति * नन्वध्ययना
ध्ययनेनैव वेदोपादाननियमादनधीतस्य शेषस्याभावावगमे
३५।२ मात्रस्य पूर्णतावसायात्कथं कल्पनेति पृष्टोत्तरमाह * कुत
साकाङ्क्षवाक्यानर्थक्यापत्तेरवश्यकल्पनीयत्वाच्छेषस्याधीत
विषयो ऽध्ययनोपादाननियमो ऽवसीयतइत्याशयः । श्लोकं
* न हीति * सन्देहभाष्योपपादनोपसंहारपूर्वं किं प्राप्त
र्वपक्षप्रतिज्ञाभाष्यं व्याचष्टे * तत्रेति * न हीत्युपपत्तिभा
त्पर्यतो व्याचष्टे * तथा हीति * श्लोकं व्याचष्टे * यत्

वग्निसम्बन्धिन्यास्तन्वाः पत्न्या वा रजाशयत्वादिति विशेषणमि-
विशेषानिर्द्धारणाद्वैदिकवाक्यशेषस्यानभ्युपगमे कीदृशो वाक्य-
ाः प्रयोज्य इत्यनध्यवसायः स्यादित्याशङ्क्याह * तत्रेति * व्य-
तत्वेन बुद्धिविलम्बाभावाद्वैदिकस्याव्यवस्थितात्लौकिकाल्लघु-
प्रयोगत्वेन प्रयोज्यत्वावधारणे ऽपि वैदिकत्वबुद्धिनिरासः पूर्वप-
णो ऽभिमत इत्यर्थः। कथं वैदिके तद्बुद्धिनिरास इत्याशङ्क्याह
था हीति*न हीति भाष्यस्य तात्पर्यान्तरमाह * यदीति * स च ४३
मान्तानां विशेषणविशेष्याणां चतुर्थ्यन्तान्वयार्हत्वात्प्रथमान्ता-
ानर्हेण स्वाहाशब्देन व्यवायादनन्वयापत्तेरयुक्त इत्याशयः। एत-
ापसंहरति * तस्मादिति * सिद्धान्तमारभमाणः सामान्य-
यं तावदाह * इतीति * श्लोकं व्याचष्टे* वैदिकस्येति * मन्त्र-
विधित्वे ऽपि वेदाभिप्रायश्चोदनाशब्दः। नन्वेवमपि याते अ-
यज्ञियेत्यादिशेषस्य तनूस्त्वयेहीत्यादेरपि वैदिकस्य सम्भवात्कथं
वैर्षिष्ठेति शेषनियम इत्याशङ्क्याह * या चेति * सन्निकर्षक्रमं
याति * तत्रेति * एतदेव व्याचष्टे * एकस्मिन्निति * लिङा-
त्ययोक्तस्य विधेर्विषयाकाङ्क्षायां तत्रैव भावनाख्यविषयदर्श-
भणीयमित्यदृष्टशब्दव्यतिरेकमाख्याय प्रकृतौ प्रत्यये वेत्यनेन प्र-
चदृष्टो भावनादिरर्थः प्रत्यये ऽन्विष्यते प्रत्यये चादृष्टः करणांशः
ावन्विष्यतइत्यावृत्त्या व्याख्यातं प्रकृतिप्रत्ययात्मके स्वस्मिन्पदे
ातीत्यस्मिन्नदृष्टं कर्मकरणं वा पदान्तरे ऽन्वेष्यं स्ववाक्ये स्रा
देवीत्यत्रादृष्टस्तत्ते पयसीत्यनन्तरवाक्यान्तरे अनन्तरे त्वदृष्टस्ते-
ान्तरादिक्रमेण प्रकृते वाक्यान्तरे सौर्यादौ स्वप्रकरणे ऽनुपल-
करणोपकारश्चोदनादिसामान्यद्वारोपस्थाप्यमानाग्नेयादिगतो-
ानुसारेण प्रकरणान्तरे ऽन्विष्यतइत्यर्थः।सर्वात्मना ऽन्वेषणं व्या-
प्र त्यक्तव्यापारे वेदे लौकिकाभ्यनुज्ञां व्याचष्टे * यदा त्विति *
ापतिराशिषेत्यादौ गच्छतामित्यादिपदाध्याहारोऽत्रोदाहरणम्।
साकाङ्क्षस्याकाङ्क्षणीयालाभे व्यवहारानुपपत्तौ दर्विहोमानां
ज्ञानां लौकिककरणोपकारालाभात्कार्यासाधनत्वं स्यादित्याश-
* लोके ऽपि चेति *सर्वात्मनान्विष्यमाणाकाङ्क्षणीयालाभे
लुब्धेन नैराकाङ्क्ष्यं कल्प्यतइत्यर्थः। ननु लौकिकस्यापि शेषस्य
ाभ्यनुज्ञाने लौकिकवैदिकयोः को विशेष इत्याशङ्क्याह * सर्वे-
ति * सामान्यन्यायमुक्त्वा प्रकृते स्वपदस्ववाक्ययोः शेषाला- ४३९
यनन्तरैकान्तरवाक्ये लाभात् स एव ग्राह्य इति सिद्धान्तमाह
देहेति * कस्मिन्वाख्यान्तरइत्यपेक्षायामाह * स चेति *

थादृग्विशेष्यसमर्पकः शेषो ऽपेक्षितस्तादृग्जाशयेत्यस्यान
येत्यस्य व्यवहितो ऽधस्तादुपलभ्यतइत्यर्थः । उभयाकाङ्
शेष्याकाङ्क्षयान्वयो युक्त इति प्रतीतिसौकार्यार्थं शेषिणं
पेणाह * यद्यपि चेति * आवयोरप्यर्थेनायमाम्नातो
यार्थेनेति भ्रमितव्यमित्येवं विधं प्रयोजकव्यापारं वाक्
क्तारं पुरुषं प्रति कुरुतइत्यर्थः । सर्वेत्यनेनैकसामर्थ्यस्या
पादकत्वं निरस्तं सर्वानन्तराम्नानरूपसर्वार्थत्वप्रमाणात्
णाकाङ्क्षायोग्यतासन्निधित्वाविशेषरूपेण सर्वार्थत्वल
सकृत्पाठवैयर्थ्यात्सकृत्पाठकारणं प्रमाणान्तरेत्यनेनोक्त
तस्य सर्वार्थत्वे सत्युत्तरयोः प्रागाम्नानात्प्रागेव प्रयोगः
ङ्क्याह * यद्यपि चेति * प्रथमान्तविशेषणविशेष्यान्वया
हाशब्देन व्यवायपरिहारार्थं पश्चात्प्रदेशवर्तित्वेनाकाङ्
श्रैव निवेश इत्यर्थः । ननु पश्चान्निवेशे पुनात्वाच्छिद्रेणेत्यादि
पश्चात्पाठापत्तेः तदभावे नेहपश्चात्तन्निवेशो न युक्त इत्याश
त्तरमाह * कुत इति * श्लोकं व्याचष्टे * स हीति *
न्तरपाठे ऽपि पूर्वयोर्व्यवधानापत्तेः सर्वेषामीप्सिते प्रदेशे
न शक्यमित्याशयः । यद्वा पाठक्रमात्प्राङ् निवेशः प्रतीतः
द्रियतइत्याशयेन पृष्टे प्रतीतिमात्रार्थत्वेनापि पाठोपपत्तेर्ना
धिनः प्राङ्निवेशस्यादरो युक्त इत्युक्त्वा पूर्वमन्त्रवदुत्तरयोः
च्छेषनिवेशज्ञापनार्थत्वात् प्रदेशपाठो ऽपि नात्यन्तमनर्थक इ
नोक्ते।नन्वेवं सति सर्वेभ्यः पश्चात्कस्मान्नाम्नात इत्याशङ्क्यानि
हीत्युक्तमिति व्याख्येयम्। नन्वाकाङ्क्षासान्निधियोग्यत्वावि
नन्तर्याविशेषो ऽपि सर्वार्थत्वहेतुर्भाष्यकृतोक्तः स कस्म
इत्याशङ्क्योपेक्षाकारणं दर्शयिष्यन् भाष्यं तावदनुसन्धत्ते *
यथैव हीति भाष्येण प्रथमद्वितीययोर्मध्ये पाठादानन्तर्येण
यमुक्त्वा हराशयेत्यनेन तृतीयस्य व्यवधानमाशङ्क्य तन्नेत्य
काङ्क्षत्वाविशेषेणोभयोरेकशेषग्रहणलक्षणैकधर्मयोगात्स
दनेनाव्यवधाने साधिते समुदायान्वयापत्तिमाशङ्क्य समुदा
नेन समुदायस्यैकार्थ्याभावेनाप्रयोज्यत्वाच्छेषान्वयायोग्यत्वे
स्य तेनान्वयाभावात्समुदाय्यन्वये ऽभिहिते नन्वेवं स
नैव समुदायिनान्वयः स्यादित्याशङ्क्य समुदायीत्य
ाय्यन्वयाद् विशेषाग्रहणेनोभयान्वयमुक्त्वा
कसमुदाय्यन्वयोपपत्तेर्नावृत्त्यापादकः
युक्त इत्याशङ्क्य समुदायिनोः प्राधान्या

धेन शेषावृत्तेर्युक्तत्वात् कृत्स्नः शेषान्वयं च विना समुदायिनोर्नै-
राकाङ्क्ष्यानुपपत्तेः प्रत्येकमेकैकेन समुदायिना कृत्स्नस्य शेषस्या-
न्वय इति तस्मादित्यनेनावधार्यापि चेत्यादिना पुनः सर्वेषु तुल्ययो-
गित्वादिति सूत्रावयवस्य सर्वेषु शेषिषु तुल्यशेषानन्तर्ययोगित्वा-
दिति पूर्वव्याख्यानात्तुल्याकाङ्क्षासन्निधियोग्यतायोगित्वादित्येवं
व्याख्यान्तरं कृतमित्यर्थः। तत्रानयोस्तुल्यत्वं परमतेनाह * तत्रेति* ६
स्वमतमाह * परे त्विति * अपरितोषहेतुं प्रश्नपूर्वकमाह * कि-
मिति * श्लोकं व्याचष्टे * समुदायत्वमित्यादिना * पद्यतइत्यन्तेन
पदे वर्णानां वाक्ये च पदानामेकार्थप्रतिपादनकार्यकारित्वादाग्ने-
यादिषट्कस्य च फलसाधनत्वात्त्रिकस्यैककार्यकारित्वाभावे ऽपि य-
एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजतइत्येक-
शब्दोपादानात्समुदायत्वं कार्यैक्यमाशङ्कते * नन्विति * क्रत्वङ्गप्र-
काशनमेव मन्त्राणां कार्यं नैकशेषग्रहणमित्याशयेनोपहसति *अत्य-
ल्पमिति* कस्माच्छेषग्रहणमपि कार्यं न स्यादित्याशङ्क्याह *अपेक्षा-
मिति * कार्यसिद्धये तु ग्राहकत्वेन शेषग्रहणे समुदायिनोरपेक्षा-
याः ऽवान्तरव्यापारत्वेनापेक्ष्यमाणत्वात् कथं शेषग्रहणं समुदायत्वा-
पादनसमर्थं प्रधानकार्यमित्युच्यत इत्यर्थः। समुदायिनौ च प्रत्यस्या-
त्वेनावृत्त्या तदन्वयोपपत्तेर्न शेषवशेन समुदायिनोः समुदायत्वा-
प्तिरित्याह * शेष इति * पश्चाच्च प्रत्येकं शेषान्वयनिर्माणे प्राक्
समुदायत्वहेतुर्न प्रतीयतइत्येवमुत्तरार्धं व्याचष्टे * पश्चादपि चेति*
समुदायत्वोपपत्तौ च पश्चात्प्रत्येकनिर्माणहेतुर्नास्तीत्यन्यथा व्या-
चष्टे * यदि चेति * एकपुत्रस्यात्यन्तप्रियत्वेन पितृभ्यामनिवार-
णाद्राजकीयत्वेन चान्यैरनिवारणादत्यन्तान्याय्या यथा क्रीडा तथेय-
मित्यर्थः। न चास्मिन्पक्षे प्राक्शब्दप्रयोगो वारयितुं शक्यतइत्या-
ह * पुरस्तादेव चेति * न चैकस्य पश्चादितरयोश्च प्राक्शेषा-
णामानन्तर्याच्छेषस्यागृह्यमाणे विशेषत्वं भवति देशभेदेन गृह्यमा-
णविशेषत्वात्ततश्च न गम्यते विशेष इत्येतद्भाष्यमयुक्तमित्याशये-
नाह * न चेति * तन्त्रं भिद्यते विदार्यते नाश्यते ऽनेनेति व्युत्प-
त्त्या विशेषग्रहणं तन्त्रभेदशब्देनोक्तं देशभेदो ऽनिमित्तं यस्यासौ दे-
शभेदनिमित्तः स चासौ तन्त्रभेदश्चेति विग्रहः देशभेदमेव द-
र्शयति * प्रथमस्य हीति * तेनोत्तरे च सर्वेषु तुल्ययोगित्वादिति
सूत्रावयवव्याख्या युक्तेत्याह * तस्मादिति * कीदृक्तदित्यपेक्षा-
यामाह * आकाङ्क्षेति * योग्यताशब्देनाकाङ्क्षापरिपूरणसामर्थ्यं
व्याख्यातम्। आनन्तर्यस्यान्वयहेतुत्वाभावादपि सर्वार्थतेत्येवमपि च-

शब्दव्याख्यासूचनार्थम् * नेत्युक्तम् * आनन्तर्यस्यान्वयाहेतुत
पादयति * यो हीति * नन्वनन्तरमात्रान्वयप्रतीतेराका
द्विव्रयासिद्धेस्तत्रानन्तर्यस्य हेतुताश्रयणीयेत्याशङ्क्याह * :
धीति * आनन्तर्यं सन्निधिविशेषः तस्मादानन्तर्याश्रयस्या
रस्य शीघ्रं बुद्धिस्थत्वात्तेनैवान्वयो नान्येनेति या प्रतीतिर्भवति
भ्रान्तित्वान्न सम्यगन्वयहेतुतानन्तर्यस्यास्तीत्याशयः । कथमन
.।१ मात्रान्वयप्रतीतेर्भ्रान्तितावसीयत इत्याशङ्क्याह * सा त्विति *
दत्त गामानयेत्यादौ व्यवहितस्यापि देवदत्तादेरानयनाद्यन्वय
नाद् भ्रान्तितावसीयत इत्याशयः । अत्रैव दृष्टान्तमाह *यथेति*
कानन्तरपाठस्तर्ह्यनर्थकः स्यादित्याशङ्क्याह * एवं हीति * सद
स्याप्यवर्जनीयमेकानन्तर्यमित्यर्थः । उपसंहरति *तस्मादिति *
न्वत्यन्तसन्निकर्षस्य सन्निधित्वे नामान्तरेणानन्तर्यमेव कथं चि
न्निकर्षस्य त्वसंबद्धपदव्यवाये ऽपि भावादतिप्रसक्तिरित्याश
किं यास्त्विति पृष्ठा यावतीति भाष्येणोत्तरं दत्तं तद्व्याचष्टे * स
धिरिति * विशेषणविशेष्येषु बुद्ध्यनुवृत्तिं विना सर्वविशेषणवि
ष्टैकबुद्ध्युत्पत्त्यसम्भवाद्विशिष्टबुद्ध्युत्पत्तिं यावद्विशेषणविशेष्य
द्धीनामनुवृत्तिरिष्यते विशेषणविशेष्यान्वयस्यापेक्षाधीनत्वादपे
काले न बुद्ध्यनुवृत्तिकालोपलक्षणमेतदित्याशयः । कश्चेत्यनेनापेक्षाक
लस्योपलक्षणं पृष्टवानन्तर्यमित्युत्तरं दत्तं तद्व्याचष्टे * सा चेति
नन्वव्यवधेः सन्निधिशब्दव्याप्यत्वाद्व्यवसायस्य सन्निधित्वं विरु
मित्याशङ्क्य सम्बन्धपदव्यवाये सम्बन्धादेव हेतोर्बुद्धिविच्छेदहेत्वस
म्बन्धबुद्ध्युत्पत्त्यभावेन पूर्वबुद्धेः क्षणिकत्वात् स्वरूपेण नाशे ऽ
संस्कारद्वारानपायात्पदव्यवाये ऽपि तज्जनितबुद्ध्यव्यवायादविरो
इत्यभिधानार्थं सम्बद्धेति भाष्यं तात्पर्यतो व्याचष्टे * सम्बन्धेति *
सम्बन्धपदव्यवधेरपि बुद्ध्यानन्तर्यप्रकार एवेत्यर्थः । ननु रजाशये
त्यस्य शेषान्वये ऽपि तद्व्यवधानाद्धराशयेत्यस्य शेषान्वयानुपपत्ते
सम्बन्धो नास्तीत्याशङ्क्य यत्रापि हराशयेत्यस्मिन् रजाशयेत्यने
शेषाकाङ्क्षेण व्यवायसूत्रे ऽपि शेषान्वयो ऽस्ति यतो द्वयोर्वि
शेषिणोरपेक्षिताविशेष्यान्वयरूपं कार्यं वक्तव्यमित्येतदर्थं पूर्वं शेषि
णं शेषो ऽपेक्षते तच्चोत्तरापेक्षायामपि तुल्यं कारणमिति यथैवोभ
याकाङ्क्षया पूर्वस्य शेषिणः शेषान्वयस्तथैवोत्तरस्यापि शेष्यन्तरम
नपेक्ष्यमाणे तु शेषे ऽन्यतरः शेषी शेषालाभेन शेषाकाङ्क्षत्वा
प्रमादाधीतः स्यात् शक्यते पूर्ववदुत्तरो ऽपि शेषी शेषेणापे
क्षितुं तस्माद्यथैवायं शेषो रजाशयेत्यस्य पश्चादपतितो ऽपि यो

त्वाद्यथाकाङ्क्षिते देशे सन्निधौ भवत्येवं हराशयेत्यस्यापी
भिधानार्थं यत्रापीत्यादिभाष्यमानन्तर्योपपादनार्थत्वेन प्रश्नपूर्वं
त्पर्यतो व्याचष्टे * कथमिति * आद्येन यथाकाङ्क्षिते देशे
म्बन्धं प्राप्य द्वितीयस्यापि यथाकाङ्क्षिते देशेऽनन्तरो भवति ततो
तीयस्योपरि देशे निविष्टस्तृतीयस्यापि यथाकाङ्क्षितदेशएवान-
र्यं प्राप्नोतीत्यर्थः। श्लोकं व्याचष्टे * यात इति * द्वयोरप्यसम्ब-
पदाव्यवायात् द्वयोरपि चाकाङ्क्षावत्त्वाच्छेषान्वयस्तुल्य इत्येव-
ते द्वयोरपीति भाष्यं गतार्थमाभासमानम्। ननु व्यवहितस्याप्यनुष-
भ्युपगमे सर्वत्र तत्सम्भवान्नाध्याहारः क्व चित् स्यादित्याशङ्कानि-
सार्थत्वेनासम्बद्धपदाव्यवाय एवाकाङ्क्षावत्त्वएव चानुषङ्गो भ-
ते नान्यथेति परिसंख्यार्थमिति सूचयितुमाह *ततः परं त्विति*
हणादिवाक्येष्वप्ययं न्यायस्तुल्य इत्येतत्सूचनार्थं चेदं भाष्यमिति
वयितुं सर्वत्रेमं न्यायमतिदिशति * सर्वत्रैवेति * नत्वानन्तर्य-
शेषैकान्वयप्रतीत्या नैराकाङ्क्ष्यान्नान्यान्वय इत्याशङ्कानिरासा-
तावच्चेति भाष्यमुपपादयितुमाह * यद्यपि चेति * युगपदा-
नाशक्तिमात्रनिबन्धनत्वेनावास्तवत्वादानन्तर्यमकारणमित्याशयः।
संनिकृष्टविप्रकृष्टान्वययोः प्रामाण्याविशेषोपपादनार्थं सर्वलोकवे-
ाधरणत्वमस्य न्यायस्याह * एवमिति * यद्वा किमित्यानन्तर्यम-
रणमित्याशङ्क्य यस्मादसम्बद्धपदाव्यवधाने सत्यानन्तर्याभावे
: सर्वत्र लोके वेदे च वाक्ये पदानां प्रकरणे च वाक्यानां सम्ब-
भवतीत्येवमर्थत्वेनाव्यवधान इति भाष्यं * व्याख्यातुमेतदुक्त-
* एतदेव भाष्यं तात्पर्यतो व्याचष्टे * अव्यवधान इति *
मादित्युपसंहारभाष्यं व्याचक्षाणोऽनुषङ्गसमाप्तिशब्दौ व्याचष्टे
तस्मादिति * अथेति भाष्येणविषयान्तरव्याप्त्यर्थमावृत्त्यैतत्सूत्रं
ख्यातं तदुभयत्राप्यसम्बद्धपदव्यवायाभावे सत्येवान्यतराका-
ायैव चानुषङ्गाद्वैलक्षण्याभावेनायुक्तमाशङ्क्य वैलक्षण्यं दर्शयन् ४४
चष्टे *यत्र तावदिति* शेषस्यावृत्त्यानेकशेष्यन्वयाद् गौणवृत्त्यै-
ावृत्त्यानेकान्वयिशेषत्वेनानेकं च व्यावर्त्यमानैकान्वयिशेषत्वेनो-
[। अनेकेषु साकाङ्क्षेष्वेकस्मिञ्छेषान्वयेन निराकाङ्क्षीकृतेऽपी-
तैराकाङ्क्ष्यायानुषङ्गो युक्तः। शेषस्य त्वेकस्यैकशेष्यन्वयेन नैराका-
शेष्यन्तरान्वयायानुषङ्गोऽनर्थक इत्यधिकाशङ्केत्याशयः। अत्र ही-
दिनास्ति सर्वत्रानुषङ्गम् इत्यन्तं पूर्वपक्षभाष्यं तात्पर्यतो व्याचष्टे
केमिति * आह नैतदेवं पुनातु शब्देनेतिसिद्धान्तभाष्यं व्याचष्टे
उच्यतइति * कर्तृकर्मक्रियापदसमूहात्मकवाक्यशेषत्वे सति

शेषिवाक्यानेकत्वादेकशेष्यन्वयेन निराकाङ्क्षस्य शेष्य
स्यात् कारकाणां त्वन्योन्यान्वयायोगात्करणवाचिनः शे
षद्मात्रान्वयप्रतीतेराख्यातवाच्यार्थद्वारा सर्वमन्त्रान्व
कारकपदस्यानन्तर्याभावे ऽप्यरुणादिवत्क्रियापदेनैवान्वर
भिधानानर्थक्यमाशङ्क्यातिशयार्थत्वेन व्याचष्टे * आ
पकश्चेति भाष्यं व्याचष्टे * स चेति * ननु शब्दैक्ये ऽ
देनैव कल्प्तेश्चित्पत्यादिकारकभेदेन पवनक्रियारूपार्थभे
न्वयः शेषस्य स्यादित्याशङ्क्याह * न चेति * आयुरादे
वाये ऽपि प्रोत्साहनायाशास्यत्वात्तद्भेदेन क्रियाभेदो यु
करणमन्त्रत्वेन प्रोत्साहनार्थत्वाभावादसमवेतार्थत्वाभाव
दिवत्स्तुतिमात्रार्थमुपात्तस्य चित्पत्यादेर्भेदे ऽपि क्रियाभे
त्याशयः । नन्वेवमपि सकृदन्वयेन कृतार्थस्य शेषस्य ि
त्तावप्यावृत्तिरयुक्तेत्याशङ्क्याह * न चेति * तेनावगच
भाष्यं व्याचष्टे * तस्मादिति * ननु क्रियैक्यऽभ्यासभेद
वच्चित्पत्यादिवच्चाच्छिद्रादेरपि व्यवस्था भविष्यतीत्याशङ्
ति * वैषम्यमाह * उच्यत इति * श्लोकं व्याचष्टे *
धादीति * प्रत्युताव्यवस्थायामेव कारणमस्तीति करणस्ये
यथा चेत्युत्तरार्द्धं व्याख्याकर्तृभेदमात्रेण तु करणभेदो ऽ
४४।१।५ पवेत्याह * न चेति * अतिप्रसक्तिमाशङ्कते * नन्विति
हरति * नैष इति * यथा बर्हिर्धर्माणां प्रकरणादर्शपूर्णमा
र्थत्वावगतेर्न पिण्डपितृयज्ञबर्हिषि प्रसक्तिस्तथास्यापि शेषस्य
णपठितपुनातुशब्दैकवाक्यतया तादर्थ्यावगतेर्न मन्त्रान्तरग
शब्दान्वयप्रसक्तिरित्यर्थः । एतदेव विवृणोति * इहेति *
न्तरापत्तिमाशङ्कते * नन्विति * विभागमन्त्रवद्युक्त प
विकल्प इति परिहरति * कुतो वेति * असम्बद्धपदव्यव
न मन्त्रान्तरेषु प्रसक्तिरित्याह * सर्वेषु चेति * तथा च
भाष्यं व्याचष्टे * तस्मादिति * श्लोकं व्याचष्टे * सर्वेति
स्मादित्युपसंहारभाष्यं व्याचष्टे * इतीति * उदाहृतेषु सर
भावान्मन्त्रवृत्त्यसम्भवे ऽपीषएकपदीत्यादिषु भवेत्यादिशेषा
स्याप्येतन्न्यायाविषयत्वात्तत्र च केषां चित्सकृत्प्रयोगदर्शनाद
विरोधमाशङ्क्य *आहैवं चेति* नन्वनु पश्चात्सज्यतइति व्यु
हृदयस्याग्रे ऽवद्यतीत्यादौ च पुरस्तादाम्नातस्यैवानुषङ्गस्य पश्
म्नातेनैव प्रायशो ऽन्वयदर्शनात्पश्चादाम्नातस्याच्छिद्रेणेत्यादेः
षङ्गो युक्त इत्याशङ्क्याह * पुरस्तादिति * न्यायतुल्यत्वाद्विरो

दे त्यर्थः ।

॥ व्यवेतानन्तुषङ्गाधिकरणम् ॥ १७ ॥

व्यवायान्नानुषज्यते ॥ ४९ ॥

नन्वसम्बद्धपदव्यवायाभाव एव सर्वेषु तुल्ययोगित्वादित्यनानुषङ्गस्योक्तत्वाद्व्यवाये ऽनुषङ्गाप्रसक्तेर्व्यर्थमिदं सूत्रमित्याशङ्क्याह * प्रत्युदाहरणत्वेनेति * वायुरित्यादिभाष्यं व्याचष्टे सन्त इति * तस्मादित्युपसंहारभाष्यं व्याचष्टे * ततश्चेति * न्वध्याहार्यपदस्य यथैव पाठः प्रतिपत्त्युपाय इत्यनेन न्यायेन सामर्थ्यलभ्यतयानुच्चार्यमाणत्वाल्लौकिकशेषकर्त्तव्यत्वाभिधानमयुक्तमिाशङ्क्याह * तत्रेति * कल्प्यपदसहितानां श्रुतानां पदानां ाक्यार्थप्रतिपादकत्वात्तेन विना न्यूनत्वापत्तेरुच्चार्यमाणपदैकवाक्यतयावश्यं सामर्थ्यकल्प्यं पदमित्यर्थः । यद्यपीत्यनेन कल्प्यस्यापि दस्याभिधानकरणत्वात् कर्तृव्यापारव्याप्यत्वं च विना करणत्वाोगात्तदुच्चारणातिरिक्तासाधारणशब्दविषयकर्तृव्यापाराभावाच्चोच्चार्यत्वम् सूचितम् । अनुषङ्गप्रत्युदाहरणत्वायाध्याहारोपसंहारस्याषङ्गासंभवोपसंहारपरत्वं वक्तुमाह * तस्मादिति * उभयत्रोच्चार्यत्वे ऽपि किं चिन्तायाः प्रयोजनमित्याशङ्क्याह * प्रयोजनमिते * अत्रैव वृद्धसम्मतिमाह * आह चेति *

इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजसोमेश्वरकृतायां तन्त्रवार्त्तिकटीकायां सर्वानवद्यकारिण्यां न्यायसुधाख्यायां द्वितीयस्याध्यायस्य प्रथमः पादः ।



# ॥ न्यायसुधायाम् ॥

## द्वितीयाध्यायस्य द्वितीयपादः

॥ अङ्गापूर्वभेदाधिकरणम् ॥ १ ॥

### शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥

लक्षणार्थविचारस्यावसरमाह * उपोद्घातेति * उपोद्घात-
ा वार्थाधिकरणोक्तकर्मभेदानुनिष्पाद्यपूर्वभेदापवादार्थाख्यातद्वैवि-
यप्रसक्तमन्त्रगताख्याताविधायकत्वलक्षणतृतीयप्रकारानुप्रसक्तम-
त्रलक्षणे प्रसक्तानुप्रसक्तं चेत्यध्यायोपक्रमभाष्यगतचशब्दप्रतिज्ञा-
ा ऋक्सामलक्षणादौ समाप्तइत्यर्थः । शब्दान्तरस्यापर्यायभूत-
ातुभेदरूपत्वेन धात्वर्थभेदद्वारा भावनाभेदकत्वस्य स्पष्टत्वं प्रा
युत्पाद्यत्वे कारणमाह * तत्रेति * भावार्थाधिकरणोक्तस्य धा-
ार्थभेदानुनिष्पादिना ऽपूर्वभेदस्य धात्वर्थभेदे ऽप्यपूर्वभेदहेतुभाव-
ाभेदाभावेनाक्षिप्य समाधानार्थतयास्यैवादौ सङ्गतत्वादिति हेत्व-
ारसूचनार्थस्तावच्छब्दः स्पष्टत्वस्य वा कथं प्राग्वाच्यत्वहेतुतेत्याश-
ा स्थूलसूक्ष्मयोः क्रमे बुद्ध्युत्पत्तेरिति सूचनार्थः।अस्तीतिभाष्येण
ोतिष्टोमगतधातुभेदोदाहरणस्यैकप्रयोगवाक्यगताख्यातप्रत्ययसं-
ाद्धानां प्रात्यात्मिकानेकाख्यातप्रत्ययसम्बद्धानां सर्वधातूनाम्मुदा-
णत्वज्ञापनं प्रयोजनमाह * एकेति * धातुत्रयोदाहरणं तर्हि ४
ामर्थमित्याशङ्क्याह * भाष्येति * स्वत्वत्यागांशसाम्येन धातुत्रया-
नामन्त्यन्तभेदाप्रतीतेर्धातुत्रयस्य पर्यायत्वभ्रमाच्छब्दान्तरत्वाभिम-
पर्यायभूतभेदाभावाशङ्कानिरासार्थं त्रयोदाहरणमित्याशयः । य-
ीति सन्देहभाष्यं त्रिविधसन्देहपरतया परमतेन व्याचष्टे * त-
ते * ननु धातुनिर्देशार्थानां यजत्यादिशब्दानां लक्षणया धात्व-
ारत्वे लक्षितलक्षणया भावनापरत्वे सम्भवत्यपि भावनाधात्वर्थ-
धात्वर्थधातुजन्यत्वाभावात्कार्यशब्दो न युज्येतेत्याशङ्क्याह * का-
ते * विशेष्यप्रतिपाद्ययोरप्युपकार्यशब्दैकदेशकार्यशब्देन भामा-
देनेव सत्यभामायाः शङ्कमभिधानमित्याशयः । कुर्वन्तात्यप्युप-

कुर्वन्तीत्येवं व्याख्येयमित्याह * भावनेति * संहत्यापीत्यादिभ
सन्देहहेत्वभिधानार्थत्वेनावतारयति *कुत इति* व्याचष्टे*सा
त्वमिति * स्वमतेन संहत्यैकभावनाविशेषणत्वात्संहत्यैकमपूर्व
वनाशब्दाश्चोदयन्त्युत वियुत्यानेकभावनाविशेषणत्वाद्भिन्नान्यपू
णीति भावनाभेदाभेदफलभूतापूर्वभेदाभेदचिन्ताद्वारा भावनाभे
भेदावेव चिन्त्येते इत्येवं सन्देहभाष्यं व्याचष्टे* अथ वेति * प्रा
रणिकसर्वधात्वर्थानुरक्तेति वाच्ये ऽप्युदाहृतापेक्षया त्रयोक्ति
ननु क्रियतइति व्युत्पत्त्यापूर्वस्य क्रियते ऽनेनेति व्युत्पत्त्या धात्वर्थ
कर्मशब्दवाच्यत्वाद्भावनाभेदे विचार्ये सौत्रः कर्मशब्दो न युज्
तेत्याशङ्क्याह * भावनैव चेति * कर्मशब्दवाच्यधात्वर्थानुरा
द्भावनापि कर्मशब्देन वक्तुं शक्येत्याशयः । नन्वेवं क्लिष्टव्याख्य
को हेतुरित्याशङ्क्याह * तस्या एवेति * संख्यादिष्वपूर्वभेदचिन्त
या भाष्ये ऽप्यभावेनानाशङ्क्यत्वादादिशब्दो ऽभ्यासविषयः। अभ्य
सस्य धात्वर्थभेदकत्वे वक्ष्यमाणे ऽप्यपूर्वापेक्षयैवकारः । कस्मा
च्छब्दान्तरादेर्नापूर्वभेदकतेत्याशङ्क्याह * अपूर्वस्येति * शब्द
ब्दान्तरेणानुरञ्जकप्रकृत्यर्थहेतुकप्रत्ययार्थभेदावगमात्पुनर्विधानाख्
चाभ्यासेनाभिधानपूर्वकत्वाद्विधानस्याभिधेयस्यैव भेदागमम
त्रान्नानभिधेयभेदकता युक्तेत्याशयः । अननुष्ठेयत्वादपि ना
र्वस्य भेदाभेदौ चिन्त्यावित्याह * कर्मेति * नन्व
पूर्वस्याविचार्यत्वे ऽपि फलत्वाद्युज्येतोपन्यासो धात्वर्थैकत्वोपन्य
सस्तु यद्वेति भाष्ये करिष्यमाणः कथं युज्येतेत्याशङ्क्याह * प्रास
ङ्गिकत्वेति * धात्वर्थभेदे ऽपि भावनाभेदो नास्तीत्युक्ते भावनैक्य
प्रसङ्गाद्धात्वर्थैक्यं पूर्वपक्षातिशयायोक्तमित्यर्थः । प्रधानतैवा
कस्मान्न स्यादित्याशङ्क्याह * कथमिति * सर्वधात्वर्थाव्यापकत्वा
न्नास्य प्रधानता युक्तेत्यर्थः । नन्वेकधात्वर्थानुरक्तायां भावनाय
धात्वन्तरार्थानवकाशाद् गुणन्यायेनैव भावनाभेदसिद्धेः । पूर्वपक्षा
सम्भवाद्भावनाभेदाभेदसन्देहो न युक्त इत्याशङ्क्याह * ततश्चेति *
किं सोमेन यजेतेत्यादिवाक्यैस्तत्तद्धात्वर्थविशिष्टाभावना विधीयमान
प्रतिधात्वर्थं भिद्यते ऽथ वा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिवा
क्येनानादृतधात्वर्थविशेषां भावनां फलोद्देशेन विहितां सोमेन यजे
तेत्यादिवाक्यैरनूद्य तां प्रति विधीयमाना यागदानहोमादयो धात्व
र्थाः संहत्य विशेषन्तीति सोमादिवाक्ये धात्वर्थविशिष्टभावनावि
धिर्वाक्यान्तरविहितशुद्धभावनोद्देशेन वा धात्वर्थविधिरिति सन्देहो
भावनाभेदाभेदसन्देहकारणमित्याशयः । ननु ज्योतिष्टोमवाक्ये ऽपि

रागानुरक्तभावनाप्रतीतेर्द्धात्वर्थान्तरानुरागायोगाच्च गुणन्यायाति-
क्रम इत्याशङ्क्य फलवाक्ये धात्वर्थानुरागविवक्षायां भावनायाः फलं
त्युपादानविधानगुणभावाद्धात्वर्थं च प्रति उद्देशानुवादप्रधानभा-
ाद्वैरूप्यापत्तेर्द्धात्वर्थानुरागाविवक्षा पूर्वपक्षिणोऽभिमतेति सूचना-
ेम * पूर्वोक्तम् * भाष्योक्तसन्देहकारणनिवृत्त्यर्थोऽपिश-
दः। अयं चार्थः प्रयोगवाक्यशेषभावेन हि समुदायस्य सत्ता सम्ब-
धो गम्यतइत्यादिभाष्यालोचनयोक्तत्वान्न स्वोत्प्रेक्षितत्वेनोपहा-
यः परमतेन त्रिविधपूर्वपक्षाभिधानार्थत्वेन भाष्यं व्याख्यातुं पठति
: किं तावदिति * संहत्यशब्दं तिस्रो भावनाः संहत्यैकमपूर्वं कु-
न्तीत्येवं व्याख्यातुमाह * तत्रेति * अदृष्टार्थानामिति भाष्यस्या-
ैक्योक्त्यैव व्याख्यातत्वात्तदुपपादनार्थमदृष्ट इतिभाष्यावयवं
याचष्टे * इयं चेति * विरुध्यमान इति भाष्यावयवार्थमाह
दृष्टेति * उक्ते ऽर्थे भाष्यावयवं योजयति * तदिति * विशेष- ४
ादित्यवयवं व्याचष्टे * तत्रापीति * बहुभ्य इत्यवयवं तस्माच्छ-
ान्तमुपसंहारार्थत्वेन व्याचष्टे * तस्मादिति * ननु स्वर्गकामो
जेतेति फलवाक्ये यागभावनामात्रविधानात्कथं यागहोमदानादि-
ावनासमुदायस्य फलापूर्वसाधनतत्याशङ्क्य निरासार्थं समुदाय
तभाष्यमपनीततस्माच्छब्दकपाठेन सूचितव्याख्यानत्वाद्व्याख्याय
ुपपादनार्थं न चेति भाष्यमाशङ्कोत्तरत्वेन व्याचष्टे * तत्रेति *
लवाक्यगताख्यातविहितभावनासमुदायावयवभूतैकैकधात्वर्थाव-
छन्नभावनावाचिभिर्सोमादिवाक्यगतैर्यजतिजुहोतिददातीत्याख्या-
ाब्दैः कल्पनागौरवभयात्प्रतिभावनं भाष्यान्वयमसहमानैरै-
भाव्यान्वयाय भावनासमुदायस्यार्थाक्षिप्तत्वेन शाब्दत्वात्फलवाक्ये
लसाधनतया युक्तो विधिरित्यर्थः। अथ वेति भाष्यं पक्षान्तरप-
रहार्थत्वेन व्याचष्टे * अथ वेति * उत्तरस्तमेवानुवदतीति भा-
ानुवादाभिधानेनैकस्यां भावनायां त्रयो यजत्यादय उपाया वि-
यन्तइति चोपायतया धात्वर्थविधानाभिधानेन सूचितामुपपत्ति-
ह * तस्यापीति * श्लोकं व्याचष्टे * यदि हीति * धात्वर्थानां
ान्ये सति फलवत्स्वरूपेणाविधेयत्वापत्तेः फलवाक्यविहितभाव-
त्यभिज्ञाने ऽपि सोमादिवाक्येषु तत्तद्धात्वर्थविशिष्टरूपेण विधी-
ाना भावनैकधात्वर्थविशिष्टायां धात्वर्थान्तरनिवेशायोगाद् गुण-
येन प्रतिधात्वर्थं भिद्यते भावप्रधानमाख्यातमिति स्मृतेस्त्वाख्याते
ानायाः प्राधान्याद्भावशब्दस्य धात्वर्थविषयत्वव्याख्याने ऽपि घा
तिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येनेति स्मृतेः

प्रत्ययार्थत्वेन भावनायाः प्राधान्यात्फलवाक्यविहितशुद्धभावनानुवादेन सोमादिवाक्यैरनादृतपौर्वापर्यैर्युगपत्सर्वधात्वर्थविधानान्न गुणन्यायो ऽस्तीत्याशयः । ननु सोमादिवाक्येषु भावनाविध्यभावे विशेषणसम्बन्धमात्रार्थं भावनाभिधानावृत्तिः स्यान्न चासौ युक्तेत्याशङ्क्याह * यद्यपीति * असत्यां गतौ गुणानुरोधेनापि प्रधानावृत्तिर्युक्तेत्याशयः । न तु केवलप्रकृतिप्रयोगासम्भवमात्रात्प्रत्ययावृत्तिसिद्धेः केवलप्रत्ययप्रयोगासम्भवः किमर्थमुक्त इत्याशङ्क्याह * यदि त्विति * क्लृप्तत्वादौ विशेषणान्वयाभिधानावृत्तिर्दृष्टेत्याह * दृष्टा चेति * अनन्यगतिगुणसम्पादनार्था चानुष्ठानावृत्तिरपि
१ दृष्टा किमुताभिधानावृत्तिरित्याह * तथेति * नन्वेवं सति भिन्नवाक्योपादानाद्धात्वर्थानां प्रत्येकमेव भावनाविशेषणता युक्तेत्याशङ्क्याह * तस्मादिति * यस्मात्कल्पनालाघवाय संहत्य विशेषणत्वं प्रतीयते ,तस्मात्सर्वधात्वर्थविशेष्टैकभावनाभिधानार्थत्वेनानेकार्थत्वात्सर्वं प्रकरणमेकं वाक्यमित्यर्थः । तस्मादित्युपसंहारभाष्यं सङ्क्षिप्य व्याचष्टे * एकमिति * संहत्य विशेषणत्वकल्पनस्यादृष्टकल्पनालाघवहेतुकत्वाभिधानार्थमत इति भाष्यं व्याचष्टे * एकं चेति * तृतीयपूर्वपक्षाभिधानार्थं यद्वेति भाष्यं स्वत्वपरित्यागांशेत्यनेन व्याख्यातत्वादसार्वत्रिकत्वेन चानादृत्य तथोक्तत्वादुपेक्ष्य स्वमते पूर्वपक्षैकध्याभिधानायाद्यं पूर्वपक्षं दूषयितुमारभते * अयमेव चेति * एतदेव प्रश्नपूर्वमुपपादयति * कुत इति * श्लोकं व्याचष्टे * यदि हीति * अदृष्टार्थभावनाभेदान्यथानुपपत्त्या भावनाभेदवदपूर्वभेदस्याप्यवश्याभ्युपगन्तव्यत्वापत्तेः किमनेन पूर्वपक्षेण सिद्धान्तप्रतिकूलं क्षतं स्यादित्यर्थः कथमेकशब्दोपादानात्समुदायत्वापादनमित्यपेक्षिते समुदायानुवादरूपेण वा * फलादिसम्बन्धेन वेत्युक्तम् * पौर्णमासीमित्येकशब्दोपादानं तावद्यजिनानूद्यमानानां यागानां समुदायत्वापादनार्थमेव राजसूयेनेत्यस्य फलान्वयपरत्वात्समुदायापादनार्थत्वाभावे ऽप्येकशब्दोपादानेनैकफलान्वयात्समुदायत्वापत्तिरित्याशयः । ज्योतिष्टोमशब्दस्य सर्वप्राकरणिकया होमाद्यवच्छिन्नभावनासमूहवाचित्वमाशङ्कते * ननु चेति * यजिसामानाधिकरण्याद्भावनावाचितैव तावदयुक्ता धात्वर्थद्वारलक्षणया तु तद्वाचित्वाभ्युपगमे ऽपि यजिमात्रसामानाधिकरण्याद्धोमाद्यवच्छिन्नभावनासमूहवाचिता दुराशङ्केति परिहरति * नेति * उपसंहरति * तस्मादिति * का तर्हि भाष्यस्य गतिरित्याशङ्क्याह * एवं त्विति * यथेन्द्रायुधं लोहितशु-

ठकृष्णैस्त्रिभिर्धातुभिः संहत्यानुरज्यते तथा सर्वधात्वर्थैर्भावनेति
तेज्ञाभाष्यव्याख्या भावनैक्योपपादनार्थत्वेनादृष्टार्थानामित्यादि-
ष्यं व्याचष्टे * तत्सिद्ध्यर्थास्त्विति * कर्मभेदे हीत्यनेनाबहुभ्य
क्रमपूर्वमिति अकारप्रश्लेषो भाष्ये सूचितः भावनैक्ये समुदाय-
द्यानुपपत्तिमाशङ्क्य धात्वर्थसमुदायानुरक्तस्यैकस्य भावनाख्यस्य
र्मणो ऽनुरञ्जकस्य समुदायस्यावयवभूतानां धात्वर्थानां समुदा-
ऽभिप्रेत इत्येवं व्याचष्टे * तस्मादिति * भाष्यं च धात्वर्थानां
मुदायाप्रतीतेः कथं संहत्यानुरञ्जकतेत्याशङ्कानिरासार्थत्वे यस्मा-
ल्पनालाघवाय भावनैक्यं युक्तं तस्मात्तत्सिद्ध्यर्थं धात्वर्थसमु-
यो ऽनुरञ्जकः कर्त्तुं वेदस्येष्टो ऽवसीयत इत्येवं व्याख्येयम् । अथ
ते भाष्यं पक्षान्तराभावेनायुक्तमाशङ्क्य परमतेनोपसंहारार्थत्वेन
ाचष्टे * अत इति * स्वमतेनोपपत्त्यन्तरार्थत्वेन व्याचष्टे * शङ्कां
ाति * अभिन्नार्थत्वामेवोत्तरस्तमेवेति भावनैक्याभिधानेन दर्श-
तीत्याह * तदिति * परेषां व्याख्यानं दूषयितुमुपन्यस्यति * ए-
मिति * दूषयति * तत्विति * स्वमतेन भावनापरामर्शितया त-
ब्दं व्याचष्टे *तस्मादिति* पूर्वभाष्यपर्यालोचनयाप्येष एवार्थः प्र- ४४
यतइत्याह * तथा चेति* एतदेवोपपादयति *अतइति* तस्मा-
त्युपसंहारभाष्यं व्याचष्टे * तस्मादिति * यजत्यादित्रये धात्व-
क्यादपि भावनैक्यमित्युपपत्त्यन्तराभिधानार्थं यद्वेति भाष्यं व्या-
ष्टे * तस्मादिति * यजत्यादित्रये धात्वर्थैक्यादपि भावनैक्यमि-
ुपपत्त्यन्तराभिधानार्थं यद्वेति भाष्यं व्याचष्टे *यद्वेति* ननु नैकां-
साम्यमात्रेण धात्वर्थैक्यं युक्तमर्थैकांशसाम्येन सादृश्याद् गौण-
त्या ददातिजुहोतिभ्यां यजत्यर्थानुवादो ऽभिहितः सो ऽपि गौण-
दोषापत्तेरयुक्त इत्याशङ्क्याह * अथापीति * जघन्यत्वसाम्याद्
णतैव लक्षणा शब्देनोक्ता समुदायवाचिना वा त्यागाख्यैकदेशे वृ-
त्तलक्षणाभिमता गुणसम्बन्धार्थामिति भाष्यावयवं व्याचष्टे * गुणे-
ा * को गुण इत्यपेक्षायामाह *एकत्रेति* प्राकाशावध्वर्यवे ददा-
तिवत्सम्बन्धविधानाद्वाक्यभेदाभिप्रायः दक्षिणाकालत्वलक्षणो
णो दाक्षिणशब्देनाभिमतः। ननु दक्षिणानयनोत्तरकालमेतद्धोमावि-
ानात् क्रमेणैव दक्षिणाकालत्वप्राप्तेस्तत्प्रख्यन्यायेन दाक्षिणशब्दस्य
ामत्वाद् गुणविधित्वं नास्तीत्याशङ्कते * नन्विति * धात्वर्था-
वादपक्षे गुणविधित्वापत्तिरिति परिहरति * कर्मेति * अस्मिंश्च
क्षे सन्देहभाष्यगता यजत्यादिशब्दा श्रुतिवृत्ता एवेत्याह * तदा
ाति * कार्यशब्दस्वरूपक्रमानुरोधात्क्रियासामान्यवाचिना करो-

तिना तद्विशेषोक्तिक्रियालक्षणाद्वाच्यधात्वर्थविषयो ऽर्थाक्षेप्या
विषयो वेत्याह * एकामिति * संहत्यकारित्वे कार्य
* लाभादेकमित्युक्तम् * एकं धात्वर्थमेकं वापूर्वं त्रयो धा
गमयन्तीति कुर्वन्तिशब्दार्थे व्याख्याते ददातिजुहोत्योर्गुणस
न्धार्थत्वेन धात्वर्थाविधायकत्वात्कथं धात्वर्थसाध्यापूर्वगमकते
शङ्क्य * तदेत्युक्तम् * यजत्यर्थानुग्राहकगुणविधायकत्वेन त
र्थयजत्यनुग्राहकत्वात्तत्सहकृतस्य यजतेरपूर्वगमकत्वमाभिप्रेत्य संह
त्युक्तमित्याशयः * तस्मादिति * पूर्वपक्षोपसंहारभाष्यं फल
भावनैक्योपसंहारार्थत्वेन व्याचष्टे * तस्मादिति * उत्तराधिक
पूर्वशब्दस्य फलतः कर्मविषयतया व्याख्यास्यमानत्वादिहाव्याख
सिद्धान्तसूत्रं व्याचष्टे * उच्यतइति * शब्दान्तरस्य धात्वर्थभे
द्वारा भावनाभेदप्रमाणत्वं वक्तुम् * धात्वर्थभेद इत्युक्तम् * धात
र्थस्य प्रयत्नाख्यभावनाजन्यत्वात्तद्भेदस्य भावनाभेदकत्वासम्भवम
शङ्क्य ज्ञापकहेतुत्वं वक्तुम् * विज्ञेयमित्युक्तम् * संख्यादित्रय
भावनाभेदकत्वाभावे ऽपि धात्वर्थभेदाद्भावनाभेदसिद्धिं वक्त
*सर्वत्रेत्युक्तम्* कृतानुबन्धत्वव्याख्यानायोत्तरार्द्धम् । ननु भावन
वाचिप्रत्ययैक्यात् भावनायाः स्वतस्तावदैक्यप्रतीतेः प्राधान्या
धात्वर्थभेदे ऽप्यावृत्त्यनुपपत्तेः कथं धात्वर्थभेदाद्भेद इत्याशङ्क्य निर
लोकार्थं प्रपञ्चयति * यद्यपीति * सम्बन्धिनिरूपणाधीननिरूपण
सम्बन्धस्य सम्बन्धिभेदेन ज्ञेयनिरूपणाधीननिरूपणस्य ज्ञानस्य ज्ञे
भेदेन भेददर्शनाद्यदधीनं निरूपणं तत्तद्भेदेन भिद्यतइति व्याप्तेर्धात्व
र्थाधीननिरूपणत्वाद्भावनाया धात्वर्थभेदेन भेदो ऽनुमीयत इत्याश
यः । कथमनुरञ्जकभेदस्यानुरञ्ज्यभेदाक्षेपकतेत्याशङ्क्याह *
हीति * भावनाया धात्वर्थावच्छेदं विना भावनान्तराद्व्यावृत्त्यप्र
तीतेरेकभावनावच्छेदकत्वविरोधप्रसङ्गेनैकस्यां भावनायामनेकानु
रञ्जकसमावेशायोगादनुरञ्जकभेदो ऽनुरज्यभेदमाक्षिपतीत्याशयः
त्रयाणामप्येकस्यां भावनायां समावेशो न सम्भवति किमुत प्रकर
णगतानां सर्वधात्वर्थानामिति त्रय इत्यनेनोक्तम् । ननु प्रत्येकमनुरञ्ज
कत्वे माभूत्समावेशः समुच्चितानामेव तु धात्वर्थानामेकभावनानुर
ञ्जकत्वं घटपटाविति युगपत् घटपटज्ञाने घटपटयोरिवैकज्ञानानुरञ्ज
कत्वं भविष्यतीत्याशङ्क्याह * न चेति * युगपत् घटपटसंयुक्ते
न्द्रियेण घटपटविषयैकज्ञानोत्पत्तावपि ज्ञानजन्यार्थप्रकाशाख्यस्य
फलस्याश्रयभूतघटपटभेदेन भेदात् घटप्रकाशांशे घटस्यानुरञ्जकत्वं
पटप्रकाशांशे पटस्येत्यंशभेदेनोभयोरेकज्ञानानुरञ्जकत्वं युक्तम् । धात्व-

ानुकरणांशनिवेशेन भावनानुरञ्जकत्वात्करणांशस्य चैक्याभा-
नुरञ्जकत्वापेक्षेत्याशयः । ननु समुच्चितानामेव करणांशनिवेशो
ष्यतीत्याशङ्क्याह * अन्योन्येति * भिन्नशब्दोपादाने ऽपि धा-
मूहात्प्रत्ययोत्पात्तत्वादग्नीषोमयोरिव धात्वर्थसमुच्चयः स्याद्धा-
तु प्रकृतित्वेनोपादेयतया विवक्षितसंख्यत्वान्न समूहात्प्रत्ययो-
ावग्नीषोमयोरिव धात्वर्थसमुच्चयः स्याद्धातोस्तु प्रकृतित्वेनो-
यतया विवक्षितसंख्यत्वान्न समूहात्प्रत्ययोत्पत्तिरित्याह * न ४४
* नन्वेकस्मिन्पदे ऽनेकधातूपादानाभावे ऽपि प्राकरणिकानां
ातूनां प्रयोगवाक्यैकवाक्यत्वात्तद्विहितायां भावनायां प्राकर-
सर्वधात्वर्थानां निवेशो भविष्यतीत्याशङ्क्याह * न चेति *
गवाक्ये शुद्धभावनाप्रतीत्यभावात्सोमादिवाक्येषु च भावनावि-
रपेक्षधात्वर्थविध्ययोगात्साकाङ्क्षत्वाभावेन प्राकरणिकसर्वधा-
ानुरक्तैकभावनाविधानरूपैकार्थत्वाभावान्नैकवाक्यता युक्तेत्या-
। ननु कल्पनालाघवायापूर्वैक्यावधारणात्तस्य च भावनैक्यं
ानुपपत्तेः सर्वप्राकरणिकवाक्यानामेकभावनाप्रयोजनत्वेनैका-
ेकवाक्यता भविष्यतीत्याशङ्क्याह * न चेति * रूपादुत्तर-
हि विनियोगप्रयोजने इत्यनेन न्यायेनादृष्टप्रयोजनभेदाभेदयो-
भेदाभेदपूर्वकत्ववत्कर्मभेदो भेदपूर्वकत्वावगतेर्नापूर्वैक्येनैकार्थ्ये
कवाक्यकल्पना युक्तेति प्रत्याख्यानप्रकारं प्रकृते योजयितुमाह
चेति * ननु फलवाक्ये भावनाया धात्वर्थानुरागविवक्षायां
प्रत्युपादेयविधेयगुणत्वाद्धात्वर्थे च प्रत्युद्देश्यानुवाद्यप्रधानत्वाद्वै-
ापत्तेः शुद्धाया विधेयत्वात्सोमादिवाक्यैस्तदनुवादेन यागादि-
र्थानुरागविधानमेकवाक्यत्वाभ्युपगमेन वा सर्वधात्वर्थानुरक्तै-
ावनाविधानं युक्तमिति पूर्वपक्षाशयमाशङ्क्य निरस्यति * यदि
* ननु भिन्नवाक्यगतैरपि धात्वर्थैरनुरागसम्भवे किमित्यप्र-
मानैकवाक्यत्वकल्पनेत्याशङ्क्याष्टदोषविकल्पपरिहाराय समुच्च-
द्व्यर्थत्वं सूचयितुम् * युगपद्वेत्युक्तम् * पृथक्शब्देन धात्व-
रागनिरपेक्षतोक्ता प्रत्ययेन शुद्धभावनोपादाने ऽप्यशक्यानुष्ठान-
शुद्धाया विधेयत्वासम्भवसूचनार्थो विधिवाच्युत्पत्तिशब्दः।भा-
याश्च धात्वर्थवत् कारकत्वानभ्युपगमात्कर्मकरणत्वाभावेन तद्वि-
ोद्देश्योपादेयत्वाद्यभावाद्धात्वर्थनिरपेक्षायाश्चाविहितत्वेन धा-
ान्वये ऽप्यनुवाद्यत्वाभावान्न वैरूप्यापत्तिरित्याशयः । यदा च-
वर्थनिरपेक्षाया भावनाया विधेयत्वं न सम्भवति तदा ददात्या-
ां धात्वर्थानां मध्ये केन चिदेकेन धात्वर्थेन समस्तैर्वा धात्वर्थैर-

वच्छिन्नोत्पादयितव्या न शुद्धेत्याह * इतीति * ननु समस्तधात्व
वच्छिन्नभावनोत्पत्तिपक्षे पूर्वपक्षासिद्धिः स्यादित्याशङ्क्याह * स
ति * समस्तानामपि संहत्यावच्छेदकत्वायोगात्प्रत्येकमवच्छेद
त्वावगतेः प्रतिधात्वर्थं भावनाविधौ विहिताया विध्यसम्भवाद्
सिद्धिरित्यर्थः । अथैकेन धात्वर्थेनावच्छिन्ना भावनैकहायन्येव
विधीयते ऽन्ये तु धात्वर्थास्तस्यामेव भावनायां हिरण्यादीनीव
विधीयमानानि न भावनाभेदमापादयन्तीत्युच्यन्ते तत्राप्येकहा
नीवाक्येनैकगुणोपादानरूपकर्मोत्पत्तिचिन्हवदिह कस्मिंश्चिद्धा
भावनोत्पत्तिचिन्हाभावेन व्यवस्थाहेत्वभावादगृह्यमाणविशेषत
सर्वत्र भावनाविध्यापत्तेर्दुवारो भावनाभेद इत्याह * अथेति *
त्वर्थान्तरेषु भावनाविध्यभावसूचनार्थं तावच्छब्दः अथागृह्यम
विशेषत्वे ऽप्यनेकोत्पत्त्यानर्थक्याद्येन केन चिदेकेन धात्वर्थेना
क्ताया भावनाया उत्पत्तिरिष्यते तथाप्येकधात्वर्थानुरक्तायां धा
र्थान्तरस्य गुणन्यायेनानिवेशाद्भावनाभेद एवेत्याह * येन केन चि
ति * धातुशब्दो ऽर्थपरः श्लोकं व्याचष्टे * येनैव हीति * सर्वप्रव
णैकवाक्यत्वविवक्षया वाक्यशब्दप्रत्याख्यानं वाक्यभेदविवक्षया
करणशब्दः एतदेवोदाहरणनिष्ठं विवृणोति * ददातिर्हीति
सर्वत्र पदश्रुतिगम्यत्वात् तुल्यबलत्वमाशङ्कते * ननु चेति *
त्वर्थान्तरानुक्तभावनाविशेषान्वयस्य श्रुत्यानवगतेरतुल्यबलत्व
ह * सत्यमिति * ननु भावनायाः स्वतो वैलक्षण्यानवभासेन
वत्रैक्यात्त्यागानुरक्तान्या दानानुरक्तान्येति भेदव्यवहारो न युक्त
त्याशङ्कते * ननु चेति * भिन्नधात्वर्थानुष्ठाने प्रयत्नाख्यभावना
क्तिवैलक्षण्यस्य स्वसंवेद्यत्वाद्वैलक्षण्यानवभासेन सामान्यस्यै
वाच्यं तदिष्टमेवेत्युपहासेन परिहरति * केन चेति * धात्वर्थ
रक्तभावनाव्यक्तिवाची कर्मशब्दः व्यक्तेरपि धात्वर्थवैलक्षण्यं
वैलक्षण्याप्रतीतेर्न भेदो ऽस्तीत्याशङ्किता स्वाशयं दर्शयति *
न्विति * धात्वर्थवैलक्षण्याख्यसामग्र्यपेक्षो ऽपि भावनाव्यक्ति
लक्षण्यावभासो बाधाभावात्प्रमाणमिति निराकरोति * कथमि
बाधाभावे ऽप्यन्योपाधिकत्वाच्छब्दभेदप्रत्ययवद्भावनाभेदप्रत्ययो
ष्येत्याशङ्किता स्वाशयं विवृणोति * नन्विति * अन्यसन्निधि
न्यत्वमात्रं वौपाधिकत्वमभिप्रेतमन्यधर्माध्याससन्निबन्धनत्वं वेति
कल्पं मनसि कृत्वाद्ये कल्पे तावत्प्रतिवर्णव्यञ्जकध्वनिभेद
न्नध्वनिसन्निधिजन्यत्वस्य सत्वे ऽपि गकारो ऽयं ककारो ऽयमि
दिप्रत्ययभेददर्शनादनैकान्तिकत्वं तदभिप्रायत्वेन दृष्टान्तस्य सा

रूपत्वमाह * नैतदिति * अथ द्रुतो ऽयं मध्यमो ऽयं विलम्बि-
यमित्यादिभेदप्रत्ययदृष्टान्तेनान्यधर्माध्यासनिबन्धनत्वं भावना-
त्ययस्य मिथ्यात्वे हेतुरभिप्रेतः। सो सिद्धः ध्वनिधर्मा हि
तुःपञ्चकमात्रस्वरूपा द्रुतादिवृत्तयस्तस्मादुच्चारणं तेषां मात्रा-
; प्रतीयते द्विमात्रं वा त्रिमात्रं वा न वर्णो मात्रिकः स्वयमिति
मात्रानिषेधात्। तत्कल्पनानुपपत्तेर्वस्तुतो सत्वादध्यासेन प्र-
न्तइति युक्तम्। धात्वर्थधर्मस्त्वनन्तरं नियमेन किं चिदुत्पादनरूपो
नाफलस्यानन्तरोत्पत्तिनियमाभावान्न भावनायां प्रतीयते पूर्वा-
भावानिष्पन्नस्वरूपस्तु भावनायामपि व्यापारत्वेन वास्तवत्वा-
यस्त इत्याशयेनाह * न चेति * द्रुतादिधर्मरहिताच्छब्दाद्विल-
णधर्मतार्थान्तरशब्देनानन्तरं किं चिदुत्पादननियमरूपधर्मरहि-
च भावनाख्यात्प्रयत्नाद्विलक्षणधर्मता व्यतिरिक्तशब्देन विवक्षि-
। पूर्वापरीभावानिष्पन्नस्वरूपधात्वर्थधर्मतुल्यत्वप्रदर्शनार्थो ना-
त्वाच्यदूरशब्दः उपसंहरति * तस्मादिति * एवं धात्वर्थाधा-
रूपणत्वाद्धात्वर्थभेदे वास्तवं भावनास्वरूपभेदमुक्त्वेदानीं स्वरू-
भावनाव्यक्त्यैक्ये ऽपि शब्दान्तरादिभिर्विधेयरूपभेदस्य व्युत्पा-
ाद्धात्वर्थानुरक्ताया एव च भावनाया विधेयत्वाद्धात्वर्थानुर-
रूपेण भेदो भविष्यतीति वक्तुं वृद्धानां श्लोकं पठति *आह चेति*
न लाक्षादिनोपधानेनावरुद्धे स्फटिके चोदिते सति कृष्णस्फाटिक-
ायत्याद्विचोदनया यद्विहितं तद्रक्तचोदनाविहिते स्फटिके का-
ादेर्निवेशो योगात्तस्मादन्यद्यथा गृह्यते तथैकधात्वर्थावरुद्धा भा-
: विधाने सति या धात्वर्थान्तरचोदनास्तास्ता भावनान्तरविष-
स्युरित्यर्थः। नन्वेवं सति गुणन्यायादेव भेदसिद्धेः शब्दान्तरा-
कथं स्यादित्याशङ्क्याह * यस्मात्त्विति * पूर्वपक्षनिरुत्तरी-
णायैतदुक्तं। वस्तुतस्तु यस्मात्प्रत्ययः कृतधात्वर्थावच्छेदमेव स्वा-
वदति तस्मात्फलवाक्ये ऽपि शुद्धभावनानवगतेर्नैकस्यां भावना-
ानेकधात्वर्थावच्छेदः सम्भवतीत्येतदिह व्युत्पाद्यमित्याशयः। ननु

प्रकृतिप्रत्ययौ ब्रूतः प्राधान्येन सहोत यत्।
भेदेनैवाभिधाने हि प्राधान्यं तत्तयोच्यते॥
स्याच्चेत्स उभयोर्वाच्यः प्रत्ययार्थः कथं भवेत्।
व्यपदिश्येत नैकेन यद्यर्थ उभयोरसौ॥
सर्वदा तूच्यते यस्मात्प्रकृत्यर्थोपसर्जनः।
तेनासावुभयोरर्थः प्रयोजनतयोदितः॥
यान्यावयवशक्तिभ्यां शक्तिःकाचित्पदाश्रया।

विद्यते यत एकस्माद्विशिष्टार्थगतिर्भवेद् ॥ इति

शब्दे प्रकृतिप्रत्यययोरप्यन्विताभिधानस्य निरस्तत्वात्कृतानुबन्धमेव स्वार्थं प्रत्ययो वदतीत्ययुक्तमित्याशङ्क्य * प्रकृतीत्युक्तम्

नित्यं विशिष्टएवार्थे प्रत्ययो यत्प्रवर्त्तते ।

तत्पूर्वेतरविज्ञातप्रकृत्यर्थविशेषणाद् ॥

इत्यनेन न्यायेनान्वितानभिधाने ऽपि परश्चेति प्रत्ययस्य प्रकृतिपरत्वस्मृतेर्वृद्धप्रयोगरूपाच्चाचारात्स्वार्थाभिधाने प्रकृतिप्रत्ययक्रमस्य नित्यं विवक्षितत्वावगतेरवर्ज्जनीया विशिष्टार्थावगतिरित्याशयः । इममेवार्थं तद्भूतताधिकरणभाष्येण द्रढयति यथोक्तमिति * यजेतेत्यनेनेति भाष्येण कृतानुबन्धत्वादिति सूत्रावयवं व्याख्याय ननु धात्वर्थसमुदायेनैवावच्छेदाख्यो ऽनुबन्धो भावनाया भविष्यतीत्याशङ्कानिरासार्थं प्रयोगेति भाष्यमुत्पत्तिवाक्यशेषत्वेनापि धात्वर्थसमूहस्यापि सत्ताशब्दोक्तभावनान्वयोपपत्तेरयुक्तमाशङ्क्योपपादयति * प्रयोगवाक्येति * उत्पत्तिवाक्यैर्नैव सर्वाणि प्राकरणिकानि गुणफलनिमित्तवाक्यानि सम्बध्यन्ते परस्परेणेतीन्द्रियकामाधिकरणवार्त्तिकवक्ष्यमाणन्यायेन प्रयोगवाक्यं भावनोत्पत्त्यभावाच्चान्येषां तच्छेषत्वं सम्भवतीत्याशङ्क्योत्पत्तिलक्षणार्थेन सत्ताशब्देन प्रयोगवाक्ये भावनोत्पत्तिर्विवक्षितेति भवनाशब्देन सूचितम् । समुदायानुरागकल्पनस्यापूर्वकल्पनालाघवात्फलान्वयकल्पत्वाच्चापूर्वस्य फलान्वयस्य च धात्वर्थोत्पत्तिवाक्यानां प्रयोगवाक्यशेषत्वाधीनत्वात्समुदायानुरागकल्पनस्य प्रयोगवाक्यशेषत्वहेतुकतेत्यर्थः । ननु धात्वर्थावच्छेदानपेक्षेण स्वरूपेण भावनाभाव्यनिष्ठत्वात्फलान्वयोपपत्तेस्तादृश्याश्च धात्वर्थोत्पादकसोमादिवाक्यानपेक्षाद्भावनोत्पादकात् ज्योतिष्टोमवाक्यात्प्रतीतेः किमर्थं सोमादिवाक्यानां ज्योतिष्टोमवाक्यशेषत्वापेक्षेत्याशङ्क्याह * नेति धात्वर्थावच्छेदं विनानुष्ठेयत्वात्फलान्वयो न सम्भवतीत्याशयः प्रकरणान्तरगतासु राजसूयादिभावनासु ज्योतिष्टोमभावनान्वयनिरासनार्थं बहुवचनम् । ननु भिन्नानामपि भावनानामेकप्रयोगवाक्यग्रहणात्समुदितानामेवापूर्वसाधनत्वाभ्युपगमेन कल्पनालाघोपपत्तेः कथं प्रयोगवाक्यशेषत्वाद्धात्वर्थसमूहस्यैकभावनान्वयगतिरित्याशङ्क्याह * अवधृतेति * अवधृतभेदानामेकवाक्योपादाने ऽप्येकशब्दानुपादानात्समुदायानुवादरूपतयैकीकरणामशक्यमित्यर्थः । स्वर्गकामो यजेतेत्युपश्लेषलक्षणया श्रुत्या धात्वर्थसंपादवदस्य यागस्यैव भावनासम्बन्धो ऽवगम्यत इति श्रुतेति भाष्य

ऽव्याख्यार्थे सन्निहितयोरपीति भाष्ये दानहोमयोः प्रयोगवाक्ये
ादानान्नैकवाक्योपादानलक्षणः संनिधिरस्तीत्यपिशब्दसूचित-
व्याचष्टे * न चेति * श्रुत्येतिशब्दं यजेरुपलक्षणार्थत्वशङ्का-
ासूचनार्थत्वेन व्याचष्टे * न चेति * ननु यागायागसङ्घ
ःसमवायाद्यजिप्रवृत्तेस्तदन्तर्गतस्य यागस्याप्युक्तत्वान्न स्वार्थत्या-
त्तिरित्याशङ्क्य * अहोभयेति * भावनावच्छेदकत्वेनार्थानामपि
ापत्तिहेतुत्वभावात्स्वरूपेण यागाभिधाने युगपद् वृत्तिद्वयापत्ति-
ाशयः। तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मादिति * भा-
वाचिप्रत्ययैक्यात् शब्दान्तरत्वानुपपत्तिमाशङ्क्य शब्दान्तरं चे-
क्रमपूर्वकं शब्दान्तरत्वोपपादनार्थं तत्रार्थान्तरमित्यादि च श-
तरहेतुकभावनाभेदोपसंहारभाष्यमेकहेलया व्याचष्टे * अत-
त * ननु यथा केवलस्य प्रधानस्य फलसाधनत्वज्ञानमुत्पन्नमपि
णस्येतिकर्त्तव्यतापेक्षत्वात्सेतिकर्त्तव्यताकस्य फलसाधनत्वज्ञानेन
यते तथा केवलस्य धात्वर्थस्य भावनावच्छेदकत्वज्ञानमुत्पन्नमपि
ात्वेन तस्य भावनावच्छेदकत्वात् कारकानपेक्षेण च प्रत्ययवाच्या-
भावनामात्रेण धात्वर्थाजननात्सिद्धरूपकारकाभ्युपगमे च तस्य
र्यापारस्य कारकत्वायोगाद्व्यापारकल्पनायां गौरवापत्तेर्धात्वर्थ-
कारकावच्छिन्नस्य धात्वर्थस्य भावनावच्छेदकत्वज्ञानेन बाधिष्य-
त्याशङ्कानिरासार्थं नन्विति भाष्यं व्याचष्टे * न चेति * इष्टे-
द्रव्यसम्प्रदानादिना कारकसङ्घेन दानादिधात्वर्थनिष्पत्तेर्न त-
ाादकधात्वर्थान्तरापेक्षेत्याशयः। यदा च शुद्धभावनाप्रतीत्य-
त्राद्धात्वर्थान्तरानपेक्षत्वान्न विभज्यमानसाकाङ्क्षत्वं भावनाभेदे
भावयितव्यापूर्वभेदावश्यम्भावान्न संहत्यैकार्थं तदेकवाक्योपादा-
भावादपि धात्वर्थसम्पाद्यस्यैकभावनावच्छेदकता न युक्तेत्यभिधा-
ये तस्मादिति भाष्यं न वैतत्पदत्रयमेकवाक्यतां गच्छतीत्यादिना
भावयितव्यापूर्वभेदादृते नैव भिद्यतइत्यन्तेन च व्याख्यातप्राय-
न्न व्याख्यातं यजत्यादित्रये धात्वर्थैक्यादपि भावनैक्यमित्युप-
पन्तरनिरासार्थं न चेत्यादिभाष्यं व्याचष्टे * न चेति * भाष्यस्थो
नमिति शब्दो धातुलक्षणार्थः परसम्बन्धार्थत्वादित्यनेनासेचनार्थे-
ात् जुहोतेरित्युपलक्षितमित्यासेचनशब्देन सूचितम्। ननूद्देशत्या-
क्षेपसमुदायवाचिनो जुहोतेस्त्यागपरस्वत्वापादनसमुदायवाचि-
ध ददातेस्तदेकदेशत्यागमात्रलक्षणायैकार्थ्यं भविष्यतीत्याशङ्क्याह
न चेति* देवतोद्देशसद्भावेऽप्यासेचनपरस्वत्वापादानापेक्षो मा-
ाब्दः त्यागमात्रार्थत्वादिति भाष्येऽपि मात्रशब्दोऽनेन सूचितः।

कालार्थे च तद्धितास्मृतेर्दाक्षिणशब्दस्य दक्षिणाकालवाचित्वात्प्रसिद्धेर्विधौ चावाचकशब्दायोगादर्थाक्षिप्तसाध्यांशसामानाधिकरण्या च्च नामत्वावगतेः कर्मण एव विधेयत्वात्सिद्धो भेद इत्याह * न चेति * धात्वर्थभेदाभेदचिन्तायां ददातिवाक्ये गुणविधौ सम्बन्धविधेराघाराग्निहोत्राधिकरणे निराकरिष्यमाणत्वाद्वाक्यभेदापत्तेः पूर्वपक्षायोगादुक्तोदाहरणानुपपत्तिप्रसक्तेर्नेह तच्चिन्तेति प्रसङ्गाद्दर्शयितुमाह * ददातिना त्विति * प्रयोजनभाष्यं धात्वर्थसङ्घस्यैकं भावनावच्छेदकत्वे सर्वेषामेकापूर्वसाधनत्वादङ्गाङ्गित्वाभावः पूर्वपक्षे सिद्धान्ते ज्योतिष्टोमयागाङ्गतेतरधात्वर्थानामित्येवं स्पष्टत्वान्न व्याख्यातम् ।

॥ समिदाद्यपूर्वभेदाधिकरणम् ॥ २ ॥

## एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात् ॥ १ ॥

ननु शब्दभेदरूपत्वेन सञ्ज्ञायाः शब्दान्तरसादृश्यादनन्तरविचार्यत्वासमाप्तेः कथमभ्याससर्वानन्तरं विचार्यतेत्याशङ्क्याह * शब्दान्तरेति * धात्वर्थविषयत्वेन सञ्ज्ञायास्तन्मात्रभेदकत्वाच्छब्दान्तरस्य तु धात्वर्थवाचित्वे ऽपि धात्वर्थस्य स्पष्टभेदत्वेनाभेदाशङ्कायोगाद्विशेषणशब्दानां च विशेष्यपरत्वेन धात्वर्थमात्रे धातोरपर्यवसानाद्धात्वर्थभेदद्वारा भावनाभेदकत्वाद्वैलक्षण्यमभ्यासस्य तु पुनर्विधानात्मकत्वाद्विधेश्च धात्वर्थानुरक्तभावनाविषयत्वेनोभयभेदकत्वाद्भावनाभेदकत्वांशेन साम्याद्धातुभेदे धात्वर्थभेदाद्भावनाभेदो धात्वर्थभेदे तर्हि धात्वर्थाभेदाद्भावनाया अप्यभेद इति च प्रत्युदाहरणरूपेण पूर्वपक्षसौकार्यादनन्तरसङ्गतिरित्याशयः। उदाहरणासंभवेनाभ्यासचिन्तामाक्षेप्तुं भाष्योक्तं तावदुदाहरणमुपन्यासपूर्वकमाक्षिपति * तत्रेति * ननु प्रमाणान्तरसम्भवे ऽप्यभ्यासो ऽपि प्रमाणं न वेति चिन्ता भविष्यतीत्याशङ्क्याह * षडपीति * एकस्मिन्विषये ऽनेकप्रमाणव्यापृतावेकप्रमाणव्युत्पादनेनैव कर्मभेदसिद्धेः प्रमाणान्तरस्य व्युत्पादने परस्याधिकस्यानन्यलभ्यस्य भागस्य भज्यमानस्य फलस्य लाभो नास्तीत्यर्थः । तर्हि उदाहरणान्तरं भवत्वित्याशङ्क्याह * न चेति * एतदेव प्रश्नपूर्वमुपपादयति * कुत इति * नन्वैन्द्रवायववादिनाम्नः संस्कार्यसोमपरत्वेनोक्तगतिद्वयाभावात्तद्युक्तमाख्यातमुदाहरणं भविष्यतीत्याशङ्क्याह * ऐन्द्रवायवमिति * देवतालक्षणगुणविधानार्थत्वादैन्द्रवायववादिनाम्नो वा ऽपि गुणाद्भेद इत्यर्थः । भिन्नादिनाम्नस्तर्हि निमित्तार्थत्वेनागुणावि-

र्थत्वात्तद्युक्तमाख्यातं भेदकं स्यादित्याशङ्क्याह * भिन्ने इति*
णान्तरेण भेदसिद्धेरभ्यासस्य चाभेदकत्वान्नोदाहरणतेत्यर्थः ।
द्वैशाख्यामसमाचास्यायां सप्तदशमारुतीस्त्रिवत्सरा उपाकरोति
श पृश्नीनुक्षणस्तान्पर्यग्निकृतानेतरा लभते प्रेतरात्सृजन्ति
ततः संवत्सरा नवनीतपृश्नारुणा आनयन्ति तांश्चैवोक्षण-
र्यग्निकृतानेतरा लभन्ते प्रेतरान्सृजन्ति ततः संवत्सरे राजी-
नयन्ति तांश्चैवोक्षणन्पर्यग्निकृतानेतरेतरा लभन्ते प्रेतरान्सृ-
ततः संवत्सरे पिशङ्गीरानयन्ति तांश्चैवोक्षणस्तान्पर्यग्निकृता-
लभन्ते प्रेतरां सृजन्ति ततः सम्वत्सरे सारङ्गीरानयन्ति
वोक्षणस्तान्पर्यग्निकृतानेतरा लभन्ते प्रेतरात्सृजन्तीति पञ्च-
याख्याहीनसम्बन्धिषु पशुषु विहितेषु पञ्चकृत्वः पर्यग्निक-
ग्रासमुदाहृतमुपन्यासपूर्वकं निरस्यति * ये त्विति * पञ्च
यास्तथेति चेदित्येकादशाधिकरणे प्राजापत्योत्सर्गवदुक्षणाम-
ः संस्कारनिषेध इति प्राप्ते संस्कारनिषेधे सति त्रींस्त्रीनु-
कैकस्मिन्नहन्यालभेरन्यं चोत्तम इति प्राप्ते कर्मण्यनेकगुणवि-
क्यभेदापत्तेर्नवमोपान्त्यव्युत्पादितारण्योत्सर्गवत्कर्मशेषनिषे-
दनैकवाक्यत्वाद्विति सूत्रेण सिद्धान्तयित्वा संस्काराणां च
रेति सूत्रान्तरेण प्रतिवर्षं संस्कारानुवाददर्शनात्कर्मैक्ये च
देन पुनः पुनः संस्कारानर्थक्यात्प्रतिवर्षं कर्मसमाप्तिरवसी-
त्का ननु वचनमेतद्भविष्यतीत्याशङ्क्य पर्यग्नि करोति प-
तांश्चोत्सर्जन्तीत्यनेकार्थविधौ वाक्यभेदापत्तेर्वत्सतरीषु च
प्तानुवादत्वात्तत्साहचर्येणोक्षस्वप्यनुवादतैव न्याय्येति भा-
यति । नन्वविधेयत्वात्पर्यग्निकरणस्य पुनर्विधानरूपा-
भावे ऽपि यागानां पुनर्विधानेन भेदस्यैकादशे वक्ष्यमाणत्वा-
णत्वं भविष्यतीत्याशङ्क्याह * न चात्रेति * द्रव्यदेवतान्व-
वाद्यागानां तद्भेदेन गुणादेव यागभेदावगतेर्नाभ्यासस्य
ऽस्तीत्याशयः । उदाहरणासम्भवमुपसंहरतीति भाष्योक्तमे-
तां समाधातुमाह * यथोदाहृतेष्वेव त्विति * भिन्ने ज्ञु-
द्रेरनुपादेयार्थस्याख्यातान्वितस्यापि नाम्नस्तत्पारतन्त्र्यभा-
प्रायेणेत्युक्तम् * श्लोकं व्याचष्टे * यानीति * ननु सर्व- ४८।११
चाख्यातं तेनाकाङ्क्षानिवर्त्यनादित्यनेन न्यायेनाश्रुताख्यात-
पि वाक्येषु तत्कल्पनेनाख्यातवत्त्वान्न क्व चित्संज्ञागुणा-
त्वं स्यादित्याशङ्कते * नन्विति * कल्पस्याख्यातस्य कल्प-
त्येण भेदाभेदयोरव्यापारात् ज्योतिरादौ चैतेन सहस्रद-

क्षिणेन यजेतेत्यादिगुणान्वयव्यापारेणैतेनर्द्धिकामो यजेतेत्यादि न्वयव्यापारेण च श्रुतस्याप्याख्यातस्य भेदाभेदयोरव्यापारात्त तस्यापि नाम्नोऽपि भेदकत्वमविरुद्धमिति परिहरति * तत्रे भेदव्यापाराभावमात्रं सम्भवशब्देनोक्तम्। ननु यच्छब्दाद्यनुपब ख्यातस्य विधेयान्तरोपादानात्प्राक् प्रकृतनिवेशनिश्चये ऽप्या तसामानाधिकरण्यं विना संज्ञात्वानिश्चयात्कथं तयाभेद इत ङ्क्य * तत इत्युक्तम् * यागसंज्ञात्वानिश्चये ऽप्यधिकारार्थाश न्वयेनानुष्ठेयक्रियासंज्ञात्वनिश्चयाद्भेदकत्वोपपत्तिरित्याशयः । न सत्यैन्द्रवायवं गृह्णात्युद्भिदा यजेतेत्यादिनाम्नामाख्यातपारतन्त्र द्भेदकत्वानुपपत्तेः सर्वाणि परस्परासङ्गतोत्पत्तिकगुणयोगाद्भि नाम्नैव चैवमादीनां भेद इति चायुक्तं स्यादित्याशङ्क्याह * यत्र ति * आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेनागत्या भेदकतेत्याशयः । एकसंज्ञावरुद्धे संज्ञिनि संज्ञान्तरस्याप्यसम्भ द् गुणशब्देन संज्ञाप्युपलक्षिता आनर्थक्यनिमित्तत्वप्रदर्शनार्थं दिशब्देनाक्रियमाणे यागे न शक्यः कर्त्तुमित्यनर्थकः स्यादित्यु ह्रतम्। नन्वेवं सत्यत्रापि गुणादेव भेदसिद्धेः किमभ्यासोपन्यासेने शङ्क्याह * तत्रेति * आख्यातस्य भेदकत्वसम्भवे तत्पारतन्त्र्य गुणस्य भेदकत्वं नास्तीत्याशयः। ननु भाष्ये पूर्वभेदाभेदस्य सन्देहा धानात्किमेकस्य कर्मणो वाचकमनेकस्येत्ययुक्तमुक्तमित्याशङ्क्य द्वे व्याचष्टे * किमिति * यजतिशब्दः किम् यागे ऽभ्यासपूर्वमन्यत्कर्म विधत्ते किं वा प्रतियजतिशब्दाभ्यासमन्येषां कर्मणां भेद इति तीयव्याख्यायां भाष्यार्थः। अपूर्वशब्दो ऽन्यवाची कर्मविशेषणमित्य शयः । पूर्वपक्षं प्रतिजानाति * किमिति * हेतुप्रश्नोत्तरत्वं शब्दान्तरइति भाष्यं पूर्वोक्तभेदहेत्वभावाभिधानार्थत्वेन व्याचष्टे कुत इति * इहेति भाष्यं कर्मप्रत्यभिज्ञाख्याभेदहेत्वन्तरार्थत्वेन व्या चष्टे * अपि चेति * शब्दस्य तत्त्वात्पूर्वमेव कर्मबुद्धौ निवेशितमि त्यर्थः। श्लोकं व्याचष्टे * यथैवेति * नन्विति भाष्येणानन्यपरविधि पुनः श्रुतविधेयकर्मभेदं विनानर्थक्यापत्तेर्भेदकत्वमाशङ्क्य सत्यमि भाष्येणार्थशब्दो ऽभिधेयवाची प्रयोजनवाची वेति विकल्प्याद्यपक्षे योजनाभावे ऽप्यभिधेयसद्भावानर्थक्यमित्युक्तं तद्व्याचष्टे * यश्चेति * वार्त्तिके निष्प्रयोजनत्ववाच्यनर्थशब्दः । ननु वेदस्य प्रयोज नवदर्थाभिधायित्वानियमस्यार्थवादाधिकरणे स्थितत्वान्निष्प्रयोजन त्वापादकः कर्मैक्यपक्षो न युज्येतेत्याशङ्क्याह * न चेति * स्व रूपपरत्वे ऽर्थवादानां प्रत्यक्षादिविरोधेनाप्रामाण्यापत्तेः स्तुत्यर्थत

: श्रुतेश्च पूर्वकर्मविधायित्वेऽप्यनपेक्षत्वेनाप्रामाण्यानापत्तेः
जनत्वमात्रेण न भेदकत्वं कल्प्यमित्याशयः। न चेति भाष्येण
जनतापि नास्तीत्युक्तं तत्र भाष्योक्तस्य देवताविध्यर्थत्वस्य
न्त्रभेदापत्तेरयुक्तत्वेनापरितोषात्स्वयं तावत्प्रयोजनत्रयमाह
चेति * मन्त्रवत्कर्मकालप्रयोगैक्यं प्रयोजनमित्याशयः।
श्रणात्प्रयोगार्हरूपाभावेन प्रयोज्यत्वानुपपत्तेरपरितोषात्प्रयो-
माह * अथ वेति * प्रतिप्रधानप्रयोगमावृत्तिराभीक्ष्ण्यं
कृत्वातिशयः। नन्वाभीक्ष्ण्ये द्वे भवतइति स्मृतेः पञ्चकृत्वो
न युक्त इत्याशङ्क्याह * अस्ति हीति * सकृत्प्रयुक्तात्प्र-
यर्थे तात्पर्यातिशयद्योतनार्थत्वादभ्यासस्यातिशयातिरेका-
स्यातिरेक इत्यर्थः। पञ्चकृत्वोऽप्यभ्यासो दृश्यतइत्याह
* इन्द्रस्य त्वष्टृपुत्रवधात्तेजो धर्ममाविशद् बलं वायुं रूपम-
र्द्रमात्मन्यतिष्ठन्ततः पाण्डुपत्न्यां कुन्त्यां धर्मेण तेजोनि-
धिष्ठिरोऽभवद्वायुनिक्षिप्तं बलं भीमः इन्द्रनिक्षिप्तं देहार्द्धम-
देवश्यां माद्र्यां निक्षिप्तं रूपं नकुलसहदेवाविति पञ्चापीन्द्रा-
मित्यादिन्द्रा एवेति पञ्चेन्द्रोपाख्याने कुमार्यैव वृद्धतां प्राप्त-
मे देहीति पञ्चकृत्वो वरमीश्वरः प्रार्थित इति श्रूयतइत्य-
न्वेवं सति पतिपञ्चकवद्यागपञ्चकमपि स्यादित्याशङ्क्याह
ते * अर्थान्तरविवक्षया प्रयुक्तस्य शब्दस्यार्थान्तरकल्प-
व्याख्यानं छलं निद्रिते ऽन्यमनस्के वा प्रबोध्यमाने बुध्यस्व
यावत्प्रबोधं वृद्धकुमार्याश्च यावद्वरलाभमभ्याससम्भव
यत्वाद्भेदे तादृगाशयानुपपत्तेः। प्रतिप्रधानानुष्ठानमावृ-
थाद्देव सिद्धेरनुष्ठानादरस्य च विधित एव सिद्धेरपरितो-
नां विकल्पेन विधातृतेति तृतीयं प्रयोजनमाह * अथ
अव्यत्तभेदाभावाद्व्यवस्थिताविकल्पानुपपत्तेरेकस्मिन्नध्येत-
पि सर्वाध्ययनानर्थक्यापत्तेरपरितोषाद्भाष्योक्तं प्रयोजनम-
देनानुसन्धत्ते * अथ वेति * ननु समिदादिशब्दानां
यर्थत्वनिरासेन नामधेयत्वस्य वक्ष्यमाणत्वाद्देवताविधा-
युक्तेत्याशङ्क्याह * कर्मेति * विध्यपेक्षितविधेयविशेष-
त्वान्नामधेयस्य प्राक्सिद्धविशेषापेक्षिण्यनुवादेऽनुपपत्ते-
णार्थत्वापत्तिरित्यर्थः। वैश्वदेवादिनामधेयस्य गुणाद्युपध-
नार्थवत्त्वादनुवादेऽप्युपपत्तिरित्याशयः। अत्यभिज्ञायाः क-
ण्याभावेऽपि गुणविधावुपपद्याक्रान्तविधिशक्तित्वेन क-
चगतेर्गुणविधित्वस्याप्यभ्युपेत्यवादत्वं सूचयितुमाह * त-

स्मादपीति * वस्तुतस्तु प्रत्यभिज्ञैवाभेदे हेतुरित्याह*यत्रापि चेति*
न देशान्तरस्थशब्दार्थप्रत्यभिज्ञानोक्तिरतिशयार्था विधेयभेदज्ञानं च
विना विध्यभ्यासाज्ञानाद्विध्यभ्यासाद्विधेयरूपभेदाभ्युपगमे ऽन्य-
न्योन्याश्रयापत्तेः पुनरुच्चारणरूपाद्वाचकाभ्यासाद्वाच्यभेदो ऽभ्यु-
पगन्तव्यस्तत्र जातेर्भेदायोगाद्व्यक्तेर्वाच्यत्वापत्तेस्तस्याश्चानित्यत्वा-
१ च्छब्दार्थसम्बन्धानित्यत्वाद्वेदाप्रामाण्यापात्तिरित्याशयेनाह * यदि
चेति * यदा त्वन्ये त्वभेदमाचार्याः कर्मणामेव मन्यन्तइत्येतन्म-
ताश्रयणेनैकैव यागव्यक्तिर्गकारादिव्यक्तिवन्नित्येष्यते तदा तद्व्यति-
रिक्तजात्यभावात्प्रत्यभिज्ञानायास्तद्विषयत्वाशङ्कानुपपत्तेर्व्यक्त्यैक्य-
प्रामाण्यं स्पष्टमेवेत्याशयेनाह *किं चेति* संख्यानिबन्धनस्तु भेदो
द्रव्यादिकारकात्मकव्यञ्जकभेदोपाधिको वर्णस्येव द्रुतादिभेदोपाधि-
क इत्याशयः। अस्मिंश्च पक्षे ऽभ्यासार्थत्वेनापि पुनःश्रुत्युपपत्तेर्न
कर्मप्रतीकतास्तीत्याह * यद्यपि चेति * स एव तर्ह्यस्त्वित्याश-
ङ्क्याह * न चेति * ज्योतिष्टोमे ग्रहणान्वयित्वेन श्रुतानां देवतानां
प्रकरणेन ग्रहणद्वारा योगान्वयात्प्रकरणस्य च युगपत्सर्वाङ्गग्राहि
त्वात्समुच्चयावगतेः प्रत्येकं च ग्रहणान्वयासंहतानां यागान्वया-
योगाभ्यासो युक्तो न त्वत्र देवतासमुच्चयहेतुरस्तीत्याशयः। पूर्वपक्ष-
प्रयोजनं चानेन समर्थितं तस्मादित्युपसंहारभाष्यस्थमपूर्वशब्दम-
यागेभ्यो ऽन्यत्ववाचितया व्याख्यातुमाह*तस्मादिति * भाष्योक्तां
सूत्रव्याख्यां स्पष्टयति * एवमिति * विधेरप्रवृत्तप्रवर्त्तनस्वभाव-
त्वाद्विहितविधावप्रामाण्यापत्तेर्विधिपुनःश्रवणस्य भेदकत्वावश्य-
म्भावात्कर्मैक्यवादिना कर्मानुवादाभ्युपगमेन विधिपुनः श्रवणाभावो
वाच्य इति मत्वा तदेव प्रश्नपूर्वमुपपादयति * कथमिति * नन्व-
न्याक्षिप्तशक्तित्वाभावे ऽपि विपरिवृत्तेरनुवादो ऽवसीयतइत्याशङ्क्या-
ह * यदि हीति * ननु व्रीहिभिर्यजेतेत्यादौ विपरिवर्त्तमानस्यैवानु-
वादाभ्युपगमादवश्यमनुवादे विपरिवृत्तेः किं चित्कारो वाच्यसू-
त्रानुवादत्वं चेत्तथा न क्रियते किं तर्हि क्रियतइति पृष्टवोत्तरमाह
* किं तर्हीति * समान्यतस्त्वनुवादत्वप्रसिद्धिरन्याक्षिप्तविधिश-
क्तित्वादेवेत्याह * तत्सामान्येति * एतदेव व्याचष्टे * यदा हीति*
नन्वनेकविध्यशक्तौ न क्व चिद्विशिष्टविधिः स्यादित्याशङ्क्याह * तां
चेति * विपरिवृत्त्यभावे विशिष्टविधिरगत्या स्यादित्याशयः । ननु
य एवं विद्वान्पौर्णमासीं यजतइत्यादौ रूपालाभादिनाप्युत्तारणदर्श-
नात्किमन्याक्षिप्तत्वेनेत्याशङ्क्याह * धात्वर्थेति * चतुर्जुह्वां गृह्णाति
प्रयाजेभ्यस्तत् गृह्णाति अष्टावुपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तत्

गातीति वाक्यान्तराभ्यां जौहावोपाभृताज्यद्रव्यलाभान्मान्भ-
कदेवतालाभाच्चाद्वान्यो नोच्चारणहेतुरस्तीत्याशयः । ननु सा-
रतो ऽनुवादत्वाप्रसिद्धावपि प्रकृतस्यानुवाद इत्यनुवादविशेषत्व-
तर्हि विपरिवृत्तेरस्त्वित्याशङ्क्याह * सर्वत्रैवेति * शब्दशक्त्या-
ास्य विधित्वस्यासम्भवावधारणं विना नानुवादकता युक्तेत्याश-
ातो ऽनुवादाकाङ्क्षा प्राप्तिश्चानुवादत्वे हेतुर्न प्राप्तिमात्रमित्युप-
ाति * तस्मादिति * अनुवादत्वावधारणे ऽनुवादाकाङ्क्षायां ४५४
ाभिधानस्य प्रकृतोपयोगमाह *तत्रेति* पूर्वं तेनैव शब्देनेत्यनेन
भिज्ञानात्कर्मैक्यावगतेर्न तद्विरुद्धो भेदः पुनर्विधानात् सि-
ाति यदुक्तं तद् दूषयितुमनुभाषते * यस्त्विति * दूषयति*
गेति * एतदेव विवृणोति * तथा हीति * श्लोकं व्याचष्टे *
ायक्तौ हीति * ननु दध्यादिवाक्ये ऽपि तर्हि कर्मान्तरत्वं स्या-
ाशङ्क्याह * यत्र पुनरिति * प्रत्यभिज्ञानस्यापि जातिविषयत्वे-
ात्तेर्नात्यन्तबाध इत्याह * तस्मादिति * सामान्येनैक्ये चेद्-
दः कस्य तर्ह्यत्र भेदश्चिन्त्यत इत्यपेक्षायामाह * तथा हीति *
दीनां यागत्वसामान्यैक्ये ऽपि पशुत्वाद्यवान्तरसामान्यात्मक-
ारूपेणान्योन्यं पशूनां चाग्नीषोमीयादीनां सोमानां ज्योतिष्टोमा-
म इष्टीनां च दर्शपूर्णमासाद्यानानां विधेयात्मकव्यक्तिरूपेणान्यो-
ाद्श्चिन्त्यत इत्यर्थः । सर्वत्र शब्देन संख्यादिसाधारणतास्याभि-
योक्ता । ननु विधिश्रुत्या कर्मान्तरज्ञानवद्यजिश्रुत्यैवैक्यज्ञानाद्य
ाले विशेष इत्याशङ्कते * ननु चेति * यागत्वमात्रज्ञानं तथा
ज्ञानमिति परिहरति * नेतदिति * श्लोकं व्याचष्टे * न
* ननु शब्दार्थरूपस्येह भेदाभेदविचाराद्व्यक्तेश्चाशब्दार्थ-
ब्दार्थभूतस्य च सामान्यस्यैक्याद्यजिश्रुत्यैव कर्मैक्यज्ञानसि-
त्याशङ्किता स्वाशयं विवृणोति * नन्विति * शब्दावाच्यत्वेन- ४५५
ामवाच्यत्वाच्छब्दार्थतायामेवैक्यापत्तेर्विपरीतसाधनो हेतुरि-
येन परिहरति * येनेति * नन्ववाच्यत्वे सत्यैक्यवद्भेद-
ानवगमात्कथं विपरीतसाधनतेत्याशङ्कां प्रश्नपूर्वं निरस्यति
थमिति * विधेयरूपस्येह भेदाभेदविचाराज्ज्ञातेश्चाननुष्ठेयत्वे-
ठेयत्वात्तल्लक्षितानां व्यक्तीनामेव विधेयत्वावगतेर्विधेयसमर्प-
यजेस्तात्पर्यवृत्त्या व्यक्तिविषयत्वेनैक्यज्ञाने व्यापाराभावाद्विहि-
ानायोगेन विधिपुनःश्रुत्या सन्नधिकृतैक्यज्ञानबाधाद्भेदज्ञानसि-
त्याशयः । श्लोकं व्याचष्टे * यदिति * गत्वादिवन्न चैतेष्वि-
। व्यक्त्याकृतिभेदाभावमुक्तं दूषणायानुभाषते * यस्त्विति *

दूषयति * सत्यमिति * कर्मव्यक्तीनां स्वरूपेण क्षणिकत्वाद्व्य-
क्त्याकृतिभेदादिप्रमेयस्य विधेयरूपस्य विधिनित्यत्वेन नित्यत्वाद्वि-
धेयरूपव्यक्त्याकृतिभेदो ऽपन्होतव्यः स च शब्दान्तरादिभेदप्रमा
विना नास्तीत्येतावता न तत्सद्भावे ऽप्यपह्नोतुं शक्य इत्याशयेन श्लो-
व्याचष्टे * यथैवेति * व्रीहियवद्रव्यभेदे ऽप्याग्नेयादेरभ्युदया-
भिन्नदेवताभेदे ऽपि चाभेदसूचनार्थं यजमानादीत्यादिशब्देन द्रव्य-
३।२ देवतोपादानम्। एतदेव व्यवहारेण द्रढयति * तथा हीति * याग-
होमादिकर्मव्यक्तिवद्यागव्यक्तीनां स्वरूपवैलक्षण्यानुपलब्धेर्भेदानुप-
पत्तिशङ्कानिरासार्थत्वेन प्राक् तस्मादिति व्याचष्टे * न चेति
यन्मादमिति श्लोकार्थमुपसंहरति * अतो ऽत्रेति * अतः शब्द-
राशिष्ठप्रामाण्याविशेषमुपपादयति * न हीति * इष्ट्यादिषु सम-
स्तेषु प्रत्येकं वा भेदप्रत्ययस्यौपाधिकत्वाद् बाधाभावाच्च न प्र-
माण्ये विशेष इत्यर्थः । देशादिभेदे ऽपि विधेयरूपेण व्यक्त्यभेदो-
पसंहारमेवकारसूचितं विवृणोति * तेनेति * येन कारणेन श-
ब्दान्तरादिषट्कावधिरेव भेदस्तेन व्यक्तिभेदे शब्दान्तरादिप्रमाणा-
भावाच्छब्दव्यक्तिवद्यागव्यक्तिषु नित्याभिव्यञ्जकभेदाद्भेदप्रतीतिरि-
त्याशयः। ननु कर्मणः पूर्वापरीभूतानिष्पन्नरूपत्वान्नित्यत्वं न सम्भ-
वतीत्याशङ्क्य कूटस्थनित्यत्वाभावे ऽपि नित्यविधिविषयत्वरूपेण
प्रवाहनित्यत्वसूचनार्थम् * तासु विधेयरूपास्वित्युक्तम् * एकवि-
धिविषयभूतव्यक्तिवद्भिन्नविधिविषयभूतेष्विष्ट्यादिषु भेदप्रत्ययस्या-
भिव्यञ्जकभेदनिबन्धनत्वनिरासार्थेवकारः । ननु सङ्कल्पात्मक-
यागस्वरूपस्य मानसप्रत्यक्षगम्यत्वाद्विधेयरूपस्य च विधिगम्यत्वा-
त्कथं देशाद्यभिव्यङ्ग्यतेत्याशङ्क्याह * तेऽयश्चेति * विधेयरूपा-
श्रयस्य यागस्वरूपस्य देशादिभिर्निष्पादनान्निष्पन्ने चाश्रयरूपे त-
दाश्रयविधेयरूपप्रतीतेर्देशादिना विधेयरूपाभिव्यक्तिरित्याशयः
द्रव्यदेवतामात्राद्यागसिद्धेर्न देशादिभ्यो यागसिद्धिरित्याशङ्क्य
* फलेत्युक्तम् * देशादीतिकर्तव्यतारहिताद्यागात्फलासिद्धेर्विधे-
यरूपोपलक्षितफलसाधनत्वरूपेण यागस्य देशादिभ्यः सिद्धिरित्या-
शयः । यद्वा त्वथ प्रत्यक्षे नित्ये चेति शब्दाधिकरणभाष्यानुसारा-
द् बुद्धिकर्मणोरपि वर्णवत् कूटस्थनित्यतेष्यते तदा यागनित्यत्वे
पूर्वकल्पनानुपपत्त्या शङ्कानिरासार्थत्वेनायं ग्रन्थो ऽनुष्ठानं नित्ययागा-
भिव्यञ्जकमाश्रित्य शब्दाभिव्यञ्जकानुच्चारणाच्छब्दफलार्थप्रतीति-
सिद्धिवत्तेभ्यो नित्ययागाभिव्यञ्जकेभ्यो ऽनुष्ठानेभ्यो यागफलस्य
सिद्धिस्तेषां क्षणिकत्वादुक्ता ऽपूर्वकल्पनेत्येवं योज्यः । नन्वनित्याना-

पि व्यक्तीनां नित्यसामान्योपलक्षितानां नित्यविधिविषयत्वोपप-
व्यक्तिनित्यत्वाभ्युपगमो वृथेत्याशङ्क्याह * यागत्वमेव चेति *
ध्यन्तरविषयव्यावृत्तावान्तरसामान्यं विनानन्यविहितविधिवि-
ोपलक्षणायोगाद्यागत्वातिरिक्तस्य चावान्तरसामान्यस्याभावा-
क्तीनामेव प्रवाहरूपेण कूटस्थत्वेन वा नित्यताभ्युपगन्तव्येत्याश-
। ननु भिन्नासु ज्योतिष्टोमादिव्यक्तिषु अभिन्नस्यैकाहादिशब्द-
तज्जन्यस्य च प्रत्ययस्य यागत्वातिरिक्तावान्तरसामान्याभावे
पपत्तेस्तान्येष्टव्यानीत्याशङ्कते * नन्विति * एकोपाधियोगादु-
त्तेः हरिहरादि * नेति * एकाहशब्दस्योपाधिमाह * एकेनेति *
ीनशब्दस्याह * द्व्यादिभिरिति * यजिचोदिताहर्गणायोग-
पाधित्वं प्रागित्यनेन सूचितम्। ननु द्वादशाहस्यापि यजिचोदि-
र्गणयोगेनाहीनत्वात्तस्मात्प्रागिति कस्मादुक्तमित्याशङ्क्याभ्युपैति
दितत्वसत्रलक्षणस्यापि सद्भावेन तस्य केवलाहीनत्वासम्भवादि-
ह * स त्विति * आसीरन्नित्यसिचोदितगतस्योपेयुरित्युपे-
ोदितगतस्य वा सततानुष्ठानस्य सत्रशब्दोपाधित्वमाह * तद्-
कमेवेति * द्वादशाहस्याप्यवधित्वेन सत्रतोक्ता सहस्रसंव-
तदायुषासम्भवान्मनुष्येष्वित्यत्र षष्ठाधिकरणे सहस्रसं-
सरशब्दस्याहः सहस्रवाचितया वक्ष्यमाणत्वात्षड्त्रिंशत्संवत्स-
स्तदवधिककालत्वेऽपि पूर्वपक्षे स्थित्वा सहस्रसम्वत्सरपर्यन्ता-
ता सर्वसत्रान्ते विधानाद्वा यागगतपशुसोमातिरिक्तहविष्कत्व-
ष्टिशब्दस्य पशुहविष्कत्वं पशुशब्दस्य सोमहविष्कत्वं होमशब्द-
पाधिमाह * हविर्विशेषेति * वस्तुवृत्तिकथनार्थं चेदमेकाह-
ध्वान्तरजात्यभावाभिधानं तत्सद्भावेऽपि त्वनेकज्योतिष्टोम-
जिदादिविधेयसाधारण्येनैकाहत्वादेरसाधारणविधेयोपलक्षण-
ोगाद्व्यक्तिनित्यताभ्युपगन्तव्येत्याह * अथापीति * स्वमतेन
न्तरादिषट्कस्य विधेयरूपभेदे व्यापारमभिप्रेत्य भिन्नानामपि
क्तीनां यजिवाच्यैकयागत्वजात्योपलक्षितानामेकविधिविषय-
पत्तेर्विधिविशेषविषयत्वाच्च विधेयान्तरेभ्यो व्यावृत्त्युपपत्तेर्या-
ातिरिक्तावान्तरजात्यभावोऽभिहितः स्वरूपभेद एव तु शब्दा-
ादिषट्कव्यापाराभ्युपगमे विधेयान्तरव्यावर्तकप्रातिविध्यसा-
णावान्तरज्योतिष्टोमत्वादिजात्या विना विधेयान्तरेभ्यो व्यावृत्त्य-
त्तेर्ज्योतिष्टोमादिव्यक्त्याकृतिभेदेऽप्यष्टोषाढ़कारादिवद्व्यक्त्या-
भेदो नास्तीति यदुक्तं तदयुक्तमित्याशयेन * आहैवमिति *
हत्वादिज्योतिष्टोमत्वादीनि प्रतिविध्यसाधारणान्यवान्तरसामा-

न्यानि यदि कल्पन्ते ततश्च स एवायं ज्योतिष्टोम इत्यादिप्रत्यभिज्ञाया: सामान्यविषयत्वोपपत्तेर्देशादिभेदाद्व्यक्तयो यदि भिन्ना भवन्ति तथा प्यदोष इत्यर्थः ॥ स्वरूपभेदाभेदचिन्तापक्षे भिन्नानां व्यक्तीनामेकविधिविषयत्वरूपेणैक्यस्यानादरसूचनार्थो ऽत्यन्तशब्दः पराभिमतत्रैलोक्यवर्त्तियागव्यक्त्यैक्याभ्युपगमे ऽप्यनुष्ठानभेदविषयत्वेन भेदप्रमाणानां व्यापाराद् प्रौढ्या दर्शयति * तथेति * कर्मभेदं कुर्यादिति भाष्यमस्मिन्पक्षे न युज्येतेत्याशयेनाशङ्कते * नन्विति * भाष्यस्यायुक्तत्वे ऽपि भेदचिन्ताप्रयोजनं तावत्सिद्ध्यतीति परिहरति * सर्वथा तावदिति * भाष्यमप्युपपादयितुमाह * तथापि त्विति * ग्रहयागेषु ज्योतिष्टोमवाक्येन ज्योतिष्टोमरूपतयानुष्ठानविधानात् ज्योतिष्टोमरूपतायाश्च सर्वाभ्यासेष्वैक्यान्नानुष्ठानभेदचोदनेति विशेषनिमित्तमित्याशयः विशेषनिमित्तान्तरमाह * अभ्यासेष्विति * ज्योतिष्टोमरूपावयव्युत्पादनात्तदपेक्षया ग्रहयागाभ्यासेष्ववयवबुद्धिर्न प्रयाजाभ्यासेष्वित्यतो ऽपि निमित्ताद्विशेषः । वैषम्यमित्यपिशब्दाध्याहारेण योज्यम् । नन्वेवमपि कर्मभेदशब्देनैवंविधवैष-
४ म्यसूचनस्य किं प्रयोजनमित्याशङ्क्याह *एतत्ज्ञानस्य चेति* प्रयाजाभ्यासवत् ग्रहाभ्यासेष्वप्यनुष्ठानभेदचोदनायां धर्मग्रहणशक्तापूर्वभेदात्पशुसोमाधिकरणपूर्वपक्षवत्सिद्धान्ते ऽपि सोमविकारेष्वेकस्यैव ग्रहणस्य धर्मैः सकृदनुष्ठानेन च भवितव्यमिति प्रकृतितुल्यानुष्ठानं पशुसोमाधिकरणसिद्धान्तप्रयोजनं न सेत्स्यतीत्याशयः ॥ प्रौढेरेव सबीजत्वार्थं भाष्यसम्मतिमाह * तस्मादिति * अस्यैव स्वमतत्वशङ्कानिवृत्त्यर्थं वक्ष्यमाणमेव भाष्यं स्वमतेनान्यथा व्याचष्टे * अथ चेति * बहुकृत्वो ऽपीति पूर्वपक्षभाष्योक्तार्थानुभाषणार्थं नन्विति भाष्यं विहितविधानानर्थक्यापत्तेर्विधिपुनःश्रुतेः कर्मान्तरविधिशक्त्यवगमादयुक्तमाशङ्क्य व्याचष्टे * नन्विति * उच्यतइत्यादिभाष्यं समिदादिशब्दानां देवताविधित्वस्य नवमे निराकरिष्यमाणत्वादयुक्तमाशङ्क्याभ्युपेत्यवादत्वेन व्याचष्टे * तत्रेति * कीदृशो ऽभ्युपेत्यवाद इत्यपेक्षायां पुनःश्रुतेर्देवताविधानाक्षिप्तशक्तित्वात्कर्मभेदकत्वाभावे ऽपि गुणाद्भेदो भविष्यतीत्येवं रूपं वक्तुं समिद्वाक्येन शुद्धे यागे विहिते तनूनपादादिवाक्ये देवताविध्युपपत्तेर्न गुणाद्भेद इत्याशङ्कानिरासार्थं समिधो यजतीत्यादिभाष्यं व्याचष्टे * यत्तावदिति * भाष्यस्थस्य देवताशब्दस्योपलक्षणार्थत्वज्ञापनार्थो द्रव्यशब्दः गुणस्य भेदकत्वाय पूर्वकर्मसंयोगासम्भवाभिधानार्थं तत्रेति भाष्यं व्याचष्टे * उभयमपि चेति * अभ्युपेत्यवादस्वरूपार्थं स

इति भाष्यं व्याचष्टे * अवश्यं चेति * समिद्वाक्यन्यायमुक्त-
ाक्येष्वतिदिशति * एवमिति * अस्याप्यभ्युपेत्यवादत्वोपपा-
ो गुणविधित्वं द्रव्यविधित्वेन देवताविधित्वेन चेत्येवं विक-
ं पक्षं तावन्निरस्यति * गुणेति * द्वितीयान्तेन शब्देन द्रव्य-
निरस्त इत्यर्थः । गुणविधित्वमपि कीदृगित्यध्याहृत्य योज्यं
च प्रतिपत्तिकर्मणि प्रस्तरप्रहरणादौ प्रक्षिप्यमाणांशेन कर्मभू-
ान्वयसम्भवे ऽपि यागे कथंचिद् द्रव्यस्य प्राधान्यलक्षणकर्म-
गान्न कर्मभूतद्रव्यान्वयः सम्भवतीत्याह * विशेषणा चेति *
ऽपि चेदित्यत्राधिकरणे श्रुत्याविनियुक्तानां मन्त्राणां स्वा-
वायकल्पकत्वासम्भवान्मान्त्रवर्णिकदेवताप्राप्त्यभावेन तत्प्रख्य-
भावान्नामधेयत्वानुपपत्तेर्विष्णुं यजतीतिवत्समिदादिशब्दानां
ान्तानां देवानां विधित्वं पूर्वपक्षयित्वा यजेः पूजावाचित्वा-
देवतायाः पूज्यमानकर्मत्वायोगात्तदुद्देशांशस्य वा समाप्तित्वे-
ार्थत्वात्तत्कर्मणो ऽभिभूतत्वेन विवक्षानुपपत्तेरुद्देश्यत्वे ऽपि
प्सितत्वात्प्राधान्यलक्षणकर्मत्वानुपपत्तेः श्रुत्यविनियुक्तानामपि
णामुपांशुयाजवद्यागाकाङ्क्षितदेवताकल्पकत्वोपपत्तेर्देवतावि-
त्य निराकरिष्यमाणत्वाद्देवताविधित्वेनापि गुणविधित्वं न स-
ीति द्वितीयं पक्षं निरस्यति * नचायमिति * तस्मादिति
न्तोपसंहारभाष्यं फलतो यागभेदोपसंहारार्थत्वेन व्याचष्टे *
दिति * अनेन च यस्मात्समिदादिवाक्यैः प्रधानयागानुवादे ४५८।
पुनर्यागस्याक्रियमाणत्वाद्देवतान्तरान्वयकरणाशक्तेर्विध्यानर्थ-
त्तिस्तस्माद्यागविधित्वमभ्युपगम्य विहितविध्ययोगात् भिन्ना
ेदेन कार्या इत्येवं भाष्यं व्याख्यातम् । ननु यागभेदे ऽपि प्रयाज-
ययैककार्यत्वावगतेर्विकल्पस्य न्याय्यत्वान्नाभ्यासो युक्त इत्या-
नेरासार्थं प्रत्यभ्यासं चेति भाष्यं तद्विवरणार्थं च न च यत्स-
ान्वयेन क्रतोरदृष्टमुपकाररूपं क्रियते तदेव तनूनपाद्यागा-
तयोर्यागयोर्भिन्नत्वेन तदनुनिष्पाद्यदृष्टभेदावगतेः समाख्या-
प्रधानप्राग्भावमात्रनिमित्तत्वेन कार्यभेदे ऽप्यविरोधादित्य-
नाय यागैक्ये ऽप्यनेकदेवतान्वयसम्पादनायानुष्ठानाभ्यासोप-
पूर्वपक्षप्रयोजनाभावाशङ्कानिरासार्थं च प्रयोजनभाष्यं स्पष्ट-
व्याख्यातम् ।

॥ आघाराद्याग्नेयादीनामङ्गाङ्गिभावाधिकरणम् ॥ ३ ॥

## प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ २ ॥

समप्राधान्याङ्गाङ्गिभावचिन्तायां लक्षणासङ्गतिं पौन
च्चाशङ्कते * समस्तानीति * एवं समामनन्तीति प्रकारवाचिनै
त्वेनानूयाजादिसूचनात् * समस्तानित्युक्तम् * आघारसमि
जुषोहोमत्वे ऽपि यागेष्वेव समप्राधान्यशङ्कोपपत्तेर्भूम्ना याग
अवघातादौ गुणप्रधानकर्मत्वचिन्तायां लक्षणार्थत्वाभावे ऽपि
प्रासङ्गिकसङ्गतिस्तथापीह नास्तीति केन * नामे त्युक्तम् * ।
षतश्चेयं चतुर्थोपान्त्ये करिष्यमाणत्वात्पुनरुक्तेतीयमित्यनेनोक्तम्।
ङ्गतिं तावद्विवृणोति * अभ्यासेति * लक्षणार्थत्वशङ्कामुपन्य
पूर्वं दूषयति * कैश्चिदिति * पौनरुक्त्यं विवृणोति * महतो
श्लोकार्थमुपसंहरति * तस्मादिति * चिन्ताद्वयं चैकस्मिन्न
रणे न युक्तमित्याह * य एवामिति * शब्दान्तरत्वादित्यपि
५९।३ ष्यमयुक्तमित्याह * अपि चेति * श्लोकं व्याचष्टे * शब्दान्तर
दिति * ननु प्रयोगचोदनाभावादर्थैकत्वमविभागादितिवत्
चिन्ताद्वयं भविष्यतीत्याशङ्क्य * आह न चेति * समप्राधा
ङ्गाङ्गिभावयोः पक्षयोर्हेतू न दृश्येते इत्याशयः । विध्यनुवादचिन्ते
धिकरणार्थो नाद्येति समाधत्ते * तस्मादिति * द्वयोरेवोदाहर
वाक्यान्तरानर्थक्यमाशङ्क्याह * तत्रेतरेषामिति * कस्मात्स
प्राधान्याङ्गाङ्गिभावो नाधिकरणपक्षावित्याशङ्क्य पौनरुक्त्या सङ्ग
हेत्वभावात्मकयुक्तित्रयपरामर्शार्थोऽकशब्दः । नन्वेवमपि प्रकृतानां
र्मणामनुवदितारावपूर्वयोर्वा कर्मणोर्विधातारौ वेति प्रकृतापूर्व
द्वाभ्यां भेदाभेदयोरपि चिन्त्यत्वप्रतीतेश्चिन्ताद्वयापत्तिरित्याशङ्क्य
* तद्धेति * विध्यनुवादसिद्धौ पूर्वन्यायादेव भेदाभेदयोः सि
पृथगचिन्त्यत्वात्त्रिकस्य त्रिकस्यैकपक्षतेत्यर्थः । किमर्थं तर्हि त्र
पन्यास इत्याशङ्क्य * उत्तरफलत्वेनेत्युक्तम् * विधातृत्वे ऽपि
र्मभेदाभावे पुनर्विधानार्थवत्त्वाय फलवाक्यस्याद्विवचनात्तद्द
र्णमासशब्दापेक्षितद्वित्वसम्पादनार्थमाग्नेयादिसमुदायद्वयविधि
त्वापत्तेः सिद्धान्तवत्तेषामेव फलान्वयेनेतरेषामङ्गत्वात्समप्राधान्
सिद्धेरनुवादत्वे ऽपि चाग्नेयाद्यतिरिक्तकर्मानुवादित्वात्तेभ्यो ऽन्य
सत्याग्नेयादिसमुदायद्वयाक्लृप्तेः फलवाक्यस्थदर्शपूर्णमासशब्द
ग्नेयादिषट्कविषयत्वाप्रसिद्धेर्यजिविशेषकत्वायोगात्समप्राधान्या
स्याङ्गाङ्गिभावासिद्धेरुत्तरोत्तरस्य फलत्वज्ञापनार्थं त्रयोपन्यास इत्
शयः । नन्वेवमप्यभ्यासलक्षणभेदातिप्रसङ्गापवादार्थत्वेनाधि
रणस्य सङ्गतिसिद्ध्यर्थं भेदाभेदाभ्यां च विना विध्यनुवादत्वमा
त्समप्राधान्याङ्गाङ्गिभावासिद्धेः प्रयोजनाभावेनाधिकरणमारभ्य

सङ्गाद्भेदाभेदावेवोपन्यसनीयावित्याशङ्क्याह * त्रितयस्य चेति * ६
दाभेदयोः प्राधान्येन विचार्यत्वे ऽप्युपायभूतविध्यनुवादद्वारा फ-
भूतसमप्राधान्याङ्गाङ्गिभावद्वारा चेष्टभेदाभेदसिद्धिं मत्वा न श्रु-
ोपन्यास इत्याशयः । पश्चात्तर्हि प्रकृतापूर्वशब्दाभ्यां तयोः श्रुत्यो-
यासः किमर्थमित्याशङ्क्याह*तत्र चेति * नन्वादौ भेदाभेदावुप-
स्य तत्सिद्ध्यर्थत्वेन विध्यनुवादचिन्ताकस्मान्न कृतेत्याशङ्कते
किमर्थं पुनरिति * फलद्वारोपन्यासो भाष्यकृत्प्रक्रियेति केषां
त्परिहारमाह * एषा हीति * स्वमतेन लिङ्गदर्शनानुसारेणैवं
तमिति परिहरति * अथ वेति*नन्वेवमपि तत्रेति सन्देहभाष्या-
यवो ऽनर्थक इत्याशङ्क्याह * तत्रेति * आग्नेयादिवाक्यानां क-
वेधायकत्वे सत्येव विद्वद्वाक्ययोस्तद्व्यतिरिक्तकर्मविधायित्वादे-
पूर्वपक्ष इत्युक्तशब्दान्तरत्वादिति भाष्यान्नेदृक् पूर्वपक्षः प्रतीयत
ाशङ्क्य * समप्राधान्यद्वारेणेत्युक्तम् * द्वितीयपूर्वपक्षाभिप्रा-
त्रेति भाष्यावयव इत्याशयः । अनेन च विद्वत्संयुक्तावप्याख्या-
त्ययौ विधातारावित्यपिशब्दाध्याहारेणाद्यपूर्वपक्षवचनव्यक्तौ
वेवेत्येवशब्दाध्याहारेण चावृत्त्या द्वितीयपूर्वपक्षवचनव्यक्तावथ
त भाष्यावयवं व्याख्याय विद्वद्वाक्याभ्यामेव कर्मविधावाग्नेया-
वाक्यानर्थक्याशङ्कानिरासार्थत्वेन तत्रेति भाष्यावयवो व्याख्यातो
ाति * किं तावदिति * पूर्वपक्षभाष्यं व्याचष्टे * प्रथमं ताव-
ति * व्यतिरेकशब्देनाद्यपूर्वपक्षार्थतोक्ता भेदे च दृष्टसामर्थ्यावि-
नोक्तमाक्षेपं परिहरति * यद्यपि चेति * अभ्यासलक्षणभेदा-
सङ्गापवादार्थत्वे ऽप्यधिकरणस्य समप्राधान्ये सत्यङ्गाभावा-
मपेक्ष्य प्रधानतेत्याशङ्क्यायागानामाघारादीनां राजसूयवदङ्गत्व-
नार्थं शब्दान्तरेणायागेभ्यो भेदः पूर्वपक्षितः । ननु विद्वद्वाक्य-
नुवादत्वेन विधातृत्वाभावान्न पूर्वन्यायद्वयविषयतेत्याशङ्क्याह
न चेति * प्रकृतयागानुवादे च प्रयाजादेरपि प्रकृतत्वाविशेषे-
नुवादापत्तेः सञ्ज्ञायाश्चाप्रसिद्धत्वेनाविशेषकत्वात्फलवाक्यस्य-
वचनापेक्षिताग्नेयादिसमुदायद्वयसम्पादनमपि प्रयोजनं न स-
वतीत्याशयेनाह * न चैषेति * न च लिङाद्यभावेनाविधातृ- ४१
ाह * वर्त्तमानेति * यावदुक्थ्यो नोपाप्नोति तावदुपाप्नोतीत्य-
दात् पौर्णमासीवाक्यस्य यावदतिरात्रेणोपाप्नोति तावदुपाप्नो-
र्थवादाच्चामावास्यावाक्यस्य विधित्वनिश्चयः यच्छब्दोपबन्धो
न विधिशक्तिं व्याहन्तीत्याह * सत्यपि चेति * विधायकत्वे
त्यभ्यासाद्भेदसिद्धिरित्याह * न चेति * नन्वर्थवादता-

नयोः कस्मान्न कल्पितेत्याशङ्क्याह * न चेति * नन्वरूपत्वात्क-
मेविधिर्न सम्भवतीत्याशङ्कते * किं पुनरिति * परिहरति * त-
दिति * हेत्वर्थतया साधारणशब्दं व्याचष्टे * सर्वस्मै वा इति *
ननु विहिताज्यद्रव्यकेष्वेवानेन ध्रौवत्वमात्रविधिरित्याशङ्क्योपांशु-
याजमन्तरा यजतीति हविर्लिङ्गाश्रुतत्वाद्यथा कामी प्रतीयेतेति सू-
त्रेण दशमे हविर्विशेषाश्रवणेनोपांशुयाजे द्रव्यानियमं पूर्वपक्षयित्वा
ध्रौवाद्वा सर्वसंयोगादित्यनेनाविहितद्रव्यकेषु ध्रौवविधिर्वक्ष्यमाणो
दृष्टान्तितः। यच्च तत्र भाष्यकृता आज्यस्यैव नावित्यनेनाज्यविधिमा-
शङ्क्यैवमप्यनियमो यत्किं चिदाज्यमिति वक्ष्यते तदभ्युपेत्यवादमा-
त्रमित्याशयः । ननु तृतीये मिथश्चानर्थसम्बन्ध इत्यत्राज्यभागक्रमा-
म्नानेन वार्त्रघ्नीवृधन्वत्याख्यमन्त्राणां तदङ्गत्वस्य वक्ष्यमाणत्वात्क-
थमनयोः कर्मणोस्तद्वशाद्देवताप्राप्तिरित्याशङ्कां निरस्यन्मात्रवर्णिके
व्याचष्टे * तथेति * आग्नेयादेर्निर्ज्ञातदेवतात्वनार्थान्तरवाचिम-
न्त्रान्वयायोगात्तादर्थ्येन वाक्यविनियोगानुपपत्तावपि विद्वद्वाक्य-
विहितयोः कर्मणोरनिर्ज्ञातदेवतात्वेनैतन्मन्त्रान्वयाविरोधात् वा-
क्येन क्रमं बाधित्वैतदङ्गतया विनियोगोपपत्तिरनयोरित्यने-
सूचिता । नन्वनुवाक्याविधिस्थयोः पौर्णमास्यमावास्याशब्द-
योः कालवाचित्वात्कथं वाक्येन कर्माङ्गतेत्याशङ्क्याह *
हीति * ननु कर्मणिलक्षणापत्तेः श्रुत्या कालार्थतैवोचिते-
त्याशङ्कते * नन्विति * कालस्याननुष्ठेयत्वेन मन्त्रानाकाङ्क्ष-
त्वात्तदङ्गत्वे मन्त्रस्यानर्थक्यापत्तेरर्थवत्त्वाय लक्षणाप्युचितेति परि-
हरति * किं हीति * ननु कर्मणो ऽधिकरणत्वायोगात्तद्वाचित-
सप्तमी न युज्येतेत्याशङ्क्याह * दृष्टश्चेति * अधिकरणस्याधेयस्-
स्कार्यत्वेनागारे गावो वास्यन्तामित्यादौ प्राधान्यदर्शनाल्लक्षणया-
धिकरणवाचिन्याः सप्तम्याः प्राधान्यार्थता युक्तेत्याशयः । नन्वेव-
स्मिन्कर्मण्यनुवाक्याद्वयानर्थक्यं याज्यानुपलब्धेश्च यागानुष्ठान-
सिद्धिरित्याशङ्काद्वयं चतुर्धा परिहरति * तेनेति * अनुवाक्य-
द्वयस्यैकयागार्थत्वाद्विकल्पो याज्यापि चाश्रुता देवतलक्षणयाज्यानु-
वाक्या इत्यसमाम्नातयाज्यानुवाक्याविषये यागाङ्गदेवतावाचिया-
ज्यानुवाक्याकल्पनस्मृतेराग्नेय्यनुवाक्यापक्षे याज्याप्याग्नेयी सौ-
मीपक्षे सौमीकल्प्येत्येकः परिहारः इतरेतरयोर्विहितद्वन्द्वापवादत्वं
नैकशेषस्यापीतरेतरयोगावाचित्वादनुवाक्याद्वयस्य समुच्चयप्रतीते-
स्तद्वशेनाग्नीषोमयोर्देवतात्वकल्पनाद्वयोरर्थवत्त्वं याज्या च तदानुरू-
प्येणैवाग्नेयी सौमी चान्या कल्प्येति द्वितीयः । कर्मद्वयाभिप्रा-

मनालाघवे ऽप्येकैव द्विदेवत्या याज्येति तृतीयः। एकस्मि-
ाक्याद्वयानर्थक्याद्याज्यानुवाक्यात्वे ऽपि चेतरेतेतरयोगो-
शब्दस्य च याज्यायामपि प्रैषपश्चाद्भावेनाविरोधात्समु-
ङ्गत्वेनाग्नीषोमदेवत्यकर्माध्यवसानान्मनोतान्यायेनैकदेश-
त्प्रकाशनेनोभयोः सम्वादोपपत्तेरश्रुतकल्पनापरिहाराच्च
मध्ये ऽनुवाक्यैका याज्यैकेति चतुर्थः। आज्यभागयोस्तद्धी-
त्पदेवतानुपपत्तेः साकाङ्क्षत्वं स्यादित्याशङ्क्याह * आ-
स्त्विति * तौ होचतुरग्नीषोमौ किमावयोस्ततः स्यादि- ४६२।१
गोः प्रक्रान्तयोः नाविति द्वितीयया यजिकर्मत्वानिर्देशाद्धि-
गित्यादिवद्देवतात्वावधारणेत्याशयः । जुषाणो ऽग्निरा-
जुषाणः सोम आज्यस्य वेत्विति याज्यायास्तु केन चित्सा-
शङ्क्येत्याह * याज्येति * नन्वनुवाक्ययोर्बाधितत्वात्त-
त्वं स्यादित्याशङ्क्याह * अनुवाक्येति * रूपवन्तावित्युत्त-
ग्रहे*तस्मादिति * पूर्वपक्षभाष्यार्थं व्याख्यातमुपसंहरति
ते * ननु भेदे ऽपि चतुर्थोपान्त्यन्यायेन दर्शपूर्णमासा-
यागानां प्राधान्याच्चेतरेषामङ्गत्वात्समप्रधान्यसिद्धिरि-
* भेद इति * तमेव न्यायं प्रश्नपूर्वकमाह *कुत इति*
भिधानयोर्निवेशः श्रुतितो व्यपदेशाच्च तत्पुनर्मुख्यलक्षणं
वसंयुक्तं तदङ्गं स्याद्भागित्वात्कारणस्याश्रुतान्यसम्बन्ध
न्तसूत्रावयवं केषु चिद्देवेत्यध्याहारेण व्याख्यातुं पूर्वार्द्धं
साभ्यामिति द्विवचनश्रुतेर्दर्श इत्यभिधानस्य पूर्णमासश-
पूर्णमास इत्यस्य च दर्शशब्दवाच्यात्पृथक्त्वेन निवेशः प्रती-
प्रकृतयागमात्रवाचित्वे पृथक्त्वायोगात्केषु चिदेव यागेषु
सर्वेष्वित्यर्थः।दर्शशब्दस्याप्रसिद्धार्थत्वात्पूर्णमासशब्दवच्च केन
त्मना सारूप्याभावात्कथं यागविशेषे निवेश इत्याशङ्क्यारम्भ-
ोषे दर्शो वा एतयोः पूर्वः पूर्णमास उत्तरो ऽथ यत्पूर्णमासं
ते तद् यथापूर्वं क्रियते तस्मात्पूर्णमासमारभमाणः सरस्व-
र्निर्वपेत्सरस्वते द्वादशकपालममावास्या वै स्वती पूर्णमासः
नावेतौ यथा पूर्वं कल्पयित्वा ऽऽरभतइत्यमावास्याख्ययाग-
दर्शव्यपदेशाच्चन्द्रदर्शनाद्वामावास्यायां तिथौ दर्शव्यपदे-
ाद्दर्शपष्ठीषु न कुर्याद्दन्तधावनमित्यादौ चामावास्यायां दर्श-
प्रसिद्धार्थतोक्ता अतो यागविशेषाणां फलवत्त्वात्फलवत्व-
ाधान्यापरपर्यायमुख्यलक्षणत्वात्सन्निहितस्य फलासंयुक्त-
ं प्रकरणादिति कर्त्तव्यतार्थित्वादिति तृतीयाधिकरणन्या-

येनाङ्गत्वकारणभागित्वादश्रुतान्यफलान्वयकल्पने च गौरवापत्तेर- ङ्गतैव युक्तेति सूत्रार्थः सङ्क्षेपेणोत्तरार्द्धेनोक्तः। श्लोकं व्याचष्टे * दर्शेति * विद्धद्वाक्याभ्यां समुदायद्वयाकरणे दर्शपूर्णमासनाम्नो प्रसिद्धार्थत्वेन यज्यर्थाविशेषत्वान्न चतुर्थान्त्यन्यायमुदाहरति * य थेति * ज्योतींषि वा एतानि य एते स्तोमा इत्यर्थवादे त्रिवृदादिस्तो मेषु ज्योतिष्ट्वव्यपदेशात् ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमु पाकरोतीति च विधौ सोमयागस्य त्रिवृदादिस्तोमयोगावगमात्प्रसि द्धार्थेन नाम्ना यज्यर्थो विशेष्यतइत्यर्थः। यजिना नामार्थविशेषणं चतुर्थस्यैव चतुर्थपादाद्यन्यायमुदाहरति*तथेति * राजसूयेन स्वा राज्यकामो यजेतेति फलविधिपरे वाक्ये यजेः प्रकृतेऽपिपशुसोम यागमात्रानुवादित्वावधारणात्प्रसिद्धार्थेन यजिना नाम विशेष्यत इत्यर्थः। उत्तरार्द्धं व्याचष्टे * तदिहेति * ननु प्रकृतयागमात्रविष यत्वे दर्शपूर्णमासशब्दस्य तदवयवभूतयोर्दर्शपूर्णमासशब्दयोर्द्विवच
४ नस्य च को ऽर्थ इत्याशङ्क्याह * ततश्चेति * अवयवार्थो समासार्थ श्च द्वित्वं चाविवक्षितानि यस्मिन्पद इति विग्रहः। समासार्थेतरेत रयोगविवक्षायामवयवार्थाविवक्षानुपपत्तेस्तदविवक्षाभिधानम्।अर्था न्तरविवक्षायामपि करणत्वविवक्षया यजिसामानाधिकरण्याद्राज सूयनामवद्यागनामतेत्युक्ते ऽवयवार्थाविवक्षायां प्रवृत्तिनिमित्ताभा वात्कथं यागनामतेत्याशङ्क्य वर्णपङ्क्तिमात्ररूपत्वेन रूढितोक्ता।ननु रूढिर्योगमपहरतीति न्यायेनावयवार्थाविवक्षायामपि द्विवचनार्था विवक्षा न युक्तेत्याशङ्क्याह * सुपामिति * नन्वमावास्यापौर्ण मासीकालवाचिनोर्दर्शपूर्णमासशब्दयोस्तद्योगिष्वाग्नेयादियागेषु द्वि वचनस्य च द्वित्वयोगिष्वाज्यभागादिषु लक्षणया प्रसिद्धिसम्भ वान्नाप्रसिद्धार्थतेत्याशङ्कते * कथं पुनरिति * नन्वेवमपि प्रकृतिप्र त्ययसमुदायात्मकस्य पदस्याप्रसिद्धार्थत्वाद्यज्यनुरोधवृत्तित्वमपरि हार्यमित्याशङ्कां निरस्यन् श्लोकं व्याचष्टे * तन्नामेति * लब्धार्थ प्रातिपादकानुरोधेनेवाविभक्तिव्याख्याविभक्त्यनुरोधेन वा प्रातिपदि कव्याख्या भविष्यतीत्याशयः। स्वार्थसमाप्तस्य वाक्यस्य वाक्या न्तरानन्वयवत्पदस्यापि स्वार्थसमाप्तस्य पदान्तरानन्वयाच्चैकैकांश प्रसिद्धिमात्रेण यजिविशेषकता युक्तेति परिहरति * तदिति * श्लोकं व्याचष्टे * यद्यपीति * नन्वाग्नेयवाक्येनासम्भवत्समुच्चय पौर्णमास्यमावास्याकालद्वयगुणककर्मविधानाद् गुणानुरोधेन च ऽ धानावर्त्ययोगाच्चशब्दयोगाच्च कालविकल्पानुपपत्तेरेककर्मासम्भ विगुणद्वययोगेनाग्नेययागद्वित्वावगतेस्तयोश्चैकवाक्यविहितत्वावा

सामान्यावच्छेदेनामावास्यापौर्णमासीकालयोगिषु यागान्तरेषु स-
पि द्वित्वसंख्यावृत्त्युपपत्तेर्द्वयोरपि प्रकृतिप्रत्ययार्थयोस्तत्र सद्भा-
र्शपूर्णमासशब्दस्याग्नेययागद्वयवाचित्वेन प्रसिद्धत्वाद्यजिविशे-
त्वं भविष्यतीत्याशङ्क्याह * न चेति * विद्वद्वाक्ययोः प्रकृतया-
वादित्वाभावे पौर्णमास्यमावास्याशब्दयोस्तद्वाच्यकालयोगिप्रकृ-
गनामत्वानवगतेस्तयोर्वा लक्षणया प्रकृतयागप्रवृत्तावपि दर्श-
मासशब्दयोस्तात्पर्यावधारणहेतुसामानाधिकरण्याभावात्पूर्णमा-
ब्दस्य किं चिद्वर्णसाम्याद्वाचकपौर्णमासीशब्दोपस्थापनेनाख्या-
पौर्णमासीशब्दविकारमात्रत्वाद्वा ततो ऽनन्यत्वेन दर्शशब्दस्य ज-
वृत्तिसाम्याद् गौणत्वशब्दोक्त्या विरुद्धलक्षणयामावास्याशब्दै-
र्थकल्पनाद्दर्शपूर्णमासशब्दस्य प्रकृतपौर्णमास्यमावास्याकालयो-
गगविषयत्वाध्यवसानं न भवतीत्यर्थः। ननु ज्योतींषि वा एतानि
एते स्तोमा इतिवद्वाचकशब्दसामानाधिकरण्याभावे ऽप्येते
माना इवेत्यत्र धान्यशब्दस्य दीर्घशूकविषयत्वमाग्नेय्याग्नीमित्य-
ग्नेयीशब्दस्य प्रकृताग्नेयीविषयतावसीयतइत्याशङ्क्य * अर्थेत्यु-
( * शब्दान्तरवदर्थप्रकरणाभ्यामपि सामानाधिकरण्याध्य-
नं न भविष्यतीत्याशयः । नन्वाग्नेययागयोः पौर्णमास्य-
ास्यानामत्वानवगतेर्दर्शपूर्णमासशब्दस्य तद्विषयत्वाध्यवसा-
ावे ऽपि विद्वद्वाक्यस्थयोः पौर्णमास्यमावास्याशब्दयोरर्थाक्षिप्त-
यांशसामानाधिकरण्येनापूर्वयागनामत्वावगतेर्दर्शपूर्णमासशब्द-
तद्विषयत्वाध्यवसानात्प्रसिद्धार्थत्वेन यजिविशेषकत्वोपपत्तेर्वि-
ाक्यविहितयोरेव यागयोः फलवत्त्वेन प्राधान्यादितरेषामङ्गत्वं
ष्यतीत्याशङ्कते * कस्मात्पुनरिति * एतदेव सिद्धान्तन्यायतु-
त्वापादनेनोपपादयति * तथा हीति * शङ्कोत्तरत्वेन श्लोकं
चष्टे * यदीति * पौर्णमास्यामावास्याशब्दयोर्यागनामत्वे ऽपि
पूर्णमासशब्दस्य यागनामत्वानवधारणात्कालयोगेन च वृत्तेरा-
गादिष्वपि तुल्यत्वेन विद्वद्वाक्यविहितयोर्यागयोराग्नेयवदेक-
स्यविधानाभावे भावान्तरसामान्यावच्छेदाभावाद्द्वित्वसंख्यापरि-
च्छत्वानुपपत्तेर्नाष्टानां मध्ये तयोर्निष्कर्षः सम्भवतीति परिहरति
दिति श्लोकं व्याचष्टे * न हीति * ननु निष्कर्षायोगे ऽपि
ः कयोश्चिद्द्वयोः फलान्वयो भविष्यतीत्याशङ्कते * स्यादिति *
यं वाष्टानां मध्ये ययोः कयोश्चिद्द्वयोः फलवत्त्वाय दर्शपूर्णमास-
ब्देन ग्रहणं विकल्पेन वेति विकल्पाद्यपक्षे निर्धारणहेत्वभावा-
माणाभावो द्वितीये चैकस्याङ्गप्रधानत्वविरोधापत्तिरिति परिह-

ति * तदिति * श्लोकं व्याचष्टे * विनेति*अतिदेशे सन्देहापत्ति
श्च द्वितीये पक्षे स्यादित्याह*·उभयात्मनां चेति * अभ्युपेत्यवादे
चैतदुक्तं वस्तुतस्त्ववान्तरसामान्यावच्छेदं विना द्वित्वानवधार
णान्नैको ऽपि पक्षः सम्भवतीत्याह * सर्वेति * ननु सिद्धान्ते ऽ
।४ षण्णां कथं द्वित्वापत्तिरित्याशङ्क्याह * सिद्धान्ते त्विति*नन्वेवं द्वि
वचनोपपत्तावपि प्रातिपदिकयोरप्रसिद्धार्थत्वाद्याजिविशेषकता न श
क्येत्याशङ्क्याह * तद्वशेन चेति * पूर्वपक्षे समुदायत्वानापादना
षम्यमाह * नन्विति*ननु समुदायगताद्वित्वाभावे ऽपि कालगतद्वि
त्वापेक्षं द्विवचनं भविष्यतीत्याशङ्कते * अथेति * विद्वद्वाक्य
भ्यां फलवाक्यस्थदर्शपूर्णमासशब्दगतद्वित्वसम्पत्त्यर्थं समुदायद्व
नापादने दर्शपूर्णमासशब्देन तात्पर्यप्रमाणाभावादाग्नेयादिविषय
यानवधारितेनाख्यातं न विशेष्टुं शक्यमिति परिहरति * नेदृशे
ति * कालगतायाः संख्याया यागान्वयकल्पना न शक्येत्य
* न चेति * समुदायगतसंख्यान्वयस्तु समुदायिनां युक्त इत्य
* समुदायेति * पूर्वपक्षप्रयोजनमुपपादितमुपसंहरति * तस्मा
दिति * सूत्रं द्वेधा योजयन् तत्सिद्धान्तमाह * तथेति * पौ
मासीशब्देनोदाहरणीभूतविद्वद्वाक्ययोरुपलक्षणं प्रकरणशब्दस्य
मव्युत्पत्तावालम्बनपदाध्याहारो भावव्युत्पत्तौ सहकारिपदाध्याह
इत्यर्थः । द्वितीयव्याख्याने ऽपि प्रकृतानामिति भाष्यानुसार
क्तुम् * ततश्चेत्युक्तम् * रूपावचनस्य प्रकृतानुवादहेतुत्वोपप
नार्थं य एवं विद्वानित्यादिभाष्येण सञ्ज्ञया कर्मविशेषाभिधाना
च्च विनाविशेषाप्रतिपत्तेर्विध्यसम्भवो ऽभिहित आघाराग्निहोत्रा
करणे सञ्ज्ञोपबन्धादित्यस्मिन्सूत्रे व्याख्यास्यमानत्वादुपेक्ष्य स
विधिस्वभावमेव तावत्प्रश्नपूर्वमुपपादकमाह * कुत इति *
क्योक्तामप्युपपत्तिमनुसन्दधानः श्लोकं व्याचष्टे * न हीति *
।६।२ ध्यनुरोधो ऽननुष्ठेयसामान्यवाचित्वनिरासायानेनेति विशेषणेनो
अव्यक्तासु तु सोमस्येत्यनेन न्यायेनातिदेशाद्रूपलाभमाशङ्क्याव्य
चोदितत्वेन सोमधर्मातिदेशस्य वक्ष्यमाणत्वादिह च श्रुतस्याख्या
यच्छब्दोपबन्धेनाविधायकत्वाद्विध्यध्याहारस्यैव विधानयोग्यरू
त्कर्मावगतिसापेक्षत्वादातिदेशिकरूपालाभाद्विध्यध्याहारे विध्य
हाराच्च विधेयत्वेनातिदेशिकरूपलाभे ऽन्योन्याश्रयापत्तेर्नाति
शाद् रूपलाभः सम्भवतीति सूचनार्थो ऽपूर्वशब्दः । नन्वनुवादो ऽ
ज्ञातरूपस्य न सम्भवतीत्याशङ्क्यानुवादस्य बुद्धिविपरिवृत्तिनिमि
त्तेन प्रकृतविषयत्वात्प्रकृतानां च ज्ञातरूपत्वेनानुवादसम्भवाभि

र्थम् अथ त्विति भाष्यं व्याचष्टे * प्रकृतेति * पूर्वपक्षोक्तं द्रव्यदे-
ामनुभाष्येण पूर्वं निरस्यति * नन्विति * सत्यमित्युपहासः सू-
ातः। यागमात्रसाधारणत्वेन स्थितस्य ध्रौवस्य सञ्ज्ञाविशेषावच्छि-
यागविशेषानवच्छेदकत्वात्सत्यपि लाभेनावच्छेदकत्वाख्यारूपता-
ेत्याशयः। यथाकथं चिदित्यनेन ध्रुवावाक्यस्यार्थवादस्वरूपस्या-
न्यथानुपपत्त्या क्लेशेन ध्रौवत्वविशिष्टाज्यप्रापकत्वात्प्राप्तिक्लेशः
चितः। मान्त्रवर्णिकदेवताप्राप्तिमाशङ्किता निरस्यति * न
ति * न केवलं विरोधापत्तेः कर्मवाचित्वं न युक्तं किं तु लाक्षणि-
त्वादपीत्याह * किं चेति * ननु लक्षणापि शब्दवृत्तिप्रकार एवे-
ाशङ्क्याह * यदि हीति * सप्तमीनिर्देशादपि कालवाचितैव यु-
त्याह * अपि चेति * कालस्य मन्त्रान्वयायोगात्तद्वाचित्वानु-
ात्तिर्योक्ता तामप्यनुभाष्य निरस्यति * यत्त्विति * नन्वाज्यभा- ४१
योः कालयोगाश्रवणात्प्रधानद्वारा कालयोगाश्रयणे वा पौर्णमासी-
प्रधानाङ्गभूतयोरिति च युगपच्छ्रुतिलक्षणाविरोधापत्तेः कालतश्च
वस्थाश्रयणे विकृतिषु य इष्टयेति वाक्येन कालविकल्पविधानात्
र्णमासीकालोपांशुयाजाग्नीषोमीयविकारो यदामावास्यायां क्रियते
ावास्याकालसान्नाय्यविकारो वा पौर्णमास्यां तदा पौर्णमासकाल-
धानाङ्गभूतयोराज्यभागयोर्वृधन्वतीप्राप्तेरमावास्याकालप्रधानाङ्ग-
तयोश्च वार्त्रघ्नीप्राप्तेः प्रकृतिवद्भावबाधप्रसङ्गात्प्रधानसाद्गुण्या-
त्वाच्चाङ्गगुणानुष्ठानस्य तद्बाधे प्रधाने वैगुण्यापत्तेः कर्मवाचि-
ना ऽपि च पौर्णमास्यमावास्याशब्दयोः पौर्णमास्याख्यकर्माङ्गभूत-
ाराज्यभागयोर्वार्त्रघ्न्यौ अमावाख्यस्याकर्माङ्गभूतयोर्वृधन्वत्यौ इति
मंकृतव्यवस्थार्थत्वेन वाक्यस्याविरोधोपपत्तेस्तत्र जयानिति यच्चा-
यभागव्यतिरेकजनितप्राधान्यार्थतैव युक्ता नापूर्वयोः कर्मणोः मन्त्र-
ाधानार्थतेति स्वमतेन मान्त्रवर्णिकदेवताकल्पनानुपपत्तिप्रकारमाह
किं चेति * श्लोकं व्याचष्टे * सर्वत्रैवेति * यत्त्वनुवाक्याद्व-
ानर्थक्यपरिहारायाश्रुतयाज्याकल्पनपरिहाराय च श्रुतयोरेव वार्त्र-
घ्नोर्वृधन्वत्योश्च मध्ये ऽनुवाक्यैका याज्या चैकेत्युक्तं तदनुभाष्य
षयति * यच्चेति * अज्ञातदेवतात्वादेवापूर्वयोः कर्मणोः प्रका-
र्थेन देवतारूपेण प्रकाशकतया मन्त्रस्यानपेक्षितत्वात्प्रकाशनाख्ये
ाज्यानुवाक्याकार्ये वार्त्रघ्नयोर्वृधन्वत्योर्वा विनियोगाद्याज्यात्ववद-
वाक्यात्वमपि न स्यादित्याशयेनाह * अपि चेति * मन्त्रार्थस्य
र्मसमवाये सिद्धे मन्त्रस्यालिङ्गविनियोज्यत्वापत्तेस्तदभावाभिधा-
न मन्त्रार्थस्य कर्मसमवायासिद्धिः प्रकाशकानपेक्षत्वायोक्ता वाक्यी-

यविनियोगान्यथानुपपत्त्या मन्त्रार्थस्य कर्मसमवायकल्पनामाशङ्
* वाक्ये चेत्युक्तम् * कर्मसमवेतार्थप्रकाशकत्वं विना मन्त्रस्य च
रणत्वायोगात्करणत्वश्रवणे तदन्यथानुपपत्त्या मन्त्रार्थस्य कर्मस
मवायकल्पना नान्यथेतित्याशयः । अनुपूर्ववाच्चियोगेनानुवाक्य
त्वमाशङ्क्याज्ञातदेवते कर्मणि विहितायां वैष्णव्यां व्यभिचारो ऽभि
हितः । ननु सन्निपत्त्योपकारित्वसिद्ध्ये ऽनुवाक्यात्वं कल्पयिष्य
तइत्याशङ्क्याह * मान्त्रवर्णिकेति * समवेतार्थत्वसम्भवे सन्नि
त्योपकारित्वेनारादुपकारित्वं बाध्यते नान्यथेत्याशयः । यच्चापूर्वक
र्मविषयत्वे ऽनुवाक्याद्वयानर्थक्यं लिङ्गाविनियोज्यत्वाच्चादृष्टार्थत्व
क्तं तदुभयमप्याज्यभागविषयत्वेन प्राप्नोतीत्याह * आज्यभागयं
पुनरिति * यागद्वित्वाद्देवताद्वित्वाच्चानुवाक्याद्वयस्यार्थवत्त्वं लिङ्
विनियुक्तत्वाच्च दृष्टार्थतेति दृष्टार्थशब्देनार्थवत्त्वस्यापि सूचन
दित्यर्थः । यश्चानेकार्थविधिप्रसङ्गो ऽपूर्वकर्मविषयत्वे ऽस्तीत्य
ह * तत्र चेति * अपेक्षितविधानं त्वादावेवोक्तम् । 
न्वाज्यभागाङ्गत्वस्य लिङ्गक्रमाभ्यामेव प्राप्तेस्तदर्थशास्त्रा
र्थक्यमित्याशङ्क्याह * न चेति * लिङ्गस्य व्यवस्थापकत्वा
ङ्गानुपपत्तेः क्रममात्रस्य निरासः मान्त्रवर्णिकदेवताप्राप्त्यभावमु
२।१ संहरति * तस्मादिति * सूत्रार्थमुपसंहरति * अतश्चेति * उ
नर्थक्यापत्त्यानुवादत्वानुपपत्तिमाशङ्कते * किं पुनरिति * आन
र्थक्यमेवोपपादयति * पश्येति * दध्ना जुहोतीतिकरणत्वेन द्र
विधानात्पदार्थचोदना दण्डी प्रैषानन्वाहेति दण्डप्रातिपदिकार्थ
धानात्तद्रागार्थचोदना सोमेन यजेतेति विशिष्टविधानाद्वाक्यार्थच
दनेति यथाग्नेयादिवाक्येष्वनेन कर्तृसमीहितं कुर्यादित्यवगमे ऽ
कर्तृविशेषानुपादानात्सामान्यस्य चाकर्तृत्वात्कर्तृसमीहितसाध
त्वलक्षणधर्मबोधाशक्तत्वे ऽपि स्वर्गकामवाक्यस्य कर्मकर्तृविशे
पादानेन धर्मबोधोपयोगित्वात्तच्छेषत्वेनाग्नेयादिवाक्यानां धर्म
मोपयोगस्तथा विद्वद्वाक्ययोरपि प्रयोगवचनाङ्गत्वाद्धर्मप्रमोपयो
भविष्यतीति परिहरति * उच्यत इति * कथमनयोः प्रयोगव
नाङ्गतेत्याशङ्क्य द्वित्वासिद्ध्या * प्रयोजनभूतयेत्युक्तम् * द्वित्व
त्पादकत्वे ऽप्यनयोः कः प्रयोगवचनस्योपकार इत्यपेक्षिते प्रयोग
चने द्वित्वस्योपादानादित्युक्तम् । श्लोकतात्पर्यं व्याचष्टे * वाक्ये
अविधायकत्वेनानयोराग्नेयादिवाक्यवैषम्यमाशङ्क्याह * न हीति
ननु समुदायद्वयावचने ऽपि पौर्णमास्यमावास्याख्यकालद्वययोग
ग्नेयादीनां द्वित्वासिद्धेर्नानयोर्द्वित्वासिद्धिप्रयोजनतेत्याशङ्क्याह *

प्नोतीति * कालकर्मणोरत्यन्तभेदात्कालगतसंख्यायोगः कर्मणो न सम्भवतीत्याशयः। विद्वद्वाक्याभ्यां विनाग्नेयादीनां द्वित्वासिद्धिं भाष्यकाराभिप्रेतत्वेन द्रढयति * एतदेव चेति * आग्नेयादीनि यान्तानि प्रधानानि आघारादीन्यारादुपकारकाण्यङ्गानीत्यनुवादपक्षे प्रयोजनस्याङ्गप्रधानत्वस्यादावुपन्यासात्तत्सिद्ध्यर्थद्वित्वसिद्ध्यर्थतानुवादस्यावसीयतइत्याशयः । नन्वङ्गप्रधानत्वस्य प्रयोजनोपन्यासेऽधिकरणान्ते कार्यता स्यादित्याशङ्क्याह * इतरथा हीति * प्रयोजनमप्यनुवादत्वनिर्वाहायादावुपन्यस्तमित्याशयः । अनुवादानर्थक्यपरिहारमुपसंहरति * तस्मादेति * कथं पुनरित्यादिभाष्येणैकवचनान्तयोः पौर्णमास्यमावास्याशब्दयोरनेकाग्नेयादिवाचित्वानुपपत्तिमाशङ्क्य समुदायशब्दतयैकवचनावक्लृप्तिमुक्त्वा कथं भिन्नवाक्यविहितानामाग्नेयादीनां साहित्यात्मकः समुदाय इत्याशङ्क्य रूपवन्तो हीत्यनेन प्रपञ्चेनानेकस्यैकधर्मान्वयेन शिष्टः कृतः समुदायोऽस्तीत्युक्तं तद्व्याख्यातुमाशङ्कते * कथं पुनरिति * अभेदे समुदायायोगाद्भिन्नवाक्यविधानाभिप्रायो भिन्नशब्दः।प्रकृतत्वाविशेषाद्यजेः सर्वप्रकृतयागविषयत्वप्रतीतेः सर्वेषां वैककालयोगाभावात्तन्निमित्तोऽपि समुदायो न सम्भवतीति सूचनायात्यन्तशब्दः व्याचष्टे * शक्यमिति * कालयोगनिमित्तनामधेयावच्छेदेन यजेः कालयोगियागविषयत्वावसायाद्भिन्नवाक्यविहितानामप्येककालान्वयात्समुदायः सम्भवतीत्याशयः।श्लोकं व्याचष्टे * यथैव हीति*ननु सत्यपि समुदाये पौर्णमास्यमावास्यानामधेययोः सामानाधिकरण्येन यागविषयत्वात्तेषां च बहुत्वान्नैकवचनोपपत्तिरित्याशङ्कानिरासार्थं भवति हीति भाष्यं व्याचष्टे * तद्गतेति * समुदायगतस्यैकत्वस्य समुदायसमुदायिनोरत्यन्तभेदाभावेन लक्षणया वा समुदाय्यन्वयावधारणादित्यर्थः । यदाग्नेयादीनां समुदायवचनावेताविति समुदायानुवादप्रयोजनाङ्गाङ्गिभावाभिधानार्थादुत्तरभाष्यात्पौर्णमास्यमावास्याशब्दयोः समुदायवाचित्वशङ्कां निराकर्त्तुमाह * समुदायीति * तच्छब्देन समुदायिनः परामृष्टाः एतदेवोपपादयति * तथा हीति * नञ् पूर्वेण ६
सम्बद्ध्य किं त्वित्यद्ध्याहारेणोत्तरावयवो योज्यः। श्लोकं व्याचष्टे * पौर्णमासीमिति * समुदायस्य च कालयोगाभावात्तन्निमित्तयोर्नाम्नोः समुदायवाचिता न युक्तेत्याह * न चेति * पौर्णमास्यां पौर्णमास्या यजेतेत्यत्र समुदायस्य कालयोगमाशङ्क्यानयोर्नाम्नोस्तद्वाक्यविहितकालयोगनिमित्तत्वेन नामप्रवृत्तौ सत्यां तन्नामकानां

यागानां कालविधिः कालविधौ च सति नामप्रवृत्तिरितीतरे
अयापत्तेरुत्पत्तिवाक्यविहितकालयोगनिमित्तस्यापि समुदाय
त्वात्फले विधानापत्ते (रितियुक्तेति सूचनायोत्पत्तिशब्दः समु
नामत्वे ऽवयवानामसाधनत्वापत्तेः प्रत्येकमपूर्वककल्पनप्रमाण
वाक्याभ्यामेदेन भावनाभेदाभावे सत्यनेकधात्वर्थानुरक्तत्वे चान
र्शपूर्णमासशब्देनैतएवाभिधीयन्त इति भाष्यं विरुध्येतेत्याह*
चेति*समुदाययोश्च फलसाध्यैकैकभावनापत्तेः[1]) कर्मभेदवाचो
रभिधेयाभावाद्विगतार्थत्वं स्यादित्याह * अत इति*तेषामर्थाधि
णवक्ष्यमाणा च धर्मव्यवस्थापूर्वैक्ये भज्येतेत्याह*सर्वेति*एकाद
ता तन्त्रावृत्तिचिन्तादिशब्दोक्ता च द्वादशगता प्रसङ्गचिन्ता ऽपू
भज्येतेत्याह*न चेति*समस्तान्वये चेतिकर्त्तव्यतायाः प्रत्येकावि
सौर्यादावतिदेशायोगादेकार्थ्याद्वा नियम्येन पूर्ववद्वा विकारो
ष्टमाधिकरणसिद्धान्तो भज्येतेत्याह * नन्विति* दशमान्त्ये च
सोमादेकपुरोडाशा पौर्णमासी साम्नाय्यरहितामावास्येति व्यव
पौर्णमास्यमावास्याशब्दयोः समुदायवाचित्वे न युज्येतेत्याह
सहस्रेति * नवमे च त्सरा वा एषा यज्ञस्य तस्माद्यत्किं चि
चीनमग्नीषोमीयात्तेनोपांशु चरन्तीति उदाहृत्य यज्ञभागधर्मो
दुपांशुत्वं पदार्थधर्मो वेति सन्दिग्धे यज्ञस्य फलवत्त्वेन धर्मप्रयुक्त
मर्थ्याद्यज्ञस्य यत्प्राचीनेति व्यवहितेनापि यज्ञशब्देन प्राचीन
स्यान्वयप्रतीतेः श्रुत्या च प्राग्देशवाचिनः प्राचीनशब्दस्य लक्ष
तद्देशपदार्थपरत्वायोगाद्यज्ञभागधर्मत्वं पूर्वपक्षयित्वा प्राचीनश
वीप्सा किं चित्किं चिच्छब्दसमभिव्याहृतयच्छब्दान्वयाद्वीप्सा
बहुविषयत्वेनैकस्मिन्देशे ऽनुपपत्तेर्लक्षणयाग्नीषोमीयप्राग्देशपद
परत्वस्यैव न्याय्यत्वात्पदार्थधर्मतेति सिद्धान्तयितुं तद्देशान
सङ्घातस्याचोदितत्वादिति सूत्रे ऽङ्गप्रधानसङ्घातस्य यज्ञशब्दवा
त्वाभावात्साङ्गप्रधानसङ्घातापेक्षया च प्राग्भाविनो ऽङ्गजातस्य
शावयवत्वायोगेन प्राचीनयज्ञशब्दान्वये ऽप्यवयवव्यतिरेकजनि
ष्ट्यनुपपत्तेः । तत्सम्बन्धितयोपांशुत्वस्याचोदितत्वाच्च यज्ञ
धर्मतेति वक्ष्यमाणत्वात्सप्तमान्त्ये च गवामयनिकेषु ज्योतिर
त्र्यहस्सु नाम्नैकाहरूपज्योतिरादिधर्मेषु चोदकाच्च द्वादशाह
षु प्राप्तेषु चोदकबलीयस्त्वात्द्वादशाहधर्माः कार्या नामबलीयस
दैकाहधर्मा इति सन्दिग्धे प्रत्येकं फलसाधनत्वाभावेन नामाव
प्रात्यात्मिकधर्म्मानाकाङ्क्षत्वादविरुद्धाधिकधर्मातिदेशकत्वे च

१ अयं पा० ड० प्राचीनः प्रतिभाति ।

पत्तेर्द्वादशाहिकद्वादशोपसत्त्वैकादशिनीविहारदर्शनाभ्यां च
गभ्यां चोदकानुग्रहेण द्वादशाहिकधर्मातिदेशे प्राप्ते फलवा-
गधनभूतानामह्नां साहित्यावगमे ऽप्युत्पत्तिवाक्येषु प्रत्ये-
त्र साधनत्वावगमाद्धर्माकाङ्क्षोपपत्तेर्नाम्ना च प्रत्यक्षत्वेनानु-
ेकाद्यागत्वाव्यक्तचोदितत्वाद्गणत्वाद्यनेकलिङ्गापेक्षाच्चोदका-
ळीयस्त्वात् ज्योतिरादिनाम्नां च यागवाचित्वेनाधिकधर्मातिदे-
त्वायोगादेकाहरूपज्योतिरादिधर्मातिदेशे सिद्धान्तयित्वा लिङ्गं
ातधर्मः स्यात्तदर्थापत्तेर्द्रव्यवदिति सूत्रेणाहःसङ्घातात्मकस्य
मयनस्याहःसङ्घातात्मकद्वादशाहकार्यापन्नत्वेन नीवारादौ
्धर्मवत्तदीयद्वादशोपसत्त्वैकादशिनीविहारप्राप्तेर्लिङ्गद्वयोपपत्ति
ातेनोक्तां निराकर्तुं न वार्थधर्मत्वात्सङ्घातस्य गुणत्वादित्यत्र
शब्देन संख्यावाचितार्थोक्तस्यापि सङ्घातस्य फलसाधनी-
हःशब्दोक्तयागविशेषणत्वेन गुणभूतत्वात्साधनत्वाभावेन ध-
ाहकत्वान्न सङ्घातकार्यापत्त्या धर्मप्राप्तिर्युक्तेति वक्ष्यमाणत्वात्सू-
तो ऽपि समुदायवाचित्वाभावाभिप्रायो ऽवगत इत्याह * सङ्घा-
ेति * यद्यप्यङ्गप्रधानसङ्घातसम्बन्धितयोपांशुत्वस्याचोदित-
ानेनोक्तं तथापि यथाङ्गप्रधानानां समुदितानां फलसिद्धिहेतुत्वे
समुदायस्य शब्दवाच्यत्वाभावात्तत्सम्बन्धित्वेनोपांशुत्वस्या-
ानात्तथा प्रधानानां समुदितानामपि फलसाधनत्वे तत्समुदाय-
शब्दवाच्यत्वाभावेनाचोदनेति प्रकृतोपयोगसिद्धेरुदाहृत-
। कथं तर्हि समुदायवचनावेताविति भाष्यमित्याशङ्क्याह
तस्मादिति * सकृदुच्चरिते चास्मिन्विवक्षैकैव दृश्यतइत्यनेन
येनानेकार्थस्यापि शब्दस्य सकृदुच्चारणेनैकार्थपरत्वायो-
पौर्णमास्यमावास्याशब्दयोरनेकयागनामत्वायोगशङ्कानिरासार्थं
ुच्चरितस्याप्यन्योन्यसापेक्षानेकार्थपरत्वोपपत्त्यै समुदायस्योप-
णाख्योपसर्जनत्वोक्त्यर्थत्वेन समुदायो वचनमाग्नेयाद्युक्तावुपल-
ोक्तो निमित्तमेतयोरिति कृत्यल्युटो बहुलमिति निमित्ते ल्यु-
युत्पाद्य समुदायवचनशब्दो व्याख्येय इत्याशयः । समुदायश-
ायेति भाष्यस्य का गतिरित्याशङ्क्याह * तेषां त्विति * समुदा-
ाचिनोरपि पौर्णमास्यमावास्याशब्दयोर्वाच्यसमुदायी लक्षित-
ुदायगतसंख्याद्वारैकवचनयोगाभिधानार्थं समुदायशब्दतोक्ते-
ः॥ कथं समुदायशब्दत्वोक्त्यायमर्थो लभ्यतइत्याशङ्क्य समुदा-
ेक्षः शब्दः समुदायशब्द इति शाकपार्थिववन्मध्यमपादलोपि-
ासत्वं भाष्यकृतोक्तमिति सूचयितुमाह * तथा चेति * नत्व-

नयोः समुदायवाचित्वाभावे समुदायवाचियूथादिशब्ददृष्टान्त
३७०।१ दानमयुक्तमित्याशङ्क्याह * यूथेति * कुलपर्षच्छब्दयोराक्ष
दे ऽनुदाहृतत्वादस्त्येव सङ्गतिश्चात्र वृक्षा हि बहवो वनमित्य
समुदायोपलक्षितमुदायिवाचिता यूथादिशब्दानां तत्रोक्तेति
नार्थं द्विवचनं तन्त्राविरोधात्तु तेषां समुदायवाचित्वे ऽपि स
र्थनिमित्तैकवचनलाभमात्रसाम्याद्दृष्टान्तत्वोपपत्तिर्यद्वा त्वित्य
क्ता दर्शपूर्णमासशब्देन तएवाभिधीयन्तइति भाष्यावयवपर्य
चनयापि समुदायवचनशब्दस्य समुदायिवाचित्वेन तत्पर्याय
दर्शपूर्णमासशब्दयोसमुदायिभिधानत्वार्थत्वं गम्यतइति सूच
वेदेति भाष्यमर्थतो व्याचष्टे * एतेनेति * पौर्णमास्यामावा
शब्दयोः समुदायिवाचित्वे त्वव्याख्योपपत्तेः समुदायिवाचि
समुदायवचनशब्देनोक्तेत्याशयः । तत इति भाष्यं सम
यानुवादप्रयोजनाभिधानार्थत्वेन व्याख्यातुं पूर्वोक्तमेव
मुदायानुवादप्रयोजनं स्मारयति * तस्मादिति * इ
कमिदं चैकमित्येकत्वद्वयविषयं प्रत्ययमपेक्ष्य द्वित्वोत्पत्तेर्द्वि
स्य निमित्तकारणं यो द्वित्वे ऽनपेक्ष्यमाणत्वादपेक्षाख्य एकत्व
प्रत्ययस्तस्य सिद्धिरित्यर्थः । एतदेव चतुर्थोपान्त्यन्यायाभिधाने
पपादयितुं तदीयसिद्धान्तसूत्रावयवं तावत्पठति * यथेति
न्यायमभिधत्ते * तद्द्वित्वेति * पौर्णमास्यमावास्याशब्दोक्तसमुद
द्वित्वानुसारित्वाद्दर्शपूर्णमासशब्दयोः समुदायविषयत्वे ऽभि
ननु द्विवचनान्तत्वमात्रेण प्रपौर्णमास्यमावास्याशब्दविलक्षणयोर्द
पूर्णमासशब्दयोस्तत्सम्पादितसमुदायद्वित्वानुसारित्वानवसायात्त
तद्विषयत्वावगतिरित्याशङ्क्याह * अस्ति चेत्याद्युक्तं * दर्शशब्द
विरुद्धलक्षणया दर्शनविपर्ययादर्शनगमकत्वात्स्पष्टामावास्यावि
यत्वप्रतिपत्तिरित्यर्थः । शक्यते चेति तत्रत्यं भाष्यं पठितं दर्शौ
एतयोः पूर्वं इत्युपक्रम्यामावास्या वै सरस्वतीत्युपसंहाराद्दर्शामाव
स्ययोः सामानाधिकरण्यावगतिः । भाष्यं व्याचष्टे * तेनेति *
नरुक्त्यं शङ्कते * ननु चेति * विद्धद्वाक्ययोः समुदायानुवाद
स्थिते ऽपि दर्शपूर्णमासशब्दयोरप्रसिद्धार्थत्वाद्यागमात्रं ग्रहणशङ्क
निरासायैतदधिकरणस्य प्रयोजनाधिकरणं तदिति पौनरुक्त्यं प
हरति * नैष दोष * इति हिशब्दो ऽपिशब्दार्थे पौर्णमास्यधिकर
विनेज्याधिकरणपूर्वपक्ष एव स्यादितीज्याधिकरणस्य पौर्णमास्यधि
करणाधीनत्वात्पौर्णमास्यधिकरणप्रयोजनत्वेनारम्भ इत्यर्थः । भ
ष्योक्तं फलवाक्यस्थद्वित्वसिद्धिप्रयोजनत्वमुपपाद्य स्वयं कालवा

थयोस्तृतीयान्तयोः पौर्णमास्यमावास्याशब्दयोराग्नेयादित्रिकद्व-
मत्वसिद्धिप्रयोजनताप्यस्तीत्याह * इदमिति * विद्वद्वाक्या-
मनयोः शब्दयोस्त्रिकद्वयनामत्वाकरणे का पौर्णमासी कामावा-
ज्ञानान्नैतद्वाक्यविहितस्त्रिकस्य त्रिकस्य कालयोगः सिद्ध्यतीत्या-
। वाक्यान्तरैरेवाग्नेयादीनाङ्कालविधानेनैतस्य कालवाक्यस्यानर्थ-
न्नैतद्वाक्यापेक्षितनामनामिसम्बन्धसिद्धिप्रयोजनत्वं विद्वद्वाक्य-
सम्भवतीत्याशङ्कते * तत्रेति * एतद्वाक्यविहितस्त्रिकस्य त्रि-
परस्परसहितस्य साङ्गस्य कालयोगो न वाक्यान्तरैः सि-
ोति परिहरति * उच्यतइति * श्लोकं व्याचष्टे * उत्पत्ती- ४७१
* परस्परसहितश्चेत्यनेनैकदेशकालकर्तृत्वं मुख्यानामेकशब्दो-
ात्स्यादित्येकादशाधिकरणवक्ष्यमाणा प्रधानकालतन्त्रतोक्ता
शब्देनाङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मादेकदेश-
ति तदन्तरा गर्भिणीन्यायवक्ष्यमाणाङ्गाङ्गानां प्रधानकालतोक्ता
ःश्चेत्यनेन तुल्यानां तु यौगपद्यमेकशब्दोपदेशात्स्याद्विशेषाग्र-
देत्येकादशाधिकरणवक्ष्यमाणस्याङ्गानुष्ठानतन्त्रत्वस्य प्रधान-
तन्त्रत्वमन्तरेणासिद्धेरर्थाक्षिप्ता प्रधानप्रयोगतन्त्रतोक्ता काल-
न्यथात्वप्रयोगान्यथात्वापादकतौत्पत्तिकेत्यनेनोक्ता नन्वितरेत-
ानां साङ्गानां च करणत्वावगमात्तादृशानां कालसंयोगे
समुदायद्वयस्यापीतरेतरसाहित्यापत्तिः कालद्वये प्रयोगः
ऽनिष्टापत्तिं शङ्कते * ननु चेति * पौर्णमासीकाले ऽमावा-
ासमुदायप्रयोगो ऽमावास्याकाले वा पौर्णमास्याख्यसमुदाय-
। ऽन्यसाहित्यलभ्यत्वेनौपाधिकत्वादौपाधिकस्य त्वाकाङ्क्षां विना
ायोगात्कालद्वयप्रयोगे चोत्पत्तिवाक्यविहितैककालत्वविरोधा-
स्माद्वाक्यात्प्रयुज्यतइति परिहरति *अत्रेति* श्लोकं व्याचष्टे
ावास्या हीति * कालद्वयप्रयोगे व्यवस्थितकालत्वानिमित्त-
नान्तदर्शपूर्णमासशब्दवाच्यत्वायोगाद्यजिविशेषकत्वं न स्या-
र्शत्वमित्यनेन सूचितम्। ननु फलं भवत् भावयेदनेनेत्थमिति
विधिनाङ्गप्रधानयोर्युगपदनुष्ठानविधानात्प्रयोगविधिवशेनैवा-
प्रधानकालत्वसिद्धेरेतद्वाक्यमनर्थकमित्याशयेनाशङ्कते * आ-
ः फलभवनकालस्याप्रत्यक्षत्वेनाङ्गप्रधानकालपरिच्छेद्यत्वात्प्र- ४७२।१
ं चोत्पत्तिवाक्यालोचनेन प्रत्येकं कालयोगात् षट्सु पौर्णमा-
ास्यासु प्रयोगावगमात्तावत्कालानतिर्भावमात्रेणाङ्गानां प्रयो-
ावगतप्रधानकालत्वोपपत्तेरेकस्यां पौर्णमास्याममावास्यायां
ःप्रधानप्रयोगो नैतद्वाक्यं विना लभ्यतइति वक्ष्यमाणाशयेन प

रिहरति*उच्यतइति*मान्त्रवर्णिकमित्युपहासः कालस्य प्रयोगा
त्वात्प्रयोगस्य च साङ्गप्रधानविषयत्वादुत्पत्तिवाक्यावगतकालयो
नैवाङ्गप्रधानयोरेककालत्वावगतेरित्यन्तैककालत्वायोगाच्च सन्निकृ
कालत्वप्रतीतेर्दूरस्थानामङ्गानामनुपकारित्वावसायादेकस्यां पौर्णः
स्याममावास्यायां वा साङ्गप्रधानप्रयोगो ऽस्माद्भिनैव लभ्यतइत्
शयेनाशङ्कते * नन्विति * उत्पत्तिवाक्यस्थस्य कालस्य प्रयोग
ङ्गत्वात्साङ्गप्रधानविषयत्वानवगतेः सन्निकृष्टैरुपकर्त्तव्यमिति विं
तौ ऽनवगमान्न दूरस्थानामनुपकारित्वे किं चित्प्रमाणमस्तीत्याशं
परिहरति * सन्निकृष्टैरिति * ननु य इष्ट्वा पशुना सोमेन
यजेत सो ऽमावास्यायां पौर्णमास्यां वेत्यनेनैव पश्वादेः सद्यस्का
त्वायाग्नेयादीनां प्रकृतौ पूर्वेद्युरन्वाधानाद्यङ्गविचारितद्व्यहकाल
द्विकृतिष्वपि तत्प्राप्तेः सद्यस्कालत्वायेष्टिशब्दार्थवानित्याशयेन प
स्परसाहित्याङ्गसाहित्ययोः सिद्धेरेतद्वाक्यमनर्थकमित्याशङ्कते *
नु चेति * षण्णामप्यनेन साहित्यं स्यान्न त्रिकस्येति परिहर
* सत्यमिति * श्लोकंव्याचष्टे * न तावत्त्रिकस्येति * रूढित्व
दर्शनाय सोमाङ्गेषु दीक्षणीयादिषु दार्शिकपौर्णमासिकविद्वचन
प्रवृत्तेः सोमे ऽपीष्टेर्दर्शपूर्णमास्याख्याया विध्यन्तस्य प्रवृत्तिरि
पूर्वपक्षाभिधानार्थं सूत्रं पठितम्।नन्वेवं सति पौर्णमास्यमावास्याव
१२ क्याभ्यामेवेष्टप्रयोगसिद्धेरिष्टेत्यनर्थकं स्यादित्याशङ्क्य * प्रकृत
वित्युक्तम् । नन्विष्टिवाक्येनेष्टप्रयोगासिद्धावपि देशवाक्ये त्रिकद्व
यस्योत्पत्तिवाक्यावगतकालयोगनिमित्तभिन्नशब्दोपादानेनेतरेतरयो
गावगतसाहित्यविवक्षया स्वसमुदायिस्वाङ्गसाहित्यमात्रसिद्धेरि
ष्टप्रयोगः सेत्स्यतीत्याशङ्कते * नन्विति * देशान्वयनिमित्तेन सा
हित्येन कालान्वयसाहित्यानवगतेर्नैकैकस्य त्रिकस्य साङ्गस्यैककाल
त्वं सिद्ध्यतीति परिहरति * तत्रेति * श्लोकं व्याचष्टे * भेदेनापि
हीति * भेदेनापि प्रयुज्यमानानां देशं प्रतिसाहित्योपपत्तेरितरेतर
योगानुरोधात्कालतन्त्रत्वाभ्युपगमे च षण्णामेवैककाल्यापत्तेरुत्पत्ति
वाक्यानुरोधात्त्वितरेतरयोगाविवक्षायामन्योन्यानपेक्षाणां निरङ्गान
च्च कालयोगापत्तेर्न देशवाक्येनाप्यभिप्रेतप्रयोगसिद्धिरित्यर्थः
षट्स्वित्यनेन पूर्वं दृष्टान्तव्याजेनाग्नेयादेः प्रत्येकानुष्ठानापत्तिमङ्गान
च्च षट्पक्षान्तराले सकृदनुष्ठानापत्तिमुक्तामत्रापि योजयित्वा प्र
योगभेदविधानाभावादिहापि वा कर्मपृथक्त्वात्तेषां तन्त्रविधाना
त्साङ्गानामुपदेशः स्यादित्येकादशवक्ष्यमाणप्रतिप्रधानावृत्तिन्याया
भावे ऽप्यभ्युपेत्यवादेनाथ वेत्युक्तोत्पत्तिवाक्यावगतस्य पौर्णमा

कालत्वस्यामावास्याकालत्वस्य चैकस्यामपि पौर्णमास्याममावा-
यां वा प्रयोगे विरोधाभावाद्विरुद्धसमुदाययौगपद्यबाधे ऽन्य-
देयसमदेशान्वयावगतस्वसमुदायियौगपद्यबाधायोगमथ त्वि-
नाशङ्क्य तत इत्यनेनैवमप्यावृत्त्योभयसमीपे ऽङ्गप्रयोगस्येष्टस्या-
द्धेरित्युक्ते करणविभक्तिवशेनोभयोरपि समुदाययोरङ्गसामी-
गतेस्तत्सम्पत्त्यर्थमावृत्तिम् *आशङ्क्याथ वेत्युक्तम् * सकृदष्टा-
नवस्यां वाङ्गप्रयोगे समुदायद्वयस्य तुल्याङ्गसामीप्यसम्प-
न्तसामीप्यस्य चैकस्मिन्नप्यशक्यत्वान्नावृत्तिसिद्धिरित्याश-
। ननु फलवाक्येन साध्यसाधनेतिकर्त्तव्यताविशिष्टभावनावि-
नाङ्गप्रधानयोर्युगपत्प्रयोगविधानाद्यावता विलम्बेन विनानुष्ठा-
क्तिस्ततो ऽधिकस्य विलम्बस्य निवारणात्प्रधानकालएवाङ्गानु-
प्रतीतेरौत्पत्तिककालाविरोधाच्च समुदायद्वययौगपद्यानुपपत्तेः
ऽवाक्याभ्यां विनापीष्टप्रयोगसिद्धिरित्याशङ्क्याह * अनेनैवेति*
वाक्यस्य स्वरूपेण फलविधिमात्रार्थत्वाभ्युपगमादुत्पत्तिविनि-
वाक्यैकवाक्यतया च प्रयोगविधानार्थत्वाभ्युपगमात्फलवि-
स्वरूपेणेष्टप्रयोगसाधकत्वं प्रयोगविधित्वरूपेण वेति विकल्प्य
पक्षे ऽयमतिदेशः एतदेव विवृणोति * फलस्यापी-
* सिद्धे ऽपीत्यपिशब्दस्योत्कर्षो ऽन्यस्य चाध्याहारः प्र-
परत्वं विना प्रयोगतन्त्रासाधकत्वात्कालतन्त्रासाधकतेत्या-
:। द्वितीयपक्षाश्रयणेनाशङ्कते * अथेति * प्रयोगविधिमात्रा- ४७
ने षण्णामपि युगपदुपादानादिति पूर्वोक्तमेव न्यायेन समुदाय-
यौगपद्यापत्तेस्तस्याश्चौत्पत्तिवाक्यविरोधेन दोषत्वात्तदनुरोधे तु
कं कालयुक्तानामित्यादिपूर्वोक्तेनैव न्यायेन प्रत्येकं प्रधानप्र-
। ऽङ्गानां च षट्पक्षान्तराले क्व चिदहनि प्रयोगः साङ्गस्य वै-
स्य प्रधानस्य प्रयोगस्त्रिकयोर्वा कालभेदेन प्रयुज्यमानयोरेकस्य
चित्समीपे ऽङ्गप्रयोगः पक्षान्तराले वा क्व चिदहनीत्यत्रापि यो-
पत्तेः प्रयोगविधिरूपेणापि नेष्टप्रयोगसिद्धिरित्याशयेन परिहर-
* तत्रापीति * ननु फलभवनकाले ऽङ्गप्रधानयोर्युगपदनुष्ठानाव-
त्रिकद्वयस्यौत्पत्तिककालाविरोधार्थं कालभेदेनानुष्ठाने त्रिक-
स्याप्यङ्गयौगपद्याङ्गावृत्तेर्न्याय्यत्वादिष्टप्रयोगसिद्धिरित्याशङ्क्याह
चेति*फलभवनकालेनाङ्गप्रधानकालपरिच्छेदे फलस्वरूपोत्पत्त्या
अन्तरभाविन्यैककालयायोगात्फलापूर्वोत्पत्तिकालेन परिच्छेद्य-
त्तेस्तस्य च क्षणिकत्वेनाङ्गप्रधानयोरेकक्षणे ऽनुष्ठेयतापद्येताङ्गप्र-
कालेनैव तु फलापूर्वोत्पत्तिकालस्य परिच्छेद्यत्वात्तस्य चाद्यप-

दार्थारम्भात् प्रभृत्यासमाप्तेरेकत्वादुत्पत्तिवाक्यावगतपौर्णमास
मावास्याकालालोचनया यावन्तं षट्पक्षपरिमितं पक्षपरिमितं
कालं प्रधानानि व्याप्नुवन्ति तावतः फलभवनकालत्वात्तावत्कालत्व
त्तावत्कालमध्ये ऽङ्गेष्वनुष्ठितेष्वङ्गप्रधानाविषययौगपद्यासिद्धेरङ्गा
स्यनाक्षेपान्नेष्टप्रयोगसिद्धिरित्यभिधानायाङ्गप्रधानानीत्यङ्गशब्दे प्र
क्ते निरङ्गानां प्रधानानामुत्पत्तिवाक्ये कालविधानात्कथमङ्गानां
धानकालतेत्याशङ्क्य * प्रयोगेत्युक्तम् * प्रयोगविधिविहितः
साङ्गप्रधानप्रयोगस्यापि कालान्तराश्रवणादौत्पत्तिक एव काः
ऽवसीयतइत्याशयः । प्रत्येकं प्रयोगादियोजनां विवृण्वनुपसंह
तीतीति उत्पत्तिवाक्यमात्रानुरोधे तिसृषु पौर्णमासीषु त्रयाणां तिः
ष्वमावास्यासु त्रयाणां प्रधानानां प्रतिप्रधानमङ्गावृत्तिपक्षे साङ्
नामन्यथा यत्र क्व चनान्तराले चशब्देनाङ्गप्रयोगसूचनाच्छुद्धाना
पवर्गः प्रयोगोत्पत्तिद्वयालोचने द्वयोः पौर्णमास्यमावास्ययोस्त्रिक
यप्रयोगो ऽङ्गप्रयोगश्चैकसमीपे पक्षान्तराले वेति योज्यम्। कालवाक्य
नर्थक्यपरिहारमुपसंहरति * तस्मादिति * कालवाक्याभ्यामे
तर्हीष्टप्रयोगसिद्धेरुत्पत्तौ कालविध्यानर्थक्यमिति शङ्कते * नन्वि
ति * पौर्णमास्यमावास्याशब्दविषयज्ञानं प्रयोजनमित्याशयेन
रिहरति * कथमिति * एतदेव विवृणोति * पश्येति * श्लो
व्याचष्टे * पौर्णमासीति * उपसंहरति * तस्मादिति * भाष
५।१ कृतो ऽप्येतदेव प्रयोजनमभिमतमिति सूचयितुमाह * अत एवेति

विशेषदर्शनाच्च पूर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ॥ ४

यदि चेति भाष्येण समप्राधान्यनिरासार्थत्वेनैतत्सूत्रं पू
र्षां प्राकृतानां प्रयाजादीनां विकृतौ कृष्णलहोमादिविशेषदर्शना
सर्वेषां समप्राधान्यमित्येवं व्याख्यातं तच्च शब्दात् पूर्वसूत्रोक्ते ऽ
वादत्वे हेत्वन्तरसमुच्चयार्थत्वप्रतीतेरयुक्तमाशङ्क्योपपादयति * य
दि चेति * पूर्वपक्षप्रयोजनसमप्राधान्यनिरासद्वारा पूर्वपक्षनिर
सेनार्थात्सिद्धान्तसिद्धेश्च शब्दोपपत्तिरित्याशयः । समप्राधान्ये क
थं विकृतौ प्रयाजादिदर्शनानुपपत्तिरित्याशङ्क्याह * ततश्चेति
कर्मशास्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धन-
त्वादित्यष्टमाधिकरणे फलस्य स्वर्गस्य नियमस्य यावज्जीवताय
कर्तुः स्वर्गकामस्य समुदाययोराग्नेयादित्रयसाहित्यात्मकयोर्विकृतः
नन्वये कर्मणः करणभूतस्य विकृतावप्रवृत्तेर्हेतुतया वक्ष्यमाणात्व
त्प्रयाजादेरपि करणत्वे सत्यप्रवृत्तिः स्यादित्याशयः । अत इत्युपः

ाष्यं सिद्धान्तप्रयोजनोपसंहारार्थत्वेन व्याचष्टे * तस्मादिति *

गुणस्तु श्रुतिसंयोगात् ॥ ५ ॥

नैतदिति भाष्येण सिद्धान्तनिरासार्थतया तु शब्दो व्या-
स्तत्स्पष्टत्वादव्याख्याय श्रुतिसंयोगव्याख्यानार्थं तथेति भाष्यं
ष्टे * पौर्णमासीति * स्वयं श्रुतिसंयोगं व्याचष्टे * प्रत्यक्षे-
अस्मिन्व्याख्याने श्रुतिसंयोगशब्देन सिद्धान्ते कल्पनागौर-
धानात्पूर्वपक्षपक्षे तदभावमाह * सो ऽपि चेति * नानुमा-
भविष्यतीत्यनुषङ्गः । अनेकमित्यत्र नानुमातव्यमिति विपरि-
षङ्गः गुणशब्दं स्वयं तावद्विधित्वे ऽधिको गुणो ऽस्तीत्येवं व्या-
* समुदायेति * नन्विति भाष्येणारूपत्वेनापूर्वयोः कर्मणोर्वि-
म्भवं पूर्वसूत्रोक्तमनुभाष्य वाक्यान्तरेणेत्यादिना गुणो रूपं
ान्तरस्थपौर्णमास्यमावास्याश्रुतिसंयोगादवगम्यतइत्येवमावृत्त-
संयोगशब्दसहितो गुणशब्दो रूपत्वपरिहारार्थत्वेन व्याख्यात-
ाचक्षाणो ऽस्मिन्नपि पक्षे विद्वद्वाक्ययोर्दर्शपूर्णमासशब्दतात्पर्या-
णार्थत्वाभावात्तात्पर्यावधारणं च विना लाक्षणिकशब्दप्रवृत्त्य-
दर्शपूर्णमासशब्दयोराग्नेयवाक्यविहितकर्मद्वयनामत्ववद्विद्वद्वा-
हितकर्मद्वयनामत्वस्याप्रसिद्धेर्यजिविशेषकत्वायोगात् विशेषत-
स्मिन्पक्षे ऽष्टाकपालादिवाक्यैः कालाविधानात्पौर्णमास्यां पौर्णमा-
। वाक्यद्वयविहितकालयोगेन दर्शपूर्णमासशब्दप्रवृत्त्यभ्युपगमाप
त्र च तृतीयानिर्देशात्करणकृतयोः पौर्णमास्यमावास्ययोः का-
यप्रतीतेः करणत्वस्य च फलवाक्याधीनत्वात्फलवाक्यस्थाभ्यां
र्णमासशब्दाभ्यां विद्वद्वाक्यविहितयोः कर्मणोः फलान्वयावगमे
त्वात्कालान्वयः । कालान्वये सति फलान्वयात्करणत्वावगति-
तरेतराश्रयापत्तेर्दर्शपूर्णमासशब्दयोरप्रसिद्धार्थत्वेन यजिविशे-
वायोगात्प्रकृतयागमात्रस्य फलान्वयात्समप्राधान्यापत्तेर्विकृतौ
जादिदर्शनानुपपत्तिरित्याशङ्कां निरस्यति * प्रयाजादीति *
मोपान्त्ये सौर्यादौ लौकिकी पार्वणस्थालीपाकेतिकर्त्तव्यताग्रय-
लीपाकादौ दृष्टप्रवृत्तित्वेनातिदेष्टव्येति पूर्वपक्षिते बार्हस्पत्ये
बर्हिषो लुनातीति बर्हिषो लवनदर्शनं पितृयज्ञे च न होतारं
तइति होतृवरणनिषेधदर्शनं सौर्ये च प्रयाजे प्रयाजे कृष्णलं
तीति प्रयाजदर्शनं वैदिकेतिकर्त्तव्यतानतिदेशेन युज्येतेत्याश-
यापि वा न्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युरिति सूत्रेण
बर्हिर्लवनं प्रत्यक्षविहितं तत्रार्द्धविधिर्होतृवरणनिषेधो नित्यानु-

वादः प्रयाजवाक्यं कृष्णलविशिष्टप्रयाजविधानार्थमिति पूर्वपक्ष परिहरिष्यति सम्भवमात्रेण त्वत्र प्रकृतिस्थप्रयाजगुणविधिपक्षार्थं धानम् । यद्वावगतार्थविषयत्वाद्धींप्सायाः प्राप्ताभावे ऽनुपपत्तेर वचनोदाहरणत्वं भाष्योक्तं दूषयित्वा स्वयं प्रकृतिस्थप्रयाजानुव दत्वस्य लक्ष्यमाणत्वात्स्वाभिप्रायेणैतदुक्तम् । आद्यात्पूर्वपक्षात्भेद भिधानायैतावेवेत्येवकारः । नन्वष्टाकपालादिवाक्येषु पौर्णम स्यमावास्याशब्दयोः कालवाचित्वेन विद्वद्वाक्यविहितकर्मानुवादि शब्दाभावान्न तैरत्र गुणविधिः सम्भवतीत्याशङ्कानिरासार्थं यदि भाष्यं व्याचष्टे * अष्टाकपालादीति *

## चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ ६ ॥

चोदनाशब्दव्याख्यानार्थं कर्मचोदनाशब्दं गुणविधित्वनिरासार्थंत या व्याचष्टे * नैत इति * सूत्रशेषव्याख्यानार्थं कुत इति, भाष तात्पर्यतो व्याचष्टे * कुत इति * अप्राप्ते कर्मणि दृष्टस्यानेकगुणवि धिप्रकारस्य प्राप्ते कर्मण्यसम्भवाभिधानायोत्तरार्द्धं तावद्व्याख्या पीठिकां करोति * कर्मोत्पत्तीति * फलाद्यनुपादेयपरे वाक्ये कर्म विधावप्यनेकगुणविध्यसम्भवसूचनायोत्पत्तिशब्दः । ननु कार कैर्विना भावनाविध्यपर्यवसाने ऽग्निहोत्रादिवाक्ये कारकाश्रवणा विधिः स्यादित्याशङ्क्याह * तत्रेति * आत्मनो निष्पादकत्वेनांश भूततयावगतानि यानि कारकसामान्यानि तदन्यथानुपपत्त्या क रकविशेषाक्षेपात्स्ववाक्ये कारकाश्रवणे ऽपि विधिपर्यवसानं सम्भ वतीत्याशयः । अर्थापत्त्या कारकविशेषाक्षेपे तद्वाचिपदानर्थक्यम शङ्क्य * कारकविभक्त्यन्तेत्युक्तम् * तत् ईदृशं ह्येकं वाक्यं श्रुतं नुमिनेकदेशे निष्पन्नमग्नीषोमीयेण पशुना यजेतेति पशुसोमाधिव रणावसितकवक्ष्यमाणन्यायेनाग्नेयेनाष्टाकपालेन यजेतेत्यादिप्रकार घचनव्यक्त्याश्रयणात्सर्वत्र कारकविभक्त्यन्तताभिप्रेता यः कश्चि द्विशेषो ऽतीत्यनिर्द्धारितविशेषाक्षेपे ऽपि विशेषनिर्द्धारणार्थानि ' दान्तराणीत्याशयः । वाक्यादेवेत्यनेन स्ववाक्योच्चारणस्योत्पत्ति शिष्टबलीयस्त्वं प्रयोजनं सूचितम् । विशेष्यते भावनेत्यन्वयः । नन्वे मन्यमूर्त्तत्वेन जात्यादेः कारकत्वायोगाद्भावनान्वयो न स्यादित्य शङ्क्याह * प्रतिपदं चेति * द्रव्याश्रितत्वेनामूर्त्तस्यापि द्रव्यद्वार कारकत्वोपपत्तिरुक्ता । ननु पशुत्वादिजातेरादिशब्दोक्तस्य चारुण

ुणस्याभिक्रमणादिक्रियायाश्च श्रुतिलक्षणद्वारैकशब्दोपादानल-
ाया श्रुत्या लिङ्गसंख्ययोश्चैकपदोपादानलक्षणया श्रुत्या द्रव्या-
ात्तादर्थ्यप्रतीतेः कथं भावनार्थतेत्याशङ्क्य * एकेत्युक्तम् *
यादेर्द्रव्येण सह विशेषणविशेष्यभावे ऽपि जातिगुणयोः प्राति-
ृकार्थत्वात्प्रातिपदिकार्थकारकत्ववाचिन्या विभक्त्या संख्याया-
प्रत्ययार्थत्वेनैकाभिधानलक्षणया श्रुत्या लिङ्गस्यापि टाबादिप्र-
ार्थत्वात्प्रातिपदिकार्थत्वाद्वा यथासम्भवं कारकत्ववाचिन्या
या कारकत्वेन भावनार्थत्वप्रतीतेरभिक्रमणादेश्च धातुसम्बन्धा-
कारविहितणमुल्श्रुत्या धात्वर्थान्तरान्वयाभिधानात्तत्र वीप्सो-
। वृत्त्यन्यथानुपपत्त्यवगतसन्निपत्योपकारित्वेन कारकत्वावगत्या
वनार्थत्वप्रतीतेर्न द्रव्यशेषतास्तीत्याशयः । यथा द्रव्यस्य कारक-
ा भावनार्थत्वान्न जात्यादिशेषता तथा जात्यादेरपि न द्रव्यशेष-
ि परस्परशब्देनोक्तम् । नन्वेवमपि सन्निकृष्टपदान्वयमात्रेण भाव-
ेशिष्ट्यसिद्धेर्विप्रकृष्टपदानर्थक्यमित्याशङ्क्याह * एवमिति * का-
ात्मना भावनार्थतैवैवंशब्देनोक्तां व्याचष्टे * स चेति * ननु
ेशिष्टविधौ विशेषणानामपि विधेयत्वात्कथं नानेकशक्तिकल्पना-
तरित्याशङ्क्याह * तथा हीति * श्लोकं व्याचष्टे * विशिष्टाया- ४९
ति * ननु विशिष्टविधेः स्वार्थान्यथानुपपत्त्या विशेषणविधिकल्पकत्वे
ेषणे विहिते विशिष्टविधिर्विशिष्टे च विहिते विशेषणविधिरि-
तरेतराश्रयः स्यादित्याशङ्क्याह * विशेषणेति * पश्चात्कल्पस्यापि
ेषणविधेः प्राक्प्रवृत्तत्वेनैव कल्प्यत्वान्नेतरेतराश्रयापत्तिरित्याश
। श्लोकं व्याचष्टे * विशिष्टेति * एकस्यानेकशक्तिकल्पनापत्ति-
हारमुपसंहरति * तेनेति * विशेषणविशेष्यविधेरन्योन्यनैरपे-
ापर्यवसानाद्युगपद्व्यापारो गम्यते विशेष्यानुवादेन विशेषण-
धिना क्रमेण अप्राप्ते त्वित्युत्तरार्द्धं व्याख्यातमुपसंहरति *
ेति * प्राप्ते कर्मणीति * पूर्वार्द्धं व्याख्यातुमुपक्रमते * नेति *
देव प्रश्नपूर्वं दृष्टान्तेनोपपादयति * कथमिति * श्लोकं व्या-
ास्यन् दार्ष्टान्तिके ऽङ्गाकर्षणन्यायं योजयति * यदा हीति *
ेघातस्य नित्यमपादानापेक्षत्वात्तस्या इति पञ्चम्यन्तसापेक्षत्वे ऽपि
ासाविघातः प्रधाननयनन्यायस्तत्र नास्तीत्याह * विशिष्टेति *
प्राप्ते कर्मण्यनेकगुणविधानाशक्तावजया क्रीणातीत्यादिष्वनेक-
त्यादिविधिः प्राप्ते सोमक्रयादौ न स्यादित्याशङ्क्याह * त-
ते * यथानेककारकविशिष्टभावनाविधिना विशेषणभूताने- ५०
ारकान्निध्याक्षेपस्तथानेकजात्यादिविशिष्टकारकविधिना विशे-

षणभूतानेकजात्यादिविध्याक्षेप इत्यर्थः । नन्वेवं सत्यन
स्यापि द्रव्यदेवतारूपस्य कारकस्यैवाग्नेयपदोपादानात्पदान्त
पात्तस्यापि चाष्टाकपालस्य द्रव्यरूपैककारकत्वात्प्राप्ते व
णि विध्युपपत्तिरित्याशङ्क्याह * यदा त्विति * ए
पदोपात्तस्याप्यनेकस्य कारकस्य परस्परान्वयाभावेनैकविधि
तराविध्ययोगान्नैकयत्नेन विधिः सम्भवतीत्याशयः । एकस्यापि
कारकस्यानेकपदोपात्तस्यैकयत्नेन विध्यसम्भवे ऽनेकपदसम्बद्ध
स्यात्राधाराग्निहोत्राधिकरणवार्त्तिके साधयिष्यते । दार्ष्टान्ति
ऽङ्ककर्षणन्यायं योजितमुपसंहरति * एवं चेति * अत्रैव सूत्र
यवं योजयति * तदिति * भाष्यकृता सूत्रानुक्तविशेषणोक्तौ
योजनमाह * परस्परेति * दृष्टान्ते श्लोकं व्याचष्टे * लोके
चेति * अमात्येन गन्तव्यमिति सकृदुच्चारणव्यापारे सेनान्यादि
मनहेतुप्रयत्नान्तरोपादानाशक्तेरुच्चारणावृत्तिः स्यादिति दृष्टान्त
र्यवसानं श्रुतिशब्दः श्रुतिहेतूच्चारणलक्षणार्थः । यदि तावदित्या
स एवाग्निरष्टाकपालस्य नान्यस्येत्यन्तस्य प्राप्ते कर्मण्यनेकगुण
धावुच्चारणावृत्तिलक्षणवाक्यभेदाभिधानपरत्वं तावदाह * ए
मिति * एतदेवावयवशो व्याचिख्यासुर्यदि तावदित्यादिभा
व्याचष्टे * यदीति * कर्मान्वयितया ऽष्टाकपालविधौ अष्टाक
लस्वरूपकर्त्तव्यत्वस्यापि क्लेशलभ्यत्वादाग्नेयान्वयरूपार्थान्तर
धानं दूरोत्सादितमित्यर्थः । अर्थान्तरविध्यशक्तौ तदानीमिति
ष्यावयवं योजयति * तदाहेति * अथाग्नेयइति भाष्यं न त
ग्नेयः सत्तया सम्बध्यतइत्यर्थो लभ्यतइत्यनुक्तत्वान्नन्यूनमाशङ्क्य
१ * अथेति * अथ पौर्णमास्यामित्यथ तस्यामिति च भाष्यद्वय
कहेलया व्याचष्टे * एवमिति * केन अष्टाकपालो विहित इ
नूद्यमानाष्टाकपालोत्पत्तिर्निरस्ता केन तस्याविहितइति चावृत्त
तस्य पौर्णमास्यन्वयो निरस्तः । विधीयमानाग्नेयोत्पत्तिनिरासः
प्राग्वत्सिद्ध इतरत्राप्यनूद्यमानाग्नेयोत्पत्तिपौर्णमास्यन्वयविधी
मानाष्टाकपालोत्पत्तिनिरासः । स एवोत्पत्तिदेशे ऽनेनोक्तः । र
सत्यपि क्लेशेन तद्विधीनभ्युपगम्याग्नेयस्याष्टाकपालस्य चाष्टा
पालेनाग्नेयेन वान्वयविधावतिगौरवं स्यादित्यर्थः । अथ पौ
मासीति भाष्यं व्याचष्टे * पौर्णमासीपदेति * द्रव्यदेवतोभय
रूपकर्त्तव्यता पूर्वोक्तात्रापि योजिता । ननु पौर्णमास्याख्याक्रियान्व
द्वारः परस्परान्वयो भविष्यतीत्याशङ्क्याह * न चेति * द्रव्य
वताविशिष्टपौर्णमासीविधौ सत्युभयविशेषणवशीकारं विनोभ

ष्टत्वायोगादेकक्रियावशीकारात्परस्परनियमः सिद्ध्येत्तस्य त्व-
वेन बुष्टत्वाद्या पौर्णमासीत्यनूद्य तस्यामाग्नेय इत्युक्ते ऽष्टाक-
नुरागाप्रतीतेस्तस्यामष्टाकपाल इत्युक्ते चाग्नेयानुरागाप्रतीतेर्न
द्वारा द्रव्यदेवतयोः परस्पराम्वयः सम्भवतीत्यर्थः। अथ द्रव्य-
इति भाष्यव्याख्यानपूर्वमथ केन चिदित्याशङ्काभाष्यमवतार-
* एतदिति * परस्परासम्बन्धपरिहारार्थं प्रागेव द्रव्यदे-
ाः परस्परसम्बन्धं कुर्वन्नन्यतः सिद्धं द्रव्यस्य देवतासबन्ध-
त्युक्तम्। ननु द्रव्यदेवतान्वयविधिपूर्वककर्मान्वयाविध्यभ्युपगमे
द्रव्यदेवतान्वयसिद्धेरनुवादाभिधानं किमर्थमित्याशङ्क्यान्यतर-
न्धितया ऽन्यतराविधिर्द्वयोर्वा युगपदिति विकल्पद्रव्यसम्ब-
या देवताविधौ देवतासम्बन्धितया द्रव्यविधौ उभयोर्द्रव्यदे-
ः स्वरूपविधिः सम्बन्धविधिश्चेति क्लेशे युगपत्वितरेतरनैरपे-
भयविधौ परस्परसम्बन्धक्लेशमनुभूय पौर्णमासीसम्बन्धक्ले-
त्तत्परिहारार्थमित्युक्तमिति तच्छब्दाक्षिप्तयच्छब्दाध्याहारेणैक-
या योज्यम्। अवतारितभाष्यस्य परव्याख्यामुपन्यासपूर्वकं दू-
* तत्रेति * परस्वहरणमेव तावन्निषिद्धत्वादयुक्तं विशेषतो
ः सुतरामनपवृक्तकर्मण इत्यर्थः। केन चिदाग्नेयमष्टाकपालं
द्रुक्काम इत्यादिवाक्येन विधानात्सङ्कल्पविषयीकारित इत्येवं
न व्याचष्टे * तस्मादिति * रुक्कामेष्ट्यां विहितस्य पुरोडा-
तत्र त्यक्तस्यान्यत्रात्याज्यत्वेन साधारणयायोगादाच्छिद्य वि-
रुक्कामेष्ट्यसिद्ध्यापत्तेः पौर्णमास्यां विध्ययोगे ऽपि पुरोडाशा-
प्र चाग्निनोपलक्षणायोगे ऽपि यो ऽष्टाकपालो ऽन्य-
रतया विहितः स पौर्णमास्यां भवतीत्यष्टाकपालत्वसाम्या-
ाशान्तरस्याप्युपलक्षितस्य पौर्णमास्यां विधिरित्याशयः।
ति परिहारभाष्यमाग्नेयपदान्वयेनैवाग्निदेवत्यत्वसिद्धेरयुक्त-
चोपपादयति * तत्राहेति * अष्टाकपालस्य पौर्णमासीस-
विध्यर्थमुपलक्षणायाग्नेय इति शब्दो वाचको ऽस्येति व्युत्पत्त्या-
ब्दोक्तस्याग्नेयत्वस्यानूद्यमानात्वात्पौर्णमासीगतस्याष्टाकपा-
नाग्निदेवत्यत्वसिद्धिरित्यर्थः। सिद्ध्यर्थमिति पाठेतूपलक्षणभू-
सम्बन्धसिद्ध्यर्थमिति व्याख्येयम्। अथेति भाष्येणोपलक्षणार्थ-
्रधानार्थतामप्याग्नेयशब्दस्याशङ्क्य स वक्तव्य इत्यनेन वैश्व-
देवत्वात्सकृदुच्चरितस्याग्नेयादिशब्दस्य विध्यनुवादत्वासम्भ-
रिहृतं तद्व्याचष्टे * युगपदिति * कल्पयिष्याम इति भा-
ाकपालस्य पौर्णमासीयागान्वये विहिते देवतां विना द्रव्य-

स्य यागान्वयायोगाद्देवताकाङ्क्षायामुपलक्षणत्वेन बुद्धिस्थस्याग्ने
वतात्वकल्पनमाशङ्क्य नासतीत्यनेन यस्य वाचकं शब्दमुद्दि
स्मृत्वा वा हविस्त्यक्ष्यामीति सङ्कल्पः क्रियते सा देवता भवत
विधिशब्दाधिकरणवक्ष्यमाणलक्षणेन त्यज्यमानद्रव्यसम्बन्धापे
प्रवृत्तित्वात्मकसम्बन्धिशब्दत्वाद्देवताशब्दस्य गुर्वादिशब्दस्याध्य
पनादिक्रियाजन्याध्याप्याद्यवच्छिन्नाध्यापयित्रादिगतातिशयवाचि
त्वावगतिवत्त्यागोद्देशक्रियाजन्यद्रव्यावच्छिन्नाग्न्यादिगतातिशयव
चित्वावगतेर्विधानं च विनाग्न्यादेर्द्रव्यत्यागोद्देश्यत्वप्रमाणाभावे
द्देशक्रियाजन्यातिशयभाक्त्वायोगान्नाग्न्युद्देशेन द्रव्यत्यागविधिं
नाग्नेर्देवतात्वसिद्धिरित्युक्तम् ।

तदर्थो यादृशो यत्र देवतात्वेन चोदितः ।
मनागपि ततोऽन्यत्वे देवतेति न गम्यते ॥

इतिस्तुतशस्त्राधिकरणवार्त्तिके व्याख्यातमितीतिकरणे
सूचितम् । एवं तर्हि योऽष्टाकपालस्तयान्यत्राग्नेयो विहितः स पौर्ण
मास्यां भवतीत्यन्यतः सिद्धं देवताया द्रव्यान्वयमनूद्य कर्मान्वय
मात्रविधानादवाक्यभेदो भविष्यतीत्याशङ्क्य कर्मविधिं विना न क
चिद्वाक्यभेदपरिहारः सम्भवतीति दर्शयितुमाह * अनेनैवेति *

नियोगेन विकल्पेन द्वे वा सह समुच्चिते ।
सम्बन्धः समुदायो वा विशिष्टावेकयेतरे ॥

इत्यनेन न्यायेन बहुप्रकारावचनव्यक्तीराशङ्क्य देव
तानुपलक्षितद्रव्यमात्रविधौ द्रव्यानुपलक्षितदेवतामात्रविधौ वा
न्यतरपदानर्थक्यापत्तेर्यथा देवतोपलक्षितद्रव्यस्यैव विद्धद्वाक्य
विहितकर्मान्वयविधौ विधिं विना देवतानवगतेरुपलक्ष
णार्थत्वेनोपचरितस्याग्नेयशब्दस्याविधित्वकल्पने सकृदुच्चरितवि
ध्यनुवादत्वायोगेनोच्चारणावृत्तिलक्षणो वाक्यभेदस्तथा द्रव्योपल
क्षिताया देवताया एव विधौ द्रव्यस्यापि विधिं विना कर्मान्वया
सिद्धेरुपलक्षणार्थस्याष्टाकपालशब्दस्य विधित्वकल्पनेऽपि द्रव्यं
वा देवता वा विधीयतइत्यस्मिन्पक्षे विकल्पेनान्यतरस्योपलक्षणार्थ-
स्य विधित्वकल्पनवाक्यभेदः । द्रव्यं देवता चेति समुच्चयपक्षे स्पष्टो
वाक्यभेदः द्रव्यदेवतासम्बन्धसमुदाययोर्विधौ सम्बन्धो हि विधी-
यमानः सम्बन्धिनं तावदाक्षिपेत्तादर्थ्ये पुनः स विधातव्य एवं
सम्बन्धी अन्यथासम्बन्धस्यैवं सम्बन्धी शेषः स्यान्न क्रियाया इत्या-
धाराग्निहोत्राधिकरणवक्ष्यमाणन्यायेन द्रव्यदेवतयोरपि विध्यापत्ते-
र्वाक्यभेदः अन्यतरविशिष्टान्यतरविधावपि द्रव्यदेवतयोर्भिन्नकार-

त्कारकयोश्चान्योन्यविशेषणविशेष्यभावाभावेनैककारकविशि-
रकान्तरविध्ययोगादेकस्वरूपविशिष्टान्तरस्वरूपविध्यभ्युपगमे
रोन्यविशेषणत्वप्रसङ्गाद्धात्वर्थे पुनः स विधातव्य सम्बन्धी-
र न्यायेन क्रियाङ्गत्वासिद्ध्यर्थं विशेषणस्यापि विध्यापत्तेर्वाक्य-
प्रपञ्चयितव्य इत्यर्थः।एते पक्षाः पुनर्योज्या व्यतिकीर्णाः परस्पर-
न्यायेन वचनव्यक्त्यानन्त्याद्वाक्यभेदानन्त्याभिधानं पौर्णमासी-
स्योपलक्षणार्थत्वेनामवास्याया अनुवादेनापि द्रव्यदेवताविधा-
निरस्तत्वात्किं तद्वाग्नेयादिवाक्ये विधीयतइत्याशङ्कायां तस्मादि-
भाष्यं व्याचष्टे * तेनेति * विद्वद्वाक्यविहितएव कर्मणि द्र-
वतासम्बन्धो विधीयतामित्याशङ्कानिरासार्थं स एष इति भाष्यं
ष्टे * न चेति * यजतिस्तु द्रव्यफलभोक्तृसंयोगादिनेव न्या-
योगं विना द्रव्यदेवतान्वयायोगाद्यागापेक्षायां वाक्यान्तरप्राप्ते
द्रव्यदेवतान्वयविधौ सम्बन्धो विधीयमान इत्याधाराग्निहो-
करणवार्त्तिकोक्तन्यायेन द्रव्यदेवतयोरपि विध्यापत्तेर्वाक्य-
सङ्गादस्मिन्नेव वाक्ये द्रव्यदेवताविशिष्टयागविधानात्स एव
भवतीत्यपरोक्षवाचिनैषशब्देन वाक्यान्तरविहितात्परोक्षा-
द्भेदः सूचित इत्याशयः।एवं तर्ह्याग्नेयादिवाक्यविहितं यागा-
व विद्वद्वाक्यविहितयोर्यागयोः पौर्णमास्यमावास्याशब्दोक्त-
त्वेन विधीयमानं रूपं भविष्यतीत्याशङ्कानिरासार्थं तेनेत्या-
ष्यं व्याचष्टे * कर्मान्तरत्वे चेति * आग्नेयादिवाक्यस्थयोः पौ- ४८
स्यमावास्याशब्दयोः श्रुत्या कालार्थत्वप्रतीतेर्लक्षणाहेत्वभा-
युक्तमप्याग्नेयादिवाक्यविहितानां यागानां विद्वद्वाक्यविहि-
ाङ्गत्वं प्रौढ्याभ्युपेत्य यागस्य यागान्तरव्यवच्छिन्नरूपयागप्र-
कत्वायोगात् रूपत्वाभावो भाष्यकृतोक्त इत्यवयवव्याख्यया
तं श्रुत इति सिद्धान्तोपसंहारभाष्यं व्याचष्टे * इतीति *
सूत्रस्थश्रुतिसंयोगशब्दव्याख्यानार्थे तथा न लक्षणाशब्दो
यतीति भाष्येणार्थादुक्तं विद्वद्वाक्यस्थयोः। पौर्णमास्यमावा-
ब्दयोराग्नेयादियागसमुदायपरत्वे लाक्षणिकं दोषं यत्त्विति-
णानुभाष्य तत्परिहारार्थं नैष इति भाष्यं व्याचष्टे * अष्टश्चे-
: एकवचनान्वयाय समुदायलक्षणा श्रुत्यर्थान्वयायोगादग-
यणीयेत्यर्थः। कालवाचिभ्यां पौर्णमास्यमावास्याशब्दाभ्यां
क्षणा त्वत्पक्षे ऽपि तुल्येति सूचनायादिशब्दः। यत्तु स्वयं श्रु-
दव्याख्यार्थे प्रत्यक्षश्रुतश्च यजिनं द्रव्यदेवतासम्बन्धाक्लेशेना-
व्यो भविष्यतीत्युक्तम् तत्परिहरति * किं चेति * भावनैकविषय-

त्वाद्विधेर्द्रव्यदेवतान्वयं विदधताग्नेयादिवाक्ये तत्तदवच्छिन्नाथ
वनाया एव विधेयत्वाद्व्यापारस्य च व्यापारान्वयं विना भावना
द्कत्वायोगादपुंव्यापारत्वेन च भवत्युक्तस्य व्यापारस्य पुम्प्रयत्न
पर्यायभावनावच्छेदकत्वायोगाद्भवत्युक्तक्रियातो ऽन्यक्रियायोग
वे वाक्यासमाप्तेरसमाप्तस्य चार्थाभावेनार्थद्वारवाक्यान्तरान्व
शाच्च वाक्यान्तरे प्रत्यक्षश्रुतो ऽपि च यजिराग्नेयादिवाक्ये ऽन्वी
त्यर्थः । श्लोकं व्याचष्टे *अष्टाकपाल इति* यत्तु स्वयं पूर्वपक्षसूत्र
णशब्दव्याख्यानार्थं समुदायानुवादत्वाच्चः विधित्वं गुणवत्तरमि
तत्परिहर्तुमाह * अनुमिते चेति * प्रकृतप्रत्यभिज्ञानाद्यच्छब्द
न्धेन वानुवादसरूपत्वादनुवादतैवेह गुणवत्तरेत्याशयः । नतु
स्यापि यच्छब्दोपबन्धे यदाग्नेयो ऽष्टाकपाल इत्यादिवद्विधिशक्ति
ङ्क्याह * क्रियेति * न वलोप इत्यत्र यच्छब्दस्य विधिशक्ति
बन्धकनिरासात्कथं विद्वद्वाक्ययोरनुवादसरूपता यादृशी क्रिय
कुर्यादिति क्रियारूपानुवादे ऽपि कर्त्तव्यत्वाननुवादत्वेन क्रियास
नाधिकरणस्य यच्छब्दस्य विधिशक्त्यप्रतिबन्धकत्वे ऽपि कर्तृस
नाधिकरणं कर्त्तव्यत्वानुवादित्वाद्विधिशक्तिं प्रतिबध्नातीत्याश
वृद्धवाक्येनैतदेव द्रढयति * तथा चेति * रुजेर्नाशापरपर्या
ङ्गवाचित्वान्न नाशयेदित्यर्थः ।

## व्यपदेशश्च तद्वत् ॥ ७ ॥

भाष्यकारीयव्यपदेशशब्दस्य पौर्वापर्यविषयतया व्याख
द्वितीयपूर्वपक्षनिरासार्थं सम्भवविषयत्वोपलक्षणार्थं चेत्याह *
ष्टिरिति * यद्येको यागो ऽमावास्यायामिति विग्रहेण द्वितीयपूर्व
निरासार्थतोक्ता संहत्य युगपद्भावो धारणं निष्पादनं पौर्वापर्यं
द्वन्द्वैकवद्भावः । यागैक्ये ऽपि हविर्भेदादुभयोपपत्तिमाशङ्क्य *
साय्येत्युक्तम्* यागैक्ये सत्याग्नेयस्यैन्द्रस्य सान्नाय्यस्य दध्नः पर
वा विकल्पः स्यादित्यर्थः । व्यतिरेकमुखेन श्लोकं व्याचष्टे *कर्मो
आद्यपूर्वपक्षे पौर्वापर्यविवक्षायां देवतान्वयाविवक्षयेन्द्रत्वविशे
णाविवक्षां मत्वा व्याख्याविभवार्थं स्वयमुत्तरइति द्विवचनवि
त्वेन व्यपदेशशब्दं व्याचष्टे*प्रथमेति*पूर्वपक्षद्वये ऽपि सर्वेषां स
प्राधान्येनाग्नेयादेः प्राधान्यलक्षणसाधकतमत्वरूपतैक्ष्ण्यशब्दवाच
ग्रत्वाभावादुग्रत्वविषयतयापि व्यपदेशव्याख्यानं च शब्दात्सूच्यत

।।२

## लिङ्गदर्शनाच्च ॥ ८ ॥

पूर्वपक्षद्वये ऽपि श्रुत्यर्थाभ्यां लिङ्गानुपपत्तिमाह कर्मान्तरेति * पञ्च प्रयाजा द्वावाज्यभागौ स्विष्टकृ-
ो ऽनुयाजा इत्याहवनीये यजिचोदिताङ्गाहुतीनामेकादशसंख्य-
द्विद्वाक्ययोः कर्मान्तरविधित्वपक्षे पौर्णमास्यां प्रधानाहु-
चतुष्ट्वात्पञ्चदशसंख्यापत्तेरमावास्यायां या च प्रधानाहुतित्रि-
च्चतुर्दशसंख्यापत्तेराधिक्यात्तयोरेव कर्मविधित्वपक्षे प्रधानाहु-
त्येनोभयत्र द्वादशसंख्यापत्तेन्यूनत्वाच्छ्रुतसंख्यानुपपत्तिरित्यर्थः
ैक्यपक्षे न्यायेनाग्नेयादिवाक्यविहितानां प्रधानाहुतीनां वि-
त्पापत्तावपि दशभिः क्रीणातीतिवच्चतुर्दशत्रयोदशवचनपर्या-
चनया समुच्चयावगमाद्याज्यानुवाक्याक्रमाच्चाहुतिपौर्वापर्यो-
त्तेर्लिङ्गव्यपदेशोपपत्तिमाशङ्क्य सिद्धान्तपक्षेणानुवादतयाऽप्युप-
स्य चतुर्दशत्रयोदशवचनस्य विधित्वकल्पनायोगाद्विधित्वे च
ान्याहुतीनामेवैतत्संख्यत्वापत्तेरभ्यासलक्षणापत्तेश्च नैतत्समर्थनं
कमिति अनुवादशब्देन सूचितम्। ननु सिद्धान्ते ऽप्यसोमयाजिनः
र्णमास्याम् अग्नीषोमीयाभावादमावास्यायां च सान्नाय्याभावाल्लि-
नुपपत्तिरित्याशयेन पृष्टोत्तरमाह * कुत इति * सोमयाजिवि-
त्वात्पौर्णमास्याममावास्यायां तु सोमयाजिनः सान्नाय्यद्वयस्य
प्रतिपन्नदेवतात्वेनैकाहुतित्वादसोमयाजिनो ऽप्यैन्द्राग्नस्य पुरो-
ाशस्य सान्नाय्यद्वयस्थाने विधानेनैककर्म्यादेवैकाहुतित्वावगतेः सदा
ानाहुतिद्वित्वाल्लिङ्गोपपत्तिरित्याशयः । अधिकरणार्थमुपसंह-
ति * तस्मादिति * सुखग्रहणार्थं वृद्धानामधिकरणार्थसंग्रह-
ोकं पठति * आहेति *

उपांशुयाजापूर्वताधिकरणम् ॥ ४ ॥

## पौर्णमासीवदुपांशुयाजः स्यात् ॥ ९ ॥

ननु सापवादाभ्यासचिन्तायाः समाप्तत्वात्संख्यादिनिमित्ते
र्मभेद चिन्त्ये मध्ये चिन्तान्तराण्यसङ्गतानीत्याशङ्क्य साधारणीं
ङ्गतिमाह * इदानीमिति * उपांशुयाजाघाराग्निहोत्रपशुसोम-
क्यानां वाक्यान्तरविहितसमुदायानुवादत्वे सत्युपांशुयाजा-
कर्मभेदो विधित्वे त्वभेद इति भेदाभेदफलत्वाल्लक्षणस-
तेः सूचिता अधिकरणत्रयमध्ये ऽप्यस्य प्राथम्यसिद्धौ वैशेषि-
सङ्गतिसूचनपूर्वकं सूत्रं व्याचक्षाणः पूर्वपक्षमाह * तत्रेति *
णवादिवाक्यैर्यागविधानुपांशुयाजत्रयापत्त्या पौर्णमास्यां षोड-
ाहुत्यापत्तेर्लिङ्गदर्शनाक्षेपेण पूर्वपक्षोत्थानादुपांशुयाजचिन्ताया

धेऽपिक्यनन्तरसङ्गतिस्तावच्छब्देन सूचिता विष्णवादिवाक्ये
धेयत्वयोग्यस्वप्रधानभूतयागाश्रुतेः प्रकृतयागाभावात्पौर्णमासं
वायोगं कुत इति भाष्येणाशङ्क्य नामसम्बन्धादित्यादिन
द्भावोपपादनं कृतं तन्नोपांशुयाजशब्दस्य नामधेयतायाः स्वान
त्वात्संज्ञावच्छेदनिमित्तमुपेक्ष्याऽरूपत्वप्रकृतयागसद्भावनिमित्तं
द्भावं व्याचष्टे * कुत इति * श्लोकं व्याचष्टे * एतेषु तावदिति
व्यक्य विधिवाचित्वादुपसर्जनत्वेनापि निर्दिष्टस्य यागस्य
त्कृष्य विधेयत्वोपपत्तिसूचनार्थं तव्येत्युक्तम्। यजतीत्यस्य वर्त्त
पदेशत्वान्नैकान्तिकविधितेति तावच्छब्देन सूचितम्। विष्णवा
क्यानां विधित्वाभावे ऽप्यन्तरालवाक्ये रूपाज्ञानसाम्यात्त
केवलं रूपाज्ञानं किं त्वदृष्टान्तरकल्पनं च प्राप्तमिति योज्यम्
त्तरीयकशाखायामुपांशुयाजमन्तरा यजत्यजामित्वायेत्यन्तरा
क्ये ऽप्यजामिकरणार्थवाददर्शनाद्भाष्यकृतोपेक्षितमपि हेत्व
मुदाहृते वाक्ये तादृगर्थवादादर्शनात्स्वयमाह * किं चेति * विष
दिवाक्येषु प्रत्येकमजामिकरणावगतेस्तदेकविषयत्वेन जामिदं
त्केरपि विष्णवादिवाक्यविषयस्तुत्यर्थत्वावगमात्तस्याश्चोपक्र
त्वात्तदनुरोधेनोपसंहारस्थास्यापांशुत्वविशिष्टयागविधेरपि वि
दिवाक्यप्रतिपाद्यतावसीयत इत्याशयः । जामिदोषोपक्रममुपन
नमित्यर्थः । सहार्थतृतीययोक्तः श्लोकं व्याचष्टे * यथोपक्र
ति * जाम्युपन्यासाजामित्वयोरेकविषयत्वेनाजामित्वस्य वि
दिवाक्योक्तयागविषयत्वाज्जामित्वस्याप्युपक्रमस्थस्य सन्दि
वाक्यशेषादित्यनेन न्यायेन तद्विषयत्वावगतेरुपसंहारस्थस्य
रुपक्रमानुसारित्वस्य न्याय्यत्वादिति विष्णवादिरुक्ता एव वि
इत्यर्थः । जामिदोषेण सहोपन्यसनमिति योजनसूचनायोपन्यास
ब्दः । समुदायानुवादव्यवहितस्यापि जामित्वस्यानुवादेन स्तुते
पेक्षितत्वेनासम्बन्धाद् ।

यस्य येनार्थसम्बन्धो दूरस्थस्यापि तेन सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥

इत्यनेन न्यायेनापेक्षावशाद्विधिवाक्यान्वयो ऽनेकैरपि वै
नन्तर्येणान्वयो न विरुद्ध इत्याशयः । यागत्रयस्योपांशुत्वाद्येकधर्म
गात्समुदायाकरणे शक्ये ऽप्यनुवादानर्थक्यमाशङ्क्याह * समु
र्यति * अन्यथा कालवाक्ये ऽग्नीषोमकीर्त्तनात्तद्देवत्यस्योपांशुया
कालान्वये सति विकल्पाक्यस्थेन पौर्णमासीशब्देनानुवादात्फल
क्यस्थेन पूर्णमासशब्देन फलान्वयात्प्राधान्यावगतेर्वैष्णवप्राजाप

रङ्गत्वं स्यादित्याशयः । नन्वित्याशङ्काभाष्यमाक्षिपति * नन्विति * माधत्ते * नैष इति * नैवं जातीयक इति परिहारभाष्यमवतार- र् व्याचष्टे * अत इति * नाम्नो ऽप्युपांशुत्वगुणकयागत्वानिमि- त्वादकृतकत्वस्य तद्वाचकत्वापत्तेः पक्षद्वयसाम्येनादोषत्वशङ्का- रासार्थमव्युत्पन्नास्त्विति भाष्यं व्याचष्टे * व्युत्पन्नेति * नन्वि- शङ्काभाष्याशयं व्याचष्टे * नन्विति * माभूदिति परिहारभा- शयमवतारणापूर्वं व्याचष्टे * तदिति *

## चोदना वा प्रकृतत्वात् ॥ १० ॥

सूत्रं व्याचष्टे * कर्मेति * विष्णवादिसंयुक्तानां भिन्नवा- त्वाभावे ऽप्यवान्तरपदसङ्घविषयो वाक्यशब्दः विष्णवादिवा- नामविधायकत्वं न हीत्यादि भिद्येत वाक्यमित्यन्तभाष्योक्तया त्योपपादयति * यथेति * तथात्रापि न पृथग्विधित्वप्रतिप- रित्यध्याहारेण नानेकादृष्टकल्पनानुबन्धिविध्यभ्युपगमो युक्त ते व्यवहितान्वयेन वा पूरणीयम् । ननु वैश्वानरं द्वादशकपालं वपेदित्युपक्रान्ताया वैश्वानरेष्टेर्यस्मिन्जातएतामिष्टिं निर्वपतीत्यु- संहारेणैकवाक्यत्वावगमाद् दृष्टत्वादियुक्तानां शब्दानां पृथग्विधि- योगो ऽप्यत्र जामित्वोपक्रमादजामित्वोपसंहाराच्चैकवाक्य- नवगतेर्न तत्तुल्यतेत्याशङ्क्यैकं हीदं वाक्यमिति भाष्योपपादित- कवाक्यत्वं प्रपञ्चयितुम् * जामि वा इत्युक्तम् * सोदर्यवाचि- मिशब्दलक्षितस्य सादृश्यस्य नैरन्तर्यानुष्ठाने सत्यालस्यापादकत्वे- दोषत्वात्तत्कीर्त्तनस्य च निषेधाश्रुतेर्निन्दापर्यवसायित्वायोगादा- ङ्क्षावशेनाजामित्वकरकर्मस्तुत्यर्थत्वावगमाज्जामित्वोपन्यासयो- कवाक्यतावसीयतइत्याशयः । ननु जामित्वाजामित्वोपन्यास- रेकवाक्यत्वावसाये ऽप्यजामित्वस्य विष्णवादिवाक्योक्तयागाविष- त्वात्तदेकवाक्यतया जामित्वस्यापि तद्विषयत्वावगतेस्तस्य चोपक्र- स्थत्वात्तदनुसारेणोपसंहारस्थस्य विधेरपि तद्विषयतावसीयतइ- शङ्का कः पुनरित्यादिभाष्योक्तार्थवादस्यान्तरालवाक्योक्तयाग- षयत्वाद्विधेरपि तद्विषयत्वमुपपादयितुम् *जामिता चेत्युक्तम् * ५ भ्यन्तवैश्वानरवाक्यवदत्रापि वाक्ये विध्यैक्यावसायान्न पृथक् धित्वध्याहारेण नानेकेति व्यवहितान्वयेन वा पूरणीयम् । नन्वेव- पि विष्णवादिवाक्येषु लव्यप्रत्ययेनैकान्तिकाविधित्वावगमात्पृथ- विधित्वापत्तिरित्याशङ्क्य तस्मिन्क्रियमाणइति भाष्योक्तं विधि- नादरमुपपादयितुम् * विष्णवादीत्युक्तम् * न हीत्यनेन विधि-

त्वानपेक्षोपपादिता विष्णवादियुक्तगतस्याजामित्वस्य जामितया
सति विष्णवादियुक्तविधेस्तथान्वयः स्यान्न त्वजामित्वस्य विष्णवा
क्तगतत्वं सम्भवति विष्णवादियुक्तानामन्तरालसंयोगाभावेन
त्यनर्हत्वादित्याशयः । नन्वन्तरालयुक्तस्याप्यजामित्वान्वयाः
विधानार्हतास्तीत्याशङ्क्य तत्र व्यवधानादिति भाष्योक्तमन्तरा
योगेनैवाजामित्वान्वयावगमाज्जाम्युपक्रमेण वाक्येन विधाना
विवरीतुम् * अन्तरालेत्युक्तम् * विष्णवादिवाक्यानां यागवि
यकत्वमेवापि चेति भाष्योक्तेन युक्त्यन्तरेणोपपादयति *
चेति * विष्णवादिवाक्यैर्यागविधौ सति विष्णवादिदेवताया य
न्वये श्रुतेन विधिना कृते यागो ऽर्थाद्देवतां प्रत्युपसर्जनभूतो
धेयः स्यात्तच्चान्तरालवाक्येन श्रुते चकारात्स्वप्रधानभूते
विधेये सम्भवत्ययुक्तमित्यर्थः । अनेन चार्थाक्षेपाधीनत्वेनोपसर्ज
तस्य देवतासंस्कारकत्वापत्तेरविनियुक्तायाश्च देवतायाः संस्क
त्वायोगाद्देवताविधिसापेक्षत्वेन यागविधेर्विप्रकृष्टत्वमभिप्रेत्य भ
वाक्यशब्दः प्रयुक्त इति सूचितम् । श्लोकं व्याचष्टे *कर्मोत्पन्न
याग उपसर्जनं विष्णवादिः प्रधानं यस्मिन्निति बहुव्रीहिं वि
यागोपसर्जनश्चासौ विष्णवादिप्रधानश्चेति कर्मधारयो विग्र
प्रत्यक्षस्य प्रधानस्य च यागस्य कर्त्तव्यत्वोपदेशोपपत्तेरित्यर्थः ।
सत्यपि विधित्वे देवताविध्यापत्तेर्यागविधित्वं नास्तीत्याह *
ति * देवताविधितैव तर्ह्यस्तु इत्याशङ्क्याह * न चेति * दे
न्वयानभिधायित्वात्तव्यप्रत्ययानां देवताविधायित्वासम्भवे ऽभि
चतुर्थ्या देवतात्वानभिधायित्वे ऽपि यथादेवताविधायित्वं तथा
व्यस्यापि भविष्यतीत्याशङ्क्य * सम्प्रदानमित्युक्तम् * त्यज्यम
द्रव्योद्देश्यत्वप्रतिग्रहीतृत्वसमुदायात्मकसम्प्रदानत्ववाचिनी च
लक्षणया वाच्यैकदेशत्यज्यमानद्रव्योद्देश्यत्वात्मकं देवतात्वं व
त्याशयः । ननु कर्मत्ववाचिन्यापि द्वितीयया विष्णुं यजतील
देवताविधिदर्शनात्तद्वाचिनस्तव्यप्रत्ययस्यापि देवताविधायित्वं
स्मान्न स्यादित्याशङ्क्याह*तत्रेति*तव्यस्य द्वितीयावत्प्रधानभूतक
नभिधायित्वात्तुल्यार्थतैव तावत् क्लेशलभ्या न च तल्लाभमा
वतासिद्धिः देवतायाः कर्मत्वाभावादित्याशयः । कथं तर्हि दे
यास्तव्यद्वितीयाभ्यां निर्देश इत्याशङ्क्य निर्देशालम्बनमाह *
शार्थत्वाद्धीति * देवतोद्देशद्रव्यत्यागसमुदायवाचित्वाद्यजेस्ता
स्य च कर्माभावाद् द्रव्यस्यापि पारमार्थिककर्मत्वाभावे ऽपि दे
धच्छब्दमात्रोपकारित्वशङ्कानिवृत्तये ऽर्थरूपोपकारित्वप्रदर्शनार्थं

ार्थशब्दः। उद्देशविशिष्टत्यागवाचिनो ऽपि यजेर्विशेषणांशाना-
ण विशेष्यांशविवक्षया त्यागार्थत्वमभिप्रेत्य कर्म भवतीति ल्य-
ोपे पञ्चमी। नन्वेवं सति देवतायाः कथं कर्मत्वमित्याशङ्क्य देवतो-
ेन द्रव्यत्यागोत्तरकालं देवतामुद्दिश्य त्यज्यमानेन द्रव्येण देव-
ाः प्रतिग्रहीतृत्वाभावे ऽपि प्रतिश्रवणेनैवाप्रतिगृह्णतो ऽपि
ाणस्य स्वाम्यापादनेनाप्यमानत्वात्तप्ते पयसि दध्यानयतीत्यत्रा-
तिकर्मणा दध्नेव व्याप्यमानस्य पयसो * द्वितीयकर्मत्वं भ-
ीत्युक्तम् * ननु देवताया द्रव्येणाप्यमानत्वस्य दध्नेव पयसः
कार्यत्वमात्रविवक्षायां द्विकर्मकलक्षणो धातुः प्रसज्येत गवेव
ब्राह्मणस्य स्वाम्यविवक्षायां सम्प्रदानत्वापत्तेश्चतुर्थी स्यादित्या-
ङ्क्य * तत्रेत्युक्तम् * प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्त- ४८
ादित्यत्र षष्ठाधिकरणसूत्रे प्रक्रान्तं कर्म वीतायामपि फलेच्छायां
ते वा फले ऽवश्यं समापनीयमित्येतदुपपादनार्थं भाष्यकृतोप-
ादारभ्य समाप्तिपर्यन्तस्य व्यापारसमूहस्याख्यातेन विधित्सित-
ात् श्रुत्या चारम्भसमाप्त्योर्विधौ गौरवापत्तेरारम्भमात्रविधौ
नियोगतः समाप्त्यसिद्धेर्यागादि समापयेदिति शास्त्रार्थ इति
यमारम्भसमाप्तिशब्दार्थः। किं तर्हि समाप्तिरेव समाप्त्या व्यर्थ-
त्वादारम्भस्य तस्मात्परिसमाप्तिः शब्दार्थ इति भाष्येण वक्ष्य-
ाणत्वाद्देवतास्वाम्यापत्तेश्च देवतोद्देशविशिष्टद्रव्यत्यागोत्तरकाल-
ेन समाप्तित्वात्तत्कर्ममात्राविर्भावेनैककर्मत्वावधारणात् द्विकर्म-
धात्वप्रसक्तेर्देवतायाश्च प्रतिग्रहीतृत्वाभावेन सम्प्रदानत्वाभावा-
तुर्थ्यप्रसक्तेस्तव्यद्वितीयोपपत्तिरित्यर्थः। न तु त्यज्यमानद्रव्याप्य-
ानस्य तव्यद्वितीयावाच्यत्वे तल्लक्षणत्वाद्देवतात्वमेव वाच्यं स्या-
त्याशङ्क्याह * नत्विति * त्यज्यमानद्रव्योद्देशकर्मत्वं देवतात्वं
वोद्देशांशस्य विशेषणत्वेन द्वितीयानन्वयान्न द्वितीययोच्यते देव
ीस्त्वाहवनीयप्राप्तेर्जुहोत्यर्थत्ववत् यज्यर्थत्वाभावान्नान्तरीयक-
न्द्वावपि अशास्त्रीयत्वेन तत्कर्मत्वलक्षणमाप्यमानत्वं न देवता-
ामित्याशयः। कथं तर्हि द्वितीयानिर्देशे देवतात्वसिद्धिरित्याश-
याह * किं तर्हीति * देवतामुद्दिश्य त्यज्यमानेन द्रव्येणाप्यमान-
ालक्षणस्य कर्मत्वस्य त्यज्यमानद्रव्योद्देश्यत्वलक्षणाद्देवतात्वाद्वि-
ानुपपत्तेस्तन्निमित्तया लक्षणया गम्यमानत्वाद्द्वितीयानिर्देशे देवता-
ानिश्चय इत्यर्थः। यजदेवपूजासङ्गतिकरणदानेष्विति स्मृतिबलेन
जाकर्मत्वलक्षणं देवतात्वं द्वितीयावाच्यमित्याशङ्क्ते * नन्विति *
ाकरणस्यार्थान्वाख्यानार्थत्वाभावेनार्थवत्त्वे प्रामाण्याभावात्पुरा-

णादौ च यज्ञानधिकारिणो भीष्मादेर्यष्टृत्वकीर्त्तनालम्बनानि पू
प्रतिष्ठादानानि दर्शयितुमौपचारिकार्थान्व्याख्यानोपपत्तेर्यजेः पू
वार्चित्वाभावाञ्च तत्कर्मत्वं देवतात्वमित्याशयेन परिहरति *
इति * एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति * श्लोकं व्याच
न हीति * अपि वा शब्दपूर्वत्वाद्यज्ञकर्मप्रधानं स्याद् गुणत्वे देवत
तिरित्यत्र नवमाधिकरणसूत्रे विग्रहाद्यभावेन रूपासमवायाद्देव
याः पूज्यत्वं निरस्यातिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्तस्य प्री
विधानत्वादिति दृष्टान्तवैषम्याभिधानार्थे सूत्रे विग्रहादिसद्भावे
यजेः पूजावाचित्वाभावाद्यागकर्मणि देवताप्राधान्याभाव इति म
मावयवेन देवताप्राधान्यस्य निषेत्स्यमानत्वं न चातिथिवदिति चक
सूचितम् । न च यजिरित्यनेन व्याख्यातं किं च पूजयतोः प्रीत्युत्पाद
चित्वादुत्पादनस्य च करोत्यर्थत्वेन नित्यं सकर्मकत्वात्पूज्यस्य त
र्मत्वे सत्यपि स्वास्थ्यकामः शयीतेत्यादौ प्रत्ययार्थकर्मणि स्वास्थ
दावदर्शनेन द्वितीयाया धात्वर्थकर्मविषयत्वावसायाद्दानादिना च
ज्यस्य धात्वर्थकर्मत्वदर्शनाद्यागेन देवतायाः पूज्यत्वे ऽपि यागव
त्वाभावान्न द्वितीयावाच्यतास्तीत्याशयेनाह * दानेन चेति * नन
सत्युपाध्यायवद्देवतायाः पूज्यत्वेन यज्यर्थत्यागकर्मणा त्याज्येन
व्येणाभिप्रेयमाणत्वात्सम्प्रदानत्वमेव देवतात्वं स्यादित्याशयेन
ङ्कते * एवं तर्हीति * मुख्यं वा संप्रदानत्वमापद्यते गौणं वा
मुख्यं तावन्न सम्भवतीत्याह * नेति * तादृशशब्देनोपाध्याय
न्मुख्यतोक्ता । नन्वप्रतिग्रहीतृत्वान्मुख्यसम्प्रदानत्वाभावेन सम
दानत्वनिर्देशाभावे सति मुख्यकर्मत्वाभावे सति मुख्यकर्मत्वाभ
कर्मत्वनिर्देशस्याप्यभावापत्तेर्विष्णुं यजतीत्यादिकर्मत्वनिर्देशान
ख्यकर्मतैव देवतायाः प्रतीयतइत्याशङ्क्य मुख्यसम्प्रदानत्वाभ
ऽपि सम्प्रदानत्वनिर्देशवन्मुख्यकर्मत्वाभावे ऽपि कर्मत्वनिर्देशोप
त्तिप्रदर्शनार्थं गौणसम्प्रदानत्वनिर्देशमुदाहरति * अपि चेति *
चित्शब्देन गौणत्वं सूचितम् । एवमौपचारिकपूज्यत्वाभ्युपगमे
गौणे कर्मत्वे सम्प्रदानत्वे वा सत्यपि देवतात्वं नास्तीत्युक्तंकदा
देवतायाः पूज्यत्वाभावात्तन्निमित्तं कर्मत्वं सम्प्रदानत्वं वा गौण
पि नास्तीत्याह * सर्वथेति * न मुख्यवृत्त्या नापि गौणवृत्त्येति स
र्वथाशब्देन सूचितम् । कथं तर्हि विष्णुं यजति सोमाय यजतइत्या
द्वितीयाचतुर्थीनिर्देशः इत्याशङ्क्यतदालम्बनं वक्तुम् * आहास
धारणेन त्विति * पूजायाः प्रीत्युत्पादनात्मकत्वेन करोत्यर्थत्वाद
जिपरप्रत्ययार्थत्वे सत्योदनस्येव पाके देवतायाः पूजाख्ये प्रत्यय

येऽसिततमत्वलक्षणकर्मत्वोपपत्तेर्विपर्यस्यैव वा भक्षणे गौ-
ऽसतत्वलक्षणकर्मत्वोपपत्तेरप्रतिग्रहीतृत्वे ऽपि च यश्चान्यस्मै
तामित्यत्राप्रतिग्रहीतुरिव पूजाकर्मत्वाद्यागे गौणसम्प्रदानत्वो-
त्तद्व्यावृत्त्यर्थः केवलशब्दः । यजिपरस्य प्रत्ययस्य ददातिपरप्र-
रपूज्यवाचित्वाभावाद्यागमात्रविषयं देवतायाः कर्मत्वं सम्प्र-
त्रं वा स्यात्तच्च कर्मान्तरसम्प्रदानान्तरव्यावृत्तेनैव रूपेण भव-
शयः । देवतायाः कर्मान्तरसम्प्रदानान्तराविलक्षणकर्मत्वं स-
नत्वाभ्युपगमे हेतुमाह * तच्चेति * तत्कर्मत्वं सम्प्रदानत्वं
यदेवं भूतमन्येभ्यो विलक्षणं कल्प्यते तद्देवतायाः का-
ावगमात्कर्तृकरणापादानाधिकरणकर्मसम्प्रदानातिरिक्तस्य
कस्याभावाद्देवतायाश्च कर्मसम्प्रदानातिरिक्तकारकत्वस्य क-
चिदप्ययोगात्पारिशेष्यात्कर्मत्वस्य सम्प्रदानत्वस्य वाव-
कर्मान्तरसम्प्रदानान्तरतुल्यस्य च तस्यायोगादित्य-
। कथं देवताया कारकत्वावगतिरित्याशङ्क्याह * न हीति *
कत्वं विना क्रियान्वयायोगात्प्रातिपदिकवाच्येनाकारकरूपेण
न्वयं न प्रतिपद्यते देवतेति । सर्वथेयं देवतेति देवताशब्दानु-
ा योऽयम् । देवतावाच्यग्न्यादिप्रातिपदिकपरो ऽत्रत्यो देवताश-
देवताशब्दवाच्येनापि रूपेण देवतायागान्वयं न प्रतिपद्यते कि-
ग्न्यादिशब्दवाच्येनेत्यतिशयद्योतनार्थः । देवतातद्धितविषयो वा
ाशब्दः तद्धितनिर्देशे ऽपि देवताया द्रव्यमात्रान्वयप्रतीतेर्या-
यार्थमग्निमनेन यजेताग्नये यजेतेति वा वचनव्यक्तिः क-
याशयः । कीदृक् विलक्षणं रूपं कर्मसम्प्रदानयोरित्यपेक्षिते
दानस्य तावत् त्याज्यद्रव्योद्देश्यत्वप्रतिग्रहीतृत्वसमुदायात्मक-
देकदेशोद्देश्यत्वमात्रेण त्यज्यमानद्रव्यस्यान्यत्राविनियोज्यत्व-
णदेवतास्वत्वापत्तेः देवतायाः प्रतिग्रहीतृत्वाभावे ऽपि तत्फलला-
यज्यमानद्रव्योद्देश्यत्वमात्रे सकलसम्प्रदानरूपकल्पनात्मकं वै-
ण्यमाह * तेनेति * येन कारणेनान्यसम्प्रदानतुल्यं देवतायाः
प्रदानत्वं नास्ति तेन कारणेन देवतोद्देशद्रव्यत्यागात्मकस्य याग-
त्यागांशप्राधान्यविवक्षायां प्रतिग्रहाद्विनापि तत्फललाभात्सकल-
प्रदानत्वकल्पनेन चतुर्थीनिर्देश इत्यर्थः । उद्देश्यांशप्राधान्यविव-
यां तद्विशेषणभूते त्यागांशे आप्यमानत्वाध्यायेन सकलं यागं
। कर्मत्वरूपं कर्मणो वैलक्षण्यमाह * यद्वेति * वचनव्यक्ति-
नैतदेव स्पष्टयति * तेनेति * देवतोद्देशेन द्रव्यत्यागाद्देवता- ४
स्यापत्तावपि तदापादनस्याविहितत्वद्योतनायैवशब्दः परस्व-

त्वापादनत्यागयोः प्राधान्याविवक्षायामपि पञ्चाङ्गावद्योतः
मुनौ । ननु देवताया रूपासमवायेन तदुद्देशस्याप्राधान्यात्
योक्तकर्मान्वयः सम्भवतीत्याशङ्क्य होत्रादेर्द्रव्यस्यास्वाम्यात्
कृत्वायोगेन त्यागशून्ये देवतोद्देशमात्रे होतर्यजेत्यादेर्यजि
त्प्राधान्यमुपपादयितुमाह * तथा चेति * नन्वेवं रूपयो
र्मसम्प्रदानयोर्विभक्तिवाच्यत्वात्तद्रूपस्य देवतात्वस्य विभक्तिः
न विरुद्धेत्याशङ्क्याह * तदेतदिति * अनेकवाच्यशक्तिकल्प
नानयोर्देवतामात्रविषययोर्वाच्यत्वकल्पना युक्तेत्याशयः । ननु
लाक्षणिकत्वाविशेषात्सम्प्रदाननिर्देशवत्कर्मनिर्देशे ऽपि देवता
समाश्रेष्यतइत्याशङ्क्याह * तत्रापीति * प्रतिग्रहीतृत्वाभावेः
स्त्यात्मकत्वाद् दूषितमपि सम्प्रदानत्वमुद्देशत्यागाव्यभिचारि
त्सम्बन्धिनो देवतात्वस्य प्रत्यासन्नं कर्मत्वं तूद्देशत्यागव्यति
क्रियान्तरेष्वपि सम्भवेन सव्यभिचारित्वाद्विप्रकृष्टं ततश्च व
न देवतास्वलक्षणा ऽत्यन्तक्लिष्टेत्याशयः । ननु कर्मत्ववद्देवतात्व
पि सप्तदेवताः शंसतीत्यादौ क्रियान्तरेषु भावात्तु तन्मात्रेण व
स्य देवतात्वाद्विप्रकर्षः स्यादित्याशङ्क्याह * न हीति * तः
हविर्भोक्तृलक्षणं देवतात्वं सकलं यथायजिमेव प्रति ननु
न्तरमपि प्रति न तथा सकलं कर्म यजिमेव प्रति
न्तरेष्वपि कस्य चित्कर्मणः सद्भावादित्यर्थः । स्तुतिभाक्त्व
त्वितरद्देवतात्वं न हविर्भोक्तृलक्षणमित्याशयः । ननु कर्मत्वसम्
नत्वयोर्देवतात्वाभावाद्द्वितीयाचतुर्थ्यौ देवतानभिधायित्वे को
स्तद्वाची शब्दः स्यादित्याशङ्क्याह * परमार्थतः पुनरिति * स्
लिबलेनैतदेवोपपादयति * तथा चेति * क्रीतादितद्धितां
यथा तृतीयया कारकविभक्त्या वदनं कृतं न तथा देवतातद्धित
धाविदमग्नये ऽनेनाग्निमिति वा कारकविभक्त्या वदनं कृतमित्य
भावे ऽनिष्टा श्लोकं व्याचष्टे * ये हीति * अनन्यशब्दवाच्यत्वोप
दनस्य तव्यप्रत्ययवाच्यत्वोपयोगमाह * ततश्चेति * देवतायाः
वाच्यत्वोपपादनस्य प्रकृतयागविधायित्वाभावोपयोगमाह
तत्रेति * न त्विति भाष्येणान्तरालवाक्ये ऽपि यागान्तरालाः
थविधिप्रतीतेर्यागस्य स्वरूपविधिक्लेशसाम्यमाशङ्क्य बाढमित्यनेः
पांशुत्वान्तरालान्वयस्यैव विधेयत्वाभिधानेनाशङ्काशयानतिक्रम
द्विधित्वाभिधानाच्चायुक्तत्वमाशङ्क्यैकग्रन्थेनाशङ्कापरिहारभाष्यद्व
तात्पर्यतो व्याचष्टे *अन्तरेति * विशिष्टार्थप्रतीतौ सम्बन्धस्य न
न्तरीयकत्वात्सम्बन्धशब्देन लक्षणया वैशिष्ट्याभिधानाद्विधित्वं

नानर्थक्यापत्तेरनन्यगतित्वस्य हेतुत्वेन विवक्षितत्वाच्छङ्कापरि-
र इत्याशयः। केन भाष्येणानन्यगतित्वं हेतुत्वेन विवक्षितमि-
ाशङ्क्य नन्वन्तरालसम्बन्धस्यान्यत्प्रयोजनमिति भाष्येणेति सूच-
तुमाह * न हीति * उपांशु पौर्णमास्यां यजन्नित्यत्रैकीकृतानां
लसम्बन्धे सति सर्वेषां प्राधान्यं स्यादित्यत्र समुदायानुवादार्थ-
तोक्तेत्याशङ्क्ते*ननु चेति * शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदय-
पांशुयाजः पादावग्नीषोमीय इत्यन्यार्थदर्शनस्य प्राधान्यद्योतकत्वे-
व्याख्यायां पूर्वपक्षे ऽग्नीषोमीयोपांशुयाजव्यतिरिक्तयोर्वैष्णव-
जापत्योपांशुयाजयोरप्राधान्यापत्त्यभिधानेन समुदायानुवादानर्थ-
ग्रस्य वक्ष्यमाणत्वान्न सर्वोपांशुयाजप्राधान्यज्ञापनेनार्थवत्तेति परि-
रति*तथेति*एवं तु व्याख्यायमाने यदीमे ऽपि विधीयेरन् भिद्येत
ाक्यमित्यस्यानन्तरमेकं हीदमित्यादेर्विष्णवादिसम्बन्धो ऽनूद्यतइ-
ान्तस्य भाष्यस्यान्वयापत्तेरुपांशुत्वादिसम्बन्धइत्यस्यानन्तरं च न
ान्तरालसम्बन्धस्येत्यस्यान्वयापत्तेर्व्यवहितान्वयदोषभयान्नन्वित्य-
न विष्णवादिवाक्यविहितेषु यागेष्वन्तरालगुणविधानायान्तरालवा-
यमित्याशङ्क्योपांशुत्वस्यादिशब्दोपात्तस्य चान्तरालस्य प्राप्ते कर्मण्ये-
ान वाक्येन विधानाशक्तेश्चोदना वा गुणानां युगपद् शास्त्रादित्य-
ान न्यायेन विष्णवादिवाक्यैर्यागविधावप्यन्तरालवाक्येन कर्मान्त-
विधानापत्तौ वाढमित्यनेनार्हतीत्यन्तेनोक्तायां विष्णवादिवाक्यप्रा-
ानामुपांशुत्वस्यान्तरालवाक्ये ऽनुवादात्कथमनेकगुणविधानात्क-
ान्तरापत्तिरित्याशयेन कथमिति पृष्टे जामि वेत्यादिनानूद्यत इत्य-
तेन विष्णवादिवाक्यानां विधायकत्वायोगान्न तत्प्राप्तोपांशुत्वानु-
ादः सम्भवतीत्युक्ते ऽनुपादेयान्तरालकालान्वयात्प्रकरणान्तरन्या-
येनापि कर्मविधित्वाभिधानार्थं नन्वन्तरालसम्बन्धस्येति भाष्यमिति
प्रथान्यासमेव भाष्यव्याख्यां सूचयितुमाह * किं चेति * नन्व-
नुपादेयान्वये ऽपि विष्णवादिवाक्यविहितयागविपरिवृत्तेः प्रकरणा-
न्तरन्यायो नास्तीत्याशङ्क्याह * तादृगिति * एतदेव व्याचष्टे
* यादृशी हीति * अस्मिंश्च व्याख्याने विष्णवादिवाक्यानां कर्म-
विधित्वे ऽप्यन्तरालवाक्यस्य गुणात्प्रकरणान्तराद्वा कर्मान्तरविधि-
त्वाभिधानाद्भाष्यस्थः कर्मान्तरशब्दः समञ्जस एवेत्याह * तत्रेति *
ननूद्देश्यत्वेन देवताया अपि कालवदनुपादेयत्वात्तदन्वये ऽपि क-
र्मान्तरापत्तेस्तस्मिन्नेवान्तरालविहिते यागे देवतां विदध्युरिति वा-
र्त्तिकमयुक्तं स्यादित्याशङ्क्याह * देवतायाः पुनरिति * अस्या
इदमिति द्रव्यत्यागसङ्कल्पविषयत्वलक्षणोद्देश्यत्वे ऽपि देवतायाः

कर्मकाले शब्दप्रतिपाद्यत्वेनापाद्यत्वलक्षणोपादेयत्वाच्च तद्
कर्मान्तरत्वापादक इत्याशयः । ननु कर्मान्तरशब्दस्य विष्णु
वाक्यानां कर्मविधित्वाभ्युपगमविषयत्वे प्रकृतानां यागाना
यादिति भाष्यमयुक्तं स्यादित्याशङ्क्याह * कर्मेति * आद्य
ख्याने त्वाग्नेयाद्यपेक्षया कर्मान्तरशब्द इत्याह * अथ वेति *
मार्थतस्तु द्वितीये व्याख्याने विष्ण्वादिवाक्यानां विधित्वमवि
वेति दर्शयन्नुपसंहरति * तस्मादिति * प्रकरणान्तरन्याय
ऽप्यनुपादेयान्वयस्याकर्मविधित्वापादकत्वं दर्शयितुमाह * प्र
चेति * अनुपादेयाङ्गविधितोऽपि तदुद्देशेन कर्मैव विधेयमित्य
ननु कृत्वप्रसक्त्योपांशुयाजशब्दस्य गुणविधित्वायोगेनोपांशुत्व
विधेयत्वान्नानेकगुणविधानेन कर्मविधित्वसिद्धिरित्याशङ्कां नि
र्तुं प्रसक्तिं तावत्करोति * स त्विति * गुणविधित्वपक्षे
प्रसक्तिं नैवं जातीयक इति पूर्वपक्षभाष्योक्तां परिहर्तुमनु
* यत्त्विति * पक्षद्वयसाम्येन परिहर्तुम् । उपपत्तिसाम्यं ता
* तत्रेति * एतदेव प्रश्नपूर्वमुपपादयति * कुत इति * :
व्याचष्टे * वाच्येति * यस्त्वव्युत्पन्नस्त्विति पूर्वपक्षभाष्येण
ग्निकृतं पात्नीवतमुत्सृजन्तीति पात्नीवतशब्दस्य त्वाष्ट्रपात्नीव
चकस्यापि किं चिद्वर्णसारूप्यावगमात्तदनुवादकत्वदर्शनेनो
याजशब्दस्यानुवादकत्वे वाचकत्वानपेक्षेति परिहार उक्तस्त
८७।२ सार्थमनुभाषते * स्यादिति * निराकरोति * तदिति * नन्वे
नामत्वानिरासेन गुणविधिनिश्चयः कथमित्याशङ्क्याह * न चे
श्लोकं व्याचष्टे * न तावदिति * उपांशुयाजनामकत्वाच्चाह
र्मेण इदमवगम्यते नूनमस्योपांशुत्वं धर्म इति दशमोपान्त्यावि
शाभाष्यं त्वाग्नेयाग्नीषोमीयशब्दवद्द्वयमुपांशुयाज इत्यादिव
न्तरस्थगुणनिमित्तोपांशुयाजशब्दव्यवहारविषयमित्याशयः ।
ऽन्तरालवाक्यस्थेनैवोपांशुयाजशब्देनोपांशुत्वविधिरित्युपसंहर
तस्मादिति * सूत्रकृतोऽपि गुणविधित्वैवेष्टेत्याह * तथा चे
कथं तेनेति भाष्येण जामित्वापनयनप्रकारं पृष्ट्वा तस्मिन्नित्य
वतावैलक्षण्यं प्रकारत्वेनोक्तं तत्पुरोडाशनैरन्तर्येणोक्तस्य जामि
द्रव्यवैलक्षण्यं विनानपनयनादयुक्तमाशङ्क्य देवतावैलक्षण्य
लक्षणार्थत्वं दर्शयितुमाह * जामित्वेति * सर्वस्मै वा त
गृह्यते यत् ध्रुवायामाज्यमित्यनेनानिर्दिष्टद्रव्यकेषु यागेष्वाज्य
नाद् द्रव्यवैलक्षण्यमाग्नेयाग्नीषोमीययोर्मध्यमस्वरत्वात्स्वरवै
विष्णुप्रजापतिपक्षे देवतावैलक्षण्यं युगपत्पुनरिति भाष्येण वि

वाक्यानामर्थवादत्वदेवताविधित्वाभावाद्विष्णवादेरप्राप्तत्वेनानुवा-
नुपपत्तिमाशङ्क्य यष्टव्यानित्यनेनायष्टव्यत्वे ऽप्युपांशुयाजस्तुत्यर्थं
ष्टव्यत्वकीर्त्तनमित्युक्तं तस्य ज्ञायत एवेति भाष्येण विरोधमाशङ्क्य
रिहर्त्तुमाह * ज्ञायत एवेति * देवतावैलक्षण्येनाग्नेयाग्नीषोमी-
भ्यामुपांशुयाजस्य वैचित्र्यप्रदर्शनार्थं कीर्त्तिता न विष्णवादिया-
यविहितत्वप्रदर्शनार्थं तेन कारणेन विष्णवादेरवश्ययष्टव्यत्वा-
ावे ऽपि स्तुत्यर्थत्वेनोपादानाभिधानं न पूर्वभाष्यविरुद्ध-
त्याशयः। अयष्टव्ये यष्टव्यत्वोपपादनालम्बनम् * गु-
वादेनेत्यनेनोक्तम् * कीदृशो गुणवाद इत्यपेक्षिते * प्रा-
ान्येत्युक्तम् * अग्निर्वै देवानामवमो विष्णुः परम इति
ुतेर्विष्णोः सर्वदेवानां मध्ये प्राधान्यप्रसिद्धिः एत इति वै प्रजाप-
र्देवानसृजतेति श्रुतेः प्रजापतेः प्राधान्यप्रसिद्धिरग्नीषोमीययो-
तु तावब्रूतामग्नीषोमावित्यत्र कीर्त्तनादुपांशुयाजे प्राधान्यप्रसि-
द्धः। ननु विष्णवादेः प्राधान्यमात्रेण यष्टव्यत्वाभिधाने यागान्त-
ष्वपि यष्टव्यत्वापत्तेर्वैलक्षण्यं न स्यादित्याशङ्क्य * यागइत्युक्तम् *
वधिं विना देवतात्वाभावात्प्राप्तावनियमप्रसक्त्यायोगे ऽपि या का
चेदिह देवता स्यादित्यपेक्षायामनियमप्रसक्तिरुक्ता निर्दिष्टदेवता-
त्वाद्यागान्तरेष्वप्रसक्तिरित्याशयः। ननु विष्णुरुपांशु यष्टव्य इ-
एवमादीनां विधित्वाभावे विष्णवादेर्विधायकाभावाद्विध्येकगम्य-
वेन च देवताया यागाक्षेपमात्रेणालाभाद्देवताराहित्येनोपांशुयाज-
वधिरवसीदेदित्याशङ्क्य तत्रेति भाष्येण शाखान्तरविधानेन विहि-
त्वमुक्त्वा यद्यपीत्यनेन प्रत्यक्षविध्यभावे उपांशुधर्मकत्वेन विष्णु
जापत्योः कल्पविधिविहितत्वं विष्णोश्च मन्त्रवर्णकल्पेनापि विधि-
ा विहितत्वमग्नीषोमयोस्तु पुराकल्पसरूपार्थवादकल्पविधिविहि-
त्वमुक्तं तत्सर्वमाक्षेप्तुं शाखान्तरइति तावदाक्षिपति * शाखान्तर
ति * अनुदाहृत्यैव शाखान्तरे ऽस्तीत्यभिधाने यस्मै यद्रोचते
तत्सर्वं सिद्ध्येदित्याशयः। शाखान्तरे च देवताविधौ सत्युपांशुया-
जे पूर्वाधिकरणपूर्वपक्षे द्रव्यानियमवत्किं देवतायामप्यनियमः शा-
स्त्रैकप्रमाणत्वाद्वा देवतायास्तेन विना कल्पनायोगादाग्नेयमुपांशुया-
जमन्तरा यजत्यैन्द्रमुपांशुयाजमन्तरा यजतीत्यादिप्राकरणिकवा-
क्यान्तरस्थाग्नेयादिपदानुषङ्गेण वैकल्पिकप्रकृताग्न्यादिदेवताविधि-
कल्पनया प्रकृतानामेव मध्ये या काचित्प्रजापतिधर्मोपांशुत्वदर्श-
नाद्वा प्रजापतिविधिकल्पनया स एव प्रजापतिर्मनसा यजेतेति वा
प्रजापतेस्तूष्णीं भावधर्मकत्वविधानेनोपांशुत्वधर्मकत्वाभावात्प्रजा-

पतिविधिकल्पनानुपपत्तेर्नियमसम्भवे चानियमायोगान्मुख्यत
ग्नेयपदमात्रानुषङ्गेणाग्निविशिष्टोपांशुयाजविधिकल्पनयाग्निनि
इति विचारपूर्वकं विष्णुर्वा स्याद्धौत्रादमावास्या हविश्च स्याद्
तत्र दर्शनादिति सूत्रेण मान्त्रवर्णिकदेवताश्रयणं न युज्येत
* न चेति * अत्रत्यश्च यद्यपीति भाष्यावयवः प्रत्यक्षदेवता
सद्भावे न युज्येतेत्याह * यद्यपीति * प्रजापतिं मनसा यजे
प्रजापतितूष्णीम्भावधर्मकत्वश्रुतेस्तुष्णीं वै श्रेयस आकाङ्क्षत
धादाश्च श्रेयो ऽभ्यर्थनतूष्णीङ्कार्यत्वावगतेस्तस्मादाहुर्विष्णुर्देवान
इति च विष्णोः श्रेयस्त्वश्रुतेस्तूष्णीम्भावधर्मकत्वावगमाद्यत्कि
त्प्राजापत्यमिति च वर्त्तमानापदेशस्य रूपद्वविधिविहिततुष्णीम
विरुद्धोपांशुत्वविध्यशक्तेर्देवताधर्मोपांशुत्वस्य यागे दर्शनेन वि
जापतिदेवत्यत्वकल्पनायोगाद्यदुपांशु तत्प्राजापत्यमिति विपरीत
नव्यक्त्याश्रयणेन तथापीत्युक्तमित्यापाद्याक्षिपति * यद्प्युक्तमि
उपांशुयाजस्योपांशुधर्मत्वात् विष्णुप्रजापती प्राप्ताविति वदतोपां
स्य प्राजापत्यत्ववैष्णवत्वनिमित्तस्योपांशुयाजे ऽपि समानत्वात
पतिर्देवता विष्णुश्च प्राजापत्यवाक्यादेवमादिसङ्कीर्त्तनादित
शब्दसूचिताश्च तत्सदृशाद्वैष्णववाक्याद्विष्णुप्रजापत्योरुपांशु
कयागान्वयावगमादिति देवताया यागाभेदोपचारेणोपांशुध
ब्दप्रयोगमभ्युपगम्य भाष्यार्थः सूचितः। स्तुत्यर्थत्वेनापि प्राज
वाक्यार्थोपपत्तेर्वचनव्यक्तिविपर्यासो न युक्त इत्याक्षेपाशयः
ग्नीषोमीययोस्त्विवति भाष्यमाक्षिपति * यदपीति * ननु त
८।१ चतुर्थ्यादेशाद्देवताविधिर्भविष्यतीत्याशङ्क्याह * यदि हीति *
ध्यधीनत्वात्प्रवृत्तेरग्नीषोमाभ्यामावाभ्यां यजेरन्नित्युक्ते ऽप्य
किमग्नीषोमोक्तार्थानुष्ठानेनेति जानन्तो विधिना वयं प्रवर्ति
ति नावधारयेयुरित्यर्थः। अनेकार्थविधौ वाक्यभेदापत्तेर्नास्य दे
विधायितेत्याह * कालेति * देवतामात्रं तर्हि विधीय
त्याशङ्क्याह * देवतेति * ननु पुरोडाशद्वयान्तराले वि
दमावास्यायां च पुरोडाशैक्येनान्तरालयोगादुत्पत्तिवाक्यादेव
र्णमासीकालत्वावगतेर्छिद्रवाक्यस्थेन पौर्णमासीशब्देनानुवा
लवाक्यस्थेन पूर्णमासशब्देन ग्रहणोपपत्तेः प्राधान्यं सेत्स्यती
ङ्क्याह * सूत्रेति * अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसं
त्मन्त्रो यथा प्रधानं स्यादिति सूत्रेण प्रधानस्योपांशुयाजस
शु पौर्णमास्यां यजन्निति शब्देन पौर्णमासीकाले संयो
र्णमास्यामेवोपांशुयाजः कार्यः मन्त्रस्तु वैष्णवयाज्य

यारूपे ऽमावास्याक्रमाम्नातो ऽपि प्रधानानुसारात्पौर्णमास्यामे-
स्यादिति वदतास्यैव कालविधानार्थत्वेनोपन्यासाज्जो-
गत्तिवाक्ये कालविधिरित्याशयः। पौर्णमासीशब्देनानपाय-
ा कालस्य लक्षणं हि पुरोडाशावित्यनेन न्यायेनैकपुरोडाशा-
ां पौर्णमास्यामिवामावास्यायामप्युपांशुयाजोपपत्तिः पौर्णमासी
त्र्यभावे सूचिता शाखान्तरइतिभाष्यं तावत्समाधातुमारभते *
त्रेति * शाखाभेदेनोपांशुयाजक्रमे वैष्णवादियाज्यानुवाक्यायुग-
ाम्नानात् श्रुत्याविनियुक्तस्यापि मन्त्रस्य प्रधानाकाङ्क्षितदेवताप्रकाश-
ालक्षणोपकारकत्वसम्भवेनाकाङ्क्षितादृष्टोपकारकल्पनायोगाद्देवता-
कल्पकत्वोपपत्तेर्मन्त्रवर्णकल्पो देवताविधिर्विष्णुर्वा स्याद्धौत्राम्ना-
ादिति दशमोपान्त्यधिकरणगतसूत्रवक्ष्यमाणन्यायेन स्थित इत्य-
ः। सूत्रे विष्णुग्रहणमन्तरेण एकशाखायाममावास्यायां विष्णु
ाज्यानुवाक्याम्नानादमावास्यायामेवोपांशुयाजहविः कार्यमिति
ादर्शनार्थं पूर्वपक्षस्थेन कृतं न देवतान्तरनिवृत्त्यर्थमित्याशयः।
ानु नाना शाखाधीतानामपि याज्यानुवाक्यायुगलानां देवताकल्पना-
प्राक् दृष्टार्थत्वेनानवसायाद्वसन्तमृतूनां प्रीणामीत्यादीनामेको ममे-
यादीनां च प्रयाजानुमन्त्रणानामिव समुच्चयापत्तेस्तत्कल्पानां
देवतानामपि समुच्चयः प्रसज्येतेत्याशङ्क्याह * तैश्चेति * देवताक-
ल्पनात्प्रागपि याज्यानुवाक्यासामान्यतो यागाङ्गदेवताप्रकाशनलक्ष-
णैककार्यत्वावगतेर्न समुच्चयो युक्त इत्याशयः। ननु याज्यानु-
वाक्यानां हौत्रप्रवचनाख्यवेदाम्नानेनाध्वर्यवप्रवचनाख्ययजुर्वेद-
विहितोपांशुयाजापेक्षया वेदान्तरीयत्वाच्छाखान्तरीयत्वाभिधानं न
प्रयुज्येतेत्याशङ्क्याह * तदेव चेति * वेदान्तरस्य शाखान्तर-
ताप्यस्तीत्याशयः। वेदैक्यएव शाखान्तरव्यपदेशाङ्गस्येनापरितोषात्प-
रिहारान्तरमाह * आध्वर्यवे ऽपि त्विति * नन्वेवं सत्यध्वर्युप्रयो-
ज्यतैव स्यादित्याशङ्क्य होतर्यजेति प्रैषसामर्थ्याद्धोतृ * प्रयोज्यत्व-
रूपेणेत्युक्तम् * यथाश्रुतवचनव्यक्त्याश्रयणेनैव विष्णुप्रजापत्योरु-
पांशुधर्मकत्वावगतेर्यागस्य विष्णुप्रजापत्योश्चोपांशुत्वसाम्याद्विष्णु-
प्रजापतिदेवत्यत्वप्रापकलिङ्गोपन्यास इत्येवं तथापीति भाष्यं स-
माधत्ते * उपांश्विति * उपांशुधर्माणावित्यनेन यद्विष्णुप्रजापत्यो-
रुपांशुत्वधर्मत्वमुक्तं तदुपांशुयाजस्य मन्त्रवर्णप्राप्तविष्णुप्रजापतिदे-
वत्यत्वद्योतनार्थमित्यर्थः। शाखान्तरभाष्योक्तस्य मान्त्रवर्णिकत्वस्य
विष्णुर्वा स्यादिति सूत्रवक्ष्यमाणत्वद्योतनार्थं मन्त्राम्नानाच्चेति भाष्य-
मिति सूचनार्थश्चकारः कथं विष्णुप्रजापत्योरुपांशुधर्मत्वेनोपांशु-

याजस्य तद्देवत्यत्वद्योतनेत्यपेक्षायामाह * अन्या हीति * ननु
क्षमानसत्वाविधिविरोधान्न लिङ्गेनोपांशुत्वप्राप्तिरित्याशङ्क्याह *
ष्णिवति * यथान्यो न शृणोति तथोच्चारणस्योपांशुत्वादन्य
षणसादृश्येन मानसत्वमप्योपांशुशब्दो ऽनुक्तदेवताकेषु विष्णु
पतिदेवत्यत्वद्योतनार्थं प्रयुक्त इत्याशयः। अग्नीषोमयोस्त्विति
कालविधायिनि वाक्ये ऽग्नीषोमयोः प्राप्तिरुदाह्रियतइत्येवं
क्षाणः समाधत्ते * तथेति * तावन्नूतामित्यस्मिन्कालस्य विध
वाक्ये ऽग्नीषोमीययोरनुवादेन मान्त्रवर्णिकीं प्राप्तिमग्नीषोमयो
ति भाष्यमुपोद्बलयतीत्युक्ते ननु पुराकल्पसदृशस्यापि विधा
त्वाभ्युपगमे देवताविधायकतापि कस्मान्नेष्टेत्याशङ्क्य कालस्य
धायके वाक्यभेदापत्तेर्देवता * विध्यसम्भवादित्युक्तम् * दे
तर्हि विधीयतां न काल इत्याशङ्क्य यथेत्यनेन देवताज्योपांशुत
लानामिह वाक्ये कीर्त्तितानां मध्ये ऽन्यतः प्राप्तिसम्भवासम्
वालोच्य विधेयतयानुवाद्यतया च ग्रहणस्य न्याय्यत्वात्कालव
रिक्तानां चान्यतःप्राप्तिसम्भवात्कालस्यै *वैतद्विधायकमित्युक्त

गुणोपबन्धात् ॥ ११ ॥

यदुच्यत इति भाष्येणोपांशुत्वगुणोपबन्धान्नारूपत्वेन
मासी लभ्यते इति पूर्वपक्षोक्तारूपत्वपरिहारार्थत्वेनैतत्सूत्रं
च्यातुमुपांश्वित्त्विति वाक्यमुदाहृतं तद्देवतावदुपांशुत्वस्याप्या
यकत्वाद्विध्यर्थत्वे चोपांशुशब्दस्य यागविशेषोपलक्षणार्थत्वा
न्निष्वपि पौर्णमासीयोगेषुपांशुत्वोपपत्तेर्नोदाहार्यमित्याशङ्क्योत
वाक्यस्यस्योपांशुयाजशब्दस्योपांशुत्वविधानार्थत्वोपोद्बलनायैत
दाहृतमिति सूचयन् व्याचष्टे * यस्येति * यथाश्रुतार्थत्या
तुमाह * नन्विति * नन्वार्थवादकल्पविधित्वमात्रेणैकस्य
क्यस्यानेकार्थपरत्वे वाक्यभेदः शक्यपरिहारः ताभ्यामेतमग्न
मीयमेकादशकपालं पूर्णमासे प्रायच्छदित्यादावनेकार्थविधौ
ते हि ते हि तदर्थत्वात्तस्य तस्योपदिश्येतेत्यनेन वाक्यभेदाभि
नाद्रात्रिसत्रे ऽप्यर्थवादकल्पस्य विधेः फलमात्रपरत्वान्नानेका
त्वतास्तीत्याशयः। उपांशुत्वादिवच्चाज्यस्याप्यनेनैव विधानाप
र्विलिङ्गाश्रुतित्वादिति दशमोपान्त्याधिकरणसूत्राविरोधः। किमर्
र्थेतदुदाहृतमित्यपेक्षायां पूर्वसूचितमेव प्राप्त्युपोद्बलनार्थत्वं
टयति * अत इति *

२।१ प्राये वचनाच्च ॥ १२ ॥

प्रधानेति भाष्येणोपांशुयाजस्य प्रधानप्राये वचनात् प्राधान्या-
गतेर्विष्ण्वादिवाक्यैश्च विधावुपांशुयाजभेदे सत्यग्नीषोमीयस्यैवो-
ांशुयाजस्य कालविधिप्रसङ्गाद्विद्वाक्यानूदितत्वात्फलवाक्यग्रहे-
प्राधान्याद्वैष्णवप्राजापत्ययोरुपांशुयाजयोर्गुणत्वापत्तेरुपांशुयाज-
ाप्राधान्यावगतिबाधप्रसङ्गान्नोपांशुयाजवाक्यं पौर्णमासीवाक्य-
त्समुदायानुवाद इत्येवं सूत्रं व्याख्यातं तत्र किं प्राये वचनमित्य-
क्षायामुदाहरति ❋ हृदयमिति ❋ यज्ञस्यामूर्त्तत्वेन शिरोहृद-
पादायोगमाशङ्क्य स्तुत्यर्थं पुरुषत्वोपचारः। ननूपांशुयाजभेदे ऽपि
ध्युद्देशान्तर्गतत्वात्सन्निहितत्वाच्चोपांशुत्वस्यैवार्थवादस्याव्यवहि-
देवतानपेक्षस्य यागोपलक्षकत्वात्सर्वेषामुपांशुयाजानां कालवि-
वगतेर्विशेषतश्च समुदायेनैकीकृतानां कालयोगावगतेः पक्षद्वये
यविशिष्टं प्राधान्यमित्याशङ्कते ❋ कथं पुनरिति ❋ यागोपलक्षणत्वं
ना देवताकीर्त्तनानर्थक्यापत्तेरर्थवादस्ययोर्व्यवहितयोरपि वाग्नी-
मयोरुपांशुत्ववदुपलक्षणत्वावगमात्कालोद्देशेन चोपादीयमाना-
यागानामनेकोपलक्षणान्वये ऽपि वाक्यभेदानापत्तेः समुदायी-
तानामपि च कालान्वये समुदायशब्दाभावेनाग्नीषोमदेवत्यस्यै-
पांशुयाजस्य कालविधिप्रतीतेः प्राधान्यापत्तिरिति परिहरति
उच्यतइति ❋ अवधारिते ऽपीत्यपिशब्दो ऽध्याहार्यः अग्नीषो-
िय एवेत्यनेनाग्नीषोमयोरुपलक्षणत्वावश्यं भावः सूचितः। श्लोकं
ाचष्टे ❋ ताविति ❋ नन्वेवं सत्युपांशुयाजैक्ये ऽप्यग्नीषोमपक्ष
च कालविधानापत्तेर्नित्यवत्प्राधान्यकीर्त्तनं न युज्येतेत्याशङ्कते
नन्विति❋ अष्टदोषदुष्टदेवताविकल्पापत्तेरप्युपांशुयाजैक्यपक्षो न
कइति सूचनार्थो दोषशब्दः। कर्मैक्ये सत्युपलक्षणापाये ऽप्युपल-
ानपायाद्देवतान्तरपक्षे ऽप्यविशिष्टः कालविधिरिति परिहरति
नैष इति ❋ श्लोकं व्याचष्टे ❋ यदि हीति ❋ सर्वत्रेत्युक्ते क्वेत्यु-
हरणापेक्षायामसोमयाजिनो ऽग्नीषोमीयपुरोडाशाभावादन्तराल-
लोपलक्षणीभूतपुरोडाशद्वयाभावे ऽपि तदुपलक्षिताग्नेयपश्चा-
ावलक्षककालानपायादुपांशुयाजानिवृत्त्यभिधानार्थं दशमान्त्याधि-
रणसूत्रमुदाहृतम्। एवं च सत्यग्नीषोमग्रहणस्योपलक्षणार्थत्वे
पे देवतान्तरपक्षे कालयोगनिवृत्तिप्रयोजनत्वानवगमात्फलवाक्ये
हृण्यापत्तेश्च कादाचित्कप्राधान्यप्रयोजनत्वायोगादानर्थक्यपरिहा-
याज्ययग्रहणवत्स्तुत्यर्थतैव न्याय्येति सूचयितुमाह❋नचेति❋ भेदे
पलक्षणार्थतया विध्युद्देशान्तर्गतत्वेन प्रयोजनवत्तरत्वसम्भ-
मन्दप्रयोजनस्य स्तुत्यर्थत्वस्यान्याय्यत्वादुपलक्षणार्थतैवोचितेति

सूचयितुमाह * नानात्वे त्विति * तस्मादित्युपसंहारभा॰
यवचनहेतुसाध्याभिधानार्थत्वेन व्याचष्टे * तस्मादिति * उ
रणासिद्धान्तप्रयोजनाभिधानार्थम् * चैककर्मत्वायेत्युक्तम् *

॥ आघाराद्यपूर्वताधिकरणम् ॥ ५ ॥

१०११ आघाराग्निहोत्रमरूपत्वात् ॥ १२ ॥

नापूर्वविधी इति भाष्येण पूर्वाधिकरणपूर्वपक्षसूत्र॰
मासीवत्पदानुषङ्गेणाघाराग्निहोत्रं पौर्णमासीवत् समुदाया
इत्येवमेतत्सूत्रं व्याख्यातं तत्रोपांशुयाजवत्प्रकृतकर्माभावे॰
समुदायानुवादत्वनिरासससिद्धेः प्रत्यवस्थानानुपपत्तिमाशङ्क्यो
याजवैषम्यमाहोर्ध्वमिति वैषम्योक्त्यानन्तरसङ्गतिरपि सूचिता।
र्वादिवाक्यानां कर्मविधितैव नास्तीत्याशङ्क्याह * किं चे।
पक्रोपक्रमसंहाराभावेनैकवाक्यत्वावगतेः । कथं चिच्चैकव।
त्वप्रतीतावपि ऊर्द्धत्वादेः कथं चित्प्राप्त्यभावेन स्तुत्यर्थत्वाय
द्विधित्वावगतेः कर्मनिरपेक्षगुणाविध्ययोगाद् गुणविशिष्टकर्मवि॰
व्याख्येयेत्याशयः।श्लोकं व्याचष्टे*नेति* कर्मनिरपेक्षगुणविधिसम्भ
सम्भवसन्देहो ऽत्र मूलसन्देहे हेतुरिति सूचयितुं सन्देहपूर्वं ग
वत्कर्मगोचरपदव्याख्या एतदेव प्रश्नपूर्वमुपपादयति * कुत इ॰
श्लोकं व्याचष्टे * न तावदिति * विधौ स्मृताया लिङो
सुडागमविधानात् यादित्येतावतः प्रयोगाननुगतमपि विध्याभिधा
त्वमभ्युपेत्य * न हीत्युक्तम् * भावनाभिधायित्वं तु शुद्धस्य
प्रयोजनात्स्मृतेर्वावगम्यतइत्याशयः । कुर्याच्छब्दमात्रान्वये ऽपि
त्वर्थाद्व्यतिरेकः स्यान्न भावनातः । वस्तुतस्तु करोत्यर्थस्यापि
त्वर्थानवच्छिन्नस्याप्रतीतेर्न तद्व्यतिरेकेणापि विधित्वस्य दध्या
न्वयः सम्भवतीति किं * तर्हीत्यनेनोक्तम् * ननु भावनाया ध
त्वर्थानपेक्षगुणविध्ययोगे ऽपि तद्वारैव गुणविधिर्भविष्यतीत्या
ङ्क्याह * तस्मादिति * अशक्तिमेवोक्तवचनव्यक्तिद्वयातिरिक्त
चनव्यक्त्यसम्भवेनोपपादयति * देवहीति * दध्युदूर्ध्वादिवाक्य
नां गुणवत्कर्मगोचरत्वमुपपादितमुपपादयति * तस्मादिति * न
तस्मादेव तावपि समुदायानुवादाविति पूर्वपक्षोपसंहारभाष्यात्सम
दायानुवादत्वं पूर्वपक्ष्यभिमतं गम्यते न च दध्युदूर्ध्वादिवाक्यवि॰
तानां कर्मणां समुदायो ऽस्त्येकधर्मयोगाभावादित्याशङ्क्याह * त
तश्चेति * हवनाधारणरूपैकजातीयैकदेशे पठितत्वलक्षणैकध॰
योगाख्येन प्रचयेनापादितः समुदायो ऽस्तीत्यर्थः । धात्वर्थसमुदा॰

व धातुना भावनासमुदायस्यापि प्रत्ययेनानुवाद इति वक्तुम
तासामित्युक्तम् * रूपवतीनामित्यनेनाघाराग्निहोत्रयोः स्ववा-
विहितरूपाभावाद्वाक्यान्तरविहितरूपापेक्षणे च विहिते कर्मणि
क्यान्तरैस्तदनुवादेन रूपविधिर्वाक्यान्तरविहिते च रूपे सति
ाविधिरितीतरेतराश्रयापत्तेः कर्मविध्ययोगं सूचयता न हीत्यरूप-
व्याख्यानार्थं भाष्यं व्याख्यातम्। अनुवादप्रयोजनापेक्षायामग्निहो-
ाक्ये तावद्यावज्जीवमग्निहोत्रं जुहुयादिति निमित्तचोदनाया-
ग्निहोत्रं जुहुयादिति फलचोदनायां चैकत्वसिद्धिं प्रयोजनमाह *
मित्तेति * पूर्वपक्षे निष्प्रयोजनत्वदोषं परिहृत्य प्रत्युतान्याय्यवि-
पपरिहारो गुण एव स्यादित्याह * एवं चेति * नन्वाघारकर्म- ४९
द्रव्यदेवतान्वयेन यागरूपतायास्तत्प्रख्याधिकरणेऽभिहितत्वा-
गरूपस्य च द्रव्यदेवतस्याघारवाक्यवद्दध्यादिवाक्येऽप्यश्रुतेररू-
ा तुल्येत्याशङ्क्याह * तथेति * आघारवाक्येष्वनुवादप्रयोजन-
इ * तस्यापीति *

## संज्ञोपबन्धात् ॥ १४ ॥

संज्ञोपबन्धश्चेति सूत्रव्याख्यानार्थं भाष्यं व्याचष्टे * अपि
ते * असौ संज्ञाप्रतिपाद्यो विशेषोऽस्य जुहोत्याघारयति वाक्यस्य
णः क इति रूपं विना न निर्धार्यतइत्यर्थः। नन्विति भाष्येणा-
ाग्निहोत्रसंज्ञाया यौगिकत्वेनोद्भिदादिवत्संज्ञयैव कर्मविशेषो वि-
पतइत्याशङ्क्य यदीत्यनेनोद्भित्संज्ञया पश्वनुत्पादककर्मव्यावृत्ते-
तेदेशिकद्रव्यदेवतलाभाच्च पशूत्पादकचित्रादिव्यावृत्तेर्विशेष ज्ञा-
म्भवेऽप्यत्र व्यवस्थितप्रकृत्यलाभेनातिदेशायोगाद्दध्यादिवाक्येषु
शुद्धगुणविध्ययोगेनोपदेशतोऽपि द्रव्यदेवताऽलाभात्संज्ञया ना-
यागाहवनरूपकर्मव्यावृत्तावप्याघारणहवनरूपकर्मान्तराव्यावृत्ते-
शेषज्ञानासम्भवेनाघारणहवनसामान्ययोरेव संज्ञित्वापत्तेस्तयो-
दध्यादिवाक्यविहितविशेषान्तर्गतत्वेन ज्ञातपूर्वत्वादनुवादत्वेव
दिति परिहृतं तद्व्याचष्टे * सामान्यमिति * आघाराग्निहोत्र-
योर्यौगिकत्वेऽप्याघारणहवनसामान्यं प्रतिपाद्यं स्यादिदं चा-
त एव ज्ञातत्वान्न क्रियान्तरवद्विधानार्हमिति वत्यर्थकल्पनया
ज्यम्। अथेति भाष्येण विधिस्वभावादेव विधेयान्तरव्यावृत्तकर्म-
षप्रतिपत्तेरयौगिक्यामपि संज्ञायां विशेषज्ञानं सेत्स्यतीत्याश-
तथापीत्यनेन विधिस्वभावाद्विधेयान्तरव्यावृत्तिप्रतीतावपि न-
ागशून्यायाः संज्ञाया व्यावृत्तिवाचित्वाभावात्तिष्ठतेरपि गतिनि-

वृत्तिवाचित्वे सत्युपवेशनादावपि प्रयोगापत्तेरूर्ध्वत्वोपलक्षण
न गतिनिवृत्त्यर्थत्वस्मृतेर्व्याख्येयत्वाज्जुहुयोश्चाघारणहवनयो
मन्यरूपत्वेनाविधेयतया विधानार्थं वाच्यत्वानर्हत्वाद्विधेयत्वं
वाच्यत्वार्हस्य विशेषस्य रूपं विनानवगतत्वेनापूर्वविशेषवि
ज्ञेयेति परिहृतं तद्व्याचष्टे * तदज्ञेयतयेति * तस्य विधाना
पूर्वस्य क्रियान्तरस्यान्यत्र दध्यादिवाक्येषु विधिर्युज्यते न त्वा
ग्निहोत्रवाक्ययोस्तत्र रूपाभावेनाज्ञेयत्वादित्यध्याहारेण योजन
त्रेति तु पाठः सुगम एव द्वितीयान्तसत्संज्ञोपबन्धादित्येवम
सूत्रव्याख्यानार्थमपि चेति भाष्यं व्याचष्टे * क्रियाश्चेति *
कवाचित्वेन साधनशब्दव्याख्यानाया * कारकत्वेनेत्युक्तम् *
यार्द्धेनानुवादेति भाष्यं व्याख्यातं श्लोकं व्याचष्टे * आघारमि
समुदायस्य समुदायिभ्यो ऽत्यन्तभेदाभावे ऽपि साध्यत्वोपपा
ष्टान्तेनोक्ता ननु सामान्यशब्दोक्ताया भावनातो विशेषशब्दोक्तस्य
त्वर्थस्य व्यापाररूपत्वेनाभेदवद्भाव्याभाव्यनिष्ठत्वेन भेदस्यापि
घाद्युक्तं कर्मत्वं समुदायस्य तु समुदायिभ्यः कथं चिदपि भेद
वात्कथं कर्मेत्याशङ्कते * ननु चेति * समुदायिभ्यः समुदा
भेदाभावे ऽपि समुदायिनामेव प्रत्येकरूपासामस्त्यरूपस्य भेद
स्यैव च समुदायशब्दवाच्यत्वादेकधर्मान्वयाख्यप्रचयद्वारा च ऽ
करूपैः साध्यत्वात्कर्मत्वोपपत्तिरिति क्रियाणामिति भाष्यसू
,२।१ परिहारमाह * नेति * समुदायस्यावयवभूतानां क्रियाणां प्रच
साध्यत्वान्नायुक्ता कर्मेत्यर्थः एतदेव विवृणोति * समस्ता
हीति * नन्वाघाराग्निहोत्रशब्दयोः पौर्णमास्यमावास्याशब्द
येन प्रत्येकरूपवाचित्वावधारणात्प्रत्येकरूपस्यैव कर्मत्वं वाच्यम्
तच्च विरुद्धमित्याशङ्कते * ननु चेति * अवाच्यस्यापि स
स्त्यरूपस्य लक्षणयावगतेः । कर्मत्वं भविष्यतीति परिहरति *
इति * ननु विधाचर्योदनपाकं पचतीतिवद्भावनाधात्वर्थलक्ष
सामान्यविशेषभेदेनापि क्रियाकर्मत्वोपपत्तेर्न कर्मत्वनिर्देशो ऽ
वादत्वहेतुरित्याशङ्क्याह * न चेति * जुहोत्याघारयतिर
मानाधिकरण्यं विनाग्निहोत्राघारशब्दयोर्धात्वर्थवाचित्वानवग
जुहोत्याघारयत्योश्च पाकमितिवद्भावनाख्यसामान्यशब्दादाख्या
प्रत्ययाद्भेदेनानुपादानाद्धात्वर्थस्य कर्मत्वं यद्वतो ऽभिम
तन्न सम्भवतीत्यर्थः । ननु तत्प्रख्याधिकरणे सामाधि
रण्यं च साध्यांशेनेह कर्मण इति वार्त्तिके जुहोत्याघार
त्यर्थयोः शब्दभेदानुपादाने ऽपि साध्यत्वस्योक्तत्वात् द्वितीय

सञ्ज्ञोपबन्धस्य पूर्वपक्षहेतुमात्रत्वप्रतीतेः किमात्रातिनिर्बन्धेने-
ाशङ्क्याह * एतदिति * पौर्णमासीसिद्धान्तौपयिकत्वान्निर्बन्ध
प्राशयः । भाष्यकृता तु धात्वर्थस्य भाव्यनिष्ठत्वाभावेन करोत्य-
क्रियात्वाभावादकारकत्वे च क्रियारूपया भावनयानन्वयापत्त-
धिसामर्थ्याच्च करणत्वावगमे ऽपि कर्तृव्यापारव्याप्यत्वं विना
रणत्वायोगेनार्थाद्व्याप्यरूपकर्मत्वप्रतीतेर्विधिपक्षे ऽपि द्वितीया-
सञ्ज्ञोपबन्धोपपत्तेरेतद्व्याख्यानादरेणाधैव व्याख्या य एवं वि-
न्पौर्णमासीसञ्ज्ञकं यागं यजतइत्यादिना पौर्णमासी सिद्धान्ते
जिता द्विविधमपि सूत्रार्थमुपसंहरति * तस्मादिति *

## अप्रकृतत्वाच्च ॥ १५ ॥

न च प्रकृतमपीति भाष्येणैतत्सूत्रमाघारे प्राकरणिकाङ्क्षया-
ारादपि रूपानवगतेररूपत्वोपपादनार्थतया व्याख्यातमित्याभा-
तत्प्रख्याधिकरणे वाक्यान्तरतो द्रव्यदेवतालाभस्योक्तत्वादला-
वोर्ध्वादिवाक्यैरप्याघार्यद्रव्यं विनाघारणविध्ययोगापत्तेरयुक्तं
त्वा स्वयमाघाराग्निहोत्रवाक्ययोररूपत्वे ऽपि वाक्यान्तरेभ्यो रू-
वगतेर्विधेयत्वोपपत्तिशङ्कानिराकर्तुमेतत्सूत्रमिति वक्तुमाशङ्कां
वदाह * अथेति * तत्र वाक्यान्तरविहिते रूपे सति कर्मवि-
ः कर्मणि च विहिते सति तत्र रूपविधिरितीतरेतराश्रयं शब्दा-
स्य प्रयोगभूतत्वादिति सिद्धान्तसूत्रावयवेन परिहरिष्यमाणत्वा-
नुपन्यस्य दृष्टान्तवैषम्येण परिहारमाह * नेति * न चोर्ध्वा-
वाक्येष्वाघारशब्दो ऽस्तीत्यपि वाक्यसम्बन्धद्रव्यविधावाघारश-
ादप्यनुवाद्यविशेषाप्रतीतेर्वक्ष्यमाणत्वान्नोक्तम् । अनेन च तण्डुला-
वाक्येन प्रकृताग्निहोत्रशब्दाभावादित्येवं सूत्रं योजितम् । ननु यथा
ीहिभिर्यजेतेत्यादौ दर्शपूर्णमासशब्दाभावे ऽपि प्रकरणाद्यजस्तद्विष-
त्वावधारणं तथेह जुहोतेरग्निहोत्रविषयत्वावधारणं भविष्यती-
ाशङ्क्ते * ननु चेति * प्रकृतिशब्दाभावे व्युत्पाद्यानुत्पत्तिवाक्ये
करणाभावादित्येवमेतच्छङ्कानिरासे ऽप्येतत्सूत्रमवतारणपूर्वं यो-
यति * अत इति * उत्पत्तिवाक्ये ऽपि सामान्यफलकरणत्व-
तीतेरितिकर्तव्यताकाङ्क्षात्मकप्रकरणसद्भावे ऽप्यज्ञातरूपस्य वि-
प्रयोगात्फलकरणत्वप्रतीत्यभावाभिप्रायेणैतदुक्तं प्रयोगवाक्यारू-
स्यैव तर्हि जुहोत्यर्थस्य फलकरणत्वात्प्रकरणेन द्रव्यदेवतान्वयो
स्तीत्यज्ञाताशयः शङ्कते * तत्रेति * स्वाशयं प्रकटयन्परिहरति
* तादिति * तण्डुलादिवाक्यविहितानां तु कर्मणां प्रज्ञातरूपत्वा-

४१,३।१ त्फलान्वये सति प्रकरणोपपत्तेः प्रकरणेन ग्रहणं युक्तमित्याह
इति * नन्वाघारशब्दस्य मन्त्रद्रव्यविध्योर्भावादाघाररूपं ज्ञा
इत्याशङ्कते * नन्विति * विधौ सकलमन्त्रपाठे ऽपि ला
वार्त्तिके प्रतीकमात्रग्रहणं धात्वर्थानधिकार्थत्वान्नाघारशब्दो
र्थं विशेष्टुं शक्नोतीति परिहरति * नेति * एतदेवोपपा
* तत्रेति * आघारे ऽप्याशङ्कोपन्यासपूर्वकं तन्निरासे ऽपि
योजयति * नन्विति * एतदेव विवृणोति * दर्शेति * द
मासप्रकरणपठितानामपि प्रयाजानामवान्तरप्रकरणस्यातिक्रम
करणे व्युत्पादयिष्यमाणत्वादेतदप्यज्ञातरूपाघारविध्ययोगाशङ
ष्यमप्यस्मिन्नर्थे योज्यम्।कथं भावात्मकप्रकरणाभावे ऽप्यधिक
क्षणसान्निध्यात्मकात्प्रकरणाद्विशेषावगतिरित्याशङ्कोपन्यासपूर्
न्निरासे ऽपि नास्ति प्रकृतमस्येति विग्रहस्थषष्ठ्युक्तस्य सम्ब
नञा वयं प्रकृतमेवेति च प्रकृतशब्दो ऽवधारणमभिप्रेत्यैतत्सूत्
जयति * सन्निधेरिति * ध्रौवाघारस्याप्याघारयतिनानुवा
पत्तेरित्याशयः । तण्डुलादेरपि वाक्यबलीयस्त्वेनाप्रकृतहोम
यसूचनार्थं बहुवचनम् । नन्वेवं सति पूर्वपक्षे ऽप्यूर्ध्वत्वतण्डु
ध्रौवाघारजयाहोमादिभिरप्यन्वयः स्यादित्याशङ्क्याह * तदि
ज्ञातरूपाणां फलान्वयेन कथम्भावात्मकप्रकरणोपपत्तेस्तस्य
र्थसाधनत्वलक्षणार्थं वाक्येनापेक्षितत्वेनाविरोधाद्बाधः सिः
त्वज्ञातरूपयोराघाराग्निहोत्रवाक्योत्पादितयोः कर्मणोः फल
धानाशक्तेः कथं भावात्मकप्रकरणायोगादधिकारात्मकस्य च
रणस्य वाक्येनानपेक्षणाद्विरोध इत्याशयः । तत्राधिकारात्म
प्रकरणस्य वाक्यविरोधे सत्येवं वक्ष्यमाणप्रकारेणाविरोध इति
शब्दार्थे तच्छब्दो योज्यः । नन्वेवमपि द्रव्यविशिष्टकर्मवाक्ये
ताभावाद्देवताविशिष्टकर्मवाक्ये च द्रव्याभावादूर्ध्वादिवाक्ये
भयाभावात्कर्मान्तरगुणस्य च कर्मान्तरे ऽनन्वयादेकेन च
निष्पत्तेर्द्रव्यं च विनोदूर्ध्वत्वादिमात्रेणाघारानिष्पत्तेर्न विधिवि
तीत्याशङ्क्याह * यत्र चेति * अन्येनापि रूपेण कर्मान
द्व्यावृत्तेः कर्मणि विहिते येन विना कर्मानिष्पत्तिस्तत्कर्मान्त
मन्यथानुपपत्त्या कल्प्यतइत्यर्थः । कश्चिदित्यनेनाद्रव्यं देवत
प्यूर्ध्वत्वादेः कर्मरूपत्वे द्रव्यदेवतादविशेष उक्तः । एवं च यदू
त्वादिवाक्येष्वपि न किञ्चित्रूपं स्यात्ततो विशेषाग्रहणेनेतरय
विधित्वं स्यान्न त्वेतदस्तीत्याह * सर्वेषु चेति * तस्मादिति
क्षोपसंहारभाष्यम् * तस्मादिति *

## चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्सन्निधेर्गुणार्थेन पुनः श्रुतिः ॥ १६ ॥

दध्यूर्ध्वादिवाक्यानां कर्मविधित्वानभ्युपगमाद्भाष्यस्थकर्मो-
रोक्त्यनुपपत्तिमाशङ्क्याभ्युपेत्यवादेन स्रौवाघारचतुर्होतृहोमाद्य-
या वा समाधत्ते * कर्मेति * कुत इत्यादिना रूपवन्तौ विधी- ४१
इत्यन्तेन भाष्येण वाक्यान्तरविहितरूपापेक्षणेऽन्योन्यान्याश्र-
पत्तेः स्ववाक्याज्ञातरूपकर्मविध्ययोगस्यारूपत्वादित्यनेनोक्तस्या-
त्तप्रवर्त्तनात्मकविधिस्वभावादेव विध्यन्तराविषयभूतकर्मान्तर-
वृत्तविधानार्हकर्मप्रतीतेर्वाक्यान्तरावगतरूपवत्तया चानुष्ठाना-
वाद्विधिनिर्वाहोपपत्तेः । स्ववाक्याज्ञातरूपस्यापि कर्मणो वि-
सम्भवाद्विधिनिर्वाहार्थं वाक्यान्तरविहितरूपापेक्षणेऽपि विधि-
वृत्तावनपेक्षणान्नेतराश्रयमित्येवं परिहारार्थतया विधिशब्दार्थस्य
योगे ऽनुष्ठाने भूतत्वाद्वर्त्तमानत्वाद्व्याप्रियमाणत्वादनुष्ठापकरू-
त्वादन्यतः प्राप्ते चानुष्ठाने ऽनुष्ठापनानर्थक्याद्रूपं विना-
कर्मान्तरं विधेयं प्रतीयते तच्च वाक्यान्तरतो रूपावगत्या
वहतीत्येवं सूत्रावयवो व्याख्यातः तदन्तर्गतेन चाघा-
त्यनेनाविज्ञातार्थावित्यन्तेन हवनाघारणयोर्विधिविषयसमानयो-
रेकीभूतयोः विधिविषयभूतयोरेव संज्ञाविषयत्वात्संज्ञोपबन्धो-
पादनार्थतया ऽघाराग्निहोत्रशब्दार्थस्य प्रयोज्यात्मभूतत्वादित्येवं
व्याख्यातस्तत्र द्वितीयव्याख्यानार्थं भाष्यं जुहोत्याघारयति * लक्ष-
ति * वार्त्तिकेन व्याख्यास्यमानत्वादुपेक्ष्य शेषं सङ्क्षेपतो व्याच-
* आघारयतीति * यदुक्तमिति भाष्येण पूर्वेभ्यो होमाघारेभ्य
ति पूर्वपक्षभाष्यावयवसूचितमर्थमनुभाष्य नैतदित्यादिना वा-
यार्थौ यस्तं विधातुमित्यन्तेन तन्निरासार्थतया तत्सन्निधेर्गुणार्थेन
नःश्रुतिरिति सूत्रावयवो व्याख्यातस्तत्र तस्मान्नानुवादाविति भाष्यं
वत्तात्पर्यतो व्याचष्टे * न चेति * नन्विति भाष्येणोपपदश्रव-
द्दध्यादिवाक्यानां शुद्धहोमाघारविध्यशक्तावपि होमाघारसम्ब-
धतया दध्यूर्ध्वादिविध्यभ्युपगमात्सम्बन्धस्य च सम्बन्धिद्वयनि-
त्वात्प्रतिसम्बन्धिभ्यां होमाघाराभ्यां विनानुपपत्तेरर्थापत्त्या तयो-
पि प्राप्तिराघाराग्निहोत्रवाक्ययोरनुवादत्वं भविष्यतीत्याशङ्क्य नै-
देवमित्यनेन ब्रूम इत्यनेन निरस्तं तत्तात्पर्यतस्तावद्व्याचष्टे * न
चेदिति * भाष्यस्थस्य सम्बन्धशब्दस्य विशिष्टवाचित्वं शङ्कायाश्च

विशिष्टविधानाशयत्वं तन्निरासार्थत्वं चोत्तरस्यानेनोक्तम् अ
तारणपूर्वमस्मि हीति भाष्यावयवमध्याहारेण द्वेधा योजयि
दिति * अस्मिन्नाघाराग्निहोत्रवाक्यस्थे प्रत्यक्षे कर्मविधाने
न सम्बन्धो ऽर्थादापादक इत्याद्या योजना अस्मिन्सम्बन्धे
र्थाक्षेप्ये होमाघाराख्यसम्बन्धिविधौ प्रत्यक्षे सति सम्बन्धाख्य
धानेन सम्बन्धमात्रं विधीयतइति द्वितीयासम्बन्धशब्देनाभि
सम्बन्ध एवोक्त इति गुणशब्देनोक्तं तस्मादित्याशङ्कानिरा
हारभाष्यं व्याचष्टे * तस्मादिति * नन्वाघारयतीति
श्रुत्या धात्वर्थावच्छिन्नभावनाविधिप्रतीतेर्न वाक्ययिसम्बन्ध
युक्त इत्याशङ्क्य सत्यमित्यनेन सम्बन्धस्य पदान्तरान्वयलभ्य
श्रौतत्वे ऽपि तच्छब्दपरामृष्टस्य धात्वर्थावच्छिन्नभावनाख्य
र्मणः सन्निहिताघाराग्निहोत्रविधिप्राप्तत्वेनोदूर्ध्वादिवाक्यैर
त्वाद्वाक्यीयगुणविध्यर्थं कर्मश्रवणं न कर्मविध्यर्थमिति तन्नि
त्वेन सूत्रावयवो व्याख्यातस्तत्त्रयमेतच्छङ्कापरिहाराशय
र्थैरुत्तरभाष्यैरेव व्याख्यास्यमानत्वान्न व्याख्यातम् । ननु पदान्त
शङ्काशयविवरणार्थं भाष्यं व्याचष्टे * भावनेति * सत्यमे
परिहाराशयविवरणार्थं भाष्यं व्याचष्टे * सप्तत्यमिति * भ
मध्यशब्देन तं व्यापारशब्दोक्तभावनाविशेषणभूतं स्वपदार्थं ध
गुणशब्दो विशेष्यतीति गुणस्य भावनाद्वारधात्वर्थविशेषणात
धानेन भावनाविशेषणतैवोक्तेति सूचितम् । ननु गुणविध्यावपि
नातो विध्यनुत्सारणे कर्मानुवादेन गुणविध्युद्घोषो विरुध्येते
ङ्क्याह * तेनेति * येन कारणेनोदूर्ध्वादिवाक्येष्वपि स्व
धात्वर्थगतव्यापारं भावनां वक्ष्यतीत्युक्तं तेन कारणेन
त्रैवैतद्वक्ष्यमाणमुपदिष्टं भवतीत्यर्थः । शास्त्राभिव्यक्ति
तिकरणाध्याहारेणोत्तरग्रन्थान्वयः विशिष्टविधेः सार्व
त्वे ऽपि तात्पर्याभिप्रायः । कर्मानुवादेन गुणविध्युद्घो
त्याशयः । नन्वेवमपि व्याख्यातॄणामष्टप्रकारश्रुत्युद्घोषो विरु
त्याशङ्क्य भ्रान्तिमूलत्वं तदुद्घोषस्याह *तत्रेति* आत्मना यथ
न्तिरुत्पन्ना तथान्येषामप्युत्पादयितुमित्युपहासः किलेति भ्रा
सूचितम् । भ्रान्तित्वोपपादनायाष्टावपि प्रकारान्परदौर्बल्यनिय
दूषयन् शुद्धधात्वर्थविधिरूपं प्रथमं प्रकारं तावत्सोदाहर
२५।२ भाषणपूर्वं दूषयति * तत्र तावदिति * कस्मादयुक्तमित्यपेक्ष
मेकाभिधानश्रुत्या भावनान्वयस्य प्रागवगमादिति हेतुमाह
हीति * भावनानिरपेक्षस्य धात्वर्थस्य पुम्प्रवृत्त्यविषयत्वाद्प्यावि

द * न चेति * एतदेवोपपादयति * सा हीति * देहाश्रित-
ा विष्णुक्रमादेरात्माश्रितस्यापि च यागादेः प्रयत्नरूपभावना
प्रवृत्त्यविषयतापिशब्देन सूचिता किं च भावनावद्धात्वर्थस्या-
निष्पाद्यापरपर्यायसाध्यत्वेन विधानस्य अन्यदेव हि यागादौ
न्यं करणात्मकम्। अन्यच्च भावनानाम साध्यत्वेन व्यवस्थितमि-
वार्त्तिके निरस्तत्वाद्ध्यादितत्करणत्वेनैव विधानावगतेः करण-
च क्रियारूपभावनान्वयनिबन्धनत्वान्न तां विना विधेयत्वो-
त्तेरित्याशयेनाह * इदं चेति * ननूत्पत्तिवाक्ये साध्यत्वेनापि
वेहितस्य किमर्थमपुरुषार्थरूपो धात्वर्थः साध्य इत्यपेक्षायां
वाक्ये करणत्वेन विधानात्फलवत्त्वोपपत्तेर्नोत्पत्तिवाक्ये करण-
विधिरित्याशङ्क्याह * न हीति * धात्वर्थस्य साध्यत्वेन विधौ
स्य किमर्थमित्यपेक्षायामपि विधेयस्य करणत्वानवगतेः सा-
नपेक्षत्वात्पदार्थापेक्षां च विना पदार्थान्तरान्वयायोगात्फलवा-
ऽपि करणत्वेन विधिर्न सम्भवतीत्युक्ते ननु भावनावत्करण-
भावे ऽपि साध्यापेक्षा भविष्यतीत्याशङ्क्य*असावित्युक्तम्। भा-
याः करोत्यर्थरूपत्वेन नित्यं कर्मापरपर्यायसाध्यापेक्षत्वे ऽपि
वर्थस्य करोत्यर्थत्वान्न करणत्वं विना साध्यापेक्षत्याशयः। वि-
धात्वर्थविधिरूपं द्वितीयं प्रकारं दूषयति * सोमेनेति * तद्
ानां क्रियार्थेन समाम्नाय इत्यनेन न्यायेन धात्वर्थस्य कार-
णां च परस्परान्वयमपेक्ष्य भावनयान्वितानां पश्चाद्धात्वर्थस्या-
पन्नस्य करणत्वायोगात्कारकैश्च विना तदनिष्पत्तेः कारकापे-
यां कारकाणां च सिद्धरूपत्वेन व्यापाररूपधात्वर्थनिष्पादनं
ता साक्षाद्भावनान्वयायोगाद्धात्वर्थापेक्षायामरुणैकहायनीन्याये-
न्योन्यनियमान्न भावनाविधिनिरपेक्षो गुणविशिष्टधात्वर्थविधि-
क इत्याशयः। सप्तमनवमाद्ययोश्च यजेतेत्थमितीति कर्त्तव्यताया-
त्वर्थान्वयनिरासेनेत्थं कुर्यादिति भावनान्वयस्य भाष्यकृता प्र-
माणत्वाद् गुणानां धात्वर्थविशेषणत्वानुपपत्तेर्न तद्विशिष्टधा-
र्थविधिरित्याह * तथा चेति * गुणान्वये च धात्वर्थस्य
रूप्यं स्यादित्याह * भावनां चेति * धात्वर्थस्यान्यत्र विधिरूपं
तीयं प्रकारं दूषयति * तथेति * भावनायां तु धात्वर्थस्य
ारकाणां वा विधेः सर्वत्राविशेषात्तदभिप्रायान्यशब्दव्याख्या
युक्तेत्याह * यदि त्विति * अन्योद्देशेन च शुद्धधात्वर्थ-
धानस्य तन्निरपेक्षशुद्धधात्वर्थविधानात्पदान्तरापेक्षानिमित्तविप्र-
र्षेण दौर्बल्ये ऽपि अन्योद्देशनिरपेक्षविशिष्टधात्वर्थविधाने ऽपि

विप्रकर्षसाम्यात्ततो दौर्बल्यानुपपत्तेः प्रत्युताश्रुतविशेषणा
त्पनाभावेन ततो बलीयस्त्वाद् द्वितीयस्थाननिवेशापत्तेस्तृती
निवेशो न युक्त इत्याह * न चेति * अन्योद्देशेन विशिष्टः
विधिरूपं चतुर्थं प्रकारं द्वितीयतृतीयपक्षोक्तदोषापादनेन
* पक्षेति * धात्वर्थे ऽन्यविधिरूपं पञ्चमप्रकारं दूषयति
ति * तृतीयानिर्दिष्टस्यापि दध्नो विधेयत्वेनानुष्ठानाविषय
धेर्दध्यनुष्ठेयमित्यभिप्रेत्यानुष्ठानार्थकरोतिप्रयोगोपपत्तेस्तत्र जय
हुयादितिवच्च प्राधान्यविवक्षयापि सप्तमीप्रयोगोपपत्तेर्होमाधि
दध्यधिकर्त्तव्यत्वस्य परानभिप्रेतत्वे ऽपि दधिहोमे करोतीति पर
वचनव्यक्तेरञ्जसैषो ऽर्थः प्रतिभातीत्यारोप्याच्छलेनेदं दूषणद्व
सप्तम्यश्रुतेर्न शब्दाद्धोमस्याधिकरणत्वं स्थालीवच्च पतनप्रति
कत्वाभावान्नार्थरूपेण दध्नश्च तृतीयाश्रुतेर्भूतभव्यसमुच्चार
येन करणत्वावगमात्कर्मत्वरूपा कर्त्तव्यता न युक्तेत्यर्थः । यथ
न्यत्र शुद्धधात्वर्थविधिश्रुतिर्विशिष्टविधानाद् बलीयसी तथा
५९६।२ र्थे ऽन्यविधिश्रुतिरपीति पञ्चमस्थाननिवेशो ऽस्या न युक्त इत्या
यमपि चेति * अन्यत्र शुद्धधात्वर्थविधेरपि द्विविधविशिष्टवि
क्षया बलीयस्त्वसूचनार्थश्चकारः हेतुमाह * एकेति * न
पदान्तरार्थविधिविषयत्वेन विप्रकृष्टार्थत्वार्थे दुर्बलेत्याशङ्क्य
उभयेति * विशिष्टविधावपि विशेषणभूतपदार्थान्तरविधि
शयः । दध्ना जुहोतीत्यत्र च सन्निकृष्टार्थविध्यसम्भवकृतत्व
प्रकृष्टार्थग्रहणं न दोषायेत्याह * सन्निकृष्टेति * प्रकृतश्रुति
यद्धिपरामर्शार्थो ऽस्य शब्दः तत्र तु विशिष्टविधावुभयोर्विशे
विशेष्ययोर्विध्याश्रयणात्सन्निकृष्टविद्ध्यर्थे तत्सम्भवो विप्रकृ
ष्टार्थे चासम्भवो ऽभ्युपगन्तव्य इति युगपद्विरुद्धसम्भवासम
पत्तिरित्याह * तत्रेति * सन्निकृष्टासम्भवकृतत्वाद्विप्रकृष्टग्र
स्योभयाश्रयणे सम्भवासम्भवविरोधापत्तिरित्येकग्रन्थतया वा वि
ष्टविधिदौर्बल्याभिधानार्थतयैतद्योज्यम् । नन्वेवं सति न क्वचिद्वि
विधिराश्रीयेतेत्याशङ्क्याह * अगत्यैवेति * विशिष्टविधिरित्य
हारः । यद्यपि च श्रौतेन विधिना सन्निकृष्टविधानात्काल्येन च
प्रकृष्टार्थविधानात्कालभेदेन विप्रतिषेधपरिहारोपपत्तेरन्योद्देश
रपेक्षविशिष्टविधेरियं विप्रकृष्टार्थविषयत्वात् गुर्वी तथाप्यन्यत्र
शिष्टविधानात्पदान्तरापेक्षानिमित्तविप्रकर्षस्योभयत्र सद्भावेना
शेषाद् गुर्वी न भवत्येवेत्याह * अन्यत्रेति * तदेव त्वातिगुर्वीति
चनार्थो ऽतिशब्दः प्रकृतमुपसंहरतीति क तर्हि निवेशयितव्येत्यपे

ाद्द * काममिति * श्रुतिलिङ्गादिवदासां पूर्वपूर्वानपेक्षत्वान्न
ेपन्यासेन प्रयोजनं यदि त्ववश्यं क्रमेणोपन्यस्तव्या स्तता वरमेवं
इति * काममित्यनेनोक्तम् * धात्वर्थे ऽन्यसम्बन्धविधिरूपं
प्रकारं दूषयति* यत्त्विति* किं यद्ददातीति दानमात्रमनूद्य तत्र
ाशावध्वर्यवे इत्यानन्तर्यावगतः प्रदीपाध्वर्युसम्बन्धो विधीयते
ध्वर्यवे यद्ददातीति क्रियाकारकान्वये क्रियाप्राधान्यविवक्षया-
र्युविशिष्टं दानमनूद्य तस्य प्रदीपसम्बन्धे विधीयमाने ऽपामाच्छा-
दक्षिणा इति स्मृतेःप्राकाशशब्दवाच्ययोः प्रदीपयोर्दानसम्बन्ध-
प्रदानत्वाद्दानर्थक्यतदङ्गन्यायेन विशेषणे ऽवतारादिशेषणभूत-
ध्वर्योः प्रदीपसम्बन्धविधिर्विधेयसम्बन्धित्वेन वाध्वर्योरेव प्रा-
न्यविवक्षायां दानविशिष्टमध्वर्युमनूद्य तस्य प्रदीपसम्बन्धविधिर्दे-
यविवक्षया वा शुद्धाध्वर्य्वनुवादेन प्रदीपसम्बन्धविधिरिति वच-
यर्त्तानां मध्ये कया धात्वर्थे ऽन्यसम्बन्धविधिरित्यशक्यं विवेक्तुमि-
र्थः। एतदेवोत्तरेण प्रपञ्चेन विवृणोति * सर्वत्र हीति * सम-
ाया ज्योतिष्टोमिक्या दक्षिणाया अश्वमेधेति देशप्राप्तायाः प्राकाश-
ामाधिकरणे ऽध्वर्युभागमात्रविकारत्वाभिधानेन निवेश्यमानः प्र-
ज्येतेत्यर्थः।द्विष्ठत्वाच्च सम्बन्धस्याध्वर्य्वाख्यसम्बन्धिप्राप्तावपि प्रा-
ाशाख्यसम्बन्ध्यप्राप्तौ विधातुमशक्यत्वात्प्राकाशयोरपि विध्या-
तर्वाक्यभेदः स्यादित्याह * प्रत्ययस्य चेति * ननु सम्बन्धावि-
निवार्थाक्षेपान्न वाक्यभेदापत्तिरित्याशङ्क्याह * सम्बन्धो हीति*
ामभ्यर्थाक्षेपगौरवं तावदेको दोषः धात्वर्थाङ्गत्वेन चार्थाक्षेपल-
ास्यापि सम्बन्धिनो विधेयत्वात्प्रत्ययावृत्तिस्तदवस्थेत्याशयः। ननु
म्बन्धिविशिष्टस्यैव सम्बन्धस्य धात्वर्थाङ्गत्वात् विशेषणस्य
ाङ्गत्वं विना विशिष्टस्याङ्गत्वासिद्धेः सम्बन्धिनो ऽपि धात्वर्थाङ्ग-
र्थादेव लप्स्यते अतः सम्बन्धिनो धात्वर्थानङ्गत्वं वदता
म्बन्धस्यापि वाच्यं न च तद्वक्तुं शक्यम्। धात्वर्थानुरक्तेन प्रत्य-
न सम्बन्धस्य विधानाद्धात्वर्थाङ्गत्वावगतेरित्याशङ्कते * तत्रेति*
ात्वर्थानुरक्तेन प्रत्ययेन विधानाद्धात्वर्थाङ्गत्वे च दध्ना जुहोतीत्य-
ाः सम्बन्धविधित्वाभावाद्भेदोपादानार्थवत्त्वे ऽपि वायव्येन्द्रिय-
ुत्योः प्राकाशश्रुतिवत्सम्बन्धविधित्वाभ्युपगमाद्भेदोपादानानर्थक्यं
ोषमाह * एवं तर्हीति * ननु वायव्यश्रुतावेव धात्वर्थस्य प्रकृति-
ोतनार्थे विधायकप्रत्ययानुरञ्जकत्वं युक्तमिन्द्रियश्रुतौ त्वविवक्षि-
त्वान्न प्रत्ययानुरञ्जकतेत्याशङ्क्याह * न हीति * प्रकृतिप्रत्यययोः
ौर्वापर्यनियमाच्छुद्धप्रत्ययार्थानुपलब्धेर्धात्वर्थस्यानुरञ्जकता सर्वत्रा-

विशिष्टेत्याशयः । वायव्यश्रुत्युपन्यासो दृष्टान्तार्थः । नन्वि
श्रुतौ बलादापतितस्याप्यनुरञ्जकत्वस्यानुपकारित्वेन त्यागान्ना
कतत्याशङ्क्य वायव्यवाक्ये ऽपि तर्हि धात्वर्थानपेक्षाङ्ग
आदालभातचोदिताग्नीषोमीयपशुयागप्रकृतिद्योतनासिद्धेर्दद्या
च्चाध्वर्युप्राकाशसम्बन्धापादकत्ववदालभत्यर्थस्य द्रव्यदेवत
न्धानापादकत्वेन विधायकप्रत्ययोपकारित्वाभावान्नानुरञ्जकत
दित्याह * प्रकृतीति * लिङ्गशब्दो भावव्युत्पत्त्या द्योतनाख्या
वाची उपकारिणो ऽपि धातोरनुरञ्जकत्वानपेक्षणाद्धात्वर्थर
ञ्जकता दूरोत्सारितेति सूचनायात्मशब्दः । ननु क्रियागर्भत
म्बन्धस्य धात्वर्थं विना द्रव्यदेवतसम्बन्धानिष्पत्तेर्धा
न्तरवाचिशब्दाश्रवणाच्च विधेयसम्बन्धापादनेनात्मनो विध
स्योपकरिष्यतीत्याशङ्क्याह * न चेति * यदि च श्र
व्वोः सम्बन्धः कार्यः स चालम्भति द्वारेति विधीयेत न ततो
भेदः स्याद्विधेयापादकविधावपि त्ववाक्यभेदे गुणफलसम्बन
दकाश्रयाश्रयिसम्बन्धविधावप्यवाक्यभेदापत्तेरिन्द्रियवाक्ये
धात्वर्थत्यागोक्तिरयुक्ता स्यादित्याह * यदि चेति * विनापि
श्रयाश्रयिसम्बन्धे गुणफलसम्बन्धोपपत्तौ प्रकरणलभ्याश्रयि
४९७।१ न्धाभ्युपगमो विरुध्येतेत्याह * किमिति वेति * सप्तमाष्टमश
कारावप्यनेन प्रसङ्गाद् दूषितौ भवतः अतो न धात्वर्थानुरक्तेन
नान्यसम्बन्धस्य विधानाद्धात्वर्थाङ्गत्वसिद्धिरित्युत्तरश्रुतिप्रव
यदूषणस्य प्रस्तुताशङ्कानिरासार्थत्वं दर्शयितुमाह * तस्मादि
पञ्चमश्रुतिप्रकारवत्तु धात्वर्थाङ्गत्वसिद्ध्यर्थं दाने प्राकाशाध्वर्यु
न्धं करोतीतिवचनव्यक्त्यभ्युपगमे पूर्ववद्धात्वर्थाधिकरणत्व
न्धकर्त्तव्यत्वे आपाद्य निराकार्ये इत्याह * पूर्ववच्चेति * न
त्वर्थाङ्गतयेह सम्बन्धस्य विधिरिष्टो न तु धात्वर्थस्याधिक
तासम्बन्धस्य वा कर्मतेत्याशङ्क्याह * न चेति *
ऽपि भावनान्वयात्प्राक् धात्वर्थे विधिर्न सम्भवतीत्य
ब्दार्थः कस्मादित्यपेक्षायामाह * इतीति * यथा भावना
त्प्राक्कस्य चिद्धात्वर्थान्वयो न सम्भवति तथा तद्भूताधिक
क्तेन मार्गेणेत्यादिवार्त्तिकेनोक्तमित्यर्थः । यद्ददाति तत्रा
प्राकाशयोः सम्बन्ध इति वचनव्यक्तिनिरासमुपसंहरति *
तावदिति * आध्वर्यवे यद्ददाति तस्य प्राकाशसम्बन्ध इत्य
मपि वचनव्यक्तौ दानस्याध्वर्युविशिष्टत्वे ऽध्वर्योर्वा दानविशि
वाक्यभेदः स्यादित्याह * अथेति * यो ऽध्वर्युस्तस्मै प्राक

त्यस्यां तु वचनव्यक्तौ क्रियागर्भत्वात्सम्बन्धस्य ददातिं विना म्प्रदानसम्प्रदेयसम्बन्धायोगात्कल्पिते ददातौ सम्बन्धः सम्ब- धाच्च ददातिकल्पनेतीतरेतराश्रयापत्तेर्न धात्वर्थे ऽन्ययोः सम्बन्ध ति वचनस्य श्रुतेर्व्यक्तिः प्रकारः सम्भवतीत्याह * शुद्धेति * नु सम्प्रदानश्रुत्याक्षिप्ताद्धात्वर्थादेवाध्वर्युप्रकाशयोः सम्बन्धसिद्धे- तुकल्पनाभावान्नेतरेतराश्रयापत्तिरित्याशङ्क्य * यद्यपीत्युक्त- र * धात्वर्थस्याशाब्दत्वे ऽन्वयायोगादन्वयसिद्ध्ये ऽवश्यङ्कल्प्यो ातुरित्याशयः । यथा च सोमेन यजेतेति श्रुतियजिसद्भावाग्ने- द्रवायवादिवाक्येष्वन्ययजिकल्पना युक्ता तथेहापि श्रुतददात्य- वेवक्षयान्यददातिकल्पनायोगान्न शुद्धाध्वर्य्वनुवादोपपत्तिरिति सू- चनार्थो दृष्टान्तः दानाध्वर्य्वनुवादेन च तत्सम्बन्धितया प्राकाश- विधानेनार्थात्सम्बन्धविधिसिद्धावपि तात्पर्याभावाच्छ्रुतिप्रकारत्वा- नुपपत्तिरित्याह * अवश्यं चेति * अन्यतराप्राप्तौ सम्बन्धस्या- श्रौतत्वे भाष्यकृत्संमतिमाह * वक्ष्यति चेति * यत्र च सम्बन्धो विधीयते तत्रान्यतरस्यान्यत्र विधानं सम्बन्धो नान्तरीयको यत्रा सम्बन्धस्य विधानान्तरीयकौ सम्बन्धिनाविति तृतीयाधिकरण- भाष्ये सम्बन्धविधिद्वैविध्यमुक्त्वा यत्रोभौ लक्षणत्वेन तत्र स्वशब्देन सम्बन्धो विधीयते यत्र त्वन्यतरो लक्षणत्वेन तत्रैकं लक्षयित्वान्य- तरो विधीयत इति विषयोदाहरणभाष्ये प्राग्वक्ष्यमाणमपि प्रकृत्य परिधीन् हारियोजनं जुहोतीत्यादावुभयप्राप्तौ सम्बन्धस्य श्रौत- त्वं जाघन्या पत्नीः संयाजयन्तीत्यनभिमतत्वाद्व्यतिरेकप्रदर्शन- नमाम्नायेति सूचनार्थम् * पश्चादुक्तम् * विधेयान्तराभावेनार्था- क्षेपायोगात् श्रौतत्वसिद्ध्यर्थः केवलशब्दः उभयाप्राप्तौ सम्बन्धिनोः सम्बन्धविधिनान्तरीयकत्वायोगादनुदाहरिष्यमाणाप्युभयाप्राप्तिर्वा- यव्यं श्वेतमित्यादौ विशिष्टविधिरूपसम्बन्धविधिनान्तरीयकत्ववि- षयतयानुभयप्राप्तौ वेत्यनेनोदाहृता आख्यातेन च पदार्थान्तरान्वय- विधौ बुद्धिविक्षेपस्य श्रुतित्रये ऽपि साम्यान्न बलाबले विशेष इ- त्याह * तिसृणामिति * ननु सन्निकर्षविप्रकर्षाविशेषे ऽपि धात्व- र्थे ऽन्यान्वयविधौ धात्वर्थस्याविषयत्वे ऽपि विधेयविषयतया ग्रहणे- नानुग्रहाद्धात्वर्थानुरक्ते ननुप्रत्ययेनान्यान्वयविधौ धात्वर्थस्याविधे- यत्वे ऽपि विधेयविषयतयाप्यग्रहणात्ततो दौर्बल्यं प्रत्ययार्थानुरञ्जक- त्वेन तु ग्रहणेनात्यन्तत्यागाभावाद्धात्वर्थत्यागेनान्यान्वयविधितो ब- लीयस्त्वमित्याशङ्क्याह * नापीति * विधेयविषयत्वप्रत्ययानुरञ्ज- कत्वत्यागानामेकधात्वर्थविषयत्वाभावेनाविरोधान्न बलाबलज्ञानो

पयोग इत्याशयः। अतः परदौर्बल्याभावक्रमेणोपन्यासः सप्त
श्रुत्योश्च षष्ठश्रुत्यन्तर्भावादष्टत्वगणनोपन्यासो ऽनर्थक इत्य
इतीति * प्रकरणार्थमुपसंहरति * तस्मादिति* पुनःश्रुतिरि
भाष्यावयवेन विहितायाः अपि भावनायाः पुनर्विधानाभिधानात्स
र्थगतं वक्ष्यतीति च भाष्यावयवेन स्वपदार्थधात्वर्थगतं भा
व्यापारं विधिश्रुतिर्विधास्यतीत्यभिधानात्सर्वत्र विशिष्टभावन
प्रतीतिरधिकरणगतसूत्रभाष्यावयवविवक्षया लाक्षणिको ऽ
णशब्दः प्रस्तुतदध्यूर्ध्वादिवाक्यरूपविषयवाची वा । ननु सर्व
धनाविधौ न क्व चिद्विप्रकृष्टार्थविध्यभिधानं युज्येतेत्याशङ्क्य
यश्चेति * सन्निकृष्टं धात्वर्थस्य भावनाविशेषणत्वं विप्रकृष्टं
त्याशयः। स एष इति भाष्यं स्वस्वपदार्थभूतो धात्वर्थ एष
व्यव्यापारविशेषणीभूतः सन् गुणविशिष्टो विधिश्रुत्या प्र
४९८। विधास्यत इत्येवं व्याख्यातुमाशङ्कते * कथं पुनरिति * शङ्क
सार्थत्वेन भाष्यं व्याचष्टे * विशिष्टेति * ततश्च गुणविधि
शो ऽपि फलाभिप्रायेणोपपत्स्यत इत्याह*फलतश्चेति * ननु
ऽपि कर्मणो विशिष्टविधौ सत्यनेकार्थविधिनिमित्तप्रत्यया
धानं विरुध्येतेत्याशङ्कते * नन्विति * श्रुतिवृत्त्या विधेः सर्व
धनाविषयत्वे ऽपि प्राप्तायां तस्यामप्राप्तप्रापणाविषयस्वभ
द्विधेस्तात्पर्यवृत्त्या विशेषणत्वात्सकृदुच्चरितस्य चानेकतात
गादपरिहार्या वृत्तिरिति परिहरति* नैष इति * कृदन्तविधि
त्पन्नेन भावप्रत्ययेन सम्बन्धाभिधानात्तेविधेर्भावनया सह
विषयिलक्षणस्य सम्बन्धस्य श्रुतिवृत्त्या सार्वत्रिकत्वे ऽपि ता
तात्पर्यापरपर्यायस्य तत्प्रयोजनत्वस्य तत्फलत्वस्याप्राप्तविषय
भक्तत्वाद्व्यवस्थितत्वाद्विशेषणफले विधित्वे ऽनेकविशेषणप
परिहार्यो वाक्यभेद इत्यर्थः। श्लोकं व्याचष्टे * यदा हीति *
द्विशेषणविधानवाक्यभेदस्यैक्ये उक्तवसितानां तु नार्थाक्षे
रुध्यते इति पौर्णमास्यधिकरणवार्त्तिकोक्तत्वे ऽपि भाष्यकृत
त्ववारवन्तीयको यागो विधीयते ननु वारवन्तीयनिर्वृत्ति
रेवतीषु वारवन्तीयमभिनिर्वर्त्स्यतीत्यनेन वारवन्तीयाधिकर
माणत्वाद्वक्ष्याम इत्युक्तम् * प्रपूर्वस्य वसेः स्वस्थानात्प्रसि
न्यत्र वासे प्रयोगाद्भावनातः प्रस्थायापरत्रोषितत्वादित्यर्थः।
देरज्ञानमित्यध्याहारः । ननु योग्यतालक्षणसम्बन्धेन चक्षु
हकत्वाच्चक्षुर्ग्राह्यरूपसमानदशस्यापि स्पर्शादेर्योग्यत्वेनाप्र
कं विधेस्तु विशेषणे ऽन्यवतारस्य भावनान्वयमात्रापेक्षत्वाद्

सर्वविशेषणेष्वैक्याच्च व्यवस्था युक्तेत्याशङ्क्याह * सर्वेति * धित्वस्य यो देशो भावनाख्यः स सर्वेषां विशेषणानां यद्यपि मानस्तथापि भावनातः प्रच्यावितस्य फलालोचनहेतुकत्वादेकस्य विधेरनेकफलत्वायोगादेकत्रैव विशेषणे विधित्वं पर्यवसितं ादिते हि तदर्थत्वादित्यत्र दर्शितमिति फलमालोच्येति त्वपब्लोप-अभ्यर्थे तासिममङ्गीकृत्य व्याख्येयं विधेर्विशेषणेष्ववतारस्य तात्प-पेक्षत्वात्तात्पर्यस्य चैकत्रैवोपपत्तेरेकत्रैवावतारो युक्त इत्याशयः । रोधपरिहारमुपसंहरति * तस्मादिति * ननु विशेषणफलेन धाने ऽनेकार्थविधौ वाक्यभेददोषे सत्यभ्युदितेष्टिविधावप्यादिदे-तातद्गुणादात्रादिरूपानेकार्थविधानात्प्राकाशादिविधिषु प्राका-ादिदेयतत्विशेषणाहिरण्मयत्वादिरूपानेकार्थविधानाद्दोषः स्या-दित्याशङ्क्याह * यस्त्विति * पञ्चमादिश्रुतिप्रकारचतुष्टयापेक्षः स-शब्दः ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदि-भ्युदितेष्टिविधौ हि चन्द्राभ्युदये निमित्ते भावनामनादृत्य प्रकृत-र्शाख्यधात्वर्थोद्देशेनान्यविधाने ऽपि देवतातद्गुणरूपानेकार्थवि-धानात्प्राकाशादिविधिषु च धात्वर्थे ऽन्यसम्बन्धविधाने ऽपि देयत-द्विशेषणरूपानेकार्थविधानात् त्रिष्वपि च सम्बन्धविधिपक्षेषु सम्ब-न्धो विधीयमानः सम्बन्धिनं तावदाक्षिपेदिति वार्त्तिकोक्तन्यायेन सम्बन्धाक्षिप्तयोः सम्बन्धिनोरक्रियाङ्गत्वेनाननुष्ठेयत्वादनुष्ठेयत्वासि-द्धौ च क्रियाङ्गत्वेन तयोरपि विधानापत्तेस्तुल्यो वाक्यभेदस्त-त्रश्चोभयवादितुल्यत्वान्नैकः पर्यनुयोज्य इत्याशयः । नन्वेवं सति वाक्यभेदपरिहारायाभ्युदितेष्टिविधौ यागान्तरविधानापत्तेः प्राका-शादिविधिषु च प्राकृते दक्षिणादाने प्राकाशादिमात्रविधानात्समस्त प्राकृतदक्षिणाबाधापत्तेस्तदधिकरणसिद्धान्तहानिः स्यादित्याश-ङ्क्याह * यथेति * षष्ठे ऽभ्युदितेष्ट्यधिकरणे टुप्टीकायां नैवा-त्रानेकगुणा विधीयन्ते किं तर्हि विद्यमानस्यैव हविषो मध्यमभागा-ग्निदातृत्वविशिष्टा भावना प्रकृतयागसंबद्धा विधीयते इत्यादिवा-र्त्तिकेन प्रकृतदर्शयागाभेदे ऽपि तदवच्छिन्नभावनान्तराभ्युपगमेन वाक्यभेदः परिहरिष्यते दशमे प्राकाशाधिकरणे यद्वा सर्वविशेष-णविशिष्टो ददातिरपूर्वो विधीयतइति भाष्येणैव कर्मान्तरविधाना-भिधानात्तेनैव न्यायेनोत्तराधिकरणेषु स ब्रह्मणे देय इति श्वेताश्व-ब्रह्मविशिष्टदानान्तरविधिप्रतीतेः सप्रियाय सगोत्राय ब्रह्मणे देय इति सोमचमसप्रियसगोत्रब्रह्मविशिष्टदानान्तरविधिप्रतीतेर्यजुर्युक्तं रथमध्वर्यवे ददातीति यजुर्युक्तरथाध्वर्युविशिष्टदानान्तरविधिप्रती-

तेर्वाक्यभेदपरिहारो भविष्यतीत्याशयः । भवेदित्याशङ्काभाष्
तु स्वपदार्थमित्यनेन गुणस्य भावनाविशेषणीभूतधात्वर्थविः
त्वोक्त्या भावनाविशेषणत्वस्योक्तत्वादयुक्तमाशङ्क्य यद्यपि तस
वनाख्यव्यापारस्य सम्बन्धिनं धात्वर्थाख्यं पदार्थं गुणशब्दो ।
षन् व्यापारं विशिंष्यात्तथापि विनानेन प्रकारेण गुणावच्छिन्न
व्यापारो विधेयः प्रतीयेतेत्येवं विधेयत्वनिरासार्थत्वेन व
*भवेदिति* गुणस्यःसाक्षाद्विधेयत्वयोग्यतायां गुणविधानार्थ
च्छिन्नरूपविधेयत्वं स्यात्तस्य त्वयोग्यत्वाद् गुणविशिष्टायां भ
यामेव विधेस्तात्पर्यावसायान्न गुणविधानार्थत्वोपपत्तिरिति ।
च्छब्देन सूचितं भावनापरेऽपि विधावर्थाक्षेपाद्धि विशेषणभूत
नुष्ठानसिद्धेर्नैयमाशङ्का युक्तेत्याशङ्काक्षेपार्थं तत्रेति भाष्यमनु
विध्यधीनत्वाद्विधिं विनानुपपत्तेरयुक्तमाशङ्क्य वाक्यावगत
भावनाविशेषणत्वानुपपत्तिकल्पितगुणविध्याशयत्वेन व्याचष्टे
त्रेति * अथाप्रियमाणेऽपीति भाष्यं व्यधिकरणे सप्तम्यासङ्
विधेयाया भावनाया धात्वर्थाधीननिरूपणत्वाद् गुणाधीननिः
त्वाभावाद् गुणे पुंस्त्वव्याप्रियमाणे विधौ वा तस्मिन्नेवाव्याप्रि
ऽपि गुणानपेक्षधात्वर्थावच्छिन्नभावनाविधानेन विधिशब्द
पत्तेर्नानुष्ठानं सेत्स्यतीत्याशङ्काशयविवरणार्थत्वेन व्याचष्टे
व्याप्रियमाणेऽपीति * तत्रेत्यादिनैकग्रन्थेन वा स एवाशङ्
न्येनापृष्ट एवानुष्ठानं निरूपयत्यन्यथा व्याचष्टे *स एवेति* स
ब्देन प्रश्नानपेक्षोक्ता भावनाया गुणाधीननिरूपणत्वाभावाद् गु
क्षविधेयत्वापत्तावपि स्ववाक्योपात्तगुणश्रुत्यानर्थक्यपरिहार
णविधिः कल्प्य इति पुनराशङ्काक्षेपार्थङ्गुणेति भाष्यमभ
विधिना गुणस्य विधातुमशक्यत्वाद्भावनानिरपेक्षस्य च विधे
ल्पनायोगादगत्यानर्थक्यमेव ज्याय इत्याशङ्काशयविवरणा
नर्थकश्चेति भाष्यमेकहेलया व्याचष्टे * तेनैवेति * विधिक
शयः प्रश्नः कल्पनानुपपत्त्याशयं चोत्तरमित्यर्थः । सर्वस्य हे
ध्यनविधिनार्थवत्त्वावधारणे आनर्थक्यायोगादवश्यकल्प्यो गुण
रित्याशङ्काक्षेपाशयविवरणार्थं कथं पुनरिति भाष्यं व्याचष्टे *त
यथा तत्र किं भविष्यतीति प्रश्नः कल्पविध्याशयस्तथायमपि
कल्पविध्याशय इत्युक्तेः पौनरुक्त्यं तर्हीत्याशङ्काशयाधिक्यं वद
क्तं पूर्वपक्षे भावनानुष्ठानार्थत्वाद्विधेः कारकशून्यायाश्चानुष्ठ
क्तेर्विशिष्टविधिना विशेषभूतकारकानुष्ठानाक्षेपार्थं गुणवचने
न्निध्यार्थवत्त्वोपपत्तेर्नानर्थक्यं सिद्धान्ते तु दध्यादिवाक्ये वि

रूढत्वे ऽपि तदनुष्ठानार्थत्वाभावात्कारकानुष्ठानाक्षेपाशक्तेः
ग्रध्याम्नातस्यापि गुणस्यानुष्ठानानवगमादानर्थक्यमित्युत्तरार्थ
यं सिद्धान्ते ऽपि गुणानुष्ठानार्थत्वाभ्युपगमादयुक्तमाशङ्क्य म-
ातीकेनावतार्यानर्थक्यापादनार्थत्वेन व्याचष्टे*असति त्वर्थ इति*
दित्यादि किमन्यदुच्यतेत्यन्तभाष्योक्ता कापरिहारार्थमेवन्तर्हीति
यं वाक्यशब्दे श्रवणादेकाभिधानलक्षणश्रुत्युपात्तभावनानपेक्ष-
विधानार्थे तथा भासमानं भावनार्थविधायकेनापि विधिना
धप्रयोजनभूतगुणसमर्पणार्थवाक्यापेक्षणाभिधानार्थत्वेन व्याचष्टे
एवं तर्हीति * वाक्याद्भविष्यतीति वाक्यं किं भविष्यतीत्यपेक्षा- ४०
नतिक्रान्तावेक्षणेन गुणगतस्य व्यापारस्य विधेयत्वप्रतीतिरित्यव-
ात् * विधिरित्युक्तम् * ननु गुणमतो व्यापारो भविष्यतीति
व्यार्थकल्पनयानेन विधिशब्देन भाष्यगता व्यापारशब्दा विधिवा-
त्वेन व्याख्याता इति भ्रमितव्यम् नन्विदानीमेव वाक्याद् गुणव्या-
८* उपगम्यतइत्युक्तम् *सत्यमेतदविधीयमानस्तु कुतो ऽवगम्य-
ति वक्ष्यमाणभाष्ये व्यापारस्याविधीयमानत्वोक्त्यनुपपत्तिप्रस-
द्विधिवाचित्वे च व्यापारशब्दानां भावनावाचिशब्दान्तरस्येहा-
वात्प्रस्तुताधिकरणन्यायेन सर्वत्र लिङ्शिष्टभावनाविधिरेव त-
मिति वार्त्तिकं निरालम्बनमेव स्यात् श्रुतिबलीयस्त्वेन पूर्वपाक्षि-
व्यवस्थानार्थं श्रुत्यर्थे सतीति भाष्यं श्रुत्युपात्तायां भावनायां विधे-
ात्पर्यायोगेन श्रुतिविरोधाभावादयुक्तमाशङ्क्य भावनाविधिद्वार-
ाद् गुणविधेर्भावनानिरपेक्षे गुणे तात्पर्यायोगादापाद्योक्त्यर्थत्वेन
ाचष्टे * परास्त्विति * भावनाद्वारापि प्रवर्त्तमानस्य विधेरप्राप्त-
ापणस्वभावत्वेनान्यतः प्राप्तायां तात्पर्यायोगादानर्थक्यतदङ्गन्या-
न गुणे तात्पर्यावतारो युक्त इति परिहारार्थं सत्यमित्यादिविहित-
ादित्यन्तं भाष्यं व्याचष्टे * सत्यमिति * तत्सन्निधेरिति सूत्रा-
यवव्याख्यानार्थं स्वपदार्थस्येति भाष्यावयवं कर्मान्तरविधानोपप-
त्रयुक्तमाशङ्क्य कथं चित्प्राप्तिसम्भवे विशिष्टविधिगौरवान्याय्य-
वाभिधानार्थस्तद्गुणाधिकरणाधिकरणसूत्रावयवः पठितः । नन्वेवं
नाति तेनैव न्यायेन श्रुत्यर्थाविवक्षासिद्धेः प्रश्नो न युक्त इत्याशङ्क्य
* कथमित्युक्तम् * श्रुत्यर्थाविवक्षायां द्वेषातिशयेनोक्तन्यायापरा-
मर्शात्प्रश्नः श्रुत्यर्थाविवक्षावादिन एव वा हेत्ववतारार्थं प्रश्नोक्तिरि-
त्यर्थः । तत्सन्निधेरिति सूत्रावयवव्याख्योपसंहारार्थं तस्मादिति
भाष्यं तस्मात् शब्दपरामृष्टतत्सन्निधिं त्रेधा व्याचष्टे * तस्मादि-
ति * पौर्णमास्यधिकरणादिस्थानां चोदनाशब्दानां शब्दान्तरे कर्म-

मेद इति कर्मशब्दालोचनेन कर्मचोदनाविषयतया न्याय
स्मिन्कर्मणि गुणत्वस्य संशब्दोक्तेनैकैकीभावेन विधानात्कारः
यथाविशेषत्वेन क्रियायाः क्रियाकारकयोरत्यन्तभेदाभावात्ति
वा गुणस्य विधेयत्वोपपत्तिरित्याद्ये व्याख्याने तत्सन्निधि
तस्य गुणस्य सन्निधौ पठितस्याविधाने प्रमादपाठा
ति द्वितीये तस्याः कर्मचोदनाया वाक्यान्तरस्थायाः प्रत्यभि
दध्यादिवाक्ये कर्मणि विधेयतेति तृतीये सत्यं न श्रूयतइत्य
ष्येण गुणविधिव्युत्पादनार्थत्वेन तत्सन्निधेरित्यादिसूत्रावय
व्याख्याख्यातपदार्थविधावाख्यातपदानर्थक्यशङ्कानिरासार्थत्वे
स्य कर्मणो ऽग्निहोत्राधारवाक्यचोदितस्य दध्यादिवाक्ये
धानाद् गुणान्वयार्था पुनः श्रुतिरित्येवं व्याख्यातुं जुहोतेरिति
स्पष्टत्वादव्याख्याय यदीत्याशङ्काभाष्यं ।विधायकप्रत्ययानुवा
नभिधानादयुक्तमाशङ्क्य धातोरनुवादत्वे प्रत्ययस्यापि के
योज्यत्वेनानुवादत्वापादनाशयत्वेन व्याचष्टे * जुहोतेरिति
न्वेवमपि दध्यादिशब्दस्य विधायकत्वानिरासात्प्रश्नो न युक्त
शङ्क्याह * दधिशब्देनेति * यथा वाजपेयाधिकरणे, यदि यजे
नुवादः केनेदानीं गुणो विधीयतइति प्रश्नोपपादनार्थं वाज
ब्देनेति मा वोचत न ह्याख्यातं वा कृत्यं वान्तरेण * नाम
विधिशक्तिरस्तीत्युक्तम् * तथात्रापि वाच्यमित्यर्थः। छायाशब्
क्रियार्थः वाक्यावगतस्य गुणान्वयस्याप्राप्तत्वाद्विधेयत्वप्रतीते
न्यथानुपपत्तिकल्पितेनाख्यातेन विधिसम्भवाच्छङ्काक्षेपार्थं ना
भाष्यं श्रुताख्यातत्यागेनाश्रुतकल्पनायोगेनाशङ्कासमाधानार्थं
स्यमिति भाष्यं स्पष्टत्वादव्याख्यायैवं तर्हीत्युत्तरभाष्यं व्याच
प्रत्यय इति * प्रत्ययस्य विधित्वे तद्वाच्याया भावनाया विधेय
पत्तेर्धात्वर्थानवच्छिन्नायाश्च तस्या विध्ययोगाद्धात्वर्थस्यापि
यत्वापत्तिरिति कस्येति भाष्येणाशङ्क्यहाविधीयमानस्याप्यः
ऽवच्छेदकत्वेन प्राप्तेरनुवादोपपत्त्यभिधानार्थं धात्वर्थस्येति
व्याचष्टे * धात्वर्थ इति * धातुप्रत्यययोः सहप्रयोगनियमे ऽप्य
दाद्विध्यनुवादविभागोपपत्तिसूचनार्थो विवेकशब्दः। ननु स्वा
पात्तस्यापि धात्वर्थस्यान्यतः प्राप्तत्वेनानुवादाभ्युपगमे भाव
अपि प्राप्त्याविशेषेणानुवादापत्तेर्व्यापारशब्देन भावनाविधान
धानं न युक्तमित्याशङ्कार्थं यदीति भाष्यं व्याचष्टे * यदीति *
वनानिरपेक्षगुणविधानाशक्तेर्गुणविधानार्थं प्राप्ताया अपि भावन
गुणविशिष्टरूपेण गुणविधानोपपत्त्यभिधानार्थं वाक्यार्थ इति भ

ाभिमतधात्वर्थोद्देशेनान्यविधिनिरासेन विशिष्टभावनाविध्यभि-
यत्वेन व्याचष्टे * वाक्यार्थ इति*यथैवं तर्हि वाक्याद्भविष्यतीति
ष्यं विशिष्टभावनाशयं तथैतदपीत्यर्थः।तस्मादिति सिद्धान्तोपसं-
रभाष्यमुपक्रमभाष्यव्याख्यया व्याख्यातमप्यनन्तरोक्तवाक्यार्थ-
ध्यालोचनेन भ्रान्त्यापादकत्वाद्व्याचष्टे * तस्मादिति * केव-
गुणविध्यसम्भवाद्वाक्यान्तरतो ऽप्याघारणहवनरूपकर्मान्तरव्या-
तरूपाप्रतीतेः संज्ञोपबन्धासम्भवस्योक्तस्य केवलगुणविधिव्यु-
ादनात्परिहारसिद्धेर्भाष्यकृतोपेक्षितं परिहारं स्वयमाह * जुहो-
ति*ननु सजातीयकर्मान्तरव्यावृत्तिर्न जुहोत्याघारयतिश्रुत्योरस्य-
त्याशङ्क्याह * इहेति * विधिस्वभावात्सर्वतो व्यावृत्तेः संज्ञोपब-
ोपपत्तिरित्यर्थः । अप्रकृतत्वाच्चेति सूत्रोक्तं प्राकरणिकवाक्या-
ारतो ऽपि रूपालाभं परिहरति * प्रकरणाच्चेति * यत्त्वज्ञातरूप-
ा कर्मणो विध्यसम्भवात्फलकरणत्वानवगतेरुत्पत्तिवाक्ये कथं-
ावात्मकं प्रकरणं नास्तीत्युक्तम्। तद्वाक्यान्तरतो रूपलाभसम्भवे
ाभावात् ज्ञातरूपस्यापि कर्मणो विधिसम्भवादेव कर्मान्तरव्या-
त्तिसिद्धेर्विधिसम्भवादुत्पत्तिवाक्ये ऽपि सामान्यतः फलकारण-
ावगतेः प्रकरणं सम्भवतीत्येवं परिहरति * न चेति * ननु प्र-
ारविशेषाकाङ्क्षात्मकत्वात्कथम्भावस्य फलविशेषान्वयोत्तरकाल-
ाच्च प्रकारविशेषाकाङ्क्षाया नोत्पत्तिवाक्ये कथम्भावोपपत्ति-
त्याशङ्क्याह * फलेति * निर्विशेषसामान्याभावादुत्पत्तिवाक्ये
प्यनिर्द्धारितफलादिविशेषप्रतीतेरनिर्द्धारितफलविशेषान्वयोत्तरका-
ं कथम्भावोपपत्तिरित्याशङ्क्याह * फलेति * निर्विशेषसामान्या-
ावादुत्पत्तिवाक्ये ऽप्यनिर्द्धारितफलादिविशेषप्रतीतेरनिर्द्धारितफ-
विशेषान्वयोत्तरकालं कथम्भावोपपत्तिरित्याशयः। या चानभिज्ञात-
ूपस्य फले विधातुमशक्यतोक्ता साप्ययुक्तेत्याह * न चेति * ८
ोममात्ररूपेण फले विहितस्य कर्मणो द्रव्यादिग्रहणे विरोधा-
ावादित्यर्थः । विशेषतो ऽत्र द्रव्यादेर्वाक्यग्राह्यत्वेन प्रकरणानपेक्ष
ात्सन्निधिमात्रेण च कर्मानुवादोपपत्तेः कथम्भावाभावे ऽप्यविरोध
त्याह * दृष्यते चेति * वाक्यान्तरप्राप्तं च कर्मानूद्य वाक्यान्तरेण
ूपग्रहणसम्भवे स्ववाक्याज्ञातरूपस्यापि कर्मणो वाक्यान्तरतो
रूपलाभाद्विधिनिर्वाहोपपत्तेर्विध्ययोगाभिप्रायेणाघारप्रकरणनिरा-
ायोगात्परप्रकरणपाठमात्रेण तन्निरासो वाच्यः। स चाभिक्रमाधि-
करणे निराकरिष्यमाणत्वादयुक्त इत्याशयेनाह * न चेति *
तदेवोपसंहरति * तेनेति * यदुक्तमित्यादिभाष्यमप्याघारप्र-

करणसद्भावाभिधानार्थमित्यनेन सूचितम् । तण्डुलोदूर्ध्वा
क्यानां कर्मविधित्वे कर्मबहुत्वात्तदनुनिष्पाद्यपूर्वबहुत्वकल्प
द्येतेत्याह * बहूनि चेति * अथानेकादृष्टकल्पनापत्त
रूपवत्त्वेनैषां विधित्वमिष्यते तदपि नास्तीत्याह * न चेति
ण्डुलादियुक्तानां होमानां देवता नास्ति ऊर्ध्वादियुक्तानां चाघा
यथा देवता नास्त्येवं द्रव्यमपीत्युभयाभावाभिधानं यदग्नये
देवतायुक्ते होमे द्रव्याभावस्तस्याघारामिन्द्र ऊर्ध्वो ऽध्वर
वाक्यविहिते चाघारे ऽन्यतराभावश्चकारेण सूचितः । कर्मान्त
धेश्च कर्मान्तरे गुणसमर्पकत्वायोगान्न वाक्यान्तराद्देवतादिला
त्याह * सर्वे चेति * तस्मादित्यधिकरणार्थोपसंहारभाष्यं
चष्टे * तत इति * ननु वाक्यान्तराद्रूपलाभसम्भवाभिधाने
सङ्क्षेपबन्धव्याख्यायां परिहारसिद्धावपि द्वितीयव्याख्यायां
हारानभिधानान्नोपसंहारो युक्त इत्याशङ्क्यानुभाषणपूर्वं परि
* यस्त्विति * प्रयत्नरूपभावनासाध्यत्वे ऽपि होमादिधात
करणभूतधात्वर्थानवच्छिन्नाया भावनायाः कर्मान्वयायोगात
च्छेदकत्वेन सङ्कल्पादिधात्वर्थोपन्यासो ऽनुष्ठेयहोमादिस्वरूप
न्धानं द्रव्यादिकारकसमवायाभिधानं वादिशब्दोपात्तं क्रियात
धात्वर्थस्य जन्यत्वात्कर्मत्वोपपत्तिः । वस्तुतस्तु धात्वर्थस्य
त्यर्थरूपक्रियात्वमेव नास्तीत्यपिशब्दार्थः । ननु सङ्कल्पादेर
दानान्न तदपेक्षया कर्मत्वनिर्देशोपपत्तिरित्याशङ्क्याह * तेन
अनिष्पन्नस्य होमादेः फलकरणत्वायोगात्सङ्कल्पादिनिष्पादिते
मेन फलं भावयेदिति शास्त्रार्थो ऽवसीयतइत्याशयः । ननु
दिवाक्यानां कर्मविधित्वाभावे ऽप्यग्निसूर्यवाक्ययोरनेकगुणवि
त्कर्मविधित्वावगतेरग्निहोत्रवाक्यस्य तद्वाक्यविहितसायम्प्रात
द्वयसमुदायानुवादत्वं भविष्यतीत्याशङ्कते * ननु चेति *
विधानं यदनेनोक्तं तदापद्यतइत्यर्थः । अत्र कैश्चिद्भाष्यमनादृत्य
पूर्वपक्षं कृत्वाद्यसूत्रत्रयेण समुदायानुवादत्वासिद्धान्तमुप
ग्निहोत्रे देवतायाः प्रकरणादप्यप्राप्तेर्विधित्वासम्भवस्य प्रकृत
ति सिद्धान्तसूत्रोक्तस्याग्निसूर्यवाक्याभ्यां देवताप्राप्तेरनुपपत्ति
ङ्क्याग्निसूर्यवाक्ययोः कर्मविधित्वं चोदना वा शब्दार्थस्य प्रयो
त्वादिति सूत्रावयवेनानेकगुणविधानान्यथानुपपत्त्योक्त्वाग्निस
क्ययोरपि द्रव्याभावात्कर्मविधित्वानुपपत्तिमाशङ्क्य दध्यादि
द्रव्यप्राप्तिरुत्तरावयवेनोक्तेत्युक्तं तेषां मतं दूषयितुमुपन्यस
तथा नामेति * अत्रैव परोक्तामुपपत्तिमाह * एवं चेति *

ो इति द्वित्वसंख्यायाः पृथक्निवेशाद्भेदव्यवहारः व्यपदेशभेदः पृष्टः धर्मभेदो ऽपि भेदापादकत्वाद्भेदं व्यवहारयतीत्यादिशब्देनो-क्तः। नन्वभ्यासविषयाभेदे व्यवहारा भविष्यन्तीत्याशङ्क्याह * न मात्रेति * एकस्मिन्नभ्यासे सकलो ज्योतिष्टोम इति प्रतीत्यभावा-दुक्तं ज्योतिष्टोमावयवत्वमिह त्वेकैकस्मिन्सकलमग्निहोत्रमि-ति प्रतीतेर्नाग्निहोत्रावयवतेत्यर्थः। उभयत्र च समस्तेतिकर्त्तव्यतावृ-त्तेर्भेदापादिकेत्याह * एवञ्चेति * ननु कर्मैक्ये ऽपि कालभेदा-देतिकर्त्तव्यतावृत्तिर्युक्तेत्याशङ्क्याह * अन्यथात्विति * एकादशे दर्शपूर्णमासाख्ययोः समुदाययोः राजसूयाख्यानामिष्टिपशुसोमया-गानां चातुर्मास्याख्यानां च वैश्वदेवादिपर्वणां कालभेदादङ्गावृत्तौ सिद्धान्तितायां सवनीयपशौ च या पशुपुरोडाशाङ्गप्रचाराणां का-लभेदे ऽप्यङ्गानावृत्तिवदिहाप्यनावृत्तिरित्याशङ्क्यैकस्य कर्मणः प्र-क्रमात्प्रभृत्यासमाप्तेरेककालत्वात्सवनीयपशोश्चैककर्म्यात्प्रयोगाख्य-स्य तन्त्रस्य विप्रकृष्टकालत्वे ऽप्यङ्गानावृत्तिर्युक्तेति वैषम्यं वक्ष्यमाणं दृष्टान्तितम्। दध्यादिवाक्यानां च कर्मविधित्वे दध्या-दीनां भिन्नकर्मविषयत्वात्समुच्चये सति सम्प्रतिपन्नदेवतात्वात्स-हप्रदानापत्तेर्विकल्पसिद्ध्यर्थं कर्मैक्यायाग्निहोत्रवाक्यस्य विधायकत्वं सिद्धान्तयितव्यं सूर्याग्निवाक्ययोस्तु कर्मविधित्वे पक्षद्वये ऽपि दध्यादिविकल्पसिद्धेर्विचारो ऽनर्थकः स्यादित्याशयेनाह * न चेति * परमतमुपसंहरति * तस्मादिति * सूर्याग्निवाक्ययोः कर्मविधित्वे सत्येककर्मासम्भविदेवताद्वयरूपगुणभेदितस्यैकैकवा-क्यविहितस्य कर्मद्वयस्यैक्यमुपचर्यापराग्निकहोमानां चाग्निहोत्र-वाक्यात्पश्चाद्विहितत्वेनानुवादायोगमभिप्रेत्य सायम्प्रातराहवनीय-होमविवक्षयाहुत्योरित्युक्तं परमतमुपन्यस्तं दूषयन्समुदायानुवाद-मेव तावन्निष्प्रयोजनत्वेन दूषयति * उच्यतइति * दर्शपूर्णमासा-भ्यामिति द्विवचनस्य समुदायानुवादाव्यतिरेकणासिद्धेर्विद्वा-क्ययोः समुदायानुवादो ऽर्थवान् अग्निहोत्रमिति चैकवचनस्य राजसूयेनेत्येकवचनवत् समुदायानुवादं विना ऽप्यसमुदायीकृता-नामेव प्रकृतानां कर्मणामेकफलान्वयात्समुदायसिद्धौ सत्यां तद्ग-तैकत्वद्वारा सिद्धेः समुदायानुवादो ऽनर्थक इत्याशयः। नन्वग्निहो-त्रशब्दविशेषितेन धातुना फलान्वयावगमात्ततः प्रागेव समुदायत्व-सिद्ध्यर्थं समुदायानुवादो ऽर्थवानित्याशङ्कां निरस्यन् श्लोकं व्याचष्टे यथैव हीति * अनवगतफलानामपि कर्मणामेकप्रकरणविधानलक्षणै-कधर्मान्वयाख्यात्प्रचयात्साहित्याख्यः समुदायः सेत्स्यतीत्याशङ्का-

निरासाशयः । प्राक्फलान्वयात्समुदायासिद्धावप्राप्तत्वान्नानु
ऽपि सिद्ध्येदिति सूचनार्थो दृष्टान्तः। समुदायसिद्ध्यैवैकवचना
नैकत्वसिद्धिर्न तत्सिद्ध्यर्थो ऽप्यनुवादो युक्त इति सूचनायैक
ब्दः । एवमग्निहोत्रं जुहुयात्स्वर्गकाम इति प्रयोगवाक्यगतमग्नि
अपदमपि प्रचयशिष्टसमुदायैकत्वद्वारेण भविष्यतीत्यध्याहा
योज्यं यथा चेति श्लोकव्याख्या नन्वग्निहोत्रशब्दस्यैकप्रकरणा
नलक्षणप्रचयकृतसमुदायनिमित्तत्वे सति गार्हपत्यान्वाहार्य
होमानामपि प्रकृतत्वाविशेषात् ग्रहणेन फलान्वयापत्तेर्दर्शपू
सादौ च सर्वत्र गार्हपत्यान्वाहार्यपचनयोः प्रधानकर्माधिकरण
भावव्याप्तेरग्निहोत्रद्रव्यस्य च चतुरुन्नयनविधानाच्चतुरुन्न
स्कृतस्यैव प्रधानहोमार्थत्वावगमात्तस्य चाहवनीयहोममात्रा
दाहवनीयाधिकरणहोमविधायकाग्निसूर्यवाक्यानन्तर्याच्चाग्नि
जुहोतीति समुदायानुवादस्यस्याग्निहोत्रशब्दस्याहवनीयाहोम
विषयत्वेन तन्मात्रस्य फलान्वयावगतेर्नैकप्रकरणविधानापाति
मुदायनिमित्तताग्निहोत्रशब्दस्य सम्भवतीत्येतद्वाक्याभावे ऽपि
र्यवाक्यविहितहोममात्रसमुदायासिद्धेस्तात्सिद्ध्यर्थः समुद
०१।२ वादो ऽर्थवानित्याशयेनाशङ्कते * नन्विति * प्रकृतत्वावि
जुहोतेः सर्वहोमग्राहित्वावसायाद्वैदिके चार्थे ऽनुमानाप्रवृत्ते
ण्डपितृयज्ञादेश्चातिप्रणीताग्नौ विहितस्याहवनीयानधिकरणत्वे
प्राधान्यदर्शनात्संस्कारव्यवस्थामात्रेण च प्राधान्यव्यवस्थानु
रानन्तर्यस्य च पञ्चमक्रमात्मकप्रमाणत्वेन प्रकरणेन बाधाद्र
यशब्दवत्प्रकृतमात्रग्राहिजुहोतिसामानाधिकरण्येनाग्निहोत्रश
सूर्यप्रकृतहोमविषयत्वावसायान्नाहवनीयहोममात्रसिद्ध्यर्थत्वं
दायानुवादस्य सम्भवतीत्याशयेन परिहरति * समुदायेति
बहुव्रीहेः सर्वनामार्थवृत्तित्वात्सन्निहिताहवनीयहोमविषयत्व
रापराग्निकेभ्यो व्यवच्छेदो भविष्यतीत्याशयेन शङ्कते*ननि
पाश्चात्ये ऽप्यथैव ज्योतिरित्यादौ सर्वनामप्रयोगदर्शनेन प्रा
मनादृत्य सन्निधिमात्रापेक्षणादापराग्निकहोमानामपि चैकप्र
गतत्वेन सन्निध्यविशेषादत्यन्तसन्निधेश्च दुर्गोरण्यसम्भवा
हितार्थवृत्तित्वेन विशेषणत्वानुपपत्तेरग्निदेवत्यहोमाभिधायित
शेषणत्वं वाच्यं तच्चापराग्निकनामप्यग्निदेवत्यत्वान्न सम
त्यापाद्योक्त्या परिहरति * नेति * अग्निदेवत्यत्वे च विशेष
प्रातर्होमस्यापि प्राधान्यं न स्यादित्याह * अपि चेति* अतः
यानुवादाभाववत्समुदायानुवादे ऽपि सर्वेषां प्राधान्यात्समु

दो ऽनर्थक इत्युपसंहरति * तस्मादिति * नन्वग्निहोत्रवाक्यस्य धित्वे सर्वाग्निष्वभ्यस्तस्य कर्मणो भेदाभावात्प्राधान्याविशेषे यग्निसूर्यादिवाक्यानां कर्मविधित्वे ऽग्निहोत्रवाक्यास्यानन्यप्रयो- नत्वात्समुदायानुवादार्थत्वावगतेः प्रकृतमात्रग्रहणे च समुदाया- वादानर्थक्यापत्तेः प्राग्विहिताहवनीयहोममात्रानुवादावसाया- पराग्निकानामङ्गत्वं भविष्यतीत्याशङ्क्याह * तथेति * सूर्या- प्रादिवाक्यानां कर्मविधित्वाभावे ऽपि गुणार्थतयार्थवत्त्वोपपत्तेर्न थां कर्मविधित्वाभ्युपगमेनाग्निहोत्रवाक्यस्य समुदायानुवादता- गुपगन्तुं युक्तेत्याशयः। शाखान्तरे च द्वे आहवनीये चतस्रो गार्ह- ये चतस्रो ऽन्वाहार्यपचने दश सम्पद्यते दशाक्षरा विराट् य वं विद्वान् विराट् सम्पन्नमग्निहोत्रं जुहोतीति सर्वहोमविषयत्वे- ाग्निहोत्रशब्दप्रयोगात्सर्वविषतयैवाग्निहोत्रशब्दस्य निश्चीयत इ- ाह * तथा चेति * विराट्शब्दस्य दशकाख्यत्वादापराग्नि- होमाग्रहणे च दशकासम्पत्तेः सर्वविषयत्वलिङ्गेन विराट्सम्प- गुपन्यासः अतः समुदायानुवादानर्थक्याद् गुणविधित्वस्य च त- प्रख्याधिकरणे निरस्तत्वात्कर्मविधितैवाग्निहोत्रवाक्यस्य युक्तेत्या- * तस्मादिति * नन्वेवमपि गार्हपत्यादिवाक्येषु संख्याधिक- णारूपानेकगुणविधानात्कर्मविधिप्रतीतेः कर्मभेदे सति कर्मैक्यं न सध्यतीत्याशङ्क्याह * ततश्चेति * यदाहवनीये जुहोतीत्यनारभ्य- ादेन सर्वहोमानामाहवनीयाधिकरणत्वप्राप्तेराहवनीये द्वे इत्यस्या- त्यन्तरपरिसंख्यार्थत्वादष्टानामाहुतीनामधिकरणापेक्षायां गार्हप- यान्वाहार्यपचनाधिकरणत्वविधौ समं स्यादश्रुतित्वादित्यनेन न्या- ानैकैकत्र चतुष्टयस्य प्राप्तस्यानुवादाद् गार्हपत्ये जुहोत्यन्वाहार्यप- चने जुहोतीति वाक्यान्तराभ्यां वा गार्हपत्यान्वाहार्यपचनप्राप्तेश्च- तुरावृत्तिलक्षणगुणमात्रविधानार्थत्वात्तत्संयोगस्याहवनीयसंयोगस्य च द्विरावृत्तिलक्षणगुणमात्रविधानार्थत्वान्न वाक्यभेदापत्तिरित्या- शयः। ननु कर्मैक्ये सत्यग्नीनां विकल्पापत्तेस्तत्संयोगेन विहिताना- मावृत्तीनामपि विकल्पप्रसङ्गाद्विराट्सम्पत्त्यनुवादो न युज्येतेत्याशये- नाशङ्कते * कस्मात्पुनरिति * केषांचित्परिहारं दूषयितुमुप- न्यस्यति * केचिदिति * प्रक्षेप्यस्य द्रव्यस्य क्वचित्प्रतिष्ठां वि- नाप्याधारासिद्धयोजनमात्रेण प्रक्षेपसिद्धेरग्निसंयोगस्यादृष्टार्थत्वे- नैक्यार्थ्ये प्रमाणाभावाच्च विकल्प इत्यर्थः।अदृष्टार्थत्वे सति वैकल्पि- कबाधायोगादविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्सन्दिग्ध- मारात्द्विशेषशिष्टं स्यादिति दशमाधिकरणविरोधः स्यादिति दूषण-

माह * एवं त्विति * तत्राज्ञानुरोधेनाश्रुतावृत्त्ययोगाद् बाध
ऽपीहावृत्तिश्रवणाद्विकल्पानुपपत्तिरित्याशयेनाशङ्कते * अथे
द्विरावृत्त्यादिश्रवणे ऽपि दशकृत्वा आवृत्त्यश्रवणाद्विराद्श्रुतेश्च
दसरूपत्वात्साम्यमित्याशयेन परिहरति * इहापीति * स्व
नुवादसरूपत्वमन्यतः प्राप्त्यभावाद्विधित्वे सति द्वादशाधि
न्यायेन समुच्चयसिद्धिरिति परिहरति * तस्मादिति * ।
सम्प्रत्ययविधाने त्वदृष्टार्थत्वे ऽप्याहवनीयादिसंयोगस्य प्रत्ये
हुतीनां स्थानविशेषनियमात्स्थानान्तरपाते च प्रायश्चित्ता
त्कर्ममध्ये चानुगते ऽग्नौ लौकिकाग्निब्राह्मपाण्यादौ होमविधि
नात्सप्तमीश्रुतेश्चाधारणत्वद्वारैवादृष्टार्थत्वावसायाच्च देवत
शब्दश्चियमित्यत्र वाग्निप्रतिनिधिनिरासस्य प्रत्यक्षदृश्याग्नि
दृष्टार्थत्वे ऽप्याहवनीयादिरूपस्यादृष्टार्थत्वेनान्यत्र तदवयवा
प्रमाणाभावादुपपत्तेरन्योन्यनिरपेक्षस्य च विभक्तिश्रुत्याध
०२।२ प्रतीतेर्विकल्प एव स्यादित्याह * अन्यथा हीति * श्लोके व
* सत्यपीति * ननु विद्वद्वाक्यस्य विधित्वाभ्युपगमे द्विचत
कृत्व आवृत्तिलक्षणानेकगुणविधानात्कर्मोत्पादकत्वापत्तेरुत्पत्ति
संख्यया कर्मभेदः स्यादित्याशयेनाशङ्कते * कस्मात्पुनरिति :
ग्निहोत्रवाक्यस्यानन्यप्रयोजनत्वेन कर्मोत्पादकत्वावसायाद्वि
त्यादिवाक्यानां च विभागेनैकैकगुणविधायकत्वोपपत्तेरनुत
स्थत्वान्नेयं संख्या भेदिकेत्याशयेन परिहरति * नेति * नन्व
त्तिस्थापि संख्या कस्मान्न भेदिकेत्याशङ्क्याह * उत्पत्तिस्था ही
उत्पत्तिवाक्यावधारितसंख्ये कर्मणि संख्यान्तरानिवेशादावृत्त
च संख्यान्तरसम्पादनोपपत्तेर्नास्वरूपभेदकत्वं सम्भवतीत्याश
अग्निहोत्रवाक्यस्य कर्मविधित्वे कर्मैक्यसिद्धिमुपपादितामुपसं
ति * तेनेति * परोक्तं समुदायानुवादत्वं निष्प्रयोजनत्वेन दू
त्वाग्निसूर्यवाक्ययोर्गुणविधित्वे वाक्यभेदापत्तेः । कर्मविधित्व
शङ्कितमनुभाषणपूर्वकं दूषयति * यत्त्विति * चशब्दात्समु
तस्य देवताद्वयस्य सकृच्छ्रुतेन प्रत्ययेन विधानोत्पत्तेः कालदे
रूपाणामेकार्थविधानाद्वाक्यभेदो वाच्यः स चात्र कालानुवादा
स्तीत्याशयः । नन्वनेकार्थविधिलक्षणवाक्यभेदाभावे ऽपि
शिष्टानुवादलक्षणो वाक्यभेदः स्यादित्याशङ्कते * नन्विति
कालमात्रानुवादात्परिहरति * नेति * जुहोतेस्तर्हि का गतिरित
शङ्क्य प्रकरणलभ्यकर्मानुवादतोक्ता ननु कालस्य देवतान्वये
सम्भवतीत्याशङ्क्य द्वेधा परिहरति * स त्विति * प्राकरणिका

न्तरात्कालस्य कर्मान्वयावगतेस्तद्द्वारा देवतान्वय इत्येकः परि-
ः। विधीयमानया सम्प्रदानभूतया देवतयाकाङ्क्षितत्वात्प्राकरणि-
ाक्यान्तरेण च होमस्य कालान्वयितयावगतेस्तल्लक्षणार्थः काल-
श इति द्वितीयः । ननु प्रत्यक्षश्रुतत्वाद्धोमस्य कालेन लक्षणा न
त्याशङ्क्याह * न चेति * वाक्यभेदापत्तेः श्रुतस्य होमस्य का-
विशेष्टुमशक्यात्प्रत्ययानुग्राहकत्वेन च धात्वर्थानर्थक्यपरिहारो-
ल्लक्षणयैव लाभो ऽभ्युपगन्तव्य इत्याशयः । ननु कालेन हो-
क्षणायामनया यो हि कालस्येत्यनेन न्यायेनैककाललक्षितहोमस्य
ान्तरे ऽप्यनपायादग्नीषोमलक्षितोपांशुयाजे विधीयमानस्य
ामासीकालस्य देवतान्तरयुक्ते ऽपि प्राप्तिवदेककाललक्षिते होमे
ीयमानाया देवतायाः कालान्तरयुक्ते ऽपि प्राप्तेर्व्यवस्थापरत्वो-
न युज्येतेत्याशङ्क्याह * न चेति * कर्मस्वरूपमात्रलक्षणे स-
ाकैनैव तत्सिद्धेः कालद्वयोपादानानर्थक्यप्रसङ्गात्स्वानुरक्तक-
क्षणे कालान्तरयुक्ते कर्मण्यप्राप्तेर्नोपांशुयाजतुल्यतेत्याश-
। अतो ऽग्निसूर्यवाक्ययोर्व्यवस्थापरता युक्तेत्याह *
ति * व्यवस्थायाः सूर्याग्निमात्रविषयत्वे ऽपीतरेतरयु-
ःवताद्वयविधेः प्रत्येकव्यापाराभावे वाक्यभेदसूचना-
द्वन्द्वनिर्देशो द्वन्द्वनिर्देशसूचितमपि वाक्यभेदपरिहारमजान-
वाक्यभेदोक्त्याशयमाशङ्कते * नन्विति * चशब्दाद्देवताद्व-
मुच्चयस्य सकृच्छ्रुतेन प्रत्ययेन विधानावगतेर्वाक्यभेदाभावे
। वाक्यभेदमाशङ्कमानेनाग्नेयपदोपात्तद्रव्यदेवतरूपानेककार-
दग्निप्रजापत्योरनेककारकत्वं वाच्यं तच्च नास्तीत्यनेककारकत्वं
नाभिमतमप्यापाद्यान्येषां परिहारं दूषयितुमुपन्यस्यति *नेति* ५०
ापदं च यावत्किं चित् द्रव्याश्रितं जातिलिङ्गसंख्यादीत्यादिपौ-
ास्यधिकरणवार्त्तिकोक्तं परामृष्टं पृथक्चतुर्थीनिर्देशादग्नीषोम-
समुच्चितयोः कारकत्वाप्रतीतेः कारकयोस्तु समुच्चये कारकभे-
ात्तेरग्नये दात्रइत्यादिवद्विशेषणविशेष्यभावात्त्वेककारकत्वे
शब्दानुपपत्तिप्रसङ्गात्तस्यापि वा विशेषणविशेष्यभावेनैककार-
वे भिन्नकारकविभक्त्युपात्तयोररुणयैकहायन्यादिवत्क्रियान्व-
विना परस्परविशेषणविशेष्यभावायोगाद्यज्जुहोति तदग्नये त-
प्रजापतित्वगुणविशिष्टाय जुहोतीति प्रत्येकविधिव्यापारापत्ते-
रिहार्यो वाक्यभेद इत्याशयेन दूषयति*अत्रेति * अग्नये दात्र-
ा वद्विशेषणविशेष्यत्वाङ्गीकरणेन प्रजापतित्वगुणविशिष्टस्याग्नेः
रकत्वाद्यद्यप्येकं कारकं तथाप्यनेककारकपदोपात्तयोः कारक-

विभक्तिश्रुत्या क्रियान्वयावगतेः क्रियान्वयात्प्राग्विशेषणविशे
प्रतीतेः प्रत्येकं विधिव्यापाराद्विधायकप्रत्ययावृत्तिः स्याद्
प्रजापतेः स्वतन्त्रदेवतात्वप्रसिद्धेर्विशेषणत्वाभावेन कारकै
स्तीति यद्यपि शब्दार्थः श्लोकं व्याचष्टे * विभक्त्या हीति *
स्यैकपद्यात्सकृच्छ्रुतप्रत्ययान्वयो युक्तः अग्नये च प्रजाप
त्यत्र समासाभावेनेतरेतरयुक्तस्याग्नीषोमवत्कारकत्वाभाव
षणत्वविशेष्यत्वाप्रतीतेश्च विशिष्टस्य कारकत्वाभावात्पर
स्तावच्चैकं कारकं यद्यप्येकं तथाप्यनेकपदोपादानात्प्रत्ययावृ
त्तिरित्यपि शब्दार्थः । ननु सम्प्रदानत्वमात्ररूपेण कारकैक
सम्भवति सामान्यस्याविधेयत्वाद्विभक्तिभेदे च कारकवि
क्यायोगादावृत्त्युपपादनार्थं प्रत्ययस्य क्रियैकविषयत्वेन क्रिय
विना स्वार्थस्य विषयीकरणरूपालोचनायोगात्कारकत्वं च
क्रियान्वयायोगाद्विभक्तिप्रयुक्तस्य प्रत्ययस्य नामार्थालोचन
भिन्नयोरपि कारकयोश्चशब्देनेतरेतरयुक्तयोर्विषयत्वावगमात्
विधिव्यापाराभावाद्भिन्नयोरपि विधेयत्वे विषयाभेदाद्वाक्यभेद
हारसम्भवे ऽपि यद्यवश्यमेकार्थविधिरेव वाक्यभेदपरिहाराय
व्य इत्याग्रहस्ततो देवताद्वयविधौ कारकैक्यसम्भवात्सामान्य
णैक्यसम्भवे ऽप्यनेकपदोपात्तयोरितरेतरयोगाविवक्षायामनेक
यत्वापत्तेस्त्वदुक्तपरिहारायोगाद्वरमेकदेवताविधानाभ्युपगमेन
क्यभेदः परिहर्त्तव्य इत्याह * तस्मादिति * प्रजापतेः
विधौ व्यवस्थानुपपत्तेः सायम्प्रातःशब्दयोरविवक्षितार्थत
कनैव वाक्येन कालद्वये ऽपि कर्मैक्यात्प्रजापतेः
वाक्यान्तरानर्थक्यप्रसङ्गाद्विधेयस्य प्रजापतेर्देवतान्तरसाहि
स्तुत्यर्थं पुनः प्रजापतिसङ्कीर्त्तनमित्यभ्युपगमे विध्यर्थवाद
कवाक्यत्वाद्वाक्यद्वयव्यवस्थानुपपत्तेर्यथाग्नाई पत्नीवन्निति मन्
र्णाद्देवताभूताग्निप्राप्तेस्तद्विशेषणमात्रं पात्नीवतं गृह्णातीति त
तेन विधीयते तथात्राप्यग्निसूर्ययोः प्रजापतित्वविशेषणं साय
ग्नेः प्रजापतित्वं विशेषणं प्रातः सूर्यस्येत्येवं व्यवस्थया विधीय
इत्येवं व्याख्येयं नाग्नेः सूर्यस्य वा शुद्धस्य देवतात्वं किं तु
जापतित्वविशेषणमपि देवतात्वान्तर्गतमित्यभिधानार्थत्वाभ्युपग
च शब्दानर्थक्यं परिहार्य्यमित्याशयः । विशेष्ययोर्देवताभूतयोरग्नि
सूर्ययोः कुतः प्राप्तिरित्याशङ्क्याह * अग्नीति * अग्निर्ज्योतिर्ज्यो
तिरग्निः स्वाहेति सायं जुहोति सूर्यो ज्योतिः ज्योतिः सूर्यः स्वा
हेति प्रातर्जुहोतीति वाक्यान्तरविहितमन्त्रवशाद्विशेष्यप्राप्तिरि

प्रजापत्तेः स्वतन्त्रदेवतात्वे गुणवृत्त्यैन्द्रीवन्मन्त्रयोः प्रजापति-
कत्वोपपत्तेर्देवताकल्पकत्वायोगान्न मूर्द्धाग्निसूर्यप्राप्त्यर्थो ऽयं
। नन्वग्निसूर्ययोरन्यतः प्राप्तत्वे प्रजापतिविधौ कीर्त्तनं कि-
त्याशङ्क्याह * ताभ्यामेव चेति * स्तुतिशब्दस्य गुणव-
धानवाचित्वाद्विधीयमानप्रजापतित्वलक्षणगुणापेक्षितगुणिस-
योपादानमित्यर्थः । ननु प्रजापतिशब्दस्य देवताविशेषे रूढ-
जापालनगुणवाचिता न युक्तेत्याशङ्क्यागत्या गुणवाचित्वाङ्गी-
चित्याभिधानाय * औचित्येनेत्युक्तम् * नन्वेवं सति तत्प्र-
करणे * यदग्नये चेत्यते * नाग्निप्राप्त्यभिधानं न युज्येते-
त्याह * यदपि चेति * मन्त्रतो प्राप्तस्याग्नेर्विशेष्यत्वेनानु-
योगान्मन्त्रस्याग्निप्रापकत्वालिङ्गतयेदं तत्रोदाहृतमित्यर्थः । न-
प्रजापत्योर्विशेषणविशेष्यभावे ऽग्नेः पूर्वाहुतिः प्रजापतेरुत्तरे-
विरोधेनापि पक्षस्यानभिमतत्वात्केन विशेषेणोपन्यास इत्याश-
* आहेवं चेति * ब्राह्मणेनाग्निसूर्ययोरविधाने लिङ्गात्तद्दैवत्य-
प्राप्तेर्मन्त्रविषययोर्विध्योर्नानर्थक्यापत्तिरित्यर्थः। ननु लिङ्गा-
द्दैवत्यमन्त्रप्राप्तावप्यग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति सायं
ते सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातर्जुहोतीति मिश्रदेव-
त्रविधानात्पर्युदस्तयोः प्रतिप्रसवार्थत्वेनानर्थक्यं परिहर्त्तुं श-
त्याशङ्क्याह * अन्यथेति * परिह्रियते · अनेनेति क-
परिहारशब्दं व्युत्पाद्य परिहारश्च तत्प्रयोजनं चेति कर्मधारयो-
ह्यः तदर्थशास्त्रत्वलक्षणस्य दोषस्य परिहारकं यत्प्रयोजनं म-
प्रकरणे गुणविधिरूपं परिसंख्यारूपमर्थवादरूपं चोक्तं तत्ता-
स्सम्भवति यत्त्वादिशब्दोक्तं पर्युदस्तमन्त्रप्रतिप्रसवरूपमिहाभिम-
योजनं तस्मिन्कल्प्यमाने ऽति क्लेशः स्यादिति कल्प्यमानपदा-
रेण व्याख्येयम्। नन्वतिक्लेशापत्तावप्यग्नेः पूर्वाहुतिः प्रजाप-
तेरित्यादिश्रुतिविरुद्धविशेषणविशेष्यत्वकल्पना न युक्तेत्याश-
ह * तस्मादिति * एकार्थविधिं विना वाक्यभेदपरिहारास-
ाभिमानिनं प्रत्येकार्थविध्युपपादनार्थं मन्त्रवर्णप्राप्तयोरग्निसूर्य-
प्रजापतित्वलक्षणविशेषणरूपैकार्थविधिरनभिमतो ऽप्युक्तो न
मार्थिक इत्याशयः । कस्तर्हि पारमार्थिको वाक्यभेदपरिहार
ाशङ्क्याह * एतीति * येन कारणेन पारमार्थिको वाक्यभेद-
हारो भवति तत्प्रागेवाग्निप्रजापती सूर्यप्रजापती इति चेतरेतर-
हेत्यवाचिद्वन्द्वनिर्देशात्सूचितमित्यर्थः * अयमाशयः * यथा
ाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च

माषाश्च तस्य द्वादशशतं दक्षिणेति वाक्ये चशब्देनेतरेतरसां
गवादिशब्दस्य दक्षिणाशब्दान्वयावगमात्समुदितानां गवादी न
दक्षिणात्वावगतेर्धेनुर्दक्षिणेति विकृतौ विहिताया धेनोः सम
क्षिणाविकारत्वं दशमे वक्ष्यते तथेहापि यज्जुहोति तदग्नये
जापतये चेति चशब्दात्समुच्चितयोरेवाग्निप्रजापतिशब्दयोर्हि
कान्वयप्रतीतेः प्रतिपदं विधेरपर्यवसानेन विधिव्यापारभेदा
त्पृथक् चतुर्थीनिर्देशात्कारकभेदप्रतीतेर्भिन्नयोरपि विधेयत्वे
थावृत्त्यप्रसक्तेः समुदितरूपस्य च विधेयत्वेन विधेयभेदाभाव
कार्यत्वाप्रसक्तेर्देवताद्वयविधावपि न वाक्यभेदापत्तिरिति प्र
चैतत्तन्त्रसारे वाजपेयाधिकरणे ऽत्रापि तत्प्रख्याधिकरणे ऽस
रुपपादितमिति ग्रन्थगौरवभयान्न बहुप्रपञ्च्यते । यत्तु ग्रहाभ
ज्योतिष्टोमावयवबुद्धिवत्सायम्प्रातर्होमयोरग्निहोत्रावयवबुद्ध्य
त्वेन तद्भेदव्यवहारस्यावयवविषयत्वायोगाद्भेदोपपादकत्वमु
दृष्यनुभाषणपूर्वं दूषयति * यत्त्विति * यथा द
मासावृत्त्यात्मके दाक्षायणयज्ञे सकलयोर्दर्शपूर्णमास
रावृत्तेर्नावृत्तावयवबुद्धिस्तथाग्निहोत्रस्यापि सकलस्य
राड्वाक्याद्दशकृत्वो ऽभ्यस्तस्य द्वे आहवनीये द्वे गार्हपत्ये द्वे
हार्यपचनइति वाक्यात्षड्कृत्वो ऽभ्यस्तस्य तस्य वा एतस्याग्नि
स्य स च शतानि विंशतिश्च संवत्सरे सायमाहुतयः सप्त
शतानि विंशतिश्च संवत्सरे प्रातराहुतय इति वाक्यान्तरालो
वा द्विरभ्यस्तस्य सायम्प्रातःकालयोरावृत्तेर्नावृत्तावयवबुद्धि
र्थः । नन्वेकस्मिन्काले ऽग्निहोत्रसाकल्ये सति दाक्षायणय
वृत्त्यविधानात्प्रयोगसमाप्तेः कालद्वये ऽनुष्ठानप्रमाणाभावादाच
रोधः स्यात्सूर्याग्निवाक्यविहितयोस्तु कर्मणोरग्निहोत्रवाक्येन
दायानुवादे प्रयोगवाक्यस्थेनाग्निहोत्रशब्देन कर्मद्वयग्रहणात्त
ये ऽनुष्ठानोपपत्तिरित्याशयेन स एव पूर्वपक्षी प्रत्यवतिष्ठते
न्विति * एकैकस्मिन्काले प्रयोगसमाप्तावपि सायं जुहोति
होतीति वाक्यान्तरप्राप्तयोः कालयोः प्रयोगापेक्षितत्वेन तच्छे
घगतेर्यावज्जीवं सायम्प्रातर्जुहुयादिति प्रयोगशास्त्रार्थावधार
त्वे ऽपि कालस्यानुपादेयत्वसाम्येनार्थान्निमित्तभूतजीवनवि
त्वावगतेः कालावच्छिन्नस्य जीवनस्य निमित्तत्वात्प्रतिनिमि
नैमित्तिकानुष्ठानस्य षष्ठे वक्ष्यमाणत्वान्नैमित्तिकहोमकरणं ता
स्मिन्काले प्रयोगसमाप्तावपि यावज्जीवचोदनया भविष्यत
ष्ठानाविरोध इत्याशयेनैकदेशिनः परिहारं दूषयितुमुपन्यस्य

। * उभयत्रानुष्ठानस्यानेन प्रकारेण सिद्धावपि सायं होमे कृते ५८
मानापद्यप्यृत्विग्द्वारा प्रातर्होमो ऽवश्यकार्यत्वाचारविरोधः प्र-
ाभेदपक्षे दुष्परिहर इति दूषणमाह * सत्यमिति * अस्या-
रस्यैकप्रयोगपक्षे न्यायमूलत्वप्रदर्शनार्थम् * प्रक्रान्तेत्युक्तम् *
स्यप्रयोगे वोभयत्रानुष्ठानविरोधो ऽपि दुष्परिहर इत्याह * किं
ते * नन्वेकस्मिन्काले ऽनुष्ठानात्फलसिद्धावपि कालान्तरे नैमि-
कानुष्ठानोपपत्तेर्नाचारविरोध· इत्याशङ्क्य * सर्वाङ्गसंयुक्तः फ-
र्थिना चेत्युक्तम् * कालद्वये सर्वाङ्गादरः फलप्रार्थनं च विरु-
ेत्याशयः । प्रयोगैक्ये ऽत्वविरोध इत्याह * अभ्यस्तेति * एकदे-
ापरिहारं दूषयित्वा स्वमतेन प्रश्नपूर्वं परिहरति*कथं पुनरिति *
स्र एव साह्नस्योपसद इत्यादिवाक्यपर्यालोचनया पूर्वाह्णापरा-
गोपसत्प्रयोगैक्यावसायात्पुरस्तादुपसदां प्रवर्ग्येण चरन्तीत्युपस-
्वं प्रयोज्यत्वविधानेन प्रवर्ग्यस्यापि पूर्वाह्णापराह्णान्तस्यैकप्रयोग-
तत्वावगतेस्तदुपमानेनाग्निहोत्रस्य कालद्वये ऽभ्यस्तस्यैकप्रयोगत्वं
ढयितुं प्रवर्ग्ये ऽपि माप्रक्रमोपन्यासः । ननु सायम्प्रातर्होमयो-
र्भिन्नकर्मत्वे ऽग्निहोत्रवाक्ये समुदायानुवादस्यार्थवत्त्वाय समुदि-
योः फलसाधनत्वावगमात्तत्समुच्चयसिद्धेर्नास्य वै शब्दयोगादनु-
ादस्वरूपस्य वचनत्वकल्पनापद्यते कर्मैक्ये तु वचनं विना कालद्व-
समुच्चयासिद्धेर्वचनत्वक्लेशापत्तिरित्याशङ्क्याह * भेदेति *
ाङ्गवाक्याद्यालोचनेन दशकृत्वः षट्कृत्वो द्विर्द्विर्वैकस्मिन्काले
भ्यस्तस्याग्निहोत्रशब्दवाच्यत्वावगतेः कालद्वयाभ्यस्तकर्मसमुदा-
ानुवादायोगाद्भेदपक्षे ऽपि वचनं विना समुच्चयो न सिद्ध्यती-
याशयश्चशब्दादेव समुच्चयो न वाक्यादित्यर्थः । नन्वेवमपि
कालयोगिनश्चशब्दात्कालसाहित्यावगतेः परस्परसहिते कालद्वये
सकृदनुष्ठानापत्तेर्नाभ्यासस्सिद्धिरित्याशङ्क्याह * न चेति * अनुपादे-
यत्वेन कालसाहित्यस्याशक्यसम्पादत्वाभ्यासेनैव कालद्वयान्वयः
सम्पाद्य इत्यर्थः । ननु कालयोः कर्मण्युद्देश्यत्वात्समुच्चयस्य चो-
पादेयत्वात्समुच्चयविशिष्टकालविध्यनुपपत्तेः । स्वातन्त्र्येण काल-
समुच्चयरूपानेकार्थविशिष्टविधौ वाक्यभेदः स्यादित्याशङ्क्याह*प्राप्त-
योश्चेति * अतः सायम्प्रातरभ्यस्तमेकं कर्मेत्युपसंहरति * तस्मा-
दिति * कर्मैक्ये ऽङ्गावृत्त्ययोगमाशङ्कितमनुभाषणपूर्वं परिहरति
* यत्त्विति * प्रयोगवेलायां कालापेक्षत्वादनुत्पत्तिवाक्यस्थत्वा-
च्चोपांशुयाजाङ्गभूतकालवदुत्पत्तिशेषत्वानवगतेः कालस्य प्रयोगा-
ङ्गत्वेन विध्यवधारणात्प्रयोगस्य च साङ्गप्रधानविषयत्वात्प्रयोगावि-

र्थौ प्रधानस्याङ्गसाहित्येन विशेषणत्वस्य चोपादेयविशेषणत्वे
धक्षितत्वात्कालद्वयान्वयेन साङ्गस्य द्विः प्रयोगोऽवसीयते :
यपशौ तु प्रयोगैकदेशभूतानां वपाप्रचारादीनामनेकका
ऽपि प्रयोगावच्छेदककालभेदाभावान्नेतिकर्त्तव्यतापत्तिरित्याः
प्रधानैक्येऽपि प्रयोगावयवभूतयोरभ्यासयोः सायम्प्रातः का
यात्सायन्तनस्य प्रातस्तनस्येति व्यपदेशो यदप्यग्निसूर्यवाक्ययो
विधायित्वं निराकृत्य कर्मैक्यसिद्धयेऽग्निहोत्रवाक्यस्य कर्म
यित्वं सिद्धान्तितम् * निष्प्रयोजनमित्युक्तम् * तदप्यनुभा
परिहरति * यत्त्विति * दध्यादीनां विकल्पाविशेषेऽपि
सूर्यवाक्ययोः कर्मविधित्वे कर्मभेदाद्विकृतावेककर्मणि वि
विभागो हि चोदनैकत्वादित्यष्टमाधिकरणन्यायेन सायम्प्र
माङ्गयोर्विकल्पेन प्राप्तेः। कौण्डपायिनां होमः सायम्प्रातर्वा
ध्वनोरत्यन्तसंयोगइत्यत्यन्तसंयोगे द्वितीयास्मृतेरहरहर्वा चोदि
दिति सङ्कर्षे वक्ष्यमाणन्यायेन प्रत्यहं सकृत्कार्यः। सिद्धान्ते
मैक्यात्सायं प्रातः प्राकृतः प्रकृतिवदभ्यसितव्य इत्यभ्यासः
नवान् सिद्धान्त इत्यर्थः। दध्यादिवाक्यानां तु कर्मविधित्व
दध्यादिद्रव्यकेषु दशसु कर्मसु यदग्नये चेत्यादिवाक्यैर्दे
धानात्सम्प्रतिपन्नदेवतात्वेन दध्यादिद्रव्याणां साम्राय्यद्वयः
प्रदानं सिद्धान्ते तु विकल्प इति स्पष्टं प्रयोजनम्।आघारे तु
क्येऽप्यूर्ध्वत्वादीनां भिन्नार्थत्वात्समुच्चयाविशेषेऽपि कर्मभे
च समुदायीकरणार्थवत्त्वाय प्रयोगतन्त्रत्वाविशेषेऽपि व
सत्यूर्ध्वत्वादीनां मध्ये यस्यान्तरायस्तद्युक्तं कर्मावर्त्तनीयं कर्मै
गुणलोपे प्रायश्चित्तं नावृत्तिरिति प्रयोजनमद्रव्यसंयोगाच्चो
शुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणो
नन्वाघाराग्निहोत्रयोरङ्गाङ्गिसम्बन्धाभावेनाभ्यर्हितं पूर्वं नि
त्यस्याविषयत्वादल्पाच्तरत्वेनाघारशब्दस्य पूर्वनिपातो युक्तः।
पशुशब्दस्य घ्यन्तत्वेऽपि लक्षणहेत्वोः क्रियाया इत्यादौ घ
पूर्वनिपातव्यभिचारात्सोमस्य प्राधान्येनाभ्यर्हितत्वात्पशोः
राभिधानमयुक्तमित्याशङ्क्याह * पशोरिति * न्यायनिष्ठे
न्यायव्युत्पादनादरविषयस्याभ्यर्हितत्वात्पशोश्च पूर्वपक्षस्य
ष्टत्वेन न्यायव्युत्पादनादरविषयत्वात् पूर्वनिपातो युक्त इत्या
सूत्रे च पशुमात्रग्रहणेऽपि दैक्षस्य चेतरेष्विति दैक्षस्य सर्वप
तित्वेन वक्ष्यमाणत्वादग्नीषोमीयस्यैव वरुणपाशाभ्यां वा एष
धीयते यो दीक्षित इति दीक्षोपक्रमविधानेन दैक्षशब्दवाक्य

वोदाहर्त्तव्य इति सूचयितुं भाष्ये ऽर्थवादावयवोदाहरणं हृदया-
ोस्तु पशुशब्देनानुवदति * सोमशब्देन च रसमिति * पूर्वपक्ष-
ाष्ये पशुसोमशब्दयोरप्यनुवादत्वाभिधानाच्छब्दद्वयस्य सन्देहवि-
यत्वमाह * द्वौ चेति * पशावपि यज्यनुवादेन पूर्वपक्षवचनव्य-
क्तिं परमतेन दर्शयितुं तस्मिन्पक्षे हृदयादिवाक्येष्वेव यज्यनुमा-
ात्पशुवाक्ये यजेरभावान्न शङ्का युक्तेत्याशङ्क्य देवतान्वयान्यथानुप-
त्त्या यत्पशुना यजेत तदग्नीषोमीयेणेति प्राप्तेष्वपि यागेषु *
ज्यनुमानं युक्तमित्युक्तम् * सन्देहस्वरूपमाह * तत्रेति * कथं
र्हि भाष्यकृताधातुमात्रानुवादतावद्यतिगृह्णात्यभिहितकर्मविषयता-
ोक्तेत्याशङ्क्याह * किमवद्यतीति * गृह्णात्यवद्यत्योर्यागानभिधाय-
त्वाद्यजातिचोदनादुपायिचोदनादित्यादावभिधानार्थत्वेन दृष्टस्या-
े चोदयतेरिहाभिधानार्थत्वानुपपत्तेराक्षेपापरपर्यायकल्पनावा-
चित्वमङ्गीकृत्यावद्यतेर्यागीयद्रव्यसंस्कारार्थावदानवाचित्वेन याग-
ल्पत्वविवक्षयावद्यतिसम्बन्धानुमितानामित्येवं व्याख्याते गृह्णा-
ावेतद्व्याख्यानासम्भवेनापरितोषाद्विधिवाचित्वमङ्गीकृत्यावद्यति-
ृह्णातिशब्दयोः प्रत्ययलक्षणार्थत्वाभ्युपगमेन व्याख्यान्तरं कृतं हृद-
ादिरससमुदायवाचिनौ पशुसोमशब्दावित्यप्यनेन भाष्येणोपल-
क्षितमिति प्रदर्शनशब्देनोक्तम् । ननूभयत्र यजेरनुवादकतायामालभ-
तशब्दो न युज्येतेत्याशङ्क्याह * आलभतिरपि चेति * अस्यां पूर्व-
क्षवचनव्यक्तौ भाष्यानार्जवापत्तेरवद्यतिगृहणात्याक्षिप्तानां स्पर्श-
यागकर्मणां समुदायस्यालभतियजती वदिताराविति यथाश्रुतं
ाष्यं व्याख्यातुं स्वमतेन पशावालभत्यनुवादपूर्वपक्षवचनव्यक्ति-
ङ्गीकृत्य सन्देहस्वरूपमाह * अथ वेति * अवद्यतियुक्तेषु वाक्येषु
ागविध्यप्रतीतेः पशुवाक्ये यागानुवादायोगद्योतनाय *अवद्यता-
ेत्युक्तम् * नन्वेवं सति पूर्वपक्षे ऽपि पशुवाक्ये यागविध्यापत्तेः
ः पूर्वोत्तरपक्षयोर्विशेष इत्याशङ्क्य यत्पशुशब्दलक्षितं हृदयाद्याल-
ातेस्तदग्नीषोमीयं कुर्यादिति हृदयाद्यालम्भानुवादद्वारेणैकादशाना-
ावदानानां प्रत्येकं देवतान्वयादेकादशयागाः पूर्वपक्षे सिद्धान्ते च
शुद्रव्यैक्येन देवतानन्वयैक्यादेको याग इति विशेषो ऽभिहितः ।
क्षणसङ्गतिश्चानेन भेदाभेदफलत्वात्सूचिता अनन्तरसङ्गतिस्त्वा-
ाराग्निहोत्रवाक्यविहितयोः कर्मणोर्दध्यूदूध्वादिवाक्यानां गुणवि-
धित्वोपपत्तेकर्मविधित्वाभावात्प्रकृतकर्माभावेन समुदायानुवादे नि-
स्ते हृदयैन्द्रवायवादिवाक्यानां पशुसोमवाक्यविहितयोः कर्मणो-
ुणविधित्वायोगात्कर्मविधित्वापत्तेः प्रकृतकर्मसद्भावात्पशुसोमवा-

कयथोः समुदायानुवादत्वं भविष्यतीत्याशङ्कानिरासार्थत्वात्स्प
न्ववद्यतिना स्पर्शनाक्षेपे ऽपि गृह्णातिना यागानाक्षेपाज्ञेयं व्य
युक्तेत्याशङ्क्य यथावद्यतौ स्पर्शनाक्षेपस्तथा सोमे ऽपि यागाक्षेप इ
तदुपपादनाय * अयमेवेत्युक्तम् * ग्रहणस्य यागपर्यन्तत्वं विना दे
न्वयायोगाद्यागपर्यन्तत्वं सामानाधिकरण्योक्त्या विवक्षितं।यद्वा
पशौ पूर्वपक्षे बहवो यागाः सिद्धान्ते त्वेकस्तथा सोमे ऽपीत्युक्ते
मुपपादनार्थं पूर्वपक्षे ग्रहणवाक्येष्वेव यागकल्पनाभिधानाय
वेत्युक्तं भाष्याङ्गस्यादालभत्यनुवादव्याख्यैव युक्ता न यज्यनु
व्याख्येत्याह * तथा सतीति * भाष्यकृद्व्याख्याने ऽपि पूर्व
सौत्रत्वसिद्ध्यर्थमुपांशुयाजाधिकरणपूर्वपक्षसूत्रस्थेन पौर्णमा
च्छब्देनेहापि पूर्वपक्षाभिधानं सूचयत्पूर्वपक्षमारभते * त
नन्विह रूपश्रवणात्कथं पौर्णमासीतुल्यतेत्याशङ्क्य सोमवाक्ये
तानवगतेरैन्द्रवाक्यानां च यागानुमानात्प्रागपर्यवसानेन व
न्तरानन्वयाद्देवतासमर्पकत्वानुपपत्तेर्यागानां च रूपत्वाभावा
त्वमुपपादयति * तथा हीति * श्लोकं व्याचष्टे * न ह
ननु दध्यादिवाक्यवदैन्द्रवायवादिवाक्येष्वपि विधिगौरवापत्ते
मविधित्वाभ्युपगमो न युक्त इत्याशङ्क्याह * यश्चेति * सि
चैन्द्रवायवादिवाक्येष्वपि देवताविशिष्टग्रहणविध्यभ्युपगम
यत्र गौरवापत्तिरित्याह * अपि चेति * तत्सन्निधेर्गुणार्थे
श्रुतिरित्यत्र चोपपदश्रुतौ सम्भवदनुवादस्य कर्मणो विधेयत
धाच्च सोमवाक्ये यागविधिरित्याह * किं चेति * सम्भव
दत्वं यादृशशब्देनोक्तं पूर्वपक्षे सोमशब्दस्याप्यनुवादत्वात् *
नित्युक्तम् * श्लोकं व्याचष्टे * एकत्रेति * सत्याङ्गता
विधिशक्त्यभ्युपगमस्य न्याय्यत्वात्सम्भवेदनुवादे कर्मणि
गुणे विधिशक्तिः संक्रामतीत्यग्निहोत्राधिकरणे ऽ
मित्यर्थः। किं तावदित्यादिभाष्येणालभतियजत्योरनुवादत्वे
ते हृदयादिरसद्रव्यकेषु यागेषु पशुसोमशब्दयोरप्राप्तार्थत्वेन
द्यायोगादुत्पत्तिशिष्टगुणावरोधेन च विध्ययोगादानर्थक्यः
हृदयादीस्त्वित्यनेन लक्षणाया हृदयादिरसानुवादकतोक्ता त
वाक्ये देवताविध्यभ्युपगमाद्वाक्यभेदापत्तेर्द्रव्यविध्ययोगे ऽ
सवाक्ये अथैन्द्रवायवादिवाक्येषु लता विधीयतइति भाष्ये
धेराशङ्क्यिष्यमाणत्वात्पक्षद्वयमाह * तत्रेति * ननु पशुश
दयाद्यनुवादो देवतान्वयायार्थवान्सोमशब्देन तु रसानुवा
र्थक इत्याशङ्क्य लक्षितलक्षणया नामधेयत्वेनोपयोगमाह *

* द्रव्ये रूढत्वादयागनामत्वेनावभासमानमप्यानर्थक्यपरिहा-
नामधेयं भवतीति च्विप्रत्ययार्थः। नामान्तरसद्भावान्नामानर्थ-
ाशङ्क्यते * नन्विति * स एष यज्ञः पञ्चविधो ऽग्निहोत्रं द-
र्णमासौ चातुर्मास्यानि पशुः सोम इत्यादौ सोमशब्देनापि व्यव-
ाश्नानर्थक्यमिति परिहरति * यदीति * नन्वेवं सति समस्त-
्यानुवादो ऽनर्थकः स्यादित्याशङ्क्याह * समस्तेति * यत्पौर्ण-
ीद्वाक्ये प्रयोगवाक्यगतसंख्योपजननं प्रयोजनमुक्तं तदेवान्ना-
र्थसोमशब्दस्यानुवादत्वमुक्तमुपसंहरति * तस्मादिति * न-
द्रवायवादिवाक्येषु द्रव्यदेवतान्वयाद्यागकल्पनोपपत्तेः क्रया-
ाक्येभ्यश्च सोमरसावगतेः सोमवाक्ये पूर्वपक्षसम्भवे ऽपि
ादिवाक्येषु देवताविरहाद्यागकल्पनानुपपत्तेर्हृदयादेश्च पशु-
तित्वस्यान्यतो ऽनवगतेः पशुवाक्ये पूर्वपक्षो न सम्भवतीत्या-
्कते * भवेदिति * पशुशब्देन हृदयाद्यनुवादं तावदुपपाद-
ा * उच्यतइति* षष्ठान्त्यवक्ष्यमाणो दृष्टान्तः उत्तरार्द्धं व्याचष्टे
ृदयादिभिरिति * नन्वेवमपि, यागानुवादो न सम्भवतीत्याश-
ह * तत्र त्विति * आलम्भानुवादेनेह पूर्वपक्षो न यागानुवादेने-
शयः। यागानुवादमपि प्रौढ्योपपादयति *अथ वेति* पशुसान्ना-
ोः पशुप्रभवत्वसाम्येन द्रव्यसारूप्यात्पशुयागस्याष्टमे सान्ना-
यागविकारत्वाभिधानात्तेनैव न्यायेन हृदयाद्यवदानस्य द्रव्यसा-
ात्सान्नाय्यावदानप्रकृतिकत्वावगतेः सान्नाय्यावदानस्य च यागी
व्यसंस्कारार्थत्वेनास्यापि तथात्वावसायाद् हृदयादीनां संस्का-
ान्यथानुपपत्त्या पूतीकफलचमसवद्यागान्वयप्रतीतेः प्रत्यवदानं
ाकल्पनात्पशुवाक्ये यागसमुदायानुवादोपपत्तिरित्यर्थः। परमत-
द्योतनायोत्प्रेक्ष्यमाणशब्दः। यच्च सोमवाक्ये प्रत्यक्षयजिसद्भावा-
द्रवायवादिवाक्येषु तत्कल्पना युक्तेति दूषणं तदिहोभयत्राप्या-
ानिकत्वाविशेषान्नाशङ्क्यमित्याह * साधारणश्चेति * दश
ृणातीति ग्रहणसमुच्चयदर्शनात्तस्य च यागार्थत्वाद्यागसमुच्च-
तीतेर्दशमो गृह्यते तृतीयो हूयत इति च द्वयोरपि क्रमदर्शनाद्या-
ये च दध्यादिवद्देवताविकल्पापत्तेः क्रमसमुच्चयानुपपत्तिप्रस-
द्यागभेदार्थमपि ऐन्द्रवायवादिवाक्यानामेव यागविधिताश्रयणीयेत्य-
धानार्थमपि चेति भाष्यं व्याचष्टे *सोमेति* एतदेव संस्कारस्तु
भिद्येतेति सूत्रे खादिरतादिवैषम्यस्य वक्ष्यमाणत्वात्तद्दृष्टान्तेनो-
ादयति * पश्येति * ननु भेदपक्षे ऽपि ग्रहं वा गृहीत्वा चमसं
न्नीय स्तोत्रमुपाकरोतीति प्रत्येकं ज्योतिःशब्दवाच्यस्तोमयोगानि-

मिष्तज्योतिष्टोमशब्दवाच्यत्वात्प्रत्येकं फलान्वयेन
त्तेः क्रमसमुच्चयदर्शनानुपपत्तिरित्याशङ्क्य स
लात्समुदितानां फलान्वयावगत्यभिधानार्थमथ पु
व्याचष्टे * मम त्विति * पशौ क्रमसमुच्चयदर्शन
शयमाह * पशाविति * एतदेव विवृणोति *
हृदयादिसमुच्चये ऽपि लोहितं निरस्यतीत्यादिवाक्या
षां च्चित्पश्ववयवानामपनयान्न सर्वेण पशुनेष्टं स्या
* यन्मात्रमिति * किं चिदपनयेति बाहुल्यात् सा
पपत्तिरित्याशयः । नन्वेवं सत्यनिषिद्धेन हृदयाद्
तिरिक्तेनापि यागापत्तेरेकादशभ्य एव हृदयादिभ्य
दशमाधिकरणसिद्धान्तो विरुध्येतेत्याशङ्क्याह
न्यायात्सर्वप्राप्तावप्येकादशपशोरवदानानीत्यस्यानन्य
यवान्तरपरिसंख्यार्थत्वेन तत्रत्यः सिद्धान्त इत्याशय
त्वनुवादकत्वादिह लिङ्गत्वेनोपन्यासः । ननु सोमस्य
पर्वणो बहूदकादिषु तस्य प्रादेशमात्रेण पात्रेण सम
शक्यत्वात्सोमयागैक्ये ऽपि समस्तसोमसाधनकत्वाद
दर्शनोपपत्तिरित्याशङ्क्याह *सोमे त्विति* उत्पत्तिवा
मस्तचोदनाभावात्पशुवैषम्यं भाष्यकृतो ऽभिमतमित्य
दिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे*तस्मादिति*स
वचनप्रयोगे ऽपि पशुसोमयोरिति सप्तमीद्विवचनेनो
ग्रहात्कर्मणोश्चोदने इति द्विवचनान्तेन व्याख्याय
शङ्कानिरासार्थं प्रकारवाचिविधानशब्दप्रयोगेण वि
मुक्तं तत्स्पष्टत्वाद्व्याख्यायापूर्वद्रव्यसंयोगादित्येकं
णहेतुव्याख्यानार्थस्य कुत इत्यादिभाष्यस्य तात्पर्यं
तिं * श्लोकं व्याचष्टे * यदि हीति * एवं विद्वानि
ताशेषरूपपरामर्शादशेषरूपप्रत्यभिज्ञाने ऽभिहिते वि
शब्दस्य यज्यनन्वयाद्यागरूपापरामर्शकत्वे तु द्रव्यं
नेनैव भाष्येणोक्तमिति सूचयितुम् * यदि वेत्युक्त
रस्य हृदयादेर्लक्षणया पशुशब्देनाभिधानात्सोमविव
स्य सोमशब्देनाभिधानान्न पूर्वद्रव्यसंयोगो ऽस्तीत्या
त्वेन प्रकरणे ह्यनर्थको द्रव्यसंयोग इति सूत्रावयव
व्यं द्रव्यं यागे संयोजयतीति व्युत्पत्त्या द्रव्यसं
पशुशब्दः सोमशब्दश्च प्रक्रियतइति व्युत्पत्त्या प्रकृते
च मुख्यार्थत्यागापत्तेर्न प्रवर्त्ततइत्येवं व्याख्यानार्थं

ाष्यं तावद्व्याचष्टे * तत्रेति * नैतदित्यादिव्याख्याभाष्यं व्या-
ष्टे * तत्रेति * किं लक्षणाश्रयणे कारणं यदिह नास्तीत्यपेक्षाया-
ाह * विस्पष्टे हीति * मञ्चाः क्रोशन्तीतिवत्परशब्दसामानाधिक-
ण्याभावे ऽपि गङ्गायां घोष इत्यादौ लक्षणां विना पदान्तरान्वया-
म्भवे लक्षणादर्शनाद् * अनन्यथासम्भवे वेत्युक्तम् * ननूत्पत्तिशि-
रसहृदयाद्यवरुद्धयोर्यागयोर्लताप्राणिविध्ययोगात्पशुशब्दस्य च प्र-
तहृदयाद्यनिवेशे देवताविधिपरे वाक्ये द्रव्यविध्ययोगेनानर्थक्या-
त्तेरस्त्यनन्यथा सम्भव इत्याशङ्क्याह * शक्यं हीति * यागान्तर-
ध्यभ्युपगमान्नैको ऽपि दोष इत्याशयः। अपूर्वयोः कर्मणोरिति
सद्धान्तोपक्रमस्थमपूर्वशब्दं उपांशुयाजाघाराग्निहोत्राधिकरणसि-
द्धान्तोपक्रमभाष्यस्थकर्मान्तरशब्दवदभ्युपेत्यवादत्वेन व्याचक्षाणः
स्मादित्युपसंहारभाष्यं तदनुसारितया व्याचष्टे * तेनेति * न ५
हे तस्य गुणार्थेनेति सूत्रावयवं प्रकृतेषु यागेष्वनर्थको द्रव्यसंयो-
। इत्येवमर्थावृत्तपूर्वावयवसहितमाशङ्कोत्तरत्वेन व्याख्यातुमथेत्या-
याशङ्काभाष्यमुत्पत्तिशिष्टरसावरुद्धे यागे प्रदेयतया लताविध्या-
ाङ्कानुपपत्तेरयुक्तमाशङ्क्य प्रदेयप्रकृतित्वेन लताविध्याशङ्कार्थतया
याचष्टे * कस्मादिति * भाष्यानारूढपशुग्रहणेन सिद्धान्ते द्वयो
पि प्रदेशप्रकृतित्वेन विधिः सूचितः। न सेति भाष्यं मध्यप्रतीके-
ोत्तरतयावतारयति * तत्राहेति * प्रदेयप्रकृतित्वेनापि विधौ शङ्किते
ृह्णादिवाक्येष्वग्रव्या धारया गृह्णातीति प्राकरणिकवाक्यान्त-
ालोचनेन धाराग्रहणायोग्यद्रव्यप्रतीतावपि स्वाभाविकद्रवत्वयुक्त-
योदकादेरपि धाराग्रहणोपपत्तेर्विकारद्रव्यानवगमेन सोममभि-
ुणोतीत्यादिवाक्यालोचनाद्विकारद्रव्यावगमाभ्युपगमे तु प्रकृतिद्र-
यस्याप्यवगमे प्रकृत्यनपेक्षणात्प्रदेयतयैव विधेयत्वं शङ्कनीयमि-
यापाद्य श्रौतरसावरुद्धेषु यागेषु वाक्येन लताविध्यनुपपत्त्यभिधा-
ार्थत्वेन भाष्यं व्याचिख्यासुरवद्यतिवाक्येषु हृदयादिविकारद्र-
यप्रतीतेस्तत्प्रकृतित्वेन पशुविध्याशङ्कापरिहारौ कस्मान्नोपन्यस्ताविति-
याशङ्कानिरासपूर्वं व्याचष्टे * पशुस्तावदिति * ननु तद्धितश्रुत्यनु-
ात्तत्वाद्र रसस्य लतातो बलीयस्त्वं प्रत्युत प्रकरणलभ्यत्वाद्दौर्ब-
यमित्याशङ्कते * कथं पुनरिति * सास्य देवतेति सन्निहितविशेष-
ाचिसर्वनामास्य शब्दार्थे तद्धितस्मृतेः श्रौतत्वमाहोच्यत इति न-
वनुपात्तस्य द्रव्यविशेषस्य देवतान्वयो न सम्भवतीत्याशङ्क्याह *
अभिकारेणेति * सन्निहितत्वोपलक्षितस्य द्रव्यविशेषस्य तद्धितश्रुत्या
देवतान्वये कृते कस्येति निर्द्धारणापेक्षायां प्रकरणान्निर्द्धार्यत इ-

त्यर्थः । एतच्च तद्धितनिर्देशे श्रुत्येति गुणाधिकरणभाष्यव्याख्यावे लायां देवतासङ्गतिः श्रुत्या तद्धितान्तात्प्रतीयतइत्यादिवार्तिकेनो पपादयिष्याम इत्याह * गुणश्चेति * वैश्वदेवाधिकरणव्युत्पादि तोत्पत्त्युत्पन्नशिष्टबलाबलाभिधानार्थं चैतद्भाष्यमिति सूचयितुं गु णान्तरमाह * किं चेति * दुर्बलतरत्वसूचनार्थं प्रवृत्तापेक्षत वाक्यान्तरस्य विशेषणम् । लतायाश्च दौर्बल्याद्रसावरुद्धेषु यागे विधातुमशक्यत्वे सति न केवलं प्रकृतप्रत्यभिज्ञानानुवादायोगा द्यागस्य विधेयत्वापत्तेः पुनर्विधानलक्षणादभ्यासाद्भेदः किं तु गु णादपीत्याह * ततश्चेति * व्याख्यातं भाष्यं दूषयितुमारभ * शक्येति * प्रकृतेषु यागेषु रसविरोधात्प्रदेयतया लतावि ध्ययोगे ऽपि व्रीहिवत्प्रदेयप्रकृतितया विध्युपपत्तेः शक्यपरिहारं भ ष्योक्तं दूषणमित्याशयः । नन्वष्टाकपालादिशब्दानां संस्कृततद्धि तान्तत्वात्ते पुरोडाशं कूर्मं भूत्वा सर्पन्तमपश्यन्नित्याग्नेयवाक्यशे षाच्चाष्टाकपालशब्दस्य पुरोडाशविषयत्वावगमाद्विकारद्रव्यप्रतीतेः प्रकृत्यपेक्षायां युक्तः प्रकृतित्वेन व्रीहिविधिरैन्द्रवायवादिवाक्ये तु धारावाक्याद्द्रवद्रव्यावगमे ऽपि विकारद्रव्यत्वानवगतेराभिषव दिवाक्यालोचने तु प्रकृतिद्रव्यस्याप्यवगतेर्न लतायाः प्रकृ त्वेन विधिर्युक्त इत्याशयेन पृच्छति * कुत इति * विकारद्र त्वाभावे ऽपि धानादिवत्कपालसंस्कार्यत्वोपपत्तेर्वाक्यशेषस्य विष्णुरुपांशु यष्टव्य इत्यादिवदूर्जो ऽवरुध्या इत्यादिवच्च स्तु तिमात्रोपयुक्तस्य विध्युद्देशापेक्षितार्थसमर्पकत्वायोगादश्वशफमा पुरोडाशो भवतीत्यादिविध्यन्तरालोचनाच्च पुरोडाशप्रतीत्या वि ध्युद्देशपर्यवसानोपपत्तौ स्तुत्युपयुक्तस्य रात्रिसत्रवत्पराचृत्त्यावि त्वकल्पनानुपपत्तेरष्टाकपालादौ प्रकरणानालोचने प्रकृतिविकार व्ययोर्द्वयोरप्यप्रतीतेस्तदालोचने च द्वयोरपि प्रतीतेः किं प्रकृति ऽसावित्यनपेक्षायामपि किं पुरोडाशप्रकृतिभूता व्रीहयस्तन्निष्प व्यापारयितव्याः किं वा नो वासोजाघनीवद्यथा कथं चिन्निष्प व्रीहिमयपुरोडाशस्वरूपमात्रं व्यापारयितव्यमित्यपेक्षायां निर्वापा घातपेषणसंयवनपिण्डकरणादिनिष्पादकविधिदर्शनेन प्रयोगका ले निष्पादनावगमादसम्भवे ऽपि निष्पादकविध्यनालोचने च प मयी जुहुर्भवतीत्यादिवत्प्रकृतिद्रव्यविधाने ऽपि यथा कथं चि शिष्टद्रव्यलाभेनापि प्रयोगोपपत्तेः प्रयोगकाले निष्पादनाक्षेपा त्तेर्यथा व्रीहीणामविधानेसक्तुवदसंस्कार्यत्वापत्तेर्निर्वापादिवि नामारादुपकारित्वप्रसङ्गाद्यागाङ्गत्वेनैव विहितेषु व्रीहिषु योग्यत

[पु]रोडाशप्रकृतित्वेनाविरोधोपपत्तौ विरोधापादकसाक्षाद्यागसाधन-
[त्]वाङ्गीकरणानौचित्यात्प्रकृतितावसीयते तथा सोमे ऽपीत्याशयेना-
[न]न्तरमाह * यथैवेति * श्लोकं व्याचष्टे * विधीयमानं हीति *
[ल]ताविशिष्टयागविधिपक्षे ऽपि चाभिषवेण ·लतास्वरूपनाशात्प्रदेय-
[प्र]कृतित्वेनैव यागाङ्गता तुल्येत्याह * अपि चेति * रसलतयोश्च
[वि]रोधाभ्युपगमे रसस्योत्पत्तिशिष्टत्वपक्षे लताया दौर्बल्यात्तदानुगु-
[ण्]येन प्रवृत्तेस्तदापेक्षितप्रकृतित्वाङ्गीकरणेन विरोधः शक्यपरिहारः
[ल]तायास्तूत्पत्तिशिष्टत्वे दुष्परिहर इत्याह * अपि चेति * श्लोकं
[व्]याचष्टे * रसस्येति * का तर्ह्यैन्द्रवायवादिष्विव्यादेर्भाष्यस्य
[ग]तिरित्यपेक्षायामुत्पत्तिशिष्टरसावरोधात्प्रदेयत्वेन लताविध्याशा-
[ङ्]क्षानुपपत्तेः प्रदेयप्रकृतित्वाशङ्कायाश्च निराकर्त्तुमशक्यत्वात्कुपेक्षणी-
[य]त्वं वक्तुमाह * तस्मादिति * पशुसोमाख्यगुणस्य प्रदेयप्रकृति-
[त्]वेन विधिरित्याशङ्का नोद्धाटनीयेति वाच्ये तन्निरासार्थस्य न हीति
सूत्रावयवस्याप्युपेक्षणीयत्वसूचनायानुद्घाट्यैवोत्तरं सूत्रं प्रस्ताव्य-
[म]िति त्वपि प्रयुक्ते ऽवयवदोषेण सकलसूत्रापेक्षां प्रसज्यमानां नि-
राकर्त्तुं समुदायेत्युक्ते गुणविधित्वाशङ्कायामनिरस्तायां कथं
कर्मविधित्वासिद्धान्तसिद्धिरित्याशङ्क्य पशावित्युक्तं प्राप्ते कर्मण्य-
नेकगुणविध्ययोगादेव तत्राशङ्का नोत्तिष्ठतीत्याशयः। सोमे कथं
[स]िद्धान्तसिद्धिरित्यपेक्षायामुत्तरसूत्रेण गृह्णातिवाक्यानां कर्मवि-
धित्वनिरासादिति सोमे त्वित्यनेनोक्तमिति योज्यम्। समुदायानुवा-
दत्वमात्रं निराकृत्यमिति सुगमः पाठः। एवं तु सूत्रभाष्यकृतोर्द्वयोर-
[प्र]व्यबुद्धिपूर्वकारित्वापत्तेः पूर्वत्रापरितोषेणोत्पत्तिशिष्टरसावरोधा-
[दै]न्द्रवायवादिवाक्यविहितेषु यागेषु लता विधातुं शक्येति पूर्वसू-
त्रावयवोक्तामुपपत्तिं चकारेणोत्पत्तिशिष्टरसावरोधे ऽपि तत्प्रकृति-
त्वेन लताविधिसम्भवरूपनिराकरणहेतुसूचनपूर्वमुत्तरसूत्रेणैन्द्रवा-
यवादिवाक्यानां कर्मविधायित्वाभावाच्च रसस्योत्पत्तिशिष्टत्वं च
निराकृत्यैन्द्रवायवादिवाक्यानां कर्मविधित्वाभावलक्षणयैवोपपत्त्या
सोमवाक्यस्य कर्मविधित्वं निर्णेतव्यमिति पक्षान्तरमाह * अथ
वेति * निराकार्योपपत्त्युपन्यासस्यापि मन्दप्रयोजनत्वेनेहाप्यपरि-
तोषात्स्वयमन्यथा सूत्रव्याख्यामारभते * पूर्वोति * पशुसोमवा-
क्योदाहरणे ऽस्य सूत्रस्य पूर्वपक्षोत्त्यशक्तिमाशङ्कते * कथं पुन-
[र]िति * गृह्णात्यवद्यातिवाक्योदाहरणाङ्गीकरणेन पूर्वपक्षे सूत्रं यो-
जयितुं सन्देहस्वरूपं तावदाह * उच्यते इति * योजयति * कि-
मिति * पशुसोमवाक्ययोरुत्पत्तिचोदनात्वे सति प्रकरणापेक्षा

गृह्णात्यवद्यतिवाक्येषु रसहृदयादिद्रव्यसंयोगो वि
यागाङ्गत्वं प्रतिपद्येतेति मध्यमावयवे व्याख्याते ऽव
पशुसोमसंस्कारार्थत्वेनाविरोधशङ्कानिरासार्थतयाशङ्क
पनाशकत्वात्संस्कारार्थत्वायोगाभिधानार्थत्वेन न हीति
व्याख्याय प्रदेयप्रकृतित्वेनाविरोधाशङ्कानिरासार्थतय
वाक्यैः प्रदेयत्वेन प्रकृतस्य रसहृदयादेः प्रकृतित्वल
पशुसोमयोः संस्कारवाक्यैरेव सोमं क्रीणातीत्यादि
न्यायेन सिद्धतया विध्ययोगात्प्रकृतेरसहृदयादौ प्रकृति
मद्रव्यसंयोगो ऽनर्थक इति व्याख्यान्तरे ऽथ वेत्यनेन कृते
५११।८ नेन पूर्वपक्षे ऽर्थवत्त्वोक्त्या पूर्वपक्षसूत्रार्थमुपसंहरति * त

## अचोदकाश्च संस्काराः ॥ १८ ॥

पूर्वसूत्रसमर्थनार्थं गृह्णात्यवद्यतिवाक्यानां
धित्वपूर्वपक्षकरणे ऽप्यधिकरणत्रयस्य समुदा
वादार्थत्वेन पशुसोमवाक्ययोः समुदायानुवा
च विवक्षितत्वात्तन्निवृत्त्यर्थत्वेन तुशब्दस्थाने वाशब्
* नैवेति * पशुसोमवाक्यस्थयोराख्यातशब्दयोः समु
त्वनिरासस्साध्ये ऽवद्यतिगृह्णातिपराणां प्रत्ययानां
त्वस्य साक्षादहेतुत्वात्पूर्वाधिकरणसिद्धान्तहेतोश्च श
योगभूतत्वादित्यस्य निर्गुणाख्यातश्रुतिविषयत्वेनेहाभ
धिकरणसिद्धान्तहेतोरप्रकृतत्वादित्यस्य पूर्वाधिकरणे
कृतकर्मसद्भावे निर्गुणश्रुतावपि पौर्णमासीवत्सम
दापत्तेरपेक्षितत्वेनानुषक्तस्यात्राप्यनुषङ्गं करोति *
च्चेति * अप्रकृतत्वोपपादनार्थत्वेन प्रश्नपूर्वं
जयति * कथमिति * संस्कारविधिष्वपि यागकल्प
क्षोक्तं निराकर्त्तुमारभते * तन्मात्रेति * ऐन्द्रवायव
तावत्सोमेन यजेतेति श्रुतयागप्रत्यभिज्ञानात्कल्पनानुपपत्ति
र्हैवं हीति * भाष्यमप्यनेन व्याख्यातं भवति यागानुमा
यादिवाक्यवत्स्वार्थपर्यवसानं पूर्वपक्षोक्तमनुभाषणपूर्वं द
यदुक्तमिति * अतो ऽत्र नियोगापरपर्यायविधिविषयभूत
लाभाद्वाक्यस्य सङ्गतार्थत्वं पर्यवसानमस्तीत्यर्थः । तल्लाभे
५१२।२ वाक्यान्तरसङ्गतिर्युक्तेति वा योज्यम् । श्लोकं व्याचष्टे * आ
समाप्यते शब्देन सङ्गतिशब्दस्य समाप्त्यर्थत्वं व्याख्यातम्
णभावनालाभे ऽपि यागं विना देवतान्वयासिद्धेः कथं य

प्तिरित्याशङ्क्याह * इदं त्विति * स्वकार्याक्षमत्वनिबन्धनत्वेनासमाप्तेर्विधिविषयलाभमात्राद्विधानाख्ये कार्ये विधिवाक्यस्य क्षमत्वसिद्धेः सापेक्षत्वे ऽपि समाप्त्युपपत्तिरित्याशयः। सापेक्षत्वानिबन्धनया त्वसमाप्त्या वाक्यान्तरानन्वयेन कस्य चिद्वाक्यस्य वाक्यान्तरानन्वयः स्यादिति दर्शयितुमाह * सर्वमेव हीति*समाप्त्यभिधानस्य प्रकृतोपयोगं दर्शयन्वाक्यान्तरान्वयार्थत्वेन सङ्गतिशब्दं व्याचष्टे * तेनेति * न सापेक्षस्यापि वाक्यान्तरान्वये सत्याग्नेयादिवाक्यस्यापि कस्मान्न स्यादित्याशङ्क्य विधिविषयालाभादित्याह*आग्नेय इति * पूर्वपक्षसूत्रस्थचोदनाशब्दसूचितं यागानुमानात् प्रागपर्यवसानं परिहृत्यावदानग्रहणयोः पशुसोमस्वरूपनाशकत्वेनोत्पत्तिशिष्टस्य पशुसोमद्रव्यस्य संस्कारलक्षणगुणार्थेन विध्ययोगात्प्रकरणे विधीयमानो हृदयादिरसः संयुक्तो ऽवदानग्रहणाख्यः पदार्थो ऽनर्थकः स्यादिति प्रकरणे हीत्यादिसूत्रावयवोक्तं सिद्धान्तदूषणमनुभाषणपूर्वं परिहरति * अथेति * सूत्रोक्तस्य दोषस्य सूत्रेणापरिहारे सूत्रकृतः शून्यहृदयत्वापत्तेश्चोदयतेः प्रेरणे स्मरणेन नुदिसमानार्थत्वान्नुदेश्चापनयनाख्ये बाधे प्रयोगाच्चोदकशब्दस्य बाधकवाचित्वमङ्गीकृत्यावदानग्रहणपदार्थाः संस्कारत्वात्पशुसोमयोरबाधका इत्येवमस्मिन्परिहारे सूत्रं योज्यम्।विशसनाभिषवादिना पशुसोमयोर्विनाशात्साधनत्वासम्भवाशङ्का द्वारशब्देन निरस्ता प्रदेयप्रकृतित्वेनैव पशुसोमयोः साधनतेत्याशयः। श्लोकं व्याचष्टे * यदीति * ननु न हि द्रव्यकथम्भावादतिदेशो ऽत्र कल्प्यतइति संख्याधिकरणवार्त्तिके द्रव्यस्येतिकर्त्तव्यताकाङ्क्षाया निराकरिष्यमाणत्वान्न पशुसोमयोरितिकर्त्तव्यतान्वयः सम्भवतीत्याशङ्क्याह * पश्विति * संख्याधिकरणपूर्वपक्षे सप्तदशानां पशूनामेकसाधनत्वेन प्रत्येकं साधनत्वाभावादितिकर्त्तव्यतानाकाङ्क्षत्वे ऽपीह साधनत्वसद्भावाद्युक्तेतिकर्त्तव्यताकाङ्क्षेत्याशयः।संस्कारवाक्येभ्य एव पशुसोमयोः प्रदेयप्रकृतित्वेन प्राप्त्युपपत्तेः प्रकृतित्वलक्षणगुणार्थत्वेन विध्ययोगात्प्रकृते हृदयादौ रसे पशुसोमद्रव्यसंयोगो ऽनर्थकः स्यादित्येवमर्थाङ्गीकरणेन प्रकरणे हीत्यादिसूत्रावयवोक्तं दूषणमनुभाषणपूर्वं परिहरति * यत्त्विति * उत्पत्तिशिष्टविरोधोत्तरस्यापि सौत्रतापिशब्देनोक्ता पशुसोमयोरविनियोगे क्रमोपकरणादिवाक्यानां सक्तुहोमादिवाक्यवदाराद्युपकारिकर्मविधायित्वापत्तेर्न पशुसोमाक्षेपशक्तिरस्तीत्याशयः।याश्च हृदयादिभिः प्रकृतिद्रव्यापेक्षिते छागस्य वपाया मेदसो ऽनुब्रूहीति म-

न्त्रवर्णेन छागलाभात्तदन्तर्गतपशुत्वप्राप्तिरुक्ता सास्य मन्त्रस्
क्तवाकादिवत्कृत्स्नविनियुक्तत्वेनात्यन्ताप्राप्तार्थप्रापणाशक्तेर्वि
कस्य लिङ्गस्य सामर्थ्यलक्षणत्वात्तस्य च वाक्यशेषवत्सनि
र्थनिर्णायकत्वेनार्थाद्वा कल्पनैकदेशत्वादित्यत्र स्थितत्वादयुक्तं
* न चेति * कथं तर्हि षष्ठान्त्ये छागप्राप्त्यभिधानमित्याश
*पशिवति * अनेनैव यथैव पशुसामान्यइति वार्त्तिकोक्तस्य
पक्षस्य निरस्तत्वात्प्रसङ्गेनाथ वा सान्नाय्यं वा तत्प्रभवत्वादित
न्यायेनेत्यादिवार्तिकोक्तं पूर्वपक्षं निरस्यति * न चेति *
साधारणश्चायं तवाप्यानुमानिकयागाभ्यूपगम इति यदुक्तं त
युक्तमित्याह * द्रव्येति * या च सान्नाय्यावदानप्रकृतित्वेन
याद्यवदानानां यागीयद्रव्यसंस्कारार्थत्वाद्यागानुमापक्ताेक्ता
सान्नाय्यावदानस्य चतुरवत्तहोमविधिनार्थगृहीतत्वेनाविधेयत्व
धेयानि हृदयाद्यवदानानि प्रतिप्रकृतित्वानुपपत्तेः संस्कारार्थ
च्चानङ्गत्वेनानतिदेश्यत्वादयुक्तेत्याह * न चेति * नन्वतिदेशा
व्यवदानत्वेन हेतुना यागीयद्रव्यसंस्कारार्थतानुमास्यते ऽत आ
न चेति * पूतीकानभिषुणुयात्तमस्मै भक्षं प्रयच्छेदित्यनयोस्तु
कृताभिषवभक्षप्रत्यभिज्ञानाद्यदि सोमं न विन्देत यदि सोमं
क्षयिषेदित्येकवाक्यत्वाच्च यागद्रव्यार्थत्वविज्ञानं युक्तमिति
न्तवैषम्यमाह * प्रतीकेति * प्रसङ्गाद्यश्चात्र पक्षे विशिष्टवि
श्रयणे दोष इति वार्त्तिकोक्तं सोमवाक्ये विशिष्टवि
तुल्यत्वं निरस्यति * सोम इति * नन्वैन्द्रवायवादिवाक्येषु
विध्यभावे देवताया ग्रहणानन्वयाद्विशेषणविशेष्यत्वशून्ययोर्द्व
ग्रहणयोर्विधेयत्वापत्तेर्वाक्यभेदप्रसङ्गादालभतिवत्प्रकृतिवल्लिङ्ग
तनाय गृह्णातिपरप्रत्ययेनैन्द्रवायवं कुर्यादिति वचनव्यक्त्याश्रय
विशिष्टयागविधिरवसीयतइत्याशङ्क्याह * न चेति * सोम
मिन्द्रवायुदेवत्यं कर्त्तुं पात्रे गृह्णीयादिति विहिते यागसम्प
त्वाद् द्रव्यदेवतान्वयस्य ग्रहणमात्रेणासिद्धावपि प्रकरणलभ्ययाग
न्वयासिद्ध्युपपत्तेर्न वाक्यभेद इत्याशयेन प्रश्नपूर्वमुपपादयति
कुत* इति देवताग्रहणं चेत्यनेन रूपेण विधेयानेकभावे ऽपि प्रक
णलभ्ययागाख्यक्रियान्तरप्रसादेन देवताविशिष्टग्रहणविधिसम
इत्यर्थः । श्लोकं व्याचष्टे * शक्यते हीति * ग्रहैर्जुहोतीतिवि
र्थस्य ग्रहणपात्रेषु ग्रहणमन्तरेणानिष्पत्तेरर्थप्राप्तग्रहणानुवादस्य
द्याद्विशिष्टविधिगौरवमपि नास्तीत्यर्थप्राप्त्यभिधानेनोक्तं समासे
नेन देवताद्वयनिमित्तवाक्यभेदाशङ्का निरस्ता यागान्वयं वि

हणस्य देवतान्वयानुपपत्त्या शङ्कानिरासार्थत्वेन क्रियान्तरप्रसादेति व्याख्यातुम् * प्रकरणेत्युक्तम् * देवताग्रहणयोर्यागगुणत्वात्परस्परानपेक्षत्वे ऽपि यागद्वारा परस्परान्वयोपपत्तेर्देवताविशिष्टग्रहणविधिसम्भवाभिधानार्थम् * गुणेत्युक्तम् * यादृशं द्रव्यसम्बद्धमित्येतद्वार्त्तिकोक्तं प्रकृतयागसद्भावात्सोमवाक्ये यागविध्यसम्भवं परिहर्त्तुमाह * तस्मादिति * सोमवाक्यस्य यागविधित्वे प्रमाणत्रयमाह * एवं च सतीति * समुदायानुवादाभावे ऽपि राजसूयवत्प्रयोगवाक्यस्यैकत्वसिद्धेर्ज्योतिष्टोमशब्दस्य च सोमद्रव्यकयागवाचित्वाद्दीक्षणीयादिव्यावृत्तिसिद्धेरानर्थक्यमित्याशयः । आद्यसूत्रोक्ताया युक्तेः सिद्धान्ते ऽनुपपत्तेः पूर्वपक्षे तद्योजितं पशुसोमवाक्ययोस्तु विधित्वसिद्धान्तो ऽतो युक्त एवेति सूचयन्सिद्धान्तमुपसंहरति * तेनेति *

तद्भेदात्कर्मणो ऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्यात् भेदो द्रव्यगुणीभावात् ॥ १९ ॥

पशुविषयायाश्चिन्तायाः पर्यवसितत्वं भाष्योक्तमुपपादयति * क्रमेति * क्वाधिकरणे कीदृशी वोद्धविष्यतीत्यपेक्षायामाह * पशोरिति * अग्नीषोमीयं पशुमालभेतेति तद्धितेनाष्टाकपालादिवत्समस्तपशोर्देवतान्वयात्प्रदेयत्वलक्षणहविष्ट्वावगतेः समस्तादवदाने पशोरेकहविष्ट्वं समस्तचोदितत्वादिति सूत्रेण पूर्वपक्षिते प्रत्यङ्गं वा ग्रहणवदङ्गानां पृथक्प्रकल्पनत्वादिति सूत्रेण पशुस्वरूपस्य विशसनेन नाशितत्वात्प्रदेयत्वानुपपत्तेः पृथक्कल्पितेभ्यश्च हृदयादिभ्यो ऽवदानविधानात्तद्धितोक्तस्य देवतान्वयस्य साक्षादसम्भवादगत्या व्यवहितविषयत्वावगतेः प्रत्यङ्गं हविष्ट्वेनावदानस्य सिद्धान्तयिष्यमाणत्वात्प्रत्येकमङ्गानां हविष्ट्वविवक्षयोत प्रत्यङ्गमित्युतशब्दं पूर्वाक्षिपात्य साङ्गानां हविष्ट्वे सिद्धे तद्विशेषचिन्तासां सर्वाङ्गविवक्षया प्रत्यङ्गमुतैकस्मादित्यावृत्त्या योज्यं हृदयजिह्वावक्षोयकृद्वृक्कौ सव्यन्दोरुभे पार्श्वे दक्षिणाश्रोणिगुदं तृतीयमित्येकादशदैवतान्यवदानानि परिगणितानि।सोम इति परिहारप्रतिज्ञाभाष्यं व्याचष्टे *सोमेत्विति * इन्द्रवाय्वा इति परिहारभाष्यं व्याचष्टे * वाक्येनेति * ततो विकल्पिष्यन्ते इत्यन्ध्याहारेण यदि शब्दान्वयः वाक्यव्यतिरेकवाचिना तु शब्देन प्रकरणसूचनात्प्रकरणेन तु यागसङ्गतत्वात्सर्वासां समुच्चय इति सर्वशब्देन समुच्चये सूचिते प्रकरणेनाप्यन्वये ल्यार्थत्वाद् द्विकल्पः कस्मान्न भवतीत्याशङ्क्यान्योन्यनैरपेक्ष्येणान्

याभावाद्विकल्पानापत्त्यभिधानार्थम् * युगपदित्युक्तम् *
नान्वये समुच्चयः कस्मान्न भवतीत्याशङ्क्य यत्र दध्ना जु
वाक्येनान्वयश्चोद्यते तत्र तुल्यार्थत्वादसमुच्चय इत्युक्ते
त्यन्वये तुल्यार्थत्वाविशेषमाशङ्क्यान्योन्यसापेक्षतुल्यार्थत्वा
मुच्चयानापत्त्यभिधानार्थं निरपेक्षेणेत्यनेन पृथक्शब्दोक्तं
व्याख्यातम् । आद्यं श्लोकं व्याचष्टे *यदीति * य इमाः पु
युगपदेव सम्बन्ध्यन्तइत्यनेन सर्वास्त्विति श्लोकावयवो
देवतानामक्रियात्मकत्वात् प्रकरणग्रहणानुपपत्तिमाशङ्
वेत्यनेन ग्रहणाख्यक्रियाद्वारा तदुपपादितं द्विती
३१५।४ कं व्याचष्टे * तत्र नामेति *एतदेव प्रश्नपूर्वकमुपपादया
मिति * नन्विन्द्रवाय्वादीनां देवतात्वेनैव सामर्थ्यात्प्रत्येकं
तात्वावगतेः प्रत्येकमेव सामर्थ्यमवसीयतइत्याशङ्क्याह *
ति * ननु त्यज्यमानद्रव्योद्देश्यत्वमात्रेण देवताया यागां
त्वात्प्रत्येकमेव चोद्देश्यत्वप्रतीतेरेकैकया देवतयास्त्वेव य
रित्याशङ्क्याह * सत्यपि चेति *यागरूपनिष्पत्तावपि या
त्मकज्योतिष्टोमरूपनिष्पादनसामर्थ्यस्य शब्दैकसमधिगम
ताविनियोजकशब्दकल्पनायाश्च प्रकरणाधीनत्वात्तस्य च
वृत्तित्वान्न प्रत्येकं सामर्थ्ये प्रमाणमस्तीत्याशयः । नन्वेका
कल्पेरन्समुच्चये ह्यावृत्तिः स्यात्प्रधानस्येति द्वादशाधिकर
र्थत्वमात्रेण विकल्पस्य वक्ष्यमाणत्वात् प्रत्येकत्वविशेषण
शङ्क्याह * प्रत्येकमिति * दधिमधुपयोघृतं धाना उदकं त
त्संसृष्टं प्राजापत्यमिति चित्रेष्टिद्रव्याणां तुल्यार्थत्वे ऽप्य
पेक्षत्वेन विकल्पाभावाद्विशेषणार्थवत्त्वेत्याशयः । दृष्टान्ते
रपेक्ष्यमुपपादयति * वाक्येति * ननु ग्रहणद्वारा देवता
न्वयात्तत्र च वाक्येन प्रत्येकमेव विनियोगात्प्रत्येकं तु
सीयत इत्याशङ्कानिरासार्थं भाष्यकारस्यादृष्टसंस्काराभि
सूचयितुमाशङ्कां तावदाह * नन्विति * ग्रहणासंस्कार
त्वेन प्रमाणान्तरतो भेदाभेदानवधारणान्न तादर्थ्येन विहि
ष्मानां देवतानामैकार्थ्ये प्रमाणमस्तीत्याशङ्कानिरानिरासा
रित्याद्येवमपरेष्वपि ग्रहणेष्वित्यन्तं भाष्यं ग्रहपात्रं
विना ग्रहैर्जुहोतीतिविध्यर्थानिष्पत्तेर्ग्रहणस्य दृष्टार्थत्वाद
ङ्क्चोद्देश्यत्वेन देवताया ग्रहणसाधनत्वाद्यागवच्च ग्रहणस
द्देशाधीननिष्पत्तित्वाभावेन ग्रहणं देवतोद्देशस्यादृष्टार्थत्वा
रूपेण ग्रहणस्यादृष्टार्थताभिप्रेतेति सूचयन्परिहरति * स